## न्यायवार्त्तिकम्

करणार्थ इति। संप्लवानुपपत्तिर्विशिष्टविषयत्वादिति चेन्न अनभ्युपगमात्। स्यान्मतिरेषा विशिष्टविषयाणि प्रमाणानि। विशेषविषयं प्रत्यक्षं, सामान्यविषयमनुमानमिति। एतच्चाधिगन्तव्यं यत् सामान्यं विशेषश्च, न च सामान्यविषयं प्रत्यक्षं न जात्वनुमानं विशेषविषयमिति। एतच्च न, अनभ्युपगमात्। न तावत् प्रमाणद्वयं प्रतिपद्यामहे, न विषयद्वयं, नाप्यसङ्करम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रमाणेनेति। अर्थसमधिगतिं साधयतीति साधकतमत्वात्। अत्र च करणभावनान्तरीयकस्य हेतुभावस्य पञ्चम्या अभिधानं प्रमाणफलयोस्तादात्म्यप्रतिषेधार्थं, भेदाधिष्ठानत्वाद्धेतुफलभावस्य न खलु परशुरेव च्छिदेति। प्रमाणप्रातिपदिकलब्धकरणत्वानुवादश्च प्रमाकारकान्तरेभ्योऽभ्यर्हिततत्वेनास्य व्युत्पाद्यत्वञ्च प्राथम्यञ्च युक्तमिति दर्शयितुं। संप्लवमाक्षिपति संप्लवेति। समाधत्ते नेति। आक्षेपं विभजते स्यान्मतिरिति। विशिष्टो भिन्नो विषयो येषां तानि तथा। बहुवचनसान्तर्गणिकभेदाभिप्रायम्। अर्थसामर्थ्यसमुत्थं हि प्रत्यक्षमर्थगोचरम्। स एवार्थः प्रत्यक्षगोचरो यो ज्ञानप्रतिभास-(१) मात्मनोऽन्वयव्यतिरेकावनुकारयति। न च सामान्यं निरस्तसमस्तार्थक्रियासामर्थ्यमेवं भवितुमर्हति। स्वलक्षणन्तु स्यात् तदेव परमार्थसत्। अर्थक्रियासामर्थ्यलक्षणत्वाद्व वस्तुनः। एतदेवास्य स्वमसाधारणलक्षणं यद्देशतोऽननुगमेनादेशात्मकस्य परमार्थत्वं कालतोऽननुगमेन च क्षणिकत्वम्। तस्मात् स्वलक्षणविषयं प्रत्यक्षम्। न च स्वलक्षणमनुमानस्यापि गोचरः। तद्धि गृहीतप्रतिबन्धलिङ्गहेतुकं, प्रतिबन्धश्च तादात्म्यतदुत्पत्तिलक्षणः स्वलक्षणविषयोऽशक्यग्रह इति सामान्यधर्मावाश्रयते। न च सामान्यमेकमनेकदेशकालावस्थासंसर्गि भवितुमर्हति। तदिदमनादिवासनोद्भूतविकल्पाधिष्ठानं विकल्पाकारस्य वाऽलीकस्य वा स्वमनुमानगोचरोऽभ्युपेयम्। तच्च भावाभावसाधारण्याद्बाह्यसादृश्यान्नियतप्रतिभासत्वाच्चान्यव्यावृत्तिनिष्ठम्। यत् खलु भावाभावसाधारणं तदन्यव्यावृत्तिनिष्ठमेव यथाऽमूर्त्तत्वम्। तद्धि ज्ञानादौ भावे शशविषाणादौ चाभावे साधारणम्। भावाभावसाधारणश्च विकल्पगोचरोऽस्ति घटोऽस्ति नास्ति घट इति। यदि पुनरसाधारणो भावो भवेदस्तिशब्दो न युज्येत पुनरुक्तत्वात्। नास्तीत्यपि न वक्तव्यं विरोधात्। एवमभावासाधारण्येऽपि वाच्यम्। न चालीकस्य सर्वसामर्थ्यविरहिणः परमार्थसत्ता स्वलक्षणेन सादृश्यं मन्यतेऽन्यव्यावृत्तेः। न च गौरिति नियतौ बुद्धिव्यपदेशौ विनाऽश्वादिव्यावृत्तिम्। तस्मात् सामान्यमन्यव्यावृत्तिरूपमबाह्यं बाह्यभेदाग्रहाद्बाह्यत्वेनाव-

(१) "ज्ञानप्रतिभासं" ज्ञानाकारमित्यर्थः। यो यस्मिन् ज्ञाने स्वाकाराधायकः स तदाकारज्ञानस्य विषयः। एवञ्च नियमः प्रत्यक्षविषयतायामेव बोध्यः, अनुमित्यादौ अलीकादेरपि विषयत्वात्, तस्य च स्वाकारानाधायकत्वात्।

## न्यायवार्त्तिकम्

किं कारणम् ? प्रमाणानि तावच्चत्वारि, विषयः सामान्यविशेषतद्वद्भेदात् (१) त्रेधा । सङ्करोऽप्येक सर्वैः प्रमाणैरधिगतेरिन्द्रियवदिति । इन्द्रियं खलु अर्थप्रकाशकत्वात् प्रमाणम् । तस्य व्यवस्था सङ्करश्च । व्यवस्था गन्धादिषु, सङ्करः पृथिव्यादिषु, द्वीन्द्रियग्राह्यत्वात् । सत्तायां गुण च सार्वेन्द्रियं ज्ञानमिति । अधिगतत्वाद् वैयर्थ्यमिति चेन्न अन्यथा तदधिगतेः । स्यान्म यदि सङ्कीर्येरन् प्रमाणानि । नन्वेकेन प्रमाणेनाधिगतेऽर्थे द्वितीयं प्रमाणं व्यर्थमापद्येत अधिगतञ्चार्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यात्, न, अन्यथाधिगतेः । न ब्रूमो य

## न्यायवार्त्तिकतात्पर्यटीका

गाह्यमानमनुमानं बाह्ये प्रवर्त्तयति । पारम्पर्येण च बाह्यप्रतिबन्धाद्बाह्यं प्रापयत् संवादकं भ्रान्तमपि प्रमात्राश्रयवशात् प्रमाणम् । तदस्य न स्वलक्षणं गोचरः । प्रत्यक्षमपि न सामान्य गोचरमित्यावेदितम् (२) । न चाभ्यामन्यत् प्रमाणमस्ति । प्रमाणस्य सतोऽत्रैवान्तर्भावात् अनन्तर्भावे वा प्रमाणत्वानुपपत्तेः । न च सामान्यविशेषाभ्यामन्यदस्ति प्रमेयान्तरं यत्र तत् संप्लोष्येते इत्यर्थः । समाधानवाक्यं विवृणोति—एतच्च नेति । यथा चैतत् तथा तत्र निवेदयिष्यते (३) । विशेषो व्यवच्छेदकः, स च वक्रकोटरादिरन्त्यश्च (४) । व्यवस्थासंकरोदाहरणान्याह—इन्द्रियवदिति । संप्लवमसृष्यमाण आह (५) अधिगतत्वादिति । समाधत्ते नान्यथेति । आक्षेपं विभजते यदीति । स्यादेतत् । नास्ति वैयर्थ्यमधिगतीनामाशुतरविनाशित्व सद्गोचराधिगत्यन्तरोत्पादं प्रति प्रमान्तरस्यार्थवत्त्वादित्यत आह—अधिगतञ्चार्थमधिगमयता प्रमाणेनेति । यद्यप्यधिगतय आशुतरविनाशिन्यस्तथाऽप्येकतरप्रमाणजनिताऽधिगतिलब्धजन्मनः संस्कारादेव स्थायिनस्तदर्थस्मृतिसन्ततिसम्भवादधिगतमर्थमधिगमयता प्रमाणेन पिष्टं पिष्टं स्यात् समाधिवाक्यं विवरीतुमनुवदति—नान्यथेति । विवृणोति न ब्रूम इति । अयमभि सन्धिः, न हि प्रमाणकारणानि प्रेक्षावन्ति, येनैवमालोचयेयुः यज्जनितमेव चास्माद्ध केनचित् प्रमाणं वयमिहोदास्महे इति । नापि स्वकारणलब्धजन्मानि प्रमाणानि दर्शितोऽयमर्थः ऽन्यतमेन वास्माद्ध प्रमाणेन कृतमस्माभिरिति विरन्तुमर्हन्ति । प्रमातुश्चेतनत्वादयमनुयो इति चेन्न, प्रियस्य वस्तुनोऽनेन भूयो भूयः प्रमित्सितत्वात् । अप्रमित्सितस्यापि दुर्जनवचनादेः प्रमेयस्यानेन प्रमीयमाणत्वात् । तस्मान्न प्रमात्रभिसन्धानात् प्रमाणस्य प्रवृत्ति रप्रवृत्तिर्वाऽपि किं तु सामर्थ्यात्, अन्यथाऽग्निदाहादिदुःखस्याप्रत्यक्षत्वप्रसङ्गः । यत्तु प्रम

(१) सामान्यं, विशेषः, तदुभयमेव, तद्भेदाच्चेधा । (२) १३ पृ. ता ८ पं स्ववचनावेदितम् । (३) "... समाधानवाक्यविवरणे "यथा" भवति "तथा" "तत्" इत्यपाठानन्तरमेव "न तावत्" इत्यादिना "निर्देक्ष्य... वार्तिककारेणेति बोध्यम् । (४) "वक्रकोटरादिरन्त्यश्च" इति ख पु पाठः । अन्त्यः पदार्थविशेष इति परिष्कारः । (५) "कौमारिल इति शेषः" इति टिप्पणम् ।

## न्यायवार्त्तिकम्

प्रत्यक्षेणार्थोऽधिगम्यते तथानुमानादिभिरपीति। "अन्यथा" प्रत्यक्षेणेन्द्रियसम्बद्धः, इन्द्रियासम्बद्धोऽनुमानेन, संज्ञासंज्ञिसम्बन्धप्रतिपत्तिरुपमानेन, शब्दोल्लेखेनागमेनेति। विषयान्तरे व्यवस्थादर्शनाच्च। न च सर्व्वस्मिन्नर्थे संप्लवोऽस्तीति अतो न वैयर्थ्यमिति। तस्माद्व्यवस्थितमेतत्तसिर्वचनविभक्तिव्यासिज्ञापनार्थं इति। प्रमाणस्वरूपावधारणं कर्त्तव्यम्। किं पुनः प्रमाणस्य प्रमाणत्वम्? किञ्चोक्तं प्रमाणमिति? उपलब्धिहेतुः प्रमाणम्, उपलब्धिहेतुत्वं प्रमाणत्वम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रमितसाधीनप्रवृत्ति तद्यदि प्रमाता न व्यापारयेत् किमायातं प्रमाणस्य, न हि तोयमपि पिपासुना न(१) पीयत इति तस्य पिपासोपशमशक्तिरपैति। तस्मात् प्रत्यक्षसामग्रीजनिता बुद्धिः प्रमा तज्जनकानि च प्रमाणानि समानविषयाण्यपि। स एव चानेन सामग्रीभेदः प्रदर्शितोऽन्यथा तु प्रत्यक्षेणेत्यादिना। यद्यपि साक्षात्कारासाक्षात्कारादिरपि प्रकारभेदोऽस्ति तथाऽप्यसौ प्रकृतानुपयोगान्नोक्तः। यदि च द्रव्यं त्वचा गृहीतमिति कृतं चक्षुषा, चक्षुषा वा गृहीतमिति कृतं त्वचेत्युच्येत न रूपविज्ञानं स्पर्शविज्ञानं वोपजायेत। तदर्थं चक्षुः त्वक्चाभ्युपेते तथा च संप्लववैयर्थ्येऽपि व्यवस्थायां न वैयर्थ्यमित्याह—विषयान्तर इति। प्रकृतमुपसंहरति—तस्मादिति।

विभक्त्यर्थं निरूप्य प्रातिपदिकार्थनिरूपणमवतारयति—प्रमाणेति। अवधार्यतेऽनेनेत्यवधारणं विचार इति। विचारणाय भावभवितारौ (२) पृच्छति—किं पुनरिति। केचिदाहुरनधिगतार्थगन्तृ प्रमाणमिति(३)। विषयसारूप्यं साकारस्य विज्ञानस्येत्यन्ये (४)। विज्ञानस्यैवानाकारस्यात्मानात्मप्रकाशनसामर्थ्यमित्यपरे (५)। उपलब्धिसाधनमिति वृद्धाः(६)। तस्माद्विप्रतिपत्तेः संशयात् प्रश्नः। भावप्रश्नव्याख्यानेन भवितृप्रश्नो व्याख्यातः। उत्तरम् उपलब्धिहेतुः प्रमाणम्। न च संशयविपर्यासरूपोपलब्धिकारणयोः प्रसङ्गः, अर्थवदित्यधिकारात्। तयोश्चोपदर्शितार्थव्यभिचारेणानर्थकत्वात्। नो खलु विकल्प्यमानं वस्त्वस्ति अर्थक्रियासु वोपयुज्यते। स्यादेतत् स्मृतिहेतोरपि प्रामाण्यप्रसङ्गः। न ह्यसौ नोपलब्धिहेतुः, न चार्थसहकारि प्रमाणमिति संस्कारस्यार्थसहकारिताविरहादप्रामाण्यमिति सांप्रतम्। नदीपूरस्य पिपीलिकाण्डसंचरणस्य चातीतानागतवर्षलिङ्गस्य शब्दस्यातीतानागतगोचरस्यार्थसहकारिताविरहिणोऽप्रमाणत्वप्रसङ्गात्। ज्ञापकत्वेन कार्यत्वेन वा कथञ्चिदर्थसम्बन्धे संस्कारस्यापि तत् समानमिति तस्यापि स्मृतिरूपोपलब्धिहेतोः प्रामाण्यं प्रसक्तम्। मैवम्। प्रमाणशब्देन तस्यापास्त-

(१) नु इति ख-पु। (२) भावो धर्मः प्रमाणत्वं, भविता धर्मी। प्रमाणलक्षणमित्यर्थ इति परिशुद्धिप्रकाशः। (३) भाट्टाः। (४) सौत्रान्तिकाः। (५) निराकारवादिनो वैभाषिकादयः। (६) प्रमाणवृद्धाः, नैयायिकादय इति भावः।

## न्यायवार्त्तिकम्

यदुपलब्धिनिमित्तं तत् प्रमाणमिति। समानत्वादलक्षणमिति चेत्? यदुपलब्धिहेतुः प्रमाणं, ननु प्रमातृप्रमेययोरपि उपलब्धिहेतुत्वात् प्रमाणत्वं प्रसज्येत, विशेषो वा वक्तव्य इति। अयं विशेषः,—प्रमाणे प्रमातृप्रमेययोश्चरितार्थत्वात्, प्रमाणे प्रमाता प्रमेयञ्च चरितार्थम्। अचरितार्थं च प्रमाणम् अतस्तदेवोपलब्धिसाधनमिति। अकरणा प्रमाणोत्पत्तिरिति चेद्, यदि प्रमातृप्रमेयाभ्यां

## न्यायवार्त्तिकतात्पर्य्यटीका

त्वात्। प्रमासाधनं हि प्रमाणं न च स्मृतिः प्रमा, लोकाधीनावधारणो हि शब्दार्थसम्बन्धः। लोकश्च संस्कारमात्रजन्मनः स्मृतेरन्यामुपलब्धिमर्थाव्यभिचारिणीं प्रमामाचष्टे तस्मात्तद्धेतुः प्रमाणमिति न स्मृतिहेतौ प्रसङ्गः। अनधिगतार्थगन्तृत्वञ्च धारावाहिकविज्ञानानामधिगतार्थगोचराणां लोकसिद्धप्रमाणभावानां प्रामाण्यं विहन्तीति नाद्रियामहे। न च कालभेदेनानधिगतगोचरत्वं धारावाहिकानामिति युक्तम्। परमसूक्ष्माणां कालकलादिभेदानां पिशितलोचनैरस्मादृशैरनाकलनात्। न चाद्येनैव विज्ञानेनोपदर्शितत्वादर्थस्य प्रवर्त्तितत्वात्पुरुषस्य प्रापितत्वाच्चोत्तरेषामप्रामाण्यमेव ज्ञानानामिति वाच्यम्। न हि विज्ञानस्यार्थप्रापणं प्रवर्त्तनादन्यत्, न च प्रवर्त्तनमर्थप्रदर्शनादन्यत्। तस्मादर्थप्रदर्शनमात्रव्यापारमेव ज्ञानं प्रवर्त्तकं प्रापकञ्च। प्रदर्शनं च पूर्ववदुत्तरेषामपि विज्ञानानामभिन्नमिति कथं पूर्व्वमेव प्रमाणं नोत्तराण्यपि। पुरुषापेक्षया तु प्रामाण्ये चन्द्रतारकादिविज्ञानस्य पुरुषानपेक्षितस्याप्रामाण्यप्रसङ्गः। न चातिदवीयस्तया तदर्थस्य हेयतया तदपि पुरुषस्यापेक्षितं, तस्योपेक्षणीयविषयत्वात्। न चोपेक्षणीयमप्यनुपादेयत्वाद्धेयमिति निवेदयिष्यते(१)। उपलब्धिहेतुञ्च प्रमाणं वदता अनधिगतार्थगन्तृत्वञ्च सारूप्यं चात्मानात्मप्रकाशनशक्तिश्च प्रमाणमिति निरस्तानि भवन्ति। उपलब्धिमात्रस्यार्थाव्यभिचारिणः स्मृतेरन्यस्य प्रमाशब्देनाभिधानात्। हेतुग्रहेण सारूप्यशक्त्योः फलादभिन्नयोरपाकरणाद् हेतुहेतुमद्भावस्य तादात्म्येऽनुपपत्तेरिति। उपलब्धिहेतुत्व... प्रमाणत्वम्। भवितृव्याख्यानेन भावो व्याख्यातः। तदेव ज्ञानमज्ञानं वा। उपलब्धिहेतुः प्रमाणं तस्य च भावस्तत्त्वमिति स्थितम्। तदेतदतिव्यापकत्वेनाक्षिपति—समानत्वादिति। समाधत्ते अयं विशेष इति। अयमर्थः, सर्व्वः कर्त्ता करणगोचरव्यापारो न साक्षात् फले व्याप्रियते। करणं च द्विधा सिद्धमसिद्धं, परश्वादि दारुद्वैधीभावायोद्यम्योद्यम्य दारुणि पातयन् दारु च्छिनत्तीत्युच्यते न तु साक्षात्कर्तृव्यापारगोचरो दारुद्वैधीभावः, किन्तु स्पर्शवद्वेगवतः करणीभूतस्य परशोः संयोगस्योद्यमननिपातनलक्षणस्तु कर्तृव्यापारः परशुगोचर एव। एवं स्वर्गकामोऽपि कर्त्ता न साक्षात् स्वर्गे व्याप्रियते किन्तु तत्करणं यागं सिद्धं साधयति। स्वर्गस्तु यागव्यापारादेवापूर्व्वाभिधानाच्चेतनाश्रयाद्देशकालावस्थाभेदासादितपरिपाकविशेषात्साक्षादुत्पद्यते तद्वदिहापि सिद्धमिन्द्रियादि असिद्धञ्च तत्सन्निकर्षादि व्यापारयन्नुत्पादय

(१) १६ पृ० २६ पङ्क्त्यनन्तरं पण्डितोऽत्र तत्तात्पर्य्यं हेयप्रतिपादनद्वारा स्वयमेव निवेदयिष्यते।

## वार्त्तिकम्

प्रमाणं जन्यते अकरणा तर्हि प्रमाणोत्पत्तिः प्राप्नोति ? न, इन्द्रियार्थसन्निकर्षस्य करणभावात् नाकरणा प्रमाणोत्पत्तिः, प्रमाणोत्पत्ताविन्द्रियार्थसन्निकर्षमपेक्षमाणाभ्यां प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत इति नाकरणप्रमाणोत्पत्तिप्रसङ्गः। यदि तर्हि प्रमाणोत्पत्ताविन्द्रियार्थसन्निकर्षमपेक्षेते प्रमातृप्रमेये, अथ तर्हि इन्द्रियार्थसन्निकर्षोत्पत्तौ किमपेक्षेते इति ? तस्मिन्नपीन्द्रियमित्येवमनादिः कर्तृकरणभावः, यद्यत् पश्चाद्भवति तत्तत् पूर्वभाविनमपेक्षत इत्यनादिः कर्तृकरणभावो द्रष्टव्य इति। यदि प्रमातृप्रमेयाभ्यां सद्भ्यां प्रमाणं जन्यते, ततः प्रमाणमन्तरेण प्रमातृप्रमेयभावस्यासिद्धत्वात् प्रमातृत्वं प्रमेयत्वञ्चानुपपन्नमिति। कथं ? प्रमाणमिति। यथा कारकशब्दोऽयं तथा प्रमाता प्रमेयमिति। न च कारकशब्दाः क्रियामन्तरेणात्मानं लभन्त इति। न च द्रव्यमात्रं कारकं, न च क्रियामात्रमिति, कारकशब्दो हि प्रवर्तमानः क्रियासाधने क्रियाविशेषयुक्ते प्रवर्तते।

## न्यायवार्त्तिकतात्पर्य्यटीका

करण एव चरितार्थः, करणं त्विन्द्रियादि तत्सन्निकर्षादि वा नान्यत्र चरितार्थमिति साक्षादुपलब्धावेव फले व्याप्रियते। प्रमेयस्य तु प्रत्यक्षादन्यत्रोपलब्धिहेतुभाव एव नास्ति, केवलं प्रमाणविषयभावमात्रेणोपयुज्यते। यत्राप्यस्य हेतुभावः प्रत्यक्षेऽभिप्रेयते तत्रापीन्द्रियसम्बन्धमात्र उपयुज्यते प्रमेयम्। इन्द्रियमेव तत्तत्सन्निकर्षादिना साक्षात् प्रमाहेतुः, तत्सिद्धमेतन्न प्रमाता साक्षात् प्रमाहेतुः कर्तृत्वात्। यो यः कर्त्ता स सर्वो न साक्षात् फलहेतुः, यथा—व्रश्चनः। यथा वा यजमानादिस्तथा, तस्मात्तथा। तथा प्रत्यक्षं प्रमेये न साक्षात् प्रमाहेतुः प्रमेयत्वात्। यद्यत् प्रमेयं तत्तत् सर्वं न साक्षात् प्रमाहेतुः अनुमेयादिवत्, तथा चैतत्तथा। तदिदं प्रमातृप्रमेययोः प्रमाणे चरितार्थत्वमचरितार्थत्वं प्रमाणस्य, तस्मात्तदेव फलहेतुः। प्रमातृप्रमेये तु फलोद्देशेन प्रवृत्ते इति तद्धेतू कथञ्चिदिति। चोदयति—अकरणेति। नाकरणः कर्त्ता प्रमाणमपि व्याप्तुमर्हतीत्यर्थः। परिहरति—न, इन्द्रियार्थसन्निकर्षस्येति। यदि ज्ञानं प्रमाणं तद[illegible]नस्य प्रमाणस्योत्पत्ताविल्यर्थः। पुनश्चोदयति—यदि तर्हीति। परिहरति—तस्मिन्नपीति। चोदयति—यदि प्रमातृप्रमेयाभ्यां सद्भ्यां प्रमाणमिति। प्रमाणमन्तरेण प्रमाया अभावात् प्रमातृप्रमेययोरसिद्धिरित्यर्थः। पृच्छति—कथमिति। उत्तरं—प्रमाणमितीति। अथ स्वरूपमेव कारकं कस्मान्न भवति, तच्च क्रियासम्बन्धस्य पुरस्तादप्यस्तीत्यत आह—न च द्रव्यमात्रमिति। अस्तु तर्हि तदीयो व्यापारः प्रधानक्रियायां कारणं, तस्यापि प्रधानक्रियायां निमित्तत्वादित्यत आह—न च क्रियामात्रम्। न हि स्वरूपेण देवदत्तो व्रश्चनः, नापि तदीयो व्यापार उद्यमननिपातनादिः काष्ठाश्रयः। क्व तर्हि कारकशब्दः प्रवर्त्तत इत्यत आह—कारकशब्दो हीति। प्रधानक्रियासाधने हेतौ अवान्तरक्रियाविशेषयुक्ते कारकशब्दः प्रवर्त्तते। द्वैधीभावो हि फलं प्रधानं व्यापारे कर्तुः [illegible]गोचरं उद्यमननिपातने अवान्तरव्यापारः कर्म्मणश्च दारुणः स्पर्शवद्वेगवत्तीव्रतरकुठार-

## न्यायवार्त्तिकम्

प्रमातृप्रमेयशब्दौ च कारकशब्दौ, तावन्तरेण क्रियां न प्रवर्तयेतामिति (१), न, पाचकादिशब्दवत् त्रिकालविषयत्वात्। न ब्रूमः क्रियासम्बन्धेनैव कारकशब्दाः प्रवर्तन्त इति, अपि तु त्रिकालविषया एते। यदि क्रियासम्बन्धनिमित्ताः स्युर्न क्रियासम्बन्धमन्तरेण प्रवर्त्तेरन् ? क्रियासम्बन्धमन्तरेण तु प्रवर्तन्ते, किं पुनर्निमित्तम् ? सामर्थ्यम्। तच्च त्रिष्वपि कालेष्वस्तीति। तस्मादुपपन्नं प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत इति, तदुपलब्धिसाधनमिति। साधकतमत्वाद्वा न प्रसङ्गः। न चायं प्रसङ्गोऽस्ति प्रमाता च प्रमेयं चोपलब्धेर्निमित्तत्वात् प्रमाणं प्रसज्यत इति। कस्मात् ? साधकतमत्वात्। साधकतमं प्रमाणं, न तु प्रमातृप्रमेये। कः खलु साधकतमार्थः ? साधकतमं प्रमाणमिति केवलं वाक्यमभिधीयते नार्थ इति। भावाभावयोस्तद्वत्ता, न प्रमातरि प्रमेये वाऽसति प्रमा भवति, सति तु भवति, न पुनः सति भवत्येव।

## न्यायवार्त्तिकतात्पर्यटीका

संयोग एवावान्तरव्यापारः, तेन हि दारु स्वावयवपरिस्पन्दजन्मनाऽवयवविभागं द्वैधीभावमनुभवति। तस्मादवान्तरव्यापारसम्पन्नं कारकमिति सामान्यतः प्रसाध्य प्रकृते योजयति—प्रमातृप्रमेयशब्दौ चेति। तावन्तरेण क्रियां प्रधानक्रियामित्यर्थः। परिहरति—न, पाचकादिशब्दवदिति। लोकाधीनावधारणाधीनः खल्वयं शब्दार्थसम्बन्धः, लोकश्चातीतानागतवर्त्तमानक्रियासम्बन्धमात्रविवक्षया कारकशब्दान् प्रयुङ्क्ते, पाचकमानय पक्ष्यति पाचकोऽयमपाक्षीत् पाचकोऽयं पचतीति च तुल्यवत्त्रैकाल्यविषयप्रयोगदर्शनं, तत् कस्य हेतोरपचत्यपि पाकसम्बन्धं प्रत्यस्ति स्वरूपशक्तिर्देवदत्तादाविति। द्वयी हि शक्तिः कारकाणां कार्योपजनं प्रति स्वरूपञ्च सहकारिग्रामसमवधानञ्च। तत्रासत्यपि सहकारिग्रामसमवधाने कारकशब्दानां प्रवृत्तेः, सत्यपि च स्वरूपे त्रैकाल्यव्यापिनि त्रैकाल्ययोगिकार्यासम्भवे प्रवृत्तेस्त्रैकाल्ययोगिकार्योपहितमर्य्यादमेव स्वरूपं कारकशब्दानां प्रवृत्तिनिमित्तमित्यसत्यपि प्रत्युत्पन्नप्रमाहेतुप्रमाणसम्बन्धे प्रमातृप्रमेयशब्दयोः प्रवृत्तिरिति उपपन्नं प्रमातृप्रमेयाभ्यां प्रमाणं जन्यत इति। तत् प्रमाणमुपलब्धिसाधनं साक्षात्, न प्रमातृप्रमेये इति सिद्धम्।

सत्यपि चोपलब्धिसाधनत्वे प्रमातृप्रमेययोरुपलब्धिहेतुरित्यप्रसङ्गः साधकतमासाधकतमयोः साधकतमे कार्य्यसंप्रत्ययात् सातिशयत्वेनोद्भूतत्वात्तस्येत्याह—साधकतमत्वाद्वेति। साधकतमार्थं पृच्छति—कः खल्विति। उत्तरं—प्रमाणस्य भावाभावयोः, प्रमायाः कार्य्यस्य तद्वत्ता भावाभाववत्ता साधकतमार्थः। लक्ष्यलक्षणयोरभेदविवक्षया सामानाधिकरण्यं, न तु प्रमातृप्रमेयान्वयव्यतिरेकानुविधानमप्यप्रमाया अन्वयव्यतिरेकयोरित्यत आह—न प्रमातरीति। प्रमातृप्रमेयाभ्यां सह प्रमोत्पादस्यान्ययोगव्यवच्छेदेन सम्बन्धः, प्रमाणेन सह प्रमोत्पादस्यायोगान्य-

(१) अत्र 'प्रवर्त्तेता'मिति पाठः सुष्ठुतया मन्यते।

### न्यायवार्त्तिकम्

प्रमाणे तु सति भवन्ती भवत्येव, सोऽयमतिशयः साधकतमत्वमुच्यते। यद्वान् वा प्रमिमीते, सोऽतिशयः। किंवान् प्रमिमीते? प्रमाणवान् प्रमिमीते। प्रमाणे सति प्रमिमीते, नासतीति। सतोर्वाऽकर्तृत्वं यदभावात्। यस्य चाभावात् प्रमातृप्रमेये न प्रमां कुरुतः सोऽतिशयः। संयोगवच्चरमभाविता वा, यथा वा संयोगः पश्चाद्भावी द्रव्यशक्तिर्भवति तथा प्रमाणं चरमभावि प्रमातृप्रमेययोः प्रमाशक्तिर्भवति, पश्चाद्भावोऽतिशयः। प्रतिपत्तेरानन्तर्य्यं वा। यद्वा प्रमाणानन्तरं प्रतिपत्तेर्जन्म, स चायमतिशय इति। असाधारणकारणता वा। प्रमाता (१) साधारणं कारणं सर्वप्रतिपत्तीनां, प्रमेयमप्यशेषपुरुषसाधारणत्वात् तथाभूतं, प्रमाणं त्वसाधारणकारणत्वात् प्रधानम्। प्राधान्याच्च साधकतमत्वेनाभिधीयत इति।

### न्यायवार्त्तिकतात्पर्य्यटीका

योगव्यवच्छेदाय्यामित्यतिशयः। प्रमातृप्रमेये हि प्रमाणोपक्षीणवृत्तिनी प्रमायां न व्याप्रियेते। तेनान्तरायसम्भवान्नावश्यं प्रमातृप्रमेयव्यापारे सति प्रमा भवति। प्रमाणव्यापारे तु प्रमा भवत्येवेति। कल्पान्तरमाह—यद्वान् वा प्रमिमीते सोऽतिशयः। प्रमिमीत इति स्वतन्त्रं कर्त्तारं दर्शयति—प्रतिपाद्यात् करणाद्व्यवच्छेत्तुम्। यद्वानेवेति च सावधारणम्। तत्र यद्वानिति कर्त्रन्तरं व्यवच्छिन्नं, न हि कर्त्ता कर्तृमान्, किन्तु प्रमाणवान्, स्वतन्त्रो ह्याश्रयः परतन्त्रेणाश्रीयते। कर्त्रधीनं हि करणमित्यावेदितम्। प्रमाता प्रमेयवानपि क्वचिद्भवेत् तत्तन्त्रत्वात् प्रमेयस्य, न तु प्रमेयवानेव, अनुमानादिषु प्रमेयस्यातीतत्वादिना तद्वत्ताविरहात्। न तु लिङ्गादिज्ञानवान्न कदाचिदित्यवधारणफलम्। सोऽयं विशेषः प्रमातृप्रमेयाभ्यां प्रमाणस्य। अस्यैव विशेषस्यातिशयत्वमन्वयव्यतिरेकाभ्यामादर्शयति—प्रमाणे सतीति। कल्पान्तरमाह—सतोर्वेति। पूर्वेण भावप्रधानोऽतिशयो यादृशस्य दर्शितस्तादृशस्यैवेह व्यतिरेकप्रधानोऽतिशय इति विशेषः। अकर्तृत्वमहेतुत्वमित्यर्थः। कल्पान्तरमाह—संयोगवच्चरमभाविता वा। इतिकर्त्तव्यताके(२) हि व्याप्रियमाणं करणं न तु कारणादिस्वरूपं, करणादिशब्दप्रवृत्तिनिमित्तमात्रन्तु स्वरूपं स्यादिति पूर्वमावेदितं, तच्च सिद्धमसिद्धं वा प्रमातृप्रमेयस्य पश्चादेव तथात्वेन सम्पद्यत इति चरमभावीत्युच्यते सोऽयमस्य चरमभाविताऽतिशयः। यथा तन्तूनां पटे जनयितव्ये अन्त्याः संयोगभेदा यदनन्तरं पट उत्पद्यत एवेति। कल्पान्तरमाह—प्रतिपत्तेरानन्तर्य्यं वा। यत एव प्रमाणं चरमभावि अत एव तदनन्तरं प्रतिपत्तेः प्रमाया भावात्। प्रतिपत्तेरानन्तर्य्यमेव प्रमाणस्यातिशयः। स चेति, चोऽवधारणे। इदमपि लक्ष्यलक्षणयोरभेदविवक्षयोक्तम्। कल्पान्तरमाह—असाधारणकारणता वा। चतस्रः खल्विमाः प्रत्यक्षादिप्रमितयो भिन्नबुद्धिव्यपदेशभाजोऽनुभूयन्ते। न च प्रमाता तद्भेदहेतुः, तस्य साधारण्यात्। न च प्रमेयमेकस्यापि प्रमेयस्य

(१) अत्र 'तावत्' इत्यधिकपाठः ख०पु०)

(२) "इतिकर्त्तव्यताके" इत्यत्र भवितुमुचितम् इति मन्यते।

## न्यायवार्त्तिकम्

–प्रमाकारणसंयोगविशेषकत्वं वा, यो वा प्रमाकारणं संयोगस्तस्य प्रमाणमनुग्रहे वर्तमानमतिशय-शब्दवाच्यम्।

अर्थग्रहणं प्रमाणविषयप्रतिपत्तिनिषेधार्थम्। यतो न प्रमाणविषया प्रतिपत्तिः पुरुषमितिकर्तव्यतायां प्रयोजयति, किन्त्वर्थस्य तथाभावविषया। यदायमर्थस्य तथाभावं प्रतिपद्यते अथ प्रवर्तत इति। उपेक्षणीयविषयप्रतिषेधार्थं वा। न ह्युपेक्षणीयविषयप्रतिपत्तिः पुरुषमितिकर्तव्यतायां प्रयोजयति, किन्त्वर्थस्य सुखदुःखहेतुभावविषया। यदायमर्थस्य सुखदुःखहेतुभावं प्रतिपद्यते, अथ प्रवर्तत इति। प्रमाणाग्रहणं गम्यमानत्वादिति चेन्न, प्रमाणविशेषज्ञापनार्थत्वात्। अर्थप्रतिपत्तौ प्रवृत्तिसामर्थ्यादित्यभिधीयमाने गम्यत एवैतत् प्रमाणत इति। न हि काचित् प्रतिपत्तिः प्रमाणमन्तरेण भवति, तच्च नैवम्, प्रमाणविशेषज्ञापनार्थत्वात्। अस्त्ययं प्रमाण-

## न्यायवार्त्तिकतात्पर्य्यटीका

संप्लवे सर्वप्रतिपत्तिसाधारण्यात्। प्रमाणानि तु यथायथं चतसृष्वसाधारणानीति भिन्नबुद्धिव्यपदेश-निबन्धनानि। तदिदमसाधारण्यमतिशयः, अशेषः पुरुषः प्रमाताऽत्र विवक्षितः। कल्पान्तर-माह—प्रमाकारणेति। प्रमाया असमवायिकारणं खल्वात्ममनःसंयोगः, स च सर्वप्रमासाधारणः, नासौ प्रमात्रा प्रमेयेण वा शक्यो विशेष्टुम्। तयोरपि तद्वदेव साधारण्यात्। असाधारणं तु प्रमाणं यथायथमात्ममनःसंयोगमवच्छिनत्ति। एवं सुखादिप्रमेयाणामपि मन एवासाधारणं व्यवच्छेदकं द्रष्टव्यम्। सोऽयमस्यातिशयः। अतिशयातिशयिनोरभेदविवक्षयाऽतिशयशब्दवाच्यमित्युक्तम्।

क्रमप्राप्तमर्थग्रहणं तात्पर्य्यतो व्याचष्टे—अर्थग्रहणमिति। कस्मात् पुनर्निषिध्यते प्रमाण-विषया प्रतिपत्तिरित्यत आह—यतो न प्रमाणविषयेति। इतिकर्त्तव्यता अनुष्ठानं, तस्मिन्, अर्य्यत इत्यर्थस्तोयकण्टकादिः, तथाभावोऽर्थनीयत्वम्, तच्च सुखदुःखसाधनत्वम्। सुखसाधनं खल्पादेयत्वेन दुःखसाधनं च हेयत्वेनार्य्यते। तात्पर्य्यान्तरमाह—उपेक्षणीयेति। उपेक्षणीय-विषये प्रमाणे प्रवृत्तिसामर्थ्यं नास्तीति तत्प्रतिषिध्यते। न च तदप्रमाणमिति समर्थ-स्यापि दृष्टप्रमाणसाधर्म्येण लिङ्गेन प्रामाण्यानुमानादिति। चोदयति—प्रमाणाग्रहणमिति। समर्थप्रवृत्तिजनिका हि प्रतिपत्तिर्नाप्रमाणाद्भवतीति अर्थादेव प्रमाणादिति गम्यत इत्यर्थः। परिहरति—न प्रमाणविशेषज्ञापनार्थत्वात्। अयमभिसन्धिः—प्रवृत्तिसामर्थ्येन हि कार्येण प्रमाणस्यार्थवत्त्वमनुमातव्यम्। न चैतत् साक्षात् प्रमाणस्य कार्य्यं, किन्त्वर्थप्रतिपत्तेः, तदनन्तरं समर्था प्रवृत्तिरुपजायते। अर्थप्रतिपत्तिस्तु प्रमाणकार्येति समर्था प्रवृत्तिः प्रमाणकार्या सती प्रमाणस्यार्थवत्त्वं प्रमापयति, तस्मादर्थगम्यमपि प्रमाणमर्थप्रतिपत्ति-करणत्वेन द्योतनीयम्। अन्यथा प्रमाणमर्थवदर्थप्रतिपत्तेः समर्थप्रवृत्तिजनकत्वादिति किं केन सङ्गतम्। प्रमाणस्य विशेषः प्रमाणाभासाद् व्यावृत्तिः, तस्य ज्ञापनं, स एवार्थो यस्य प्रमाणग्रहणस्य तत्तथोक्तम्, तस्य भावस्तत्त्वम्। तस्मादेतदुक्तं भवति—प्रमाणकार्य्यीया

## न्यायभाष्यम्

प्रमाणमन्तरेण नार्थप्रतिपत्तिः, नार्थप्रतिपत्तिमन्तरेण प्रवृत्तिसामर्थ्यम्। प्रमाणेन खल्वयं ज्ञाताऽर्थमुपलभ्य तमर्थमभीप्सति जिहासति वा। तस्येप्साजिहासाप्रयुक्तस्य समीहा प्रवृत्तिरित्युच्यते। सामर्थ्यं पुनरस्याः फलेनाऽभिसम्बन्धः। समीहमानस्तमर्थमभीप्सन् जिहासन् वा तमर्थमाप्नोति जहाति वा। अर्थस्तु सुखं सुखहेतुश्च, (१) दुःखं दुःखहेतुश्च।

## न्यायवार्त्तिकम्

शब्दः प्रमाणे वर्तमानः, अस्ति च प्रमाणसामान्यात् प्रमाणाभासेऽपीति। तद्वयेह (२) प्रमाणेन प्रतिपत्तिः, सा प्रवृत्तिसामर्थ्यं प्रतिपादयति प्रमाणं, नेतरदिति। न च प्रमाणग्रहणमन्तरेण पक्षोऽस्यभिधातुं लभ्यते, तेन च प्रयोजनम्, अतश्च प्रमाणग्रहणं कृतमिति। अर्थग्रहणेन सुखदुःखहेतुत्वेन सर्वसंग्रहोऽर्थ्यमाणत्वात् (३)। सर्वः प्रमाणादिरर्थः सुखदुःखहेतुः, सर्वश्चार्थ्यते, अर्थ्यमाणत्वादर्थ (४) इति, न, व्याघातादविवक्षितत्वाच्च। सर्वः प्रमाणादिरर्थः सुखदुःखहेतुरिति ब्रुवता हेयादिभेदाच्चत्वार्यर्थपदानीति व्याहन्येत। न च प्रमाणादिहानं शक्यं कर्तुम्। न च प्रमाणादिहानं विवक्षितं, तस्मादव्याख्यानमेतत्। किन्तु सुखदुःखत्वेन तद्धेतुत्वेन च

## न्यायवार्त्तिकतात्पर्य्यटीका

अर्थप्रतिपत्तेः प्रवृत्तिसामर्थ्यं न तदाभासकार्य्यायाः, तस्मात् प्रमाणस्यार्थवत्त्वं गम्यत इति। तदिदमुक्तं —तद्वयेह प्रमाणेन प्रतिपत्तिः साप्रवृत्ति सामर्थ्यं प्रतिपादयति प्रमाणम्। अयमर्थः—प्रमाणं कर्तृ (५), प्रवृत्तिसामर्थ्यं प्रतिपद्यमानं प्राप्नुवत्तत् प्रतिपादयति प्रापयति, प्रमाणकार्य्याऽर्थप्रतिपत्तिरिति। इदमपि प्रमाणग्रहणस्य प्रयोजनमित्याह—न च प्रमाणग्रहणमिति। एकदेशिव्याख्यानमुपन्यस्यति—सुखेति। न केवलं सुखदुःखतद्धेतुत्वादर्थ्यमानत्वाज्जायमानत्वाच्च। दूषयति—नेति। सर्वस्य सुखदुःखतद्धेतुत्वेन हेयपक्षनिक्षेपणात्। उपादेयानां प्रमाणशास्त्रापवर्गाणामभावप्रसङ्गाद्व्याघातः। अविवक्षितत्वाच्चेति। चशब्दसमुचितमशक्यहानत्वं हेत्वन्तरमादर्शयति—न च प्रमाणादिहानमिति। सुखदुःखतद्धेतवो हि हेयाः सन्तो हानोपायमपेक्षन्ते। न च प्रमाणादेरन्यस्तदुपायः सम्भवति। न च प्रमाणादिः स्वोच्छेदाय पर्य्याप्तः। न चास्मादपवर्गो नाधिगम्यते। तस्मान्न शक्यं प्रमाणादिना प्रमाणहानमिति। न चैतन्निःश्रेयसहेतुं शास्त्रं प्रणयतः सूत्रकारस्य तदनुवर्तिनो वा भाष्यकारस्य विवक्षितमित्याह—न च प्रमाणादिहानं विवक्षितं, तस्मादस्मद्व्याख्यानमेव शोभनमित्याह—किं त्विति। वृत्तिसामर्थ्याधान-

---

(१) 'च' नास्ति ज०पु०। (२) "तथेह" इति क०पु०। (३) 'अर्थ्यमानत्वा'दिति ख०पु०। (४) °अर्थ्यते इति अर्थः, ऋ+थन्। उषि-कुषि-गार्त्तिभ्यस्थन्। उ—२।४। अर्थ्यमानत्वादर्थ इति तात्पर्य्यकारमतम्। (५) कर्तृ—प्रयोज्यकर्तृ स्वरूपं, तथा च प्रमाणं प्रवृत्तिसामर्थ्यं प्रतिपद्यते (प्राप्नोतीत्यर्थः), प्रमाणजन्या अर्थप्रतिपत्तिस्तु तत्प्रमाणं प्रवृत्तिसामर्थ्यं प्रापयति इति स्फुटार्थः।

### न्यायभाष्यम्

सोऽयं प्रमाणार्थोऽपरिसङ्ख्येयः, प्राणभृद्भेदस्याऽपरिसङ्ख्येयत्वात्। अर्थवति च प्रमाणे(१) प्रमाता प्रमेयं प्रमितिरित्यर्थवन्ति भवन्ति। कस्मात्? अन्यतमापायेऽर्थस्यानुपपत्तेः।

### न्यायवार्त्तिकम्

यावतां संग्रहस्तेऽभिधीयन्ते अधिकारात्। न च संविदो ग्रहणमनधिकारात्, अकर्मत्वाच्च न संविद्वेद्या, असुखदुःखत्वाद्, अतद्धेतुत्वाच्च, नाप्यर्थ्यते फलत्वात्। सोऽयं प्रमाणार्थोऽपरिसङ्ख्येयः, इयानयं प्रमाणविषय इति न परिसङ्ख्यातुं शक्यम् आनन्त्यात्। न, उभयस्यापि परिसङ्ख्यातत्वात्। एतावानयं प्रमाणार्थो यत्सुखदुःखे तद्धेतुश्चेति। तच्चोभयं परिसङ्ख्यातम्, अतो न युक्तमानन्त्यात् न परिसङ्ख्यातुं शक्यम्। प्राणभृद्भेदस्य चापरिसङ्ख्येयत्वादपरिसंख्येयः प्रमाणार्थ इत्यसम्बन्धमुक्तमिति। न, अर्थशब्दस्य प्रयोजनवाचित्वात् प्रमाणार्थोऽपरिसङ्ख्येय इति।

### न्यायवार्त्तिकतात्पर्यटीका

योग्यत्वमधिकारः, तस्मात् सुखदुःखतद्धेतुरूपार्थप्रतिपत्तिरेव हि समर्थां प्रवृत्तिमाधत्ते न त्वर्थमात्रप्रतिपत्तिरित्यर्थः। न केवलं व्याघाताशक्यहानत्वाविवक्षितत्वैरर्थपदेन सर्वसंग्रहोऽशक्यत्वादपि न सर्वसंग्रह इत्याह—न संविद इति। सुखदुःखतद्धेतुतया न संविदो ग्रहणं संग्रहः, सर्वमध्यपतिताया अपि। कुतः? अनधिकारात् सुखदुःखतद्धेतुयोग्यताविरहात्। नाप्यर्थ्यमानत्वेन संग्रह इत्याह—अकर्मत्वाच्च। न तावत् सर्वा एव संविदः संविद्गोचरा मनोयोनयः संवेद्या भवितुमर्हन्ति। एकनीलविषयसंवित्परम्परामात्र एव पुरुषायुपसहस्रपर्य्यवसानाद् विषयान्तरसंचाराभावप्रसङ्गाच्च। तस्मादनवस्थाभयादन्ते कस्याश्चित् संविदोऽसंवेद्यतया फलमात्रत्वमभ्युपेयम्। तथा च सा नार्थ्यते। न च सुखदुःखे तद्धेतुरिति न सर्वसंग्रहः संविदोऽसंग्रहादिति।

तदेवमनुसन्धिवाक्यं व्याख्याय भाष्यव्याख्यान्तरमवतार्य्य तत्रैकदेशिव्याख्यानं दूषयितुमुपन्यस्यति।—सोऽयं प्रमाणार्थ इति। दूषयति—नोभयस्यापि परिसङ्ख्यातत्वात्। अर्थस्तु सुखमित्यादिना भाष्यग्रन्थेन। कार्य्यकारणाभ्यामुभयत्वं, प्राणभृद्भेदकस्यापरिसङ्ख्येयत्वादिति हेतुः, श्वेतः प्रासादः काकस्य कार्ष्ण्यादितिवन्न प्रतिज्ञार्थेन सङ्गच्छते इत्याह—प्राणभृद्भेदस्य चेति। तदेकदेशिमतदूषणमस्मद्व्याख्याने नास्तीत्याह—नार्थशब्दस्येति। चन्दनादिविषयं प्रमाणं सुखप्रयोजनमेव, कण्टकादिविषयकं प्रमाणं दुःखोत्पादप्रयोजनमेवेत्येतदुभयं परिसङ्ख्यातुं नियन्तुमशक्यमित्यर्थः।

एवं किलात्र शङ्क्यते—सुखदुःखभावो वस्तूनां स्वाभाविको भवेन्न वा। स्वाभाविकत्वे सर्व्व एव सर्वान् प्रत्यर्थः सुख इति करभवन्मनुष्याणामपि कण्टकः सुखः स्यात्। एवं निदाघे कुङ्कुमं सुखं स्याच्चन्दनं च हेमन्ते सुखं स्यात्। एवं तृष्णज इव अपां सुहितस्यापः सुखाः प्रसज्येरन्। अस्वाभाविकत्वेऽनादिवासनावैचित्र्यलब्धजन्मपुरुषधर्मकल्पनानुपातिनः सुखदुःखादयो न प्रमाणप्रयोजनं भवितुमर्हन्तीति तत्रेदमुपतिष्ठते—सोऽयं प्रमाणार्थ इति। निवेदयिष्यते हि क्षणभङ्ग-

(१) प्रमाणे सप्रयोजने सतीत्यर्थः। यद्वा प्रमाणे अर्थाव्यभिचारिणि सतीति बोध्यम्।

## न्यायवार्त्तिकम्

प्रमाणे प्रयोजनमपरिसङ्ख्येयमित्ययं वाक्यार्थः। कथं? स एवार्थः केषाञ्चित्सुखहेतुर्भवति, केषाञ्चित् दुःखहेतुरिति। अर्थवति च समर्थे प्रमाणे, अर्थवन्ति समर्थानीति। अन्यतमत्वार्थः साधकतमार्थो द्रष्टव्यः प्रकरणात्। प्रकरणं हि चतुर्वर्गे प्रमाणं प्रधानमिति वर्ण्यते। यदि पुनर्यथाश्रुतिवाक्यमर्थवत् स्यात्, किं प्रमाणसामर्थ्यं वर्णितं स्यात्? तस्माद्यथोक्तं न्याय्यमिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

भङ्गाधिकारे (१) यथा स्थेमभाजामपि वस्तूनामकर्मणामपि क्रमवत्सहकारिसमवधानवशादुपजनापायधर्म्माणः क्रमवन्तो धर्मा भवन्तीति तदिहापि। यद्यपि न जात्या सुखदुःखहेतुभावो भवति, तथापि जातिदेशकालावस्थापुरुषभेदसहकारिसमवधानादुपपत्स्यते सुखदुःखहेतुभावोऽव्यवस्थयेति भावः। तत्सिद्धमेतत् प्रमाणार्थोऽनियतः अनियतप्राणभृद्भेदहेतुकत्वात्, यद्यदनियतकारणकं कार्य्यं तत्सर्वमनियतमेव यथाऽनियतकालमेघोदयनिबन्धनं वर्षं तथा चायं तस्मादनियत इति। कस्मात् पुनः प्रमात्रादिचतुर्वर्गे प्रमाणस्यैवार्थ उच्यते न प्रमात्रादीनामपीत्याशङ्कानिवारणार्थं भाष्यमनुवदन्नेव व्याचष्टे—अर्थवति च समर्थे सम्यगर्थेऽर्थाव्यभिचारिणीति यावत् प्रमाणे। अर्थवन्ति भवन्ति समर्थानि सम्यगर्थानि प्रमात्रादीनि; अर्थस्य तु सम्यक्त्वमिदमेव यद्यादृशः प्रमाणेनोपदर्शितस्तथात्वं न पुनरन्यथाभाव इति। यदा त्वादिभाष्यवाक्येऽर्थशब्दः प्रयोजनवचनस्तदैवं व्याख्यानम्—अर्थवति च प्रयोजनवति च यत्समर्थं शक्तं प्रमाणं प्रतिपत्त्यादिक्रमेण पूर्वोक्तेन प्रयोजनं प्रति, अतः समर्थे प्रमाणे प्रमात्रादीन्यर्थवन्ति प्रयोजनवन्ति भवन्ति, यतस्तान्यपि प्रमाणवदेव समर्थानि शक्तानि प्रयोजनं प्रतीति। अत्र हेतुरन्यतमापाय इति। तस्यार्थं व्याचष्टे—अन्यतमत्वार्थ इति। नन्वन्यतमशब्दो बहुष्व निर्द्धारितविशेषमेकमाह, न तु साधकतममित्यत आह—प्रकरणादिति। साधारणशब्दो हि प्रकरणाद्विशेषे वर्तते। तद्यथा शिविकावाहनप्रक्रमे पुरुषमानयेति पुरुषशब्दो विष्टौ,(२) तद्वदिहापि प्रमात्रादिपरिहाराय प्रमाणस्यार्थवत्त्वाभिधाननियमप्रक्रम इति प्रमात्रादिभ्यः प्रमाणस्य विशेषो वाच्यस्तत्रैवान्यतमशब्दो वर्तते। यद्यप्यर्थप्रतिपत्त्यव्यभिचारद्वारेण प्रमाणस्याव्यभिचारो गम्यते दृष्टे विषये, तथाऽप्यदृष्टविषये न तज्जनितप्रतिपत्त्यव्यभिचारेणाव्यभिचारः शब्दस्य प्रमाणस्य शक्यो विज्ञातुं, प्रतीत्यव्यभिचारस्य प्रमाणाव्यभिचारग्रहणमन्तरेणाशक्यज्ञानत्वात्। तस्माद्दृष्टार्थस्य मन्त्रायुर्वेदस्य प्रवृत्तिसामर्थ्यावधृतार्थाव्यभिचारस्य सामान्यादाप्तप्रणीतत्वादग्निहोत्रादिवाक्यानां प्रमाणानामव्यभिचारग्रहणपुरःसरमेव त्रिवर्गस्याव्यभिचारग्रहणं, न पुनरत्र त्रिवर्गव्यभिचारः शक्योऽन्यतः परिच्छेत्तुम्। अदृष्टार्थविषयस्य च चतुर्वर्गस्येहार्थवत्त्वेऽपि प्रयोजनं दृष्टार्थे सन्देहादपि व्यवहारसिद्धेः। तदिदं चतुर्वर्गे प्रमाणस्य प्राधान्यमिति।

(१) अ ३, आ २, सूत्र—१० आरभ्य सप्तदशसूत्रपर्यन्तं क्षणभङ्गभङ्गाधिकारः। (२) विष्टिः दण्डाकृष्टः कर्म्मकरः। परि० २०६।७ पं०।

## न्यायभाष्यम्

तत्र यस्येप्साजिहासाप्रयुक्तस्य प्रवृत्तिः स प्रमाता, स येनाऽर्थं प्रमिणोति तत्प्रमाणं, योऽर्थः प्रमीयते तत् प्रमेयं, यद् अर्थविज्ञानं सा प्रमितिः, चतसृषु चैवंविधास्वर्थतत्त्वं परिसमाप्यते।

किं पुनस्तत्त्वम्? सतश्च सद्भावोऽसतश्चाऽसद्भावः। सत्सदिति गृह्यमाणं

## न्यायवार्त्तिकम्

प्रमाता स्वतन्त्रः। किं पुनः स्वातन्त्र्यम्? कारकफलोपभोक्तृत्वं, यस्मात् कारकाणां फलेनाय-मभिसम्बध्यते। तत् समवायो वा। यद्वा अशेषकारकनिष्पाद्यायाः क्रियायाः पुरुष आश्रयो भवति तत् प्रयोक्तृत्वमितराप्रयोज्यता वा। यद्वा परिदृष्टसामर्थ्यानि कारकचक्राणि प्रयुङ्क्ते तैश्च न प्रयुज्यते। तत्त्वपरिसमाप्तिर्विनियोगयोग्यता उपेक्ष्यता वा, याऽसावविसंवादिता साऽवधारितस्यार्थस्य विनि-योगयोग्यता सुखसाधनं वा दुःखसाधनं वाऽयमर्थ इति ज्ञात्वा विनियोगः समासिस्तत्प्राप्तिस्तत्-प्रतिषेधश्च। यद्वा न सुखसाधनं न दुःखसाधनमित्युपेक्षेति। किं पुनस्तत्? सदसती तत्।

## न्यायवार्त्तिकतात्पर्य्यटीका

चतुर्वर्गविभागपरे भाष्ये प्रमाता प्रथमं दर्शितः, तत्रास्य लक्षणमाह—प्रमाता स्वतन्त्र इति। स्वातन्त्र्यं पृच्छति—किं पुनः स्वातन्त्र्यं यस्याभिसम्बन्धात् स्वतन्त्र इति। तत्र भाष्यकृता प्रमातृत्वोपलक्षितो न लक्षितः, न खल्वीप्साजिहासयोर्वा प्रवृत्तौ वा स्वातन्त्र्यं प्रमातृत्वम्, अपि तु प्रमायामीप्सादिस्वातन्त्र्येण तु तदुत्तरभाविना प्रमायां स्वातन्त्र्यं पूर्वकालभाव्युप-लक्षितम्। तेन तच्चरितमनुवर्तमानो वार्तिककृदुपलक्षणान्तरं कृत्वोत्तरकालभाव्याह—कारक-फलोपभोक्तृत्वं। न हि सर्वः कर्त्ता समस्तकारकजन्यसुखादि वौदनादि वा भुङ्क्ते ऋत्विक्पाचका-दिषु च व्यभिचारात्। कारकस्य तु सतः कर्तृत्वोत्तरकालभाविनी फलभोक्तृता कर्तृत्व-नान्तरीयकतया (१) तदुपलक्षयति, यजमानस्य राज्ञश्च प्रैषादिना तत्तद्व्यापारकर्तृत्वात्। यथाऽ-ऽहुरत्रभवन्तः (२) "तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा युक्तं तत्सर्वं पच्यर्थ" इति। स्वातन्त्र्यलक्षणमाह—तत्समवायो वा। कारकाभिधानेन सन्निधापितां क्रियां तदिति सर्वनाम्ना परामृशति। यस्य हि व्यापारं प्राधान्येन धातुराख्यातप्रत्ययो वाऽभिधत्ते स स्वतन्त्रः कर्त्ता। तथा हि विक्लिद्यन्तीत्यत्र तण्डुलादयः (३) कर्त्तारः, पचतीत्यत्र देवदत्तादयः, तत्कस्य हेतोः? एकत्र तन्दुलादेर्व्यापार उपात्तोऽपरत्र देवदत्तादेरिति। प्राधान्येन चाशेषकारकनिर्वर्त्यत्वं प्रधानक्रियाया इति।

---

(१) आदर्शे 'कर्तृत्वं नान्तरीयकतया' इति पाठः। (२) महाभाष्यकाराः। (महाभाष्य—३।१।२६)। (३) 'तन्दुलादयः' इति क-पु-पाठः।

## न्यायभाष्यम्

यथाभूतमविपरीतं तत्त्वं भवति। असच्चाऽसदिति गृह्यमाणं यथाभूतमविपरीतं तत्त्वं भवति।

## न्यायवार्त्तिकम्

तस्य भावस्तत्त्वमित्यत्र तद्वाच्यं यस्य भाव इति। सदसती तत्, प्रमाणविषयत्वेनाधिकारात्। सदसती प्रमाणविषयावित्यधिकृतम् तस्मात् सदसती तदिति। तद्भावः सदसत्त्वं, सदसतोः प्रमाणविषयता तत्प्रतिषेधश्च, तयोः खलु सदसतोर्भावो द्विरूपः, विधीयमानः प्रतिषिध्यमानश्च। यदेकत्र विधीयते तदन्यत्र प्रतिषिध्यते, तद्यथा—गन्धवती पृथिवी, अगन्धा आप इति। प्रमाणविषयत्वात्

## न्यायवार्त्तिकतात्पर्य्यटीका

अवान्तरे व्यापारभेदेऽपि प्रधानक्रियोद्देशेन समस्तकारकप्रवृत्तेरिति। पुरुष इति प्रकृतक्रियापेक्षं, प्रमायाः पुरुषाश्रयत्वादिति। लक्षणान्तरमाह—तत्प्रयोक्तृत्वमितराप्रयोज्यता वा। तस्य चेतनस्य सर्वकारकाणि प्रति प्रयोक्तृत्वं, तैश्च कारकैरप्रयोज्यता वा। अचेतनस्य तु भाक्तं कर्तृत्वं, न स्वाभाविकमिति भावः। परिसमाप्तिपदार्थं व्याचष्टे, तत्त्वपरिसमाप्तिरिति। तत्त्वं हि प्रमाणव्याप्यत्वं प्रमाणव्यापारविषयत्वं, तच्च हानोपादानोपेक्षाभिः पर्य्यवस्यति, पर्य्यवसानं समाप्तिः। विनियोज्यतेति वक्तव्ये योग्यताग्रहणमीप्सितेऽपि दृष्टे कुतश्चित्प्रतिबन्धात् पुरुषेणानुपात्ते मा भूत्तत्त्वापरिसमाप्तिरिति। यद्यपि हि तत्पुरुषेणानुपात्तं तथाऽप्युपादानयोग्यताप्रदर्शनादस्ति तत्त्वपरिसमाप्तिरिति। तत्प्रतिषेधश्चेत्यत्र तच्छब्देन हानोपादानलक्षणं विनियोगं परामृशति।

किं पुनस्तत्त्वमित्यादि भाष्यं व्याचिख्यासुस्त्वप्रत्ययप्रकृतेस्तदोऽर्थं पृच्छति—किं पुनरिति। उत्तरं सदसती इति। प्रश्नं विभजते—तस्य भावस्तत्त्वमिति। उत्तरं विभजते—सदसती तत्। अथ कस्मात् प्रकृतिपुरुषौ वा (१) पञ्चस्कन्धा वा (२) परं ब्रह्माद्वैतं वा (३) जीवाजीवास्रवादयो वा सप्त(४)पृथिव्यापस्तेजो वायुरिति (५) चत्वारि भूतानीत्यादीनि न तदो वाच्यानि भवन्तीत्यत आह—प्रमाणविषयत्वेनाधिकारात्। सूत्रभाष्यवाक्यतद्विवरणेषु प्रमाणं प्रमाणविषयश्चाधिकृतम्। न च सांख्यादिसिद्धान्तभेदानुपातिनोऽर्थाः प्रमाणविषयाः। यथा चैतत्तथा तथा तत्रैव (६) निवेदयिष्यते। उपसंहरति—तस्मादिति।

प्रकृत्यर्थं व्याख्याय प्रत्ययार्थं व्याचष्टे—तद्भाव इति, सदसतोर्यथासंख्यं, विधायकप्रमाणविषयता सतो भावः, तत्प्रतिषेधश्चासतो भावः। सदिति विधायकप्रमाणविषयतां परामृशति, तत्प्रतिषेधेन च प्रतिषेधकं प्रमाणमुपस्थापितम्, तेन प्रतिषेधकप्रमाण-

(१) सांख्यमतम्। (२) बौद्धमतम्। पञ्चस्कन्धाः—रूपसंज्ञासंस्कारवेदनाविज्ञानात्मकाः। (३) वेदान्तमतम्। (४) आर्हतमतम्। जीवाजीवास्रवसंवरनिर्ज्जरबन्धमोक्षाः सप्त। (५) चार्व्वाकमतम्। (६) १।१।९ सूत्रव्याख्यायाम्।

## न्यायभाष्यम्

कथमुत्तरस्य प्रमाणेनोपलब्धिरिति ? सत्युपलभ्यमाने तदनुपलब्धेः प्रदीपवत् । यथा दर्शकेन दीपेन दृश्ये गृह्यमाणे तदिव यन्न गृह्यते, तन्नास्ति । यद्यभविष्यदिदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति । एवं प्रमाणेन सति गृह्यमाणे तदिव यन्न गृह्यते,

## न्यायवार्त्तिकम्

सदसद्भावाविशेषप्रसङ्ग इति चेन्न, अनैकान्तात्, तत्र भवेदेषा बुद्धिर्यदि प्रमाणेन सदसती गम्येते, ततः प्रमाणविषयत्वादुभयोरविशेषः प्राप्तः, तच्च न, अनैकान्तात्, सर्व्वमिदं गोघटादि द्रव्यजातं प्रमाणगम्यं भेदवच्च तस्मादनेकान्तोऽयमिति । स्वतन्त्रपरतन्त्रोपलब्ध्यनुपलब्धिकारणभावाच्च विशेषः, सत् खलु प्रमाणस्यासम्बन्धं (१) स्वतन्त्रं भवति, असत्तु परतन्त्रं प्रतिषेधमुखेन प्रतिपद्यते । प्रदीपवदिति, यथा प्रदीपोऽपवरकादिस्थितं घटादिकमर्थं प्रतिपादयति, तद्वदसदपि प्रतिपादयति । न ह्यसत्प्रतिपत्तौ उपायान्तरमास्थीयते । दृश्यमाने हि घटादिकेऽर्थे नानेन समानजातीयं

## न्यायवार्त्तिकतात्पर्य्यटीका

विषयत्वमेव प्रतिषेध इत्यनेनोक्तं भवति । एतद्विभजते—तयोः खल्विति । शङ्कते—प्रमाण-विषयत्वादिति । सर्व्वसामर्थ्यविरहेण त्वसत् सतो व्यावर्त्तते । यदि चासदपि प्रमाण-विषयः, तर्हि नासमर्थं, तथा च सदसतोरभेद इत्यर्थः । निराकरोति—नानैकान्तात् । न वयमसा-मर्थ्येनासतो भेदमाचक्ष्महे येनैवमुपालभ्येमहीति भावः । शङ्कां विभजते—तत्र भवेदिति । निराकरणं विभजते—तच्च नेति । गवादि चेतनम्, अचेतनं घटादीति । यदि सदसती समर्थे कुतस्तर्हि तयोर्भेद इत्यत आह—स्वतन्त्रेति । असदुपलब्धिरेव सदुपलब्धेरन्याऽनुपलब्धिः । ननु संयोगविभागादिषु सत्स्वपि परतन्त्रोपलब्धिकारणत्वमस्ति, तेषां संयुज्यमानवियुज्यमाना-धारनिरूपणाधीनत्वादित्यत आह—प्रतिषेधमुखेन प्रतिपद्यते प्रतीयते । सतां केषांचित्पार-तन्त्र्येऽपि न निषेध्यनिषेधाधिकरणपारतन्त्र्यमित्यर्थः ।

संप्रति सदुपलम्भकस्य प्रमाणस्यासदुपलम्भकत्वं प्रतिपादयिष्यता भाष्यकारेण प्रदीपो दृष्टान्त उपन्यस्तः, स तु साध्यसमः, तस्यापि प्रमाणसामग्रीनिवेशादिति शङ्कमानोऽत्यन्तलोक-प्रसिद्धतयाऽस्य दृष्टान्तत्वं समर्थयति—प्रदीपवदिति । गोपालाङ्गना अपि हि किमत्रास्ति स्तेनो-ऽस्मद्धनं वा अपवरके न वेति सन्दिहानाः प्रदीपमुपादाय समन्तादवलोक्यापवरकमस्तीहास्मद्धनं नास्ति स्तेन इति सममेव निश्चिन्वन्ति, न तु स्तेनाभावनिश्चयायोपायान्तरमुपाददते, तेनाऽऽगोपालम् आ च पण्डितरूपेभ्यः सिद्धः प्रदीपो दृष्टान्तः तदिदमुक्तम् । न ह्यसत्प्रतिपत्ता(२)वुपायान्तर-

(१) 'प्रमाणस्यालम्बनम्' इति ख-पाठः । (२) 'न ह्येतत्प्रतिपत्ता' विति क-पाठः ।

## न्यायभाष्यम्

तन्नास्ति। यद्यभविष्यदिदमिव व्यज्ञास्यत, विज्ञानाभावान्नास्तीति। तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयतीति।

## न्यायवार्त्तिकम्

दृश्यान्तरमस्ति, यद्यभविष्यदिदमिवाद्रक्ष्यत, न च दृश्यते, तस्माद्दर्शनाभावान्नास्तीति गम्यते। एवं प्रमाणेनापि सति प्रमीयमाणे, नानेन समानजातीयं प्रमेयान्तरमस्ति, यद्यभविष्यदिदमिवामास्यत, न च प्रमीयते, तस्मान्मानाभावान्नास्तीति। तदेवं सतः प्रकाशकं प्रमाणमसदपि प्रकाशयति। तत्र स्वातन्त्र्येणासद्भेदा न प्रकाशन्त इति नोच्यन्ते। चतुर्वर्गानन्तर्भावाद्वा

## न्यायवार्त्तिकतात्पर्य्यटीका

मास्थीयते लोकेन। अनाश्रयणे हेतुमाह—दीपेन दृश्यमाने हि घटादिकेऽर्थे स्वतन्त्रे नानेन समानजातीयं तुल्योपलम्भयोग्यं दृश्यान्तरमस्ति। नीलपीतौ हि परस्पराभाववन्तौ, तेन नीलनिषेधे नावश्यं पीतविधिः। भावाभावौ तु परस्पराभावात्मानौ, नो खलु अभावाभावो नाम कश्चिदन्यो भावद्भयात्, नापि भावोऽन्योऽभावात्। तेन समानजातीयं दृश्यान्तरं निषेधत् दृश्यान्तरभावमेव (१) विधत्ते प्रदीपः। तदेवं प्रदीपोपायस्य प्रतिपत्तुः प्रतीतिक्रममुक्त्वा परीक्षकाणामुपपत्तिक्रममाह—यद्यभविष्यदिति। यदि कश्चिदाशङ्केत दृश्यतामभावः प्रदीपे भावोऽपि भविष्यतीति। तत्रैव परीक्षकाणां तर्क उपतिष्ठते—यद्यभविष्यदिति। तदेवं लौकिकपरीक्षकसम्मतमुपपाद्य दार्ष्टान्तिके योजयति—एवं प्रमाणेनापि इन्द्रियादिना सति प्रमीयमाण इति। पूर्ववद्व्याख्येयम्। उपसंहरति—तदेवमिति। सर्वं चैतदुपपादयिष्यते। ननु यदि सदसती प्रमाणविषयौ कस्मात्सद्भेदा इवासद्भेदा अपि सूत्रकृता नोच्यन्त इत्यत आह—तत्र, तेषु सदसद्भेदेषु मध्ये, स्वातन्त्र्येण असद्भेदा न प्रकाशन्त इति नोच्यन्ते। निषेध्यनिषेधाधिकरणाधीननिरूपणत्वादसद्भेदानां भावभेदतन्त्रं प्रकाशनमिति भावभेदकथनेनैव अभावभेदा अपि

## वृत्तिः

वपुर्लीलालक्ष्मीजितमदनकोटिर्व्रजवधू-जनानामानन्दं कमपि कमनीयं विरचयन्।
स कोऽपि प्रेमाणं प्रथयतु मनोमन्दिरचर-स्त्रिलोकीलोकानां सजलजलदश्यामलतनुः॥ १॥

संयुक्तां युक्तरूपामभिनवनिहितालक्तकारक्तभासा
सन्ध्यापीयूषभानोरतिरुचिरतरां चूर्णयन्तीमभिख्याम्।
मानव्यामोकनम्रत्रिपुरहरशिरोरम्यभूषाविशेषं
भूयो भव्यं विधातुं चरणनखरुचं भावयामो भवान्याः॥ २॥

(१) "निषेधत्" इत्यत्र "निषेधन्" इति "दृश्यान्तरभावम्" इत्यत्र "दृश्यान्तराभावम्" इति च पाठो भवितुमुचित इति मन्ये।

## न्यायभाष्यम्

सच्च खलु षोडशधा व्यूढम्(१) उपदेक्ष्यते। तासां खल्वासां सद्विधानाम्—

**सू—प्रमाणप्रमेयसंशयप्रयोजनदृष्टान्तसिद्धान्तावयवतर्कनिर्णय-वादजल्पवितण्डाहेत्वाभासच्छलजातिनिग्रहस्थानानां तत्त्वज्ञाना-न्निःश्रेयसाधिगमः ॥ १ ॥**

## न्यायवार्त्तिकम्

भावप्रपञ्चवदभावप्रपञ्चोऽप्युद्दिष्टो वेदितव्य इति। भावोपदेशादभावप्रपञ्च उद्दिष्टो (२) भवतीति अतश्च नोच्यन्त इति।

सच्च खलु षोडशधा व्यूढमुपदेक्ष्यत इति। व्यूहः संक्षेपः। त एते सद्भेदा इति सूत्रम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

गम्यन्त इति नोक्ता इत्यर्थः। अथ वा कथिता एव येषां तत्त्वज्ञानं निःश्रेयसोपयोगि, ये तु न तथा, न तेषां प्रपञ्चः अनुपयुक्तभावप्रपञ्च इव वक्तव्य इत्याह—"चतुर्वर्गानन्तर्भावाद्वा भावप्रपञ्चवद-भावप्रपञ्च इति। निःश्रेयसस्यानुपयोगिनि भावप्रपञ्चे यथा चतुर्वर्गानन्तर्भावः, एवमभावप्रपञ्चे-ऽपीति। अथ निःश्रेयसोपयोगाभावः कुतोऽवगन्तव्य इत्यत आह—भावोपदेशादेवाभाव उपदिष्टो भवतीति। द्विविधं प्रमाणं भावोऽभावश्च, यथा कारणाभावेन कार्याभावज्ञानं, यतो द्वितीयसूत्रसमुत्थानम्। प्रमेयेषु अपवर्ग एव मूर्द्धाभिषिक्तः, एवं प्रयोजनादिष्वपीति तत्र तत्रोहनीयमिति। उपसंहरति—अतश्चेति। तदेवं तात्पर्य्यं व्याख्याय अवयवार्थं व्याख्यातुं भाष्यं पठति—सच्च (३) खलु षोडशधा व्यूढमुपदेक्ष्यत इति। अत्र प्रथमे कल्पे चशब्दोऽवधारणे, खलुशब्दः स्पष्टावधारणे, सद्धि षोडशधा व्यूढमुपदेक्ष्यते नासत् तस्य सदधीनप्रकाशत्वादिति। द्वितीये तु कल्पे पारमार्थिके चः समुच्चये, खलुरवधारणे, सति षोडशधैवोपदेक्ष्यमाणेऽसदप्युपदेक्ष्यत

## वृत्तिः

यदीयतर्ककिरणैरान्तरध्वान्तसन्ततिम्। सन्तस्तरन्ति भास्वन्तमक्षपादं नमामि तम् ॥३॥

अद्वैतं गुरुधर्मयोरिव लसत्क्ष्मामण्डलीमण्डनं रूपं किञ्चन पौरुषं गिर इव प्रागल्भ्यसम्पादकम्। दाने कर्णमिवावतीर्णमपरं दीने दयादक्षिणं तातं विश्वविसारिचारुयशसं विद्यानिवासं नुमः ॥४॥

अलसमतिरपीदं विस्तृतं न्यायशास्त्रं विरहितबहुयत्नो लीलया वेत्तु विज्ञः।
इति विनिहितचेताः कौशलं कर्त्तुकामो गुरुचरणरजोऽहं कर्णधारीकरोमि ॥ ५ ॥

(१) व्यूढं संक्षिप्तम्। (२) भावोपदेशादेवाभाव उपदिष्टो भवतीति तात्पर्य्यधृतपाठः। (३) 'सत्' इति क-पु-पाठः।

## न्यायभाष्यम्

निर्देशे यथावचनं विग्रहः। चार्थे द्वन्द्वसमासः(१)। प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी।

## न्यायवार्त्तिकम्

सर्वपदार्थप्रधानः समासो द्वन्द्व इति किमुक्तं भवति? सर्वे एते प्रमाणादयो विज्ञेया इति। अन्यथा हि समासान्तरपरिग्रहाद्विशेषणत्वेनोपयुक्तानां प्रमाणादीनामविज्ञेयता स्यात्। यथावचनं विग्रहः। यदेव निर्देशे वचनभेदोपादाने प्रयोजनं तदिहापि द्रष्टव्यम्। प्रमाणादीनां तत्त्वमिति शैषिकी षष्ठी। कः पुनः शेषः? कारकाणामविवक्षा शेष इति। यत्र न कारकं कारकार्थो वा विवक्ष्यते—स शेषः, तद्यथा ब्राह्मणस्य कमण्डलुरिति। तत्त्वस्य प्रमाणादिभ्योऽन्यानन्यत्वे (२) दोषः। यदि तावत् प्रमाणादिव्यतिरिक्तं तत्त्वं न प्रमाणाद्यधिगमान्निःश्रेयसाधिगम इति प्राप्तम्। किं कारणं? तत्त्वविशेषणत्वेनोपादानात्, राजपुरुषा-

## न्यायवार्त्तिकतात्पर्य्यटीका

इत्यर्थः। प्रकृतिं व्याचष्टे व्यूह इति। सूत्रस्य सप्रपञ्चं तात्पर्य्यं व्याख्याय अवयवार्थं व्याचिख्यासुना भाष्यकारेण तासां खल्वासां सद्विधानामिति भाष्येण सूत्रमवतार्य्य पठितं, तस्य वार्त्तिककृत्तात्पर्य्यमाह—त एते सद्भेदा इति सूत्रम्, त एते प्रमाणादयः सद्भेदा निःश्रेयसोपयोगिनो न गङ्गावालुकादयः, तस्मात्सन्तः प्रमाणादयः षोडशधा लक्षिताः परीक्षिताश्च, न गङ्गावालुकादयः सन्तोऽपि निःश्रेयसानुपयोगादिति भावः। द्वन्द्वस्वरूपमाह—सर्वपदेति। द्वन्द्वपरिग्रहे तात्पर्य्यमन्वयव्यतिरेकाभ्यामादर्शयति सर्वे एत इति। बहुव्रीहिकर्मधारययोरसम्भवात् षष्ठीसमासपरिग्रहे निग्रहस्थानस्यान्त्यपदार्थस्य प्राधान्ये विवक्षितार्थहानिप्रसङ्ग इत्यर्थः। निर्देशे यथावचनं विग्रह इत्यस्य भाष्यस्य तात्पर्य्यमाह—यथावचनमिति। अन्योऽन्यनिरपेक्षाणां प्रत्येकं प्रमाहेतुभावः प्रमाणानामिति हि बहुवचनप्रयोजनम्। प्रमेयेषु तु यद्यपि प्रमेयता वास्तवी प्रत्येकमस्ति तथाऽप्यपवर्गहेतुभावेन प्रमेयता समुदाये समाप्यते, न तु प्रत्येकम्, आत्मादीना-

## वृत्तिः

विद्यानिवाससूनोः कृतिरेषा विश्वनाथस्य। विदुषामतिसूक्ष्मधियाममत्सराणां मुदे भवतु ॥६॥

प्रयोजनमनभिसन्धाय प्रेक्षावन्तो न प्रवर्तन्ते, अतः प्रथमं प्रयोजनमभिधानीयम्।

---

(१) 'सर्व्वपदार्थप्रधानः समासो द्वन्द्व' इति वार्त्तिकतात्पर्य्ययोरभिमतः पाठः। "चार्थे द्वन्द्वः" इति वि-टि-पाठः। "चार्थे द्वन्द्वः समासः" ज-पु-पाठः। (२) अन्यत्वे अनन्यत्वे च इत्यर्थः।

## न्यायवार्त्तिकम्

नयनक्रियावदिति। अथाऽभेदः ? तत्त्वग्रहणानर्थक्यं, यदि प्रमाणादिव्यतिरिक्तं तत्त्वं न प्रतिपद्यसे, एवं तर्हि तत्त्वग्रहणमनर्थकं सम्पद्यते, न, उभयथाऽप्यदोषादित्येके। यदि तावत् प्रमाणादिव्यतिरिक्तं तत्त्वं स्यात्, तस्यास्वतन्त्रत्वात् प्रमाणादयोऽपि गम्यन्त इति कुण्डे बदरवृत्तिवदिति। यथा कुण्डे बदराणां वृत्तिरिति भावे देशिते भावस्यास्वतन्त्रत्वात् कुण्डे बदराणि वर्तन्त इत्युक्तं भवति, तथेहापि तत्त्वज्ञानान्निःश्रेयसाधिगम इति प्रमाणादीनां ग्रहणं भावस्यास्वतन्त्रत्वादिति। अभेदेऽपीषुस्थितिवत्तद्भावप्रतिषेधो नार्थान्तरमिति न प्रमाणादिमात्रमुच्यते अपि त्वर्थान्तरं प्रतिषिध्यते। यथेषोः स्थितिरिति नेषुमात्रं स्थितिः, अपि तु गतिमदर्थान्तरं न भवतीति, तन्न, अनर्थान्तर-

## न्यायवार्त्तिकतात्पर्य्यटीका

मन्यतमस्याप्यतत्त्वज्ञाने संसारानिवृत्तेरिति हि निर्देशे वचनभेदस्य प्रयोजनं, तदेव चोद्देशेऽपि, तयोरेकवाक्यत्वादिति भावः। प्रमाणादीनामिति विभक्त्यर्थव्याख्यानपरं भाष्यं पठित्वा पृच्छति—कः पुनरिति। उत्तरं कारकाणामिति, तद्विभजते—यत्रेति। कारकार्थः प्रधानक्रिया, यदुद्देशेन सर्वकारकप्रवृत्तिः। कारकग्रहणेन च तन्नान्तरीयकतया प्रधानक्रियाऽप्यानीतेति विवरणे साऽपि दर्शिता। यद्यपि स्वस्वामिभावादावपि सम्बन्धे अन्तर्गतक्रियाकारकसम्बन्धोऽस्ति सम्बन्धमात्रस्य क्रियागर्भत्वान्नान्तरीयकत्वाच्च कारकस्य, तथाऽप्यसौ न विवक्ष्यते सम्बन्धमात्रमेव तु विवक्ष्यत इत्यर्थः। अत्र चोदयति—तत्त्वस्येति। षष्ठी चानर्थिका अव्यतिरेके तदनुपपत्तेरित्यपि द्रष्टव्यम्। तत्रानियमवाद्येकदेशी परिहरति—न, उभयथाऽपीति। भावस्य भवित्रधीननिरूपणत्वाद् भावनिरूपणमेव भवितृनिरूपणमाक्षिपति। अभेदेऽपीति, इषुस्थित्या यथा तद्भाव-

## वृत्तिः

तथा चाहुः—

सिद्धार्थं सिद्धसम्बन्धं श्रोतुं श्रोता प्रवर्तते। शास्त्रादौ तेन वक्तव्यः सम्बन्धः सप्रयोजनः॥ इति।

सिद्धः—ज्ञातः अर्थः—प्रयोजनं यस्य तत् तथा, एवं सिद्धसम्बन्धमित्यपि, अतस्तत्प्रतिपादनाय भगवानक्षपादः प्रथमं सूत्रयति—[ प्रमाणेत्यादि ]

अत्र तत्त्वज्ञाननिःश्रेयसयोः शास्त्रतत्त्वज्ञानयोश्च हेतुहेतुमद्भावः, प्रमाणादितत्त्वज्ञानयोर्विषयविषयिभावः, प्रमाणादिशास्त्रयोः प्रतिपाद्यप्रतिपादकभावः, शास्त्रनिःश्रेयसयोश्च प्रयोज्यप्रयोजकभावः सम्बन्धः। तत्त्वं ज्ञायतेऽनेनेति व्युत्पत्त्या तत्त्वज्ञानं शास्त्रं, तथा च शास्त्रनिःश्रेयसयोरपि तत्त्वज्ञानद्वारकहेतुहेतुमद्भाव एव सम्बन्ध इति सम्प्रदायविदः।

### न्यायभाष्यम्

तत्त्वस्य ज्ञानं निःश्रेयसस्याऽधिगम इति कर्मणि षष्ठ्यौ। त (१) एतावन्तो

### न्यायवार्त्तिकम्

त्वासिद्धेः। तत्त्वज्ञानान्निःश्रेयसाधिगम इति तत्त्वं ज्ञायमानं कर्म सम्पद्यते निःश्रेयसमधिगम्यमानं कर्म भवतीति। किं पुनस्तत्त्वं, किं वा निःश्रेयसमिति? तत्त्वं पदार्थानां

### न्यायवार्त्तिकतात्पर्य्यटीका

प्रतिषेधयोर्भावो (२) धर्म्मो गतिः, तस्य प्रतिषेधः स्थितिः तिष्ठतेर्गतिनिवृत्त्यर्थत्वात्। एवमत्रापि न प्रमाणप्रमेयादिमात्रमुच्यते तत्त्वग्रहणेनापि त्वर्थान्तरं तेष्वेव यत् समारोपितं रूपमन्यथात्वमिति यावत् तत् प्रतिषिध्यते। "गतिमदि"ति भावप्रधानो निर्देशः, यथा "द्व्येकयोर्द्विवचनैकवचने" इति द्वित्वैकत्वयोरिति, संख्येयविवक्षायां द्व्येकेष्विति स्यात्। तेन गतिमत्त्वमर्थान्तरमिषोर्न भवति। सत्यस्मिन्नर्थे इषोः स्थितिरिति वाक्यं प्रसज्यत इत्यर्थः। तदेतदेकदेशिमतमर्थान्तरत्वनियमवादी दूषयति—तन्नेति। प्रमाणादिभ्योऽनर्थान्तरस्य तत्त्वस्य इषोरनर्थान्तरस्य प्रवृत्त्यभावस्य चासिद्धेः। यथा च भावातिरिक्तोऽभावस्तथा क्षणभङ्गभङ्गाधिकारे (३) निवेदयिष्यते।

### वृत्तिः

अत्र च सर्वपदार्थप्रधानो द्वन्द्वः समासः। यद्यपि भेदे द्वन्द्वविधानादत्र च बहूनां पदार्थानामभेदान्न द्वन्द्वसम्भवः, तथापि पदार्थतावच्छेदकभेदादेव द्वन्द्व इति न दोष इत्यन्यत्र (४) विस्तरः।

तत्र च 'निर्देशे यथावचनं विग्रहः' इति यथाश्रुतभाष्यानुसारिणः—प्रमाणानि च प्रमेयं च संशयश्च प्रयोजनं च दृष्टान्तश्च सिद्धान्तश्च अवयवाश्च तर्कश्च निर्णयश्च वादश्च जल्पश्च वितण्डा च हेत्वाभासाश्च छलं च जातयश्च निग्रहस्थानानि चेति विग्रहं वर्णयन्ति।

सम्प्रदायविदस्तु—भाष्यस्थवचनपदेन क्वचित् सौत्रं, क्वचिदार्थं च वचनं गृह्यते। तत्र प्रमाणे प्रमेये च सौत्रं वचनं गृह्यते सप्रयोजनत्वात्, तच्च वक्ष्यते। (५) न तु दृष्टान्तादावेकवचनं सप्रयोजनम्, तथा च दृष्टान्ते द्विवचनम्, अन्वयिव्यतिरेकिभेदेन दृष्टान्तद्वैविध्यस्य वक्ष्यमाणत्वात्। संशये सिद्धान्ते छले च बहुवचनम्, संशये छले च त्रैविध्यस्य, सिद्धान्ते चातुर्विध्यस्य वक्ष्यमाणत्वात्। अन्यथा जातिनिग्रहस्थानयोर्बहुवचनं तत्राऽपि (६) व्याहन्येत, एकवचनस्यैव लक्षणसूत्रे सत्त्वादिति वदन्ति।

---

(१) ज-पु "त" नास्ति। (२) "तद्भावप्रतिषेधः। इषोर्भावो" इत्येवं पाठ एव भवितुमुचित इति सुधीभिश्चिन्त्यम्। (३) ३।२।१० सूत्रात् १७ सूत्रपर्यन्तसन्दर्भमध्ये। (४) सिद्धान्तमुक्तावल्यादौ। (५) १।१।९ सूत्रवृत्तौ स्वयमेव वक्ष्यते। (६) तथापि इति ग्र।

## न्यायभाष्यम्

विद्यमानार्थाः, येषा-(१) मविपरीतज्ञानार्थमिहोपदेशः। सोऽयमनवयवेन (२) तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मादेः खलु प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगमः।

## न्यायवार्त्तिकम्

यथावस्थितात्मप्रत्ययोत्पत्तिनिमित्तत्वं, यो यथावस्थितः पदार्थः, स तथाभूतप्रत्ययोत्पत्तिनिमित्तं भवति यत्, तत् तत्त्वम्। निःश्रेयसं पुनर्दृष्टादृष्टभेदाद् द्वेधा भवति। तत्र प्रमाणादिपदार्थतत्त्व-

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रमाणाद्यतिरिक्तं च तत्त्वमनन्तरमेव दर्शयिष्यति (३) इति। तत्त्वस्य ज्ञानमित्यादि भाष्यं व्याचष्टे—तत्त्वं ज्ञायमानमिति। उभयं पृच्छति—किं पुनरिति। तत्त्वप्रश्नस्योत्तरम् तत्त्वमिति। निमित्तत्वं शक्तिः प्रमाणादीनां, सा च द्वयी—स्वरूपलक्षणा सहकारिसाकल्यलक्षणा च।

## वृत्तिः

नव्यास्तु—सर्वत्र प्रथमोपस्थितैकवचनेनैव विग्रहः। न ह्यत्र बहुवचनेनैव प्रमाणादीनां चतुष्ट्वं (४) परिच्छिद्यते, किन्तु (५) अग्रिमविभागेन, न ह्येकद्वित्रिधव-खदिरादौ धवश्च खदिरश्च पलाशश्चेति न विगृह्यते। अत एव प्रयोजनस्यैकवचनान्तत्वे तद्विभागाकरणेऽपि सुखदुःखाभावतत्साधनभेदेन तस्य बहुत्वं न विरुध्यत इति प्राहुः।

अत्र च निःश्रेयसे सिद्धे पटादिवत् तत्प्राप्तये न प्रयत्नान्तर(६)मपेक्षितमिति प्रतिपाद-नायाधिगमपदम्।

ननु प्रमाणादयः पदार्था इति शब्दात्, प्रथमसूत्रादेव वा तत्त्वज्ञानं स्यादिति चेन्न, तेषां विशिष्य ज्ञानं हि तत्त्वज्ञानं, तच्चोद्देशलक्षणपरीक्षाप्रकाशकाच्छास्त्रादेव। शास्त्रं हि विशिष्टानुपूर्वीका पञ्चाध्यायी। अध्यायस्तु—आह्निकसमूहः। आह्निकं तु—तादृश-प्रकरणसमूहः। प्रकरणं तु—तादृशसूत्रसमूहः। सूत्रं तु—तादृशवाक्यसमूहः। वाक्यं तु—तादृशपदसमूह इति वदन्ति। अत्र समूहशब्देनानेकत्वं विवक्षितं, तेनाध्याया-देराह्निकादिद्वयाद्यात्मकत्वेऽपि न क्षतिः।

अत्र च यद्यपि मोक्षजनकज्ञानविषयत्वेन प्रमेयमेवादौ निरूपयितुमर्हं, तथापि प्रमाणस्य सकलपदार्थव्यवस्थापकत्वेन प्राधान्यात् प्रथममुद्देशः, ततोऽवसरतो बुभुत्सित-प्रमेयस्य, ततश्च पदार्थव्यवस्थापनस्य न्यायाधीनतया न्याये निरूपणीयेऽभ्यर्हितयोर्न्याय-पूर्वाङ्गयोः संशयप्रयोजनयोः, तत्राऽप्यभ्यर्हिततया संशयस्य प्रथमम्।

---

(१) "एषाम्" इति ज-फ। (२) अनवयवेन—सम्पूर्णतया। "अन्यावयवेन" इति जयनारायणव्याख्या। (३) वार्त्तिककारः ३१पृष्ठस्थ-"तत्त्वं पदार्थानाम्" इत्यादिना दर्शयिष्यति। (४) 'बहुत्वम्' इति ञा। (५) 'किं नाम' इति ल। (६) उत्पादकप्रयत्नातिरिक्तः प्रयत्न इत्यर्थः।

## न्यायभाष्यम्

तच्चैतदुत्तरसूत्रेणा-(१)ऽनूद्यत इति। हेयं, तस्य निर्वर्तकं, हानमात्यन्तिकं, तस्योपायोऽधिगन्तव्य इत्येतानि चत्वार्य्यर्थपदानि(२) सम्यग् बुद्ध्वा निःश्रेयसमधिगच्छति।

## न्यायवार्त्तिकम्

ज्ञानान्निःश्रेयसं दृष्टम्। न हि कश्चित्पदार्थो ज्ञायमानो हानोपादानोपेक्षाबुद्धिनिमित्तं न भवतीति, एवं च कृत्वा सर्वे पदार्था ज्ञेयतयोपक्षिप्यन्त इति। परन्तु निःश्रेयसमात्मादेस्तत्त्वज्ञानाद्भवति। दृष्टं प्रमाणादिपरिज्ञानात्, अदृष्टं पुनरात्मादेः प्रमेयस्य परिज्ञानादिति न प्रमाणमस्ति। न नास्ति, अर्थस्य तथाभावात्। अर्थ एवायं तथाभूतो यद् आत्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसमधिगम्यते। यथा ह्ययमात्मादि प्रमेयं विपर्ययेणाध्यवसितो भवति, अथ संसारं नातिवर्तत इति। एतच्चार्थं द्वितीयसूत्रे प्रतिपादयिष्यामः। यदि पुनः प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसं स्यात्

## न्यायवार्त्तिकतात्पर्य्यटीका

अतीन्द्रियस्य सामर्थ्यस्य नैयायिकैरनभ्युपेतत्वात्। शक्तेश्च भावत्वेन भवितृनिरूपणाधीननिरूपणत्वाद् भवितुरपि निरूपणं भवतीत्युक्तम्।

अभिमतं निःश्रेयसं ग्रहीतुं निःश्रेयसद्वैविध्यमाह—निःश्रेयसं पुनरिति। तत्रादृष्टं निःश्रेयसं ग्रहीतुं दृष्टमतिप्रसङ्गापादनेन दूषयति—एवं च कृत्वेति। सूत्रकाराभिमतं निःश्रेयसमाह—परन्त्विति। एतदुक्तं भवति, यद्यपि निःश्रेयसपदमभिमतमात्रवाचि प्रमाणादितत्त्वज्ञानस्य दृष्टमपि निःश्रेयसं भवतीति, तस्यैव ततः साक्षादुत्पत्तेः। तथाऽप्यात्मादिवाचकप्रमेयपदसमभिव्याहारादहदृष्टमेव निःश्रेयसमभिप्रेतं सूत्रकारस्य, तत्र च प्रमाणादितत्त्वज्ञानस्यापि पारम्पर्य्येण हेतुभावोऽस्त्येवेति। चोदयति—दृष्टमिति। दृष्टे दर्शनमेव प्रमाणम्, अदृष्टन्तु निःश्रेयसमप्रामाणिकं दर्शनाभावादित्यर्थः। परिहरति—न नास्ति, अर्थस्य तथाभावात्। अर्थ आत्मादिस्तस्य आगमानुमानसहकारिणा कारणभावेन कार्य्याभावानुमानमेवात्रार्थे प्रमाणमिति

## वृत्तिः

न च निर्णीतेऽपि मननविधानान्न संशयस्य न्यायाङ्गत्वमिति वाच्यम्, आहार्यसंशयोपगमात् (३)।

यद्यपि प्रयोजनं न न्यायाङ्गम्, अपि तु तज्ज्ञानं, तथापि तदेव निरूपणीयं, न तु ज्ञाननिरूपणापेक्षेति।

---

(१) १।१।२। सूत्रेण। (२) अर्थपदानि—पदार्थान् इति केचित्। 'पुरुषार्थस्थानानी'ति तात्पर्यटीका, पुरुषार्थप्रयोजकानीति तदर्थः। (३) पक्षतायां संशयपक्षताकल्पे जगदीशपादैः स्पष्टमेवाहार्यसंशयः प्रदर्शितः। आहार्यश्च विरोधिज्ञानकालीनेच्छाप्रयोज्यज्ञानमिति संक्षेपतो बोध्यम्।

## न्यायभाष्यम्

तत्र संशयादीनां पृथग्वचनमनर्थकम्—संशयादयो यथासम्भवं प्रमाणेषु प्रमेयेषु चान्तर्भवन्तो न व्यतिरिच्यन्त इति ? सत्यमेतत्, इमास्तु (१) चतस्रो विद्याः पृथक्-

## न्यायवार्त्तिकम्

न मोक्षमाणा मोक्षाय घटेरन्, न हि कस्यचित् क्वचिच्च तत्त्वज्ञानं नास्तीति। तस्मादात्माद्येव प्रमेयं मुमुक्षुणा ज्ञेयमिति। पृथगुपदेशाच्च। यदि प्रमाणाद्येव प्रमेयं स्यात् तस्य च परिज्ञाना-न्निःश्रेयसं भवेत्, नात्मादि प्रमेयं पृथगुपदिष्टं स्यात्। प्रमेयार्थावधारणार्थायां (२) चोत्तर-सूत्रप्रक्रियायां प्रमेयस्य विहितत्वादाद्येन सूत्रेण अकुशलः सूत्रकारः स्यात्। तच्चैतदुत्तर-सूत्रेणानूद्यत इति भाष्यम्। हेयहानोपायाधिगन्तव्यभेदाच्चत्वार्यर्थपदानि सम्यग्बुद्ध्वा निःश्रेयस-मधिगच्छतीति। हेयं दुःखं, तस्य निर्वर्तकमविद्यातृष्णे धर्म्माधर्म्माविति। हानं तत्त्वज्ञानं, तस्योपायः शास्त्रम्, अधिगन्तव्यो मोक्षः, एतानि चत्वार्यर्थपदानि सर्वास्वध्यात्मविद्यासु

## न्यायवार्त्तिकतात्पर्य्यटीका

भावः। ये तु वैयात्यान्मन्येरन् न पदार्थतत्त्वज्ञानमात्रमेव परनिःश्रेयसहेतुरिति। यथाऽऽहुः—एको भावस्तत्त्वतो येन दृष्टः सर्वे भावास्तत्त्वतस्तेन दृष्टा इति, (३) तान् प्रत्याह—यदि पुनरिति। न हि भावानां तत्त्वमन्यत् प्रत्यक्षविषयीकृताद्रूपादिति भावः। मोक्षमाणा इति, सनि 'मुचो ऽकर्मकस्य गुणो वे'ति गुणाभ्यासलोपौ। न केवलं वस्तुवृत्तिः, सूत्रकारस्यापि सम्मतमेतदित्याह— पृथगुपदेशाच्च प्रमेयस्य प्रमाणादिभ्यः। यदि च यत्किञ्चित्प्रमेयतत्त्वपरिज्ञानान्निःश्रेयसस्य परस्य प्राप्तिः, किमर्थमात्मादिसूत्रेण द्वादशैव प्रमेयाणि नाधिकानि न न्यूनानि चेत्यवधार्य्यते सूत्रकारेण ? तस्मात्तदेतत्साक्षादुपयोगिनिःश्रेयसे न पदार्थमात्रमित्याह—प्रमेयावधारणार्थायां चोत्तरसूत्रप्रक्रियायामकुशलः सूत्रकारः स्यात्। कुतः ? प्रमेयस्य विहितत्वात् आद्येन सूत्रेणेति। तस्माद् यद्युपपत्तिः यदि च सूत्रकाराभिमतमुभयथा प्रमेयतत्त्वपरिज्ञानं परस्य निःश्रेय-सस्य हेतुः, तदनेन आत्मादेरिति भाष्यं व्याख्यातम्।

अथ किं तत्त्वज्ञानस्यात्मादिविषयस्यादृष्ट एव कोऽपि सामर्थ्यातिशयो, यतः पर-निःश्रेयसोत्पादः ? मैवं, किं तर्हि ? दृष्टयैव द्वारेत्याह भाष्यकारः तच्चैतदिति,—निःश्रेयस-

## वृत्तिः

परप्रत्यायने दृष्टान्तस्य मूलत्वादनन्तरं दृष्टान्तस्य, दृष्टान्तमूलको न्यायः सिद्धान्तविषय इत्यतोऽनन्तरं सिद्धान्तस्य, ततश्चावसरतः सिद्धान्ताधीनस्य पञ्चावयवरूपस्य न्यायस्य, ततश्चैककार्यकारितया (४) न्यायसहकारिणस्तर्कस्य, ततश्च तर्कजन्यतया निर्णयस्य, ततश्च

---

(१) "इमास्तु" इत्यनन्तरं "धर्म्मार्थकाममोक्षाणां क्रमेण बोधिकाः" इति टि-पाठः। (२) प्रमेया-वधारणार्थायाम्, इति तात्पर्य्यधृतपाठः। (३) अस्मिन् श्लोकार्द्धे 'तत्त्वतो—तत्त्वतम्' इत्यत्र 'सर्व्वथा सर्व्वथा' इति स्याद्वादमञ्जर्यां पाठः। (४) एकार्थतया इति क्व।

## न्यायभाष्यम्

प्रस्थानाः(१) प्राणभृतामनुग्रहायोपदिश्यन्ते, यासां चतुर्थीयमान्वीक्षिकी न्यायविद्या। तस्याः पृथक्प्रस्थानाः(२) संशयादयः पदार्थाः। तेषां पृथग्वचनमन्तरेणाऽध्यात्मविद्यामात्रमियं स्यात्, यथोपनिषदः। तस्मात् संशयादिभिः पदार्थैः पृथक् प्रस्थाप्यते(३)। तत्र नानुपलब्धे न निर्णीतेऽर्थे न्यायः प्रवर्तते, किं तर्हि? संशयितेऽर्थे। यथोक्तं—'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' ( अ० १, आ० १, सू० ४१ ) इति। विमर्शः—संशयः। पक्षप्रतिपक्षौ—न्यायप्रवृत्तिः। अर्थावधारणं—निर्णयस्तत्त्वज्ञानमिति। स च "अयं किंस्विदि"ति वस्तुविमर्शमात्रमनवधारणं ज्ञानं संशयः, प्रमेयेऽन्तर्भवन्नेवमर्थं (३) पृथगुच्यते।

## न्यायवार्त्तिकम्

सर्वाचार्यैर्वर्ण्यन्त इति। संशयाद्यग्रहणं पृथक्। प्रमेयान्तर्भावादिति चेन्न, विद्याप्रस्थानभेदज्ञापनार्थत्वादिति। संशयादयः प्रमेयेऽन्तर्भवन्तीति पृथक् ते न वक्तव्याः, न, विद्याप्रस्थानभेदज्ञापनार्थत्वात्। चतस्त्र इमा विद्या भवन्ति, ताश्च पृथक्प्रस्थानाः। अग्निहोत्रहवनादिप्रस्थाना त्रयी। हलशकटादिप्रस्थाना वार्ता। स्वाम्यमात्यभेदानुविधायिनी दण्डनीतिः। संशयादिभेदानुविधायिनी आन्वीक्षिकी। तस्याः संशयादिप्रस्थानमन्तरेणात्म-

## न्यायवार्त्तिकतात्पर्य्यटीका

हेतुभावाभिधानस्य अनु पश्चात्, उच्यते अनूद्यते। तत्त्वज्ञानोत्पादे हि साक्षात्तद्विषयमिथ्याज्ञानादिनिवृत्तिक्रमेणापवर्गोत्पाद इति द्वितीयसूत्रेणानूद्यते। तदेतद्भाष्यं तच्चैतदित्याद्यधिगच्छतीत्यन्तमनूद्य व्याचष्टे—हेयमिति। मिथ्याज्ञानमात्मादिषु प्रमेयेषु अविद्या, तन्मूलं तृष्णा। उपलक्षणञ्चैतत्, द्वेषोऽपि द्रष्टव्यः। तन्मूलौ च धर्माधर्मौ, तदेतद्धेयम्। ज्ञानं तत्त्वज्ञानं हीयते ह्यनेन तत् सर्व्वं, तस्य प्रमाणस्य। उपायः शास्त्रम्, अधिगन्तव्यो मोक्षः। एवमवयवान् विभज्य तात्पर्य्यमाह—एतानीति। एतानि चत्वार्य्यर्थपदानि पुरुषार्थस्थानानि, न केवलं हेयाधिगन्तव्यभेदेन द्वादशविधं प्रमेयं दर्शयतः तद्विषयतत्त्वज्ञानाय च सोपकरणन्यायाभिधानप्रमाणव्युत्पादकं शास्त्रं प्रणयतः सूत्रकारस्य सम्मतमपि तु सर्व्वेषामेवाध्यात्मविद्यामाचार्य्याणामिति भाष्यतात्पर्य्यमित्यर्थः। तत्र संशयादीनां पृथग्वचनमनर्थकमित्यादिचोद्यभाष्यं व्याचष्टे—संशयाद्यग्रहणमिति। परिहारभाष्यं व्याचष्टे—न विद्येति। चोद्यं विवृणोति—संशयादय इति। परिहारं विवृणोति—न विद्येति। प्रस्थानं व्यापारः। तेषां पृथग्वचनमित्यादिभाष्यं व्याचष्टे—तस्याः संशयादीति। न च वाच्यमस्तु

(१) विलक्षणव्यापारसम्पन्नाः। (२) असाधारण्येन प्रतिपाद्याः। (३) न्यायविद्या विलक्षणप्रकारा क्रियते।

## न्यायवार्त्तिकम्

विद्यामात्रमियं स्यात्। ततः किं स्यात्? अध्यात्मविद्यामात्रत्वादुपनिषद्विद्यावत् त्रय्यामेवान्तर्भाव इति चतुष्ट्वं निवर्तते, तस्मात् पृथग् गृह्यन्त इति। तत्र संशयस्तावद्वस्तुस्वरूपानवधारणात्मकः प्रत्ययः। अनवधारणात्मकश्च प्रत्ययश्चेति व्याहन्यते? न व्याघातः, स्वरूपावधारणात्। स्वरूपमस्यावधार्यते अस्ति मे संशयज्ञानमिति। वस्तुस्वरूपं तु नानेन परिच्छिद्यते। तदुभयमनवधारणात्मकश्च प्रत्ययश्चेति। स कथं न्यायस्याङ्गं भवतीति। यस्मान्नानुपलब्धे न निर्णीते न्यायः प्रवर्तते। उपलब्धोऽनिर्णीतश्चेति व्याहतम्। यद्युपलब्धो नानिर्णीतः, अथानिर्णीतो नोपलब्धः, उपलब्धोऽनिर्णीतश्चेति व्याहतम्। नास्ति व्याघातः, सामान्येनोपलब्धो विशेषतोऽनिर्णीत इति। एवमपि यथोपलब्धस्तथाऽनिर्णीत इति व्याघातानिवृत्तिः? नानिवृत्तिः,

## न्यायवार्त्तिकतात्पर्य्यटीका

विद्यात्रयमेव, कृतमान्वीक्षिक्या विद्ययेति, एतस्या एव समस्तविद्यावदातीकरणहेतुत्वात्। यथा वक्ष्यति (१) प्रदीपः सर्व्वविद्यानामिति। स चायं किं स्विदिति वस्तुविमर्शमात्रम् अनवधारणज्ञानं संशय इति भाष्यं, तद्व्याचष्टे तत्र तेषु संशयादिषु, संशयस्तावदिति. ज्ञानमवधारणं प्रत्ययश्चेति पर्य्याय इति मन्वानश्चोदयति—अनवधारणात्मक इति। न ज्ञानमात्र (२) पर्य्यायोऽवधारणशब्दः, अपितु तद्विशेषनिश्चयवचनः किं स्विदिति दोलायमानस्योभयकोटिस्पृशः प्रत्ययस्यार्थेऽनवधारणात्मकस्यापि प्रत्यात्ममानसेन प्रत्यक्षेणावधार्यमाणत्वादिति। परिहरति—न व्याघात इति। तत् तस्मात् उभयमिति। तत्र नानुपलब्धे इत्यादिभाष्यमवतारयितुं—पृच्छति स कथं न्यायस्येति। यदि न्यायस्याङ्गं संशयो भवेत् सोऽपि व्युत्पाद्येतेति भावः। उत्तरं यस्मादिति। एतदाक्षिपति—उपलब्ध इति। पञ्चरूपश्चतूरूपो वा हेतुर्न्यायः। प्रतिज्ञाद्यवयवसमूहो वा न्यायः। नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति। तस्याश्च यो विषय उपलब्ध उच्यमानो निर्णीत एव वक्तव्यः। सन्दिग्धे हि तस्मिन् हेतुः सन्दिग्धाश्रयतयाऽसिद्धः स्यात्। यथेह मग-निकुञ्जे मयूरः केकायितापातादिति। तद्वापातसन्देहे अतोऽयमनिर्णीतश्चेन्नोपलब्धः ततश्चोपलब्धश्च न निर्णीतश्चेति व्याहतमित्यर्थः। परिहरति—नास्ति व्याघात इति। सामान्यतः

## वृत्तिः

निर्णयानुकूलत्वाद् वादस्य, जल्पस्याऽपि वादकार्यकारित्वादनन्तरं जल्पस्य, ततश्च विजयरूपैककार्यानुकूलतया वितण्डायाः, कथात्रयस्याऽपि दूषणसापेक्षतयाऽनन्तरं दूषणेषु निरूपणीयेषु वादे देशनीयत्वरूपोत्कर्षवत्त्वाद्धेतुवदाभासमानत्वाच्चाऽऽदौ हेत्वाभासानां, ततश्च हेत्वाभासोपजीवनेन छलस्य, स्वव्याघातकत्वेनात्यन्तासदुत्तरत्वात्ततो जातेः, कथावसानत्वेनार्थाद् अनन्तरं निग्रहस्थानानामिति।

---

(१) भाष्यकारः। (२) तात्पर्य्ये ३४ पृः २४ पं तच्चै तदित्यनन्तरं "निःश्रेयस" इत्यारभ्य एतत् पृष्ठस्थ १३ पं "न ज्ञानमात्र" इतीयत्पर्यन्तः पाठः आदर्शे नास्ति, एसियाटिकसोसाइटि परिशुद्धिदृष्ट्या अस्माभिः समुद्धृतः।

## न्यायभाष्यम्

अथ प्रयोजनम्—येन प्रयुक्तः प्रवर्तते, तत् प्रयोजनम् । यमर्थमभीप्सन् जिहासन् वा

## न्यायवार्त्तिकम्

यथा तथेति व्यपदेशात् । सर्वथा निर्णीते यथा निर्णीतस्तथोपलब्ध इत्यनर्थकं स्यात्, तस्मात् सामान्यत उपलब्धो विशेषतोऽनिर्णीत इति । स चायं संशय एवम्भूतः प्रमेयेऽन्तर्भूत एवमर्थं पृथगुच्यते ।

अथ प्रयोजनम् । किं पुनः प्रयोजनमिति ? येन प्रयुक्तः प्रवर्तते तत् प्रयोजनमिति लौकिकोऽयमर्थः । केन प्रयुज्यते ? धर्मार्थकाममोक्षैरिति केचित् । वयं तु पश्यामः सुखदुःखाप्तिहानिभ्यां प्रयुज्यत इति । सुखदुःखसाधनभावात्तु सर्वेऽर्थाश्चेतनं प्रयोजयन्तीति ।

## न्यायवार्त्तिकतात्पर्य्यटीका

पर्वतमात्रमुपलब्धं निर्णीतं तद्विशेषस्तु वह्निमत्त्वादिरनिर्णीत इति । पुनश्चोदयति—एवमपीति । उपलब्धो निर्णीत इति हि सामानाधिकरण्यात् समानविषयत्वं दर्शयति तथा च व्याघातः । सामान्यविशेषयोर्भेदेन तु व्याघातं परिहरन् सामानाधिकरण्यं न समर्थयस इति भावः । परिहरति—यथा तथेति व्यपदेशादिति । सामान्यविशेषयोः सामानाधिकरण्यात् । य एव सामान्यतो निर्णीतः, स एव विशेषतोऽनिर्णीतोऽपि सम्भवतीति न व्याघात इत्यर्थः । एवमर्थं न्यायप्रवृत्त्यर्थमसन्दिग्धे न्यायप्रवृत्तेरनुपपत्तेः । न हि प्रत्यक्षेण करिणि दृष्टेऽपि चीत्कारेण तमनुमिन्वते प्रेक्षावन्त इति ।

प्रयोजनस्वरूपप्रतिपादनपूर्वं प्रयोजनपदोपादानप्रयोजनप्रदर्शनार्थं भाष्यमनुभाषते अथ प्रयोजनं, व्याख्यातुं पृच्छति,—किं पुनरिति । उत्तरं येनेति । स्फुटतरमेवैतदित्यर्थः । पुनः पृच्छति,—केनेति । एकदेशिमतेनोत्तरमाह—धर्म्मेति । तत्र काम इतीच्छामात्रं वोच्यते कामिनीविषयो वा राग इति ? पूर्वस्मिन् कल्पे काम इत्येवास्तु कृतं धर्म्मादिभिः सर्वेषामेव काम्यत्वात् । उत्तरस्मिन्नव्याप्तिः, सरक(२)मृगयादीनां काम्यानामसंग्रहात् । धर्म्ममोक्षयोरपि नास्तिकान् प्रत्यप्रवर्त्तकत्वात् । तस्मादयुक्तमेतदिति मन्वान आह—वयं तु पश्याम इति । सुखस्याप्त्या दुःखस्य हान्या विषयेण विषयिणं प्रत्ययमुपलक्षयति । असत्योरकारणत्वात्, सत्योर्वा (३) अनर्थकत्वात् प्रवृत्तेरिति । तथापि सुखदुःखाप्तिहान्योरेव कर्तुः प्रवृत्तिप्रसङ्गो न तत्साधने, न ह्यन्यद्विजानाति इच्छति च करोति चान्यदिति घटते अतिप्रसङ्गात् । न च फलं पुरुषप्रवृत्तिगोचरः । तत्साधनं तु तद्गोचरः । तत्साधनत्वविज्ञानात् । तत्साधन एव प्रवर्त्तते तन्नातिप्रसङ्ग इति चेद् हन्त तर्हि तत्साधनत्वज्ञानमेव प्रवर्तयति न फलज्ञानं, ज्ञानेच्छा-

(१) "न्यायविद्यायाः पृथक् प्रस्थानत्वप्रयोजकतया न्यायप्रवृत्तेर्मूलतया च" इत्यर्थः । (२) सरकं सुरापानम् । (३) सतोर्व्वा इति सप्तमी । सुखाप्तौ दुःखहानौ च सत्याम् इत्यर्थः ।

## न्यायभाष्यम्

कर्मारभते, तेनाऽनेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ताः, तदाश्रयश्च(१) न्यायः प्रवर्तते। कः पुनरयं न्यायः? प्रमाणैरर्थपरीक्षणं न्यायः।

## न्यायवार्त्तिकम्

तदिदं प्रयोजनं न्यायस्याश्रयः। क आश्रयार्थः? आधारार्थस्तावन्न भवति। उपकारकत्वमाश्रयार्थः, तन्मूलत्वात् परीक्षाविधेः। प्रयोजने सति परीक्ष्यत इति प्रयोजनं परीक्षां प्रवर्तयतीति। का पुनरियं परीक्षा? न्यायः। कः पुनरयं न्यायः? प्रमाणैरर्थपरीक्षणं न्यायः। किमुक्तं भवति? समस्तप्रमाणव्यापारादर्थाधिगतिर्न्याय इति। नैकैकं प्रमाणमर्थपरिच्छेदहेतुभावेन व्यवतिष्ठमानं न्याय इत्युच्यते, किन्तु समस्तानि। सोऽयं विप्रतिपन्नपुरुषप्रतिपादकत्वात्

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रवृत्तीनां कार्य्यकारणभूतानां सामानाधिकरण्येन संप्रतिपत्तेरित्यभिप्रायेणाह—सुखदुःखसाधनभावात्तु सर्वेऽर्थाश्चेतनं प्रयोजयन्तीति। तुशब्दः फलाद्व्यवच्छिनत्ति। अत्रापि विषयेण प्रत्ययमुपलक्षयति। एतदुक्तं भवति तोयमुपलभ्य तज्जातीयस्यापेक्षितसाधनतां दृष्टचरीमनुस्मरति, अथ तज्जातीयतया लिङ्गेन दृश्यमानस्यापेक्षितसाधनभावमनुमिमीते, अनुमाय च पिपासुः प्रवर्त्तते, तेनोपायताज्ञानस्य साक्षात्पुरुषप्रवृत्तिहेतुत्वम्। फलज्ञानस्य त्वीप्सिततमस्योद्देश्यतयेति सर्वं सुन्दरम्। तदाश्रयश्च न्यायः प्रवर्त्तत इति भाष्यं व्याचष्टे—तदिदं प्रयोजनं न्यायस्येति। आक्षिपति—क इति। समाधत्ते—उपकारकत्वमिति। यथा राजाश्रितः पण्डित इति। उपकारकत्वमेव दर्शयति—तन्मूलत्वादिति। विधिः प्रवृत्तिः। न जातु निष्प्रयोजने काकदन्तादावारभन्ते परीक्षां प्रेक्षावन्त इत्यर्थः। आक्षिपति—का पुनरिति। न्यायाश्रयत्वं प्रयोजनस्य प्रतिज्ञाय परीक्षाश्रयत्वसमर्थनमसङ्गतमिति भावः। उत्तरम् न्यायः, तस्मान्नासङ्गतम् इत्यर्थः। नन्वेवमपि नीयते प्राप्यते विवक्षितार्थसिद्धिरनेनेति व्युत्पत्त्या प्रत्यक्षादि प्रत्येकं न्यायः। न चैतत् प्रत्येकं प्रयोजनमाश्रयते। अजिहासितानुपादित्सितानामप्यजिज्ञासितानामर्थानां प्रत्यक्षादिगोचरत्वदर्शनादित्याक्षिपति—कः पुनरयं न्यायः। समाधत्ते—प्रमाणैरिति। प्रत्यक्षादिप्रमाणमूलाः प्रतिज्ञादयः पञ्चावयवाः प्रमाणानि, तैरर्थस्य लिङ्गस्य परीक्षा परीक्षणम्। परीक्षितं तु लिङ्गं पञ्चावयवोपपन्नमनुमेयप्रत्ययफलं भावयत्येव न त्वनुमेयार्थपरीक्षा। तस्य सन्दिग्धत्वेऽपि स्वरूपेण परीक्षानास्पदत्वादिति। नन्ववयवैश्चेदर्थपरीक्षणं न तर्हि प्रमाणैः कार्य्यकारणयोरभेदाभावादित्यत आह—किमुक्तं भवतीति। न साक्षात्प्रतिज्ञादयोऽवयवा अर्थपरीक्षायामुपयुज्यन्ते,अपि तु स्वकारणतत्प्रमाणसूचनेन। तस्मात् प्रमाणानामवान्तरव्यापारः प्रतिज्ञादय

(१) तत् प्रयोजनं, आश्रय उपकारको यस्य तथाभूतः, प्रयोजनोपकृत इत्यर्थः।

## न्यायभाष्यम्

प्रत्यक्षागमाश्रितमनुमानम्, सा(१)ऽन्वीक्षा। प्रत्यक्षागमाभ्यामीक्षितस्याऽन्वीक्षणमन्वीक्षा। तया प्रवर्त्तत इत्यान्वीक्षिकी—न्यायविद्या—न्यायशास्त्रम्। यत् पुनरनुमानं प्रत्यक्षागमविरुद्धं न्यायाभासः स(२) इति।

## न्यायवार्त्तिकम्

परमो न्याय इति वक्ष्यामः (३)। प्रत्यक्षागमाश्रितमनुमानम्। प्रत्यक्षागमाश्रितमिति प्रत्यक्षागमाविरोधि। यदिहानुमानाधिगतोऽर्थः प्रत्यक्षागमाभ्यामनुसन्धीयते, अथ स्फुटतरः प्रत्ययो भवति। यत्र पुनरेतानि प्रमाणानि इतरेतराप्रतिसंहितानि व्यावृत्तानि प्रयुज्यन्ते न्यायबिन्दुवोऽसौ लाभपूजाख्यातिकामैस्तीर्थप्रतिरूपकः प्रवादी वर्ण्यते। यत्पुनरनुमानं प्रत्यक्षागमविरोधि स न्यायाभास इति। प्रत्यक्षविरुद्धं तावद् वह्निरनुष्णः कृतकत्वाद् घटादि-

## न्यायवार्त्तिकतात्पर्य्यटीका

इत्युपपन्नं प्रमाणैरर्थपरीक्षणं तदिदमुक्तं समस्तप्रमाणव्यापारादिति। (इति) (४) तस्मान्नैकैकं प्रमाणमिति। समस्तप्रमाणोपकरणत्वादेव चास्य परमत्वमित्याह—सोऽयमिति। पञ्चावयवोपपन्नतया च प्रत्यक्षागमाश्रितत्वं न तद्विरोध इति। तत्प्रदर्शनार्थं भाष्यमनुभाष्य तात्पर्यं व्याचष्टे—प्रत्यक्षागमेति। कथं पुनरनेन भाष्येण एतदुच्यत इत्यत आह—यदिहाऽनुमानेति। यत्पुनरनुमानमित्यादि भाष्यं व्याचष्टे—यत्र पुनरिति। यत्र विरोधस्तत्र प्रमाणमूलानामवयवानां प्रतिज्ञादीनामितरेतरप्रतिसन्धानमेकवाक्यता नास्ति। प्रमाणविरोधेन योग्यताविरहिणां तत्पदार्थानां पारमार्थिकान्वयाभावादिति। तीर्थं दर्शनं, तस्य प्रतिरूपकः अदर्शनमेव दर्शनं प्रतिरूपयति दर्शनमिव दर्शयतीति यावत्। स खलु तादृशः पञ्चावयवप्रयोगो लाभपूजाख्यातिकामैः पण्डितव्यञ्जनैरुपवर्ण्यमानः न प्रत्ययाय, प्रागेव त्वपवर्गायेत्यर्थः। तदेवं समुदायतो भाष्यं व्याख्यायावयवविभागाय पठति—यत्पुनरनुमानमिति। प्रत्यक्षविरोधोदाहरणमाह—अनुष्णोऽग्निरवयवी(५) कृतकत्वाद् घटवद् इति। अत्र चोदयति—कः पुनरिति। इदमत्राकूतम्—रूपत्रयसम्पन्नमेतत्कृतकत्वं न वा। न चेत् तत एव तर्हि तदनुमानाभासत्वमिति कृतं प्रत्यक्षविरोधेन। अथान्वयव्यतिरेकपक्षधर्मतासम्पन्नमपि बाधितविषयतयैतदप्रमाणम्? तदयुक्तम्, रूपत्रयसम्पत्त्यां खल्वेतत् स्वसाध्येनाविनाभूतं भवति, न च बाधाविनाभावयोः सह सम्भवः। बाधायामपक्षधर्म्मो भवेत्, अनैकान्तिकश्च हेतुः। जिज्ञासितधर्म्मणो धर्म्मिणः पक्ष्यमाणत्वेन पक्षत्वं, न पुनः प्रत्यक्षावधृतसाध्यधर्म्मविरुद्धस्य। तस्याजिज्ञासितत्वेनापक्षतया तद्धर्म्मस्य पक्षधर्मत्वं न चैकान्तिकम्। साध्यधर्मिण्येव

(१) टिपु "सा" नास्ति। (२) प्रत्यक्षागमेत्यनन्तरं "विरोधि स न्यायाभासः।" इति वार्त्तिके। (३) १।१।३२—३८ सूत्र। (४) अत्र आदर्शे—"इति" इत्यधिकः पाठः, स एवास्माभिर्बन्धनीमध्ये धृतः।" (५) परमाणुना भागासिद्धता माभूदिति आह—अग्निरवयवीति।

## न्यायवार्त्तिकम्

वत् (१)। कः पुनरस्यानुमानस्य विरोधः ? अनुमानाविषये प्रयोगः। नायमनुमानस्य विषये प्रयोगः। नायमनुमानस्य विषयः, यस्मिन् विषये एतत् प्रयुज्यते स प्रत्यक्षेणापहृत इति।

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रत्यक्षोपस्थापितसाध्यधर्म्मविरुद्धधर्म्मवति दर्शनेन व्यभिचारात्। न च सपक्षासपक्षावेवान्वयव्यतिरेकगम्याविनाभावदर्शनविषयौ न पक्ष इति साम्प्रतम्। यदि हि पक्षं विहाय बहिरेव सपक्षासपक्षयोरविनाभावो गम्येत, तदा बहिर्व्याप्तिमात्रबलेन पक्षधर्म्मोऽपि हेतुर्न पक्षे साध्यं साधयेत्। असिद्धा हि तत्र स्वसाध्येन व्याप्तिः। तदेतत् षण्डकमुद्वाह्य मुग्धायाः पुत्रप्रार्थनमिव। तस्मादन्तर्बहिर्वा सर्वोपसंहारेणाविनाभावोऽवगन्तव्यः। एवं च सिद्धः पक्षेऽपि व्यभिचारः साधनधर्म्मस्येत्यनैकान्तिकत्वम्। तथा च रूपत्रयसम्पन्नो हेतुर्बाधितविषयश्चेत्यसम्भवः। तस्मात् सूक्तं कः पुनरस्यानुमानस्य रूपत्रयसम्पन्नस्य विरोधः। न ह्यस्ति सम्भवो रूपत्रयसम्पन्नं विरुद्धं चेत्यर्थः। तत्र समाधिमाह—अनुमानाविषये प्रयोगः। वक्ष्यते (२) ह्यनुमानाधिकारे यथाऽनौपाधिकः सम्बन्धो हेतुसाध्ययोरनुमानाङ्गं, न तु कार्य्यकारणभावादिरव्यापकत्वादतिप्रसङ्गाच्चेति। स चैवं प्रवर्त्तते, यो यः कृतकः स सर्वोऽनुष्णो यथा घटादिरिति। न च वह्नेरिव धूमसम्बन्धे आर्द्रेन्धनसंयोगः गुर्वन्तेवासिनोः साहचर्य्ये स्वाध्यायाध्ययनमुपाधिः कृतकत्वानुष्णत्वयोः सम्बन्धे उपलभ्यते। सोऽयं शङ्कितः समारोपितो वा प्रयत्नेन पुनः पुनरन्विष्यमाणोऽनुपलभ्यमानस्तत्र तत्र घटादावुपाधिर्नास्तीति प्रत्यक्षेण, यद्यभविष्यद् घटादिवदेव व्यज्ञास्यत विज्ञानाभावान्नास्त्येवेति तर्कसहायेन निश्चीयते। सोऽयं रूपेणेव रसस्य, श्वस्तनेनेव सवितुरुदयेनाद्यतनस्य तदुदयस्य, समुद्रवृद्ध्येव चन्द्रोदयस्य समानकालस्य, कृतकत्वस्यानुष्णत्वेन स्वाभाविक औत्सर्गिकः सम्बन्धः सामान्येन यो यः कृतकः स सर्वोऽनुष्ण इत्यवधारितो न तु निर्विभज्य (३) तेजोवयविनि। न हि सर्वोपसंहारवती व्याप्तिरेकदेशविषया भवितुमर्हति। एकदेशविषयत्वे यत्रैव न दर्शिता तेनैवानैकान्तिकत्वमाशङ्क्येत। तथा च तत्र तत्रैकदेशे प्रत्येकं व्याप्तिप्रदर्शनमशक्यम् आनन्त्यात्। तस्मात् सर्वोपसंहारेणैव तदुपदर्शनं तदिह कृतकत्वमौत्सर्गिकसामान्यविषयव्याप्तिस्मरणसध्रीचीनं पक्षधर्म्मतावशाद्विशेषे तेजोऽवयविनि साधयितुमनुष्णतोन्मुखं यत्र साधयेत् तत्र किं प्रत्यक्षेणापहृतविषयत्वाद् आहो स्विदनैकान्तिकत्वात् ? न तावदनैकान्तिकत्वं प्रागेव सामान्यतोऽनौपाधिकसम्बन्धावधारणात्। तेजोऽवयविनि कृतकत्वस्य दर्शनादनैकान्तिकमपक्षधर्म्मो वा कृतकत्वमिति चेन्न अनुमानेन सामान्यतोऽवधृतव्याप्तिना तस्यानौष्ण्यसाधनात्। प्रत्यक्षेण तेजोऽवयविन औष्ण्यग्रहणेन तस्य कृतकत्वस्य हेतोर्वृत्तावुत्पन्नमपि व्याप्तिविज्ञानं बाध्यते। ततश्चानैकान्तिकत्वादप्रवृत्तिरनुमानस्येति

---

(१) अनुष्णोऽग्निरवयवीकृतकत्वाद्घटवत् इति तात्पर्य्यसम्मतपाठः। (२) १।१।५ सूत्रव्याख्यानावसरे।
(३) निर्विभज्य विशेषतो ज्ञात्वा, तेजोऽवयविनि सम्बन्धोऽवधारित इत्यर्थः। परिशु--२६१। पृ० २ पं।

## न्यायवार्त्तिकम्

अपरे पुनरश्रावणः शब्द इति प्रत्यक्षविरोधं वर्णयन्ति, तैस्तु न प्रत्यक्षस्य विषयो ज्ञातो नानुमानस्य विषय इति। किं कारणम्? इन्द्रियवृत्तीनामतीन्द्रियत्वात्, श्रावणत्वं चेन्द्रियवृत्तिः सा कथं प्रत्यक्षा भवति। आगमविरुद्धं शुचि नरशिरःकपालं प्राण्यङ्गत्वाच्छङ्खशुक्तिवदिति। कथमिदमागमविरुद्धम्? शुचि नरशिरःकपालमिति ब्रुवता शुच्यर्थो वाच्यः, किमुक्तं भवति शुचीति। यदि स्प्रष्टुः प्रत्यवायाभावः, स कस्येति वाच्यम्। यद्यात्मन इति ब्रूयात् तदागमार्थानुष्ठानतात्पर्य्यंगावस्थानादेवमेतत् (१)। अथ त्रयीविदामिति ब्रूयात्, त्रय्यभ्युपगमाद्विरोध

## न्यायवार्त्तिकतात्पर्य्यटीका

चेन्न, अनुमानप्रवृत्तिविषयसाध्यधर्म्मिणि हेतोर्व्यभिचारानुद्भावनात्। अन्यथा तद्गतसाध्यधर्म्मसन्देहे तत्रोपलभ्यमानः साधनधर्म्मः सन्दिग्धव्यतिरेकित्वादनैकान्तिकः स्यात्, सन्दिग्धसाध्यधर्म्मे दृष्टान्त इव साधनधर्म्मः। तथा चानुमानमात्रमुच्छिद्येत प्रत्यक्षेण साध्यधर्म्मविपर्य्ययसाधनात्। तेजोऽवयविनोऽनुष्णत्वेनासाध्यत्वम्, तथा चानैकान्तिकत्वमपक्षधर्म्मता वेति चेत्, तर्हि प्रत्यक्षेण साध्यविपर्य्ययसाधनं बाधनमित्यनर्थान्तरम्। तदिदमुक्तं यस्मिन् विषये तेजसोऽनुष्णत्वे एतत् प्रयुक्तं (२) स प्रत्यक्षेणापहृत इति। एवं चानुमाने दूषिते कृतमपक्षधर्म्मत्वव्यभिचाराभ्यां तदुपजीविभ्यामिति भावः।

यत्पुनर्दिङ्नागेन प्रत्यक्षविरुद्धमनुमानमुदाहृतं तदुपन्यस्यति—अपरे पुनरिति। अश्रावणः शब्दः कृतकत्वाद् घटादिवदिति ब्रुवाणः शब्दस्वरूपमेवापलपति। न हि श्रवणेन्द्रियादन्यदस्ति शब्दग्रहणकारणम्। न चागृह्यमाणः शब्दस्तद्व्यवहारगोचरः। तस्मादेवंवादिनोऽभिप्रायव्यासमसत्त्वं शब्दस्य, तथा च प्रत्यक्षविरोध इति भावः। दूषयति—तैस्त्विति। सविशेषणे हि विधिनिषेधौ विशेषणमुपसंक्रामत इत्युत्सर्गः। क्वचित्पुनर्विशिष्टविधानमपि भवत्यगतित्वात्, तद्यथा लोहितोष्णीषा ऋत्विजः प्रचरन्ति सति विभवे न जीर्णमलवद्वासाः स्नातकः स्यादिति। तद्वदिहापि अश्रावणः शब्द इति श्रुतिवाक्ययोः (३) सामर्थ्यात् श्रावणत्वविशेषणोपसंक्रान्तो निषेधो न विशेष्येण शब्देन सह सम्बध्यते, नापि श्रावणत्वनिषेधार्थः शब्दनिषेधो वाद्यभिप्रायव्यासः। वचनार्थाविरोधिनोऽर्थस्यार्थगम्यत्वान्न तद्विरोधिनः श्रावणत्वस्य निषेधस्य चाधिकरणं शब्द इति न शब्दाभावे तन्निषेधोऽवकल्पते न चाभावस्तुच्छ इति च तृतीय उपपादयिष्यते। न च श्रावणत्वं प्रत्यक्षगोचरः। तद्धि शब्दश्रोत्रयोः सम्बन्धः, कृत्तद्धितसमासेषु सम्बन्धाभिधानं त्वतल्भ्यामिति कात्यायनीयवचनात्। न च प्रत्यक्षाप्रत्यक्षवृत्तिः सम्बन्धः प्रत्यक्षः, तस्मात् श्रावणत्वमप्रत्यक्षमिति नात्र प्रत्यक्षविरोधस्तदिदमुक्तम् इन्द्रियवृत्तीनामतीन्द्रिय-

(१) तदा स्वागमार्थतात्पर्य्यावस्थानात् कापालिकस्यैवमेतत् इति तात्पर्य्यपाठः। (२) एतत् प्रयुज्यते इति वार्त्तिकपाठः। (३) नञा समसितश्रावणपदश्रवणं श्रुतिः, विशेषणविशेष्यभावावस्थितः पदसमूहो वाक्यम्, तयोः सामर्थ्यात्। प०।

## न्यायवार्त्तिकम्

इति वाच्यम्। शुचि नरशिरःकपालमिति कोऽर्थः? विशेषविधानमेतत्। विशेषविधानं हि शेषनिषेधविषयं यदि शुचि नरशिरःकपालमिति, किमशुचीति वाच्यम्। अथ सर्वमेव शुचीति, दृष्टान्तो नास्ति सर्वस्य पक्षीकृतत्वादिति। अथानुमानविरुद्धं कस्मादनुमानं न भवति?

## न्यायवार्त्तिकतात्पर्य्यटीका

त्वादिति। वृत्तिः स्वार्थे सम्बन्ध इत्यर्थः। आगमविरुद्धमुदाहरति—शुचीति। मन्वादिभि-र्नरास्थिस्पर्शप्रतिषेधात् स्पर्शे च प्रायश्चित्तोपदेशादशुचित्वं नरशिरःकपालादीनामिति। कापालिक आक्षिपति—कथमिदमिति। नास्माकं वेदस्तन्मूलाश्च स्मृतयः प्रमाणमित्यभिप्रायः। उत्तरम्—शुचि नरशिरःकपालमिति ब्रुवता श्रुतिस्मृतीतिहासपुराणानपेक्षेणानुमानमात्रसहायेनात्र वस्तुनि त्वया शुचिरूपोऽर्थो वक्तव्यः। किमुक्तं भवति शुचीति यदि उच्येत स्प्रष्टुः प्रत्यवायाभावः। सिद्धान्ती पृच्छति—स कस्येति। यद्यात्मन इति ब्रूयात् कापालिकः। अविगीता हि व्यव-हारपरम्पराऽस्माकं कापालिकानां नरशिरःकपालस्पर्शतदवस्थितान्नपानोपयोगलक्षणा दाक्षिणा-त्यानामिवाह्ह नैवुकादि (१) लक्षणा क्रिया श्रेयस्करी, तस्मादस्माकमप्रत्यवायकरतया शुचि नरशिरः-कपालमित्यर्थः। तत्र सोपहासमुत्तरमाह—तदा स्वागमार्थतात्पर्य्यावस्थानात् कापालिक-स्यैवमेतत्। श्रुतिस्मृतीतिहासपुराणलक्षणागमविहितमर्थमाचरतां तन्निषिद्धं च परिहरतां दाक्षिणा-त्यानामाह्ह नैवुकाद्यनुष्ठानमनादि अद्य यावदनुवर्त्तमानमविगीतमागममूलतामनुमापयत्यात्मनः श्रेयोहेतुभावेन, न खल्वागमानपेक्षः सहस्रेणाप्यनुमानैरिममर्थमवगन्तुमर्हति, कापालिकानां त्वागम-विहितमकुर्वतां, कुर्वतां च तन्निषिद्धमर्थं प्रयत्नेन अनादिरपि व्यवहारः शाक्यमल्लकादीनामिव न वेदानुमाने मूलमिति भावः। अथ त्रयीविदां नरशिरःकपालमप्रत्यवायहेतुरिति ब्रूयात् तदा त्रय्या वक्ष्यमाणेन न्यायेन प्रामाण्योपगमादागमविरोधः, तदीयस्पर्शस्य त्रय्यां निषेधेन प्रत्यवायहेतुत्व-निश्चयात्। अपि चागमानपेक्षोऽनुमानेन शौचं नरशिरःकपाले व्यवस्थापयन् प्रष्टव्यो जायते—शुचि नरशिरःकपालमिति कोऽर्थः। ननु य एव वाक्यात् प्रतीयते स एवार्थः, तत् किं पृच्छ्यत इत्यत आह—विशेषस्य नरशिरःकपालस्य शौचविधानमेतत्। किमित्यत आह—विशेषविधानं च शेषे प्रतिषेधविषयं (२) लोके दृष्टम्, यथा दक्षिणेन चक्षुषा पश्यतीति उक्ते वामेन नेति गम्यते। तदिह यदि शुचि नरशिरःकपालं किमन्यदशुचि इति त्वया वक्तव्यम्। न हि नरोच्चारादीनामशुचित्वे प्रमाणमन्यदस्त्यागमात्। आगमप्रामाण्यं च न मन्यसे इति भावः। अथ त्रयीविद्वेषादनुमान-पक्षपातिना त्वया सर्वमेव नारं विट्कपालादि शौचपक्षे निक्षिप्यत इत्याह—अथ सर्वमेव शुचि।

---

(१) गोमयमयीं देवतां दूर्वादिभिरभ्यर्च्य शान्तिकल्पनम् आह्ह नैवुकमितीतरके। मङ्गलवारे दधिमन्यन-मितरन्ये। प्रतिदिनं तण्डुलमुष्टिं मासमेकं भाण्डे निक्षिप्य घृतेन तेनापूपमेकं कृत्वा देवतापूजनमितरपरे इति परिशुद्धिप्रकाशः। २७९।१८ पं। (२) "विशेषविधानं हि शेषनिषेधविषयम्" इति वार्त्तिकपाठः।

## न्यायवार्त्तिकम्

एकस्मिन्ननुमानद्वयसमावेशस्यासम्भवात् (१) न विरोधः। न ह्यन्वयव्यतिरेकसम्पन्ने अनुमाने एकस्मिन्नर्थे समाविशतः, तस्मान्नानुमानविरुद्धम्। प्रत्यक्षविरोध्यपि तर्हि न प्राप्नोति? न न प्राप्नोति, अन्वयव्यतिरेकसम्पन्नस्य प्रत्यक्षेण बाधितत्वात्। अथोपमानविरुद्धं कस्मान्न भवति? नोपमान-

## न्यायवार्त्तिकतात्पर्य्यटीका

परिहरति—दृष्टान्तो नास्ति। कुतः? सर्वस्य पक्षीकृतत्वात्। चोदयति—अथानुमानविरुद्धं कस्मादनुमानं न भवतीति। न खलु प्रमाणत्वे प्रत्यक्षागमाभ्यामनुमानस्य कश्चिद्विशेषः, येन तौ बाधकौ न त्वनुमानमिति भावः। परिहरति—एकस्मिन्ननुमानद्वयसमावेशाभावात्। अयमभिसन्धिः—यत्तावदनुमानं पूर्वप्रवृत्तं तेन बाधितविषयं तदबलवत् पश्चादनुमानं न स्वकार्य्याय पर्य्याप्तम्, यथोक्तमश्रावणः शब्दः कृतकत्वाद् घटादिवदित्यस्यानुमानविरोध इति। लब्धरूपं हि वस्तु किञ्चित् क्वचिन्निषिध्यते न तु ज्ञानाकारालीकादिरिति तृतीये निवेदयिष्यते। तदिह श्रावणत्वं शब्दस्य निषिध्यता श्रवणमिन्द्रियं तद्ग्राह्यत्वं च वस्तुनी अनुमातव्ये शब्दोपलम्भलक्षणेन कार्य्येण। तथा चैतेनैवानुमानेनापहृतविषयमश्रावणत्वानुमानं चरममन्वयव्यतिरेकसम्पन्नमपि न स्वोचितं कार्य्यं जनयति। एवं तनुभुवनादीनां न कर्त्तेश्वरोऽशरीरित्वान्मुक्तात्मवत् प्रयोजना-भावादित्याद्यपीश्वरधर्म्मिग्राहिमूलानुमानेनापहृतविषयतया न्यायाभासं वेदितव्यम्। तस्मात् परस्परानपेक्षसमानकालप्रवृत्तिसमर्थानुमानद्वयसमावेशाभावाभिप्रायमेतदुक्तम्। न ह्यनयोरन्यतर-द्बाध्यं बाधकं वा सम्भवति किन्तु मिथः सत्प्रतिपक्षतया न प्रमां कुरुतः। कस्मात् पुनर्न समावेशो-ऽनुमानयोः? असमावेशे वा कुतः सत्प्रतिपक्षता? इत्यत आह—न ह्यन्वयव्यतिरेकसम्पन्नयो-रिति। (२) इहान्वयव्यतिरेकग्रहणेन समानबलयोरन्वयव्यतिरेकपक्षधर्म्मत्वासत्प्रतिपक्षत्वान्युप-लक्षितानि। एतैः सम्पन्नयोर्यदि समावेश एकस्मिन् विषये भवेत्तत एकतरस्य बाध्यत्वं बाधकत्वं वा गम्येतापि, न त्वेतदस्ति, असत्प्रतिपक्षतासंपत्तेरभावादिति। उपसंहरति,—तस्मान्नानुमान-विरुद्धम् अनुमानं तुल्यबलम्, अपि तु सत्प्रतिपक्षमित्यर्थः। प्रत्यक्षमप्यनुमेयविरुद्धसाधनादनु-मानस्य प्रतिपक्ष इति सत्प्रतिपक्षतयाऽन्वयव्यतिरेकादिसम्पन्नस्याऽनुमानस्य प्रत्यक्षेण तद्विरुद्धार्थो-पसंहारिणा न समावेश इति न बाधकाभाव इत्यभिप्रायेण चोदयति—प्रत्यक्षविरोध्यपीति। परिहरति—न नेति। तुल्यबलौ हि मिथः प्रतिपक्षौ भवतो न तु दुर्बलोत्तमबलौ, न हि भवति तरक्षुः प्रतिपक्षो हरिणशावकस्य, किन्तु समरकण्डूनिघ्नविषाणकोटिसमुल्लिखितगण्डशैलस्य विपिनमहिषस्य। तस्मात् पूर्वभावि प्रत्यक्षमनन्यथासिद्धं सदसत्प्रतिपक्षमनुमानं समानविषयसमा-

(१) "समावेशाभावात्" इति तात्पर्य्यपाठः। (२) "-सम्पन्ने" इति वार्त्तिकपाठः।

## न्यायभाष्यम्

तत्र वादजल्पौ सप्रयोजनौ। वितण्डा तु परीक्ष्यते। वितण्डया प्रवर्तमानो वैतण्डिकः। स प्रयोजनमनुयुक्तो यदि प्रतिपद्यते सोऽस्य पक्षः सोऽस्य सिद्धान्त इति, वैतण्डिकत्वं जहाति। अथ न प्रतिपद्यते नायं लौकिको न परीक्षक इत्यापद्यते। अथापि परपक्षप्रतिषेधज्ञापनं (१) प्रयोजनं ब्रवीति, एतदपि तादृगेव यो ज्ञापयति यो जानाति येन ज्ञाप्यते यच्च ज्ञाप्यते एतच्च (२) प्रतिपद्यते यदि, तदा वैतण्डिकत्वं जहाति। अथ न प्रतिपद्यते, परपक्षप्रतिषेधज्ञापनं प्रयोजनमित्येतदस्य वाक्यमनर्थकं भवति। वाक्यसमूहश्च स्थापनाहीनो वितण्डा, तस्य यद्यभिधेयं प्रतिपद्यते, सोऽस्य पक्षः स्थापनीयो भवति। अथ न प्रतिपद्यते, प्रलापमात्रमनर्थकं भवति, वितण्डात्वं निवर्तत इति।

अथ दृष्टान्तः प्रत्यक्षविषयोऽर्थः, यत्र लौकिकपरीक्षकाणां दर्शनं न व्याहन्यते।

## न्यायवार्त्तिकम्

विरुद्धम्, पूर्वप्रमाणविरोधानुविधानात्। उपमानविरोधः पूर्वप्रमाणानुविधायी, आगमाहितसंस्कारस्मृत्यपेक्षं च सारूप्यज्ञानमुपमानमिति वक्ष्यामः (३)। प्रत्यक्षागमयोर्विरोधादुक्तं तदिति।

तत्र वादजल्पौ सप्रयोजनाविति भाष्यम्। तस्य कुत उत्थानम्? तेनानेन प्रयोजनेन सर्वे प्राणिनः सर्वाणि कर्माणि सर्वाश्च विद्या व्याप्ता इति, तत्र वादजल्पौ किंप्रयोजनाविति युक्तो विचार इत्याह—तत्र वादजल्पौ सप्रयोजनाविति। तस्मिन् न्यायाभास इति॥

## न्यायवार्त्तिकतात्पर्य्यटीका

वेशाद्बाधत इति युक्तमित्यर्थः। चोदयति—अथोपमानविरुद्धमनुमानं कस्मान्न भवति। गोसदृशो गवय इत्यारण्यकस्य वाक्यं श्रुत्वा यदा नागरिको वनं गतो गोसदृशं पिण्डमुपलभते तदाऽस्य वाक्यार्थानुभवाऽऽहितसंस्कारप्रबोधजनिततत्स्मृत्यपेक्षं गोसदृशज्ञानमुपमानं पुरोऽवस्थितस्य पिण्डस्य गवयशब्दवाच्यत्वे प्रमाणम्। तत्र यदि कश्चित् प्रमाणयेन्नैष पिण्डो गवयशब्दवाच्यः गोपिण्डसादृश्याद् गोपिण्डान्तरवदिति तदिदमनुमानमुपमानेन बाधितविषयमस्त्वित्यर्थः। संप्रतिपत्तिरुत्तरम्, नोपमानं (४) न भवतीति अनुपज्यते। अस्ति चेत् कस्मान्नोक्तमित्यत आह—पूर्वप्रमाणविरोधानुविधानान्नोक्तमिति शेषः। तद्दर्शयति—उपमानविरोध इति। स्वफलद्वारा शब्दं प्रमाणं दर्शयति—आगमेति। स्वफलद्वारैव प्रत्यक्षं प्रमाणं दर्शयति—

---

(१) "ज्ञानम्" इति वा-टि-पाठः। (२) अत्र "ज्ञाप्यते" "एतच्च" इति अव्यवहितं पदद्वयं फ-आ-पु० नास्ति। "येन ज्ञाप्यते" इति ज० नास्ति। (३) १।१।६ सू०। (४) "नोपमान"मित्यत्र "नोपमानविरुद्धम्" इतीव पाठ इति मन्ये, वार्त्तिके तथा दर्शनात्।

## न्यायभाष्यम्

स च प्रमेयम्। तस्य पृथग्वचनं च तदाश्रयावनुमानागमौ, तस्मिन् सति स्यातामनुमानागमौ असति च न स्याताम्। तदाश्रया च न्यायप्रवृत्तिः। दृष्टान्तविरोधेन च परपक्षप्रतिषेधो वचनीयो भवति, दृष्टान्तसमाधिना च स्वपक्षः साधनीयो भवति। नास्तिकश्च दृष्टान्तमभ्युपगच्छन्नास्तिकत्वं जहाति। अनभ्युपगच्छन् किंसाधनः परमुपालभेतेति। निरुक्तेन च दृष्टान्तेन (१) शक्यमभिधातुं 'साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्' (अ० १ आ० १ सू० ३६)। 'तद्विपर्य्ययाद्विपरीतम्' (२) (अ० १ आ० १ सू० ३७) इति।

## न्यायवार्त्तिकम्

वितण्डा तु परीक्ष्यते सप्रयोजना निष्प्रयोजना वेति। एके तावद्वर्णयन्ति निष्प्रयोजना, दूषणमात्रत्वात्। तच्च नैवम्, न दूषणमात्रं वितण्डा, किन्त्वभ्युपेत्य पक्षं यो न स्थापयति स वैतण्डिक उच्यते। अथ पक्षमपि न प्रतिपद्यते, उन्मत्तवदुपेक्षणीयः स्यात्। अथ परपक्ष-

## न्यायवार्त्तिकतात्पर्य्यटीका

सारूप्यज्ञानमिति। उपसंहरति—प्रत्यक्षागमयोर्विरोधाभिधानादुक्तं तत्, उपमानमिति।

भाष्यमनुभाष्याक्षिपति—तत्र वादजल्पाविति। प्रयोजनस्वरूपोपयोगाभिधानानन्तरं दृष्टान्तपदे व्याख्यातव्ये तदुल्लङ्घनेन वादजल्पयोः कोऽवसर इत्यर्थः। अवसरमाह—तेनानेनेति। प्रयोजनव्याख्याङ्गमेवेदं न वादजल्पव्याख्याङ्गमित्यस्त्यवसर इति। 'तत्र'शब्दार्थं व्याचष्टे—तस्मिन्न्यायाभासे इति। वादजल्पकथयोर्हि न द्वयोर्वादिप्रतिवादिनोः साधने समीचीने सम्भवतः, वस्तुनि विरुद्धधर्म्मद्वयसमवायाभावात्। तस्माद् द्वयोरेकस्य न्याय एकस्य तु न्यायाभास इति वादजल्पाभ्यां विविच्यते। न्यायाभास इति तु सन्निधानादुक्तम्, सन्निहितार्थत्वात् सर्वनाम्न इति।

वितण्डा तु परीक्ष्यते सप्रयोजना निष्प्रयोजना वेति। 'तु'-शब्दः प्रसिद्धप्रयोजनाभ्यां वादजल्पाभ्यां व्यवच्छिनत्ति। प्रतिपक्षस्थापनाहीना हि वितण्डोच्यते, तत्र स्थापनाहीनत्वात् प्रतिपक्षहीनेति प्रतीयते न खलु स्थाप्यसम्भवः। तथा वितण्ड्यते व्याहन्यतेऽनया प्रतिपक्षसाधनमिति व्युत्पत्त्या परपक्षोपघातेन पारिशेष्यात् स्वपक्षसिद्धिरस्याः प्रयोजनं प्रतीयते। तदेवं सन्दिग्धप्रयोजना सती वितण्डा परीक्ष्यते प्रयोजनवती न वेति। तत्र यदि निष्प्रयोजना ततो न सर्वा विद्याः सर्वाणि कर्म्माणि तन्मुखेन च सर्वे प्राणिनः प्रयोजनेन व्याप्ताः, वितण्डाया एव कर्म्मरूपाया विद्यारूपाया वा निष्प्रयोजनत्वात्। अथ तु प्रयोजनवती तत उपपन्ना प्रयोजनव्याप्तिः।

---

(१) "निरुक्ते च दृष्टान्ते" इति वि-टि-पाठः। "निरुक्तेन दृष्टान्तेन" इति ज-भा। (२) सूत्रपाठस्तु—"तद्विपर्ययाद्वा विपरीतम्" इति।

## न्यायभाष्यम्

अस्त्ययमित्यनुज्ञायमानोऽर्थः सिद्धान्तः। स च प्रमेयम्। तस्य पृथग्वचनं सत्सु सिद्धान्तभेदेषु वादजल्पवितण्डाः प्रवर्तन्ते, नातोऽन्यथेति।

## न्यायवार्त्तिकम्

प्रतिषेधज्ञापनं प्रयोजनमिति, तादृगेवैतत्। एतस्मिन्नपि चतुर्वर्गं चेत् प्रतिपद्यते सोऽस्य पक्षः। चतुर्वर्गो (१) भाष्य उक्तः। अथ न प्रतिपद्यते पूर्ववदुपेक्षणीयः। प्रतिपक्षस्थापनाहीनं च वाक्यं वितण्डेत्युच्यते। तस्य यदर्थं प्रतिपद्यते सोऽस्य पक्षः। अथ न प्रतिपद्यते पूर्ववद्दोष इत्युक्तं प्रयोजनमिति॥ प्रत्यक्षविषयोऽर्थो दृष्टान्तः। किमुक्तं भवति? लौकिकपरीक्षकाणां दर्शना-

## न्यायवार्त्तिकतात्पर्य्यटीका

किं तावत्प्राप्तम्? केचिद्ब्रुवते निष्प्रयोजना वितण्डेति। स्थापनाहीनतया तावत् स्थाप्यः पक्षो नास्ति। अवयवव्युत्पत्त्याऽपि परसाधनविघातः प्रतीयते न च तावन्मात्रेण स्वपक्षसिद्धिरस्ति। न हि पर्वतनितम्बवर्त्तिधूमे असिद्धत्वादिना दूषिते वह्नेस्तत्राभावो निश्चीयते। तदिदमुक्तम् दूषणमात्रत्वादिति। तमिमं निष्प्रयोजनवितण्डावादिनं प्रत्याह—तच्च नैवमिति। परसाधनदूषणेनास्य स्वपक्षः सिध्यतु मा वा सैत्सीत् स तु स्वपक्षसिद्धैव प्रयोजनेन परसाधनमाहन्तीति भावः। तदनेन स प्रयोजनमनुयुक्त इति भाष्यं व्याख्यातम्। अथ न प्रतिपद्यत इत्यादि भाष्यं व्याचष्टे—अथ पक्षमपीति। अथापीत्यादि भाष्यं व्याचष्टे—अथ परपक्षेति। नास्तिको हि सदसदुभयानुभयरूपतया न विचारं सहन्त इति प्रमेयाणि सर्वथा दूषयति। तदयं परपक्षप्रतिषेधमात्रप्रयुक्तः प्रवर्त्तते। न त्वस्यास्ति पक्षोऽनवस्थापनात्तयोरपि प्रमेयपक्षपातिदूष्यत्वादित्यर्थः। एतदपीत्यादि व्याचष्टे तादृगेवैतत्। एतद्विभजते—एतस्मिन्नपि पक्षे चतुर्वर्गं चेत् प्रतिपद्यते सोऽस्य पक्षः। प्रतिपत्तिरभ्युपगमः। यद्यपि स्थाप्य एव पक्षस्तथाऽपि तन्नान्तरीयकतया अभ्युपगममात्रेण चतुर्वर्गोऽपि पक्ष उक्तः। कश्चतुर्वर्ग इत्यत आह—चतुर्वर्ग इति। एष साधनवादी ज्ञापयति। अहो वैतण्डिकोऽजनि अनेन पञ्चावयववाक्येन इदं साध्यं ज्ञाप्यत इति चतुर्वर्गः। तत्प्रतीत्या खलु वैतण्डिकस्य परपक्षप्रतिषेधः प्रयोजनं सिध्यति। तथा च न निष्प्रयोजनोऽयं वैतण्डिक इत्यर्थः। द्वितीयं पक्षं दूषयति—अथ न प्रतिपद्यत इति। चतुर्वर्गनान्तरीयकं स्वदूषणमपि प्रतिपद्यत इत्युन्मत्तवदुपेक्षणीय इत्यर्थः। अपरमपि नास्तिकवैतण्डिकं प्रति दोषमाह—प्रतिपक्षेति। असिद्धविरुद्धादिदोषो वाक्यस्य वैतण्डिकप्रयुक्तस्यार्थः, तं यदि प्रतिपद्यते सोऽस्य पक्षः। अथ असिद्धविरुद्धादीनां सद्भावाभ्युपगमे प्रमेयपक्षपातिनां

(१) ज्ञाठ-ज्ञापक-ज्ञाप्य-ज्ञापनसाधनप्रमाणादिरूपचतुर्वर्गः, "यो ज्ञापयति यो जानाति" इत्यादिना ४४ पृष्ठस्थ-भाष्यग्रन्थे न उक्तः।

### न्यायभाष्यम्

साधनीयार्थस्य यावति शब्दसमूहे सिद्धिः परिसमाप्यते तस्य पञ्चावयवाः प्रतिज्ञादयः, समूहमपेक्ष्याऽवयवा उच्यन्ते ।

### न्यायवार्त्तिकम्

विघातहेतुरिति । एवं चात्मादिव्याप्तिरिति । दर्शनाविघातहेतुत्वेन दृष्टान्ते वर्ण्यमाने आत्मादि व्याप्तं भवति । प्रत्यक्षादिविषयतायां चात्मादि त्यक्तं भवति । ततश्चोदाहरणसूत्रं व्याहन्येत । सोऽयं दृष्टान्तः प्रमेयम् उपलब्धिविषयत्वात् । तस्य पृथगुपदेशो न्यायस्य तन्मूलत्वात् । सति तस्मिन्ननुमानागमौ स्याताम्, असति तु न स्यातामिति । पूर्वं प्रत्यक्षदृष्टमर्थमनुमिमते । पूर्वं ज्ञातं चार्थं परस्मै आचक्षते । नास्तिकस्य च व्याघातोऽभ्युपगमेऽनभ्युपगमे वा, तदुक्तं भाष्य इति ॥ अभ्युपगमव्यवस्था सिद्धान्तः । अभ्युपगम इदमित्थम्भूतं चेति (१) ।

### न्यायवार्त्तिकतात्पर्य्यटीका

प्रमेयमात्रविचारासहत्वाभ्युपगमो विघटत इति स्ववाक्याभिहितमेव असिद्धविरुद्धादि न प्रतिपद्यते पूर्ववद्दोषः नायं लौकिको न परीक्षक इति । तस्माद्वितण्डाऽपि प्रयोजनवती नाव्यापकं प्रयोजनमिति सिद्धम् । सोऽयं सर्व्वः प्रसक्तानुप्रसक्तवादः प्रयोजनव्याख्यानार्थमित्याह—उक्तं प्रयोजनम् ।

दृष्टान्तपदव्याख्यानपरं भाष्यमनुभाषते—प्रत्यक्षविषय इति । आक्षिपति—किमुक्तं भवतीति । न तावद् यो यः प्रत्यक्षविषयः स सर्वो दृष्टान्तः, अदृष्टान्तस्यापि प्रत्यक्षविषयत्वात् । नापि यो दृष्टान्तः स सर्वः प्रत्यक्षविषयः, आगमादिविषयस्यापि दृष्टान्तत्वात् । तस्मादयुक्तमेतदित्याक्षेप इति । तत्समाधानभाष्यं यत्रेत्यादि, तद् व्याचष्टे—लौकिकपरीक्षकाणां दर्शनाविघातहेतुरिति । एतच्च क्वचिल्लौकिकपरीक्षकाणां क्वचिल्लौकिकानां क्वचित् परीक्षकाणामिति मन्तव्यम् । अन्यथा यदप्रसिद्धं लौकिकानां केवलं पण्डितरूपवेदनीयं परमाण्वादि तस्य न दृष्टान्तता स्यात् । अत्र च यो दृष्टान्तः स एवं, न तु य एवं स दृष्टान्त इति द्रष्टव्यम् । एवम्भूतव्याख्यानस्य प्रयोजनं दर्शयति—एवं चेति । एतद्विभजते—दर्शनाविघातेति । न केवलं प्रमेयविरोधः सूत्रविरोधश्चेत्याह—ततश्चोदाहरणसूत्रं व्याहन्येत । यत् तेषु तेषु शास्त्रप्रदेशेष्वतीन्द्रियोदाहरणसूत्रं सिद्धान्ते पूर्व्वपक्षे वा यथा "मन्त्रायुर्व्वेदप्रामाण्यवद्" "अणुश्यामतानित्यत्ववद्"एवमादि,(२) तद् व्याहन्यते । न तूदाहरणलक्षणसूत्रम्, तद्धि प्रत्यक्षविषयदृष्टान्तत्वेऽप्युपपद्यते । तस्माद्भाष्ये प्रत्यक्षवचनं दृष्टान्तविषयप्रमाणदार्ढ्यं लक्षयति । प्रत्यक्षमूलत्वाद्वा प्रत्यक्षो दृष्टान्तः, अन्यथाऽनवस्थाप्रसङ्ग इति । सोऽयं दृष्टान्तः प्रमेयेऽन्तर्भवन्नेवमर्थं पृथगुच्यत इत्याह—सोऽयमिति । न्यायस्य पञ्चावयवात्मकस्य वचनसमूहस्य दृष्टान्तो मूलमतस्तस्य पृथगुपदेशः । अतश्चास्य पृथगुपदेशो यत् सति तस्मिन्निति

(१) "चेति" इति तात्पर्य्यसम्मतपाठः । (२) २।१।६८, ५।१।६७ ।

## न्यायभाष्यम्

तेषु प्रमाणसमवायः, आगमः प्रतिज्ञा। हेतुरनुमानम्।

## न्यायवार्त्तिकम्

इदमिति सामान्यतः, इत्थम्भूतमिति विशेषतः, तस्य व्यवस्था इदं सांख्येष्विदं योगेष्विति। सर्वतन्त्रसिद्धान्तस्तर्हि न सिद्धान्तोऽव्यवस्थानात्, न ह्ययं क्वचिद्व्यवतिष्ठत इति। तच्च न, योऽयं सर्व्वैरभ्युपगम इयमेव व्यवस्था, तस्य प्रमेयेऽन्तर्भूतस्य पृथग्वचनं वादादिविषयत्वात्। सिद्धान्तभेदे हि वादजल्पवितण्डाः प्रवर्तन्ते इति। अथावयवा वाक्यैकदेशाः। किं पुनर्वाक्यम्? पूर्वपद-

## न्यायवार्त्तिकतात्पर्य्यटीका

अनुमाननिमित्तत्वमाह—पूर्वं प्रत्यक्षेति। दृष्टान्तधर्म्मिणि दृढतरप्रमाणावधारितमित्यर्थः। शाब्द-मूलतां दृष्टान्तस्य दर्शयति—पूर्वं ज्ञातं चार्थमिति। सम्बन्धग्रहणविषयोऽर्थो दृष्टान्तः, दृष्टान्तः सम्बन्धग्रहणं च शाब्दज्ञानस्यापि निमित्तं प्रथमश्राविणः शब्दार्थज्ञानाभावात्। तस्मादस्ति शाब्देऽपि दृष्टान्तस्योपयोग इति। अपरं पृथगुपादानप्रयोजनमाह—नास्तिकस्येति। अप्रपञ्चने हेतुमाह—तदुक्तं भाष्य इति।

सिद्धान्तपदविवरणभाष्यं व्याचष्टे—अभ्युपगमेति। तद्विभजते—अभ्युपगम इदमित्थम्भूतं चेति। तद्विभजते—इदमितीति। इदमिति हि धर्म्मिविषयसिद्धान्तं दर्शयति, धर्म्मी सर्व्वतन्त्रसिद्धान्तविषयः। इत्थमिति प्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तविषयं दर्शयति, व्यवस्थायामुपलक्षणतया प्रतितन्त्रसिद्धान्तमात्रमुदाहरति—इदं सांख्येष्विति। उपलक्षणता-मुदाहरणस्याजानानश्चोदयति—सर्वतन्त्रेति। परिहरति—योऽयमिति। अभ्युपगम-व्यवस्थितिरनभ्युपगमाद् व्यवच्छिनत्ति। न तु पुरुषविशेषे व्यवस्थापयतीत्यभिप्रायः। अस्यापि (१) प्रमेयान्तर्भूतस्यापि सतः पृथगुपादानप्रयोजनमाह—तस्य प्रमेये इति। तत्र सर्व्वतन्त्रसिद्धान्तसिद्धस्तावद्विप्रतिपन्नानामपि वादिनां धर्म्मी तस्य सर्व्वतन्त्रसिद्धान्त-सिद्धस्य विशेषेषु प्रतितन्त्रसिद्धान्ताः प्रवर्त्तन्ते। तथा हि यदि घटो नाम न सर्व्वतन्त्र-सिद्धान्तसिद्धः किमाश्रया अवयवी वा परमाणुसमूहो वा ज्ञानाकारो वा प्रधानपरिणामो वा ब्रह्मपरिणामो वा तद्विवर्त्तो वेति प्रतितन्त्रसिद्धान्ताः प्रवर्त्तन्ते, कथं च प्रतितन्त्रसिद्धान्ताश्रया वादजल्पवितण्डाः प्रवर्त्तन्ते, किमाश्रयश्च न्यायः स्यात्। तथा यद्यधिकरणसिद्धान्तो न भवेत् कथं साध्यसामान्यव्याप्तं साधनसामान्यमिति साधनविशेषात् साध्यविशेषो गम्येत, तस्मादस्ति प्रमेयस्यापि सिद्धान्तस्य पृथगुपादानप्रयोजनम्। अभ्युपगमसिद्धान्तमुपरिष्टाद्विचारयिष्यति (२) वार्त्तिककारोऽतस्तत्प्रयोजनमस्माभिर्नोक्तमिति।

क्रमप्राप्तानवयवानाह—अथावयवाः। ननु यथा तन्तवः पटस्य समवायिकारणं किन्तथैवैते-

(१) वार्त्तिके "अस्यापि" इति नास्ति। (२) १।१।३१ सू०।

## न्यायवार्त्तिकम्

स्मृत्यपेक्षोऽन्त्यपदप्रत्ययः स्मृत्यनुग्रहेण प्रतिसन्धीयमानो विशेषप्रतिपत्तिहेतुर्वाक्यम्। तस्य भागा एकदेशा इति। ते कियन्तः ? यावद्भिः सिद्धिः परिसमाप्यत इति। का पुनरियं सिद्धिः ? पदार्थस्य तथाता। का परिसमाप्तिः ? विशेषप्रत्ययः। ते समाख्याशब्दैरभिधीयन्ते प्रतिज्ञादय इति। तत्र आगमः प्रतिज्ञेति न युक्तम्, आगमस्य तत्त्वव्यवच्छेदकत्वात् प्रतिज्ञार्थस्य च प्रति-

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रतिज्ञादयो वाक्यस्य। नो खलु गगनगुणा वर्णाः समवायिकारणतां प्रतिपद्यन्त इत्याह—वाक्यैकदेशा इति। अवयवा इव अवयवाः, न पुनः समवायिकारणम्। यथा ह्यवयवाः समुदायिन एकस्मिन्नवयविनि कार्य्ये धारयितव्ये, एवमेकस्मिन् विवक्षितार्थे प्रतिज्ञादयोऽवयवा वाक्यस्य समुदायस्य समुदायिन इति। ननु वर्णानामाशुतरविनाशिनां क्रमवतामेककालताभावे समुदायाभावात् कुतस्तत्समुदायो वाक्यं कुतश्चैकदेशतेत्याशयवानाक्षिपति—किं पुनर्वाक्यम् ? उत्तरम्—पूर्वपदस्मृत्यपेक्षोऽन्त्यपदप्रत्ययः स्मृत्यनुग्रहेण प्रतिसन्धीयमानो विशेषप्रतिपत्तिहेतुर्वाक्यम्। विशिष्यत इति विशेषः पदार्थ एकः, क्रिया वा कारकं वा प्रातिपदिकार्थो वा पदार्थान्तरविशिष्टो वाक्यार्थः। यथा सोमेन यजेत गोदोहनेन पशुकामस्य, यस्य पिता पितामहो वा सोमं न पिबति स व्रात्य इति तस्य विशेषस्यैकस्य प्रतिपत्तिहेतुः। तदेवं समूहनिबन्धनं पदानामेककार्य्यत्वं सूचयति। को विशेषप्रतिपत्तिहेतुरित्यत उक्तम् अन्त्यपदप्रत्ययः। अन्त्यं विशेष्यं विशेषणपूर्वत्वात् तस्य पदं, न च तदविदितं सत्तामात्रेण चक्षुरादिवद्विशेष्यं प्रतिपादयतीत्युक्तं प्रत्यय इति। प्रतीयमानं विशेष्यवाचि पदं विशेष्यं बोधयति, प्रतीतिश्च नानुभवः, अपि तु स्मृतिः। न हि क्रमवद्वर्णसमुदायः पदश्रवणेन्द्रियजनितानुभवगोचरः सम्भवति, सम्भवन्ति तु प्रत्येकं वर्णाः। न च ते प्रत्येकं पदं, न च पूर्ववर्णस्मृतिनिचयसहितोऽन्त्यवर्णानुभवः श्रोत्रज इति युक्तम्, स्मृतीनां स्वकार्य्यसंस्कारविरोधिनीनामसहभावात्। विनश्यदविनश्यदवस्थयोरुपान्त्यान्त्यवर्णस्मृत्यनुभवयोस्तु स्यात्, न चैतावताऽर्थप्रत्ययः, पूर्ववर्णस्मृतीनां तिरोभावात्। न च पूर्वपूर्वानुभवजनितसंस्कारसहकारिणः श्रवणादेव लब्धजन्मनः प्रत्ययस्यैकस्याध्यस्ततत्स्मृत्यनुभवरूपवैचित्र्यस्य सदसद्वर्णावगाहिनो विषयभावमापन्ना वर्णा अर्थधियमादधतीति सांप्रतं, सम्बन्धसंवेदनाहितसंस्कारोद्बोधसमयजन्मना स्वजातेन संस्कारेण सम्बन्धस्मृत्युत्पत्तिसमये विनाशात् पदार्थावबोधकत्वानुपपत्तेः। तस्मात् स्मृतिरेव प्रत्ययः। अत एवाध्ययनसमये गुरुमुखाद्गृहीतो वेदराशिर्वेदाङ्गोपाङ्गज्ञानसंस्कृतेन स्मर्यमाण एव तस्यार्थं बोधयति। एवं च यदा पदार्थप्रत्यायन एव पदानुभवो न कारणं, तदा वाक्यार्थज्ञाने नानापदार्थस्मरणाकाङ्क्षायोग्यतासन्निधानावधारणादिव्यवहिते कैव कथेति। यदि तर्हि विशेष्यपदमेव स्मर्य्यमाणं विशिष्टमर्थमवगमयति कृतं पदान्तरैस्तत एव वाक्यार्थप्रतिपत्तेरित्यत उक्तम्—पूर्वपदस्मृत्यपेक्षः। पूर्वं विशेषणं

## न्यायवार्त्तिकम्

पाद्यत्वात्। आगमाधिगतस्य प्रतिपाद्यत्वाद् आगमः प्रतिज्ञेति न दोषः, य एवार्थ आगमेनाधिगतस्तमेव परस्मा आचष्ट इत्यागमः प्रतिज्ञे त्युच्यते। एवं लिङ्गदर्शनमात्रे हेतूपचारात्

## न्यायवार्त्तिकतात्पर्य्यटीका

तत्पूर्वकत्वाद् विशिष्टप्रतीतेस्तस्य पदं स्मर्य्यमाणपूर्वपदापेक्षः। यद्यपि स्मरणानि सह न सम्भवन्ति, तथाप्येकस्मृतिसमारूढानि पदानि निरन्तरसमस्तस्मृतिसमारूढानि वा परस्परापेक्षाणि। तथा च स्मर्य्यमाणं विशेष्यपदं विशेषणपदापेक्षं विशिष्टमवगमयति। स्यादेतत् पदमाला चेत् स्मर्य्यमाणा वाक्यार्थबोधिनी, कृतं पदार्थबोधनेन, कृतञ्च पदतदर्थसंबन्धबोधनेनेत्यत उक्तम्—स्मृत्यनुग्रहेणेति। प्रत्येकं याः पदेभ्यः पदार्थस्मृतयस्तदनुग्रहेण। एतदुक्तं भवति यद्यपि वाक्यार्थबोधनाय पदमाला प्रवृत्ता, तथाऽपि पदार्थस्मृतीरवान्तरव्यापारभूता अपेक्षते काष्ठानीव पाकप्रवृत्तानि ज्वलनमवान्तरव्यापारम्। न च पदान्यगृहीतसङ्केतानि पदार्थान् स्मारयन्ति इत्युपपन्ना पदार्थस्मृतिसम्बन्धसंवेदनयोरपेक्षेति। यदि पदार्थस्मृत्यपेक्षा पदमाला वाक्यार्थबोधिनी, हन्त दश दाडिमानि षडपूपा भवन्तीत्येवमादीनामपि वाक्यार्थबोधकत्वं स्यादित्यत आह—प्रतिसन्धीयमानः। प्रतिपदं सन्धानं पठनं प्रतिसन्धानम्। तच्च स्वार्थद्वारेणाकाङ्क्षायोग्यतासन्निधानं, न च दशदाडिमादिवाक्येषु तदस्तीति न ततो वाक्यार्थबोध इत्यर्थः। तदेवमेकस्मृतिसमारोहेण एकार्थावच्छेदेन पदानां समूहो वाक्यं, तस्य भागा एकदेशा इति। यावतीत्यादि भाष्यमवतारयति—ते कियन्तः। भाष्यव्याख्यानेनोत्तरं—यावद्भिरिति। पृच्छति—केति। न हि समाप्तेर्निष्पत्तेरन्या सिद्धिरस्तीत्यभिप्रायः। उत्तरम्—पदार्थस्येति। धर्म्मिणः सिषाधयिषितधर्म्मविशिष्टत्वं वास्तवमित्यर्थः। समाप्तिं पृच्छति—केति। उत्तरं—विशेषेति। वास्तवो धर्म्मः सिद्धिस्तद्गोचरस्तु निश्चयः पुरुषधर्म्मो निष्पत्तिरिति विशेष इत्यर्थः। कियद्भिः किमभिधानैश्च भागैः सिद्धिः परिसमाप्यते इत्याशङ्क्य भाष्यकृतोक्तम्—तस्य पञ्चेति। तद् व्याचष्टे—समाख्येति। भाष्यमनुभाष्याक्षिपति—तत्रागम इति। न ह्यागमवत् प्रतिज्ञावचनं निश्चायकं हेतुवचनादिवैयर्थ्यात्। निष्पादितक्रिये कर्म्मणि साधनस्य साधनन्यायातिपाताविति समाधत्ते—आगमाधिगतस्येति। आत्मादिप्रमेयप्रतिपादनोद्देशेन हि शास्त्रमेतत् प्रवृत्तं, तन्नान्तरीयकतया न्यायं व्युत्पादयत्, तमेव व्युत्पादयेद् यश्चात्मादेः प्रमेयस्य साक्षान्निश्चायकः, तत्प्रतिपादकागमप्रामाण्यनिश्चायको वा। तस्य च न्यायविशेषस्याद्योऽवयवः प्रतिज्ञा। आगमार्थविषया साक्षात्, तद्विषयागमप्रामाण्यप्रतिपादकस्य च परंपरया। तस्मादागमः प्रतिज्ञा। आगमोपचारस्य प्रयोजनमिदं पदार्थसंवादेनागमेनानुगृह्यते, न्यायः सप्रयोजनश्च भवति, आगमार्थज्ञानस्य निःश्रेयसहेतुभावेन निरूढत्वात्। तस्माद् यद्यपि न न्यायमात्रवर्त्तिनी प्रतिज्ञा-

## न्यायभाष्यम्

उदाहरणं प्रत्यक्षम् । उपनयनमुपमानम् ।

## न्यायवार्त्तिकम्

हेतुरनुमानमिति । यत्तु द्वितीयं लिङ्गदर्शनं तत्सम्बन्धस्मृतिव्यक्तिहेतुभावाद्धेतुरित्युच्यते । स्मृतिविषयस्य प्रत्यक्षतः पुनरुपदर्शनादुदाहरणं प्रत्यक्षं यस्मात् पूर्वानुभूतमर्थं स्मरति स्मृतं च विषयमुदाहरणत्वेनादत्ते । तेन पूर्वानुभवप्रसिद्धमनुविधीयमानं प्रत्यक्षमिव प्रत्यक्षमिति । कः पुनरुपमानार्थः ? अविप्रतिपत्तिः, यथा प्रत्यक्षे न विप्रतिपद्यते एवमुदाहरणेऽपीति । यथा तथेत्युपमानैकदेशे उपमानोपचारादुपमानमुपनय (१) इति । उपमानं खलु यथा तथेत्युपदेशोपयोगे सति

## न्यायवार्त्तिकतात्पर्य्यटीका

ऽऽगमस्तथाऽपि प्रकृतन्यायाभिप्रायेण द्रष्टव्यम् । तथा चागमानुसन्धानेन प्रतिज्ञायाः कल्पितविषयत्वमपि निराकृतं वेदितव्यम् । यदाहुरेके सर्वोऽयमनुमानानुमेयव्यवहारो बुद्ध्यारूढेनैव धर्मधर्म्मिभावेन न बहिः सदसत्त्वमपेक्षत इति । तथाऽनुमानस्य न्यायानुग्राहकत्वं हेतुवचनस्यानुमानत्वोपचारेण भाष्यकारेणोक्तम्—हेतुरनुमानमिति । तत् खलु हेतुवचनमनुमानप्रतिपादकं विषयतयाऽनुमानेनानुग्रहीतव्यं, न च लिङ्गदर्शनमात्रमनुमेयप्रतिपत्तिहेतुरपि तु सम्बन्धस्मृतिसहकारि, न च हेतुवचनमात्रात् तत्सहकारिताऽवगम्यते । तस्मान्न लिङ्गवचनमनुमानप्रतिपादकमिति कथमनुमानत्वोपचार इत्यत आह—एवं लिङ्गदर्शनमात्रे । दृश्यमाने लिङ्गरूपे सम्बन्धस्मृतिरहिते । हेतूपचाराद् अनुमानत्वोपचारात् । हेतुरनुमानमित्युक्तं भाष्यकृता । तदेव विभजते—यत्तु द्वितीयं लिङ्गदर्शनम् । सम्बन्धग्रहणसमये लिङ्गदर्शनं प्रथमं, तदपेक्षया लिङ्गदर्शनं साध्यधर्म्मिणि द्वितीयम्. तत्सम्बन्धस्मृतिव्यक्तिहेतुभावात् । स्मर्य्यतेऽनेनेति स्मृतिः संस्कारः, तस्य व्यक्तिः कार्य्याभिमुखीकरणं, तत्र हेतुभावात् । क्वचित्पाठः—सम्बन्धस्मृतिहेतुव्यक्तिहेतुभावात्, स तु सुगम एव । अतो हेतुरित्युच्यते । एतदुक्तं भवति, यत्तु द्वितीयलिङ्गदर्शनं शुद्धमप्यापाततः सम्बन्धस्मृतिहेतुभावात् सम्बन्धस्मृतिसहकार्य्येव, तथा चानुमानम् । एवं च तत् प्रतिपादकस्य वचस उपपन्नोऽनुमानत्वोपचार इति सिद्धम् । एवं च वास्तवेन लिङ्गेन सम्बन्धात् तद्वचनस्य बुद्धिविकल्पितलिङ्गविषयत्वं परास्तं वेदितव्यम् । एवमन्येष्वप्यवयवेषु वक्ष्यमाणेष्वेतदेव प्रयोजनं योजनीयमिति । उदाहरणं प्रत्यक्षमिति भाष्यम्, तद् व्याचष्टे—स्मृतिविषयस्येति । यत्र प्रत्यक्षविषये पूर्वं व्याप्तिर्गृहीता तस्य स्मृतिरिति स्मृतिविषयस्य प्रत्यक्षतः पुनरुपदर्शनादविप्रतिपत्त्या पुनः स्मरणात् तत्स्मारकं वचनमुदाहरणं प्रत्यक्षम्, मूलभूतप्रत्यक्षप्रमाणसमुत्थत्वादिति । कः पुनरुपमानार्थ इति । प्रत्यक्षमिव प्रत्यक्षमित्यत्रेवकारे तत्रोपमार्थः क इत्यर्थः । एतदेव विभजते—यस्मादिति । (२)

(१) भाष्ये तु "उपनयनमुपमान"मिति पाठः । (२) अत्र वार्त्तिके "यस्मा"दिति न दृश्यते ।

## न्यायभाष्यम्

सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति। सोऽयं परमो न्याय इति। एतेन (१) वादजल्पवितण्डाः प्रवर्तन्ते नातोऽन्यथेति।

## न्यायवार्त्तिकम्

प्रत्यक्षागमस्मृतिपूर्वकं सारूप्यज्ञानमुपमानमिति तत्रोपमानैकदेशे उपमानमित्युपचरन्ति। सर्वेषामेकार्थसमवाये सामर्थ्यप्रदर्शनं निगमनमिति। कः पुनरेकार्थसमवायः? एकवाक्याध्यारोपः। किं पुनः सामर्थ्यम्? इतरेतरसम्प्रत्यायितार्थापेक्षित्वम्। एतच्च वक्ष्याम इति। निगम्यन्तेऽनेन प्रतिज्ञादय एकार्थेन सम्बध्यन्त इति। सोऽयं परमो न्याय इति। कः पुनः परमार्थः? विप्रतिपन्नपुरुषप्रतिपादकत्वम्। एकैकशः प्रमाणानि प्रवृत्तानि न विप्रतिपन्नं पुरुषं प्रतिपादयन्ति,

## न्यायवार्त्तिकतात्पर्य्यटीका

उपमानमुपनय इति भाष्यम्, तद्व्याचष्टे—यथा तथेत्युपमानैकदेश इति। उपनयो हि तथा चैतदिति प्रवर्त्तमान उदाहरणस्थं यथाशब्दार्थमपेक्षत इति यथा तथेति प्रवर्त्तत इति। किं पुनरुपमानं यस्यायमेकदेश इत्यत आह—उपमानं यथा गौस्तथा गवय इत्युपदेशोपयोगि, उपयोगस्तदर्थविषयोऽनुभवः, तस्मिन् सति पश्चाद्वनं गतो नागरः प्रत्यक्षेणादृष्टपूर्वं पिण्डं पश्यति, स्मरति चोपदेशार्थम्, पिण्डस्य च पुरोवर्तिनः स्मर्यमाणेन गवा सादृश्यं प्रत्यक्षेणैव पश्यति। तदेवम्भूतं सारूप्यज्ञानं गवयशब्दवाच्योऽयं पिण्ड इति प्रतीतिहेतुरुपमानम्। तदेतस्योपमानस्योपदेशार्थस्मरणगवयपिण्डगोसारूप्याप्रत्यक्षरूपस्यैकदेशे सारूप्ये यो यथातथाभावः स उपनयेऽप्यस्तीत्येतावतोपमानत्वोपचार उपनय इत्यर्थः। सोऽयं सर्वप्रमाणनिवेशेन परमो न्यायः स्तूयते। निगमनव्याख्यानभाष्यमनुभाष्याक्षिपति—कः पुनरिति। न खल्ववयवानां प्रमाणानां वा वाक्ये समवायसम्बन्धः सम्भवतीत्यर्थः। उत्तरम्—एकवाक्येति। अध्यारोपो बुद्ध्या प्रतिसन्धानम्। सामर्थ्यं पृच्छति—किं पुनरिति। उत्तरम्—इतरेतरेति। सामर्थ्यं हि पदानां धर्म्मः। इह तु विभज्यमानानामवयवानां तन्मूलानां प्रमाणानां साकाङ्क्षत्वमेव धर्म्मः सामर्थ्यम्, तदत्र समस्तलिङ्गरूपसंपन्नलिङ्गप्रतिपादनमेकं प्रयोजनं विभज्यमानसाकाङ्क्षत्वं वाऽस्तीति सिद्धमेकवाक्यत्वमवयवानामिति। निगमनपदं व्युत्पादयति—निगम्यन्त इति। सोऽयमिति भाष्यमनुभाष्य पृच्छति—कः पुनः परमशब्दस्यार्थ इति। उत्तरम्—विप्रतिपन्नपुरुषप्रतिपादकत्वं पञ्चावयववाक्यस्य परमत्वमिति। तदेव व्यतिरेकमुखेण प्रतिपादयति—एकैकश इति। यद्यपि लोकप्रत्यक्षादीनामेकैकशोऽपि विप्रतिपन्नपुरुषप्रतिपादकत्वं तत्र तत्रोपलभ्यते, तथाऽपि यदेतद्वेदप्रामाण्यमात्मादिप्रतिपादनं च निःश्रेयसोपयोगि, न तत् पञ्चावयववाक्यादेतच्छास्त्रोपदिष्टोपकरणाद्विना

(१) पञ्चावयवात्मकन्यायेन।

### न्यायभाष्यम्

तदाश्रया च तत्त्वव्यवस्था। ते चैतेऽवयवाः शब्दविशेषाः सन्तः प्रमेयेऽन्तर्भूता एवमर्थं(१) पृथगुच्यन्त इति।

तर्को न प्रमाणसंगृहीतो, न प्रमाणान्तरं, प्रमाणानामनुग्राहकस्तत्त्वज्ञानाय कल्पते। तस्योदाहरणम्—किमिदं जन्म कृतकेन हेतुना निर्वर्त्यते, आहोस्विदकृतकेन, अथ

### न्यायवार्त्तिकम्

वाक्यभावापन्नानि पुनर्विप्रतिपन्नम्, अतोऽयं परम इति। किं पुनरवयवाः प्रमाणान्तरमुत तेष्वन्तर्भवन्तीति? किं चातः? यदि प्रमाणान्तरम्, परिसंख्यानमयुक्तम्, अथ तेष्वेवान्तर्भवन्ति, पृथगभिधानानर्थक्यमवयवानामिति। न प्रमाणान्तरमिति ब्रूमः। संहतानामेतेषां वाक्यपरतन्त्राणां विप्रतिपन्नपुरुषप्रतिपादकत्वेन पृथगुपादानमिति। त एतेऽवयवाः पृथग्भवन्तो वादजल्पवितण्डानां प्रवृत्तिहेतवो भवन्ति। तत्त्वव्यवस्थायाश्चाश्रया भवन्तीति। क आश्रयार्थः? विशेषप्रतिपादकत्वमिति।

तर्को न प्रमाणसंगृहीतः, न प्रमाणान्तरमपरिच्छेदकत्वात्। प्रमाणं परिच्छेदकं, न तर्कः। तस्मान्न प्रमाणं, न प्रमाणान्तरमप्यत एव। प्रमाणविषयविभागात्तु

### न्यायवार्त्तिकतात्पर्य्यटीका

सिध्यतीत्यनेनाभिप्रायेण द्रष्टव्यम्। अवयवानां पृथगभिधानमाक्षेप्तुं विकल्पयति—किं पुनरवयवा इति। विकल्पप्रयोजनं पृच्छति—किं चातः। उत्तरम्—यदि प्रमाणान्तरमिति। समाधत्ते—न प्रमाणान्तरमिति। प्रयोजनान्तरमाह—त एते इति। यत एव वादादिप्रवृत्तिहेतवोऽत एव तत्त्वव्यवस्थायाश्चाश्रया भवन्ति। पृच्छति—किमिति (२)। न हि कुण्डमिव बदराणि तत्त्वव्यवस्थाऽवयवानाश्रयतीत्यर्थः। उत्तरम्—विशेषप्रतिपादकत्वम्। धर्म्मिविशिष्टो धर्म्मो विशेषः, विशिष्यत इति व्युत्पत्त्या तत्प्रतिपादकत्वमवयवानां तत्त्वव्यवस्थाश्रयत्वमित्यर्थः।

क्रमप्राप्ततर्कपदव्याख्यानाय भाष्यमनुभाषते—तर्को न प्रमाणसंगृहीतः। प्रमाणपदेन हि चत्वारि प्रमाणानि संगृहीतानि, न चैतेष्वन्यतमस्तर्क इत्यर्थः। अस्तु तर्हि प्रमाणपदसंगृहीतेभ्यः प्रमाणेभ्यः प्रमाणान्तरमसंगृहीतं प्रमाणपदेन प्रमेयपदेन वा संगृहीताः संशयादयः प्रमेया इत्यत आह—न प्रमाणान्तरम्। भाष्यमनुभाष्य हेतुमाह—अपरिच्छेदकत्वात्, अनिश्चायकत्वात्। तदेव व्यतिरेकमुखेण तद्दर्शयति—प्रमाणमिति। स्यादेतत्। अपरिच्छेद-

(१) न्यायरूपतया वादादीनां प्रवर्त्तकत्वेन तत्त्वव्यवस्थाप्रयोजकत्वेन च। (२) अत्र वार्त्तिके "किम्" इति पाठो नास्ति, किन्तु "क आश्रयार्थः" इत्येवमस्ति।

## न्यायभाष्यम्

आकस्मिकमिति ? (१) एवमविज्ञातेऽर्थे कारणोपपत्त्या ऊहः (२) प्रवर्त्तते—यदि कृतकेन हेतुना निर्वर्त्यते, हेतूच्छेदादुपपन्नोऽयं जन्मोच्छेदः। अथाऽकृतकेन हेतुना, ततो हेतूच्छेदस्याऽशक्यत्वादनुपपन्नो (३) जन्मोच्छेदः। अथाऽऽकस्मिकम्, अतोऽकस्मान्निर्वर्त्यमानं न पुनर्निवत्स्यर्तीति(४) निवृत्तिकारणं नोपपद्यते, तेन जन्मानुच्छेद इति। एतस्मिंस्तर्कविषये कर्मनिमित्तं जन्मेति प्रमाणानि प्रवर्त्तमानानि तर्केणाऽनुगृह्यन्ते, (५)

## न्यायवार्त्तिकम्

प्रमाणानामनुग्राहकः। यः प्रमाणानां विषयस्तं विभजते। कः पुनर्विभागः ? युक्तायुक्तविचारः, इदं युक्तमिदमयुक्तमिति। यत्तत्र युक्तं भवति तदनुजानाति न त्ववधारयति। अनवधारणात् प्रमाणान्तरं न भवति। तस्योदाहरणं भाष्ये कर्मनिमित्तं जन्मेति। कथं पुनः

## न्यायवार्त्तिकतात्पर्य्यटीका

क्त्वमसिद्धं तर्कज्ञानस्य संशयादिवद्द गुणत्वेनात्मलिङ्गत्वात्। अन्यथा त्वकिंचित्करत्वादुपादानवैयर्थ्यमित्यत आह—प्रमाणविषयविभागास्त्विति। न हि वयं गुणत्वेनोत्पत्तिमत्त्वेन वा रूपेणानिश्चायकत्वं तर्कस्याचक्ष्महे, किन्तु प्रमाणविषयविभागहेतुतया, न चैवमस्याकिंचित्करत्वमित्यर्थः। पृच्छति—कः पुनरिति। उत्तरम्—युक्तायुक्तेति। इदं युक्तमिदमयुक्तमिति—इतिकारेण युक्तायुक्तविषयं तर्कज्ञानं परामृषति। तदनेन तर्कस्य स्वरूपं दर्शितं तस्य व्यापारमाह—यत्तत्र युक्तं भवति, सम्भवति तदनुजानाति न त्ववधारयति तर्कः। एतदुक्तं भवति प्रमाणं तत्त्वावधारणाय प्रयुक्तं करणतयेतिकर्तव्यतामपेक्षते। तर्कश्च प्रमाणविषययुक्तायुक्तविचारात्मा प्रमाणं युक्ते तत्त्वे प्रवर्तमानमनुजानन् प्रमाणमनुगृह्णाति। तदनुगृहीतं प्रमाणं तत्त्वनिर्णयाय पर्य्याप्तम्। न च प्रमाणविषये चेत्तर्कः प्रवर्त्तते कृतमस्य प्रमाणानुज्ञया नन्वयमेव निश्चायकः कस्मान्न भवतीति सांप्रतं, तस्य प्रसङ्गतया पारतन्त्र्येण स्वयमसाधनत्वात्। अस्ति हि प्रसङ्गो न प्रसङ्गो हेतुः। तथा हि प्रत्यक्षमेव तावद्भूतले प्रवर्त्तमानं तद्विशेषणतया घटाभावेऽपि प्रवर्त्तमानं यद्यत्राभविष्यद्द घटो भूतलमिवाद्रक्ष्यत तेन सह तुल्यदर्शनयोग्यत्वात्, न च दृश्यते तस्मान्नास्तीति, तेन तर्केणानुज्ञायमानं घटाभावविशिष्टभूतले प्रवर्त्तते केवलमेवेदं भूतलं नेह घट इति। एवं स्वर्गकामो यजेतेति शब्दोऽपि प्रवर्त्तमानः परमाप्तस्य भगवत ईश्वरस्य नियोगो नास्वर्गफलायां यागभावनायामवकल्पत इति समानपदेनोपात्तोऽपि दुःखतया धात्वर्थः साध्य इति न युक्तं, भिन्नपदोपात्तोऽपि पुरुषविशेषणमपि स्वर्ग एव भावनाफलं युक्त इति तर्केणानुज्ञायमानः प्रवर्त्तते। न च यद्यभविष्यद्द घट इति वा यद्यभविष्यद्धात्वर्थः साध्य इति वा क्रियातिपत्तिरस्ति यदाश्रयानिष्टप्रसङ्गेनायुक्तत्व-

(१) "अथ आकस्मिकमिति" इति ल-पु नास्ति। (२) मानसज्ञानविशेषः। (३) "अयम्" इत्यधिकः पाठः न-भा। (४) "निर्वर्त्स्यति" इति भापाठः। (५) सबलानि क्रियन्ते।

## न्यायभाष्यम्

तत्त्वज्ञानविषयस्य विभागात् तत्त्वज्ञानाय कल्पते तर्क इति। सोऽयमित्थम्भूतस्तर्कः प्रमाणसहितो वादे साधनायोपालम्भाय(१) चाऽर्थस्य (२) भवतीत्येवमर्थं पृथगुच्यते प्रमेयान्तर्भूतोऽपीति।

## न्यायवार्त्तिकम्

कर्मनिमित्तं जन्म ? भेदवत्त्वात्। कः पुनर्भेदः ? सुगतिर्दुर्गतिश्चेति। सुगतौ देवो मनुष्य इति। मनुष्यत्वे पुमानितर इति। पुंस्त्वे ब्राह्मणोऽन्य इति। ब्राह्मणत्वे पटुइन्द्रियो मृदिन्द्रिय इति। पटुइन्द्रियतायामुच्चाभिजनो नीचाभिजन इति। उच्चाभिजनतायां सकलो निष्कल इति। साकल्ये विद्वान् मूर्ख इति। विद्वत्तायां समाश्वासी परित्रस्त इति। समाश्वासे वशी परायत्त इति। दुर्गतावपि तिर्यङ्नारक इति। नारकत्वेऽपि कूटशाल्मल्यामयःकुम्भ्यामिति। तिर्यक्तायां गौरितर इति। सोऽयं भेदोऽनेकमवस्थितमनित्यमेकद्रव्यं प्रत्यात्मनियतं निमित्तमन्तरेण न युक्तः। किं कारणम् ? पृथिव्या-

## न्यायवार्त्तिकतात्पर्य्यटीका

मितरथा च युक्तत्वं यत्तर्केण निश्चीयते। तस्माच्च प्रमाणम्। निश्चयाय तु प्रवर्त्तमानं प्रमाणं तद्विषयविवेकेणानुगृह्णन्नितिकर्त्तव्यतात्वेनोपयुज्यत इति। यथोक्तम्—

मीमांसासंज्ञकस्तर्कः सर्व्ववेदसमुद्भवः। सोऽतो वेदो रुमाप्राप्तकाष्ठादिलवणात्मवत् (३)॥

पूजितविचारवचनो हि मीमांसाशब्दोऽयुक्तप्रतिषेधेन युक्ताभ्यनुज्ञानं तर्कः प्रमाणेतिकर्त्तव्यतात्वेन च प्रमाणाद्वेदाद् भेद उक्तः। सोऽतो वेद इति। अङ्गाङ्गिनोरभेदविवक्षया इतिकर्त्तव्यतात्वं चास्य साक्षाद् दर्शितम्।

धर्म्मे प्रमीयमाणे हि वेदेन करणात्मना। इतिकर्त्तव्यताभागं मीमांसा पूरयिष्यति॥

इति सर्व्वमवदातम्। तस्योदाहरणं भाष्ये कर्म्मेति। कर्म्म कारणमपूर्व्वं धर्म्माधर्म्माविति यावत्, कार्य्ये कारणत्वोपचारात्। एतदुपपादनाय पृच्छति—कथं पुनरिति। निकायविशिष्टाभिरपूर्व्वाभिः शरीरेन्द्रियबुद्धिवेदनाभिरभिसम्बन्धो जन्म तस्य कथं कर्म्मनिमित्ततेत्यर्थः। अत्र प्रमाणमनुमानमाह—भेदवत्त्वात्, विचित्रत्वाद् इत्यर्थः। पृच्छति—कः पुनरिति। भेदमाह—सुगतिरिति। प्रमाणमुक्त्वा तस्येतिकर्त्तव्यताभूतं तर्कमवतारयति—सोऽयं भेद इति। यद्येकं निमित्तं स्याद्वैचित्र्यं न भवेत्। न ह्यभिन्नात् कारणात् कार्य्यवैचित्र्यमुपपद्यते तस्याकस्मिकत्वप्रसङ्गात्। अत उक्तम्—अनेकमिति। नन्वनेकं यागादिब्रह्महत्यादिक्रियारूपं कारणमस्तु कृतमपूर्व्वैरित्यत उक्तम्—अवस्थितम्। यागादिका तु क्रिया आशुतरविनाशिनी न चिरभाविने स्वर्गाय कल्पत इति। अवस्थितं चेद् यागाद्याहितमपूर्व्वं, धर्म्मो-

(१) ( प्रतिपक्षीयस्यार्थस्य ) खण्डनाय। (२) "वार्थस्य" इति ज-पाठः। (३) रुमा लवणाकरः।

## न्यायभाष्यम्

निर्णयस्तत्त्वज्ञानं प्रमाणानां फलं, तदवसानो वादः, तस्य पालनार्थं जल्पवितण्डे। तावेतौ तर्कनिर्णयौ लोकयात्रां वहत इति। सोऽयं निर्णयः प्रमेयान्तर्भूत एवमर्थं पृथगुद्दिष्ट इति।

## न्यायवार्त्तिकम्

दीनां सर्वपुरुषसाधारण्यात्, पृथिव्यादिगतस्य च नियमहेतोरभावात्, सर्वं सर्वात्मकं प्रसज्येत। दृष्टश्च नियमभेदः, तस्मात् कर्म नियामकमिति। सोऽयमित्थम्भूतस्तर्क उपलब्धिविषयत्वात् प्रमेयम्।

निर्णयस्तत्त्वज्ञानं प्रमाणानां फलम्। कदा पुनर्निर्णयः प्रमाणानां फलमिति? यदा वस्त्वन्तरपरिच्छेदहेतुत्वेन नोपादीयते तदा फलं, यदा तेन परिच्छिनत्ति तदा प्रमाणमिति न व्यवतिष्ठते प्रमाणफलभावः। एतच्च वक्ष्यामः—"प्रमेयता च तुलाप्रामाण्यवत्" (१)

## न्यायवार्त्तिकतात्पर्य्यटीका

ऽस्तीति सदैव सुखिना भाव्यम्। एवमधर्म्मोऽस्तीति सर्वदैव दुःखिना भाव्यमिति सुखदुःखयोः कादाचित्कत्वं व्याहन्येत। न ह्यवस्थितात् कारणादनवस्थितं कार्य्यम् इत्यत उक्तम्—अनित्यं तद्व्यवस्थानं, न नित्यतां ब्रूमः, किन्तु तावदनेन स्थातव्यं यावदन्त्यसुखदुःखविज्ञानं जनयति अथ नश्यति इति। ननु भिन्नानि सन्त्वपूर्वाणि, तथापि सर्वाणि सर्वात्मसमवेतानि। यथाऽवयवी स्वावयवेषु। तथा च सर्वसाधारण्यान्नोक्तवैचित्र्योत्पाद इत्यत उक्तम्—एकद्रव्यम्। एकद्रव्यं चेदस्तु सर्वसाधारणे पृथिव्यादौ यत्र कुत्रचित्। तथाऽपि वैचित्र्यानुपपत्तिरित्यत उक्तम्—प्रत्यात्मनियतम। अथ पृथिव्याद्येव कारणं जन्मवैचित्र्ये कस्मान्न भवतीत्याशयवान् पृच्छति—किं कारणं, कस्मात्कारणादित्यर्थः। उत्तरम्—पृथिव्यादीनामिति। मा भूत्, पृथिव्यादिगतं किञ्चिद्भविष्यतीत्यत आह—पृथिव्यादिगतस्येति। भाष्योक्तप्रमेयत्वे तर्कस्य हेतुमाह—उपलब्धिविषयत्वादिति।

तर्कानन्तरं निर्णय उद्दिष्टस्तर्कहेतुकत्वात्। तस्य स्वरूपमाह—निर्णयस्तत्त्वज्ञानमिति। यद्येवमिन्द्रियापातजन्मप्रत्यक्षज्ञानमपि तत्त्वज्ञानमिति निर्णयः स्यादित्यत आह—प्रमाणानामिति। अनेन पञ्चावयववाक्यमुपलक्षयति, तत्र सतर्काणां प्रमाणानां समवायात्। परमार्थतस्तु तर्कपूर्व्वकस्तत्त्वनिश्चयो विनिर्णय इति। प्रत्यक्षादीनामपि तर्कसहायानां निर्णयः फलमिति। स्यादेतत्। धूमादिगोचरेण तत्त्वनिर्णयेन वह्न्यादावनुमीयमाने प्रमाणमेव निर्णयो न फलमित्याशयवान् पृच्छति—कदा पुनरिति। विदिताभिप्रायस्योत्तरं—यदेति। संकलय्य तर्कनिर्णयव्युत्पादनस्य

(१) २।१।१६ सूत्रम्।

## न्यायभाष्यम्

वादः खलु नानाप्रवक्तृकः प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसानो

## न्यायवार्त्तिकम्

इत्येतस्मिन् सूत्रे निमित्तद्वयसमावेशादेकं वस्तु द्विशब्दवाच्यमिति। तावेतौ तर्कनिर्णयौ लोकयात्रामुद्वहत इति। बुद्ध्वा बुद्ध्वा लोकः प्रवर्त्तमानस्तर्कनिर्णयाभ्यां हेयं जहाति उपादेयं चोपादत्ते। अस्यान्तर्भावः प्रमाणेषु प्रमेयेषु वा। यदा फलं तदा प्रमेयं, यदा तेन परिच्छिनत्ति तदा प्रमाणमिति।

वादो नानाप्रवक्तृक इति। सिद्धान्तभेदानुविधानान्नानाप्रवक्तृक इति। प्रत्यधिकरणसाधनोऽन्यतराधिकरणनिर्णयावसान इति। अधिकरणमधिकरणं प्रति प्रत्यधिकरणम् अस्य साधनमिति। किमुक्तं भवति? उभाभ्यां साधनं वक्तव्यमिति। अन्यतरस्मिन्नधिकरणे

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रयोजनमाह—तावेताविति। परीक्षकोऽत्र लोकशब्देनोच्यते, तदितरस्य तर्कासम्भवात्। बुद्ध्वेति, परीक्ष्य निर्णयं कृत्वेत्यर्थः। शेषं निगदव्याख्यातम्।

निर्णयानन्तरं वादव्याख्यानार्थं भाष्यं वादः खल्विति। तदनुभाष्योपपत्तिमाह—वाद इति। नाना प्रवक्तारो यस्मिन् स तथा, एकस्यापि शास्त्रकर्त्तुः पूर्वपक्षोत्तरपक्षसाधनदूषणप्रतिपादको वचनसमूहो वादः स्यादिति नानाप्रवक्तृक इत्युक्तम्। सिद्धान्तभेदानुविधानेन द्वावपि स्वसिद्धान्तानुरूपं साधनं दूषणं चाहतुरिति। प्रत्यधिकरणेत्यादि भाष्यमनुभाष्याचष्टे—प्रत्यधिकरणम् अस्य साधनम्। अधिक्रियत इत्यधिकरणं साध्यम्, तदधिकृत्य साधनप्रवृत्तेः, प्रत्यधिकरणं साधनम्, यस्मिन् वादे स तथोक्तः। तस्यैवार्थं निष्कृष्टुं पृच्छति—किमुक्तं भवति? निष्कर्षति—उभाभ्यां वादिप्रतिवादिभ्यां स्वस्वसाध्ये साधनं वक्तव्यम्। तथा च नानाप्रवक्तृकत्वेन

## वृत्तिः

अत्र च प्रमेयान्तःपातिबुद्धिरूपस्याऽपि संशयादेः, निरनुयोज्यानुयोगरूपनिग्रहस्थानान्तःपातिनोश्छलजात्योश्च प्रकारभेदेन प्रतिपादनं शिष्यबुद्धिवैशद्यार्थमस्तु, निग्रहस्थानान्तःपातिनां हेत्वाभासानां पृथगभिधानप्रयोजनं तु जानाति भगवानक्षपाद एव।

भाष्ये तु 'वादे देशनीयतया हेत्वाभासानां पृथगुपन्यासः' इत्युक्तम्। अत्र वार्त्तिकम्—'यदि वादे देशनीयत्वात् पृथगभिधानम्, तदा न्यूनाधिकापसिद्धान्तानां वादे देशनीयत्वात् पृथगभिधानं स्यात्, यदि पृथगभिधानाद्वादे देशनीयत्वम्, तदा संशयादीनामपि वादे देशनीयत्वं स्यात्, तस्मादान्वीक्षिकीत्रयीवार्त्तादण्डनीतिरूपविद्याप्रस्थानप्रभेद-

## न्यायभाष्यम्

वाक्यसमूहः। पृथगुद्दिष्ट उपलक्षणार्थम् (१)। उपलक्षितेन व्यवहारस्तत्त्वज्ञानाय भवतीति। तद्विशेषौ जल्पवितण्डे तत्त्वाध्यवसायसंरक्षणार्थमित्युक्तम ( अ० ४ आ० २ सू० ५० )।

## न्यायवार्त्तिकम्

निर्णयः। एतच्च (२) वक्ष्यामः (३)। सोऽयं किंरूपो वादः? वाक्यसमूह इत्याह। ननु च प्रमाणतर्कसाधनोपालम्भ इति श्रूयते, प्रमाणानि च ज्ञानात्मकानि "इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञान" मित्येवमादिना प्रक्रमेण प्रमाणानि ज्ञानात्मकानीत्युक्तम्, तर्कश्चोहः, स चोहो ज्ञानात्मक एव, तस्माद्वाक्यसमूहो वाद इत्ययुक्तम्? न, प्रमाणतर्कसाधनोपालम्भस्यान्यथा व्याख्यानात्। तच्च सूत्रं वर्णयिष्यन्तो वक्ष्यामः (४)।

तद्विशेषौ जल्पवितण्डे इति। कः पुनर्विशेषः? अङ्गाधिक्यमङ्गहानिश्चेति। छलजाति-

## न्यायवार्त्तिकतात्पर्य्यटीका

तुल्यत्वेऽपि वादस्य वितण्डायाः प्रत्यधिकरणसाधनत्वेन भेदः सिद्धो भवति। वितण्डायाः प्रतिपक्षस्थापनाहीनत्वेन प्रत्यधिकरणसाधनत्वाभावात्। तथापि जल्पादभेदो वादस्य, अस्ति हि जल्पस्य प्रत्यधिकरणसाधनवत्त्वं च नानाप्रवक्तृकत्वं चेत्यत आह—अन्यतरस्मिन्नधिकरणे निर्णय इति। वादे हि तावद् ब्रूते यावदन्यतरस्मिन् पक्षे निर्णयो न जातः। तत्त्वबुभुत्सोर्वादिनो-र्वादेऽधिकारात्। जल्पे तु पुरुषशक्तिपरीक्षालक्षणेऽप्रतिभादिनाऽपि पराजयोपपत्तेर्नावश्यं तत्त्व-निर्णयः। तस्मादन्यतरनिर्णयावसानत्वेन जल्पाद्भेदो वादस्येति सिद्धम्। यथा चैतत्तथा चोपरिष्टात्प्रतिपादयिष्यत इत्याह—तच्चेति। तस्य स्वरूपं पृच्छति—सोऽयमिति। उत्तरं—वाक्येति। चोदयति—ननु चेति। वाक्यसमूहश्च ज्ञानं चेति प्रतिषिद्धमेतदित्यर्थः। परिहरति—नेति। साधनोपालम्भग्रहणस्य शब्दविषयत्वादविरोध इत्यर्थः। युगपदेव जल्प-वितण्डे व्याचष्टे—तद्विशेषाविति। विशेष्येते भिद्येते इति विशेषौ, तस्माद्वादाद्विशेषौ

## वृत्तिः

ज्ञापनार्थं संशयादेर्हेत्वाभासस्य पृथग्वचनम् इति, तदप्यसत्, निग्रहस्थानान्तर्गतत्वेनैव तन्निरूपणेन प्रस्थानभेदसम्भवात्।

वयं तु—हेत्वाभासानां न निग्रहस्थानत्वम्, तथा सति सर्वत्र हेत्वाभाससत्त्वात् सर्वस्यैव निगृहीतत्वापत्तेः, तस्माद्धेत्वाभासप्रयोगो निग्रहस्थानम्, तद्विभाजकसूत्रस्थहेत्वाभासपदं च

(१) परिज्ञानार्थम्। (२) "तच्च" इति तात्पर्यधृतपाठः। (३) १।२।१ सूत्रव्याख्यानावसरे। (४) १।२।१ सूत्रवार्त्तिकं द्रष्टव्यम्।

## न्यायभाष्यम्

**निग्रहस्थानेभ्यः पृथगुद्दिष्टा हेत्वाभासा वादे चोदनीया भविष्यन्तीति।**

## न्यायवार्त्तिकम्

निग्रहस्थानप्रयोगादधिको जल्पः। स प्रतिपक्षस्थापनाहीनस्तु वितण्डा। एतावता विशेषेण कथामार्गभेद इति। विषयभेदाच्च (१) भेदः, शिष्यादिविषयो वादः, शिष्यमाणविषये जल्पवितण्डे इति।

अन्यतमलिङ्गधर्म्मानुविधानेन प्रवर्त्तमाना अहेतवः सन्तो हेतुवदाभासन्त इति हेत्वाभासाः। ते च निग्रहस्थानम्। निग्रहस्थानप्राप्तानां पुनरेषां पृथगुपदेशो वादे देशनीयत्वादिति (२) भाष्यम्। यस्मात् किलैते वादे देश्यन्ते अतः पृथगुपदिश्यन्ते। न, उभयथाप्यसम्बन्धात्। न वादे

## न्यायवार्त्तिकतात्पर्य्यटीका

भिन्नौ। भाष्यमनुभाष्य पृच्छति—कः पुनर्विशेषः? यद्योगाद्विशिष्टे वादाजल्पवितण्डे इत्यर्थः। उत्तरम्—अङ्गाधिक्यमङ्गहानिश्च यथासंख्यम्। तदेव दर्शयति—छलेति। तत्किमिदानीं संशयादिभिरिवात्यन्तवैरूप्यं वादेन जल्पवितण्डयोः? नेत्याह—एतावता विशेषेण कथामार्गभेद इति। एतावानेव विशेषो, न सर्वथा, कथात्वेन संशयादिव्यावृत्तेन सामान्यविशेषेण त्रयाणामप्यभेदादित्यर्थः। अपरमपि भेदहेतुमाह—विषयभेदाच्चेति। तद्विभजते—शिष्यादीति। शिष्यमाणोऽत्यन्तविपर्य्यस्तः दुर्ज्ञानावलेपदुर्विदग्ध इति यावत्। न त्वेवंभूतः शिष्यादिर्विपर्यस्तोऽप्यनवलिप्तत्वादिति भावः।

क्रमप्राप्तानां हेत्वाभासानां स्वरूपमाह—अन्यतमेति। पञ्चसु चतुर्षु वा लिङ्गरूपेष्वन्यतमलिङ्गं धर्म्ममेकं द्वयं त्रयं वा अनुविदधाना अहेतवो हेतुवदवभासन्त इति हेत्वाभासा उक्ताः। निग्रहस्थानेभ्य इति भाष्यमवतारयितुमाह—ते च निग्रहस्थानमिति। अवतारयति—

## वृत्तिः

तत्प्रयोगपरम्, तत्र च प्रयोगस्य न लक्षणमपेक्षणीयम्, अपि तु हेत्वाभासानामित्यत उक्तं 'हेत्वाभासाश्च यथोक्ताः (३) (अ० ५ आ० २ सू० २५) इति चरमसूत्रम्। न च हेत्वाभासस्याऽवच्छेदक (४) प्रवेशादेव (५) पृथङ्निरूपणापेक्षेति वाच्यम्। तथा सति प्रमाणतर्कसाधनोपालम्भ इति वादाद्यवच्छेदकप्रमाणादेरपि पृथङ्निरूपणापत्तेरिति (६) युक्तमुत्पश्यामः।

---

(१) "भेदाद्वा" इति तात्पर्य्यधृतपाठः। (२) भाष्ये तु "वादे चोदनीया भविष्यन्तीति" इति पाठः। (३) १।२।४ सूत्रे यथा कथितास्तथेति बोध्यम्। (४) "हेत्वाभासत्वावच्छेदके"ति ख। (५) अत्र ल-पुस्तके "प्रवेशादेव" इत्यस्मात् परं "न" इत्यधिकपाठो वर्त्तते। (६) "पृथङ्निरूपणानापत्ते"रिति ल।

## न्यायवार्त्तिकम्

देशनीयत्वं पृथगुपदेशाविनाभावि, पृथगुपदेशो वा वादे देशनीयत्वाविनाभावीति। यदि तावद्य यः पृथगुपदिश्यते स वादे देश्यत इति, सर्वे पदार्था वादे देशनीयाः प्रसज्यन्त इति। किं कारणम्? सर्वे पृथगुपदिष्टा इति। अथ वादे देश्यन्ते ते पृथगुपदिश्यन्त इति, तदपि न, अनेकान्तात्। न तावन्निग्रहस्थानेभ्यो न्यूनाधिकयोः पृथगुपदेशोऽथ च देश्येते वादे, तस्माद्वादे देशनीयत्वादेषां पृथगुपदेश इति यत्किञ्चिदेतत्। एतदेव तु न्याय्यं पृथगुपदेशप्रयोजनं विद्याप्रस्थानभेदज्ञापनार्थत्वादिति। अथ कस्मान्निग्रहस्थानभावापन्नानां हेत्वाभासानां पृथगुपदेश इति? प्रमाणसामान्यात् पृथगुपदेश इति। अथ कस्माद्वादे देश्यन्ते? प्रमाणसामान्यात्। प्रमाणानि वादे

## न्यायवार्त्तिकतात्पर्य्यटीका

निग्रहस्थानेति। अवतार्य्य दूषयितुमेकदेशिमतेन व्याचष्टे—यस्मात् किलैते इति। किलशब्दोऽयमरुचौ। तदेकदेशिव्याख्यानं दूषयति—न, उभयथाप्यसम्बन्धात्। किं ये ये निग्रहस्थानेभ्यः पृथगुद्दिश्यन्ते ते सर्वे वादे चोद्यन्ते? अथ ये ये वादे चोद्यन्ते ते सर्वे पृथगुद्दिश्यन्ते? उभयथाऽप्यनैकान्तिकत्वात्, नाविनाभावलक्षणः सम्बन्ध इत्यर्थः। तदेतद्विभजते—न वादे चोदनीयत्व (१) मिति। कुत उभयथाप्यविनाभावाभाव इत्यत आह—यदि तावदिति। तस्मान्नाविनाभूतो हेतुर्वादे चोदनीयत्वं वा पृथगुपदेशो वा भाष्यकारेणोक्त इत्युपसंहरति—तस्मादिति। वादे देशनीयत्वादित्युपलक्षणम्, पृथगुपदेशादित्यपि द्रष्टव्यम्। तदेतदेकदेशिमतं दूषयित्वा स्वमतेन भाष्यं व्याचष्टे—एतदेव तु न्याय्यमिति। निग्रहस्थानेभ्यो हेत्वाभासानां पृथगुपदेशे प्रयोजनं यद्भाष्याक्षरेभ्यः साक्षात्प्रतीयते सामान्योपदेशेन विशेष उपदिष्टे विशेषोपदेशः प्रयोजनाधिक्यं सूचयति। एतावानेव सूत्रकृतो व्यापारो यत्सूत्रणं नाम। तत्र निग्रहस्थानविशेषाणां हेत्वाभासानां स्वरूपं वादस्य च तत्त्वनिर्णयावसानत्वमालोच्य वादे देशनीया भविष्यन्ति निग्रहस्थानत्वेन हेत्वाभासा नाप्रतिभादय इति प्रयोजनं वर्णयाञ्चकार भाष्यकारः। स्यादेतत्। वादे भवन्तु देशनीया हेत्वाभासाः, मा भूवन्नप्रतिभादयः किमेवमपीत्यत आह—विद्याप्रस्थानभेदज्ञापनार्थत्वात्। वादजल्पवितण्डा विद्याः परम्परया निःश्रेयसोपयोगात्। तासां प्रस्थानं व्यापारः, तस्य भेदः, तज्ज्ञापनार्थत्वात्। अत एव जल्पवितण्डयोरस्त्वित्याह (२)। चोदयति—

## वृत्तिः

अत्र केचित्—सूत्रादौ मङ्गलाकरणेन मङ्गलं न प्रामाणिकमित्यत्र सूत्रकृतो तात्पर्यं वर्णयन्ति, तदसत्, कृतस्याऽप्यनिबन्धनसम्भवात्, विघ्नाभावनिर्णयेनाऽकरणसम्भवाच्च।

(१) "देशनीयत्वमि"ति वार्त्तिके। (२) ६२ पृ:—भाष्यस्य प्रथमपंक्तौ—"जल्पवितण्डयोस्तु निग्रहस्थानानि" इति।

## न्यायवार्त्तिकम्

ऽभिधीयन्ते, प्रमाणसामान्यं च हेत्वाभासेऽस्तीति। अतः प्रमाणसामान्याद्वादेऽभिधीयन्त इति। अथ वादे निग्रहस्थानानि कानिचित् सन्ति कानिचिन्नेति किमयं पदार्थानां नियोगः, अथ तथाभूतानामन्वाख्यानमिति ? किं चातः, यदि तावन्नियोग एवं भवतैवं मा भवतेति, एवं पदार्थाननुयुञ्जानो भवानुपेक्षणीयः। अथ स्वरूपत एवावस्थिताः पदार्थास्ताननुजानाति भवान्, कस्मान्निग्रहस्थानानि कानिचिद्वादे भवन्ति कानिचिन्नेति वक्तव्यम्, न, लक्षणपरतन्त्रत्वादर्थतथाभावस्येति ब्रूमः। न पदार्था वक्तृनियोगमनुविधीयन्ते। यथा तु भवन्ति तथाभूता एवार्था अन्वाख्यायन्ते। सोऽयं लक्षणपरतन्त्रत्वमाचक्षाणो नाभ्याख्येयः पदार्था भवता नियुज्यन्त इति; वादस्य शिष्यादिविषयत्वात्। न च शिष्यादिभिः सह वादं कुर्वाणेनापि अप्रतिभादिदेशना कार्य्या, तावदस्याभिधेयं यावदसौ बोधितो भवतीति। प्रमाणप्रतिरूपकत्वाद्धेत्वाभासानामविरोध

## न्यायवार्त्तिकतात्पर्य्यटीका

अथ कस्मादिति। यदि वादे हेत्वाभासाः प्रयुज्येरन् ततो निग्रहस्थानत्वेन चोद्येरन्, न तु तेषामस्ति प्रयोगोऽप्रमाणत्वात् प्रमाणतर्कसाधनोपालम्भत्वाच्च वादस्य, तस्मान्निग्रहस्थानमात्रत्वं हेत्वाभासानां तथा चापृथगुपदेशः, निग्रहस्थानोपदेशेनैव लब्धत्वादित्यर्थः। परिहरति—प्रमाणसामान्यादिति। न खलु हेत्वाभासान् तद्बुद्ध्या प्रयुञ्जाते वादिप्रतिवादिनौ, अपि तु हेतुबुद्ध्या। तथा चास्ति तेषां वादे प्रयोग इति वादे निग्रहस्थानत्वेन हेत्वाभासाश्चोद्यन्तां नाप्रतिभादीनीत्यर्थवान् पृथगुपदेशः। तदेतद्विकल्प्याक्षिपति—वादे कानिचिदिति। समाधत्ते—न, लक्षणपरतन्त्रत्वादर्थतथाभावस्येति ब्रूमः। लक्ष्यत इति लक्षणं समानासमानजातीयव्यावृत्तं रूपं वादस्य च निग्रहस्थानानाञ्च। तदधीनो हि तेषां तथाभावो व्यवस्था कानिचिदेव निग्रहस्थानानि वादे न तु सर्व्वाणीति सामान्यतोऽभिधाय तदेव लक्षणपरतन्त्रत्वमभिमते विशेषे योजयति—वादस्येति। उक्तमाक्षिपति—प्रमाणप्रतिरूपकत्वादिति। निश्चितौ हि वादं

## वृत्तिः

वयं तु 'प्रमाणं प्राणनिलयः' (१)—इति भगवन्नामगणान्तःपातिप्रमाणशब्दस्योच्चारणमेव मङ्गलमिति ब्रूमः।

अत्र चोद्देशलक्षणपरीक्षाणां पूर्वपूर्वसापेक्षतया प्रथममुद्देशोऽनन्तरं लक्षणं प्रसङ्गाच्छलपरीक्षेति सोद्देशपदार्थलक्षणच्छलपरीक्षा प्रथमाध्यायार्थः। तत्र च सपरिकरन्यायलक्षणं प्रथमाह्निकार्थः। तत्र च सप्रयोजनाभिधेयप्रतिपादकं प्रथमद्वितीयसूत्राभ्यामेकं प्रकरणम्,

(१) "प्रमाणं प्राणनिलयः प्राणधृत् प्राणजीवनः, तत्त्वं तत्त्वविदेकात्मा जन्ममृत्युजरातिगः"। इति महाभा० अनुशाप० विष्णुसहस्रनामस्तोत्रे ११६ श्लोकः।

## न्यायभाष्यम्

जल्पवितण्डयोस्तु निग्रहस्थानानीति (१)।

## न्यायवार्त्तिकम्

इति। किं कारणम्? भ्रान्तेः पुरुषधर्मत्वात्, पुरुषधर्म एव भ्रान्तिरिति। सोऽयं भ्रान्त्या प्रमाणं ब्रुवन् प्रमाणाभासमपि ब्रूते अतोऽस्य निग्रह इति। कः पुनः शिष्याचार्य्ययोर्निग्रहः? विवक्षितार्थाप्रतिपादकत्वम्। न्यूनाधिकापसिद्धान्तानां वादे कथमवतारः? प्रमाणसामान्यादेव। न्यूनस्यापि प्रमाणसामान्यमधिकस्यापि। अवयवविहीनताऽवयवाधिक्यं वाक्यस्य भ्रान्त्या भवतीत्यस्यावतारः। जल्पवितण्डयोस्तु निग्रहस्थानानीति, विजिगीषुभिर्जल्पवितण्डाभ्यां प्रत्यवस्थेयम्। तस्य यथासम्भवं निग्रहस्थानानि वक्तव्यानीति नोपेक्षणीयः।

## न्यायवार्त्तिकतात्पर्य्यटीका

कुतः, निश्चयश्च प्रमाणफलमिति कुतोऽप्रमाणस्यावकाशः। उत्तरं—भ्रान्तेरिति। न निश्चयः सर्व्वः प्रमाणमूलोऽप्रमाणमूलस्यापि तस्य दर्शनात्, अन्यथा विपर्य्ययादप्रवृत्तिप्रसङ्गात्। वादिनोऽभ्रान्तत्वे वस्तुनो विरुद्धधर्म्मद्वयसमालिङ्गितत्वमेकदा स्यादिति भावः। पृच्छति—कः पुनः शिष्येति? उपास्योपासकयोः परस्परोपालम्भनं न सम्भवतीत्यर्थः। उत्तरं—विवक्षितार्थाप्रतिपादकत्वमेव खलीकार इति। हेत्वाभासानां च पृथक्करणं न वादे तावन्मात्रावधारणार्थमपि तु यस्मिन्ननुद्भाविते‌ऽपि निग्रहस्थाने तत्त्वप्रतिपत्तिव्याघातो भवति तस्य सर्व्वस्य संग्रहार्थम्। एवं न्यूनाधिकापसिद्धान्ता अपि संगृहीता भवन्ति, तत्र पृच्छति—न्यूनाधिकेति। उत्तरं—प्रमाणेति। जल्पवितण्डयोस्त्विति भाष्यमनुभाष्योपपादयति—जल्पवितण्डयोस्त्विति।

## वृत्तिः

ततः प्रमाणलक्षणप्रकरणम्, ततः प्रमेयलक्षणप्रकरणम्, ततो न्यायपूर्वाङ्गप्रकरणम्, ततो न्यायाश्रयसिद्धान्तप्रकरणम्, ततो न्यायस्वरूपप्रकरणम्, ततो न्यायोत्तराङ्गप्रकरणमिति प्रथमाह्निके सप्त प्रकरणानि।

श्रवणादनु पश्चादीक्षा अन्वीक्षा मननम्(२), तन्निर्वाहिका सेयमान्वीक्षिकी न्यायतर्कादिशब्दैरपि व्यवह्रियते। तथा च—

'न्यायो मीमांसा धर्मशास्त्राणि' इति श्रुतिः।

'पुराणन्यायमीमांसा' इत्यादिः स्मृतिः।

'मीमांसान्यायतर्काश्च(३) उपाङ्गः परिकीर्त्तितः' इति पुराणम्।

---

(१) जल्पे वितण्डायाञ्च यथासम्भवं सर्व्वाण्येव निग्रहस्थानानि प्रयोज्यानीत्यर्थः। इति न्या-नि-व०। (२) "उन्नयनम्" (३) "तर्कश्च" इति न्या-नि-व०।

## न्यायभाष्यम्

छलजातिनिग्रहस्थानानां पृथगुपदेश उपलक्षणार्थमिति (१)। उपलक्षितानां स्ववाक्ये परिवर्जनम्, छलजातिनिग्रहस्थानानां परवाक्ये पर्य्यनुयोगः (२)। जातेश्च परेण प्रयुज्यमानायाः सुलभः समाधिः, स्वयं च सुकरः प्रयोग इति।

## न्यायवार्त्तिकम्

छलजातिनिग्रहस्थानानां स्ववाक्ये परिवर्ज्जनम्, परवाक्ये पर्य्यनुयोगः, परिज्ञानार्थमेव केवलम् छलजातिनिग्रहस्थानानि, स्वयं न प्रयोक्तव्यानि। जातेश्च स्वयं सुकरः प्रयोग इति न, व्याघातात्, स्ववाक्ये परिवर्ज्जनं सुकरश्च प्रयोग इति व्याहतम्, यदि सुकरः प्रयोगो न स्ववाक्ये परिवर्ज्जनम्, अथ स्ववाक्ये परिवर्जनं न सुकरः प्रयोग इति व्याघातः। न व्याघातः, प्रश्नापाकरणार्थत्वात्। स्वयं च सुकरः प्रयोग इति किमुक्तं भवति? परेण जातौ प्रयुक्तायां प्राश्निकान् ब्रवीति जातिरनेन प्रयुक्तेति। त एनं पर्य्यनुयुञ्जीरन्? कथं जातिः कतमा जातिः? अतो जात्यभिज्ञः शक्नोति वक्तुमेवं जातिरियं जातिरिति, एवं च सुकरः प्रयोग इति। तस्मादेते संशयादयः पदार्थाः प्रमाणे प्रमेये चान्तर्भवन्तो विद्याप्रस्थानभेदज्ञापनार्थं पृथगुपदिष्टाः।

## न्यायवार्त्तिकतात्पर्य्यटीका

साहंकारो हि विजिगीषुरप्रतिभादिभिरपि निग्रहस्थानैस्तिरस्कृतो गलिताहंकारस्तत्त्वबुभुत्सुतां नीतः पश्चाद्वादेन व्युत्पाद्यत इत्यर्थः। छलजातिनिग्रहस्थानानां पृथगुपदेशप्रयोजनपरं भाष्यमनुभाषते—छलेति। उपलक्षणार्थ इति भाष्यावयवार्थं व्याचष्टे—परिज्ञानार्थमपि केवलं(३)परिज्ञानस्य च फलमुक्तम् स्ववाक्ये परिवर्ज्जनमप्रयोगः परवाक्ये चोद्भावनमिति। चोदयति—छलजातिनिग्रहस्थानानीति। अत्र हि वाक्ये परिवर्ज्जनमुक्त्वा पुनः स्वयं प्रयोजनयुक्तः(४) कस्मात्? व्याघातात्। एतद्विभजते—स्ववाक्य इति। परिहरति—न व्याघातः, कुतः? प्रश्नापाकरणार्थत्वात्। एतद्विभजते—स्वयं च सुकरः प्रयोग इति। अनेन भाष्येण किमुक्तं भवति? परेण प्रतिवादिना जातौ प्रयुक्तायां यदि प्राश्निकान् सभ्यान् ब्रवीति जातिरनेन प्रतिवादिना प्रयुक्तेति ते प्राश्निका एनं पर्य्यनुयुञ्जीरन् हे वादिन् कथं केन प्रकारेण

## वृत्तिः

'त्रैविद्येभ्यस्त्रयीं विद्यां दण्डनीतिं च शाश्वतीम्।
आन्वीक्षिकीं चाऽऽत्मविद्यां वार्तारम्भांश्च लोकतः' ॥ इति मनुः।

तथा—

'यस्तर्केणाऽनुसन्धत्ते स धर्मं वेद नेतरः' इत्यादि।

---

(१) "उपलक्षणार्थः" इति फ-पुस्तकपाठः। (२) उद्भावनमित्यर्थः। (३) "परिज्ञानार्थमेव केवलम्" इति पाठः सुष्ठुतया मन्यते वार्त्तिकसंवादात्। (४) "प्रयोगकथनमयुक्तम्" इत्येवं पाठो भवितुमुचित इति मन्ये।

## न्यायभाष्यम्

सेयमान्वीक्षिकी प्रमाणादिभिः पदार्थैर्विभज्यमाना(१)—

प्रदीपः सर्वविद्यानामुपायः सर्वकर्मणाम् ।
आश्रयः सर्वधर्माणां विद्योद्देशे(२) प्रकीर्त्तिता(३) ॥

## न्यायवार्त्तिकम्

सेयमान्वीक्षिकी न्यायविद्या प्रमाणादिभिः पदार्थैर्विभज्यमाना प्रदीपः सर्व्वविद्यानां भवति, प्रकाशकत्वात् प्रदीपवत् । प्रमाणादिप्रतिपादितमर्थमितरा विद्याः प्रतिपद्यन्त इति । किमितरासु विद्यासु प्रमाणादीनि न सन्ति ? न सन्तीत्याह । कथं न सन्ति ? अनधिकारात् । न ता विद्याः प्रमाणादिपरिज्ञानेनाधिक्रियन्ते इति प्रमाणादिप्रकाशिते त्वर्थे ताः

## न्यायवार्त्तिकतात्पर्य्यटीका

जातिः चतुर्विंशत्यां जातिषु कतमा जातिः । सोऽयं प्राश्निकानां प्रश्नः, तदपाकरणार्थं स्वयं सुकरः प्रयोग इत्यर्थः । प्रकृतमुपसंहरति—तस्माद्देत इति ।

सूत्रकारेण शास्त्रस्यात्यन्तिकदुःखोपरमरूपनिःश्रेयसाधिगमः प्रयोजनमुक्तम् । भाष्यकारस्तु नास्त्येव तत् प्रेक्षावतां प्रयोजनं यत्रान्वीक्षिकी न निमित्तं भवतीत्याह—सेयमान्वीक्षिकीति । तदेतद्भाष्यं व्याचष्टे—सेयमान्वीक्षिकी न्यायविद्या । यद्यपीतरा विद्याः प्रामाणिकमेवार्थमभिनिविशन्ते तथाप्येतद्विद्याप्रतिपाद्यमेव प्रमाणाद्युपजीव्य स्वे स्वे व्युत्पाद्येऽर्थतत्त्वे प्रवर्त्तन्ते न तु प्रमाणाद्यपि व्युत्पादयन्ति । यथा प्रत्यक्षाद्युपजीव्य प्रवर्त्तमानमनुमानं न प्रत्यक्षादिविषयमपि(४) तदानीमेव गोचरयति । तदनेन विद्योपकरणग्रहणेन व्यापार आन्वीक्षिक्या दर्शितः । संप्रति विद्यानां यानि कर्म्माणि प्रतिपाद्यानि सामाग्निहोत्रकृष्यादीनि तत्राप्यान्वीक्षिक्युपाय इत्याह—उपायः सर्व्वकर्म्मणां विद्याव्युत्पाद्यानाम्, न तु हालिकमृगयादिकर्म्मणामपि, न हि विद्यापदेभ्यो यावन्मात्रावगतिः तावन्मात्रेण प्रेक्षावतां परितोषः । मा भूत् "आदित्यो वै यूप" इत्यादिभ्यः आदित्यादीनां यूपादिता, तस्मात् संशयपरीक्षाप्रमाणविनिवेशद्वारेण तदर्थतत्त्वमवधार्य्य तत्र त्रयी

## वृत्तिः

मोक्षधर्मे—

"तत्रोपनिषदं तावत् (५) परिशेषञ्च (६) पार्थिव ।
मथ्नामि मनसा तात दृष्ट्वा चाऽऽन्वीक्षिकीं पराम्" ॥ इति ।

उपनिषदर्थश्चाऽऽन्वीक्षिक्यनुसारी ग्राह्य इत्युक्तमिति ॥ १ ॥

---

(१) विद्यान्तराद् विलक्षणीक्रियमाणा । (२) विद्यापरिगणनस्थले । (३) "परीक्षिता" इति न्यायमञ्जरी, १ आ० ११ पृ० । (४) प्रत्यक्षादिरूपं विषयं प्रत्यक्षादिविषयम् इत्यर्थः । (५) "तात" इति शा० । (६) "परिशेषन्तु" इति शा० ।

## न्यायभाष्यम्

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमार्थं यथाविद्यं वेदितव्यम्। इह त्वध्यात्मविद्यायामात्मादि(१)ज्ञानं तत्त्वज्ञानम्। निःश्रेयसाधिगमोऽपवर्गप्राप्तिः ॥ १ ॥

## न्यायवार्त्तिकम्

प्रवर्त्तन्त इति। उपायः सर्वकर्मणामिति। प्रकाशितानां करणादुपायः, यस्मात् प्रमाणादिप्रकाशितमर्थमितरा विद्याः कुर्वन्ति। आश्रयः सर्वधर्माणामिति। सर्वविद्योपकारकत्वादाश्रयः। सर्वासां विद्यानामियमुपकरोति, उपकारित्वादाश्रयो राजभृत्यवदिति।

तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यमिति। सर्वासु विद्यासु तत्त्वज्ञानमस्ति निःश्रेयसाधिगमश्चेति। त्रय्यां तावत् किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति ?

## न्यायवार्त्तिकतात्पर्य्यटीका

विनिवेशनीया। एवं दण्डनीतिवार्त्तयोरप्यवगन्तव्यम्। यस्मादान्वीक्षिकीपरिशोधितप्रमाणप्रकाशितं सामादि इतरा विद्याः कुर्व्वन्ति विषयमिति शेषः। अपि च द्रव्यगुणकर्म्मणामभिमतानभिमतोपायतापरिज्ञापनेन यथास्वं सर्व्वा विद्याः प्रेक्षावतः प्रवर्त्तयन्ति निवर्त्तयन्ति च। तत्र किमविशेषेण साध्यसाधनेतिकर्त्तव्यतासु प्रवर्त्तयन्ति आहोस्वित् साधनेतिकर्त्तव्यतामात्रे। तत्र यदि साध्यांशोऽपि प्रवर्त्तनागोचरः तदा श्येनादिसाध्यायाः हिंसाया विहितत्वेन नानर्थत्वम्। अथ साध्यं रागतः प्राप्तमनूद्य साधनेतिकर्त्तव्यते एव विधीयेते ततः श्येनादिसाध्याया हिंसाया अविहितत्वेन न हिंस्यात् सर्वा भूतानीति प्रतिषेधादनर्थत्वम्। तदिह साध्यांशेऽप्रवर्त्तनमान्वीक्षिकीगम्यम्। एवमनुष्ठानगताः प्रयोजकत्वाप्रयोजकत्वादयः आन्वीक्षिकीगम्या एव वार्त्तादिष्वपि तदेवमान्वीक्षिकीमाश्रयन्ते सर्वविद्या इत्याह—आश्रयः सर्वधर्म्माणाम्, सर्वासां विद्यानां पुरुषप्रवर्त्तना धर्म्मास्तेषामाश्रयः। वार्त्तिककारस्तु धर्म्मद्वारेण विद्यानामेवाश्रय इति व्याचष्टे—सर्वविद्योपकारकत्वादाश्रयः, सर्वासां विद्यानामियमुपकरोति। विद्यया प्रवर्त्तनायां कर्त्तव्यायामियं सहकारितया उपकरोतीत्यर्थः। स्यादेतद्, व्युत्पाद्याश्चेत् प्रमाणादयः सर्वविद्योपयोगिनः, न तर्ह्यात्यन्तिकी दुःखनिवृत्तिरान्वीक्षिक्याः फलं निःश्रेयसपदादवगम्येत, व्युत्पाद्यस्वभावालोचनया हि तद्गम्येत, स च विद्यान्तरसाधारण इति विद्यान्तराधिगम्येन निःश्रेयसेन संकरप्रसङ्ग इत्यत आह—तदिदं तत्त्वज्ञानं निःश्रेयसाधिगमश्च यथाविद्यं वेदितव्यम्। विद्यान्तराणि तावद्यत्तत्त्वज्ञानं कुर्वन्ति इति तत्स्वभावालोचनया हि तत्तद्विद्यासाध्ये एव निःश्रेयसभेदे उपयुज्यन्ते, नान्यत्र, इह तु प्रमाणादि यद्यपि साधारणं तथाप्यात्माप्यसाधारणात्मादिरूप(२)प्रमेयसमभिव्याहृतं सदभिमत एव निःश्रेयसे अवतिष्ठत इति। विशुद्धेनार्ज-

---

(१) "आत्मादितत्त्वज्ञानं निःश्रेयसाधिगमः" इति जं-ग-भा०। "आत्मादितत्त्वज्ञानं तत्त्वज्ञानम्" इति ल-भा०। (२) "तथाप्यात्मादिरूप" इतीत्थं पाठः समुचितः।

## न्यायवार्त्तिकम्

तत्त्वज्ञानं तावदग्निहोत्रादिसाधनानां स्वागतादिपरिज्ञानमनुपहतादिपरिज्ञानं च। निःश्रेयसाधिगमोऽपि स्वर्गप्राप्तिः, तथा ह्यत्र स्वर्गः फलं श्रूयत इति। अथ वार्तायां किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति? भूम्यादिपरिज्ञानं तत्त्वज्ञानम्, भूमिः कण्टकाद्यनुपहतेत्येतत्तत्त्वज्ञानम्। कृष्याद्यधिगमश्च निःश्रेयसमिति, तत्फलत्वात्। दण्डनीत्यां किं तत्त्वज्ञानं कश्च निःश्रेयसाधिगम इति? सामदानदण्डभेदानां यथाकालं यथादेशं यथाशक्ति विनियोगस्तत्त्वज्ञानम्, निःश्रेयसं पृथिवीजय इति। इह त्वध्यात्मविद्यायामात्मज्ञानं (१) तत्त्वज्ञानम्, निःश्रेयसाधिगमोऽपवर्गप्राप्तिरिति। यत् पुनः प्रमाणादितत्त्वज्ञानान्निःश्रेयसं न तद्विवक्षितम्। मदमानादिनिमित्तत्वाद्वादादिपरिज्ञानस्य नाभिसम्बन्धो निःश्रेयसेनेति केचित्। न चानभिसम्बद्धं प्रतिपादयतीत्ययुक्तमुक्तं प्रमाणादितत्त्वज्ञानान्निःश्रेयसमिति, न, सूत्रार्थापरिज्ञानात्। सूत्रार्थं न व्यज्ञासीर्यदेवं प्रत्यपत्थाः। क एवं सूत्रार्थं वर्णयति प्रमाणादिपदार्थतत्त्वज्ञानान्निःश्रेयसमिति। अपि तु यत्परिज्ञानान्निःश्रेयसं वदुत्तरसूत्रे (२) वक्ष्यामः। उक्तं (३) चात्मादेः प्रमेयस्य तत्त्वज्ञानान्निःश्रेयसाधिगम इति। यच्चेदमुच्यते मदमानादिनिमित्तं वादादय इति, एतच्च न, असति भावात् सति चाभावात्। असति वादादिज्ञाने रागादयः सनकादीनां (४) भवन्ति, सति च तत्त्वविदां न भवन्ति, तस्मान्न वादादिपरिज्ञानं रागादीनां निमित्तमिति ॥१॥

## न्यायवार्त्तिकतात्पर्य्यटीका

नेन होमसाधनस्य द्रव्यस्य प्राप्तिः स्वागतम्। आदिग्रहणेन क्रमप्राप्ताङ्गग्रामसाकल्यं गृह्यते, श्वमार्जारादिभिरनुपघातोऽनुपहतत्वम्। आदिग्रहणाद्विशुद्धोऽभिसन्धिरिति। शेषमतिरोहितम्। वादादीनां (५) निग्रहस्थानान्तानामुद्देशः पराभिभवोपायत्वान्मदमानादिहेतुत्वेन निःश्रेयसपरिपन्थीति मन्वानश्चोदयति—मदमानादीति। परिहरति—न सूत्रार्थापरिज्ञानात्। नायं सूत्रार्थः, सर्वेषां तत्त्वज्ञानं साक्षान्निःश्रेयसोपयोगि, किं त्वात्मादितत्त्वज्ञानम्। तदितरेषां पारंपर्य्येण। तत्र जल्पादीनां पराहंकारप्रशमनमवान्तरव्यापार इति न निःश्रेयसपरिपन्थिता किं त्वानुकूल्यमित्यर्थः। मदमानादिहेतुत्वं च हेतुरसिद्ध इत्याह—यच्चेदमिति। उपसंहरति—तस्मान्न निमित्तं वादादिपरिज्ञानं रागादीनामिति। इति सूत्रसमाप्तौ ॥१॥

---

(१) "आत्मादिज्ञानम्" इति तु भाष्ये। (२) १।१।२ सूत्रे, १।१।९ सूत्रे च। (३) १।१।१ सूत्र-भाष्ये उक्तम्। (४) सनको मदादिप्रधानो दासविशेषः। (५) "वादादीनामिति अतद्गुणसंविज्ञानो बहुव्रीहिः, वादस्य पराभिभवार्थमप्रवृत्तेः" इति मुद्रितपरिशुद्धे :—३६२ पृ०।

## न्यायभाष्यम्

तत् खलु (१) निःश्रेयसं किं तत्त्वज्ञानानन्तरमेव भवति ? नेत्युच्यते। किं तर्हि ? तत्त्वज्ञानात्—(२)

## न्यायवार्त्तिकम्

न तत्त्वपरिज्ञानादपवर्ग उभयथा दोषात्। यदि तत्त्वज्ञानानन्तरमेवापवर्गः स्यात्तद्वतामव स्थानं न स्यात्। तद्वतां चावस्थानं दृष्टम्। कुतः ? शास्त्रसम्प्रदायाऽविच्छेदात्, सम्प्रदायो नाम शिष्योपाध्यायसम्बन्धस्याविच्छेदेन शास्त्रप्राप्तिः। यदि तत्त्वज्ञानादपवर्गः स्यात् शास्त्रसम्प्रदायो विच्छिद्येत, यस्य यदा तत्त्वज्ञानं वृत्तं स तदैवापवृक्त (३) इति। अथोत्पन्नतत्त्वज्ञानोऽवतिष्ठते, न तत्त्वज्ञानं कारणम्, सत्यभावात्, सत्यपि तत्त्वज्ञाने यस्याभावान्नापवृज्यते सोऽन्योऽर्थ इति। कारणं हि तद्भवति, यस्मिन् सति यद्भवति यस्मिंश्चासति यन्न भवति। अनधिगतार्थपूर्वं वा शास्त्रं स्यात्। अथ तत्त्वज्ञानानन्तरमपवर्गे वातपुत्रीयं (४) शास्त्रं स्यात्, न तत्त्वदृक्पूर्वकमिति। न, निःश्रेयसस्य परापरभेदात् (५)।

## न्यायवार्त्तिकतात्पर्य्यटीका

तदेवं प्रथमसूत्रेण शास्त्रस्याभिधेयप्रयोजनसम्बन्धान् दर्शयता पदार्थाः प्रमाणादय उद्दिष्टाः, तेषां च लक्षणमुक्त्वा तत्परीक्षा वर्त्तयिष्यते अपरीक्ष्य तत्त्वनिर्णयायोगात्। न चानिर्णीतप्रयोजनसम्बन्धानां लक्षणपरीक्षयोरवकाशः। न च प्रयोजनसम्बन्धनिर्णयः परीक्षां विनेति तत्परीक्षार्थं द्वितीयं सूत्रम्। तत्र प्रयोजनाभिधानस्य द्वैविध्यात् संशयः। द्विविधं हि प्रयोजनाभिधानं ग्रन्थकृतां दृष्टं समीचीनमसमीचीनम्, यथा वातिकादिप्रयोजनाभिधानम् आयुर्वेदादिप्रयोजनाभिधानं च। तस्मादभिधानसामान्यादयथादर्शनाच्च संशयः। तत्र उत्सूत्रेण प्रयोजनाभिसम्बन्धप्रतिपादनपरं पूर्वपक्षभाष्यं तत् खलु (६) निःश्रेयसमित्यादि, तद्विभजते—न तत्त्वपरिज्ञानात्। कुतः ? उभयथा दोषात्। तदत्यन्तविमोक्षलक्षणोऽपवर्गो निःश्रेयसम्, तच्चेत्तत्त्वज्ञानानन्तरम्, संप्रदायोच्छेदो वातपुत्रीयं वा शास्त्रं स्यात्। तस्मान्न तत्त्वज्ञानानन्तरं निःश्रेयसम्। तथा सति प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति मिथ्या। न चान्यन्निःश्रेयसमित्यभिसन्धिः पूर्वपक्षवादिन इति। अत्रेदं सिद्धान्तसूत्रमुपतिष्ठते—दुःखजन्मेति। तस्य तात्पर्य्यमभिधायावतारयति—न प्रयोजनानभिसम्बन्धः। कुतः ? निःश्रेयसस्य परापरभावात्। चतस्रो हि प्रतिपत्तयः प्रमेये आत्मादौ। प्रथमा तावदागमाद्, यामाचक्षते श्रवणमिति। द्वितीया तु श्रुतस्य परीक्षा न्यायेनैवावस्थापनं, यामाहुर्मननमिति। सा चान्वी-

---

(१) "तच्च खलु वै" इति फ-पु-पाठः। (२) तत्त्वज्ञानादितिहेतुः ६९ पृष्ठस्थसूत्रघटकेन "अपाये" इत्यनेन सम्बद्धः। (३) "अपवर्गंप्राप्त" इत्यर्थः। (४) महाधूर्त्तरचितम्। (५) "परापरभावात्" इति ता-पाठः। (६) "तच्च खलु वै" इति क-पु-पाठः।

## न्यायवार्त्तिकम्

यत्तावदपरं निःश्रेयसं तत् तत्त्वज्ञानानन्तरमेव भवति। तथा चोक्तम्—जीवन्नेव

## न्यायवार्त्तिकतात्पर्य्यटीका

क्षिक्यामायतते (१)। आन्वीक्षिकी च संशयादितत्त्वज्ञापनं प्रमाणतत्त्वज्ञापनायोपादत्ते, प्रमाणतत्त्वज्ञापनं च हेयोपादेयभेदव्यवस्थितप्रमेयतत्त्वपरिज्ञापनाय। तत्राप्याद्यन्तवर्जितदशवर्गज्ञापने-नाद्यन्तयोरेवात्मापवर्गयोरुपादेययोस्तत्त्वज्ञानस्योपकरोति, न चायमान्वीक्षिकीविद्यावधृतप्रमेयतत्त्वोऽपि परितुष्यति पूर्ववदेवात्मादिगतविपर्य्ययवासनानुवृत्तेः। नो खलु दिङ्मूढः सहस्रेणाप्यनुमानैर्विपर्य्ययसंस्कारमपनयति। तत्त्वसाक्षात्कारस्तु विपर्य्ययसाक्षात्कारं निवर्त्तयति, तज्जनिता च वासना विपर्य्ययवासनामिति लोकसिद्धम्। तस्मादात्मादिसाक्षात्कारवतीं चतुर्थीं प्रमामशेषतद्गोचरवासनाविपर्य्यासशमनीमर्थयमानेनादरनैरन्तर्य्याभ्यां ध्यानार्चितादिशब्दवाच्या तज्जा या प्रतीतिः साक्षात्कारफला दीर्घकालमुपासनीया। अथ परिनिष्पन्नध्यानोपायः साक्षात्कारवतीं प्रतिपद्य चतुर्थीं प्रतीतिं निर्मुक्तसकलक्लेशजालोऽप्रवर्त्तमानो धर्म्माधर्म्मसाधनेषु निरुद्धानागतधर्म्माधर्म्मप्रबन्धोत्पादो भूतेन्द्रियविजयी प्रज्ञाज्योतिर्जीवन्नेव मुक्त इत्युच्यते। न चैवमवस्थो वीतरागोऽपि सहसैव देहादिभिर्वियुज्यते। प्रागुपात्तस्य धर्म्माधर्म्मप्रचयस्य भुज्यमानस्य वाऽभुक्तस्य (२) वाऽक्षीयमाणत्वात्। न च प्रायश्चित्तेनेवात्मज्ञानेनादत्तफलान्येव कर्म्माणि क्षीयन्ते इति युक्तम्, नाभुक्तं क्षीयते कर्म्मेति स्मृतेः। अन्त्यसुखदुःखसंविज्ञानविरोधस्य कर्म्मणामवधारणात्। औत्सर्गिकस्य क्वचित् प्रायश्चित्तादौ विशेषवचनेनापवादात्। क्षीयन्ते चास्य कर्म्माणीति श्रुतेः। योगर्द्धिवशाद् युगपदुत्पादितानेकविधदेहोपभोगेनाप्युपपत्तेः। "तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये" इति(३) वाऽभुक्तोपभुज्यमानफलकर्म्मप्रक्षयावधित्वप्रदर्शकम्। योगर्द्धिवशाच्चानियतनियतविपाकफलान्यपि दीर्घकालफलान्यपि कर्म्माणि पिण्डीकृत्य भूतेन्द्रियविजयितया युगपदेव भुङ्क्ते, अचिन्त्यो हि समाधिप्रभाव इत्युक्तम्। न चाचिन्त्यप्रभावत्वाद्विनैवोपभोगं कर्म्माशयान् प्रक्षयिष्यतीति युक्तम्, दृष्टानुसारेण कथंचिदुपपत्तौ अत्यन्तादृष्टकल्पनाया अयोगात्। तस्मादुत्पन्नतत्त्वसाक्षात्कारस्य दोषाभावात् प्रवृत्त्युपरमे योऽनागतापूर्वानुत्पादस्तदपरं निःश्रेयसम्, तच्च तत्त्वसाक्षात्कारानन्तरं भवति। ईदृशश्च मुनिस्तत्त्वज्ञानवान् शास्त्रप्रणेतेति न वातपुत्रीयं शास्त्रम्। परं तु निःश्रेयसं समाधिप्रभवसंपदा युगपदुपभोगेनोपात्तकर्म्माशयस्य क्षयात् सर्वदुःखोपरम इत्युपपन्नं निःश्रेयसद्वैविध्यमिति भावः। तदेतद्दर्शयति—यत्तावदिति। तत्त्वसाक्षात्कारस्तत्त्वज्ञानम्, संहर्षः सुखम्, आयासो दुःखम्, तत्रानागताभ्यां तावद् प्रवृत्त्यभावाद् अनुत्पादादेवमुत्पत्तेर्विद्यमानकारणे अपि सुखदुःखे असक्तोऽद्विषंश्च भुञ्जानो न सुखदुःखतयाऽनुमन्यते, न ह्यस्ति सम्भवो न तत्र तृप्यति तच्च तस्य सुखम्, न द्वेष्टि तच्च तस्य दुःखमिति। स्यादेतत् (?) भवत्वेतदपर-

(१) आयता भवतीत्यर्थः। (२) अदत्तफलकस्य इत्यर्थः। (३) छान्दोग्ये—६।१४।२।

## (सू)—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः (१) ॥ २ ॥

### न्यायवार्त्तिकम्

हि विद्वान् संहर्षायासाभ्यां विमुच्यत इति। अयं शास्त्रार्थ इति। परं च (२) निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति।

क्रमप्रतिपादनार्थं चेदं सूत्रं दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामित्येवमादि। एतत्सम्बन्धेनैवार्थवत्।

### न्यायवार्त्तिकतात्पर्य्यटीका

निःश्रेयसं प्रकृते तु किमायातमित्यत आह—अयं शास्त्रार्थः। अर्थशब्दो निमित्ते, अपरं निःश्रेयसं शास्त्रनिमित्तमिति। अथापरनिःश्रेयसोत्पादसमय एव परनिःश्रेयसमपि कस्मान्न भवतीत्यत आह—परं तु निःश्रेयसं तत्त्वज्ञानात् क्रमेण भवति। नो खलु इत्यत्र तत्त्वसाक्षात्कारः वासनाविपर्य्यासज्ञानतत्कार्य्यदोषतत्कार्य्यप्रवृत्तीनां निवृत्त्यै प्रयतते, कारणनिवृत्त्यैवाप्रयत्नलब्धत्वात् कार्य्यनिवृत्तेः। न हि कफोद्भवज्वरप्रशमनाय कफनिवृत्तौ सत्यां प्रयत्नान्तरमातिष्ठते, तत एव तत्सिद्धेः। परं तु निःश्रेयसं न तावद्भवति यावदुपभोगादुपात्तकर्म्माशयप्रचयो न क्षीयते, तस्मात्तत्त्वसाक्षात्काराधानप्रयत्नात्परस्तदुपभोगप्रयत्नश्चास्थेयः, तथा च न तुल्यकाल उत्पादः परापरयोर्निःश्रेयसयोः। तदिदमुक्तं—क्रमेणेति। तदेवमर्थगतिं परिशोध्य सूत्रमवतारयति—क्रमेति। यद्यप्यपरस्मिन्नपि निःश्रेयसे मिथ्याज्ञानदोषप्रवृत्तीनामपि समुच्छेदक्रमोऽस्ति, तथाऽपि जन्मदुःखोच्छेदक्रमो नास्ति, पूर्व्वोपात्तकर्म्माशयप्रचयस्य तादवस्थ्यात्। तस्माज्जन्मदुःखोच्छेदक्रमसमभिव्याहृतो मिथ्याज्ञानाद्युच्छेदक्रमः परस्यैव निःश्रेयसस्य शास्त्रप्रयोजनस्य, तत्प्रतिपादनमर्थः प्रयोजनं यस्य तत्तथोक्तम्। इदं चावान्तरप्रयोजनम्, प्रधानप्रयोजनमग्रे (३) वक्ष्यति।

अत्र केचिद् योगविभागमिच्छन्ति। कारणोच्छेदात् कार्य्योच्छेदोऽभिमतो, न चासौ दुःखादीनां मिथ्याज्ञानान्तानामदर्शिते कार्य्यकारणभावे सिध्यति, तस्माद् दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामित्येको योगः। अत्र किल समासादेषामितरेतरयोगोऽवगम्यते, स च योग्यतया कार्य्यकारणभावः। कार्य्येण कारणं युक्तं कारणेन च कार्य्यमिति। अतः सिद्धे कारणभावे उत्तरोत्तरापाये तदनन्तरा-

### वृत्तिः

ननु तत्त्वज्ञानस्य न साक्षादेव निश्रेःयसहेतुत्वम्, (४)। निःश्रेयसं तावद् द्विविधम्—परापरभेदात्। तत्राऽपरं जीवन्मुक्तिलक्षणं तत्त्वज्ञानानन्तरमेव, तदप्यवधारितात्मतत्त्वस्य नैरन्तर्याभ्यासापहृतमिथ्याज्ञानस्य प्रारब्धं कर्म उपभुञ्जानस्य।

---

(१) "भावादपवर्गं" इति ग-पु-पाठः। (२) "परं तु" इति ता-पाठः। (३) दुःखजन्मेत्यादि सूत्रपाठोल्लेखानन्तरमेव वार्त्तिककार "एतत्सम्बन्धेनैवार्थवत्" इत्युक्त्या वक्ष्यति। (४) अत्र ख-पुस्तके "तत्त्वज्ञानिनामप्यनवस्थितिदर्शनादतः क्रमाकाङ्क्षायामाह—दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः। अत्र वार्त्तिकम्" इत्यधिकपाठः।

## न्यायभाष्यम्

तत्रात्माद्यपवर्गपर्यन्त(१) प्रमेये मिथ्याज्ञानमनेकप्रकारकं वर्त्तते।

## न्यायवार्त्तिकम्

पदार्थस्तु वक्तव्यः, तत्रात्माद्यपवर्गपर्य्यन्तं प्रमेयं ज्ञेयम्, तत्र मिथ्याज्ञानमनेकप्रकारकं वर्त्तते। को वृत्त्यर्थः? (२) विषयार्थः (३)। तत्रायं भेदः—

## न्यायवार्त्तिकतात्पर्य्यटीका

पाया(४)दपवर्ग इत्यनेन योगेन कारणोच्छेदक्रमेण कार्य्योच्छेदक्रमप्रतिपादनेनापवर्गः प्रतिपाद्यते। अत्र चोत्तरत्वं पाठापेक्षया कारणस्य, तदनन्तरत्वं च कार्य्यस्याव्यवहितादिपाठापेक्षया। मिथ्याज्ञाने कारणे तत्कार्य्या दोषाः। एवं शेषेष्वपि योज्यम्। तमेतं सूत्रविभागममृष्यमाणो वार्त्तिककृदाह—इदं सूत्रम्। एकवचनेन भेदं व्यावर्त्तयति। न हि समुच्छेदक्रमप्रतिपादनेनापवर्गपरतयैकवाक्यत्वे सम्भवति वाक्यभेदो न्याय्यः। एकनिवृत्त्या अन्यनिवृत्त्यैव कार्य्यकारणभाव आक्षिप्त इति नासौ सूत्रकारेण दर्शनीयः, न ह्यर्थाक्षिप्तं सूत्रकारा दर्शयन्ति। तदिदं सूत्रग्रहणप्रयोजनम्। तथा हि—

> स्वल्पाक्षरमसन्दिग्धं सारवद्विश्वतोमुखम्।
> अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥ इति।

अस्तोभमनधिकम्, अर्थलभ्यप्रदर्शने त्वधिकं भवेदिति। तत्सूचनात्तु सूत्रं स्यात्। तथा ह्याहुः—

> लघूनि सूचितार्थानि स्वल्पाक्षरपदानि च।
> सर्वतः सारभूतानि सूत्राण्याहुर्मनीषिणः॥ इति।

इतरेतरयोगेनापि कार्य्यकारणभावः सूचनीय एवं, वरमेकनिवृत्त्याऽन्यनिवृत्त्यैव सूच्यतामू एकवाक्यतानुरोधायेति। परमतात्पर्य्यमाह—एतत्सम्बन्धेनैव। शास्त्रस्य निःश्रेयसाधिगमलक्षणेन प्रयोजनेन यः सम्बन्धः पूर्वमाक्षिप्तस्तत्समाधानेन अर्थवद् एतत् सूत्रम्। सम्बन्धपदेन विषयवाचिना विषयिसम्बन्धिनं लक्षयति। तदेवं सूत्रतात्पर्य्यं व्याख्यायावयवव्याख्यानमवतारयति—पदार्थस्त्विति। यद्यपि सामभेदादौ हलशकटादौ च मिथ्याज्ञानमनेकप्रकारं भवति, तथाऽपि न तत्संसारहेतुरपि त्वात्मादिद्वादशविधप्रमेयविशेषविषयमिति सूत्रस्थं मिथ्याज्ञानं विशेष्टुमाह—तत्रात्मेति। तदेतेन आत्माद्यपवर्गपर्य्यन्त इत्यादि भाष्यमवतारितम्। तदेतदाक्षिपति—को वृत्तिशब्दार्थः। न खलु यथा कुण्डे बदरं पटे शौक्ल्यमेवं प्रमेये मिथ्याज्ञानं वर्त्तते, तस्य ज्ञातृसमवेतत्वादित्यर्थः। उत्तरम्—विषयशब्दार्थः। यावदुक्तं भवति प्रमेयविषयं मिथ्याज्ञानमिति तावदुक्तं भवति प्रमेये वर्त्तत

## वृत्तिः

परं तु क्रमेण, तत्र क्रमप्रतिपादनायेदं सूत्रमिति। दुःखादीनां मध्ये यदुत्तरोत्तरम्; तेषामपाये तदनन्तरस्य—तत्सन्निहितस्य पूर्वपूर्वस्याऽपायादपवर्गः। प्रयोज-

(१) "पर्यन्तम्" इति ल-भा-पु-पाठः। "पर्यन्त" इति १८२२ खृ:लिखिते क्वचित् पुस्तके। (२) "वृत्ति-शब्दार्थ" इति ता-पाठः। (३) "विषयशब्दार्थ" इति ता-पाठः। (४) "भावा-" इति क-पु-पाठः

## न्यायभाष्यम्

**आत्मनि तावन्नास्तीति, अनात्मनि आत्मेति दुःखे सुखमिति अनित्ये नित्यमिति**

## न्यायवार्त्तिकम्

**तत्रात्मनि तावन्नास्तीति । आत्मा तावदस्तित्वेन प्रमाणसामर्थ्यादधिगतः । अस्तित्वेनाधिगते नास्तीति विज्ञानं मिथ्याप्रत्ययः । तस्यानुपपत्तिः, सदसतोः सारूप्याभावादिति चेत्, न, प्रमाणगम्यतोपपत्तेः । न हि सदसती सरूपे यतोऽसत्साम्यादसद्धर्मारोपेणात्मनि मिथ्याप्रत्ययः स्यादिति । तच्च नैवम्, प्रमाणगम्यतोपपत्तेः । सदसतोः प्रमाणगम्यत्वं सारूप्यम्, क्रियागुणव्यपदेशास्तद्रहितता च विशेषः । सोऽयमसद्धर्मान् सत्यात्मन्यारोप्य विपर्येति(१) नास्त्यात्मेति ।**

## न्यायवार्त्तिकतात्पर्य्यटीका

इति । विषयत्वं चाग्रे निवेदयिष्यते । अनेकप्रकारमित्युक्तम् (२), तदाह—तत्रायं भेदः । तत्रात्मनि तावत् प्रधाने प्रमेये नास्तीति । कथं पुनरेतन्मिथ्याज्ञानमित्यत आह—आत्मा तावदिति । अत्र शङ्कते—तस्यानुपपत्तिः । कुतः ? सदसतोः सारूप्याभावादिति चेत् ? सर्व्वत्र हि रजतोदकादिभ्रमे शुक्तिरजतयोर्वा मरुमरीचिकासलिलयोर्वा सारूप्यमेव निमित्तं प्रतीमः । न हि जातु रूपं रसादिषु हस्तिनं वा मशकादिष्वारोपयन्ति । असदृशेऽपि श्वेते पीतभ्रमः, मधुरे च तिक्तभ्रमः, पीतः शङ्खस्तिक्तो गुड इति च दृश्यत इति चेत्, न, तत्रापि सारूप्यसम्भवात् । तथा हि बहिर्निर्गच्छदत्यच्छनयनरश्मिसंपृक्तपित्तपीतिमानमाश्रयरहितम्, शङ्खं च दोषाच्छादितसितिमानमनुभवन् पीतगुणस्य च तदसम्बन्धमननुभवन्नसम्बन्धाग्रहेण पीतचिरविल्वादिसामानाधिकरण्येन सारूप्यात् शङ्खः पीत इति विपर्य्यस्यति । एवं त्वगिन्द्रियोपनीतं गुडमननुभूयमानमाधुर्य्यमनुभवन् रसनाग्रवर्त्तिनश्च पित्तस्य तिक्तत्वमनुभवन् तदाश्रयं च तिक्तमननुभवन् सम्बन्धाग्रहसारूप्यात्तिक्तनिम्बसामानाधिकरण्येन तिक्तो गुड इति विपर्य्यस्यति, अतिशीघ्रतया चैष क्रमो न लक्ष्यते । न च ब्रूमो यत्र सारूप्यं तत्र विभ्रम इति, येनातिप्रसक्तिश्चोद्येत । अपि तु यत्र भ्रमस्तत्रावश्यं कथंचित् सारूप्यमिति । एवं द्विचन्द्रदिङ्मोहालातचक्रादिष्वपि कथंचित् सारूप्यमूहनीयम् । न च सदसतोरत्यन्तविलक्षणयोः सारूप्यमस्ति, तत् कथमात्मनि नास्तिताऽऽरोप इत्याक्षेपः । समाधत्ते—न, प्रमाणगम्यतोपपत्तेः । आक्षेपं विभजते—न हि सदसती इति । समाधानं विभजते—तच्च नैवमिति । यदि सदसतोः समानत्वं नास्ति, तर्हि भेदः, तथा

## वृत्तिः

कत्वं प्रयोज्यत्वं वा (३) पञ्चम्यर्थः । दण्डाभावाद् घटाभाव इतिवत् स्वरूपसम्बन्धविशेष एव तत् । तदयमर्थः—'तत्त्वज्ञानेन विरोधितयाऽपहृते मिथ्याज्ञाने, कारणाभावाच्च

---

(१) तात्पर्य्ये तु "समारोप्यासत्तया विपर्य्यस्यति" इति । (२) वार्त्तिके "मिथ्याज्ञानमनेकप्रकारकं वर्त्तते" इति । (३) प्रयोजकत्वं यदि पञ्चम्यर्थः, तर्हि स्वनिरूपितप्रयोज्यतावत्त्वसम्बन्धेनैव तस्य प्रयोज्ये अन्वयो वाच्यः, स च सम्बन्धो वृत्त्यनियामकः, तथाच वृत्त्यनियामकसम्बन्धावच्छिन्नप्रतियोगित्वानभ्युपगमे नञ् समभिव्याहारस्थले असङ्गतिः स्यादिति प्रयोज्यत्वं वेति ।

## न्यायवार्त्तिकम्

एवमनात्मनि शरीरे आत्मेति । किं पुनरनात्मनः शरीरादेरात्मना साधर्म्यम्, यत एतद्भवति अनात्मन्यात्मेति ? अहङ्कारविषयत्वं सारूप्यम् । इच्छाद्याधारानाधारतेति विशेषः । यथैवात्मा अहङ्कारस्य विषयस्तथा शरीरादयोऽपि । कथं पुनः शरीरेऽहङ्कारः ? शरीरवाचकशब्दसामानाधिकरण्यात् शरीरेऽहङ्कारो गौरोऽहमित्यादि । इच्छाद्याधार आत्मा न शरीरादय इति विशेषः । एतच्चोपरिष्टाद्वक्ष्यामः (१) । सोऽयमात्मधर्मान् इच्छादीन् शरीरादिष्वध्यारोप्य विपर्य्येति अहमेत इति । एवं सामान्यविशेषपरिज्ञाने सति तद्विपरीतधर्माध्यारोपेण विपर्य्ययः सर्वत्र भवति । कः पुनरयं विपर्य्ययः ? अतस्मिंस्तदिति प्रत्ययः । शेषं भाष्ये ।

## न्यायवार्त्तिकतात्पर्य्यटीका

च कस्य कुत्रारोप इत्यत आह—क्रियागुणेति । सोऽयमसद्धर्म्मान् क्रियागुणरहितत्वादीन्, सत्यात्मनि समारोप्यासत्तया विपर्य्यस्यति नास्त्यात्मेति, न त्वात्मानं सर्व्वतोऽभ्यर्हिततमम्, पश्यंस्तत्रासौ स्निह्यति स्नेहात्तदुपकाराय घटते । एवं तत्परिपन्थिनं द्वेष्टि द्वेषाच्च तदपकाराय घटते, ततः कर्म्माशयमातनोति ततो जन्म ततश्च दुःखमिति । एवमात्मनस्तादृशस्य मा भूद् तत्त्वज्ञानम्, अस्तु नास्तितासमारोप एव तावद् यतो न प्रवर्त्तते । यथाऽऽहुः—

सुखी भवेयं दुःखी वा मा भूवमिति तृष्यतः ।
यैवाहमिति धीः सैव सहजं तत्त्वदर्शनम् ॥

अत्रोच्यते—यद्यपि रागादिनिवृत्तिहेतुर्नैरात्म्यदर्शनम्, तथाऽपि नास्ति कर्म्म नास्ति कर्म्मफलमिति दृष्टेः परमं निदानम्, एवं प्रेत्यभावाभावज्ञानस्य च । तथा च दुःखहेतोर्हेयवर्गस्याभावान्न तद्धानायानेन घटितव्यम्, न चाघटमानो ह्ययं हातुमर्हति, सोऽयं वृश्चिकभिया पलायमान आशीविषमुखे निपतितः, सेयमास्तिक्यायात्मास्तितोपासनीया अभ्यर्हितत्वादात्मनोऽत्यन्तदुःखनिवृत्तावुपयुज्यते । अयमेव चास्योपकारो यदात्यन्तिकदुःखशमनम् । सुखाधाने त्वस्य तदनुषङ्गिदुःखाधानादपकारप्रसङ्गात् । न हि जातु कश्चिच्चेतनः सुखमाप्स्यामीति मधुविषसंपृक्तमन्नमुपभुङ्क्ते । तस्मान्नैरात्म्यदृष्टिः प्रयत्नेनोच्छेत्तव्या प्रेक्षावतेति सिद्धम् । अपरमपि मिथ्यादर्शनं संसारहेतुमाह—एवमनात्मनीति । पृच्छति—किं पुनरिति । उत्तरम्—अहंकारेति । विशेषमाह—इच्छादीति । पुनः पृच्छति—कथं पुनरिति ? उत्तरम्—शरीरेति । उपसंहरति—एवमिति । सामान्यधर्म्मोऽहंकारास्पदत्वम्, विशेषधर्म्म इच्छाद्याधारता तां खल्वयं शरीरादिष्वारोप्य तत एवाहमिति शरीरादिष्वात्मभावमारोपयति । एवं सिद्धं कृत्वा विपर्य्ययं सर्व्वमुक्तम् । संप्रति सन्दिहानो विपर्य्ययस्वरूपं पृच्छति—कः पुनरयं विपर्य्ययः ? परीक्षकाणां विप्रतिपत्तेः संशयः । केचित्तु (२) स्वाकारं बाह्यत्वविषयं ज्ञानं विपर्य्यय इत्याचक्षते । अन्ये (३) असद्विषयं ज्ञानम् । अन्ये(४)त्वनिर्वचनीयज्ञानम् । अपरे(५)त्वग्रहणमेव । अन्यथाख्यातिरिति वृद्धाः (६) । उत्तरम्—अतस्मिंस्तदिति प्रत्ययः । इदमत्राकूतम्—

(१) ३।२।१८, ४।१।१२ प्रभृति सूत्रभाष्यव्याख्यानावसरे । (२) आत्मख्यातिस्वीकारिणो विज्ञानवादिनो बौद्धाः । (३) शून्यवादिनो बौद्धाः । (४) वेदान्तिकाः । (५) साङ्ख्याः प्राभाकराश्च । (६) नैयायिकाः ।

## न्यायवार्त्तिकतात्पर्य्यटीका

न तावत् स्वाकारं रजतादि बाह्यतयाऽऽलम्बन्ते विभ्रमाः। तथा हि ज्ञानाकारत्वं रजतादेरनुभवाद्व्यवस्थाप्यते अनुमानाद्वा? अनुभवोऽपि रजतप्रत्ययो वा बाधकप्रत्ययो वा स्यात्? न तावद्रजतप्रत्ययः। स हीदमनहंकारास्पदं रजतमादर्शयति न चान्तरम् अहमिति तदा स्यात्। प्रतिपत्तुः प्रत्ययादव्यतिरेकात्। भ्रान्तं ज्ञानं स्वाकारमेव बाह्यतयाऽऽलम्बते तथा चानहंकारास्पदमस्य विषयो ज्ञानाकारोऽपि ज्ञानाकारता पुनरस्य बाधकज्ञानप्रवेदनीयेति चेत्, हन्त चक्षुषी निमील्य वैज्ञानिकपक्षपातं परित्यज्यालोचयतु भवान् किं पुरोवर्त्तिद्रव्याकारतामात्रं प्रतिषेधति रजतस्याहोस्वित् ज्ञानाकारतामप्यस्योपदर्शयति बाधकप्रत्ययः। तत्र ज्ञानाकारतोपदर्शनं व्यापारं बाधकप्रत्ययस्य ब्रुवाणः श्लाघनीयप्रज्ञो देवानां प्रियः। पुरोवर्त्तित्वनिषेधादर्थाज्ज्ञानाकारतासिद्धिरिति चेत्, न त्वस्या (१) तन्निषेधो वणिग्वीथ्यादावुपलब्धस्य रजतस्य व्यवस्थापने हेतुः। आन्तरत्वं त्वनुपलब्धचरं (२) कुतस्त्यम्। न चानुमानमत्र प्रभवतीति चतुर्थे (३) निवेदयिष्यते।

सन्तु तर्हि बाधकप्रत्ययानुरोधाद् असत्प्रकाशनशीला एव मिथ्याप्रत्ययाः। तथा हि बाधकं विज्ञानं नेदं रजतमिति रजतज्ञानगोचरस्यासत्त्वं गृह्णाति। न चासतो विषयभावो नोपपद्यते, न हि विषयत्वं नाम कारणत्वं येनासति न स्यात्, किन्तु स्वकारणाधीनः सामर्थ्यातिशयः, स तादृशो ज्ञानस्य, येन सन्तमिवासन्तमपि गोचरयति। न च विषयसामर्थ्यमत्रोपयुज्यते, ज्ञानस्य सामर्थ्यमात्रादेव तद्भावसिद्धेः। अत एवासत्प्रकाशनसामर्थ्यमेव मिथ्याज्ञानानामविद्यात्वमनिर्वचनीयत्वं केचिदास्थिषत। अत्रेदमालोचनीयम्—किमेतन्मिथ्याज्ञानमसत् सदात्मना गृह्णातीत्यसद्विषयमुपेयते? आहोस्वित् सदेव सदन्तरात्मना गृह्णाति, सतश्च सदन्तरात्मनाऽसत्त्वादसद्विषयमुच्यते? न तावत्पूर्व्वः कल्पः, रजतात्मना चेदसदालम्बेत न सतीं शुक्तिकाम्, कस्मात् पुनरयं शुक्तौ रजतार्थी प्रवर्त्तते न पुना रजताभावे? कस्माच्चेदं पुरोवर्ति द्रव्यमङ्गुल्या निर्दिश्य तस्य रजतत्वं निषेधति नेदं रजतमिति, यदि तत्र न प्रसञ्जितं रजतत्वं पूर्व्वविज्ञानेन। अथ शुक्तिरेव रजतात्मनाऽसतीति तदाकारतया तामालम्बमानं मिथ्याज्ञानमसदालम्बनमुच्यते, तत्रानुज्ञया वर्त्तामहे। न खलु अन्यथाख्यातिवादिनोऽपि सदन्तरं सदन्तरात्मना सदभ्युपगच्छन्ति, तथा सत्यन्यथेत्येव न स्यात्। यथाऽऽहुः अन्यथाख्यातिवादिनः—तस्माद्यदन्यथा प्रतिपद्येत तन्निरालम्बज्ञानमसदालम्बनं च तदिति। न च रजतात्मना पुरोवर्त्तिनो द्रव्यस्यानिर्व्वचनीयता, मिथ्याज्ञानसमये सत्त्वेन बाधकसमये चासत्त्वेन निर्वचनीयत्वात्। न चैवम्भूतस्यासतः प्रथा नोपपद्यते, तस्य सदसद्भ्यामुपाख्येयत्वात्। यः पुनरद्वैतवादिनां प्रपञ्चो वैनाशिकानां वा सामान्यादिर्नो बहिः, किं त्वलीकम्, तद्विषयं च ज्ञानं मिथ्याज्ञानमित्यपि न सम्भवति, तस्य सर्वोपाख्यारहितस्य केनचित् सारूप्याभावात्, तत्कारणकत्वाच्च भ्रान्तेः। कारणाभावे

(१) "त्वस्या" इत्यंशः ख-पुस्तके नास्ति। (२) "त्वस्यानुपलब्धचरम्" इति परिशुद्धिधृतपाठः। (३) ४।२।३५ सूत्रटीकायाम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

कार्य्याभावस्य सुलभत्वात्। तस्मात् प्रपञ्चश्च सामान्यादि च वस्तुसती नासमीचीनविज्ञान-गोचरौ, तद्बाधश्चोपरिष्टादपाकरिष्यते (१)। तस्मान्नानिर्वचनीयख्यातिरपि। स्यादेतत्, अन्यदन्यथा प्रकाशत इति संविद्विरुद्धम्, न तावत् सद्भावमात्रेणालम्बनत्वम्, तन्मात्रस्य सर्वप्रत्ययसाधारण्येन सर्वेऽर्थाः सर्वप्रत्ययविषया इति सर्वसर्वज्ञतापत्तेः। न च कारणत्वेनालम्बनत्वम्, रूपादि-विज्ञानानां रूपादिवच्चक्षुराद्यपि कारणमिति चक्षुराद्यालम्बनत्वप्रसङ्गात्। अतीतानागतविषयत्वं च विज्ञानस्य न स्याद् अतीतानागतयोरसत्त्वेनाकारणत्वात्। तस्मात् प्रतिभासमानमालम्बनम्। तथा च रजतप्रतिभासः शुक्तिकालम्बनमिति दुर्घटम्। अपि च चक्षुरादीनां समीचीनज्ञानोपजनन-सामर्थ्यमिति कथमेभ्यो मिथ्याज्ञानं भवितुमर्हति। न हि श्यामाकबीजं परिकर्म्मसहस्रेणापि कलमाङ्कुराय कल्पते। दोषसहाया लोचनादयो मिथ्याप्रत्ययमादधत इति चेत्, न, दोषा हि कारणानां सामर्थ्यं निघ्नन्ति, न पुनः कार्य्यान्तरजननसामर्थ्यमादधति, न खलु भृष्टकुटजबीजं न्यग्रोधधानायै (२) कल्पते, किन्तु न करोति 'कुटजबीजं' कुटजधानाम्। अपि च स्वगोचरे व्यभिचारे विज्ञानानां सर्वत्रानाश्वासप्रसङ्गः। तस्मात् सर्वमेव विज्ञानं समीचीनमास्थेयम्। तथा हि रजतमिदमिति द्वे ज्ञाने स्मृत्यनुभवरूपे, तत्रेदमिति पुरोवर्त्तिद्रव्यमात्रग्रहणम्, दोषवशात् तद्गतशुक्तिकात्वसामान्यविशेषस्याग्रहणात्, तावन्मात्रं च गृहीतं सदृशतया संस्कारोद्बोधक्रमेण रजते स्मृतिं जनयति, सा च गृहीतग्रहणस्वभावाऽपि दोषाद् गृहीततांशप्रमोषेण ग्रहणमात्रमव-तिष्ठते। तथा च रजतस्मृतेः पुरोवर्त्तिमात्रग्रहणस्य च मिथः स्वरूपतश्च विषयतश्च भेदाग्रहणात् सन्निहितरजतविषयविज्ञानसारूप्येण इदं रजतमिति भिन्ने अपि ग्रहणस्मरणे अभेदव्यवहारं सामाना-धिकरण्यव्यपदेशं च प्रवर्त्तयतः। क्वचित् पुनर्ग्रहणे एव मिथोऽगृहीतभेदे। यथा पीतः शङ्ख इति। अत्र बहिर्निर्गच्छन्नयनरश्मिवर्त्तिनः पित्तद्रव्यस्य काचस्येवातिस्वच्छस्य पीतत्वं च गृह्यते, पित्तं तु न गृह्यते, शङ्खोऽपि दोषवशाद् गुणरहितः स्वरूपमात्रेण गृह्यते। तदनयोर्गुण-गुणिनोरसंसर्गाग्रहात्सारूप्यात् पीतबिल्वप्रत्ययाविशेषेणाभेदव्यवहारः सामानाधिकरण्यव्यपदेशश्च भेदाग्रहप्रसञ्जिताभेदव्यवहारव्यवधानाच्च नेदं रजतमिति विवेकप्रत्ययस्य बाधकत्वमप्युपपद्यते तदुपपत्तौ च भ्रान्तित्वमपि लोकप्रसिद्धं सिद्धं भवति। तस्माद् यथार्थाः सर्वेऽपि भ्रमाः प्रत्ययत्वात् घटप्रत्ययवदिति प्राप्तम्, एवं प्राप्तेऽभिधीयते—अस्ति तावद्रजतार्थिनो रजतमिति ज्ञाने सति पुरोवर्त्तिद्रव्यप्रवृत्तिः सामानाधिकरण्यव्यपदेशश्चेति सार्वजनीनम्। तत् किं ग्रहणस्मरणयोस्तद्गोचरयोश्च भेदाग्रहाद्भवतु आहोस्विदभेदग्रहात्? न तावच्चेतनो-ऽज्ञानात् प्रवर्त्तते अपि तु ज्ञानात्। पुरोवर्तिवस्तुग्रहणरजतज्ञानादगृहीतभेदं स्वस्वरूपतो विषयतो वा रजतार्थिनं पुरोवर्तिद्रव्ये प्रवर्त्तयतीति चेत्, हन्त भोः किमेतावता पुरोवर्त्ति-वस्तुगोचरं ज्ञानं रजतगोचरं भवति? आहोस्वित्तन्मात्रगोचरमेव? यदि रजतगोचरं पुरोवर्त्ति

(१) ४।२।३३—३५ सूत्रवार्त्तिकं द्रष्टव्यम्। (२) धानायै अङ्कुराय।

## न्यायवार्त्तिकतात्पर्य्यटीका

रजततयाऽगृह्णात्, कथं नान्यथाख्यातिः ? अथ तन्मात्रगोचरम्, को भेदाग्रहस्योपयोगः ? न हि वृक्षमात्रदर्शनं निश्चयेन शिंशपार्थिनं प्रवर्त्तयति, न हि तत्र शिंशपाज्ञानमस्ति, अस्तित्विह रजतविज्ञानमगृहीतभेदमिदमिति ज्ञानेनेति चेत् ? ननु रजतविज्ञानं पुरोवर्तिद्रव्ये न वर्त्तते पुरोवर्त्तिज्ञानं च न रजत इति तत्र पुरोवर्त्तिनि प्रवर्त्तते न रजतार्थी, एवं रजतार्थी यत्र क्वचन प्रवर्त्तेत न नियमेन पुरोवर्त्तिद्रव्ये, न हि तेन तत्र रजतत्वमवगतमिति । अथेदं रजतमिति द्वे ज्ञाने भेदाग्रहादिदं रजतमित्येकज्ञानसदृशे तदुचितं व्यवहारं प्रवर्त्तयतः, यद्येवं तद्रजतमियं शुक्तिरिति भेदावभासिविज्ञानव्यवहारमपि कस्मान्न प्रवर्त्तयतः ? यथैव हि भेदाग्रहादभेदज्ञानसादृश्यम्, एवमभेदाग्रहाद्भिन्नविज्ञानसादृश्यमपि । सोऽयमुभयतो भेदाभेदग्रहसारूप्यात् प्रवृत्तिनिवृत्तिभ्यां युगपदाकृष्यमाणः प्रतिपत्ता कष्टां दशामावेशितः प्रज्ञाशालिभिरतिव्याख्यया ।

स्यादेतत् । विपर्य्ययज्ञानोत्पादेऽपि शुक्तिरजतयोर्भेदाग्रहेऽस्य व्यापार आस्थेयः, अन्यथा गृहीतभेदानामपि विपर्य्ययोत्पादप्रसङ्गात् । तथा च शक्यं तत्रापि वक्तुम्—यथा भेदाग्रहाद्विपर्य्ययज्ञानोत्पाद एवमभेदाग्रहात् कस्मान्न समीचीनज्ञानोत्पाद इति, तत्र यस्तव परिहारः, सोऽस्माकं व्यवहारव्यपदेशयोर्भविष्यति । यथाऽऽहुः अख्यातिवादिनः—येषामपि विपरीतख्यातिस्तेषामप्यज्ञानवासनानिबन्धनो भ्रम इति, मैवम्, ज्ञानहेतूनामज्ञातरूपकार्य्यसम्बन्धानां चक्षुरादीनां दर्शनात्, चेतनव्यवहाराणां त्वबुद्धिपूर्वकाणामप्रतीतेः । बुद्धिपूर्वकत्वे तु विवेकाग्रह उपयुज्यते न व्यवहारव्यपदेशयोरिति युक्तमुत्पश्यामः । यद्यविवेकाग्रहोऽपि तत्परिपन्थी विद्यते इति कुतोऽन्यतरनिबन्धनो व्यवहारः । तस्मात् समारोप एव भेदाग्रह इति सिद्धमेतद्विवादाध्यासितं रजतादिविज्ञानं पुरोवर्तिवस्तुविषयम्, रजतार्थिनस्तत्र नियमेन प्रवर्त्तकत्वात् । यद्यदर्थिनं नियमेन यत्र प्रवर्त्तयति तद्विज्ञानं तद्विषयम्, यथोभयसिद्धं समीचीनरजतज्ञानम्, तथा चैतद्व न तथा चैतत्तस्मात् तथा । यच्चोक्तमनवभासमाना शुक्तिका नालम्बनमिति, तत्र किं शुक्तिकात्वस्य रजतमिति ज्ञानं प्रत्यनालम्बनत्वं साध्यते ? आहोस्विद् द्रव्यमात्रस्य सितभास्वरस्य पुरोवर्त्तिनः ? तत्र पूर्वस्मिन् कल्पे सिद्धसाधनम् उत्तरस्मिन्ननवभासमानत्वमसिद्धम्, इदमिति पुरोवर्तिनो द्रव्यस्याङ्गुल्या निर्देशात् । दृष्टं च दुष्टानामपि कारणानामौत्सर्गिककार्य्यप्रतिबन्धेन कार्य्यान्तरोत्पादकत्वम्, तद्यथा—वेत्रबीजानां दावाग्निदग्धानां कदलीप्रकाण्डजनकत्वम्, भस्मकदुष्टस्य चौदर्य्यस्य तेजसो बहुतरान्नपानपाचकत्वम् । नेदं रजतमिति च प्रत्यक्षबाधकप्रत्ययादपहृतविषयम्, प्रत्ययत्वेन विभ्रमाणां यथार्थत्वानुमानं नोदेतुमर्हति । यथा च प्रमाणाभासव्यभिचारेऽपि प्रमाणे आश्वासः,

### वृत्तिः

निवृत्ते रागद्वेषात्मके दोषे, तदभावाच्च प्रवृत्तेर्धर्माधर्मात्मिकाया अनुत्पत्तौ, तदभावाच्च जन्मनो विशिष्टशरीरसम्बन्धस्याऽभावात् दुःखाभावादपवर्गः ।

## न्यायभाष्यम्

अत्राणे त्राणमिति, सभये निर्भयमिति, जुगुप्सिते अभिमतमिति, हातव्ये अप्रतिहातव्यमिति, प्रवृत्तौ नास्ति कर्म, नास्ति कर्मफलमिति, दोषेषु नायं दोषनिमित्तः संसार इति, प्रेत्यभावे नास्ति जन्तुर्जीवो वा सत्त्व आत्मा वा, यः प्रेयात्, प्रेत्य च भवेदिति, अनिमित्तं जन्म, अनिमित्तो जन्मोपरम इत्यादिमान् प्रेत्यभावः, अनन्तश्चेति, नैमित्तिकः सन्नकर्मनिमित्तः प्रेत्यभाव इति, देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां निरात्मकः प्रेत्यभाव इति। अपवर्गे भीष्मः(१) खल्वयं(२) सर्वकार्य्योपरमः, सर्वविप्रयोगेऽपवर्गे बहु च(३) भद्रकं लुप्यत इति कथं बुद्धिमान् सर्वसुखोच्छेदमचैतन्यममुमपवर्गं रोचयेदिति।

एतस्मान्मिथ्याज्ञानादनुकूलेषु रागः, प्रतिकूलेषु द्वेषः। रागद्वेषाधिकाराच्चाऽसत्ये-(४)र्ष्यामायालोभादयो दोषा भवन्ति। दोषैः प्रयुक्तः शरीरेण प्रवर्त्तमानो हिंसास्तेयप्रतिषिद्धमैथुनान्याचरति, वाचाऽनृतपरुषसूचनाऽसम्बद्धानि, मनसा परद्रोहं परद्रव्याभीप्सां नास्तिक्यं चेति। सेयं पापात्मिका प्रवृत्तिरधर्माय।

अथ शुभा—शरीरेण दानं परित्राणं परिचरणं च, वाचा सत्यं हितं प्रियं स्वाध्यायं चेति, मनसा दयामस्पृहां श्रद्धां चेति। सेयं धर्माय।

अत्र प्रवृत्तिसाधनौ(५) धर्माधर्मौ प्रवृत्तिशब्देनोक्तौ, यथाऽन्नसाधनाः प्राणाः 'अन्नं वै प्राणिनः प्राणा' इति।

## न्यायवार्त्तिकतात्पर्य्यटीका

तथा प्रमाणतोऽर्थप्रतिपत्तावित्यत्रोपदर्शितम्। दिङ्मात्रमत्र दर्शितम्, प्रपञ्चस्तत्त्वसमीक्षायामस्माभिः कृत इत्युपरम्यते।

तदेवमात्मनि मिथ्याज्ञानं व्याख्याय शरीरादिष्वेकादशसु मिथ्याज्ञानं भाष्य एव दर्शितम्, तत्तु स्पष्टत्वान्नोपपादितमस्माभिरित्याशयवानाह (६) शेषमिति। तत्र शरीरादिषु मनःपर्य्यन्तेषु यथायोगं मिथ्याज्ञानं दुःखे सुखमित्यादिना प्रतिपत्तव्यमित्यन्तेन (७) भाष्येणोक्तम्। प्रवृत्त्यादिषु श्रृङ्गग्राहिकयोक्तम्—प्रवृत्तावित्यादिना रोचयेदित्यन्तेन भाष्येण। एवं मिथ्याज्ञानस्य स्वरूपं दर्शयित्वा मिथ्याज्ञानदोषप्रवृत्तिजन्मदुःखानां कार्य्यकारणभावो दोषादीनां स्वरूपं चोक्तम्—

---

(१) "अपवर्गो भीष्मः"। ज-आ। (२) "स खल्वयं"। ज-आ-ग-पादटीका। (३) ल-पुस्तके "च" नास्ति। (४) "असत्ये"ति स्थले "असूये"ति ज-भा-आ-वि-टि। (५) प्रवृत्तिः साधनं ययोस्तौ, प्रवृत्तिजन्यौ इत्यर्थः। "यथा अन्नसाधनाः प्राणाः" इति वचनमात्रस्थलेऽपि अनयैव रीत्या अर्थो बोध्यः। (६) ७२पृः—वार्त्तिककार आह—शेषमिति। (७) अत्र "अप्रतिहातव्यमित्यन्तेन" इत्येवं पाठे सत्येव भाष्यग्रन्थेन सङ्गतिः सम्भवतीति सुधीभिर्विभावनीयम्।

## न्यायभाष्यम्

सेयं प्रवृत्तिः(१) कुत्सितस्याऽभिपूजितस्य च जन्मनः कारणम्। जन्म पुनः शरीरेन्द्रियबुद्धीनां निकायविशिष्टः प्रादुर्भावः, तस्मिन् सति दुःखम। तत्पुनः प्रतिकूलवेदनीयं बाधना पीडा ताप इति। त(२) इमे मिथ्याज्ञानादयो दुःखान्ता धर्मा अविच्छेदेनैव(३) प्रवर्तमानाः संसार इति।

## न्यायवार्त्तिकम्

त इमे दुःखादयो मिथ्याज्ञानपर्य्यवसाना अविच्छेदेन प्रवर्त्तमानाः संसार इति। कः पुनरयं संसारः? दुःखादीनां कार्यकारणभावः। स चानादिः, पूर्वापरकालानियमात्। न च शक्यं वक्तुं पूर्वं दुःखादयः पश्चान्मिथ्याज्ञानोत्पत्तिरिति, पूर्वं वा मिथ्याज्ञानं पश्चाद् दुःखादय

## न्यायवार्त्तिकतात्पर्य्यटीका

एतस्मादित्यादिना ताप इत्यन्तेन भाष्येण। संप्रति मिथ्याज्ञानाद्युच्छेदादपवर्ग इति वक्ष्यति, (४) तच्चायुक्तम्, सत्यपि तदुच्छेदे संसारतादवस्थ्यात्। न ह्यन्योच्छेदेऽन्यस्योच्छेदः। तथा च नापवर्ग इति वक्ष्यमाणमर्थमुपपादयितुमुक्तं भाष्यकृता त इमे मिथ्याज्ञानादय इति। तद्वार्तिककारो व्याचष्टे—त इमे दुःखादय इति। भाष्यकारोक्तक्रमाद्विपरीतक्रमाभिधानं वार्त्तिककृत एवं सूत्रकारोक्तक्रमाद्विपरीतक्रमाभिधानं भाष्यकृतो दुःखादीनां मिथ्याज्ञानपूर्वकत्वेन मिथ्याज्ञानस्य दुःखादिपूर्वकत्वेनानादित्वं दर्शयितुम्। पृच्छति—कः पुनरिति। यद्येत एव संसारस्तर्हि सूत्रकारः प्रमेयसूत्रे कस्माद् दुःखादिभ्यः पृथक् प्रेत्यभावं संसारापरनामानमुपादत्ते? तस्मादेभ्योऽन्य एव संसार इति भावः। उत्तरम्—दुःखादीनामिति, नैषां स्वरूपमपि तु कार्य्यकारणभाव इत्यर्थः। क्रमव्यतिक्रमे तात्पर्य्यमाह—स चानादिरिति। अत्र हेतुमाह—पूर्वापरेति। दुःखजन्मप्रवृत्तिदोषा विषयः, ते न तावन्मिथ्याज्ञानस्य कारणम्, एवमसति जन्मनि मिथ्याज्ञानस्यानुत्पत्तेरविषयोऽपि जन्म मिथ्याज्ञानस्य कारणम्। एवं विना प्रवृत्तिं जन्माभावाज् जन्मद्वारेण प्रवृत्तेरपि मिथ्याज्ञानकारणत्वम्। प्रवृत्तिद्वारेण च दोषाणां तथा, मिथ्याज्ञानाद् दोषाः, दोषेभ्यः प्रवृत्तिः, प्रवृत्तेर्जन्म, जन्मनो दुःखम्। यद्यपि प्रवृत्तिरेव साक्षाद् दुःखहेतुस्तथाऽप्यनायतनस्य तस्यानुत्पत्तेरन्तरा जन्म करोति। अथ सैव दुःखमिति। अनादित्वाच्च नान्योन्याश्रयत्वं चक्रकं वा बीजाङ्कुरसन्तानयोरिव। संप्रति बीजापाय इव तज्जन्याङ्कुरप्रवाहनिवृत्तिर्मिथ्याज्ञानापाये तज्जन्यप्रवृत्तिजन्मदुःखमिथ्याज्ञानादिप्रवाहनिवृत्तिः कारणनिवृत्तौ कार्य्यनिवृत्तेरिति

(१) "प्रवृत्तिः" ज-ञा नास्ति। (२) "त" ज नास्ति। (३) वि-टि-पु "एव" नास्ति। (४) "यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति" इत्यादिना "निःश्रेयसमिति" इत्यन्तेन ग्रन्थेन भाष्यकारो वक्ष्यति।

## न्यायभाष्यम्

यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति, तदा मिथ्याज्ञानापाये दोषा अपयन्ति, दोषापाये

## न्यायवार्त्तिकम्

इति न शक्यं वक्तुमिति। यदा तु तत्त्वज्ञानान्मिथ्याज्ञानमपैति। कथमपायः? समानविषये तयोर्विरोधात्। यस्मान्मिथ्याज्ञानं तत्त्वज्ञानं च एकस्मिन् विषये विरुध्येते, वस्तुनो द्वैरूप्यासम्भवात्। न ह्येकं वस्तु द्विरूपं भवति। तस्मान्मिथ्याज्ञानं तत्त्वज्ञानेन निवर्त्यत इति। कथं पुनः पूर्वोत्पन्नं मिथ्याज्ञानं पश्चादुत्पद्यमानेन तत्त्वज्ञानेन निवर्त्यते? मिथ्याज्ञानस्याऽसहायत्वात्, मिथ्याज्ञानमसहायमतो निवर्त्यते। सम्यग्ज्ञानस्य च विषयः

## न्यायवार्त्तिकतात्पर्य्यटीका

कथनपरं भाष्यमनुभाष्याक्षिपति—यदा तु तत्त्वज्ञानादिति। अपायोऽपि तत्त्वज्ञानान्मिथ्याज्ञानस्य स्वरूपतो वा विषयतो वा फलतो वा स्यात्? न तावत् स्वरूपतः, तस्याशुतरविनाशिनः संस्काराद्वा ज्ञानान्तराद्वा अपायस्य तत्त्वज्ञानसाधारण्येन तस्यापि बाध्यत्वप्रसङ्गात्। नापि विषयतः, न हि शुक्तिकाज्ञानं रजतज्ञानस्य रजतविषयतामपहर्त्तुमुत्सहते, जातं हि तद्रजतं विषयीकृत्य। यथाऽऽहुः—गृहीत्वाऽर्थं गताश्चौराः कस्तानाच्छेत्तुमर्हतीति। नापि फलमपहरति, उपदर्शितो हि तेनार्थः प्रवर्त्तितश्च तत्र पुरुषः। तदिदमुक्तम्—कथमपाय इति। उत्तरं—समानविषय इति। यस्मिन्नेव हि पुरोवर्त्तिनि द्रव्ये पूर्वेण रजतत्वमासञ्जितमत्रैवोत्तरं तद्विरुद्धशुक्तिकात्वं धर्म्ममुपनयति। तथा च पूर्वज्ञानस्य मिथ्यात्वमदर्शयत्तज्जनितां प्रवृत्तिं विघटयत् फलमस्यापहरतीति भावः। न तु समानविषयतामात्रेण विरोधः, मा भूदेकस्मिन्नात्मनि नित्यत्वविभुत्वज्ञानयोर्विरोध इत्यत आह—यस्मादिति। तत्त्वमिथ्यात्वकथनेन मिथो विरुद्धधर्म्मप्रसञ्जनं सूचयति। नित्यत्वविभुत्वज्ञानयोस्तु समानविषययोरप्यविरुद्धधर्म्मोपस्थापकतया तत्त्वज्ञानत्वादित्यर्थः। कस्माद्विरोध इत्यत आह—वस्तुन इति। परस्पराभावधर्म्मिणोरेकत्र समवाये नेदं स्वाभाविकं नानात्वं क्वचिदपीत्यद्वैतप्रसङ्ग इति भावः। उपसंहरति—तस्मादिति। अत्र देशयति—कथं पुनरिति। प्रथममुत्पन्नं मिथ्याज्ञानमनुपजातविरोधि, तेनापहृतविषयं पश्चात्तनं तत्त्वज्ञानमुदेतुमेव नोत्सहते प्रागेव तु मिथ्याज्ञानं बाधितुमिति भावः। उत्तरं—मिथ्याज्ञानस्येति। तत्र हि प्रथममुपजातेनानुपजातविरोधिना ज्ञानेनोत्तरं बाध्यते, यत्र पूर्वापेक्षमुत्तर-

## वृत्तिः।

यद्यपि ज्ञानिनोऽपि रागादयस्तिष्ठन्ति, तथाऽप्युत्कटरागाद्यभावे तात्पर्य्यम्।

यद्यपि दोषाणां न धर्मादिजनकत्वम्, तथाऽपि तत्तद्दोषाणां तत्तद्धर्मादिहेतुत्वाद्दोषापाये धर्माद्यपायः।

## न्यायवार्त्तिकम्

सहायो भवति। कस्मात्? तथात्वेनावस्थानात्, तथाभूतोऽसौ विषयो यथा तत्र तत्त्वज्ञानमिति। प्रमाणान्तरानुग्रहाच्च आगमानुमानादिप्रमाणं तत्त्वज्ञानस्य सहायो भवति। यदा ह्ययमनुमानागमयोः प्रतिसंहितयोर्विषयं भावयति(१) समाहितोऽनन्यमनाश्चिन्तयति ततोऽस्य विपच्यमाने ध्याने विविक्तायां ध्यानभावनायां तस्मिन्नर्थे तत्त्वप्रतिबोधि ज्ञानं प्रत्यक्षमुत्पद्यत इति। सोऽयमागमानुमानप्रत्यक्षाणां विषयं प्रतिपद्यमानस्तत्त्वमेतदिति प्रतिपद्यते। तत्त्वप्रतिपत्तेरस्य

## न्यायवार्त्तिकतात्पर्य्यटीका

मुपजायते। तत् खलु पूर्वविरोधे न जायते। अजातं सत् कथं पूर्वं बाधेत, यथा प्रत्यक्षादिविरुद्धमनुमानम्। इह तु द्वे अपि ज्ञाने दोषोपहतेन्द्रियार्थसन्निकर्षजन्मनी परस्परानपेक्षे, तत्र पूर्वमनुपजातविरोधित्वात् किं बाधताम्, अनागतस्याप्राप्तत्वेन बाधितुमशक्यत्वात्, स्वकारणबलादासाद्यमानजनेश्चोत्पत्तिविरोधस्याशक्यत्वात्। तदेवमुत्पन्नमुत्तरमुपजातविरोधितया पूर्वबाधात्मकं सन्नानुपमृद्य पूर्वमुत्पन्नं भवतीति पूर्वं बाधते। तत्तु न पूर्वेण नाप्यन्येन केनचिदिति भवत्यर्थसहायम्। अर्थासहायं च मिथ्याज्ञानम्, तदनेन बाध्यत्वाबाध्यत्वे मिथ्याज्ञानतत्त्वज्ञानयोरुपलक्ष्येते। तदिदमन्यैरप्युक्तम्—

पूर्वात्परबलीयस्त्वं तत्र नाम प्रतीयताम्।
अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत्॥ इति।

तथा चानुपजातविरोधित्वमत्र बाध्यत्वे हेतुः, उपजातविरोधित्वं च बाधकत्व इति। यदुपलक्षणार्थं ससहायत्वाभिधानं तज्जिज्ञासुः पृच्छति—कस्मात्? उत्तरम्—तथात्वेनेति। अनेनाबाध्यत्वं तत्त्वज्ञानस्योक्तमिति। न केवलमबाध्यत्वं दृढमूलत्वमपि तत्त्वज्ञानस्येत्याह—प्रमाणान्तरानुग्रहाच्च। अन्तरशब्दो विशेषवचनः। आत्मादितत्त्वज्ञानं हि फलं प्रमाणविशेषैरागमानुमानप्रत्यक्षैरनुगृह्यते, तस्माद् दृढमूलत्वात्तदपि तत्त्वज्ञानं मिथ्याज्ञानं निवर्त्तयतीत्यर्थः। तदेव विभजते—आगमेति। एतदेव स्फोरयति—यदा हीति। आगमजेन हि ज्ञानेन प्रमेयं गृहीत्वा शास्त्रीयेण च न्यायविज्ञानेनानुमानापरनाम्ना व्यवस्थाप्य भावयतो यदात्मनः सन्निकर्षाद्योगजधर्म्मसहायादुत्पद्यते तत्त्वविषयसाक्षात्कारः प्रत्यक्षफलम्, तत्र त्रयाणामपि प्रमाणानां प्रतिसन्धानमस्तीति दृढमूलत्वात् तेन मिथ्याज्ञानं बाध्यते। विषयं विभावयतीति व्याचष्टे—समाहित इति। समाहितत्वेन चेतसो धारणां दर्शयति। अनन्यमना इति प्रत्याहारम्, चिन्तयतीति तत्त्वविषयबुद्धिधाराविपच्यमानत्वम्। ध्यानस्य तत्त्वज्ञानस्य स्फुटतरारम्भावस्था ध्यानजनितभावना संस्कारो ध्यानभावना, तस्या विवेको मिथ्याज्ञानवासनायाः। पूर्वं हि मिथ्याज्ञानवासना तत्त्वज्ञानवासना यावत्यासीत् अथाभ्यासवशात् तुल्यबलाऽभवत् अथेयमेव बलीयसी तत्त्वज्ञानवासनासंभिन्ना मिथ्याज्ञानवासनया सहानुवर्त्तते, संप्रति तु तत्त्वज्ञानवासना या अत्यन्तबलीयसी समूलकाषं कषित्वा मिथ्याज्ञानवासनाया भवति विविक्ता तत्त्वज्ञानवासना (२) तस्यामित्यर्थः। नन्वनेन

(१) "विभावयती"ति तात्पर्य्यं। (२) अत्र पुनः "तत्त्वज्ञानवासना"पदम् अधिकमिति मन्यते।

## न्यायभाष्यम्

प्रवृत्तिरपैति, प्रवृत्त्यपाये जन्माऽपैति, जन्मापाये दुःखमपैति, दुःखापाये च आत्यन्तिकोऽपवर्गो निःश्रेयसमिति।

## न्यायवार्त्तिकम्

मिथ्याज्ञानं निवर्त्तत इति। निवृत्ते च मिथ्याज्ञाने न पुनस्तद्विषयं मिथ्याज्ञानमुत्पद्यत इति विरोधादित्युक्तम्। कः पुनर्विरोधः? सहासम्भवः। मिथ्याज्ञानाभावे रागादयोऽपयन्तीति कार्य्यकारणभावादेव। कारणं मिथ्याज्ञानं कार्य्याः रागादयः। न च कारणं विना कार्य्यं भवितुमर्हति। ये तावदनुत्पन्ना रागादयस्ते कारणाभावान्माभूवन्। ये तूत्पन्नास्ते कथम्? तेषामपि वैराग्यान्निवृत्तिः। किं पुनर्वैराग्यम्? भोगानभिष्वङ्गलक्षणमित्युक्तम्। असक्तिश्च सक्तिं बाधते। तत्पुनर्वैराग्यं कथं भवति? तत्त्वज्ञानाद्विषयदोषदर्शनादिति। दोषाभावे प्रवृत्त्यभावः।

## न्यायवार्त्तिकतात्पर्य्यटीका

क्रमेण निवर्त्ततां मिथ्याज्ञानम्, निवृत्तं तु साक्षात्कारसमयेऽपि कस्मात् पुनः स्ववासनावशान्न जायते? न खलु मिथ्याज्ञानवासना अनादिकालप्रवृत्ता आदिमता तत्त्वज्ञानेन तद्वासनया शक्या निवर्त्तयितुमित्यत आह—निवृत्ते चेति। तावदेव पुंसां बुद्धयोऽस्थिराः भ्राम्यन्ति स्वोचितसंस्कारजाः, न यावत्तत्त्वविवेचनया यावद्भूतमर्थं साक्षात् कुर्वन्ति। अथ साक्षात्कृते तत्र स्थिरपदा भवन्ति, क्षिण्वन्ति च सवासनान्मिथ्याप्रत्ययान्। भूतार्थपक्षपातो हि बुद्धेः स्वभावः। यदाहुर्बाह्या अपि—

निरुपद्रवभूतार्थस्वभावस्य विपर्य्ययैः।
न बाधो यत्नवत्त्वेऽपि बुद्धेस्तत्पक्षपाततः॥ इति।

तस्माद् मिथ्याज्ञानस्य न तु पुनरुत्पाद इति। उक्तमेवार्थं स्मृतिदार्ढ्याय पृच्छति—कः पुनरिति। उक्तं स्मारयितुमुत्तरं—सहेति। भवतु मिथ्याज्ञानस्य निवृत्तिः सवासनस्य, ततोऽपि किम्? इत्यत आह—मिथ्याज्ञानेति। अत्र पृच्छति—ये तावदिति। उत्तरं—तेषामपीति। वैराग्यस्वरूपं पृच्छति—किं पुनरिति। रागाभावो वैराग्यम्, न च तस्मादेव रागादीनामभाव इति भावः। उत्तरम्—भोगानभिष्वङ्गलक्षणमित्युक्तम्। विषयदोषपरिभावनापरिपाकात् खलु विषयपरित्यागेच्छा भवति, तया विरोधिगुणेन विषयतृष्णा तत्परिपन्थिनि विद्वेषश्च तदधिकरणाश्चेर्ष्यादयो निवर्त्तन्ते। असक्तिर्विषयपरित्यागेच्छा, वशितया च स्वयमुपनतेषु विषयेषु माध्यस्थ्यदर्शनम्।

## वृत्तिः

वस्तुतो विनाऽपीच्छां गङ्गाजलसंयोगादिना(१) धर्मादिसम्भवाद् व्यभिचारः, तस्मान्मिथ्याज्ञानवासनैवाऽत्र दोषः, तस्याश्च मिथ्याज्ञाननाशात् तत्कालीनतत्त्वज्ञानवासनातो वा नाश इत्यपि वदन्ति।

---

(१) "संयोगादितो" इति ञा-पाठः।

## न्यायवार्त्तिकम्

यदाऽस्य सम्यग्ज्ञानवतो दोषा अपयन्ति अथ दोषाभावे प्रवृत्तिर्निवर्त्तत इति। का पुनरियं प्रवृत्तिः ? धर्माधर्मौ, जन्मसाधनत्वात्। नास्मिन् सूत्रे क्रिया प्रवृत्तिशब्देनोच्यते, अपि तु धर्माधर्मौ, तत्साधनभावात्। जन्मसाधनं धर्माधर्मौ, न प्रवृत्तिः, क्रियायाः क्षणिकत्वात्। धर्माधर्मयोस्तु प्रवृत्तिशब्दः प्रवृत्तिसाधनत्वादिति। यौ तावदनागतौ धर्माधर्मौ तयोर्दोषाभावादभावो युक्तः। यौ तौ वर्त्तमानौ तयोर्न युक्तः। किं कारणम् ? निर्दोषस्यापि भावात्, निर्दोषोऽप्ययमवतिष्ठते धर्माधर्मयोश्च फलं भुङ्क्ते इति। न। अनागतयोः साधनाभावेनेष्टत्वात्। न ब्रूमो यौ वर्त्तमानौ धर्माधर्मौ तौ दोषाभावान्न भवत इति, अपि तु यावनागतौ तौ कारणाभावान्नोत्पद्येते इति। वर्त्तमानयोः पुनः कार्य्यावसानात् प्रक्षयः, यौ तौ वर्त्तमानौ धर्माधर्मौ तयोर्यदावसानिकं कार्य्यं तेन व्यावृत्तिः। प्रवृत्त्यभावे जन्मापायः, अत्रापि धर्माधर्मयोर्व्यावृत्तयोर्यदन्यच्छरीरं तन्न भवति, न पुनर्वर्त्तमानं न भवतीति। अथ वर्त्तमानस्य कथं निवृत्तिः ? संस्कारक्षयात्, यावदस्य स्थितिहेतुः संस्कारो धर्माधर्मसमाख्यातोऽवतिष्ठते तावदवतिष्ठते इति। जन्माभावे दुःखाभाव इति निरायतनस्यानुत्पत्तेः, न हि निरायतनं दुःखमुत्पत्तुमर्हति। एतच्च तदाहुः— यावदात्मनि धर्माधर्मौ तावदायुः शरीरमिन्द्रियं विषयाश्चेति। सोऽयं मिथ्याज्ञानादिकलापेन(१) सर्वतो वियुक्तो विमुक्त इत्युच्यते॥

## न्यायवार्त्तिकतात्पर्य्यटीका

दोषाभावे किं भवतीत्यत आह—दोषाभावे इति। पृच्छति—का पुनरियमिति। यदि हि जन्मनः प्रवृत्तिः कारणं स्यात् ततो जन्मनिवृत्त्यै तन्निवृत्तिरर्थ्येत। न पुनरसौ क्षणिका सती आमुष्मिकाय जन्मने कल्पते, अतः किमर्थं निवर्त्यत इति भावः। विदिताभिप्राय उत्तरमाह—धर्म्माधर्म्मौ। कस्मात् पुनरुपचारः ? इत्यत आह—जन्मसाध्यत्वात्(२)। एतद्विभजते—नास्मिन्निति। उपचारप्रयोजनं दर्शयित्वा निमित्तमाह—धर्म्माधर्म्मयोस्त्विति। वर्त्तमानानागतयोरविशेषेण दोषापायान्निवृत्तिरुक्तेति भ्रान्त्या देशयति—यौ तावदनागताविति। परिहरति—न, अनागतयोरिति। अनागताभिप्रायेणैतदित्यर्थः। यद्येवं वर्त्तमानयोः कुतः प्रक्षय इत्यत आह—वर्त्तमानयोरिति। अस्तु प्रवृत्तेरभावस्ततः किम् ? इत्यत आह—प्रवृत्त्यभाव इति। उक्तं विवेकमिहापि योजयति—अत्रापीति। वर्त्तमाननिवृत्तिहेतुं पृच्छति—अथेति। उत्तरं—संस्कारेति। श्रुतिः—तावदेवास्य चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये इति। किं जन्माभावे सिध्यतीत्यत आह—जन्माभाव इति। अत्रैव वृद्धसंप्रतिपत्तिमाह—एतच्च तदाहुरिति। तदेतच्चेति योजना। प्राणनस्य कालभेदावच्छेद आयुः। स्यादेतत्, महाप्रलयेऽपि मिथ्याज्ञानादिना दुःखान्तेनास्ति वियोग

(१) "मिथ्याज्ञानादिना" इति ता०पाठः। (२) "जन्मसाधनत्वा"दिति वार्त्तिकपाठः।

## न्यायभाष्यम्

तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्ययेण व्याख्यातम। आत्मनि—तावदस्तीति, अनात्मनि—अनात्मेति, एवं दुःखे अनित्ये अत्राणे सभये जुगुप्सिते हातव्ये च यथाविषयं वेदितव्यम्, प्रवृत्तौ—अस्ति कर्म्म, अस्ति कर्मफलमिति, दोषेषु—दोषनिमित्तोऽयं संसार इति, प्रेत्यभावे खलु—अस्ति जन्तुर्जीवः सत्त्वः आत्मा वा, यः प्रेत्य भवेदिति, निमित्तवज्जन्म, निमित्तवान् जन्मोपरम इत्यनादिः प्रेत्यभावोऽपवर्गान्त इति, नैमित्तिकः सन् प्रेत्यभावः प्रवृत्तिनिमित्त इति, सात्मकः सन् देहेन्द्रियबुद्धिवेदनासन्तानोच्छेदप्रतिसन्धानाभ्यां प्रवर्त्तत इति, अपवर्गे(१) शान्तः खल्वयं सर्वविप्रयोगः सर्वोपरमोऽपवर्गः, बहु च कृच्छ्रं घोरं पापकं लुप्यत इति कथं बुद्धिमान् सर्वदुःखोच्छेदं सर्वदुःखासंविद(२)

## न्यायवार्त्तिकम्

तत्त्वज्ञानं तु खलु मिथ्याज्ञानविपर्य्ययेण व्याख्यातम्। स्वरूपतस्तु यथाव्यवस्थितपदार्थाधिगतिरित्युच्यते। कस्मात पुनरयं हाता सुखदुःखे जहाति? न पुनः सुखमादाय दुःखं जहातीति?। विवेकहानस्याशक्यत्वात्। न हि विवेकहानं शक्यं कर्तुम्, अतः सुखमुपभोक्तुकामेन दुःखमपि भोक्तव्यम्। दुःखं वा जिहासता सुखमपि हातव्यम्, सविषान्न-

## न्यायवार्त्तिकतात्पर्य्यटीका

इति तत्रापि मुक्तिप्रसङ्ग इत्यत आह—सोऽयं मिथ्याज्ञानादिनेति। सर्व्वत इति। तृतीयार्थे तसिः सर्व्वेणेति। न च प्रलयावस्थायां सर्व्वेण वियोगः, कर्म्माविद्यावासनयोरविनाशात्। मुक्तौ तु तयोरपि विनाशः। कर्म्मवासना सर्व्वकार्य्याणामुत्पादिकाऽवस्थापिका च, तन्निवृत्तौ शरीरादिवत्तत्त्वज्ञानसंस्कारस्यापि प्रलय इत्यशेषविशेषगुणविमुक्तो मुक्त इत्युच्यत इति सिद्धम्।

स्यादेतत्, तत्त्वज्ञानात् मिथ्याज्ञानाभाव इत्युक्तम्। किं पुनस्तत्त्वज्ञानमित्यत उक्तं भाष्यकृता—तत्त्वज्ञानं त्विति। तदनुभाष्य सर्व्वेषां ज्ञानानां भाष्योक्तानामनुगतमेकं स्वरूपमाह—स्वरूपतस्त्विति। चोदयति—कस्मादिति। नो खल्वयं प्रेक्षावतां समाचारो यद् दुःखभिया सुखपरित्याग इति, अपि तु सुखं दुःखाद्विभिद्योपाददते दुःखं च वर्जयन्ति। न हि मृगाः सन्तीति शालयो नोप्यन्ते, भिक्षुकाः सन्तीति स्थाल्यो नाधिश्रीयन्त इति। उत्तरम्—विवेकहानस्येति। यद्यपि सुखदुःखे भिन्ने, तथाप्यनित्यत्वकृतकत्ववत् परस्परानुषक्ते इति न खलु सुखस्य केवलस्योपादानं दुःखस्य वा केवलस्य परिवर्ज्जनं शक्यमित्यर्थः। कः पुनरयमनु-

(१) "अपवर्गः" ज-भा। (२) "संविदपवर्गम्" वि-टि-ज।

## न्यायभाष्यम्

मपवर्गं न रोचयेदिति, तद्यथा मधुविषसम्पृक्तान्नमनादेयमिति, एवं सुखं दुःखानुषक्तमनादेयमिति ॥ २ ॥

त्रिविधा चाऽस्य शास्त्रस्य प्रवृत्तिः,—उद्देशो लक्षणं परीक्षा चेति। तत्र

## न्यायवार्त्तिकम्

वदिति। सुखं दुःखानुषक्तमनादेयमिति। अनुषङ्गोऽविनाभावः, यत्रैकं तत्रेतरदिति। समाननिमित्तता वानुषङ्गः, यान्येव सुखसाधनानि तान्येव दुःखसाधनानीति। समानाधारता वाऽनुषङ्गः, यत्र सुखं तत्र दुःखमिति। समानोपलभ्यता वानुषङ्गः, येन सुखमुपलभ्यते तेन दुःखमपीति ॥ २ ॥

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरिति भाष्यम्। प्रवृत्तेस्त्रैविध्यं कुतः? अर्थस्य तथा-

## न्यायवार्त्तिकतात्पर्य्यटीका

षङ्गो यतो विवेकहानमशक्यमित्यत आह—अनुषङ्गोऽविनाभावः। तत्स्वरूपमाह—यत्रैकं सुखं वा दुःखं वा, तत्रेतरत् सुखं वा दुःखं वा(१)। तदनेनानित्यत्वकृतकत्वयोरिव सुखदुःखयोरविनाभावो दर्शितः, न चाविनाभावो विना सम्बन्धादिति तत्सिद्धये सम्बन्धविकल्पानाह—समाननिमित्तता वा अनुषङ्गोऽविनाभावः, वाशब्दश्च वक्ष्यमाणसम्बन्धान्तरापेक्षया। अत्र च शरीराद्यपेक्षया समाननिमित्तता, न तु धर्म्माधर्म्मापेक्षया, तयोरसाधारण्यादिति मन्तव्यम्। तयोरविनाभावसिद्ध्यर्थं सम्बन्धान्तरमाह—समानाधारता वा। अपरं सम्बन्धान्तरमाह—समानोपलभ्यता वा। मनोगोचरत्वमुभयोः, ततश्च सिद्धोऽविनाभावापरनामाऽनुषङ्ग इति। यत्रैकं तत्रेतरदिति वा—यत्र यस्मिन्निमित्ते सतीति, वा यत्राधार इति वा यत्रोपलब्धिसाधने सतीति व्याख्येयम्। इति सूत्रसमाप्तिं सूचयति ॥ २ ॥

तदेवं प्रमाणादिपदार्थतत्त्वज्ञानस्य निःश्रेयससम्बन्ध उक्तः परीक्षितश्च। तत्रैतत् स्यात्—स्वपदेभ्यः प्रमाणादयः पदार्थास्तत्त्वतो ज्ञाता यथायथं मिथ्याज्ञाननिवृत्तिक्रमेणापवर्गे उपयोक्ष्यन्ते, कृतमुपरितनेन प्रबन्धेन इत्यत उक्तं भाष्यकृता—त्रिविधा चास्येति। न नामधेयमात्रात् प्रमाणादीनां तत्त्वज्ञानं

## वृत्तिः

यद्यपि दुःखापायान्नाऽपवर्गः, किन्तु स एव सः, तथाप्यभेद एव तत्र पञ्चम्यर्थः। अपवर्गपदं वा तद्व्यवहारपरम्। अनन्तरपदेन जन्मान्तरमेव परामृश्यत इति तु न व्याख्यानम्, दुःखपदवैयर्थ्यापत्तेः। दुःखानुत्पत्तेश्चरमदुःखध्वंसप्रयोजकत्वं कल्प्यत इत्याशयेनेदमित्यपि कश्चित् ॥ २ ॥

इति न्यायसूत्रवृत्तौ सप्रयोजनाभिधेयप्रकरणम् ॥ १ ॥

---

(१) "तत्रेतरत्—दुःखं वा सुखं वा" इत्येवं पाठ एव भवितुमुचितः।

## न्यायभाष्यम्

नामधेयेन पदार्थमात्रस्याऽभिधानमुद्देशः। तत्रोद्दिष्टस्य तत्त्व(१)व्यवच्छेदको धर्म्मो लक्षणम्। लक्षितस्य यथालक्षणमुपपद्यते न वेति प्रमाणैरवधारणं परीक्षा। तत्रो-

## न्यायवार्त्तिकम्

भावात्। नामी पदार्था वक्त्रा त्रेधा व्यवस्थाप्यन्ते एवं भवतेति, किन्त्वर्थ एवायं तथाभूतो येन त्रेधा भवतीति। नामधेयेन पदार्थमात्राभिधानमुद्देश इत्ययुक्तम्, घ्राणादिसूत्रव्याघातात्। "घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणी"ति लक्षणमुक्तम् (२), न चेदं नामधेयेनोद्देशमात्राद्भिद्यते। मात्रग्रहणसामर्थ्यादप्रसङ्गः पदार्थमात्राभिधानमित्युक्तम्। न च घ्राणादीनां पदार्थाभिधानमात्रत्वं

## न्यायवार्त्तिकतात्पर्य्यटीका

भवति, अपि तु लक्षणपरीक्षाभ्याम्, इत्यस्ति प्रबन्धस्योत्तरस्योपयोग इति भाष्यार्थः। तदेतद्भाष्यमनुभाष्य पृच्छति—प्रवृत्तेरिति। यदि पुरुषकल्पनामात्रात् त्रैविध्यमथानन्त्यमेव कस्मान्न भवति, सर्व्वत्र तस्य सुलभत्वादिति भावः। उत्तरम्—अर्थस्य तथाभावात्। अर्थस्य प्रयोजनस्य साक्षाच्छास्त्रकार्य्यस्य तत्त्वज्ञानलक्षणस्य तथैव त्रिविधतयैव शास्त्रप्रवृत्त्या भावात्। तथा हि—लक्षणं नाम व्यतिरेकिहेतुवचनम्, तद्धि समानासमानजातीयेभ्यो विभिद्य लक्षणं व्यवस्थापयति, न चास्य धर्म्मि(३)दर्शनमन्तरेण पक्षधर्म्मता सिध्यतीति तदुपदर्शनाय नामधेयमात्रेण धर्म्मिणामुद्देशः। यद्यपि च प्रतिलक्षणमुद्दिष्टा एव धर्म्मिणः, तथाऽपि शास्त्राभिसम्बन्धपरादपि वाक्यात् समधिगम्यन्त इत्युद्देशोऽप्युक्तः। न चापरीक्षितो हेतुर्व्यतिरेकी चतूरूपो भवतीति परीक्षाऽप्यवश्यं कर्त्तव्या, तस्मात्तत्त्वज्ञानस्यार्थस्य तथाभावात् त्रैविध्यमिति, तदेव विभजते—नामी पदार्था इति। किं त्विति। अर्थः तत्त्वज्ञानं तथाभूतं येनार्थेन हेतुना शास्त्रस्य प्रवृत्तिस्त्रेधा भवति। उद्देशस्वरूपप्रतिपादनपरं भाष्यमनुभाष्याक्षिपति—नामधेयेनेति। परिहरति—मात्रग्रहणसामर्थ्यादिति। यद्यपि प्रमाणादिशब्दा अपि कारकशब्दा एव, तथाऽप्युद्देशसमये तदर्थानां सदपि कारकत्वमविवक्षितम्, अपि तु प्रातिपदिकार्थमात्रम्। घ्राणादिसूत्रे तु लक्षणपरे कारकत्वं विवक्षितम्, अन्यथा लक्षणत्वायोगादित्यदोषः। अत्र यद्यपि सूत्रकारेण संशयप्रमाणप्रमेयेषु परीक्षा साक्षात् कृता, न प्रयोजनादिषु, तथाऽपि तत्करणादेव प्रयोजनादिपरीक्षाऽपि सूचिता सूत्रकारेणेति त्रिविधेत्युक्तम्। अत एव भाष्यकारः सर्व्वत्रैव परीक्षामावर्त्तयत्। स्यादेतत्। विभागपरमेतत् सूत्रमिति वक्ष्यति, न च विभागो न्यूनाधिकसंख्याव्यवच्छेदार्थं एकं किंचिदुपसंग्राहकमन्तरेण, न च प्रमाणत्वादन्यत्तदुपसंग्राहकम्, न चेदमलक्षितमुपसंगृह्णाति न चैतत् सूत्रमस्य लक्षणपरम्, विभागपरत्वादिति शङ्कानिराकरणपरं भाष्यं तत्रोद्दिष्टस्येति, तस्यार्थः—यद्यपि विभागपर-

(१) "अतत्त्व" इति वि-ज-धा। (२) १।१।१२ सूत्रं द्रष्टव्यम्। (३) आदर्शे तु "धर्म्म" इति।

## न्यायभाष्यम्

दिष्टस्य प्रविभक्तस्य लक्षणमुच्यते, यथा—प्रमाणानां प्रमेयस्य च। उद्दिष्टस्य लक्षितस्य च विभागवचनम्, यथा—छलस्य 'वचनविघातोऽर्थविकल्पोपपत्त्या च्छलम्', 'तत्त्रिविधम्' (१।२।१०-११) इति। अथोद्दिष्टस्य विभागवचनम्—

### (सू)—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि ॥ ३ ॥

## न्यायवार्त्तिकम्

कारकशब्दत्वात्, कारकशब्दा एते घ्राणादीति, तस्मान्नोद्देशप्रसङ्गः। उद्दिष्टस्य विभागो द्वेधा भवति—लक्षितस्यालक्षितस्य। लक्षितस्य छलादेः, अलक्षितस्य प्रमाणादेरिति। अथोद्दिष्टविभागद्वारेण सूत्रम्—प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति।

सूत्रार्थो निगदेनैव व्याख्यातः। उद्दिष्टविभागानर्थक्यम्, व्याघातात्। त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्युक्तम्, उद्दिष्टविभागश्च न त्रिविधायां शास्त्रप्रवृत्तावन्तर्भवतीति। तस्मादुद्दिष्टविभागो न युक्तः। न, उद्दिष्टविभागस्योद्देश एवान्तर्भावात्। उद्दिष्टविभाग उद्देश एवान्त-

## न्यायवार्त्तिकतात्पर्य्यटीका

मेतत् सूत्रम्, तथाऽपि प्रमाणपदसमभिव्याहृतं सत् सामर्थ्यात् प्रमाणत्वमपि लक्षयतीति। तथा हि—प्रमीयतेऽनेनेत्यस्य वाक्यस्यार्थे प्रमाणपदप्रयोगः, प्रमा च स्मृतेरन्या अर्थाव्यभिचारी स्वतन्त्रः परिच्छेदः। तस्माद्विभागपरादपि सूत्रात् प्रतीयमानं प्रमाणसामान्यलक्षणमपेक्षितं संगृहीतमिति प्रमाणत्वोपगृहीतानां प्रत्यक्षादीनां युक्तो विभागः। तथा च विभागपरत्वेन साक्षात् सामान्यलक्षणानभिधानाद् विभक्तस्य लक्षणमुच्यत इत्युक्तम्, तच्चेह। विशेषलक्षणमिन्द्रियार्थेत्यादि। तदेतद्भाष्यं व्याचष्टे—उद्दिष्टस्येति। लक्षणालक्षणमात्रविवक्षया लक्षितस्यालक्षितस्येत्युक्तम्। तत्स्थले सामान्यतः प्रमाणेषु प्रमेयेषु विशेषत इति गमयितव्यम्। अत्र भाष्यम्—अथोद्दिष्टस्य विभागवचनमिति। तस्यार्थः—उच्यतेऽनेनेति वचनं सूत्रं विभागस्य। अथेति त्रिविधप्रवृत्तिव्युत्पादनानन्तरं विभक्तानां प्रतिपादनम्। न च विवेकः स्वरूपत उपयुज्यतइत्यत आह—अथोद्दिष्टविभागद्वारेणेति। नात्र विभागमात्रं विवक्षितमपि तु तद्द्वारेण न्यूनाधिकसंख्याव्यवच्छेदस्तत्त्वज्ञानाङ्गमित्यर्थः। अव्याख्याने हेतुमाह—सूत्रेति। चोदयति—उद्दिष्टविभागानर्थक्यम्। त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरित्यस्यानर्थक्यम्। अनर्थमर्थविपर्य्ययं कारयति कीर्त्तयतीत्यनर्थकं तस्य भावस्तत्त्वम्, कस्मात्? व्याघातात्। व्याघातमेव स्फोरयति—त्रिविधा चास्य शास्त्रस्येति। परिहरति—नोद्दिष्टेति। परस्परं विभक्ताः नामधेय-

## न्यायभाष्यम्

अक्षस्याऽक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षम। वृत्तिस्तु—सन्निकर्षः, ज्ञानं वा।

## न्यायवार्त्तिकम्

र्भवतीति। कस्मात्? लक्षणसामान्यात्। समानं लक्षणं नामधेयेन पदार्थाभिधानमुद्देश इति। किं पुनर्विभागेन प्रयोजनम्? नियमः। यदि प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति विभागो न क्रियेत, नियमो न गम्यते चत्वार्य्येव प्रमाणानीति। लक्षणतश्चतुष्ट्वाधिगतिरिति चेत्? न, लक्षणस्येतरव्यवच्छेदहेतुत्वात्। स्यादेषा बुद्धिः लक्षणतः प्रमाणचतुष्ट्वं गम्यत इति, यस्माच्चतुर्णां लक्षणमुक्तमिति। न, लक्षणस्येतरव्यवच्छेदहेतुत्वात्। लक्षणं खलु लक्ष्यं समानासमान-जातीयेभ्यो व्यवच्छिनत्ति, नियमं तु न शक्नोति कर्तुम् अन्यार्थत्वादिति। अन्यासम्भवस्य ततोऽन-धिगतेः। न हि लक्षणतोऽन्यासम्भवोऽधिगम्यते। ततश्चतुर्णामनभिधाने चतुर्णां लक्षणोपदेशात् संशयः स्यात्—किं विद्यमानानि न लक्षितानि आहोस्विदविद्यमानानीति। तस्मात् संशय-निवृत्त्यर्थं युक्तो विभागोद्देश इति।

अक्षस्याक्षस्य प्रतिविषयं वृत्तिः प्रत्यक्षमिति। अयं च सूत्रविवक्षायामव्ययीभावः समासः। अन्यथा तु वस्तुनिर्देशो न समासः, समासे हि अक्षस्येति षष्ठी न श्रूयेत। कः पुनरयं समासः? प्रादिसमासोऽयं द्रष्टव्यः प्रतिगतमक्षं प्रत्यक्षमिति, यथा—

## न्यायवार्त्तिकतात्पर्य्यटीका

मात्रेणोद्दिश्यन्ते इत्युद्देशेऽन्तर्भावात्। तेनायमर्थो भवति सामान्येनोद्दिष्टस्य विभागवचनं विशेषेणोद्देश इति। विभागप्रयोजनं पृच्छति—किं पुनरिति। उत्तरम्—नियमः। तद्विभजते—यदीति। पुनश्चोदयति—लक्षणत इति। प्रमाणलक्षणप्रवृत्तो यच्चत्वार्य्येव लक्षयति तत एवाधिगम्यते न न्यूनाधिकानि प्रमाणानीत्यर्थः। परिहरति—लक्षणस्येति। आक्षेपं विभजते—स्यादेषेति। परिहारं विभजते—न, लक्षणस्येति। अन्यपरमपि वाक्यं तदेवार्थलभ्यं स्वीकरोति यत्तेनापेक्षितम्, तदेव चापेक्षितं येन विना तदर्थो नोपपद्यते, न च प्रत्यक्षादीनां समानासमानजातीयस्य व्यवच्छेदे पञ्चमाद्यभाव उपयुज्यते लक्षणकरणप्रवृत्तस्य क्वचिदकरणं न तदभावे प्रमाणम्, सतोऽप्यनुपयोगेनाकरणोपपत्तेः। तदेतदाह—अन्यासंभव-स्येति। विभागोद्देशस्य पुनरनन्यपरत्वादन्याभावनिश्चयो भवतीत्युपसंहरति—तस्मादिति।

अक्षस्याक्षस्येति भाष्यमनुभाष्य तात्पर्य्यमाह—अयं च सूत्रविवक्षायामिति। अक्षमक्षं प्रति वर्त्तत इति विगृह्याव्ययीभावे कृते सर्वेन्द्रियावरोधो भवति। ननु यदीदृशो विग्रहः कस्मात् पुनर्भाष्यकारेणाऽक्षस्याक्षस्येति विगृह्यत इत्यत आह—अन्यथा तु वस्तुनिर्देश इति। अर्थमात्रमनेन प्रतिपाद्यते न पुनः समास इत्यर्थः। अथ कस्मात् समास एव तेन विग्रहेण न

## न्यायभाष्यम्

यदा सन्निकर्षस्तदा ज्ञानं प्रमितिः, यदा ज्ञानम्, तदा हानोपादानोपेक्षाबुद्धयः फलम् ।

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रतिपाद्यत इत्यत आह—समासे हि अक्षस्येति षष्ठी न श्रूयेतेति । यदि सूत्रगतस्य प्रत्यक्ष-पदस्याव्ययीभावः समासोऽन्यत्र पुनरस्य कः समास इति पृच्छति—कः पुनरिति ? उत्तरम्—प्रादिसमास इति । तथा हि—प्राप्तापन्नालंपूर्वगतिसमासेषु परवल्लिङ्गताप्रतिषेधादभिधेयलिङ्गो-पादानात् प्रत्यक्षोऽर्थः प्रत्यक्षा बुद्धिः प्रत्यक्षं ज्ञानमित्यभिधेयलिङ्गता सिद्धा भवति । क्वचित् पाठः समासे हि प्रत्यक्षस्येति षष्ठी न श्रूयत इति । सूत्रविवक्षयाऽव्ययीभाव इत्युक्तम्, तत्र शङ्कते—कस्मात्पुनः सूत्रविवक्षयेत्युच्यते, यावता सर्वत्रैव कस्मादव्ययीभावो न भवतीति । तत्रेदमुपतिष्ठते—समासे हि अव्ययीभावसमासे हि, सर्वत्र प्रत्यक्षस्येति षष्ठी न श्रूयेतेति । व्युत्पत्तिनिमित्तमात्रं चेदं प्रत्यक्षशब्दस्य, न प्रवृत्तिनिमित्तम् । तस्मान्नेन्द्रियगतैर्गुणसामान्यादिभि-र्व्यभिचारः, प्रवृत्तिहेतुस्त्वर्थसाक्षात्कारिज्ञानजनकत्वम्, तन्निमित्तः खल्वयं प्रत्यक्षशब्दस्तत्र तत्र लौकिकपरीक्षकैः प्रयुज्यते । मयूरशब्दो मयूरत्वसामान्यनिबन्धनः काश्चिदेव पतत्रिव्यक्तिषु वर्त्तमानः, मह्यां रौतीत्यन्वाख्यायते । तदिदं प्रत्यक्षमुद्दिष्टमपि सत् प्रमाणतदाभाससंकीर्णमिति तद्विवेकाय लक्षणमुपयुज्यते । यदि तूद्देशपदं तद्विवेचयेत् कृतं तर्हि लक्षणप्रयत्नेन । विग्रहवाक्य-गता च वृत्तिर्भाष्यकृता व्याख्याता । **वृत्तिस्तु सन्निकर्षो ज्ञानं वा ।** वृत्तिरिति हि व्यापारः । स तु व्यापार उच्यते यः कारकैः फले जनयितव्ये चरमभावी धर्म्मभेदः फलोत्पादानुकूलोऽपेक्ष्यते, यथा पटे जनयितव्ये तन्तुभिश्चरमभाविनः संयोगभेदाः, स्वर्गे जनयितव्ये यागेनापूर्वमात्मधर्म्मः, तथेहापि इन्द्रियादिना प्रमाणेन प्रमायां फले प्रवृत्तेन तदुत्पादनानुकूलः सन्निकर्षो ज्ञानं वा चरम-भावी धर्म्मभेदोऽपेक्ष्यत इति भवति व्यापारः, स एव वृत्तिरित्याख्यायते । व्यवस्थां दर्शयति—यदा सन्निकर्षो व्यापार इन्द्रियादेः प्रमाणस्य तदा ज्ञानमालोचनं वा सविकल्पकं वा साक्षात्कारिज्ञानं प्रमितिः फलम्, उभयस्यापीन्द्रियव्यापारात् सन्निकर्षापराभिधानादुत्पत्तेः । न चान्तरालिकेन निर्विकल्पकेनेन्द्रियव्यापारविच्छेद इति प्रत्यक्षव्याख्यानावसरे निवेदयिष्यते । यदा ज्ञानमालोचनं वा विकल्पो वा व्यापार इन्द्रियादीनां तदा हानोपादानोपेक्षाबुद्धयः फलम् । तत्रोपादेयमिदं सलिलमिति बुद्धिरनागतोपादानविशिष्टं सलिलमालम्बमाना न साक्षात्कारवती, सलिलमात्रसाक्षात्कारस्तु स्यात् । न च तन्मात्रमस्य फलमपि तूपादेयता सा च परोक्षा अनागतत्वात् । तस्मादुपादीयतेऽनेनेत्युपादानम्, उपादानं चासौ बुद्धिश्चेत्युपादानबुद्धिः, तत्तोयालोचनमथ तोयविकल्पोऽथ च तज्जातीये दृष्टचरपिपासोपशमनहेतुभावस्य स्मृतिबीज-

## न्यायभाष्यम्

अनुमानं—मितेन लिङ्गेन लिङ्गिनो(१)ऽर्थस्य पश्चान्मानमनुमानम् ।

## न्यायवार्त्तिकम्

उपगतो गोभिः "उपगु"रिति । एवमनुमानादिषु द्रष्टव्यम्, मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमिति न युक्तम्, फलाभावात् । एतस्मिन् व्याख्यानेऽफलमनु-

## न्यायवार्त्तिकतात्पर्य्यटीका

संस्कारोद्बोधः, अथ तस्य स्मरणम्, अथ लिङ्गपरामर्शः तज्जातीयं चेदमिति, तदिदं लिङ्गपरामर्शविज्ञानं साक्षात्कारवत् । लिङ्गे विनश्यदवस्थव्याप्तिस्मरणसहकारिदृश्यमानस्य सलिलस्य पिपासोपशमनहेतुतया अनुमानमुखेनोपादानबुद्धिरुच्यते । अनुमिमानः स्वरूपं तथाभावं तदुपादित्सुः समीहमानस्तदुपादत्ते । न च व्याप्तिस्मृतिविच्छिन्नमालोचनं वा विकल्पो वा न लिङ्गपरामर्शज्ञानहेतुरिति वाच्यम्, तदुद्बोधितसंस्कारद्वारेण व्याप्तिस्मरणे परामर्शे च तस्य तदानीमसतोऽपि कारणत्वात् । न च खलु कृषिकर्म्म शस्याधिगमसमये समस्ति, न च यागादिकं स्वर्गाद्युत्पत्तिसमये, न च निवृत्तकषायपानं विरेकसमये । आन्तरालिककार्य्यपरंपरया तु तत्तत्कार्य्यसाधनत्वं सर्वत्र समानम् । स्यादेतत्, का पुनरियं पिपासोपशमनशक्तिस्तोयस्य, याऽनुमानगोचरः ? न तावन्मीमांसाकवदतीन्द्रिया शक्तिरस्माभिरभ्युपेयते, किन्तु कारणानां स्वरूपं वा सहकारिसाकल्यं वा । तत्र स्वरूपं हेतूनां प्रत्यक्षमेव, सहकारिणां प्रत्यक्षाप्रत्यक्षाणां साकल्यं कार्य्यसमुत्पादव्यञ्जनीयम्, न तु तत्तोयरूपमात्रदर्शनाच्छक्यानुमानम्, तत्किमपरमवशिष्यते यदनुमानस्य गोचर इति ? अत्रोच्यते—न वयमतीन्द्रियं सामर्थ्यमातिष्ठामहे, नापि सहकारिसाकल्यानुमानम्, किन्तु स्वरूपस्य कार्य्यसंबन्धिताम् । न चेयं स्वरूपमेव, इहस्थस्येव नारिकेलद्वीपादागतस्यापि बहिर्दर्शनमात्राद् ग्राहकत्वावगमप्रसङ्गात् । तस्मात् कार्य्योपहितं स्वरूपमनुमेयम् । इदमेव चास्य कार्य्योपधानं यत्कार्य्योत्पादात् पूर्वमवश्यं भावः आनन्तर्य्यनियमः । न च तज्जातीयस्य दृष्टचरस्य तथाभावदर्शनेऽपि दृश्यमानस्य तोयस्य तद् दृष्टं भवति येन तत्र स्मर्य्येत । न खलूज्जयिन्यामुपलब्धस्य सौधस्य पाटलिपुत्रे स्मरन्त्यभ्रान्ताः । उपादानेन हानं व्याख्यातम् । न चोपेक्षाऽनुपादानतया हानपक्षे निःक्षिप्ता, अहानतयोपादानपक्षनिःक्षेपप्रसङ्गात् । उपादानप्रयत्नाप्रसवहेतुतया नोपादानमिति चेत्, किमियं हानप्रयत्नमपि प्रसूते यतो हानं स्यात् । तस्माद् या नोभयप्रयत्नप्रसवहेतुः सा उपेक्षाबुद्धिस्तृतीया लोकप्रसिद्धेति सिद्धम् । प्रत्यक्षपदव्युत्पत्तिं दर्शयित्वाऽनुमानादिपदेष्वपि व्युत्पत्तिं दर्शयति—एवमनुमानादिष्वपि इति । तत्रेदमनुमानव्युत्पत्तिपरं भाष्यं मितेन लिङ्गेन लिङ्गिनोऽर्थस्य पश्चान्मानमनुमानमिति । मितिर्मानं तथा च लिङ्गदर्शनोद्बोधितसंस्कारजा स्मृतिर्विभिन्ना, तस्याः मितेरन्यत्वेन लोकसिद्धत्वात् । मितेनेत्य-

(१) 'लिङ्गिन' इति ल-ज-ग-पुस्तकेषु नास्ति ।

## न्यायवार्त्तिकम्

मानमिति। किं कारणम्? अर्थस्य मितत्वात्। नैष दोषः। मितेन लिङ्गेन अर्थस्य पश्चान्मानं भवति यत इत्यर्थः। भवतु वाऽयमर्थो लैङ्गिकी प्रतिपत्तिरनुमानमिति। ननु च फलाभावो दोष उक्तः? न दोषः, हानोपादानोपेक्षाबुद्धीनां फलत्वात्। सर्वं च प्रमाणं स्वविषयं प्रति भावसाधनम्, प्रमितिः प्रमाणमिति। विषयान्तरं प्रति करणसाधनम्, प्रमीयतेऽनेनेति प्रमाणम्। यदि भावसाधनः प्रमाणशब्दः, किं फलम्, विषयस्याधिगतत्वात्? उक्तं

## न्यायवार्त्तिकतात्पर्य्यटीका

ज्ञानसन्देहविपर्य्यासा लिङ्गविषया निरस्ता भवन्ति। तथाऽपि मितेनार्थस्य ज्ञानं शब्देऽप्यस्तीत्यत (१) उक्तं—लिङ्गेनेति। अपक्षधर्म्मतां निवर्त्तयति—लिङ्गिन इति। धर्म्मिणः प्रत्यक्षगोचरत्वात् कृतमनुमानेनेत्यत उक्तम्—अर्थस्येति। अर्थ्यते साध्यते इत्यर्थः, न हि धर्म्मी स्वरूपेणार्थ्यते, किन्तु जिज्ञासितधर्म्मविशिष्ट इत्यर्थः। पश्चादित्यनुशब्दस्य व्याख्या। तदेतद्भाष्यमनुभाष्य आक्षिपति—मितेति। कस्मादयुक्तम् इत्यत आह—फलाभावादिति। एतद्विभजते—एतस्मिन्निति। अनुमानज्ञानस्य फलावस्थायामेवार्थो मित इति मेयं नावशिष्यते यत्रैतत् सिद्धं सत्प्रमाणं भवेदित्यर्थः। तत्र फलविशेषपक्षमास्थी(२) 'यत' इत्यध्याहृत्य समाधत्ते—नैष दोष इति। अनध्याहारेणाप्यदोष इति समाधानान्तरमाह—भवतु वेति। पूर्वोक्तदोषं स्मारयति—ननु चेति। परिहरति—न दोष इति। अथ कस्माद्धानादिविषयं प्रमाणमुच्यते, न स्वगोचरं प्रति? इत्यत आह—सर्वं च प्रमाणमिति। यद्यपि वह्निविज्ञानस्यानुमानस्य सतो हेयत्वादिकं विषयः, तत्रैव तस्य प्रामाण्यात्। अथ प्रमाणफलयोर्भिन्नविषयत्वेन विप्रतिपत्त्या प्रमाणफलभावायोगात्। न हि पनसविषयेण परशुना खदिरे द्वैधीभावो भवति। तथाऽपि फलान्तरानपेक्षमुत्पत्तावेव विज्ञाने यत्प्रकाशते स तस्य विषयः। तत्र तु न प्रमाणम्, फलान्तराजनकत्वात्, अपि तु फलमेवेत्यर्थः। विषयान्तरं प्रति तत्प्रमाणमित्याह—विषयान्तरमिति। देशयति—यदीति। भावसाधनश्चेत् प्रमाणशब्दः फलमस्यार्थो न तु फलं स्वविषये करणम्, तज्ज्ञानस्य स्वजनकेनैव कृतत्वात्। न च स्वविषयादन्यदस्य विषयान्तरं सम्भवति, अतिप्रसङ्गादिति भावः।

## वृत्तिः

अथ यथोद्देशं लक्षणस्याऽपेक्षितत्वात् प्रथमोद्दिष्टं प्रमाणं लक्षयति विभजते च—प्रत्यक्षेत्यादि। अत्र तद्वति तत्प्रकारकत्वरूप–प्रकर्ष–विशिष्टज्ञानं प्रशब्दविशिष्टेन माधातुना प्रत्याय्यते, तत्करणत्वं प्रमाणत्वम्। ज्ञानं चाऽत्राऽनुभवो विवक्षितः, तेन

(१) 'शब्दे तथाप्यस्ती'ति क-पुस्तकपाठः। (२) "आस्थी" आस्थावानित्यर्थः।

## न्यायभाष्यम्

उपमानं—सामीप्यज्ञानं(१)—यथा गौरेवं गवय इति। सामीप्यं(२) तु सामान्ययोगः। शब्दः—शब्द्यतेऽनेनार्थ इत्यभिधीयते ज्ञाप्यते।

## न्यायवार्त्तिकम्

फलं ज्ञानादिबुद्धय इति। ज्ञाते तद्भावात्। ज्ञाते खल्वर्थे त्रिधा बुद्धिर्भवति हेयो वोपादेयो वोपेक्षणीयो वेति। केचित्तु सन्निकर्षमेव प्रत्यक्षं वर्णयन्ति, न तन्न्याय्यम्, प्रमाणाभावात्। सन्निकर्ष एव प्रमाणमिति न प्रमाणमस्ति। उभयं तु युक्तम्, परिच्छेदकत्वात्। उभयं परिच्छेदकं सन्निकर्षो ज्ञानं च। एकान्तवादिनस्तु दोष इति।

सामीप्यमानमुपमानमिति न युक्तम्, उपमानस्यान्यथाव्याख्यानात्। समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्युक्तम्, (३) इदानीं तूच्यते सामीप्यमानमुपमानमिति व्याघातः? नास्ति व्याघातः, सामीप्यमानेन समाख्यासम्बन्धप्रतिपत्तेरिष्टत्वात्। यस्मादयमुपयुक्तोपमानो गोदर्शी आगमप्रत्ययाहितस्मृतिपूर्वकं गवा साधर्म्यं प्रत्यक्षेण प्रतिपद्य अस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यते, तस्मान्न व्याघात इति।

शब्दविषया प्रतिपत्तिः शाब्दप्रमाणम्, फलं तदेव।

## न्यायवार्त्तिकतात्पर्य्यटीका

परिहरति—उक्तं फलमिति। यद्यपि यत्र फलं सोऽस्यौत्पत्तिको विषयः, तथाऽपि यत्रानेन प्रमाणेन सता ज्ञानादिबुद्धयो जनयितव्याः सोऽपि व्यापारेण विषय इति भावः। फलत्व एव हेतुमाह—ज्ञात इति। परोक्षार्थावगाहितया हेयादिबुद्धयः प्रत्यक्षफलं न भवन्ति, भवन्ति त्वनुमानस्येति। नियमवादिनां मतमुपन्यस्य दूषयति—केचित् त्विति। अनियमं रोचयमान आह—उभयं त्विति।

अनुमानशब्दवत् फलेन निर्वचनीयत्वमुपमानशब्दस्येति मन्वान आक्षिपति—सामीप्येति। समाधत्ते—नास्ति व्याघात इति। नेयमुपमानशब्दस्य फलेन निरुक्तिः, अपि तु प्रमाणेन निरुक्तिरिति न व्याघात इत्यर्थः।

शब्दविषया प्रतिपत्तिः शाब्दं प्रमाणम्। यत् खलु चैत्र गां बधानेति वाक्यमिदमित्यनुसन्धानात्मकं स्मार्त्तं ज्ञानमुपजायते, तत्पदार्थस्मरणसहकारिविशिष्टार्थविषयं विज्ञानं प्रसूते, तच्छाब्दं

## वृत्तिः

स्मृतिकरणे नाऽतिव्याप्तिः। लक्षितानां प्रमाणानां विभागः—प्रत्यक्षानुमानोपमानशब्दा इति। विभागस्योद्देश एवाऽन्तर्भूतत्वादयं विशेषोद्देशः। प्रत्येकलक्षणं तु वक्ष्यते ॥ ३ ॥

इति त्रिसूत्रीवृत्तिः समाप्ता ॥

---

(१) "सामीप्यमानम्" इति वार्त्तिकसम्मतपाठः। "सारूप्यज्ञानम्" ज-भा०। (२) "सारूप्यम्" ज-भा०। (३) १।१।६ सू-भाष्ये।

## न्यायभाष्यम्

उपलब्धिसाधनानि प्रमाणानीति समाख्यानिर्वचनसामर्थ्यात् बोद्धव्यम्। प्रमीयतेऽनेनेति करणार्थाभिधानो हि प्रमाणशब्दः। तद्विशेषसमाख्याया अपि तथैव व्याख्यानम्।

किं पुनः प्रमाणानि प्रमेयमभिसंप्लवन्ते? अथ प्रतिप्रमेयं(१) व्यवतिष्ठन्त इति?

## न्यायवार्त्तिकम्

केचित्तु क्रमप्रयोजनं वर्णयन्ति—आदौ प्रत्यक्षग्रहणं प्राधान्यात्। तदनन्तरमनुमानं तत्पूर्वकत्वात्। तदनन्तरमुपमानं तत्साधर्म्यात्। अन्ते शब्दो महाविषयत्वात्। तच्चायुक्तमित्यपरे मन्यन्ते, क्रमाभिधानस्य न्यायप्राप्तत्वात्। न्यायप्राप्तं क्रमाभिधानं क्रमवृत्तित्वाद्वाच इति। महाविषयत्वाच्च शब्दस्यादावभिधानप्रसङ्ग इति। एतच्चायुक्तम्। क्रमवृत्तित्वाद्वाचोऽयुगपदभिधानं युक्तम्, पूर्वापराभिधाने तु न साधनमेतत्। तस्मादन्यो न्यायो वक्तव्यः। स चायं न्यायः—प्रत्यक्षं पूर्वं प्राधान्यादिति। महाविषयत्वादादौ शब्दोपदेश इति न, उभयं महाविषयं शब्दः प्रत्यक्षं च। कथमिति? प्रत्यक्षेणापि सामान्यविशेषतद्वतां ग्रहणम्, शब्देनापि। तत्र किं शब्दस्यादावुपदेशो भवतु आहोस्वित् प्रत्यक्षस्येति? प्रत्यक्षस्येति युक्तम्। किं कारणम्? सर्वप्रमाणानां प्रत्यक्षपूर्वकत्वादिति।

किं पुनरेतानि प्रमाणानि संप्लवन्ते? अथ प्रतिप्रमेयं व्यवतिष्ठन्त इति? उभयथा दर्शनम्, तच्च प्रमाणत इत्यत्रैव(२) दर्शितम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रमाणम्। प्रमाणमुक्त्वा फलमस्याह—फलं तदेव। यदा ह्येतत् प्रमाणं तदा वाक्यार्थविज्ञानं फलम्, यदाऽनुमानवद् वाक्यार्थविज्ञानं प्रमाणं तदा हानोपादानादिबुद्धयः फलमित्यर्थः।

अत्र प्रत्यक्षादीनां क्रमोद्देशप्रयोजनं प्रत्येकदेशिमतमुपन्यस्यति—केचित्त्विति। प्रत्यक्षपरा हि प्रमाणान्तरजन्याः प्रमितय इति प्रत्यक्षस्य प्राधान्यम्। यद्यपि किञ्चिदनुमानमनुमानपूर्वकमपि, तथाऽपि प्रायेण प्रत्यक्षपूर्वकम्। उपमानं तु प्रत्यक्षपूर्वकमपि शब्दपूर्वकमेवेत्यस्यानुमानादपकर्षः। स्मरणसहकारिताऽनुमानसादृश्यमुपमानस्यास्तीति अनुमानानन्तरमुद्देशः। अल्पज्ञानाधीनं च बहुज्ञानमित्यल्पविषयप्रत्यक्षाद्युद्देशेभ्यः परो बहुविषयशब्दोद्देश इति। तदेतदेकदेशिमतमेकदेश्यन्तरमतेन दूषयति—तच्चायुक्तमित्यपर इति। अक्लिष्टो हि प्रथमं महाविषयमेव दुरवधारणत्वान्निरूपयति, अल्पविषयं तु क्लिष्टोऽपि शक्तो निरूपयितुम्, अतो महाविषयत्वं प्राथम्यः, एव हेतु; न चरमत्व इत्यर्थः। अनन्तरमतं दूषयति—एतच्चेति। एतावता क्रममात्रं भवेन्न तु तद्विशेषनियम इत्यर्थः। संप्रति विमर्षपूर्वं स्वाभिमतं क्रमनियम(३)हेतुमवधारयन्नेव पूर्वैकदेशिमतमपाकरोति तस्मादन्य

(१) "प्रमेयम्" इति ज-ल-ग-घा। (२) "प्रमाणतोऽर्थं प्रतिपत्तौ" इत्याद्यादिभाष्यव्याख्यानावसरे वार्त्तिककृता स्वयमेव १२ पृ: ६ पङ्क्तितः कियता ग्रन्थेन दर्शितम्। (३) आदर्शे—'क्रमसमनियम' इत्येवं पाठः।

## न्यायभाष्यम्

उभयथा दर्शनम्, 'अस्त्यात्मा' इत्याप्तोपदेशात्प्रतीयते, तत्राऽनुमानम्—'इच्छाद्वेष-प्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गम (१।१।१०)' इति, प्रत्यक्षं—युञ्जानस्य योगसमाधि-जमात्ममनसोः संयोगविशेषादात्मा प्रत्यक्ष इति। अग्निराप्तोपदेशात्प्रतीयते 'अत्राऽग्निः' इति, प्रत्यासीदता धूमदर्शनेनानुमीयते, प्रत्यासन्नेन च प्रत्यक्षत उपलभ्यते। व्यवस्था पुनः—'अग्निहोत्रं जुहुयात् स्वर्गकामः' इति, लौकिकस्य स्वर्गे न लिङ्गदर्शनम्, न प्रत्यक्षम्। स्तनयित्नुशब्दे श्रूयमाणे शब्दहेतोरनुमानम्, तत्र न प्रत्यक्षम्, नागमः। पाणौ प्रत्यक्षत उपलभ्यमाने नानुमानम्, नागम इति।

सा चेयं प्रमितिः प्रत्यक्षपरा। जिज्ञासितमर्थमाप्तोपदेशात्प्रतिपद्यमानो लिङ्गदर्शनेनापि

## न्यायवार्त्तिकम्

सेयं प्रमितिः (१) प्रत्यक्षपरेति। प्रत्यक्षेणाधिगतेऽर्थे आकाङ्क्षाभावात् तत्परा। यथायं लौकिकोऽमुत्राग्निरित्याप्तोपदेशादग्निं प्रत्याहितप्रत्ययस्तं देशं गच्छति। प्रत्यासीदत् पूनर्धूमविशेषणं

## न्यायवार्त्तिकतात्पर्य्यटीका

इति। विमर्षनिमित्तां विप्रतिपत्तिमाह—प्रत्यक्षं पूर्वं प्राधान्यादित्येकः, महाविषयत्वाच्चादौ शब्दोपदेश इत्यपरः। तत्र महाविषयत्वमनैकान्तिकं सन्नागमस्यैव पूर्व्वोपदेशं गमयतीत्याह—उभयमिति। पृच्छति—कथमिति। उत्तरं—प्रत्यक्षेणापीति। महाविषयत्वलक्षण-साधारणधर्म्मदर्शननिमित्तं सहेतु(२)माह—तत्रेति। अभिमतेन हेतुना क्रमविशेषनियम-मवतारयति—प्रत्यक्षस्येतीति। यद्यपि प्रमितेः प्रत्यक्षपरत्वेन प्रत्यक्षस्य प्राधान्यं तथाऽपि शास्त्रे व्युत्पाद्यत्वेनानुमानस्यापि तदस्तीति साधारणतया न हेतुरिति भावः। स्यादेतद् व्यवस्थितविषयं प्रत्यक्षं नानुमानविषये प्रवर्त्तते, न चानुमानमगृहीतसम्बन्धमुदेति। न च सम्बन्धग्रहः सम्बन्धिग्रहणमन्तरेण, न चानुमानविषये सामान्यरूपे सम्बन्धिनि प्रत्यक्षं प्रवर्त्तते, अनुमानान्तरेण ग्रहणेऽनवस्था, तस्मात् कारणाभावान्नानुमानमस्ति। एतेन शब्दोपमाने अपि परास्ते, तयोरपि सम्बन्धसंवेदनाधीनजन्मत्वात्। तस्मान्नाप्रत्यक्षं प्रमाण-मिति विभागवचनमनुपपन्नमिति शङ्कामपनेतुं विमर्षपूर्व्वकं विचारयति स्म भाष्यकारः किं पुनः प्रमाणानीति। तदेतद्भाष्यमनुभाष्याव्याख्याने हेतुमाह—किं पुनरेतानीति।

सा चेयं प्रमितिः प्रत्यक्षपरेति भाष्यम्, तदनुभाष्य हेतुमाह—सेयमिति। आकांक्षाभावप्रति-पादनाय प्रतीतिस्वरूपं क्रमं चाह—यथाऽयमिति। आहित उत्पादितः प्रत्ययो निश्चयो यस्य, संसर्गौपधानं(१) वह्निं प्रति सत्तया सन्दिग्धेन हि निश्चयाय प्रवर्त्तितव्यमेव, निश्चितस्तु(३) विनिश्चयाय

(१) भाष्यतात्पर्य्ययोः "सा चेयं प्रमितिः" इति पाठः। (२) 'सन्देह' इति पाठो भवितुमुचितः। (३) आदर्शे—'प्रवर्त्तितव्यमेवानिश्चितस्तु' इत्येवं पाठः।

### न्यायभाष्यम्

बुभुत्सते, लिङ्गदर्शनानुमितं च प्रत्यक्षतो दिदृक्षते, उपलब्धेऽर्थे जिज्ञासा निवर्त्तते। पूर्वोक्तमुदाहरणम् 'अग्निः' इति। प्रमातुः (१) प्रमाणानां सम्भवोऽभिसंप्लवः, असम्भवो व्यवस्थेति(२) ॥ ३ ॥

इति त्रिसूत्रीभाष्यम्।

अथ विभक्तानां लक्षणवचनमिति (३)।

## इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमव्यभिचारि व्यवसायात्मकं प्रत्यक्षम् ॥ ४ ॥

इन्द्रियस्यार्थेन सन्निकर्षादुत्पद्यते यज्ज्ञानं तत् प्रत्यक्षम।

### न्यायवार्त्तिकम्

धूमाङ्गत्वेन व्यवस्थितं हुतभुजं प्रतिपद्यते। आसन्नतरस्त्विदानीमिन्द्रियार्थसन्निकर्षादग्निप्रत्ययं करोति तदा निराकाङ्क्षो भवतीत्यतः प्रधानं प्रत्यक्षमिति। यत्र संप्लवस्तत्रैवम्। यत्र पुनर्व्यवस्था तत्र गुणप्रधानता न चिन्त्यत इति ॥ ३ ॥

इति त्रिसूत्रीवार्त्तिकम् ॥

अथ विभक्तानां लक्षणवचनमिति। तत्र प्रत्यक्षलक्षणमुच्यते इन्द्रियार्थसन्निकर्षोत्पन्नमित्यादि सूत्रम्—

सूत्रार्थः समानासमानजातीयविशेषकत्वम्। अथ पदानामर्थः कः इन्द्रियार्थसन्निकर्षोत्पन्न-

### न्यायवार्त्तिकतात्पर्य्यटीका

प्रमाणान्तरे प्रवर्त्तमानस्तदभ्यर्हिततरं मन्यते। धूमाङ्गत्वेनेति। अङ्गत्वं व्यापकत्वम्। व्याप्यं पुनर्व्याप्तिक्रियायां कर्म्मत्वेन प्रधानम्। तदनेन धूमव्यापकत्वोपधानेन धूमादुन्मीयमानो वह्निः परोक्ष इति दर्शितम्। अनुपहितप्रकाशस्तु प्रत्यक्षेणाव्यवहितवह्निस्वरूपप्रकाशः, स हि साक्षात्कार इति। तावदयं प्रमाता साकाङ्क्षो यावदुपधानव्यवहितं स्वरूपमुपलभ्यते। उपधानानपेक्षस्तु प्रत्यक्षेणाव्यवहितं साक्षाद् वह्निं विषयीकृत्य निराकाङ्क्षो भवति। धूमाङ्गत्वेन धूमविशेषणत्वेनेति केचित्। तत्तु प्रकृतानुपयोगितयाऽयुक्तमिति। उपसंहरति—अतः प्रधानमिति। सोऽयं गुणप्रधानभावो भेदाश्रयो व्यवस्थायां नास्ति, व्यवस्थितानां प्रत्येकमेकत्वात्। तस्माद् व्यवस्थाया गुणप्रधानभावो न चिन्त्यत इति। इति सूत्रसमाप्तौ ॥ ३ ॥

इति न्यायत्रिसूत्रीतात्पर्य्यटीका समाप्ता।

प्रत्यक्षादिप्रमाणविशेषलक्षणानामर्थाक्षिप्तसामान्यलक्षणविभागोद्देशहेतुत्वेन तदनन्तराभिधान-

---

(१) "प्रमातुः" इत्यनन्तरं "प्रमातव्येऽर्थे" इत्यधिकम् ज-ग-आ०। (२) सम्पूर्व्वकस्य भूधातोः समवायार्थकतया अत्र सम्भवः समवायः, असम्भवस्तदभावः, एकत्र कश्चः सत्त्वमित्यर्थः। सङ्करोऽभिसंप्लवः; असङ्करो व्यवस्थेति वि-टि-ज-आ-भा०। (३) "वचन" शब्दः ल-भा-पु० नास्ति।

## न्यायभाष्यम्

**न तर्हीदानीमिदं भवति, आत्मा मनसा संयुज्यते, मन इन्द्रियेण, इन्द्रियमर्थेनेति ?**

## न्यायवार्त्तिकम्

मिति ? इन्द्रियेणार्थस्य सन्निकर्षाद्यदुत्पद्यते ज्ञानं तत्प्रत्यक्षमिति । इन्द्रियाणि पुन-र्वक्ष्यमाणानि (१) । अर्थश्च (२) । सन्निकर्षः पुनः षोढा भिद्यते । संयोगः, संयुक्तसमवायः,

## न्यायवार्त्तिकतात्पर्य्यटीका

मित्याह—अथ विभक्तानामिति । तत्र तेषु मध्ये प्राथम्यात् प्रत्यक्षलक्षणम् । इन्द्रियार्थ-सन्निकर्षोत्पन्नमित्यादि सूत्रम् । अस्य तात्पर्य्यमाह—सूत्रार्थः सूत्रप्रयोजनम् । समाना-समानजातीयविशेषकत्वम् । समानजातीयमनुमानादि, असमानजातीयं प्रत्यक्षाभासप्रमेयादि, तेभ्यो विशेषकत्वं विशेषस्तदस्य सूत्रस्य प्रयोजनम् । यः खलु कुतश्चिद् व्यामोहात् समानासमानजातीयव्यावृत्तं तद्रूपं न शक्नोति ग्रहीतुम्, सोऽनेन लक्षणेन बोध्यते—एवं लक्षणकं प्रत्यक्षमिति । तस्मात् सामान्यतः सिद्धविविक्तप्रत्यक्षमात्रानुवादेन लक्षणविधानपरमिदं सूत्रम् । इतस्त्ववगतलक्षणस्तेनैव विविच्य प्रत्यक्षतत्त्वं गृह्णातीति समानासमानजातीयव्यवच्छेदः सूत्रार्थ उक्त इति । अत्र च 'यत' इत्यध्याहृत्य यत्तदोर्नित्याभिसम्बन्धात् तत्प्रत्यक्षमिति प्रमाणवाचि प्रत्यक्षपदं योजनीयम् । एवं च ज्ञानप्रामाण्यमतेऽपि यत्तद्विशेष्यज्ञानप्रत्यक्षफलं लिङ्गपरामर्शो वा तदपीन्द्रियार्थसन्निकर्षोत्पन्नत्वाद्युपेतत्वेन भवति प्रमाणविशेषणमिति नाव्यापकत्वं लक्षणस्येति । सूत्रपदार्थं पृच्छति—अथेति । उत्तरम्—इन्द्रियेति । सन्निकर्षग्रहणलभ्यं प्रकारभेदं परिसंचष्टे—सन्निकर्षः पुनरिति । पुनः शब्देन संयोगसमवाय-पदोपादानाद् व्यवच्छिनत्ति । संयोगपदोपादाने हि न समवायो लभ्यते, समवाय-पदोपादाने वा न संयोगः । सन्निकर्षपदोपादाने त्वभिमतलाभः । अर्थग्रहणेनार्थ्यमानतया ज्ञेयस्वरूपयोग्यता दर्शिता, न चासावण्वाकाशादीनामस्तीति सत्यपि संयोगादौ नासावर्थसन्निकर्ष इति तद्व्युदासः । उत्पन्नग्रहणेन च सन्निकर्षस्योत्पादकत्वं सूचितम्, ततः सत्यप्यर्थस्वरूपयोग्यत्वे संयुक्तसंयोगादेरनुत्पादकस्य सन्निकर्षस्य व्युदासः । अन्यथा कुड्यादिसंयुक्तेनेन्द्रियेण कुड्यादि-

## वृत्तिः

अथ विभक्तानि यथाक्रमं लक्षयितुमारभते—इन्द्रियार्थेत्यादि ।

अत्र प्रतिगतमक्षं प्रत्यक्षमिति योगादिन्द्रियवाचकत्वात् प्रत्यक्षशब्दस्य, प्रस्तुतत्वाच्च करणलक्षणस्य, प्रमितिलक्षणं यद्यप्यनुचितम्, तथाऽपि यत इत्यध्याहारेण प्रत्यक्षप्रमाकरण-लक्षणे वाच्ये तदेकदेशप्रमास्वरूपे ज्ञाते तत्करणत्वं सुज्ञेयमित्याशयेन वा सङ्गमनीयम् ।

(१) १।१।१२ सू० । (२) १।१।१४ सू० ।

## न्यायवार्त्तिकम्

संयुक्तसमवेतसमवायः, समवायः, समवेतसमवायः, विशेषणविशेष्यभावश्चेति। तत्र चक्षुरिन्द्रियम्, रूपवान् घटादिरर्थः। तेन सन्निकर्षः संयोगः, तयोर्द्रव्यस्वभावत्वात्। अद्रव्येण च तद्गतरूपादिना संयुक्तसमवायः, यस्माच्चक्षुषा संयुक्ते द्रव्ये रूपादि वर्त्तत इति। वृत्तिस्तु समवायः। रूपादिवृत्तिना सामान्येन संयुक्तसमवेतसमवायः। सन्निकर्षः। एवं घ्राणादिषु गन्धवदादिद्रव्येण संयोगः। तत्समवेतेषु गन्धादिषु संयुक्तसमवायः। तद्वर्त्तिषु च सामान्यादिषु संयुक्तसमवेतसमवायः। शब्दे समवायः। अयं खलु शब्दः संयोगविभागयोनिराद्यः। तत्र कतमः शब्दः संयोगयोनिः कतमश्च विभागयोनिरिति? आकाशगुणत्वात् शब्दस्याकाशवृत्तिः

## न्यायवार्त्तिकतात्पर्य्यटीका

व्यवहितस्य तत्संयुक्तस्य पटादेस्तत्समवेतस्य च रूपादेरपि ग्रहणप्रसङ्गः। न चैतावता त्रिविध एव सन्निकर्षः संयोगः संयुक्तसमवायः समवायश्चेति सांप्रतम्। स्वतन्त्रव्याघातादनुभव-व्याघाताच्च। ये हि गुणकर्म्साश्रयं सामान्यातिरिक्तं सादृश्यमर्थान्तरं रोचयन्ते, तेषां कथं रूपादि-भेदानामन्योन्यस्य सादृश्यं प्रत्यक्षं भवेत्? न हि तदिन्द्रियेण संयुक्तम्। नापीन्द्रियसंयुक्त-समवेतम्। तस्माच्चतुर्थः संयुक्तसमवेतसमवायोऽभ्युपगन्तव्यः, इतरथा स्वतन्त्रव्याघात इति। अनुभवव्याघातश्च, अनुभूयन्ते हि रूपत्वगन्धत्वादयः सामान्यविशेषा अनुगताः, तासु व्यक्तिषु परस्परव्यावृत्तिमतीषु एते नानुभूयेरन् असति सन्निकर्षान्तरे। यदि तु वैयात्याद् ब्रूयान्नानुभूयन्त एवेति, तदा प्रतिवक्तव्यं कुतस्त्योऽयमनन्तासु रूपगन्धादिव्यक्तिषु रूपमिति वा गन्ध इति वा व्यपदेशभेदः। चाक्षुषत्वाद्युपाधिनिबन्धन इति चेद्न न, अननुसंहितोपाधेरुपहितप्रत्ययायोगात्। न खल्वननुसंहितदण्डश्चैत्रं दण्डीति व्यपदिशति। न चेन्द्रियाण्यतीन्द्रियाणीन्द्रियदर्शनविषयभाव-मनुभवन्ति। तस्मादस्तीन्द्रियेण रूपत्वादिसामान्यानुभवो यन्निबन्धनाः कासुचिदेव व्यक्तिषु केचिदेव व्यपदेशभेदा इति सिद्धं सन्निकर्षान्तरम्। विशेषणभावेन च संयुक्तविशेषणं समवेत-विशेषणं च संगृहीतम्। यस्येन्द्रियेण यादृशः सन्निकर्षः तादृशं तत्र दर्शयति—तत्र चक्षुरिति। शब्दस्याकाशगुणत्वम्, कर्णशष्कुल्यवच्छिन्नस्य नभोभागस्य श्रोत्रत्वम्, आद्यस्यैव शब्दस्य संयोग-विभागयोनिजत्वम्, सन्तानेन श्रोत्रे समुत्पादः समवाय इत्यादि द्वितीये(१) निपुणतरमुपपादयिष्यते। अवयवावयविनौ गुणगुणिनौ क्रियाक्रियावन्तौ जातिजातिमन्तौ च मिथः सम्बद्धावनुभूयेते नान्यथा,

## वृत्तिः

आत्ममनःसंयोगजन्यसुखादिवारणाय—ज्ञानमिति। यद्यपि तज्जन्यत्वाज्ज्ञानमात्रेऽति-व्याप्तिः, ईश्वरप्रत्यक्षे चाऽव्याप्तिः, तथाऽपि साक्षात्करोमीत्यनुव्यवसायसिद्ध-साक्षात्त्वजात्य-वच्छिन्ने 'ज्ञानम्' इत्यन्तस्य तात्पर्यम्।

---

(१) २।२।३५ सू-भाष्यादिकं द्रष्टव्यम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

तन्तुषु पट इति शुक्लः पट इति पटः स्पन्दत इति च पटो द्रव्यमिति च बुद्धिव्यपदेशौ स्याताम्। शुक्लः पट इत्यादि सामानाधिकरण्यज्ञानं न हि सम्बन्धज्ञानमिति चेत्, किं पुनरिदं सामानाधिकरण्यम्? तादात्म्यमिति चेत्, न, द्वितीयबुद्धिव्यपदेशयोः (१) पौनरुक्त्यात् (२)। अपौनरुक्त्यं चाभिमन्यन्ते प्रतिपत्तारः, येनान्यतरदुपलभ्यान्यद्बुभुत्सन्ते। न चैकं वस्तु द्वयात्मकमिति युक्तम्, भेदाधिष्ठानस्य तन्नान्तरीयकस्य द्वित्वस्यैकात्मनि विरोधेनासंभवात्। तस्माद्भिन्ने एव वस्तुनी संबद्धे सामानाधिकरण्येन प्रतीयेते, असंबन्धे गौरश्व इतिवत्तदनुपपत्तेः। संबन्धेऽपि कुण्डे दधीतिवद्वैयधिकरण्यप्रसङ्ग इति चेन्न, शब्दवृत्तिभेदेन संबन्धाभेदेऽपि सामानाधिकरण्यवैयधिकरण्यव्यवस्थापनात्। न हि जातु दधिशब्दः कुण्डे वर्त्तते कुण्डशब्दो वा दधि। वर्त्तते तु सुरभिमधुरशुक्लादिशब्दा अभिधेयं निमित्तीकृत्य(३) पटादिषु, एवं पटादिशब्दा अपि जात्यादि निमित्तीकृत्य द्रव्ये प्रवर्त्तन्त इति सामानाधिकरण्यम्, तेन सामानाधिकरण्येऽपि प्रवृत्तिनिमित्तानां नैकात्म्यं परस्परम्, नापि द्रव्येण, किं तु तैस्तैरन्वितमेकं द्रव्यं प्रतीयते। शब्दानां तु तत्रैकस्मिन् प्रवृत्तेस्तद्वाच्यानामैकात्म्यभ्रमः। अयुतसिद्ध्या (४) तु कुण्डे दधीतिवन्न स्फुटतरो विवेकप्रकाशः। तदेवमस्ति संबद्धानुभवः, न चासौ संबन्धानुभवं विनेति संबन्धोऽनुभूयते, स चायुतसिद्ध्यादिसंपत्त्या समवायः, न चास्यान्यः समवायोऽनवस्थानात्। न चेन्द्रियेणास्य संयोगोऽद्रव्यत्वात्। न चासंबद्धस्य ग्रहणम्, इन्द्रियाणां प्राप्यकारित्वसमर्थनात्। तस्माद्विशेषणविशेष्यभावः परिशिष्यते। नन्वयं विशेषणविशेष्यभावोऽन्यत्र संबन्धान्तरपूर्व्वको दृष्टः। तत्किमत्र संबन्धान्तरं कल्प्यताम्? तथा चानवस्थेत्युक्तम्, न चेन्द्रियासंबद्धस्य ग्रहणम्, तस्माद्विना संबन्धान्तरं विशेषणविशेष्यभाव एषितव्य इति सिद्धम्। एवमभावेऽपि यदिन्द्रियसंयुक्तं वा यदिन्द्रियसंबद्धं वा यथा भूतले घटो नास्तीति वा नास्त्यकारे अनुदात्तस्वर इति वा, तस्य संयुक्तस्य वा विशेषणभावेन, समवेतस्य विशेषणभावेन चेन्द्रियप्रत्यासत्त्या ग्रहणम्। न च भूतलादिरूपमेव घटाभावो नार्थान्तरमिति सांप्रतम्, सत्यपि घटादौ भूतलस्य भावात्। न च कैवल्यं तस्य धर्म्मो घटभावविरोधी घटाभावादन्यः। न च दृश्ये घटादौ भूतलोपलम्भः कैवल्यमभावव्यवहारहेतु(५)रिति युक्तम्। एवं हि घटसंसृष्टभूतलग्रहोऽपि कैवल्यमिति घटाभावव्यवहारं प्रवर्त्तयेत्। न ह्यदृश्यो घटस्तदानीं दृश्यमानः। दृश्ये अनुपलभ्यमान इति तु विशेषणे किमपराद्धमुपलम्भाभावेन, यदपाकरणायोपलम्भाभावोऽभ्युपेयते। तस्मात्सदिवासदपि तत्त्वमभ्युपेयम्। तच्च प्रत्यक्षमिन्द्रियव्यापारे सति

(१) "शुक्लः पटः" इति पूर्व्वोक्तबुद्धिव्यपदेशयोः। (२) ननु शब्दमात्रधर्म्मस्य पौनरुक्त्यस्य बुद्धावसम्भवात् "बुद्धिव्यपदेशयोः पौनरुक्त्यात्" इति कथनमसङ्गतमिति चेन्न, पूर्व्वापेक्षया अन्यूनानतिरिक्तार्थकत्वमेव पौनरुक्त्यमित्यत्रैवं समाधाने दोषाभावात्। (३) अत्र ख-पुस्तके "द्रव्येषु" इत्यधिक-पाठः। (४) उभयोरपि सम्बन्धिनोः परस्परपरिहारेण पृथगाश्रयाश्रयित्वं युतसिद्धिः, तदभावोऽयुतसिद्धिः, तया। (५) "अभावः व्यवहारहेतुः" इति क-पु।

## न्यायवार्त्तिकम्

संयोगः कारणं गुणकर्मस्वारब्धव्येषु सापेक्ष इति सापेक्षो न निरपेक्ष इति। किमपेक्षते? भेर्याकाशसंयोगः तावत् शब्दस्य कारणम्, तस्यानुग्राहको भेरीदण्डसंयोगो दण्डगतवेगापेक्ष इति। यदि पुनर्भेरीदण्डसंयोग एव शब्दस्य कारणं स्यात्, व्यधिकरणः संयोगः शब्दकारणमिति सर्वत्रोत्पत्तिप्रसङ्गः। विभागाच्छब्दः—वंशदलविभागानुगृहीताद् वंशदलाकाशविभागाच्छब्द इति। स उत्पन्नः शब्दः सर्वदिक्कानि शब्दान्तराणि करोति, तान्यपि प्रत्येकं शब्दान्तराणि तावत्, यावत् कर्णशष्कुलीमत्याकाशदेश इति। यः कर्णशष्कुलीमत्याकाशदेशे समवैति, स समवायादुपलभ्यते। तद्गतेषु च सामान्येषु समवेतसमवायात्। समवाये चाभावे च विशेषणविशेष्यभावादिति। सोऽयं सन्निकर्षशब्दः संयोगसमवायविशेषणविशेष्यभावव्यापकत्वादुपात्त इति। सोऽयं सन्निकर्षः प्रत्यक्षस्य कारणं भवतीति लक्षणत्वेनोच्यते। यदीन्द्रियार्थसन्निकर्षः प्रत्यक्षस्य

## न्यायवार्त्तिकतात्पर्य्यटीका

तत्प्रत्ययात्। न च प्रतियोगिस्मरणव्यवहित इन्द्रियार्थसन्निकर्षो नालमभावधियमुपजनयितुमिति सांप्रतमित्यग्रे (१) दर्शयिष्यामः। सविकल्पकस्य प्रत्यक्षत्वसिद्धौ यथा शब्दस्मरण-पूर्वगृहीत-पिण्डानुसन्धानादयो नेन्द्रियव्यापारं व्यवदधतीति। न च शब्दस्मरणादीनाम् अनुयोगिता, भूतलविकल्पकं प्रत्यङ्गत्वात्, स्वाङ्गमव्यवधायकमिति न्यायात्, घटस्य तु प्रतियोगितेति सांप्रतम्। कस्य पुनः प्रतियोगी घटः? तदभावस्येति चेद्‌ भवतु, घटाभावानुभवस्य तु घटस्मरणं हेतुरिति न प्रतियोगि किं तु अनुयोग्येव। ननु स्वरूपमात्रं दृष्टं वेश्माद्यर्थं स्मरन्नेव बहिर्निर्गतश्चैत्रो यदा पृच्छ्यते केनचिद्—यस्य तव गृहे तदा किमासीन्मैत्र इति, स चैत्रः प्रतियोगिस्मरणविरहात्पूर्वमप्रतिपन्नमैत्राभावोऽपि तत्प्रश्नजनितमैत्रस्मृतिः क्षणं ध्यात्वा तदभावमवगम्याह—मित्र तत्र नासीन्मैत्र इति, तदियमसतीन्द्रियार्थसन्निकर्षेऽभावबुद्धिर्भवन्ती प्रत्यक्षाद्यतिरिक्तमभावाख्यं प्रमाणं व्यवस्थापयतीति। नैतत्, संयुक्तविशेषणलक्षणेन मनःसन्निकर्षेण स्मर्तव्यस्य स्मरणाभावं मैत्रस्य गृहीत्वा तेन लिङ्गेन तदभावस्य तदानीमनुमानात्। तथा हि तद्गृहं तदा मैत्राभाववत्, ज्ञानार्हस्य मैत्रस्याज्ञाने गृहस्य ज्ञायमानत्वात्। यद्‌ यस्य ज्ञानार्हस्याज्ञाने ज्ञायते तत्तदभाववत्, यथा घटाभाववद्भूतलम्, तथा च गेहम्, तस्मात्तथा। न च यत्कदाचिदानुमानिकं तेनेन्द्रियगम्येन न भवितव्यम्, प्रमाणसंप्लवव्यवस्थापनात्। तत् सिद्धं विशेषणभावादभावस्येन्द्रियप्रमेयतेति। संयोगसमवायपदपरिहारेण सन्निकर्षपदोपादानस्य प्रयोजनमाह—सोऽयं सन्निकर्षशब्द इति।

तदनेन प्रबन्धेनेन्द्रियस्यार्थेन सन्निकर्षाद्‌ यदुत्पद्यते ज्ञानं तत्प्रत्यक्षमिति भाष्यं व्याख्यातम्। संप्रति न तर्हीति चोद्यभाष्यं व्याचष्टे—यदीन्द्रियार्थेति। प्रत्यक्षज्ञानकारणाभिमान-

(१) ११८।९ पं।

## न्यायभाष्यम्

नेदं कारणावधारणम्—एतावत्प्रत्यक्षे कारणमिति(१), किं तु विशिष्टकारणवचनमिति। यत्प्रत्यक्षज्ञानस्य विशिष्टकारणं तदुच्यते, यत्तु समानमनुमानादिज्ञानस्य, न तन्निवर्त्त्यते(२) इति।

मनसस्तर्हीन्द्रियेण संयोगो वक्तव्यः ?

## न्यायवार्त्तिकम्

कारणत्वादुपदिश्यते, अत्यल्पमिदमुच्यते, अन्यान्यपि बहूनि सन्ति तान्यपि वक्तव्यानि। तद्यथा—आत्ममनःसंयोगः, इन्द्रियमनःसंयोगः, विषयप्रकाशसंयोगः, विषयस्थं रूपम्, विषयसंयोगिस्थं च, महत्त्वम्, अनेकद्रव्यवत्त्वम्, उपलब्धिफलः संस्कार इति। कस्मात् ? तद्भावे भावात् तदभावे चाभावादिति। तद्यदि कारणभावादिन्द्रियार्थसन्निकर्षग्रहणमेतान्यपि कारणानि वक्तव्यानि। न वक्तव्यानि। नेदं कारणावधारणार्थं सूत्रम्, अपि तु समानासमानजातीयविशेषणार्थम्। यत् प्रत्यक्षस्यासाधारणं कारणं तदभिधीयते, न पुनः साधारणं कारणं निवर्त्यत इति(३)। इन्द्रियमनःसंयोगस्तर्ह्यसाधारणत्वादुपसंख्येयः, न ह्ययमनुमानादिज्ञानानां कारणं भवति। न, अनेनैव तस्योक्तत्वात्। इन्द्रियार्थसन्निकर्षग्रहणेनेन्द्रियमनःसंयोग उक्तो वेदितव्यः। किं

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रवृत्तस्तदेकदेशं वदन्नकुशलः सूत्रकारः स्यादित्यर्थः। कारणान्तराणि दर्शयति—तद्यथेति। विषयसंयोगि चक्षुरालोकश्च, तत्स्थं रूपम्, आत्मीयेन हि रूपेणालोकचक्षुषी द्रव्यं दर्शयत इति स्थितिः। महत्त्वं वाऽनेकद्रव्यवत्त्वं वा, अनेकद्रव्या अवयवास्तद्वत्त्वमवयविनो महत एव न द्व्यणुकस्य, तस्मादन्योन्यनिरपेक्षत्वं महत्त्वानेकद्रव्यवत्त्वयोरिति विकल्प एव न्याय्य इति। सत्यप्येवं-लक्षणकत्वे चक्षुरवयविनस्तैजसस्य न चाक्षुषत्वमित्यत उक्तम्—उपलब्धिफलः संस्कार इति। धर्म्माधर्म्मनिमित्त उद्भवसमाख्यातः संस्कार उपलब्धिफलः, न चासौ चक्षुषि, तस्याहष्टवशे-नानुद्भूतरूपस्पर्शत्वादित्यर्थः। परिहरति—न वक्तव्यानीति। प्रत्यक्षलक्षणप्रवृत्तो हि सूत्रकार-स्तदेव ब्रूयात् यदस्यासाधारणम्, न तु सदपि साधारणमस्य कारणम्, न हि तत्तस्य लक्षणमतिव्याप्ते-रित्यर्थः। तदनेन नेदमित्यादिभाष्यं व्याख्यातम्। असाधारणं कारणं चेत्प्रत्यक्षलक्षणायोपादेयं हन्तान्यदप्यस्यासाधारणमस्ति कारणमिति तदप्युपादेयमिति देशयति—इन्द्रियमनःसंयोग-स्तर्हीति। तदनेन मनसस्तर्हीत्यस्य भाष्यस्यार्थ उक्तो वेदितव्यः। परिहरति—न, अनेनैव। इन्द्रियार्थसन्निकर्षेणैव। तस्येन्द्रियमनःसन्निकर्षस्योक्तत्वात्। एतदुक्तिसाध्यं यत्तत्तेनैव कृतम्, तत् साध्यं त्विन्द्रियमनःसन्निकर्षो न शक्नोति साधयितुम्। न च सुखज्ञाने मानसे अस्तीन्द्रिय-

(१) 'प्रत्यक्षकारण'मिति वि-टि। (२) वार्त्तिके "निवर्त्त्यते" इति। (३) 'यत् प्रत्यक्षज्ञानस्य' इत्यारभ्य 'तन्निवर्त्तत इति' इत्यन्तस्य भाष्यस्य व्याख्यानपरमिदं वार्त्तिकम्।

## न्यायवार्त्तिकम्

कारणम् ? उभयोरसाधारणत्वात्। न च यावदसाधारणं कारणं तावत् सर्वमभिधातव्यमित्यर्थः। अपि त्वन्यतरेणापि भिद्यत इति अन्यतरोपादानम्, इन्द्रियार्थसन्निकर्षग्रहणं वा, विशेषकत्वात्। यदिन्द्रियार्थसन्निकर्षादुपजायते विज्ञानं तस्यान्यतरद्विशेषकं भवति। इन्द्रियमर्थो वा तद्विशेषकम्, तेन व्यपदेशात्, यस्मादिदं ज्ञानमिन्द्रियेण वा व्यपदिश्यते, अर्थेन वा, रूपविज्ञानमिति चक्षुर्विज्ञानमिति वा। न पुनरिन्द्रियमनःसंयोगेन व्यपदिश्यते। न हि भवति रूपालम्बने ज्ञाने मनोज्ञानमिति। यदा त्वात्ममनःसंयोगान्मानस्यो बुद्धयः प्रवर्तन्ते, तदात्मना व्यपदिश्यन्ते मनसा च। यच्चासाधारणं तद्व्यपदेशभाग् भवति, तद्यथा—ऋत्वादिकारणसन्निधानात् प्रादुर्भवन्नङ्कुरो नर्त्वादिभिर्व्यपदिश्यते, अपि त्वसाधारणेन बीजेन व्यपदिश्यते यवाङ्कुर इति, तथेहापीत्यदोषः। इन्द्रियमनःसंयोगस्य वाऽग्रहणम् भेदेऽभेदात्। यस्मात् प्रत्यक्षज्ञानभेदे इन्द्रियमनःसंयोगो न भिद्यत इति।

## न्यायवार्त्तिकतात्पर्य्यटीका

मनःसन्निकर्षः, इन्द्रियार्थसन्निकर्षस्तु सर्व्वव्यापकः। वक्ष्यति(१)हि मनस इन्द्रियत्वम्, सुखादेश्चार्थत्वं सिद्धमेवेति। संप्रति व्यापकत्वमभ्युपेत्य परीहारान्तरमाह—इन्द्रियार्थेति। यद्यपीन्द्रियमनःसन्निकर्षेऽपीन्द्रियमस्ति प्रत्यक्षज्ञानस्य विशेषकमिन्द्रियेण व्यपदेशाद्द इन्द्रियज्ञानमिति, तथाऽपि मनसा व्यपदेशाभावान्मनसस्तत्राविशेषकत्वम्। इन्द्रियार्थसन्निकर्षे तूभयमपि विशेषकम्, उभाभ्यां प्रत्यक्षज्ञानस्य व्यपदेशात्, इत्ययमस्येन्द्रियमनःसन्निकर्षाद्विशेष इति। चोदयति—यदा त्विति। तुशब्दः पूर्वपक्षं व्यावर्तयति। युञ्जानस्य हि योगिनो यदात्ममनःसंयोगादात्मनि बुद्धयो भवन्ति ताः खल्वात्मना व्यपदिश्यन्ते आत्मबुद्धय इति। मनसा च व्यपदिश्यन्ते मनोबुद्धय इति। तस्मादुभाभ्यां व्यपदेशादुभयोर्विशेषकत्वमितीन्द्रियार्थसन्निकर्षवदात्ममनःसन्निकर्षो वक्तव्य इत्यर्थः। परिहरति—यच्चेति, चोऽवधारणे। यदेवासाधारणं तद्व्यपदेशभाग्भवति, कारणत्वेन तेन व्यपदिश्यत इत्यर्थः। परिहरति (२) एतदुक्तं भवति—यथा चक्षुषा इन्द्रियत्वेन ज्ञानं व्यपदिश्यते चाक्षुषमिति, तथा मनसाऽपीन्द्रियेण व्यपदिश्यते ज्ञानं मानसमिति। एवं यथा रूपेणार्थेन व्यपदिश्यते ज्ञानं रूपज्ञानमिति, तथा आत्मनाऽप्यर्थेन व्यपदिश्यते आत्मज्ञानमिति। तत्र चासाधारणत्वमेव तयोः। यत्र त्विन्द्रियान्तरमेवासाधारणम्, लिङ्गादि वा, तत्रात्मा नार्थोऽपि तु प्रमातैव। तथा रूपादिज्ञानेऽनुमानादिज्ञाने वा न तत्र ज्ञानं मानसमिति वा आत्मज्ञानमिति वा व्यपदेशः, स कस्य हेतोः ? तयोः साधारण्यात्। आत्ममनःसन्निकर्षस्त्विन्द्रियार्थसन्निकर्षेण संगृहीतो न त्विन्द्रियार्थसन्निकर्षस्यैष संग्राहकोऽव्यापकत्वादिति। एकदेशिनः परीहारमुपन्यस्यति—इन्द्रियमनःसंयोगस्य वाऽग्रहणं भेदेऽभेदात्। यदा हि

(१) "मनसश्चेन्द्रियभावात्" इत्यादि। १।१।४ सू-भाष्यमेवात्रो द्रष्टव्यः। (२) "परिहरति" इति खे-पु नास्ति।

### न्यायभाष्यम्

भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यत इति समानत्वान्नोक्त इति ।

### न्यायवार्त्तिकम्

यद्यभेदादग्रहणं इन्द्रियार्थसन्निकर्षस्यापि तर्ह्यग्रहणम् एकेन्द्रियग्राह्येषु अभेदादिति प्राप्तं यथा शुक्लो गौर्गच्छतीति ?। न वक्तव्यम् (१), उक्तोत्तरत्वात्। उक्तोत्तरमेतत्—नेदं 'कारणावधारणार्थं सूत्र'मिति। अनभ्युपगमाच्च। इन्द्रियमनःसंयोगस्य चाऽग्रहणं समानत्वात्। केन समानत्वादिति वाच्यम्। आत्ममनःसंयोगेन समानत्वात्। किं पुनस्तत् ? व्यपदेशाभाव इत्युक्तम्, अतीन्द्रियाधारता वा सामान्यम्। यथाऽऽत्ममनःसंयोगोऽतीन्द्रियाधार एवमिन्द्रिय-

### न्यायवार्त्तिकतात्पर्य्यटीका

नगरयोषितः कुतूहलात् प्रणिहितमनसो विकसितनिःस्पन्दनयनोत्पलाः सौधमालागवाक्षकैरवनिपतिं सबलवाहनमतिचिरप्रोषितपरावृत्तं गोपुरेण निविशमानमालोकयन्ति, तदा खल्वासामेकेनैवेन्द्रियमनःसंयोगेन क्रमवदनेकेन्द्रियार्थसन्निकर्षसहकारिणा भिन्नक्रमवन्ति हास्तिकाश्वीयादिप्रत्यक्षज्ञानानि जायन्ते। तदिदमाह—यस्मादिति। देशयति—यदीति। यदा हि मन्दं गच्छति गवि दूरतः संयुक्तसमवायेनेन्द्रियार्थसन्निकर्षेण शुक्लो गौरित्यज्ञासीत्, अथ प्रत्यासीदन् गच्छतीत्यपि विजानाति तेनैव संयुक्तसमवायेन सन्निकर्षेण, तेन प्रत्यक्षज्ञानस्य शुक्ल इति च गच्छतीति च भेदेऽपीन्द्रियार्थसन्निकर्षो न भिद्यते। तस्मादिन्द्रियार्थसन्निकर्षे तुल्यत्वादिन्द्रियमनःसंयोगोऽपि तत्र वक्तव्य इत्यर्थः। परिहरति—न वक्तव्यः। कुतः—उक्तोत्तरत्वादिति। तद्विभजते—उक्तेति। ननु भवतूक्तमुत्तरं भेदेऽभेदादित्यस्याक्षेपः समाधातव्य इत्यत आह—अनभ्युपगमाच्च। एकदेशिमतमस्माभिर्नाभ्युपेयते, तस्मान्न समाधेयमित्यर्थः। तत्किमिदानीं भिद्यमानस्य प्रत्यक्षज्ञानस्य नायं भिद्यते इति समानत्वान्नोक्त इति भाष्यमनुपपन्नमेव नेत्याह—इन्द्रियमनःसंयोगस्य चाग्रहणं समानत्वात्। पृच्छति—केनेति। उत्तरम्—आत्ममन इति। पुनः पृच्छति—किं पुनः समानत्वम् ? उत्तरम्—व्यपदेशाभाव इत्युक्तम्। तेन भाष्यस्यायमर्थः प्रत्यक्षज्ञानस्य रूपज्ञानस्य, रूपज्ञानमिति वा चक्षुर्विज्ञानमिति वा व्यपदेशेन भिद्यमानस्यात्ममनःसंयोग इव अयम् इन्द्रियमनःसंयोगो न भिद्यते। एवं हि स भिद्यते, यदि स्वसंबन्धिवाचकेन व्यपदेशेन स्वमन्यतो व्यावर्त्यते, न विशेषणेन विशिष्टं विशेष्यं ज्ञानमप्यन्यतो व्यावर्त्तयेत्। न त्वस्तीन्द्रियमनःसन्निकर्षाधाराभ्यामिन्द्रियमनोभ्यां प्रत्येकमस्य व्यपदेशो यथेन्द्रियार्थसन्निकर्षाधाराभ्यामिन्द्रियार्थाभ्यां व्यपदेशो रूपज्ञानमिति चक्षुर्ज्ञानमिति वा। तस्माद्व्यपदेशाभाव आत्ममनःसन्निकर्षेण साम्यमिन्द्रियमनःसन्निकर्षस्य, तस्मात्समानत्वान्नोक्त इति। प्रकारान्तरं समानत्वे

(१) "न वक्तव्य" इति तात्पर्य्यं।

## न्यायवार्त्तिकम्

मनःसंयोगोऽपीति। विषयावृत्तित्वं वा। यथाऽऽत्ममनःसंयोगो विषयावृत्तिः तथेन्द्रियमनःसंयोगोऽपीति। मनोवृत्तित्वं वा। यथा वाऽऽत्ममनःसंयोगो मनोवृत्तिरेवमिन्द्रियमनःसंयोगोऽपीति। तस्मादिन्द्रियमनःसंयोगस्याऽऽत्ममनःसंयोगेन सामान्या(१)दन्यतराभिधानेन वा चरितार्थत्वादनभिधानमिति।

इन्द्रियार्थसन्निकर्षोत्पन्नमित्ययुक्तम्, इन्द्रियस्याप्राप्यकारित्वात्। अप्राप्यकारिणी चक्षुःश्रोत्रे इत्येके। तत्र च न्यायं ब्रुवते—अप्राप्यकारि चक्षुः सान्तरग्रहणात् पृथुतरग्रहणाच्चेति। सान्तरस्यार्थस्य विप्रकृष्टदेशावस्थितस्य ग्रहणं दृष्टम्, न च चक्षुषस्तेनार्थेन प्राप्तिरस्ति, भूतविशेषस्येन्द्रियभावात्। य एवायं कृष्णसारलक्षणो भूतविशेषः स बाह्यभूतविशेषप्रसादानुगृहीतस्तत्तृष्णापूर्वककर्मापेक्षः चक्षुरित्युच्यते। तथा चोक्तम्—"रूपोपलब्धिसंवर्तकेन कर्मणा तत्तृष्णापूर्वकेण चक्षुरभिनिर्वृत्तमतो रूपोपलब्धेः कारणं भवतीति"। एवं शेषेषु। न च भूत-

## न्यायवार्त्तिकतात्पर्य्यटीका

दर्शयति—अतीन्द्रियाधारता वेति। लक्षणं हि प्रसिद्धं भवति यथा धूमो वह्नेः। न चातीन्द्रियद्वयाधारसन्निकर्षस्तथा प्रसिद्धो यथेन्द्रियार्थसन्निकर्षोऽर्थस्य संबन्धिन एकस्य प्रसिद्धत्वात्, इन्द्रियमनसोस्तु द्वयोरतीन्द्रियत्वात्। आत्मा तु यद्यपि युञ्जानस्य शरीराद्यतिरिक्तः प्रत्यक्षः तथाप्यस्मदादीनां न तथेत्यतीन्द्रिय उक्तः तदनेनातीन्द्रियाधारत्वं स्वरूपेणोक्तम्। तदेवं विषयावृत्तित्वमनोवृत्तित्वाभ्यामतीन्द्रियाधारत्वं सामान्यमाह—विषयावृत्तित्वं वेति। उपसंहरति—तस्मादिति। समानत्वादिति भाष्योक्तो हेतुः, चरितार्थत्वादिति स्वोक्तः। आक्षिपति—इन्द्रियार्थसन्निकर्षोत्पन्नमित्ययुक्तमिति। सान्तरग्रहणादिति हेतुं विभजते—विप्रकृष्टेति। ननु नार्थो विप्रकृष्टः, चक्षुषस्तत्र प्राप्तेरित्यत आह—न च चक्षुष इति। कस्मादित्यत आह—भूतविशेषस्येति। बाह्यो भूतविशेष आलोकः, तस्य प्रसाद इन्द्रियाव्यवधायकत्वम्, कुड्यादिभ्यो विशेषः यः खलु काचाभ्रपटलादिषु स्वच्छेषु समस्ति। स्यादेतत्। अस्ति कृष्णसारलक्षणो भूतविशेषः प्रसन्नान्धस्यापि, अतस्तस्यापि रूपोपलब्धिः स्यादित्यत आह—तत्तृष्णापूर्वकेति। रूपोपभोगतृष्णा हि तत्साधनं कृष्णसारमपि विषयीकरोति। एतदुक्तं भवति—भूतविशेषः कर्म्मापेक्षो रूपं च चक्षाणश्चक्षुरित्युच्यते। कर्म्मक्षयात् तु प्रसन्नान्धस्य न रूपं चष्ट इति न चक्षुः। अस्तु गोलकमेव चक्षुः किमेतावतापीत्यत आह—न चेति। विच्छिन्नं गोलकमर्थादनुभूयत इत्यर्थः।

## वृत्तिः

यद्वा इन्द्रियार्थसन्निकर्षोत्पन्नमिति सावधारणम्—इन्द्रियार्थसन्निकर्षातिरिक्तादनुत्पन्नम्, अतिरिक्तं चाऽत्र ज्ञानम्, तेन ज्ञानाकरणकमित्यर्थः। भ्रमवारकम् अव्यभिचारि,

(१) "समानत्वात्" इति ता-पाठः।

## न्यायवार्त्तिकम्

विशेषानुगृहीतस्य गोलकस्य प्राप्तिर्विषयेणास्ति। तस्मात् सान्तरग्रहणादप्राप्यकारीति। अपरे तु सान्तरग्रहणं हेतुं वर्णयन्ति। न हि प्राप्यकारिषु घ्राणादिषु सान्तर इति ग्रहणं दृष्टम्, दृष्टं तु चक्षुषि। पृथुतरग्रहणाच्च। राष्ट्रवनादिरूपं च महदुपलभ्यते। न चाक्ष्णोस्तथा पृथ्ववभास इति युक्तम्। दिग्देशव्यपदेशाच्च। यदि प्राप्यकारि चक्षुर्भवेत् दिग्देशव्यपदेशो न स्यात्। न हि प्राप्यकारिषु घ्राणादिषु तद्भवति। सन्निकृष्टविप्रकृष्टयोस्तुल्यकालग्रहणाच्च। यत् खलु गतिमद्भवति तत्तां गतिमभिन्दत् सन्निकृष्टमाशु प्राप्नोति विप्रकृष्टं चिरेण। शाखाचन्द्रमसो-

## न्यायवार्त्तिकतात्पर्य्यटीका

तदेवं वस्तुनः सान्तरस्य ग्रहणमप्राप्यकारित्वे हेतुरुक्तम्। केचित् तु सान्तरम् इति ग्रहणविशेषणं हेतुं कुर्वन्ति तन्मतमुपन्यस्यति—अपरे त्विति। साध्यविपर्ययादस्य व्यतिरेकं दर्शयति—न हि प्राप्यकारिष्विति। पक्षधर्म्मतामाह—दृष्टं त्विति। यच्चोक्त(१)मप्राप्यकारित्वेसाधनं पृथुतरग्रहणादिति, तद्विभजते—पृथुतरेति। द्वयाश्रयो हि संयोगोऽल्पमेव संयोगिनमनुरुध्यते न महान्तम्। न जातु रथादिसंयोगा नभो व्यश्नुवते, मा भूत् सर्वत्र रथादीनां तत्संयोगादीनां चोपलब्धिः तेन यावन्मात्रं राष्ट्रवनादेर्गोलकेन व्याप्तं तावन्मात्रस्य ग्रहणप्रसङ्गः। हेत्वन्तरं चाह—दिगिति। अस्यापि व्यतिरेकमुखेन गमकत्वं दर्शयति—यदि प्राप्यकारीति। अपरमपि हेतुमाह—सन्निकृष्टेति। यद्यपि गतिक्षणानां प्रत्येकं स्वाश्रयस्य देशान्तरविभागसंयोगोपजननं प्रति क्षिप्रतायामविशेषः, स्वाश्रयप्रत्यासत्तौ वा विशेषस्तथाऽप्याद्यापादानविभागाद् आ च प्रापणीय-देशप्राप्तेरन्तरालवर्त्ती यावान् गतिक्षणप्रचयः पूर्व्वापरीभूतो गतिरिह विवक्षितस्तस्य सान्तरत्वं मन्दत्वं विलम्बः। नैरन्तर्यं पाटवं क्षिप्रता। तामिमां गतिमभिन्दद् नैरन्तर्य्येण कुर्वदपि सन्निकृष्टमाशु प्राप्नोति, न विप्रकृष्टेन तुल्यकालम्, किन्तु विप्रकृष्टं चिरेणेति। यथोक्तं दिङ्नागेन—

सान्तरग्रहणं न स्यात् प्राप्तौ ज्ञानेऽधिकस्य च।

बहिर्वर्तित्वादिन्द्रियस्योपपन्नं सान्तरग्रहणमिति चेद् अत उक्तम्—"अधिष्ठानाद्बहिर्नाक्षं" किं त्वधिष्ठानदेश एवेन्द्रियम्। कुतः? "तच्चिकित्सादियोगतः"।

सत्यपि च बहिर्भावे न शक्तिर्विषयेक्षणे(२)।
यदि च स्यात्तदा पश्येदप्युन्मील्य निमीलनाद्॥

यदि च स्यादुन्मील्य निमीलितनयनोऽपि रूपं पश्येत्, उन्मीलनादस्ति बहिरिन्द्रियमिति।

## वृत्तिः

भ्रमभिन्नमित्यर्थः। इदं चांशिकभ्रमस्यालक्ष्यत्वे, तल्लक्ष्यत्वे तु तद्वति तत्प्रकारत्वम्, निर्वि-कल्पस्य लक्ष्यत्वे तदभाववति तदप्रकारकत्वमित्यर्थः।

---

(१) वार्त्तिके—१०।१६ पं द्रष्टव्यम्। (२) आदर्शे तु—"सत्यपि च वह्निर्भावेन शक्तिर्विषये चक्षे।" इत्याकारः पाठः।

## न्यायवार्त्तिकम्

स्तुल्यकालग्रहणं दृष्टम्, तस्मादप्राप्यकारीति। यत् तावत् सान्तरग्रहणादिति, तदयुक्तं विकल्पानुपपत्तेः। सान्तरग्रहणमिति कोऽर्थः? किं तावत्सान्तरस्याप्राप्तस्य ग्रहणमित्ययमर्थः, आहोस्वित् सहान्तरेण ग्रहणं सान्तरग्रहणमिति? अस्तु तावत् पूर्वः पक्षः अप्राप्तस्य ग्रहणं सान्तरग्रहणमिति। नन्वयं प्रतिज्ञार्थ एव, ततश्च हेत्वभावः। किं कारणम्? हेत्वर्थस्य प्रतिज्ञार्थेनाऽऽक्षिप्तत्वात्। एतदुक्तं भवति—अप्राप्यकारि चक्षुः, अप्राप्यग्रहणादिति न प्रतिज्ञार्थाद्भिद्यते (१)। अथ ब्रूषे सहान्तरेण ग्रहणमिति। किं तदन्तरं नाम, यच्चक्षुषा विषयेण सहोपलभ्यते इति? किमाकाशमभावो द्रव्यान्तरं वा? यद्याकाशम्, तन्न चक्षुषो विषयः। न ह्याकाशं चक्षुषा गृह्यते अरूपित्वाद् वाय्वादिवत्। अथ रूपवद्द्रव्यमन्तरशब्दवाच्यम्, तस्य व्यवधायकत्वात् तेन सह ग्रहणमनुपपन्नम्। अथाभावोऽन्तरशब्दवाच्यः? स स्वतन्त्रश्चक्षुर्विषयो न भवतीति तेन सहोपलब्धावनैकान्तिकम्। न चान्या गतिरस्ति। तस्माच्छून्यमभिधानं सान्तरग्रहणा-

## न्यायवार्त्तिकतात्पर्य्यटीका

तद्वार्त्तिककारः सान्तरग्रहणादिति हेतुं विकल्प्य दूषयति—यत्तावदिति। सान्तरता खल्वप्राप्तिसाहचर्य्यादप्राप्तिं लक्षयति—हेत्वर्थस्य प्रतिज्ञार्थेनाक्षिप्तत्वादभेदेन। तदुक्तं—प्रतिज्ञार्थान्न भिद्यत इति। हेतुप्रतिज्ञापदवाच्यत्वेन भेदमुपचर्य्याक्षेप्याक्षेपकभावो द्रष्टव्यः। तस्य व्यवधायकत्वादिति। रूपवतोऽप्रसादस्वभावस्य कुड्यादेरित्यर्थः। यत्तु प्रसादस्वभावं तेजः तन्न गृह्यते, किं तु तस्य रूपमात्रं विस्फारिताक्षेण दृश्यते। तदाश्रयं च द्रव्यं साधयिष्यते। न च गुणो द्रव्यस्यान्तरम्। मा भूद्गन्धादिभिरन्तरं द्रव्यस्य, मा न भूतां च निरन्तरे द्रव्ये, स्वगुणाभ्यामन्तरितत्वात्। न चापातजन्मालोचनं वा विकल्पो वा द्रव्यानुमानं प्रतीक्षते येन रूपज्ञानानुमितं द्रव्यमिन्द्रियार्थयोर्द्रव्ययोरन्तरं स्यात्। अपि च रूपमात्रमगृह्यमाणे द्रव्ये स्वतन्त्रं गन्धादिवद् गृह्यमाणं कथमन्तरा स्वाश्रयमनुमापयेत्? आकाशादीनामाश्रयाणामग्रहणात्। तस्माद्विविक्तावयवतेजोऽवयविद्रव्याप्रत्यक्षत्वसमारोपमात्रेण दूषणं वक्ष्यमाणं त्वन्यथासिद्धत्वदूषणं पारमार्थिकं द्रष्टव्यम्। अथाभावोऽन्तरशब्दवाच्य इति, नास्माकं मूर्त्तद्रव्याभावादन्यदाकाशमस्तीति भावः। दूषयति—स स्वतन्त्रश्चक्षुर्विषयो न भवति। इन्द्रियं चार्थं चान्तराऽभावो ग्राह्यः, तेन सहार्थस्य ग्रहणं सान्तरग्रहणम्, न चेन्द्रियार्थयोर्मध्ये कस्यचित् संयुक्तस्य वा समवेतस्य वा ग्रहणमस्ति, यत्तन्त्रोऽयमभावो गृह्यते इति भावः। स्यादेतन्मा भूदान्तरालिकं संयुक्तं समवेतं वा, विशेष्यं गृह्यमाणमेव तु रूपादि विशेष्यमिति तत्तन्त्रोऽयमभावस्तद्विशेषणत्वेन निरूपयिष्यते, ततश्च सान्तरग्रहणमुपपत्स्यत इत्यत आह—तेन सहोपलब्धाविति। प्रतीयते हि

(१) 'प्रतिज्ञार्थान्न भिद्यते' इति तात्पर्यसम्मतपाठः।

## न्यायवार्त्तिकम्

दिति। यैरपि विद्धस्यमानैः सान्तरग्रहणादित्यस्य सान्तर इति ग्रहणमित्येतद्व्याख्यानं क्रियते, तदप्ययुक्तम्, सान्तर इति ग्रहणस्यान्यनिमित्तत्वात्। अन्यथैतत् सान्तर इति ग्रहणं भवति, शरीरावधिनिमित्तत्वात्। शरीरमवधिं कृत्वा सान्तरनिरन्तरे भवतः, न पुनरिन्द्रियप्राप्त्यप्राप्तिनिमित्ते भवतः। यत्र शरीरमिन्द्रियं चोभयमर्थेन सम्बध्यते तत्र निरन्तर इति ग्रहणं भवति। यत्र पुनरिन्द्रियमात्रं सम्बध्यते तत्र सान्तर इति। तस्मात् सान्तर इति ग्रहणस्यान्यनिमित्तत्वान्न सान्तरमिति ग्रहणादप्राप्यकारिता सिद्ध्यतीति। यदपि पृथुतरग्रहणादिति, तदप्ययुक्तम्, सम्बन्धमात्रेण महदण्वोर्ग्रहणात्। सम्बन्धमात्रेणैव महति धाऽणौ वा विषयभेदानुविधायी प्रत्यय उपजायते, तस्माद्‌द्वयमेतदपीति। यत्पुनरेतदुक्तं (१) दिग्देशव्यपदेशादिति,

## न्यायवार्त्तिकतात्पर्य्यटीका

त्वगादिभिरपीन्द्रियैः प्राप्यकारिभिरौष्ण्याभावविशेषणं शिशिरतरं पाथः, न चेन्द्रियाणामत्राप्राप्यकारिता, तस्मादनैकान्तिकम्। अन्वयाभ्युपगमेनैतदुक्तम्। अन्वयाभावे तु विरुद्धमिति भावः। न च तैजसं रूपमन्तरम्, येन सान्तरग्रहणं स्यादित्याह—न चान्या गतिरिति। यथा चैतत्तथोपपादितमधस्तात्। ये तु सान्तर इति ग्रहणमिति हेतुमाहुस्तान् प्रति दूषणमाह—यैरपीति। अन्यथासिद्धत्वे हेतुमाह—शरीरेति। शरीरावच्छिन्नाः खल्वात्मानः शरीरायतनाः शरीरमेवात्मानमभिमन्यमाना अर्थाननुभवन्ति। तत्र य एव शरीरासंबद्ध इत्यनुभूयते तमेव सान्तर इति मन्यते। इन्द्रियसंबन्धो भवतु, मा वा भूत्, शरीरसंबन्धेन तस्य स्पर्शादौ न सान्तरत्वाभिमान इत्यर्थः। हेत्वन्तरं दूषयति—यदपीति। संबन्धमात्रेणेति। मात्रग्रहणं संबन्धचतुष्टयव्याप्त्यर्थम्। तद्यथा—इन्द्रियेणार्थस्य संबन्धः, इन्द्रियावयवैरर्थस्य, अर्थावयवैरिन्द्रियस्य, इन्द्रियावयवैरर्थावयवानाम्, न चैतन्निर्य्यतां विना पृथ्वग्रतां भवतीति पृथ्वग्रता सूचिता। यथा वर्त्तिदेशे पिण्डितमपि तेजः प्रसर्प्पत्प्रासादोदरं व्याप्नोति। तत्कस्य हेतोः? पृथ्वग्रत्वादिति। स्वभावतः प्रसरदपि न स्वपरिमाणानुविधायिनं प्रत्ययमाधत्ते, किन्तु विषयभेदानुविधायिनम्। विषयनिरूपणाधीननिरूपणा हि प्रत्यया नेन्द्रियनिरूपणाधीननिरूपणाः। तदिदमुक्तं विषयभेदानुविधायी प्रत्यय इति। अपरमपि हेतुं दूषयति—यत्पुनरिति। देहमर्थं चान्तरावस्थितस्य पृथिव्यादेः संयुक्तसंयोगाल्पीयस्त्वं भूयस्त्वं चापेक्षमाणस्येति। खगानां चोपर्युपरि संचरतां दूरान्तिकभावो बहुलतमालोकावयवभागानां संयुक्तसंयोगाल्पत्वभूयस्त्वाभ्यामवगन्तव्यः। स च तादृगालोकावयवो प्रत्यक्षोऽन्यथा न रूपमात्रेण तदनुमानं शक्यमित्युक्तम्। न च खगानामुपर्युपरि संचरतां दूरान्तिकप्रत्ययः स्यात्, न च पतति पतत्रिणीह प्राप्तो नेहेति भवेत्, तस्मादन्यथासिद्धैरेव सद्दान्तरेण ग्रहणादितिवदत्रापि दूषणमिति द्रष्टव्यम्।

(१) १०२ पृ; ४पंक्तौ स्वयमेवोक्तम्

## न्यायवार्त्तिकम्

तदपि शरीरावधिनिमित्तत्वात् प्रत्युक्तम्। यत्रेन्द्रियं शरीरं चार्थेन सम्बध्यते तत्र दिग्देशव्यपदेशो न भवति, दूरान्तिकानुविधानं वा। यत्र त्विन्द्रियमेव केवलं सम्बध्यते तत्र शरीरमवधिं कृत्वा संयुक्तसंयोगाल्पीयस्त्वं भूयस्त्वं वाऽपेक्षमाणस्य दिग्देशप्रत्ययाः सन्निकृष्टविप्रकृष्टप्रत्ययाश्च भवन्ति। यत्पुनरेतत् शाखाचन्द्रमसोः तुल्यकालग्रहणादिति, तदपि न, अनभ्युपगमात्। को हि स्वस्थात्मा शाखाचन्द्रमसोस्तुल्यकालग्रहणं प्रतिपद्यते। कालभेदाग्रहणान्मिथ्याप्रत्यय एष उत्पलदलशतव्यतिभेदवदिति। कथं पुनरवगम्यते कालभेदाग्रहणनिमित्त एष युगपत्प्रत्ययो न पुनरेककाल एव? इदमनुमानम् आवरणानुपपत्तेरिति। यद्यप्राप्यकारि चक्षुर्भवति, न कुड्यकटादेरावरणस्य सामर्थ्यमस्तीत्यावरणानुपपत्तिः स्यात्। न च व्यवहितार्थोपलब्धिरस्ति। तस्मान्नाप्राप्यकारीति। दूरान्तिकानुविधानं चानुपलब्ध्युपलब्ध्योर्न स्यात्, अप्राप्य चक्षुरर्थं गृह्णातीति यदिदमस्य दूरे अग्रहणमन्तिके च ग्रहणमुभयमेतन्न स्यात्।

## न्यायवार्त्तिकतात्पर्य्यटीका

अपरमपि हेतुं दूषयति—यत्पुनरिति। युगपद्ग्रहणमसिद्धम्, तदभिमानस्त्वन्यथासिद्धः, अचिन्त्यो हि तेजसो लाघवातिशयेन वेगातिशयो यदुदयगिरिशिखरमारोहत्येव मार्तण्डमण्डले भवनोदरेष्वालोक इत्यभिमानो लौकिकानाम्। तादृशं चाक्षुषमपि तेज इति क्रमेणापि गच्छद् युगपत्तत्र तत्र प्राप्तमिति लक्ष्यते। न चैकस्मादेव कर्म्मणो युगपद् दूरान्तिकसंयोगा भवन्तीति युक्तम्। तद्धि स्वकार्य्यं जनयितव्ये स्वाश्रयप्रत्यासत्तिमपेक्षते। अन्यथा मथुरास्थस्य देवदत्तस्य कर्म्म पाटलिपुत्रेण देवदत्तं योजयेत्। वेगाख्यसंस्कारजमपि कर्म्म न सहसा शरमन्तरालदेशेन च लक्ष्येण च योजयति। तस्मान्मिथ्यैव यौगपद्याभिमान इति। चोदयति—कथं पुनरिति। अस्ति हि शाखाचन्द्रमसोर्ग्रहणे यौगपद्याभिमानः, न चायमसति बाधके मिथ्येति वक्तुं शक्यः, सोऽयमबाधितो बोधयत्यप्राप्यकारितां चक्षुष इत्यर्थः। परिहरति—इदम्रिति। इन्द्रियं यद्यगत्वाऽनागतमर्थं गृह्णीयात् किमस्य कुड्यकटाद्यावरणमपकुर्य्यात्, येन तदावृतं न गृह्णीयात्। गतौ तु स्पर्शवता प्रसादरहितेन सैवास्य प्रतिबद्धेति न प्राप्नोति विषयम्, अप्राप्तं च न गृह्णातीति। प्रयोगस्तु—चक्षुःश्रोत्रे प्राप्य स्वविषये कार्य्यं कुरुतः, जनकत्वे सति तदप्राप्तावजनकत्वात्। यज्जनकं सद् यदप्राप्तौ यन्न जनयति तत् तत्प्राप्तावेव तज्जनयति, यथा कुम्भजनको मृदामप्राप्तावकुर्वन् कुम्भं तत्प्राप्तावेव करोति, तथा चैतत्तस्मात्तथेति। युक्त्यन्तरमाह—दूरान्तिकानुविधानमिति। दूरे नोपलभ्यते अन्तिके चोपलभ्यते अप्राप्तेरविशेषेण दूरेऽप्युपलम्भः स्यात्, अनुपलम्भे वा अन्तिकेऽपि स स्यात्। प्राप्तौ तु दूरं गच्छत् प्रक्षीणं सत् प्राप्तमर्थं न गृह्णाति अतैजसम्, तैजसमप्यभिभूतं न गृह्णाति, यथोल्काप्रकाशं मध्यन्दिने। अनभिभूतं तु मार्त्तण्डमण्डलं गृह्णात्येवेति। चोदयति—

## न्यायवार्त्तिकम्

दृष्टं तु, तस्मान्नाप्राप्यकारीति। विषयीभावादिति चेन्न, सम्बन्धमन्तरेण विषयीभावानभ्युपगमात्। अथापीदं स्यात् यः चक्षुषोर्विषयीभवत्यर्थः स उपलभ्यते। यस्तु न भवति नासावुपलभ्यते इति। न च व्यवहितानां दूरावस्थितानां वाऽर्थानां चक्षुषो विषयीभावोऽस्ति, तस्मान्न ते गृह्यन्त इति। तच्च नैवम्, सम्बन्धमन्तरेण विषयीभावानभ्युपगमात्। कः सम्बन्धव्यतिरेकेण विषयीभावः? केवलं भवतः संज्ञामात्रं भिद्यते नार्थ इति। मयोच्यते सम्बन्ध इति, भवताऽभिधीयते विषयीभाव इति, न कश्चित् विशेष इति। अथ प्राप्यकारित्वे चक्षुषः किं प्रमाणम्? इन्द्रियत्वमेव। प्राप्यकारि चक्षुरिन्द्रियत्वात् घ्राणादिवत्। घ्राणादीन्द्रियं प्राप्यकारि दृष्टं तथा च चक्षुस्तस्मात् प्राप्यकारीति। अथ पुनर्न किञ्चिदिन्द्रियं प्राप्यकारि प्रतिपद्यते, तदा सर्वाणि पक्षीकृत्य करणत्वादिति वाच्यम्। करणं वा स्यादिति प्राप्यकारि दृष्टम्, तथा चेन्द्रियाणि, तस्मात् प्राप्यकारीणीति। अथ पुनर्वैयात्यात् सर्वानेवार्थानप्राप्यकारिणः प्रतिपद्यते, तदा कथम्? सोऽपि दृष्टसामर्थ्यानां कारणानां सर्वत्र कार्य्या-

## न्यायवार्त्तिकतात्पर्य्यटीका

विषयीभावादिति। योग्यो हि तादृश इन्द्रियक्षणः स्वकारणादुपजातः परिणतो वाऽर्थक्षणश्च, ययोरप्राप्तयोरेव ग्रहणग्राह्यभावः, व्यवहितविप्रकृष्टौ च न तौ तादृशौ, तत्किमप्रतीयमानप्राप्तिकल्पनयेत्यर्थः। परिहरति—तच्च नैवमिति। निषेत्स्येते हि क्षणभङ्गपरिणामौ भावानाम्, तेन स्थेमभाजां भावानां स्वरूपयोग्यता वा महत्त्वादिर्विषयीभावः सहकारिसाकल्यं वा ज्ञानोपजननं प्रति परिशिष्यते। तत्र स्वरूपयोग्यतामात्रं चेदास्थीयेत, तदा यदेवाव्यवहितं सन्निहितं सदजनयद्विज्ञानं विप्रकृष्टमपि व्यवहितमपि तदेवेति तथैव तेन ज्ञानं जनयितव्यम्। अस्ति हि तस्य तदाऽपि स्वरूपयोग्यतेति, सहकारिसाकल्यं तु प्राप्तिरेव, तस्मान्न संवन्धमन्तरेण विषयीभाव इति सूक्तम्। सन्दिग्धः पृच्छति—अथ प्राप्यकारित्व इति। अयमभिसन्धिः—कुलालादौ प्राप्यकारिणि दृष्टं यथा विप्रकृष्टो व्यवहितश्च न करोतीति, अप्राप्यकारिणि चायस्कान्तादौ दृष्टं यथा विप्रकृष्टो व्यवहितश्च लौहं मणिमाकर्षति, तस्मात्तत्र प्रमाणं वक्तव्यमिति, उत्तरम्—इन्द्रियत्वमेव प्रमाणम्, तदेव पञ्चावयवोपपन्नमाह—प्राप्यकारीति। यदि तु कश्चित् दृष्टान्तस्य साध्यविकलत्वमुद्भावयेत् त्वगादीनामप्राप्यकारित्वादिति, तं प्रत्याह—अथ न किञ्चिदिति (१)। पृच्छति—अथेति। योग्यतयैव हि कारणानि स्वकार्य्यं कुर्वन्ति, प्राप्तिस्तु स्वरूपयोग्यताप्रयुक्तां व्याप्तिमुपजीवति, न त्वस्याः स्वाभाविकं व्यापकत्वमिति भावः। उत्तरम्—सोऽपीति। सहकारिसाकल्यं तावन्न प्राप्तेरतिरिच्यत इत्युक्तम्। केवलं स्वरूपयोग्यता वक्तव्या। सा च व्यस्तानामप्यस्तीति यत्र तत्र

(१) अत्र वार्त्तिके "पुनः" इत्यधिकपाठः।

## न्यायवार्त्तिकम्

नुत्पत्त्या प्रत्यवस्थेयः। यदि खल्वेतानि कारणानि परस्परप्राप्त्यनपेक्षाणि स्वयमनुपजातशक्तिकानि कार्यमारभन्त इति कस्मात् कार्यं सर्वत्र न भवतीति वक्तव्यम्, अतो न कारणमप्राप्य-कार्यस्तीति। अनेकदण्डचक्राद्युदाहरणं लोक इति। तस्माद् व्यवस्थितमेतदिन्द्रियार्थसन्नि-कर्षोत्पन्नं ज्ञानमिति ॥

अथ ज्ञानग्रहणं किमर्थम्? सुखादिव्यवच्छेदार्थम्। इन्द्रियार्थसन्निकर्षात् सुखदुःखे अपि

## न्यायवार्त्तिकतात्पर्य्यटीका

व्यवस्थितेभ्योऽपि कार्य्योत्पादप्रसङ्गः। अयस्कान्तमणेरपि चक्षुष इव वृत्तिभेद एषितव्यः, अन्यथा व्यवधानविप्रकर्षयोरपि लौहाकर्षणप्रसङ्गात्। न च व्यवधानविप्रकर्षाभावसहितो लौहमाकर्षति, व्यवधानविप्रकर्षयोस्तु तदभावाभावेन न भवतीति सांप्रतम्, प्राप्तेरेव तत्र तत्र कार्य्योत्पादं प्रति उपयोगस्यावेदितत्वात्। योग्यतामात्रस्य चोपाधेरपाकृतत्वात्। यथा च द्रव्यातिरिक्तस्तद्धर्म्मः प्राप्तिस्तथा निवेदयिष्यते। तस्मात्सर्वमवदातम्। उपसंहरति—तस्मादिति। यदपि कृष्णसारानुग्रहोपघाताभ्यां दर्शनादर्शनादिति (?), तत्रोच्यते—तदधिष्ठानानुग्रहोपघाताभ्यां तस्यानुग्रहोपघातौ, यथा कूष्माण्डलतासेचनच्छेदनाभ्यां तत्फलस्यानुग्रहोपघातौ, अत एव हि निर्गताऽप्यच्छिन्नमूला चक्षुःसंततिः कार्याय समर्था न छिन्नमूलेति सिद्धम्।

पृच्छति—अथ ज्ञानेति। प्रत्यक्षसमाख्यातलक्ष्यानुवादेन लक्षणे विधीयमाने ज्ञायत एवैतज्-ज्ञानमिति, लोके साक्षात्कारिज्ञानहेतोः प्रत्यक्षत्वादिति भावः। उत्तरम्—सुखादिव्युदासार्थम्(१)। तदेव हि लक्षणवाक्यमुच्यते, यस्य लक्ष्यानपेक्षोऽतिव्याप्त्यव्याप्तिव्युदासो लक्षणपदेभ्य एव प्रतीयते। लक्ष्यानुरोधेन तु लक्षणव्यवस्थापनेऽन्योन्याश्रयत्वमगतिर्व्वेति (२) भावः। सुखादीनां विज्ञानाभिन्न-हेतुजत्वेन विज्ञानत्वादशक्यं व्यावर्त्तनमिति चेत्, न, अभिन्नहेतुजत्वासिद्धेः। न खलु यैव चन्दनस्पर्शज्ञानस्योत्पत्तौ सामग्री सैव सुखस्यापीति, अस्ति हि शीतार्त्तस्यापि चन्दनेन्द्रिय-संयोगात् शीतस्पर्शज्ञानमिति तद्वदेवास्य सुखमपि भवेत्। अवान्तरसामग्रीभेदेऽपीन्द्रियार्थमन-स्कारजत्वाज् ज्ञानजातीयत्वमिति चेत्, न, किञ्चित्कारणाभेदेऽपि कार्य्यभेदस्यानाकस्मि-कत्वोपपत्तेः। तदर्थत्वाच्च कारणभेदानुसरणप्रयासस्य। न चोपादानाभेदादभेद इति युक्तम्, भिन्नानामपि ज्ञानानामेकसमनन्तरप्रत्ययोपादानत्वस्य भवद्भिरभ्युपगतत्वात्। अपि चोपादाना-भेदश्च कुतश्चित्कारणभेदात् कार्य्यभेदश्चेति को विरोधः। अत एवास्माकमभेदेऽप्युपादानस्य पिठरस्यौष्ण्यापराख्यस्य च वह्निसंयोगस्य पूर्व्वरूपादिप्रध्वंसानां कारणानां भेदाद् भिन्नजातीया

(१) "व्यवच्छेदार्थम्" इति वार्त्तिकपाठः। (२) ननु लक्ष्यं यदि लक्षणान्तरेण व्यवस्थापितं स्यात् तर्हि कथमन्योन्याश्रय इत्यत आह "अगतिर्वा" इति, लक्ष्यानपेक्षलक्षणान्तरेणैव लक्ष्यव्यवस्थापने लक्ष्यसापेक्ष-लक्षणस्य प्रयोजनमेव न स्यादिति भावः।

## न्यायवार्त्तिकतात्पर्य्यटीका

जायन्ते गन्धरूपरसस्पर्शा इति सिद्धान्तः। तस्मादर्थप्रवणेभ्यो ज्ञानेभ्यस्तदप्रवणतया भिन्नजातीयाः सुखादयो यथास्वमनुकूलवेदनीयत्वादिभिर्लक्षणैरन्योन्यमपि भेदवन्तस्तीव्रसंवेगितया प्रमित्सानपेक्ष-मानसप्रत्यक्षवेदनीया इति रमणीयम्। स्यादेतत्, असत्यपीन्द्रियार्थसन्निकर्षे ज्ञानमात्रादेव सुखदुःखयोः स्वप्नान्तिके दर्शनात् यत्रापीन्द्रियार्थसन्निकर्षस्तत्रापि ज्ञानमस्तीति तदेव सुखदुःखयोः कारणं क्लृप्तसामर्थ्यात्, इन्द्रियार्थसन्निकर्षस्य तु ज्ञानमात्रोपयोगादन्यथासिद्धौ भावाभावाविति। तदयुक्तम्, स्वप्नान्तिके सुखदुःखोत्पादस्यासिद्धेस्तज्ज्ञानस्यार्थज्ञानस्येव मिथ्यात्वात्। यथा हि तत्र कामिनीस्मृतिविपर्यास एवमुपलब्धचरतज्जन्मसुखस्मरणविपर्य्यासः। सुखदुःखबुद्ध्युत्पाद एव वाऽत्र धर्म्माधर्म्मोपयोगो न तु सुखदुःखोत्पादे। न चासतीन्द्रियार्थसन्निकर्षे ज्ञानमन्यन्मनोरथादि वा तादृशं सुखभेदं विधत्ते यादृशो विषयोपभोगजन्मा, सतीन्द्रियार्थसन्निकर्षे ज्ञानमात्रमेव तस्य हेतुः, ज्ञानहेतुस्तु सन्निकर्ष इत्युक्तमिति चेत्, न, विषयासन्निधाने विषयस्मृतिमतस्तादृशस्य सुखभेदस्यानुत्पादादित्युक्तमेव। विषयसाक्षात्कारस्तदुत्पादहेतुर्न विषयज्ञानमात्रमिति चेत्, हन्तेश्वरस्याप्यस्ति तत्रभवतो योगर्द्धिसंपन्नानां च महाधियां समस्तवस्तुसाक्षात्कार इति तेषामपि सुखदुःखोत्पादप्रचयः प्रसज्येत असत्यां प्रतिपक्षधारणायाम्। तस्मादिन्द्रियार्थसन्निकर्षोऽपि सुखदुःखोत्पादहेतुरेषितव्यः, स च सत्यप्यर्थसाक्षात्कारे नास्ति सिद्धानामिति न तेषां सुखदुःखोत्पादः। अपि च चरमभावि कारणं गृहीत्वा पूर्वभाविनामकारणत्वापादने तन्त्वादीनामपि पटादीन् प्रत्यकारणत्वप्रसङ्गः। संयोगभेदादेव तादृशपटोत्पत्तेः, तन्त्वादीनां च संयोगभेद एवोपयोगात्, तत्सहितस्य तु तत्कारणत्वे सन्निकर्षस्याप्यालोचनसहितस्येति समानम्। यथाऽऽहुः पदार्थविदः (१)—'स्रगाद्यभिप्रेतविषयसान्निध्ये सतीष्टोपलब्धीन्द्रियार्थसन्निकर्षधर्म्मव्यपेक्षादात्ममनसोः संयोगात् यदनुग्रहाभिष्वङ्गनयनादिप्रसादजनकमुत्पद्यते तत्सुख'मिति। तस्मात् सुष्ठूक्तं सुखादिनिवृत्त्यर्थं ज्ञानग्रहणमिति। इह द्वयी प्रत्यक्षजातिरविकल्पिका सविकल्पिका चेति। तत्रोभयी इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति लक्षणेन संगृहीताऽपि स्वशब्देनोपात्ता, तत्र विप्रतिपत्तेस्तत्राविकल्पिकायाः पदमव्यपदेश्यमिति सविकल्पिकायाश्च व्यवसायात्मकमिति। तत्र व्यपदेशो विशेषणमुपलक्षणं वा नामजात्यादि, तत्कर्म्म व्यपदेश्यं विशेष्यमिति यावत्। तद्यथा डित्थोऽयं गौरयं शुक्लोऽयं कमण्डलुमानयं गच्छत्ययमिति सर्वं हि सविकल्पकं विशेषणविशेष्यभावेन वस्तुषु प्रवर्त्तते। अविद्यमानं व्यपदेश्यं यस्मिंस्तदव्यपदेश्यं जात्यादिस्वरूपावगाहि, न तु जात्यादीनां मिथो विशेषणविशेष्यभावावगाहीति यावत्। तत्र नामरहितमविकल्पकं नास्तीति ये विप्रति-

(१) "पदार्थविदः" प्रशस्तपादाचार्याः, वैशेषिकभाष्ये सुखलक्षणे आहुः।

## न्यायभाष्यम्

यावदर्थं वै नामधेयशब्दास्तैरर्थसम्प्रत्ययः, अर्थसम्प्रत्ययाच्च व्यवहारः। तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नमर्थज्ञानं 'रूपम' इति वा, 'रसः' इत्येवं वा भवति, रूपरसशब्दाश्च विषयनामधेयम्। तेन व्यपदिश्यते ज्ञानं—रूपमिति जानीते, रस इति जानीते। नामधेयशब्देन व्यपदिश्यमानं सत् शाब्दं प्रसज्यते, अत आह—अव्यपदेश्यमिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

पद्यन्ते तन्मतमपाचिकीर्षुरुपन्यस्यति भाष्यकारः यावदर्थं वै नामधेयशब्दाः। सर्व्वेऽर्थाः सर्व्वथा सर्व्वदा सर्व्वत्र नामधेयान्विताः। नास्ति सोऽर्थो यः कदाचित् क्वचित् कथंचिद्वा नामधेयेन वियुज्यते। तदनेन नामधेयतादात्म्यमर्थानां प्रतिजानीते। अत्र हेतुमाह—तैरर्थसंप्रत्यय इति। अर्था हि प्रतीयमाना नामधेयैरुपेतास्तत्सामानाधिकरण्येनावगम्यन्ते गौरित्ययमोऽश्व इत्यर्थ इति। न चोपायतया सामानाधिकरण्यं घटते। न हि चक्षुरादिसामानाधिकरण्यं रूपाद्यनुभवति। नापि ज्ञायमान उपाय उपेयसामानाधिकरण्यमनुभवति। न हि भवति धूमोऽयं वह्निरिति किं तु धूमोऽयं धूमत्वाद्वह्निमानिति। अपि चाऽशब्दोपायेऽनुमेयादौ न शब्दसंभेदेनाधिगमो भवेत्, अस्ति तु। तस्मात्तैर्नामधेयैः सह समानाधिकरणस्यार्थस्य प्रत्ययो यत इति। तस्मान्नामधेयात्मानोऽर्थाः। किं च गवादिषु वृक्षादिषु च शब्दापकर्षे अर्थप्रत्ययापकर्षात् तदुत्कर्षे त्वर्थप्रत्ययोत्कर्षात् प्रत्ययस्य च प्रत्येतव्योत्कर्षाधीनोत्कर्षत्वान्नामधेयोत्कर्षेणार्थोत्कर्षोऽर्थस्य तादात्म्यं कथयति, तदिदं समः प्रयोजनं संप्रत्यय इति समधिकः प्रत्यय इत्यर्थः। अस्त्यर्थसंप्रत्ययो नामधेयसामानाधिकरण्येन, न त्वेतावता नामधेयात्मता सिध्यति, अस्ति हि पुरोवर्तिसामानाधिकरण्येन रजतप्रत्ययो न चैतावता शुक्ती रजतात्मिका भवतीत्यत आह—अर्थसंप्रत्ययाच्च व्यवहारः। ततश्चाविसंवादात् प्रमाणं सन्नामधेयतादात्म्यं साधयत्यर्थानामित्यर्थः। तदेवं सामान्यतोऽर्थानां नामधेयतादात्म्यं व्युत्पाद्य प्रकृते योजयति। तत्रेदमिन्द्रियार्थसन्निकर्षादुत्पन्नं विषयज्ञानं(१) रूपमिति वा रस इति वा, एवं रूपाद्यर्थसामानाधिकरण्येन भवति। भवतु किमेतावताऽपीत्यत आह—रूपरसशब्दाश्च विषयनामधेयं किमेतावतापीत्यत आह—तेन व्यपदिश्यते ज्ञानम्। उक्तमपि व्यपदेशं सव्याख्यानमाह—रूपमिति जानीते रस इति जानीत इति। तथा चार्थानां नामधेयात्मकत्वात्तद्गोचरमालोचनमपि नामधेयगोचरमित्यर्थवन्नामधेयेन व्यपदिश्यमानं शाब्दं प्रसज्यत इति। न शब्दप्रमाणकतया शाब्दम्, अपि तु शब्दे जातं शाब्दम्, शब्दश्चास्य विषयत्वेन जनकोऽर्थतादा-

(१) भाष्ये "अर्थज्ञानम्" इति पाठः।

## न्यायभाष्यम्

यदिदमनुपयुक्ते शब्दार्थसम्बन्धेऽर्थज्ञानम्, न तत् (१) नामधेयशब्देन व्यपदिश्यते, गृहीतेऽपि च शब्दार्थसम्बन्धेऽस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो

## न्यायवार्त्तिकतात्पर्य्यटीका

तस्मात्। तथा च नाविकल्पं शब्दरहितमस्तीति तात्पर्य्यार्थः। तथा चाहुः—

न सोऽस्ति प्रत्ययो लोके यः शब्दानुगमादृते।
अनुविद्धमिव ज्ञानं सर्वं शब्देन गम्यते॥

बालमूकादीनामपि विज्ञानं शब्दानुव्याधवदेवानादिशब्दभावनावशात्। यदवोचत्—

आद्यः करणविन्यासः प्राणस्योर्द्ध्वं समीरणम्।
स्थानानामभिघातश्च न विना शब्दभावनाम्॥ इति

तदस्य निराकरणं लक्षणगतेनालोचनज्ञानावरोधार्थेनाव्यपदेश्यपदेन सूचितम्। इति। परीक्षापर्वणि वचनार्हमपि सुभाषितरुचितया तद्विलम्बमसहमानो भाष्यकारो लक्षणावसर एवाह। अत एवाह—अव्यपदेश्यमितीति। तेन सूचितेऽप्यर्थे अव्यपदेश्यपदं योजयति—यदिदमनुपयुक्ते शब्दार्थसंबन्धे अर्थज्ञानं तन्न नामधेयेन (२) व्यपदिश्यते। अयमभिसन्धिः—सामानाधिकरण्येन शब्दात्मकत्वं रूपादीनामभिधीयमानं शब्दब्रह्मात्मत्वं वोच्येत श्रूयमाणगौरित्यादिपदभेदात्मत्वं वा? न तावदाद्यः कल्पः। न खल्वस्मदादिसमस्तदर्शनपथातिवृत्तेन शब्दब्रह्मणा रूपादीनामस्ति सामानाधिकरण्यप्रतीतिर्लौकिकानां श्रूयमाणशब्दसामानाधिकरण्येन तु तादात्म्यप्रसाधने अनुपयुक्तशब्दसंबन्धस्य बालमूकादेः रूपादिज्ञानेषु नास्ति श्रूयमाणशब्दगन्धोऽपि, प्रागेव तु तत्सामानाधिकरण्यम्, न तु तेषामपि प्राग्भवीयशब्दभावनानुगमेन तत्सामानाधिकरण्यमिति सांप्रतम्। न खलु रूपाद्यात्मनः शब्दस्य रूपादिवैशद्येनावैशद्यं संभवति। युगपद्वैशद्यावैशद्यरूपविरुद्धधर्मयोगेन भेदप्रसङ्गात्। वैशद्ये तु व्युत्पन्नवदव्युत्पन्नोऽपि शब्दैर्व्यवहरेत्। न तु संबन्धग्रहणमपेक्षेत। न च तादात्म्यादन्यद्वाचकत्वं शब्दानां यत्र संबन्धग्रहापेक्षा भवेत्। न च तादात्म्येऽपि कल्पितभेदानां वाच्यवाचकभावः। तथा सति न सामानाधिकरण्यं स्यात्। न ह्यस्ति संभवो भेदकल्पना च सामानाधिकरण्यप्रथा चेति। तस्मादव्युत्पन्नानामस्ति शब्दरहितं रूपादिषु निर्विकल्पकं प्रत्यक्षमिति। न केवलमव्युत्पन्नानाम्, व्युत्पन्नानामप्यस्तीत्याह—गृहीतेऽपि च शब्दार्थसंबन्ध इति। अर्द्धोक्त एव सामानाधिकरण्यनिरासाय संबन्धग्रहणस्वरूपमाह—अस्यार्थस्य सास्नादिमद्रूपस्यायं गकाराद्योकारो नामधेयमिति। इतिकरणो ज्ञानपरामर्शप्रधानः। तथा च यो डित्थो नानादेशकालावस्थासंसृष्टः पिण्डभेदः सोऽयमिति सन्निहितदेशकाल इत्यर्थः। न त्वयं पिण्डो डित्थशब्द इति प्रत्ययः। औत्सर्गिकं हि शब्दानामर्थपरत्वं क्वचित्पुनरित्यादिभिः शब्दैस्तदपोद्यते। यत्रापि

(१) "न तत्" इत्यत्र "तत्" इति ज-ग। "तन्न" इति वि। (२) भाष्ये "नामधेयशब्देन" इति पाठः।

## न्यायभाष्यम्

गृह्यते, तदा तत् पूर्व्वस्मादर्थज्ञानात् न विशिष्यते, तदर्थविज्ञानं तादृगेव भवति। तस्य त्वर्थज्ञानस्याऽन्यः समाख्याशब्दो नास्तीति, येन प्रतीयमानं व्यवहाराय कल्पेत(१)। न चाऽप्रतीयमानेन व्यवहारः। तस्माज् ज्ञेयस्यार्थस्य (२) संज्ञाशब्देनेति-करणयुक्तेन निर्दिश्यते—रूपमिति ज्ञानम्, रस इति ज्ञानमिति। तदेवमर्थज्ञानकाले स न समाख्याशब्दो व्याप्रियते, व्यवहारकाले तु व्याप्रियते। तस्मादशाब्दमर्थज्ञान-मिन्द्रियार्थसन्निकर्षोत्पन्नमिति।

## न्यायवार्त्तिकम्

भवतः, तद्व्युदासार्थमाह—ज्ञानमिति। तच्चेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं विषयनामधेये-नाभिधीयत इति भाष्यम् (३)। तत्प्रतिषेधार्थमाह—अव्यपदेश्यमिति। यदिदमनुपयुक्तशब्दार्थ-सम्बन्धस्य विषयभेदानुविधायि विज्ञानं तत्प्रत्यक्षम्, कृतशब्दार्थसम्बन्धस्यापि तदुत्पत्तिकाले

## न्यायवार्त्तिकतात्पर्य्यटीका

संबन्धप्रतिपादनमभेदेन डित्थ इति, तत्रापि शब्दो वाच्यपरो न स्वपरः। यथा गौर्वाहीक इति लक्ष्यमाणगुणयोगपरः। न च तन्मात्रे वाहीकस्य गोत्वं संभवति। तस्माद्भिन्नयोरेव शब्दार्थयोः संबन्धग्रहात्तन्मूलत्वाच्च शब्दव्यवहारस्य न शब्दपुरःसरमपि ज्ञानं सामानाधिकरण्य-मात्मनोऽर्थस्यावगमयति। यत्तु शब्दानुपायेऽपि ज्ञाने शब्दः पूर्वं संभवति तद्गृहीत-सङ्केतस्य प्रथममिन्द्रियार्थसन्निकर्षादालोचनेन शब्दसंसर्गरहितेनालोचितेऽर्थमात्रे तस्यार्थस्य शब्दभेदेन संबन्धात् शब्दविषयः संस्कारः प्रबोध्यते, स प्रबुद्धः शब्दस्मृतिं जनयति। तेन व्युत्पन्नस्य निर्विकल्पकात् पराञ्चः प्रत्ययाः शब्दानुपाया अपि शब्दपुरःसरा जायन्ते। यथाऽऽहुः—

> यत्संज्ञास्मरणं तत्र न तदप्यन्यहेतुकम्।
> पिण्ड एव हि दृष्टः सन् संज्ञां स्मारयितुं क्षमः॥

तस्माद् व्युत्पन्नस्यापि नामधेयस्मरणाय पूर्व्वमेषितव्यो विनैव नामधेयमर्थप्रत्ययः। तदिद-मुक्तं गृहीतेऽपि च शब्दार्थसंबन्धे अस्यार्थस्यायं शब्दो नामधेयमिति। यदा तु सोऽर्थो गृह्यते नामधेयरहितो नामधेयस्मरणात् पूर्वमविकल्पकेन, तदा पूर्वस्मादव्युत्पन्नावस्थाया-मर्थज्ञानान्न विशिष्यत इति। यतो न विशिष्यते तस्मान्न तदर्थज्ञानं तादृगेव भवति। ननु परप्रतिपादनादिलक्षणव्यवहाराय स्वरूपेण ज्ञाने व्यपदेष्टव्ये यदर्थव्यपदेशेन व्यपदिश्यते तदव-गच्छामः अर्थव्यपदेशाकारमिति। कथं चार्थाकारं भवति, यद्यर्थव्यपदेशयोर्न्नाभेदस्तस्मात् पुनरपि तादात्म्यं प्रसक्तमित्यत आह—तस्य त्विति। अर्थाकारमेव तु ज्ञानमपदिश्यते अन्यथा-ऽशक्यत्वादित्यर्थः। प्रतीयमानं परेण। उपसंहरति—तस्मादिति।

तदेवमर्थज्ञानकाले न समाख्याशब्दो व्याप्रियते, प्रतीयमानतया व्यवहारकाले परप्रत्यायनकाले

(१) "कल्पेत" इति ख-पु पाठः। "तस्य" इत्यादिः "कल्पेत" इत्यन्तः पाठो ग-मूले न निवेशितः, पादटीकायान्तु धृतः। (२) "तस्माज्ज्ञेयस्य" इति ज-ग-भा०। (३) "इति भाष्यम्" इत्यनेन भाष्यस्थपाठ एव आनुपूर्व्या गृहीत इति तु न मन्तव्यम्, भाष्ये एतादृगानुपूर्वीकपाठाभावात्, अतः भाष्योक्तिमर्मकथनमेतद् बोद्धव्यम्।

## न्यायभाष्यम्

ग्रीष्मे मरीचयो भौमेनोष्मणा संसृष्टाः स्पन्दमाना दूरस्थस्य चक्षुषा सन्निकृष्यन्ते,

## न्यायवार्त्तिकम्

तादृगेव। अपरे त्वव्यपदेश्यमित्यनेनानुमानं निराकुर्वन्ति। तच्च नैवम्। कस्मात् ? इन्द्रियार्थसन्निकर्षोत्पन्नमिति वचनात्। न ह्यनुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति, अतो न प्रसङ्गोऽनुमान इति। ग्रीष्मे मरीचय इति भाष्यम्। तत्प्रतिषेधार्थमिदमुच्यते—अव्यभिचारीति। किमिदं व्यभिचारीति ?

## न्यायवार्त्तिकतात्पर्य्यटीका

तु व्याप्रियते कारणतया, तदनेन गोपालाविपालादीनां संज्ञानिवेशनं तासु तासु व्यक्तिषु व्यवहारोत्कर्षहेतुः नार्थोत्कर्षहेतुरित्यपि सूचितं भवति। तस्मादविकल्पप्रत्यक्षावरोधार्थेनाव्यपदेश्यपदेनास्यैवाविकल्पकस्य शब्दार्थव्याधरहितता सूचितेत्याशयवानुपसंहरति—तस्मादिति। तदेतद्भाष्यं वार्तिककारः तात्पर्य्यतो व्याचष्टे—तच्चेन्द्रियार्थेति, विषयभेदानुविधायि ज्ञानमिति शब्दात्मतामपाकरोति। चाक्षुषं हि रूपज्ञानं रूप एव नियतं न शब्दे प्रवर्त्तते। एवं श्रौत्रमपि शब्द एव नियतं न रूपादौ प्रवर्त्तते। यदि पुनरिदं शब्दात्मकं रूपादि भवेत् श्रोत्रजं ज्ञानं शब्दग्राहीति रूपादावपि प्रवर्त्तेत। अप्रवर्त्तमानं वा विधुरयति रूपादीनां शब्दात्मताम्। अपि च श्रूयमाणशब्दात्मत्वे रूपादीनाम्, तेषामपि श्रवणग्राह्यत्वमित्यन्धोऽपि रूपं गृह्णीयात्। अस्ति हि तस्य श्रोत्रं च शब्दज्ञानं च। एवं बधिरोऽपि शब्दं गृह्णीयात्। अस्ति हि तस्य लोचनं च रूपज्ञानं च। अशब्दोऽभाव इति च विवक्षितविपरीतापत्तिः शब्दाभावस्यार्थस्य शब्दत्वात्, अशब्दत्वे वा स एवार्थः शब्दाद्भिन्नः प्रसज्येत, एवमभावोऽप्यर्थ इति शब्दः स्यात्। तथा च नाभावः, शब्दस्य सत्त्वात्, तथा चार्थानुविधायि ज्ञानं न भवेत्, अस्ति च, तस्मान्न शब्दात्मानोऽर्था इति। तदुत्पत्तिकाल इति प्राथम्येन शब्दानुव्याधं व्यावर्तयति। एकदेशिव्याख्यानमाह—अपरे त्विति। इन्द्रियार्थसन्निकर्षेण हि लिङ्गेन यदिन्द्रियगतिज्ञानं तदपि प्रत्यक्षलक्षणोपेतमिति प्रत्यक्षं प्रसज्यत इति तन्निराकरणायाव्यपदेश्यपदम्। अपदेशो हेतुवचनम्, तदेव तदाभासेभ्यो विशिष्टं व्यपदेशः। तस्य कार्य्यं हेतुप्रत्यायनद्वारा अनुमेयज्ञानं व्यपदेश्यम्, न व्यपदेश्यमव्यपदेश्यमलिङ्गोद्भवमित्यनुमानं व्यावर्त्तितमित्यर्थः। तदेकदेशिमतं दूषयति—तच्च नैवमिति। नन्विन्द्रियगतिज्ञानमपीन्द्रियार्थसन्निकर्षाल्लिङ्गादुत्पन्नमित्यत आह—न ह्यनुमेयस्येति। नैतदिन्द्रियार्थसन्निकर्षादुपजायते, किं तु तज्ज्ञानात्। अत एवातीतेऽपि धूमादौ लिङ्गे तत्स्मरणमात्रादेवानुमेयज्ञानं भवति। न च सन्निकर्षपदस्य मुख्यत्वे संभवति ज्ञानलक्षणा युक्तेति भावः। उपसंहरति—अत इति। इमं च वार्तिकग्रन्थमबुध्यमाना इन्द्रियगतिज्ञाननिवृत्त्यर्थमिन्द्रियविषयेष्विति पदं सूत्रेऽध्याहरन्तीति।

क्रमप्राप्तस्याव्यभिचारिपदस्य तात्पर्यं ब्रुवाणो भाष्यस्यापि तात्पर्यमाह—ग्रीष्मे मरीचय

## न्यायभाष्यम्

तत्रेन्द्रियार्थसन्निकर्षादुदकमिति ज्ञानमुत्पद्यते, तच्च प्रत्यक्षं प्रसज्यत इत्यत आह—अव्यभिचारीति। यदतस्मिंस्तदिति तद्व्यभिचारि, यत्तु तस्मिंस्तदिति तदव्यभिचारि प्रत्यक्षमिति।

## न्यायवार्त्तिकम्

यदतस्मिंस्तदिति भवति। किं पुनरत्र व्यभिचारि, किमर्थः? आहो ज्ञानमिति? एके तावद्वर्णयन्ति—

## न्यायवार्त्तिकतात्पर्य्यटीका

इतीति। यद्यपि सामान्यलक्षणेनैव व्यभिचारिणो निरस्ताः प्रत्ययास्तदपेक्षं च विशेपलक्षणम्, अन्यथाऽनुमानादिपदेष्वप्यव्यभिचारिपदमुपादेयं स्यात्, तथाऽपि सिद्धे सत्यारम्भो नियमार्थः, द्वयी हि प्रमाणानां गतिः—किञ्चित् सत्तामात्रेण प्रमासाधनं यथा प्रत्यक्षम्। न हि चक्षुरादीनां ग्रहणं प्रमायामुपयुज्यते अपि तु सत्तैव। अनुमानादीनि तु स्वज्ञानेन प्रमासाधनानि, न खल्वगृहीतं लिङ्गं वा शब्दो वाऽऽगमसहितं सादृश्यं वा यथाविषयमादधाति प्रमाम्। तत्रानुमानस्य प्रमोपजननात् प्रागेवार्थाव्यभिचारग्रहणमपेक्ष्यते नान्यथा, ततः प्रमा सिध्यतीति। शब्दादौ तु यद्यपि प्रमोपजननं प्रति नार्थाव्यभिचारग्रहापेक्षा, तथाऽपि शक्यमतिरोहितार्थमन्त्रमध्यपतितस्य झगित्येव प्रतीयमानार्थस्यापि "सृण्येव(१) जर्भरी तुर्फरीतू" इत्येवमादेर्मन्त्रस्याप्तप्रणेतृकतया सामान्यतोऽर्थाव्यभिचारित्वं ग्रहीतुम्। औत्सर्गिकं हि शब्दानामर्थपरत्वम्, अत एव निगमनिरुक्तव्याकरणसहायास्ततोऽर्थमवधारयन्ति। एवं यथा मुद्गस्तथा मुद्गपर्णीति आप्तवाक्यश्रवणादेव मुद्गसादृश्यज्ञानस्यानुपजनितफलस्यापि शक्यं तदर्थाव्यभिचारित्वं निश्चेतुम्। प्रत्यक्षस्य तु प्रमाणस्यात्यन्तपरोक्षस्योपलम्भ एव प्रमोपजननात् प्राग् दुर्लभः, प्रागेव तु तस्य अर्थाव्यभिचारित्वम्। यद्यपि च संवेदनप्रामाण्यपक्षेऽपि तत्संवेदनं मनसा सुलभम्, तथापि न तन्मात्रं प्रमाणम्, अपि त्वसाधारणेन्द्रियार्थसन्निकर्पसहायमिति तत्सहायस्य तस्य परोक्षत्वमेव, तेन प्रत्यक्षस्य प्रमाणस्य फलाव्यभिचारेणैवाव्यभिचारज्ञानम्, न स्वरूपतः, इत्यतः प्रमाणान्तरेभ्यो व्यावृत्तमसाधारणं प्रत्यक्षस्य रूपमापयितुमव्यभिचारिपदोपादानम्। अथवा प्रत्यक्षाव्यभिचार एवानुमानाद्यव्यभिचारे कारणम्। न ह्यस्ति संभवोऽव्यभिचरितप्रत्यक्षगृहीतपक्षधर्मताकं तर्कसहायप्रत्यक्षगृहीताविनाभावं वाऽनुमानं व्यभिचरतीति। यत्तु बाधितविषयं सत्प्रतिपक्षितं वानुमानम्, तदपि यद्यपि प्रथमं व्याप्तिग्रहणदोषेण न खण्डितम्, तथाऽपि खण्डनोत्तरकालं सोऽपि प्रतीयते। तथा च व्याप्तिग्राहि प्रत्यक्षं तत्रापि व्यभिचरतीति। एवमागमोऽपि साक्षात् क्वचित्पारम्पर्य्येण प्रत्यक्षपूर्वकस्तद्व्यभिचारेणैव व्यभिचरति। आगमव्यभिचारेण चोपमानव्यभिचारो व्याख्यातः।

(१) "सृण्येव" इति ख-पुस्तकपाठः।

## न्यायवार्त्तिकम्

अर्थस्य व्यभिचारः, अर्थस्तु तथा न भवतीति, तद्व्यभिचारात् तद्विषयं ज्ञानमपि व्यभिचारी-त्युच्यते इति। तच्च नैवम्। कस्मात्? अर्थस्य तथाभावात्। यत्तदुदकादिज्ञानमुपजायते मरीचिषु स्पन्दमानेषु, न तत्रार्थो व्यभिचरतीति; न हि ते न मरीचयो न वा स्पन्दन्ते, किन्तु ज्ञानं व्यभिचरति, अतस्मिंस्तदिति भावादिति। न हि तत्रोदकमस्ति। तांस्तु मरीचीन् इन्द्रियोपघातदोषादिन्द्रियेणालोच्य विपर्येति इति ज्ञानस्य व्यभिचारो नार्थस्येति।

## न्यायवार्त्तिकतात्पर्य्यटीका

तदेवं प्रत्यक्षाव्यभिचारेण प्रमाणानामव्यभिचारोऽस्तीति प्रत्यक्षस्यैव विशेषणमव्यभिचारिपदं चकार, नेतरेषां प्रमाणानाम्। न ह्यस्ति संभवस्तन्मूलं प्रत्यक्षमव्यभिचारि तानि च व्यभिचारीणीति। सोऽयं विशेषः प्रमाणान्तरेभ्यः प्रत्यक्षस्य। यथाऽऽह मीमांसावार्त्तिककारः—

प्रत्यक्षाव्यभिचारेण स्वलक्षणबलेन च।
प्रसिद्धाव्यभिचारित्वान्नानुमानं परीक्ष्यते॥ इति।

तस्मात् छ्ष्टूक्तं ग्रीष्मे मरीचय इति भाष्यम्, तत्प्रतिषेधार्थमिदमुच्यते—अव्यभिचारीति। पृच्छति—किमिदमिति। उत्तरम्—यदतस्मिन्निति। एतच्चोपपादितं द्वितीयसूत्रे। पुनः पृच्छति—किं पुनरत्रेति। एकदेशिमतेनोत्तरम्—एके तावदिति, तदेतद् दूषयति—तच्च नैवमिति। पृच्छति—कस्मात्? उत्तरम्—अर्थस्येति। तदेव स्फोरयति—यत्तदिति। अत्र च न निर्विकल्पकं भ्रान्तं किन्तु सविकल्पकमित्याह—तांस्तु मरीचीनिति। इन्द्रियेणालोच्य मरीचीन् उच्चावचमुच्चलतो निर्विकल्पकेन गृहीत्वा पश्चात्तत्रोपघातदोषा-द्विपर्य्येति, सविकल्पकोऽस्य प्रत्ययो भ्रान्तो जायते, तस्माद्विज्ञानस्य व्यभिचारो नार्थस्येति। यथाऽऽहुर्निरुक्तकाराः "नैष स्थाणोरपराधो यदेनमन्धो न पश्यति, पुरुषापराधः स भवति"। अव्यभिचारिपदेनैव संशयज्ञानमपि परास्तम्। नो खलु संशयज्ञानं विकल्प्यमानवस्तुगोचरं तद्रूपं वस्तु प्रापयति, अप्रापयच्चोपदर्शितं कथं संवादकम्, असंवादकं च कथमव्यभिचारि? तस्मादव्यभिचारिपदेनैव संशयज्ञाने निरस्ते सविकल्पकप्रत्यक्षावरोधार्थमुपादीयमानं व्यवसाया-त्मकपदं संशयज्ञानप्रत्यक्षतया करण(१)मन्वाचिनोति। तद्यथा—एधानाहर्तुमरण्यं गच्छ शाकमप्यानेष्यसीति शाकानयनमन्वाचीयते, न तु तदेवास्य प्रेषितुर्विधित्सितम्, तथेहापीति। व्यवसायात्मकपदं साक्षात्सविकल्पकस्य वाचकम्, तथा हि व्यवसायो विनिश्चयो विकल्प इत्यनर्थान्तरम्, स एवात्मा रूपं यस्य तत्सविकल्पकं प्रत्यक्षम्। तदेतदतिस्फुटत्वात् शिष्यैर्गम्यत एवेति भाष्यवार्त्तिककाराभ्यामव्याख्यातम्। अस्माभिः—

त्रिलोचनगुरून्नीतमार्गानुगमनोन्मुखैः।
यथामानं यथावस्तु व्याख्यातमिदमीदृशम्॥

(१) 'प्रत्यक्षताया वारण-' इत्येवं पाठो भवितुमुचितः प्रतिभाति।

## न्यायवार्त्तिकतात्पर्य्यटीका

स्यादेतत्, न व्यवसायात्मकं प्रत्यक्षं भवितुमर्हति। अभिलापसंसर्गायोग्यप्रतिभासं हि तत्। न चेन्द्रियार्थाभ्यां लब्धजन्म विज्ञानमर्थावभासं शक्यमभिलापेन योजयितुम्। न ह्यर्थे शब्दाः सन्ति,(१) अर्थात्मानो वा, तथा सत्यव्युत्पन्नस्यापि व्युत्पन्नवद्व्यवहारः स्यादित्युक्तम्। न चाभिलापोऽर्थासंस्पर्शी संवेदनधर्म्मः, अर्थेषु तन्नियोजनात्, तस्मादर्थादुपजायमानं ज्ञानमर्थमेवादर्शयेन्नाभिलापम्। न हि रूपाज्जायमानं(२) प्रत्यक्षं रससहितमेतदादर्शयति। तस्मादभिलापसंसर्गानपेक्षमभिलापसंसर्गिणमादर्शयद्विकल्पविज्ञानं विकल्पवासनोत्थापितमनियतार्थग्राहि मानसमात्मीयमुपेक्षालक्षणं व्यापारं तिरस्कृत्यानुभवप्रभवतयाऽनुभवव्यापारं दर्शनं पुरस्कृत्य वर्त्तमानमनुभवतयाऽभिमन्यन्ते प्रतिपत्तारः। तत्सिद्धमेतत्—यदर्थसामर्थ्यलब्धजन्म न तच्छब्दकल्पनानुगतम्, यथा निर्विकल्पकम्, अर्थजन्मानश्च विवादाध्यासिता विकल्पा इति प्रसङ्गसाधनविरुद्धव्याप्तोपलब्धिः। शब्दकल्पनानुगतत्वस्य हि प्रतिषेध्यस्य विरुद्धं तदननुगतत्वम्, तेनार्थसामर्थ्यजत्वं व्याप्तम्, तस्योपलब्धिस्तदननुगतत्वमुपस्थापयन्ती तदनुगतत्वं विरुणद्धीति। अथैषां प्रत्ययानां प्रत्यक्षमभिलापानुगतत्वमशक्यापह्नवम्। हन्त भोः नार्थसामर्थ्यजत्वमिति प्रसङ्गविपर्य्ययः, तथा हि यदभिलापकल्पनानुगतं न तदर्थसामर्थ्यजं यथेश्वरप्रधानादिविकल्पविज्ञानम्, तथा चैते विवादाध्यासिता विकल्पा इति व्यापकविरुद्धोपलब्धिः। निषेध्यमर्थसामर्थ्यजत्वं तदभिलापकल्पनाननुगतत्वेन व्याप्तं तद्विरुद्धं च तदनुगतत्वमिति। न च संदिग्धव्यतिरेकिता, अर्थसामर्थ्येन हि तदुत्पद्यमानम् अर्थरूपमनुकुर्यान्न शब्दरूपम्। न ह्यर्थे शब्दाः सन्ति तदात्मानो वेत्युक्तम्। असंबद्धरूपानुकारे तु विज्ञानस्य सर्वरूपानुकारेण सर्वसर्वज्ञतापत्तिरिति। संकेतवशाच्छब्दानामर्थसंबन्धेनार्थोपलब्धौ तत्स्मरणात् तत्संसृष्टवेदनमिति चेत्, य एव (३) तर्हि कृतसंकेताः तदेव स्मारयेदेतान्, तत्रैव च ते कृतसंकेता यदनुगतं सामान्यम्, न च तद्दृष्टं किन्तु स्वलक्षणं दर्शनगोचरः, तदेव हि परमार्थसतः विज्ञानस्य कारणम्, न तु सामान्यम्, सर्वसामर्थ्यरहितं हि तद् अलीकत्वात्। तस्माद्यद् दृष्टं न तेन शब्दानां संबन्धः, येन तु संबन्धो न तद्दृष्टम्। अपि च दृष्टस्य शब्दवाच्यत्वे दर्शनादिव वह्निरुष्ण इति वाक्यादपि प्रतीयेत। तथा च शब्दादपि तस्मिन् प्रतीते शीतापनोदनप्रसङ्गः। सामान्यविषयौ लिङ्गशब्दौ वस्तुभूतसामान्यवच्च स्वलक्षणं तादृशं च तद्दर्शनकारणमिति निर्विकल्पकेन प्रथमाक्षसन्निपातजन्मना जातिमद्वस्तुवेदनात्तत्रोपलब्धे च न संबन्धस्य शब्दस्य स्मरणम्, तथा च तच्छब्दाभिधेयजातिविशिष्टद्रव्यावगाहीन्द्रियार्थसन्निकर्षजन्मविकल्पप्रत्ययो गौरयमित्येवमाकारो जायत इति चेत्, यथाऽऽहुर्निरुक्तकाराः—निर्विकल्पकबोधेन द्व्यात्मकस्यापि वस्तुनो ग्रहणम्। तथा—

---

(१) ननु वाच्यत्वादिसम्बन्धेन शब्दा अर्थे सन्त्येव, तत् कथं "न ह्यर्थे" इत्यादिकं सङ्गच्छते? सत्यम्, संयोगसमवायादिना न सन्तीत्यभिप्रायः। तथाच "संयोगेन समवायेन कार्य्यतया वेति शेषः" इति परिशुद्धिः ५७३।६ प०। (२) "ज्ञायमानम्" इति क-पुस्तके। (३) 'यत्रैव' इति पाठः समीचीनः प्रतिभाति।

## न्यायवार्त्तिकतात्पर्य्यटीका

ततः परं पुनर्वस्तु धर्म्मैर्जात्यादिभिर्यया ।
बुद्ध्याऽवसीयते साऽपि प्रत्यक्षत्वेन संमता ॥ इति ।

तन्न, पिण्डविवेकेन जात्यादेरविकल्पकेनाग्रहणात् । न हि जातिजातिमन्तौ क्रियाक्रियावन्तौ गुण-गुणिनौ तत्समवायो वा विवेकेन चकासति, न च विवेकेनाप्रतिभासमानाः शक्या मिथो योजयितुं क्षीरोदकवदतद्वेदिना । तस्मादेकमविभागं स्वलक्षणमनादिविकल्पवासनासमारोपितजात्यादिभेदं तथा तथा विकल्प्यत इति युक्तमुत्पश्यामः । अपि च परमार्थसद्वस्तुद्वयवेदनेऽपि कुतो विशेषणविशेष्य-भावः ? न ह्यङ्गुल्यावेकविज्ञानविषयौ मिथो विशेषणविशेष्यभावमापद्येते । विशेषणं खलूपकारकम्, उपकार्य्यं च विशेष्यम्, नान्यथा तयोस्तद्भावः । न चैकविज्ञानसमारूढयोर्ज्ञाप्यज्ञापकभावः कार्य्य-कारणभावो वा संभवी, समानकालयोस्तयोरुभयोरपि पौर्वापर्य्यनियमात् । अपि च वस्तुनिवेशे जात्यादीनामुपाधीनामेकस्य वस्तुनः सत्त्वं च द्रव्यत्वं च पार्थिवत्वं च वृक्षत्वं च शिंशपात्वं चोपाधय इति दूरादेकोपाधिविशिष्टग्रहे सर्वोपाधिविशिष्टग्रहप्रसङ्गः, तथा ह्याधाराधेयभाव उपकारगर्भो भवति । पतनधर्म्मणो हि बदरस्य कुण्डमधरं प्रत्यासन्नमपतनधर्म्मकं बदरं विदधदाधारः, तद्वदिहापि द्रव्येण जात्यादीनामुपकर्त्तव्यम्, न च शक्त्यन्तरैरुपकरोति, शक्त्यन्तरोपकारेऽपि शक्त्यन्तरकल्पनायामनव-स्थापातात् । तस्मात् स्वभाव एव स्वकारणाधीनजन्मा द्रव्यस्य स तादृशो येन बहूनामुपाधीना-मुपकरोतीति वाच्यम् । तथा च सत्त्वोपकारसमर्थे तस्मिन् द्रव्ये गृह्यमाणे द्रव्यत्वाद्यावपि स एवास्य स्वभाव इति तत्स्वभावावच्छिन्नाः सत्त्वविकल्पकेन परमार्थसद्द्रव्यावगाहिना सर्व एव द्रव्यत्वपार्थिवत्ववृक्षत्वशिंशपात्वादयो विषयीकृता इति विकल्पान्तराणामानर्थक्यम् । यदाह—

यस्यापि नानोपाधेर्धीर्ग्राहिकाऽर्थस्य भेदिनः ।
नानोपाध्युपकाराङ्गशक्त्यभिन्नात्मनो ग्रहे ।
सर्वात्मनोपकार्य्यस्य को भेदः स्यादनिश्चितः ॥
एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे ।
दृष्टे तस्मिन्नदृष्टेऽपि तद्ग्रहे सकलग्रहः ॥ इति ।

अस्माकं तु अनादिविकल्पवासनोपादाना विकल्पा यच्च गृह्णन्ति यच्चाध्यवस्यन्ति तयोरुभयोरप्यन्यनिवृत्तिरूपतया अवस्तुत्वान्न मनागपि परमार्थसद्वस्तु गाहते, पारंपर्येण तु वस्तुप्रतिबन्धात्तत्र प्रवर्त्तयन्तः प्रापयन्तश्च न विसंवादयन्ति लोकम्, अतो वस्तुस्वभावा-विनिवेशाद्विकल्पानां न पौनरुक्त्यमस्ति । अपि चालोचिते वस्तुनीन्द्रियेण तदनन्तरोत्पन्नं शब्दस्मरणव्यवहितव्यापारमिन्द्रियमर्थश्च न सविकल्पिकामपि धियमुपजनयितुमर्हतः । यथाऽऽह—

अर्थोपयोगेऽपि पुनः स्मार्त्तं शब्दानुयोजनम् ।
अक्षधीर्य्यद्यपेक्षेत सोऽर्थो व्यवहितो भवेत् ॥

न च यदेवालोचनमजीजनदिन्द्रियं तदेव स्मरणसहकारि विकल्पप्रत्ययमाधत्ते, न च स्मृतिर्व्यव-

## न्यायवार्त्तिकतात्पर्य्यटीका

धायिका, स्वाङ्गमव्यवधायकमिति न्यायात्। यतो "यः प्रागजनको बुद्धेरुपयोगाविशेषतः स पश्चादपि" इति। नो खल्वतीतं भवति गोचरोऽक्षस्येति, न चागोचरे सहस्रेणाप्युपायैरेतत् प्रवर्त्तयितुमर्हतीति। न च स्मृतिरतीतविषयाऽननुभूतपूर्वं (१) वर्त्तमानं गोचरयितुमर्हति। तद्गोचरत्वे वान्धानामपि रूपसाक्षात्कारप्रसङ्गः, यथाऽऽह—"तेन स्यादक्षापायेऽपि नेत्रधी"रिति। एवं नामजातिगुणकर्म्मकल्पना च प्रत्यक्षत्वेन परास्ता। द्रव्यकल्पनाऽपि दण्डीति—

विशेषणं विशेष्यं च संबन्धं लौकिकीं स्थितिम्।
गृहीत्वा सङ्कलय्यैतत् (२) तथा प्रत्येति नान्यथा॥

न चैतावन्तं व्यापारकलापं विचारकनिर्वर्त्तनीयमिन्द्रियज्ञानं सहते, तस्य सन्निहितविषयबलेनोत्पत्तेरविचारकत्वादिति। गुणक्रियावतां चैतन्न संभवत्येव, रूपविवेकसंबन्धयोरप्रतिभासने घटनायोगात् क्षीरोदवत्तद्वेदनेत्युक्तम्। तस्मान्न तद्विकल्पं प्रत्यक्षमिति। अत्रोच्यते—यत्तावदुक्तमर्थसामर्थ्यजत्वाभिलापसंसर्गायोग्यप्रतिभासत्वयोर्विरोध इति, तत्र ब्रूमः स्याद्विरोधो यदि स्वलक्षणमेवार्थः, न त्वेतदस्ति। उपपादयिष्यते च परमार्थसज्जात्यादिमन्तमर्थं स्थेमभाजमभिलापसंसर्गयोग्यम्, तेन तज्जनितं ज्ञानमर्थसामर्थ्यजं चाभिलापसंसर्गायोग्यप्रतिभासं चेति न विरोधः। तथा च प्रसङ्गसाधनस्य संदिग्धव्यतिरेकिता। न च द्रव्याद्यभिन्नं जात्यादि भिन्नं कल्पयन्तो विकल्पा नार्थसामर्थ्यजन्मान इति सांप्रतम्, द्रव्यादपि हि भेदः साधयिष्यते (३) तेषाम्। यथा च भेदेऽपि तेषां तद्वाचकानां सामानाधिकरण्यं तथोपपादितमधस्तात्। (४) न च भिन्नेन शब्देन डित्थोऽयमित्यभेदकल्पनादर्थस्य विकल्पानामनर्थजत्वमिति युक्तम्। उक्तमेतद् अव्यपदेश्यपदव्याख्यानावसरे यथा न शब्दाभेदेनार्थयोरेकेन्द्रियग्राह्यता, किन्तु प्रथममालोचितोऽर्थः सामान्यविशेषवान् सङ्केतसमयवर्त्तिनीमात्मनोऽवस्थां स्मारयन् तत्कालभाविनं शब्दमपि स्मारयत्यवर्ज्जनीयतया, न त्विन्द्रियज विकल्पोत्पादं प्रत्युपयोगः कश्चिच्छब्दस्मरणस्य। अन्यथा बालमूकादीनां नेन्द्रियजः स्याद्विकल्पः, शब्दस्मरणाभावात्। सङ्केतसमयवर्त्यवस्थास्मरणं तूपयुज्यते, वस्तुनस्तदानीन्तनेदानीन्तनावस्थाभेदवत एकस्येन्द्रियजेन विकल्पेनाकलनात्। शब्दस्तु संपातायातो न निवेशयत्यात्मानमिन्द्रियजे विकल्पे। यथाऽऽह—

देवदत्तादिशब्देन हृदयस्थेन यः स्मृतः।
चक्षुषाऽपि स एवायं पिण्डः संप्रति दृश्यते॥

अनेन हि पिण्डस्य पूर्वापरावस्थावर्त्तिनीमेकतामिन्द्रियजविकल्पगोचरत्वेन दर्शयति, न तु शब्दनिवेशनमपि। तथाऽऽह—

(१) आदर्शे—"अननुभूतपूर्वं" इति। (२) "सकलय्यैतत्" इति न्यायमञ्जरी। (३) २।२।१० सूत्रवार्त्तिके। (४) ९६।१० पं स्वयमेवोपपादितम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

संज्ञा हि स्मर्य्यमाणाऽपि प्रत्यक्षं तु न बाधते।
संज्ञिनः सा तटस्था हि न रूपाच्छादनक्षमा॥

नार्थेन्द्रियव्यापारं व्यवधत्त इत्यर्थः। न च प्रागवस्थास्मरणसापेक्षतया नेन्द्रियार्थसन्निकर्षः कारणं विकल्पस्येति सांप्रतम्, यतो "न किञ्चिदेकमेकस्याः सामग्र्याः सर्वसम्भव" इति भवन्तोऽप्याहुः। अन्यथाऽऽलोकमनस्कारसापेक्षमर्थेन्द्रियं निर्विकल्पकमपि न जनयेत्। यत्तु प्रथमं नाजीजनत्तत् स्मरणसहकारिविरहात्। न हि नाजीजनत्कुशूलस्थं वीजमङ्कुरमिति न समवहितक्षित्यादिसहकारिग्राममप्यस्याजनकं भवति। न च जनकत्वाजनकत्वलक्षणो विरुद्धधर्म्मसंसर्गो भेदहेतुरित्युपपादयिष्यते क्षणभङ्गभङ्गे (१)। स्यादेतत्, अतीतावस्था नेन्द्रियगोचरस्तस्य वर्त्तमानार्थे नियमात्। न च वर्त्तमानोऽर्थः स्मरणगोचरः, स्मरणस्यानुभवजनितसंस्कारोद्बोधजन्मनः पूर्वानुभवगोचरं प्रति नियमात्, तस्माद्भिन्नविषयतया नेन्द्रियसहकारिता स्मरणस्य, न हि रूपविषयाः सहस्रमपि नयनप्रदीपादयः शब्दविषयस्य श्रवसः सहकारितामापद्यन्त इति। तत्किं भवतां यत्र गन्धबुद्ध्यनन्तरं चाक्षुषरूपविज्ञानं तत्र गन्धज्ञानम्, न समनन्तरप्रत्ययः? तत्रापि चक्षूरूपविषयं न गन्धविषयस्य ज्ञानस्य सहकारि भवितुमर्हतीति, भिन्नविषयत्वादेव। अथान्वयव्यतिरेकनिबन्धनः कार्य्यकारणभावो न समानविषयत्वमनुविधीयत इत्युच्येत, तदस्माकमपि समानम्। नन्वतीतावस्थाविशिष्टत्वमस्य नेन्द्रियसन्निकृष्टमिति कथं प्रत्यक्षम्? तत् किं यदिन्द्रियसंबद्धं तत् प्रत्यक्षम्? तथा सत्याकाशपरमाण्वादयोऽपि तत्संयुक्ता इति तेऽपि प्रत्यक्षाः प्रसज्येरन्। तस्माद् यदेवेन्द्रियजस्य ज्ञानस्य गोचरस्तत्प्रत्यक्षम्, न न (२) त्विन्द्रियसंबद्धम्। नन्वसंबन्धे इन्द्रियं कथं तत्र ज्ञानं जनयति? तद्वा ज्ञानं कथं प्रत्यक्षम्? प्रत्यक्षं चेत् कथमिन्द्रियार्थसन्निकर्षोत्पन्नमिति लक्षणं प्रत्यक्षं व्याप्नोति, अस्यैव प्रत्यक्षस्य लक्षणेनाव्यापनात्? मा भूदर्थस्य पूर्वकालवर्त्तितेन्द्रियगोचरः, तथाऽपि स्मरणसहकारिणा संस्कारसहकारिणा वेन्द्रियेण यज्जनितं ज्ञानं तेन तद्विषयीक्रियत एव। न च यत्स्मरणसहकारिणेन्द्रियार्थसन्निकर्षेणोपजनितं तदिन्द्रियार्थसन्निकर्षेणोत्पन्नं न भवति। तथा च नाव्यापकमस्य लक्षणम्। ननु पूर्वापरावस्थाविषयं परामर्शज्ञानं कथमेकम्, विषयभेदात् पारोक्ष्यापारोक्ष्यलक्षणविरुद्धधर्म्मसंसर्गाच्च? तथा हि तदिति परोक्षम्, इदमिति साक्षात्कारः, न च विरुद्धधर्म्मसंसर्गेऽप्येकत्वम्, त्रैलोक्यस्यैक्यप्रसङ्गात्। विषयभेदश्च पूर्वदेशकालपरदेशकालसंबन्धयोरेकस्य विरोधात्। यथा ह्येकस्मिन् पद्मरागमणौ गृह्यमाणे तदभावो व्यवच्छिद्यते यदि पुनर्न व्यवच्छिद्येत तदाऽभावो न परिच्छिद्येत, तस्य स्वाभावव्यवच्छेदरूपत्वात्। तदभावाविनाभाविनश्च ये पुष्परागादय इति तेऽपि सर्वे व्यवच्छिन्ना भवन्ति। यदि पुनर्न व्यवच्छिद्येरन् स एव पुष्परागाद्यात्मेति तदविनाभावी पद्मरागाभाव इति स एव तदैव पद्मरागाभावः पद्मरागश्च स्यादिति दुर्घटमापद्येत। एवं तस्यैव

(१) ३।२।१०—१७ सूत्रपर्य्यन्तभागे। (२) अत्र एको 'न'कारः अधिक इति मन्ये।

## न्यायवार्त्तिकतात्पर्य्यटीका

पूर्वदेशकालसंबन्धे गृह्यमाणे तदभावव्यवच्छेदक्रमेण परदेशकालसंबन्धो व्यवच्छिन्नः पूर्वदेशकालसंबन्धाभावाव्यभिचारी, तथा च न परदेशकालसंवन्धस्वभावः। तथाऽपि यद्यसौ तद्देशकालसंबन्धादन्यस्वभावो भवेत्, तथा सति स एव भवेन्न भवेच्चेति दुर्घटमापद्येत। तस्मात्पूर्वदेशकालसंबन्धादन्योऽपरदेशकालसंबन्ध इति सिद्धो विषयभेद इति। अत्रोच्यते—यदि पारोक्ष्यापारोक्ष्यधर्म्मभेदात् पूर्वापरावस्थापरामर्शज्ञानं भिद्येत, हन्त भोस्तदित्यपि विकल्पो भिद्येत। सोऽपि हि परोक्षश्चापरोक्षश्च विकल्पोऽविकल्पश्च अर्थे परोक्षो विकल्पश्च स्वात्मनि त्वविकल्पः अपरोक्षश्च। तस्माद्विषयभेदादविरोध इति को विरोधः? योऽपि कालदेशसंबन्धभेदेन विषयभेद उक्तः, सोऽप्ययुक्तः, यतो युक्तं यत् पद्मरागस्वरूपग्रहे तदभावो व्यवच्छिद्यत इति, स्वाभावव्यवच्छेदात्मकत्वेन भावानां तदव्यवच्छेदे स्वरूपाग्रहणप्रसङ्गात्। कस्मात् पुनः पुष्परागादयो व्यवच्छिद्यन्ते? पद्मरागाभावाविनाभावादिति चेत्, अथैतदभावाविनाभावज्ञानं कुतस्त्यम्? तयोः कदाचिदपि तादात्म्यं नानुपलम्भ्यं तेन तत्र तदभावाविनाभावः, (१) तथा च पूर्वापरदेशकालसंबद्धस्तादात्म्येनानुभूयमान इन्द्रियजेन विकल्पेन पद्मरागो न भिन्नो भवितुमर्हति। तस्मात् पूर्वापरदेशकालौ तत्संबन्धौ वा कामं भिद्येयाताम्, परस्पराभावाविनाभावात् तयोरेकदाऽपि तादात्म्येनाप्रतिभासनात्। न तु तदालिङ्गितस्वभावः पद्मरागमणिः, तस्य ताभ्यामन्यत्वात्। न चान्यभेदोऽन्यभेदमापादयति अतिप्रसङ्गात्। न चेन्द्रियार्थसन्निकर्षाभावेऽपि पूर्वापरावस्थापरामर्शात्मनो विकल्पस्य भावादनिन्द्रियजत्वमिति साम्प्रतम्, तथा सत्यविकल्पकमपि कामातुरस्य कामिनीं भावयतस्तद्विषयमिन्द्रियार्थसन्निकर्षं विनाऽपि दृष्टमिति नीलाद्यनुभवात्मानोऽप्यविकल्पका अनिन्द्रियजाः प्रसज्येरन्। यदि तु नीलाद्यनुभवानां कामिन्यनुभवात् कथंचिद्विशेषं ब्रूयात्, तदाऽस्माकमप्यनिन्द्रियजेभ्यो विकल्पेभ्य उत्प्रेक्षाव्यापारेभ्योऽस्तीन्द्रियजानां दर्शनव्यापाराणां भेदः। न च विकल्पगतो दर्शनव्यापारोऽनुभूयमानः सति संभवे निर्विकल्पकोपाधिरिति युक्तम्, सर्वा एव हीन्द्रियजा वृत्तयो विकल्पिका अविकल्पिका वा धारावाहिन्योऽहमहमिकया परस्परानपेक्षा एकमर्थमवगाहमाना उदयन्ते व्ययन्ते च, न त्वमूषामन्योन्यमनुगम्यानुगन्तृतामीक्षामहे, तस्मा-(२) दिन्द्रियार्थसन्निकर्षलब्धजन्मानो विकल्पा दर्शनव्यापारा नाना इति युक्तमुत्पश्यामः। न च शब्दप्रत्यक्षयोर्वस्तुगोचरत्वे सत्यपि प्रत्ययाभेदः, कारणभेदेन पारोक्ष्यापारोक्ष्यभेदोपपत्तेः। न च वह्निसंयोगजन्मा शीतापनोदो वह्निज्ञानाद्भवितुमर्हति, न चैकेनोपाधिना सत्त्वेन विशिष्टे तस्मिन् गृहीते उपाध्यन्तरविशिष्टतद्ग्रहप्रसङ्गः, स्वभावो हि द्रव्यस्योपाधिभिर्विशिष्यते, न तूपाधयो वा तैर्विशिष्टत्वं वा तस्य स्वभावः। न च यत् स्वभावसंबन्धि स स्वभावः, तथा सत्यसंबन्धित्वमेव,

---

(१) "तादात्म्येनानुपलम्भादिति चेत् यत तर्हि तादात्म्यमुपलभ्यते न तत्रा(द)प्यभावाविनाभावः" इति ख-पु-पाठः। (२) आदर्शे "कस्मा-" इति पाठः।

## न्यायवार्त्तिकतात्पर्य्यटीका

न हि तदेव तेन संबध्यते। अपि च रूपज्ञानं विषयग्रहणधर्म्मं नानापरमाणुविषयं न परमाणुस्वभावः। तत्स्वभावत्वे वा तेषां सर्वान्प्रत्यविशेषात् सर्व्वैरेव ते परमाणवो विदिताः स्युः। न चासंबद्धा एव स्वज्ञानेन रूपपरमाणवो विषयास्तस्येति वाच्यम्, असंबद्धस्य विषयत्वेऽतिप्रसङ्गात्। स्वभाव एवार्थज्ञानयोः संबन्धो यदर्थो विषयो ज्ञानं च विषयीति चेत्, हन्तोपाध्युपाधिमतोरपि स्वभाव एव संबन्धोऽस्तु, तथाऽपि विज्ञानार्थवन्न स्वरूपाभेदः। क्षणभङ्गपरिणामनिराकरणे (१) तु स्वभावातिरिक्तं संबन्धमुपपादयिष्यामः। तस्मान्नैकोपाध्यन्वितग्रहे सकलोपाध्यन्वितप्रत्ययप्रसङ्गः। यच्चैकविज्ञानगोचरयोर्न विशेषणविशेष्यभाव इति, तत्र ब्रूमः—भिन्नज्ञानगोचरस्वेऽपि नासौ संभवति। न हि विशेषणज्ञानं विशेष्याविषयं विशेष्यमवच्छेत्तुमर्हतीति। एवं विशेष्यज्ञानमपि विशेषणाविषयकं न स्वविषयमवच्छिन्द्यात्, तयोः परस्परवार्त्तानभिज्ञत्वात्। ताभ्यां वासना, ततो मानसप्रत्ययो विशेषणविशेष्याकार उत्पद्यते, न त्वस्ति वास्तवो विशेषणविशेष्यभाव इति चेत्, अस्तु तावद् वास्तवावास्तवचिन्ता, करिष्यते हीयमुपरिष्टात्। यस्तु भवतामस्य मानसत्वे प्रयासः, स वरमिन्द्रियजत्व एव भवतु, तथा सति दर्शनव्यापारत्वमस्य साक्षात् समर्थितं भवति। इतरथा हि निर्विकल्पकोपधानं कल्प्येत। नन्वविचारकमिन्द्रियज्ञानं कथं विशेषणविशेष्यादि सकलं समाकलयेत्। हन्त भोः किं मानसमपि ज्ञानमाकलयितुमर्हति? संकलयति मनसस्तत्कारणस्य सर्वविषयत्वादिति चेत्, यदि पूर्वकं (?) विज्ञानं मनः, कथं तस्य सर्वविषयता? अस्माकं तु मनः सर्वविषयमपि अचेतनतया न विचारकम्, तस्मादात्मैव सकलज्ञानतज्जनितवासनाधारः स्मर्ता च प्रतिसंधाता च। यदाह—

आत्मन्येव स्थितं ज्ञानं स हि बोद्धाऽवगम्यते।
स्मरणे चास्य सामर्थ्यं संधानादौ च विद्यते॥

स खल्विन्द्रियार्थसन्निकर्षादालोच्य जातिमन्तं संमुग्धमर्थमुद्बुद्धसंस्कारसमुपजातपूर्वपिण्डानुस्मृतिसहायः प्रागेव चक्षुषा विकल्पयति—गौरयमिति। यथाऽऽह—

करणं चेन्द्रियं बुद्धेः कर्त्ता चात्मा स चेतनः।
स च स्मृतिसमर्थत्वात् सर्वार्थान् कल्पयिष्यति॥

## वृत्तिः

तस्य विभागः अव्यपदेश्यं व्यवसायात्मकमिति। निर्विकल्पकं सविकल्पकं चेति द्विविधं प्रत्यक्षमित्यर्थः ॥ ४ ॥ (२)

---

(१) ३।२।१० सूत्रादारभ्य द्रष्टव्यम्। (२) अत्र लपुस्तके "सविकल्पकञ्च संस्कारोद्भवत्वतदनुभवत्वाभ्यां विभजते—( संस्कारोद्भवा प्रतिज्ञा )" इत्येवमधिकपाठः।

## न्यायभाष्यम्

दूराच्चक्षुषा ह्ययमर्थं पश्यन्नावधारयति धूम इति वा रेणुरिति वा। तदेतदिन्द्रियार्थसन्निकर्षोत्पन्नमनवधारणज्ञानं प्रत्यक्षं प्रसज्यत इत्यत आह—व्यवसायात्मकमिति। न चैतन्मन्तव्यम् (१)—आत्ममनःसन्निकर्षजमेवाऽनवधारणज्ञानमिति। चक्षुषा

## न्यायवार्त्तिकम्

दूराच्चक्षुषाऽर्थं पश्यन्नावधारयतीति भाष्यम्। तद्व्युदासार्थमाह—व्यवसायात्मकमिति। न, संशयस्यानिन्द्रियार्थसन्निकर्षपूर्वकत्वात्। न ह्वीन्द्रियार्थसन्निकर्षात् संशयज्ञानं भवति, किन्तु मानसः प्रत्ययः। संशीतिः संशय इति। तच्च नैवम्, संशयस्योभयनिमित्तत्वात्।

## न्यायवार्त्तिकतात्पर्य्यटीका

तेनैकविज्ञानवेद्यत्वे यद्यपि ज्ञाप्यज्ञापकभाव उपकार्य्योपकारकभावो नास्ति, तथाऽपि तदर्थालोचनानुगतस्मरणयोर्विशेषणविशेष्यभावावगाहि विज्ञानं प्रत्युत्पादकत्वमेवोपकारकत्वमस्ति। अर्थौ हि रूपरूपिभावेन स्थितावपि नापातजन्मना ज्ञानेन तथा गृहीतौ, अपि तु स्वरूपमात्रेण, न हि यावदस्ति तावद् ग्रहीतव्यम्, तेन तदेकदेशग्रहणेऽपि नाप्रमाणता। सविकल्पकं तूक्तसामग्रीजन्म जात्यादिरूपतया द्रव्यं च रूपितया कल्पयेत्। पश्चाज्जायमानमपीन्द्रियार्थसन्निकर्षप्रभवतया प्रत्यक्षं भवत्येव। अक्रमस्यापि क्रमवत्सहकारिभेदसमवधानवशात् क्रमेण कार्य्यकरणमुपपादयिष्यते (२)। तत्सिद्धमेतद्विवादाध्यासिता विकल्पाः स्वगोचरे प्रत्यक्षा अव्यभिचारित्वे सतीन्द्रियार्थसन्निकर्षजत्वात्। यो य एवंभूतः सर्वः प्रत्यक्षो यथाऽऽलोचनम्, तथा चैतत्तस्मात्तथेति। तस्मात् सविकल्पकप्रत्यक्षावरोधार्थं व्यवसायात्मकपदमिति सिद्धम्। तदस्य सविकल्पकप्रत्यक्षावरोधार्थस्यान्वाचीयमानो व्यवच्छेदः तद्व्यवच्छेद्यप्रतिपादनार्थं भाष्यमनुभाष्यान्वाचीयमानमेव व्यवसायात्मकपदस्यार्थमाह—दूराच्चक्षुषेति। न चैतन्मन्तव्यमिति भाष्यं व्याचिख्यासुर्देशयति—न, (३) संशयस्येति। ननु सतीन्द्रियार्थसन्निकर्षे पुरोवर्तिनि द्रव्ये धूम इति वा रेणुरिति वा ज्ञानमुत्पद्यमानं कथमनिन्द्रियजमित्यत आह—न हीति। कस्मान्मानस इत्यत आह—संशीतिरिति। संपूर्वो हि शीङ् भावप्रत्ययान्तो विशेषापेक्षे विमर्षे वर्त्तते, स चैकाधिकरणे स्मर्य्यमाणौ मिथो विरुद्धौ धर्म्मावारोपयन् यत्तत्रावधारयति। तथा चाधिकरणमात्रसमर्पणमिन्द्रियव्यापारः, मनसा तु स्मरणसहकारिणैव पुरुषः संशेते। अत एव विस्फारिताक्षः सौदामिनीसंपातात् सकृदालोच्य कं चित्सामान्यवन्तं धर्मिणं समन्धकारे सन्दिग्धे, तस्मान्मानस एवैष संशयो न त्विन्द्रियज इत्यर्थः। तदेतत् परिहरन्

(१) "तच्चैतन्मन्तव्यम्" इति वि-ज-चा। (२) ३।२।१७ सूत्रतात्पर्ये। (३) अत्र "न" इति क-पुस्तके नास्ति।

## न्यायभाष्यम्

ह्ययमर्थं पश्यन्नावधारयति, यथा(१) चेन्द्रियेणोपलब्धमर्थं मनसोपलभते, एवमिन्द्रियेणाऽनवधारयन्मनसा नावधारयति। यच्च (२) तदिन्द्रियानवधारणपूर्वकं मनसाऽनवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयः, न पूर्वमिति। सर्वत्र प्रत्यक्षविषये ज्ञातुरिन्द्रियेण

## न्यायवार्त्तिकम्

उभयन्तु संशयस्य निमित्तम् आत्मान्तःकरणसंयोग इन्द्रियार्थसन्निकर्षश्चेति। तत्र यदिन्द्रियार्थसन्निकर्षानवधारणपूर्वकं मनसाऽनवधारणं तदिह सम्बध्यते। तस्य हीन्द्रियार्थसन्निकर्षः कारणम्। पूर्वं तु न सम्बध्यते, यदात्मान्तःकरणसंयोगाद्भवतीति। तस्मादस्ति विषयो विशेषणस्येति युक्तं व्यवसायात्मकमिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

नचे (३) त्यादि भाष्यं व्याचष्टे—तच्च नैवम्। कस्मात्संशयस्येति? उभयं त्विति। तु शब्दो मनोमात्रनिमित्तत्वं व्यवच्छिनत्ति। तदनेन चक्षुषा हीत्यादि भाष्यं व्याख्यातम्। पश्यन् समानधर्म्माणं धर्म्मिणं नावधारयति। विशेषतः सन्दिग्धे तस्मिन्नित्यर्थः। इन्द्रियेणोपलब्धं सन्निकृष्टं सन्निकर्षपूर्वकत्वादुपलब्धे मनसोपलभते जानीते चक्षुःसहायेनेत्यर्थः। अत्र भाष्यं यच्च तदिन्द्रियानवधारणपूर्वकं मनसाऽनवधारणं तद्विशेषापेक्षं विमर्शमात्रं संशयः, न पूर्वमिति। अनवधारणशब्दोऽयं संशयज्ञाने, दर्शनात्, सत्यपीन्द्रियार्थव्यापारे संशयो नेन्द्रियज इति देशकोऽभिमन्यते। तदनयोः संशयज्ञानयोर्म्मध्ये यत्तदिन्द्रियानवधारणपूर्वकमिन्द्रियार्थसन्निकर्षपूर्वकं मनसाऽनवधारणं संशयज्ञानमित्यर्थः। न पूर्वम्, यदुपरतेन्द्रियव्यापारस्य संशयज्ञानं दृष्टान्ततया हृदि स्थितं शङ्कितुरित्यर्थः। तदेतद्भाष्यं व्याचष्टे—तत्र यदिन्द्रियार्थेति। इन्द्रियार्थसन्निकर्षश्चासावनवधारणं चेति कर्म्मधारयः, तत्पूर्वकं मनसाऽनवधारणं संशयज्ञानमित्यर्थः। ननु स्मरणव्यवहितव्यापारमस्य कारणं नेन्द्रियमित्यत आह—तस्य हीति। उपपादितमेतदधस्ताद् (४) यथा स्मरणं नेन्द्रियव्यापारं व्यवधत्त इति। पूर्वं त्विति, दृष्टान्ततया पूर्वत्वम्। स्यादेतत्, मन एवेन्द्रियानपेक्षं बाह्ये प्रवर्त्तत इत्यभ्युपेयम्, अन्यथा घटमहं जानामीति ज्ञानमनिमित्तं स्यात्। न तावदिन्द्रियजम्, आन्तरे ज्ञाने चक्षुरादीनामप्रवृत्तेः। नाप्यनुमानादिष्वन्तर्भवति, लिङ्गाद्यभावात्। तस्मान्मानसमेवेदम्। यदि च घटादौ बाह्ये न मनः प्रवर्त्तते, कथं घटमिति भवेत्? जानामीत्येव स्यात्। न चार्थनिरूपणमन्तरेण ज्ञानरूपनिरूपणम्, तस्माद्बाह्याभ्यन्तरविषयं मनस्तथा च सर्व एव संशयो मानस इत्याशङ्क्याह भाष्यकारः—सर्वत्र प्रत्यक्षविषय इति। यद्यप्ययमीदृशोऽनुव्यवसायो मानसस्तथाऽप्यन्धबधिरादीनामभावात्तत्पूर्वं व्यवसायोत्पत्तौ चक्षुराद्यपेक्षणीयम्,

---

(१) "तथा" ज-ञा। (२) 'यच्चे' इति ल-झा-पु- पाठः। (३) "तच्च तत्रादि" इति क-पु-पाठः। (४) ११८ पृ: तात्पर्य्यस्य २० पंक्तौ।

## न्यायभाष्यम्

व्यवसायः, पश्चान्मनसाऽनुव्यवसायः, (१) उपहतेन्द्रियाणामनुव्यवसायाभावादिति।

आत्मादिषु सुखादिषु च प्रत्यक्षलक्षणं वक्तव्यम्, अनिन्द्रियार्थसन्निकर्षजं हि तदिति? इन्द्रियस्य वै सतो मनस इन्द्रियेभ्यः पृथगुपदेशो धर्मभेदात्, भौतिका-

## न्यायवार्त्तिकम्

इन्द्रियार्थसन्निकर्षोत्पन्नमित्येवमादिलक्षणमात्मादिषु सुखादिषु च नास्ति, मनसोऽनिन्द्रियत्वादव्यापकमेतत् प्रत्यक्षलक्षणमिति। कथं पुनरिन्द्रियं मनो न भवति? इन्द्रियसूत्रेऽपठितत्वात्। परिपठितानि घ्राणादीनीन्द्रियाणि, न च तेषु मनः पठितम्, तस्मान्मनो नेन्द्रियम्। पृथक् चानभिधानान्नास्ति मनस इन्द्रियत्वे प्रमाणम्, ततश्च नेन्द्रियं मनः। न चैवं प्रत्यक्षाः सुखादयो भविष्यन्तीति। प्रत्यक्षाश्चैते, नानुमानिकाः, लिङ्गाभावात्। न हि लिङ्गमन्तरेणानुमेयार्थो गम्यते। नाप्यन्यत् प्रमाणं प्रतिपादकमस्ति सुखादीनाम्। न च तेषामनुमेयत्वम्। न चान्या गतिरस्ति। तस्मात्कर्त्तव्यं सुखादीनां प्रत्यक्षेण ग्रहणोपसंख्यानमिति। कश्चैवमाह—न प्रत्यक्षाः सुखादय इति? इन्द्रियार्थसन्निकर्षजन्यप्रत्यक्षवाद्याह—नैष दोषः, मनस इन्द्रियत्वादिन्द्रियार्थसन्निकर्षोत्पन्नं सुखादिज्ञानमिति। यत्तु सूत्रे-

## न्यायवार्त्तिकतात्पर्य्यटीका

अन्यथा अन्धबधिराद्यभावप्रसङ्गः। तथा च संशयज्ञानोत्पादेऽपीन्द्रियार्थसन्निकर्षोऽपेक्षणीय इत्यर्थः। तदिदं तस्य हीत्यादिना वार्त्तिकेन व्याख्यातम्। अव्यापकत्वेन लक्षणाक्षेपपरं भाष्यमात्मादिष्वित्यादि, तद् व्याचष्टे—इन्द्रियार्थेति। देशयति—कथं पुनरिति। परिहरति—इन्द्रियेति। मा भूदिन्द्रियसूत्रे पाठः, तद्धि बाह्येन्द्रियलक्षणम्, आन्तरं च मन इत्यत आह—पृथक् चेति। न च सुखादौ प्रमाणान्तरमस्ति, तस्मात्पारिशेष्यात् सिद्धं प्रत्यक्षत्वमित्याह—प्रत्यक्षाश्चेति। ननु नैते प्रमेयाः स्वसंवेदनसिद्धत्वात्, तत्किमत्र प्रमेयार्थेन प्रमाणेनेत्यत आह—न च तेषामिति। ननूक्तं स्वसंवेदनतया न प्रमाकर्म्मभाव एषामित्यत आह—न चान्या गतिरिति। संवेदनत्वेन हि तेषां स्वसंवेदनता, न चैते संवेदनमित्युक्तमधस्तादिति (२) भावः। आक्षेपमुपसंहरति— तस्मादिति। भाष्ये चात्मादिषु सुखादिष्विति नित्यानित्याभिप्रायं वर्गद्वयम्, आत्म-सुखत्व-दुःखत्वादयो नित्याः, अनित्याश्च सुखदुःखादय इति। तदिदमुक्तं दिङ्नागेन—"न सुखादि प्रमेयं वा मनो वाऽस्तीन्द्रियान्तरम्"। न च तत्सम्भवति, घ्राणादिसूत्रेण विभागपरेण निषेधादिति भावः। समाधिभाष्यमिन्द्रियस्य वै सत इति। तद्व्याचिख्यासुर्गूढाभिप्रायः पृच्छति—कश्चैवमिति। आक्षेप्तुरुत्तरम्—इन्द्रियार्थेति। समाधाता आह—नैष दोष इति। आक्षेप्तुरनुशयबीजमुद्घाट्य दूषयति—यत्तु सूत्र इति। नेदं विभागपरं घ्राणादिसूत्रम्, अपि तु लक्षण-

(१) "पश्चा"दित्यादि"व्यवसाया"न्तपाठः क-पु-नास्ति। (२) १०७ पृ: तात्पर्य्यस्य १२ पङ्क्तितः द्रष्टव्यम्।

## न्यायभाष्यम्

नेन्द्रियाणि नियतविषयाणि, सगुणानां चैषामिन्द्रियभाव इति; मनस्त्वभौतिकं सर्वविषयं च, नाऽस्य सगुणस्येन्द्रियभाव इति। सति चेन्द्रियार्थसन्निकर्षे सन्निधि-

## न्यायवार्त्तिकम्

ऽनभिधानं तद्वैधर्म्यात्। किं तद्वैधर्म्यम्? सर्वविषयत्वासर्वविषयत्वे। सर्वविषयं मनोऽसर्व-विषयाणीतराणि। सर्वविषयं तु मनः, स्मृतिकारणसंयोगाधारत्वाद् आत्मवत्, सुखग्राहक-संयोगाधिकरणत्वात् समस्तेन्द्रियाधिष्ठातृत्वाच्च आत्मवत्। भौतिकाभौतिकत्वं तु न, विरोधात्। न हि भौतिकं मनो नाप्यभौतिकमिति। कार्यधर्मावेतौ भौतिकत्वमभौतिकत्वं च, न च कार्यं मनः, तस्मान्न भौतिकं नाप्यभौतिकमिति। श्रोत्रे चासम्भवः यदि भौतिकत्वाभौतिकत्वलक्षणाद्वैधर्म्यादपरिपाठः सूत्रे मनसः, श्रोत्रमपि सूत्रे न पठितव्यं तर्हि, न हि श्रोत्रं भौतिकं नाप्यभौतिकमिति। स्वार्थे प्रत्ययविधानमिति चेत्, न। प्रत्ययवैयर्थ्यात्। स्यादेषा बुद्धिः स्वार्थिक एष प्रत्ययो भूतमेव भौतिकमिति। तच्च न। प्रत्यय-वैयर्थ्यात्। न हि भौतिकमित्यनेन (न) कश्चित्तद्धितार्थो लभ्यते, तस्माद् व्यर्थमेतत् स्वार्थे प्रत्यय-विधानमिति। यत्पुनरेतत् पृथगभिधानं नास्तीति न नास्ति, युगपज्ज्ञानानुपपत्तेरिति "युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग"मित्युच्यते। तेन च प्रतिपादितमेतन्मनसः करणत्वमिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

परम्, तत्र चेन्द्रियमपि मनो न लक्षितम्, वैधर्म्यादित्यर्थः। वैधर्म्यमाह—वैधर्म्यमिति। तत्र प्रमाणयति—सर्वविषयं त्विति। वैधर्म्यान्तरं दूषयति—भौतिकेति। कार्यस्य हि विशेषौ भौतिकत्वाभौतिकत्वे, भूतकार्य्यं भौतिकम्, यद्भूतकार्य्यं न भवति तद्भौतिकं न भवति। भूतकार्य्यत्व-प्रतिषेधश्च तदन्यकार्य्यत्वं गमयति, विशेषनिषेधस्य शेषाभ्यनुज्ञानहेतुत्वात्। इतरथा त्वकार्य्य-मेवोच्येत न त्वभौतिकमिति। तस्मादकार्य्यस्य मनसोऽभौतिकत्वं कार्य्यधर्म्मौ विरुद्धमित्यर्थः। अपि च वैधर्म्यान्मनोवत् श्रोत्रमपि न वक्तव्यमित्याह—श्रोत्रे चेति। शङ्कते—स्वार्थ इति। भूतानि हि घ्राणादीनि श्रोत्रान्तानि मनस्तु न भूतमिति वैधर्म्यमित्यर्थः। निराकरोति—तच्च नेति। दर्शयिष्यति हि वार्त्तिककारो (१) यथा स्वार्थिको न कश्चिदपि प्रत्यय इत्यर्थः। आक्षेपहेतु-मनुभाषते—यत्पुनरिति। दूषयति—तन्नास्तीति(२)। तदनेन सति चेन्द्रियार्थसन्निकर्षे इत्यादि भाष्यं व्याख्यातम्। यच्चापरं वैधर्म्यं घ्राणादिभ्यो मनस उक्तं भाष्यकारेण (३) तत्सिंहावलोकितेन

(१) अस्मिन्नेव पृष्ठे 'प्रत्ययवैयर्थ्यात्' इति ग्रन्थेन। (२) वार्त्तिके—'न नास्ति' इति पाठः। (३) भाष्ये अत्रैव १मपङ्क्तौ "सगुणानां चैषा" मित्यादिना ग्रन्थेन उक्तम्।

## न्यायवार्त्तिकम्

सगुणानामिन्द्रियभावो वैधर्म्यमित्येतदप्ययुक्तम्, श्रोत्रानभिधानप्रसङ्गादेव। तस्मात् सर्व्वविषयत्वासर्वविषयत्वमेव वैधर्म्यमित्येतदेव ज्यायः। तन्त्रान्तरसमाचाराच्च। तन्त्रान्तरे मन इन्द्रियमिति पठ्यते। तच्चेह न प्रतिषिध्यते। अप्रतिषेधादुपात्तं तदिति न, शेषाभिधानवैयर्थ्यात्। शेषाण्यपीन्द्रियाणि तैः परिपठितानि तस्मात् तान्यपि न वक्तव्यानि यद्यप्रतिषेधादुपादानं स्यादिति। न, तन्त्रयुक्त्यनवबोधात्। न भवता तन्त्रयुक्तिः परिज्ञायते। परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः। न च यस्य स्वमतपरिग्रहो नास्ति, तस्य स्वमतं परमतं वा भिद्यते। भवता च परमतानुरोधेन सर्वं स्वमतं निवार्यत इति। तन्निवारणात् स्वमतं परमतमित्येतदेव न स्यात्। तस्मादस्ति मन इन्द्रियं चेति। तदुपपन्नमिन्द्रियार्थसन्निकर्षोत्पन्नं सुखादिज्ञानमिति व्यापकं लक्षणम्।

समस्तमसमस्तं चेति सन्देहः। किमिदं प्रत्यक्षलक्षणं समस्तमाहो असमस्तमिति सन्देहः, कुतः ? उभयथा दर्शनात् समस्तं लक्षणं भवति व्यस्तं च। "इच्छाप्रयत्नद्वेष(१)सुखदुःखज्ञानान्यात्मनो लिङ्ग"मिति व्यस्तलक्षणम्, एकशः प्रतिपादकत्वात्। तथा "समानानेकधर्म्मोपपत्ते"रित्येवमादि व्यस्तम्। समस्तं पुनः वचनविघातोऽर्थविकल्पोपपत्त्या छलमिति। समस्तेनानेन छलं लक्ष्यते। "प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमान"मिति च। लक्षणं चेदमतः सन्देहः—किं समस्तमुतासमस्तमिति ? समस्तमित्याह। यस्मादेकशोऽनुमानसुखशाब्दविपर्ययसंशय-

## न्यायवार्त्तिकतात्पर्य्यटीका

दूषयति—सगुणानामिति। घ्राणादीनि यथा स्वस्वगुणेन गन्धादिना बाह्यं गन्धादि बोधयन्ति नैवं स्वगुणेन शब्देन श्रोत्रं बाह्यं शब्दं बोधयति, तन्मनोवत् श्रोत्रमपि घ्राणादिसूत्रे न पठितव्यमित्यर्थः। भाष्योक्तेषु मध्येऽभिमतं वैधर्म्यमुपसंहरति—तस्मादिति। भूतत्वाभूतत्वलक्षणं वैधर्म्यं न भौतिकत्वाभौतिकत्वग्रहणेन शक्यमित्यवधारणाभिप्रायः, ननु युगपज्ज्ञानानुत्पत्तेर्ज्ञानकारणं मनोऽस्तीत्यवगम्यते, न पुनरस्येन्द्रियत्वमपि, तद्भावानवगमे च नेन्द्रियार्थसन्निकर्षजं सुखादिज्ञानं शक्यं वक्तुमित्यत आह—तन्त्रान्तरेति। तन्त्र्यते व्युत्पाद्यते अनेन तत्त्वमिति तन्त्रं शास्त्रम् तदनेन मनसश्चेत्यादि भाष्यं व्याख्यातम्, तद्दूषितं दिङ्नागेन "अनिषेधादुपात्तं चेदन्येन्द्रियरुतं वृथा," तद्दूषयितुमुपन्यस्यति—न शेषेति। तद्दूषयति—न तन्त्रयुक्तीति। सर्वस्य तन्त्रान्तरे लोके च सिद्धत्वादवक्तव्यतायां स्वमतमिति नास्ति। वचनलिङ्गं हि मतज्ञानं न चाननुमते निषेधमात्रं शक्यं कर्तुम्, अभावस्य भावनिरूपणाधीननिरूपणत्वादिति भावः। सिद्धमर्थमुपसंहरति—तस्मादिति। प्रकृतमुपसंहरति—तदिति। तदेवं लक्षणपदानि व्याख्याय विमृशति—समस्तमिति। अभिमतमाह—समस्तमित्याह भाष्यकारः। हेतुमाह—यस्मादिति। इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यभिचारीति हि प्रत्यक्षलक्षणमनवयवेन समानासमानजातीयव्यावृत्तं

(१) 'इच्छाद्वेषप्रयत्न' इति चक्षादुपलभ्यसूत्रपाठः।

## न्यायवार्त्तिकम्

ज्ञानानि निवर्त्यन्त इति। यदीन्द्रियार्थसन्निकर्षोत्पन्नमित्याद्येकशः पदमभिधीयते, योऽयमेकेन पदेनार्थः संगृहीतः स प्रत्यक्षः स्यादिति तेन पूर्वोक्तानामनुमानादीनां प्रत्यक्षत्वप्रसङ्गः स्यादिति। एवं द्वयोः पदयोः उपादाने पदद्वयोपात्तस्य प्रत्यक्षत्वप्रसङ्गः। एवं त्रयाणां पदानाम् उपादाने तैरुपात्तस्य प्रत्यक्षत्वप्रसङ्गः। एवं चतुर्णाम् पदानाम् उपादाने तैरुपात्तस्य प्रत्यक्षत्वप्रसङ्गः। तस्मादेकद्वित्रिचतुष्पदपर्युदासात् पञ्चपदपरिग्रहेण त्रिंशत्कोटीर्व्युदस्य समस्तं लक्षणमित्युच्यते। तत्रैकपदपरिग्रहेण तावत्पञ्च कोटयः, द्विपदपरिग्रहेण दश, त्रिपदपरिग्रहेणापि दशैव, चतुष्पदपरिग्रहेण पञ्च। एकत्रिंशत्तमी पुनः समस्तपरिग्रहेणोपात्तेति। कस्मात्?

## न्यायवार्त्तिकतात्पर्य्यटीका

शक्यमेव लक्षयितुम्। नो खल्वयमसावश्च इति ज्ञानमिन्द्रियजं शब्दजं संभवति। तद्धि द्रव्यगोचरं वा भवेद्, वाच्यत्वगोचरं वा, वाच्यत्वविशिष्टद्रव्यगोचरं वा। तत्र द्रव्यमैन्द्रियकमेव न शाब्दमित्यशक्यं तज्ज्ञानं व्यवच्छेत्तुमनभिमतं च। वाच्यत्वगोचरं तु ज्ञानं शाब्दमेव अन्यथा ह्यश्रुतशब्दोऽप्यारण्यकोऽश्वमेवेन्द्रियसन्निकर्षादश्वशब्दवाच्य इति गृह्णीयात्। वाच्यत्वविशिष्टद्रव्यज्ञानमपि शाब्दमेव, वह्निविशिष्टधूमज्ञानमिवानुमानिकम्, अन्यथा तदप्यैन्द्रियकमिति न तन्निराकरणाय मानान्तरमास्थेयम्। अथ न वाच्यत्वं नाम मीमांसकानामिव किं चिदतीन्द्रियम्, अपि तु संकेतमात्रमेव स्यादिदं प्रत्येतव्यमिति। तथाऽपि तव्यार्थः शब्द एव। अथाऽयमप्यैन्द्रियक एव, तत्र गुरूपदिष्टा गाथा पठितव्या—

> शब्दजत्वेन शाब्दं चेत् प्रत्यक्षं चाक्षजन्मतः।
> स्पष्टग्रहणरूपत्वाद्द युक्तमैन्द्रियकं हि तत्॥ इति।

तस्मान्नोभयजं ज्ञानं यद्वारणायाव्यपदेश्यपदम्। कैश्चिदुक्तं व्यवसायात्मकपदेन संशयज्ञानप्रत्यक्षत्वनिराकरणमन्वाचितमिति संशयेत्युक्तम्। अन्वयं दर्शयित्वा व्यतिरेकमाह—यदीति। उपसंहरति—तस्मादिति। हेयास्त्रिंशत्कोटीर्गणयति—तत्रेति। द्विपदपरिग्रहेण दश,—इन्द्रियार्थसन्निकर्षोत्पन्नपदं ध्रुवं कृत्वा ज्ञानाद्येकैकपदसंबन्धेन चतस्रः कोटयः, ज्ञानं च ध्रुवं कृत्वा अव्यपदेश्याद्येकैकपदसंबन्धेन तिस्रः, एवमव्यपदेश्यपदं ध्रुवं कृत्वाऽव्यभिचार्य्याद्येकैकपदसंबन्धेन द्वे कोटी, अव्यभिचारिपदं ध्रुवं कृत्वा व्यवसायात्मकसंबन्धेन कोटिरेका। त्रिपदपरिग्रहेणापि दशैव,—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति ध्रुवं कृत्वाऽव्यपदेश्याद्येकैकपदसंबन्धेन तिस्रः कोटयः; ज्ञानमव्यपदेश्यमिति ध्रुवं कृत्वाऽव्यभिचार्य्यादिपदसंबन्धेन द्वे कोटी, अव्यभिचार्य्यव्यपदेश्यपदयोस्तु व्यवसायात्मकपदसंबन्धे कोटिरेका, इन्द्रियार्थसन्निकर्षाव्यपदेश्यपदध्रौव्ये चाव्यभिचार्य्याद्येकैकपदसंबन्धे कोटिद्वयम्, अव्यभिचारिव्यवसायात्मकपदयोस्तु ध्रुवयोरिन्द्रियार्थसन्निकर्षोत्पन्नपदेन ज्ञानपदेन च प्रत्येकं संबन्धे कोटिद्वयम्, इति त्रिपदपरिग्रहेण दश कोटयः। चतुष्पदपरिग्रहेण पञ्च,—इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमव्यपदेश्यमिति ध्रुवं कृत्वा अव्यभिचार्य्याद्य-

## न्यायवार्त्तिकम्

विशेषविधिप्रतिषेधयोः शेषप्रतिषेधविध्यभ्यनुज्ञाविषयत्वात्। अयं खलु विशेषविधिः प्रवर्त्तमानः शेषं प्रतिषेधति, यथा दक्षिणेनाक्ष्णा पश्यतीति। विशेषप्रतिषेधश्च शेषाभ्यनुज्ञाविषयो भवति, यथा वामेनाक्ष्णा न पश्यतीति। तथेहाप्येकदेशाभ्युपगमे शेषप्रतिषेधः, शेषविधानं वा गम्यत इति व्यवस्थितं प्रत्यक्षमिति।

अपरे पुनर्वर्णयन्ति—ततोऽर्थाद्विज्ञानं प्रत्यक्षमिति, तन्न, ततोऽर्थादिति, यस्यार्थस्य यद्विज्ञानं व्यपदिश्यते यदि तत एव तद्भवति नार्थान्तरात्, भवति तत् प्रत्यक्षम्। एतेनानुमानादिज्ञानमपक्षिप्तं भवति, न हि तत एव तद्भवति। किं तर्हि? ततश्चान्यतश्च तद्भवति। तत्र तावदर्थग्रहणं न कर्त्तव्यमिति (१)। ततो विज्ञानमित्युच्यमाने गम्यत एव तदर्थादिति। अवधारणार्थोऽर्थशब्द इति चेत्, स्यान्मतिरेषाऽवधारणार्थोऽर्थशब्दो भविष्यतीति, यदुक्तं

## न्यायवार्त्तिकतात्पर्य्यटीका

कैकपदसंबन्धे द्वे कोटी, अव्यपदेश्यपदं त्यक्त्वा परकोटिः, ज्ञानपदं त्यक्त्वा चापरा, इन्द्रियार्थसन्निकर्षोत्पन्नपदं त्यक्त्वा तु पञ्चमी। पृच्छति—कस्मात्पञ्चपदपरिग्रहेणैकत्रिंशत्तमकोटिपरिग्रहेणेतराः कोट्यो व्यवच्छिद्यन्ते? न ह्यत्र तद्व्यवच्छेदवाचकः कश्चिदस्ति शब्द इत्यर्थः। उत्तरम्—विशेषेति। विशेषविधानप्रस्तावे शेषनिषेधोपन्यासो दृष्टान्तलाभाय, एकदेशाभ्युपगम एकत्रिंशत्कोटिषु एकत्रिंशत्तमी कोटिरेकदेश इत्यर्थः। शेषविधानं वेति, वाशब्द इवार्थः।

तदेवं प्रत्यक्षलक्षणं समर्थ्य वासुबन्धवं(२) तावत्प्रत्यक्षलक्षणं विकल्पयितुमुपन्यस्यति—अपरे पुनरिति। लक्षणं व्याचष्टे—ततोऽर्थादिति। यत्तदोर्नित्याभिसंबन्धाद् यस्यार्थस्य यद्विज्ञानं व्यपदिश्यते यदि तत एव तद्भवति, नार्थान्तरात्, व्यपदेश्यमानं शुक्तिज्ञानं न प्रत्यक्षम्, व्यपदेशासंबन्धिनोऽर्थान्तरात् शुक्तिरूपाज्जायमानं रजतेन व्यपदिश्यमानं शुक्तिज्ञानं न प्रत्यक्षम्, व्यपदेशकानुत्पत्तेः, व्यपदेशकरजतस्य तत्राभावात्। एतस्य प्रत्यक्षाभासस्य व्यावृत्तिः सुप्रसिद्धेति तामुपेक्ष्यानुमानव्यावृत्तिमाह—एतेनेति। कुतः? न हि तत एव व्यपदेशकादेव वह्नेः, तद् विज्ञानमनुमानं भवति। किन्तु यत्र वह्निरस्ति तत्र ततश्च, यत्र तु दृष्टमात्र एव वह्नेरुपरमादुपरतो धूमस्तत्रान्यतश्च तद्भवति स्मर्य्यमाणाद्धूमादसति तद्व्यपदेशके वह्नौ, ततोऽर्थादित्यत्रार्थविशेषणं तत इति। तत्संगतश्च "एव"कारोऽयोगव्यवच्छेदे वर्त्तते, यथा चैत्रो धनुर्द्धर एवेति। तेन यत्रैव तदयोगः तदप्रत्यक्षमित्यर्थः। तदेतल्लक्षणं दूषयति—अत्रार्थग्रहणमनर्थकम्। न हि ज्ञानव्यपदेश आत्मना वा इन्द्रियेण वा संभवति। शङ्कते—अवधारणार्थ इति, अयोगव्यवच्छेदेनैतदवधारणम्, विशेषणसंगतश्चैवकारोऽयोगं व्यवच्छिनत्ति। असति चार्थपदे कस्येदं विशेषणमिति

---

(१) "अत्रार्थग्रहणमनर्थकम्" इति तात्पर्य्यं। (२) वसुबन्धुसम्मतमित्यर्थः।

## न्यायवार्त्तिकम्

भवति तत एवेति, तदुक्तं भवति ततोऽर्थादिति। तन्न युक्तम्, एकपदस्यावधारणार्थस्य दृष्टत्वात्, अब्भक्ष (१) इति यथा। एतेनानुमानादिव्युदासोऽपि प्रत्युक्तः। यत् पुनरेतत् संवृत्तिज्ञानमनेनापक्षिप्तमिति, तदेतन्न बुध्यामहे कथं तदपक्षिप्तमिति। यदि ब्रूषे रूपादिभ्य उत्पन्नं ज्ञानं घटस्य व्यपदिश्यते न ततो भविष्यतीत्यपक्षिप्तम्, तन्न युक्तम्। न हि रूपादिभ्य उत्पन्नं ज्ञानं घटस्य व्यपदिश्यते। रूपादिभ्य उत्पन्नं रूपादीनां घटादिभ्य उत्पन्नं ज्ञानं घटस्येति न प्रसङ्गः। अथाप्येवं मनोरथो न रूपादिभ्यो व्यतिरिक्ताः पटादय इति, मनोमोदकोपभोगमात्रमेतत्। यथा तद्व्यतिरिक्ता घटादयः तथोपरिष्टाद्वक्ष्यामः (२)। सर्वं च स्वविषयाद् विज्ञानं भवतीति? ततो ग्रहणमनर्थकमिति। ननु च मिथ्याज्ञानमतस्मादपि भवति, न ह्यतस्मात्तद्भवतीति।

## न्यायवार्त्तिकतात्पर्य्यटीका

विशेषणसंगतो नैवकारोऽयोगं व्यवच्छिन्द्यादिति भावः। निराकरोति—तन्नेति। तत इति सर्वनाम्नः सन्निहितविशेष्यापेक्षत्वात्। अन्यथाऽभिधानापर्य्यवसानाद् यस्य तद्व्यपदिश्यत इति व्यपदेशसंबन्धी विशेष्यः प्राप्यत एवेति सिध्यत्येव विशेषणत्वम्। अभ्युपेत्य त्ववधारणमात्रेऽप्यस्ति दोष इति मन्यमानेनाब्भक्ष इत्युदाहृतम्। अन्यव्यवच्छेदे तदर्थं हि तदेवान्यद्व्यवच्छिद्यते यद्विरोधि, न पुनरन्यमात्रम्, यथाऽऽहुः—"नियमस्तद्विरोधाच्च कल्पते नाविरोधिनि" इति।

स्यादेतत्—'तत' इत्युच्यमाने यतस्ततः स्यात्, तथा चानुमानाद्यपि लिङ्गज्ञानादेस्तत उपजायत इति प्रत्यक्षं प्रसज्येतेति तन्निवृत्त्यर्थमर्थादिति वक्तव्यम्, न हि तदर्थाज्जायते, अपि तु प्रत्यक्षमेव, इत्यत आह—एतेनेति। यस्य तद्व्यपदिश्यत इत्यपेक्ष्य 'ततः' शब्दसामर्थ्येनानुमानादिव्युदासोऽपि प्रत्युक्तः। यच्च ततःशब्दस्य व्यावर्त्त्यान्तरमुक्तं तदपि दूषयति—यत्पुनरेतदिति। यदि यस्य व्यपदिश्यते ज्ञानं तत् प्रत्यक्षं ततो घट इत्यपि ज्ञानं प्रत्यक्षं प्रसज्येत, तदपि घटस्य व्यपदिश्यते, न तु ततो घटाद्भवति, तस्य विचारासहतया परमार्थसत्त्वाभावेन संप्रति सतो विज्ञानं प्रति कारणत्वाभावात्। तेन तन्निवारणार्थं तत इत्युक्तम्। तदेतन्न बुध्यामहे कथमपक्षिप्तमिति। शङ्कते—यदीति। रूपादिपरमाणव एव निरन्तरोत्पादाः परमार्थसन्तो भिन्नाः स्वविज्ञानस्याविकल्पस्य जनकाः तेषां तु नानात्वं स्वेन रूपेण संवृण्वती निर्विकल्पकपृष्ठभाविनी घट इति विकल्पिका बुद्धिस्तानेव रूपादीनेकोदकाहरणादिक्रियाकारिणो भेदिन इव दर्शयन्ती संवृत्तिरित्युच्यते। निराकरोति—न हि रूपादिभ्य इति। अनुशयबीजमुद्घाटयति—अथापीति। निराकरोति—मनोमोदकेति। भवन्तु व्यतिरिक्ताः किमेतावताऽपीत्यत आह—सर्वं चेति। यत्संवृत्तित्वेन भवतामभिमतं ज्ञानं यच्चाविकल्पकं तत्सर्वं विषयाद्भवतीति। तस्मात्ततो ग्रहणं संवृत्तिनिवृत्त्यर्थमनर्थकम्।

(१) "अभ्भच" इति आदर्शे पाठः। (२) १।१।१४ सूत्रवार्त्तिकं द्रष्टव्यम्।

## न्यायभाष्यम्

मसन्निधिं चास्य युगपज्ज्ञानानुत्पत्तिकारणं वक्ष्यामः (१।१।१६) इति। मनसश्चेन्द्रियभावान्न (१) वाच्यं लक्षणान्तरमिति। तन्त्रान्तरसमाचाराच्चैतत्प्रत्येतव्यमिति। परमतमप्रतिषिद्धमनुमतमिति हि तन्त्रयुक्तिः। व्याख्यातं प्रत्यक्षम् ॥ ४ ॥

## न्यायवार्त्तिकम्

किं तर्हि? अतस्मिंस्तद्भवतीति। न भवता मिथ्याज्ञानमपि व्यज्ञायि। ततो ग्रहणमर्थग्रहणं चान्तरेण विज्ञानमात्रमवशिष्यते। तथा च न लक्षणमुक्तं स्यात्, सर्वं च ज्ञानं प्रत्यक्षं स्यात्। यद्यप्येतत् सूत्रं यथाश्रुति भवति, तथापि ग्राह्यग्राहकज्ञानयोरयुगपद्भावाज्ज्ञानम् अप्रत्यक्षं स्यात्। नाशोत्पादौ सममिति चेत्, तच्च न, उदाहरणाभावात्। न हि समं नाशोत्पादे किञ्चिदुदाहरणमस्ति। विनष्टश्चार्थः प्रत्यक्ष इति स्यात्। तुल्यमिति चेत्—

## न्यायवार्त्तिकतात्पर्य्यटीका

मा भूत् संवृत्तिनिवृत्त्यर्थम्, मिथ्याज्ञाननिवृत्त्यर्थं भविष्यतीति देशयति—ननु च मिथ्याज्ञानमतस्माद्पि भवति, यथा पुरोवर्त्तिद्रव्यमिदमिति व्यपदिश्यते रजतमिति च, न तु शुक्तिरिति, तेन यद्यपि सामान्यरूपेण तस्य व्यपदिश्यते ज्ञानम्, ततश्च तद्भवति, तथाऽपि येन विशेषरूपेण तस्य व्यपदिश्यते न ततस्तद्भवतीत्यतस्मादपीत्युक्तम्। तस्मात्तत एव यद्भवति तत्प्रमितिः, न त्वेवं मिथ्याज्ञानम्, तद्धि ततश्चाततश्च भवतीत्यर्थः। परिहरति—न ह्यतस्मादारोपिताद्रूपात् तत्रासतस्तन्मिथ्याज्ञानं भवति, किन्तु ततो भवति। यस्य सामान्यरूपस्य व्यपदिश्यत इदमिति तत एव। समारोपितं तु रजतमस्य विषयो दृश्यमानाकारतया तदिदमुक्तमतस्मिंस्तद्भवतीति। एवं लक्ष्यपदमात्रावशेषाल्लक्षणाभाव इत्याह—ततो ग्रहणमिति। तथा चातिव्याप्तिरित्याह—तथा चेति। अभ्युपेत्य दूषणान्तरमाह—यद्यप्येतदिति। यतो भवति ज्ञानं स ग्राह्योऽर्थः कारणम्, ग्राहकं च ज्ञानं कार्य्यम्, तयोरयुगपद्भावात्, वर्त्तमानाभं ज्ञानमतीते मिथ्येति न प्रत्यक्षं स्यात्। तत्समानकालयोस्तु कार्य्यकारणभावाभावात्। ततोऽर्थादिति नास्तीति भावः। शङ्कते—नाशोत्पादाविति। क्षणिकत्वाद्भावानां कारणस्य नाशः कार्य्यस्योत्पाद इत्येकः कालः, तथाऽपि कारणस्य ग्राह्यता भिन्नकालस्यापि, स्वसदृशज्ञानजननमेव हि तस्य तज्ज्ञानं प्रति ग्राह्यत्वम्, नान्यत्। यथाऽऽह—

> भिन्नकालं कथं ग्राह्यमिति चेद् ग्राह्यतां विदुः।
> हेतुत्वमेव तद्युक्तं ज्ञानाकारार्पणक्षमम् ॥ इति।

न चैतावता मिथ्यात्वम्, अर्थाहितस्य नीलाकारस्य ज्ञानवर्तिनो वर्त्तमानत्वादिति भावः। निराकरोति—तच्च नेति। पूर्वापरकालकलाविकललक्षणा क्षणिकता न क्वचिदपि। विद्युज्ज्वालादेरप्याशु-

(१) अत्र कः "तत्" शब्दः ग-ख-झ-अधिकः।

## न्यायवार्त्तिकम्

स्यान्मतिर्भवतां युगपदवस्थाने किमुदाहरणमिति, तच्च नैवम्, उक्तोत्तरत्वात्। उक्तोत्तरमेतत् स्फाटिकादिसूत्र (१) इति।

अपरे तु मन्यन्ते प्रत्यक्षं कल्पनापोढमिति (२)। अथ केयं कल्पना? नामजातियोजनेति। यत् किल न नाम्नाऽभिधीयते न च जात्यादिभिर्व्यपदिश्यते विषयस्वरूपानुविधायि परिच्छेदकमात्मसंवेद्यं तत् प्रत्यक्षमिति। ते इदं प्रष्टव्याः—अथ प्रत्यक्षशब्देन कोऽर्थोऽभिधीयते इति? यदि प्रत्यक्षम्? कथमवाच्यम्। अथ न प्रत्यक्षम्? अवाचकस्तर्हि प्रत्यक्षशब्दः। अथ प्रत्यक्षशब्देन सामान्यमुच्यत इति, एतदपि सामान्यं किं प्रत्यक्षव्यतिरेक्याहोस्विदव्यति-

## न्यायवार्त्तिकतात्पर्य्यटीका

विनाशिनो द्वित्रादिक्षणावस्थानादित्यर्थः। पूर्वोक्तश्चानुयोगस्तदवस्थ एवेत्याह—विनष्टश्चेति। अनहंकारास्पदमश्वेतादिरूपं विज्ञानाद्भिन्नं नीलाद्यनुभूयते, न तु विज्ञानात्मकम्। तथा च यदि विच्छेदग्रहो मिथ्या, तथा सति ज्ञानमेतस्मिन् मिथ्येति कथं प्रत्यक्षम्। सम्यग्ज्ञानभेदस्य तथाभावात्। न चार्थाहिताकारवेदनमर्थवेदनम्, भाक्तत्वप्रसङ्गात्। न च गौणमुख्यलक्षणा गिरां गतयो ज्ञानेषु शक्या नियोजयितुम्, भिन्नप्रस्थानत्वात्। तस्मान्निराकारं ज्ञानमर्थमात्मनो भिन्नं गोचरयतीति वाच्यम्। स चेत्कारणं विनष्टस्य प्रत्यक्षतेति स्यात्, तथा च वर्त्तमानाभमवर्त्तमानं गोचरयतीति मिथ्यात्वमप्रत्यक्षत्वं च स्यादिति भावः। यौगपद्येऽपि नास्त्युदाहरणम्, सर्वस्य क्षणिकपक्षनिक्षेपादिति देशयति—तुल्यमिति चेत्। निराकरोति—तच्चेति।

संप्रति दिङ्नागस्य लक्षणमुपन्यस्यति—अपर इति। दूषयितुं कल्पनास्वरूपं पृच्छति—अथ केयमिति। लक्षणवादिन उत्तरम्—नामेति। यदृच्छाशब्देषु हि नाम्ना विशिष्टोऽर्थ उच्यते डित्थेति। जातिशब्देषु जात्या गौरयमिति। गुणशब्देषु गुणेन शुक्ल इति। क्रियाशब्देषु क्रियया पाचक इति। द्रव्यशब्देषु द्रव्येण (ज्ञानत्वं) दण्डीति (३), सेयं कल्पना यत्र ज्ञाने नास्त्यर्थतः स्वरूपतो वा, तत् कल्पनयाऽपोढं तत्प्रत्यक्षम्, तदिदमाह—यत् किल न नाम्नाऽभिधीयते अर्थतः स्वरूपतश्च, न जात्यादिभिर्व्यपदिश्यते। अव्यभिचाराय विषयकारणत्वमाह—विषयस्वरूपानुविधायीति। प्रमाणत्वमाह—परिच्छेदकं व्यवस्थापकम्। ज्ञानतामस्य दर्शयति—आत्मसंवेद्यं स्वसंवेदनादेव तस्य कल्पनाहितत्वमपि। यथाऽऽह 'प्रत्यक्षं कल्पनापोढं प्रत्यक्षेणैव सिध्यती'ति। तत्प्रत्यक्षमिति। तदेतल्लक्ष्यलक्षणपदतत्समुदायव्यापारनिरूपणेन दूषयति—त इदमिति। अथ नेति। विकल्पयोनयो हि शब्दास्तद्गोचरमभिनिविशन्ते, यद्विकल्पा

---

(१) ३।२।९ सू०। (२) "प्रत्यक्षं कल्पनापोढं नामजात्याद्यसंयुतम्" इति प्रमाणसमुच्चयप्रथमपरिच्छेदे दिङ्नागाः। (३) ऊर्ध्वतनतृतीयपंक्तेः 'यदृच्छाशब्देषु' इत्यारभ्य 'दण्डी'तिपर्यन्तः पाठः प्रमाणसमुच्चये १म परिच्छेदे दिङ्नागस्य तृतीयसूत्रवृत्तौ दृश्यते, किन्तु तत्र 'ज्ञानत्वम्' इति नास्ति, अर्थसङ्गतौ चास्य नोपयोगः, अत एतद् बन्धनीमध्ये स्थापितम्।

## न्यायवार्त्तिकम्

ऐकीति ? यदि प्रत्यक्षव्यतिरेकि ? न प्रत्यक्षमुक्तम्। अथाव्यतिरेकि ? कथं नोक्तम्। कल्पनापोढशब्देनापि यदि प्रत्यक्षमुच्यते तदा व्याघातः। अथ नोच्यते, तथापि कल्पनापोढवचनं व्यर्थम्, प्रत्यक्षं कल्पनापोढमिति च वाक्यम्। अथास्य वाक्यस्य कोऽर्थः ? यदि प्रत्यक्षम् ? व्याघातः। कथम् ? प्रत्यक्षं कल्पनापोढमिति चानेन वाक्येनाभिधीयते। न चाभिधेयमिति कोऽन्यो भदन्ताद्वक्तुमर्हति। अथ न प्रत्यक्षमस्यार्थः, वर्णोच्चारणमात्रं तर्हीतद्वाक्यं प्रत्यक्षं कल्पनापोढमिति। अनित्यादिशब्दविषयत्वाच्च न सर्वथाऽवाच्यम्। अनित्यं प्रत्यक्षं दुःखशून्यमनात्मकं च प्रत्यक्षमित्येषां चेच्छब्दानां विषयतामुपयाति, कथमवाच्यम्। अथ नोपैति ? सर्वं संस्कृतमनित्यमित्येतत्तथागतेन नाख्यातव्यम्। अथ स्वरूपतो न व्यपदेश्यमित्येष कल्पनापोढशब्दार्थः ? सर्वेऽर्थाः तर्हि प्रत्यक्षाः प्राप्नुवन्ति। किं कारणम् ? न हि कश्चित् सुशिक्षितोऽपि पदार्थानां स्वरूपं निर्देष्टुं शक्नोति, असामयिकत्वात्। सर्वस्य च वस्तुनो द्वावाकारौ सामान्याकारो विशेषाकारश्च। तत्र वस्तु सामान्येनैवाकारेणाभिधीयते, न विशेषाकारेण। विशेषानभिधानान्नोक्तं भवति। न हि मनुष्यशब्दस्य ब्राह्मणो न वाच्यः। ये तु तस्यासाधारणधर्माः पुरुषान्तरव्यावृत्तप्रत्ययहेतवो न च तैः सहानभिधानान्नोक्तो भवति। एवं ज्ञानमपि सामान्यविशेषाकारवत्, तस्य विशेषाकारेण नाभिधानम्, सामान्याकारेण त्वभिधानमेव। यदि च विशेषाकारेणानभिधानम्, यत् तल्लक्षणं प्रत्यक्षस्य, न केवलं प्रत्यक्षस्य, त्रैलोक्यस्यैतल्लक्षणमिति, एवं प्रत्यक्षलक्षणं नोक्तं स्यात्। अथ कल्पनापोढशब्देन प्रत्यक्षस्य स्वरूपमभिधीयते ?

## न्यायवार्त्तिकतात्पर्य्यटीका

गृह्णन्ति, यच्चाध्यवस्यति तदुभयमप्यन्यव्यावृत्तिरूपमवस्तु, तस्मान्नाविकल्पकं ज्ञानं तद्गोचरं वा परमार्थसद् गोचरयन्ति विकल्पाः शब्दाश्चेत्ययमभिसन्धिः। अपि चास्य वाच्यत्वे भवदभ्युपगतप्रामाण्यागमविरोध इत्याह—अनित्यादीति। शङ्कते—अथेति। स्वमसाधारणं रूपं व्यावृत्तमिति यावत्। निराकरोति—सर्वेऽर्था इति। न हि यथा सम्यग्ज्ञानमधिकृत्य प्रत्यक्षादिलक्षणं कृतं कीर्तिना (१), तथा दिङ्नागेन येनाधिकाराज्ज्ञाने व्यवतिष्ठेत कल्पनापोढमिति भावः। ननु यदि स्वरूपतो नाभिधीयते, नाभिधेयं तर्हि वस्तु प्रसज्येत। तथा चाऽवास्तवः स्यात् शाब्दो व्यवहार इत्यत आह—सर्वस्य चेति। सामान्यविशेषतद्वद्भेदाद् वस्तुत्रयम्, तत्र तद्वद्वस्त्वधिकृत्योक्तम्—द्वावाकाराविति। सामान्येनैवाकारेणाभिधीयते सामान्यान्वितमित्यर्थः। ब्राह्मण इति। मनुष्यत्वजातिमानित्यर्थः। विशेषमाकारमभिप्रेत्य स्वरूपतो न व्यपदेश्यमित्युक्तं न तु सर्वथेति भावः। प्रकृते योजयति—एवमिति। आशङ्क्य पूर्वोक्तमतिप्रसङ्गं स्मारयति—यदिदं चेति(२)।

(१) "धर्मकीर्त्तिना"। (२) "यदि चेति" वार्त्तिकपाठः।

## (सू)—अथ तत्पूर्वकं त्रिविधमनुमानं पूर्ववच्छेषवत्सामान्यतो दृष्टं च ॥ ५ ॥

### न्यायवार्त्तिकम्

एवमप्यनिवृत्तो व्याघातः स्वरूपं चानभिधेयम् इत्यनेन शब्देनाभिधीयत इति। अथानेन शब्देन नैव किञ्चिदभिधीयते। किमस्य शब्दस्योच्चारणसामर्थ्यं प्रत्यक्षं कल्पनापोढमिति? अप्रतिपादकत्वान्मूकस्वप्नसदृशमेतत्। एवं यथा यथेदं लक्षणं विचार्यते, तथा तथा न्यायं न सहत इति। "सत्संप्रयोगे पुरुषस्येन्द्रियाणां बुद्धिजन्म तत् प्रत्यक्ष"मिति (१), एतदपि संशयाद्युत्पत्तिनिमित्तत्वादलक्षणमिति। तथा चोक्तं प्रत्यक्षसूत्रं वर्णयद्भिरिति, एतेन प्रत्यक्षमिन्द्रियार्थसन्निकर्षमनःप्रकाशविशेषेषु सत्स्विति प्रत्युक्तम्। तथा श्रोत्रादिवृत्तिरिति। किं कारणम्? पञ्चपदपरिग्रहेण प्रत्यक्षलक्षणमुक्तम्, यत्रान्यतर(२)पदपरिग्रहो नास्ति तत्प्रत्यक्षाभासमिति। एवमनेन न्यायेन यान्यप्युक्तानि लक्षणानि तान्येतस्माल्लक्षणान्न भिद्यमानानि न लक्षणानीति। व्याख्यातं प्रत्यक्षलक्षणमिति ॥ ४ ॥

अथ तत्पूर्वकं त्रिविधमनुमानमिति। अथेत्यानन्तर्यं। अनुमानविशेषणार्थं सूत्रं

### न्यायवार्त्तिकतात्पर्य्यटीका

अथाश्वकर्णादिशब्दवदव्युत्पन्नः कल्पनापोढशब्दः प्रत्यक्षस्वरूपस्य वाचक इति शङ्कते—अथेति। निराकरोति—एवमपीति। भवतु कल्पनापोढशब्दोऽव्युत्पन्नो मा वा भूत्, अवाच्यं तु प्रत्यक्षमेषितव्यम्, अन्यथा विकल्पस्य प्रत्यक्षत्वप्रसङ्गात्। तथा च व्याघात इत्यर्थः।

जैमिनिप्रत्यक्षलक्षणं दूषयति—सत्संप्रयोग इति। यथाश्रुतस्यातिव्याप्तिः संशब्देनापि प्रयोगस्य समीचीनता प्रतिपाद्यते। सा च मिथ्याप्रत्ययेऽपि तुल्या। व्यत्ययेऽपि बुद्ध्या बोध्यस्योपस्थापनात् तद् इति बोध्यं परामृशति। अस्ति च मिथ्याज्ञानेऽपि बोध्येन संबन्ध इन्द्रियाणाम्, बोध्यं हि पुरोवर्त्ति द्रव्यम्। अथ यथा बोध्यं तादृशो नास्ति संबन्ध इन्द्रियाणाम्, रजतत्वस्य प्रकारस्यासन्निधानात्। हन्ताव्यापकत्वं लक्षणदोषः। प्रत्यभिज्ञायां तत्ताप्रकारस्य इन्द्रियेणासंबन्धात्। अपि च प्राभाकरे दर्शने अनुमानादिज्ञानमात्मनि प्रत्यक्षं न भवेत्, न हि तत् सत्संप्रयोगजम्। तस्मादेतदपि परिभावनीयं सूरिभिरिति। वार्षगण्यस्यापि लक्षणमयुक्तमित्याह—श्रोत्रादिवृत्तिरिति। पञ्चानां खल्विन्द्रियाणामर्थाकारेण परिणतानामालोचनमात्रं वृत्तिरिष्यते, सा च संशयादिव्यापकत्वादलक्षणमिति। तत्सिद्धमिन्द्रियार्थसन्निकर्षोत्पन्नमित्येतदेव लक्षणमिति।

प्रत्यक्षलक्षणं समाप्तम् ॥ ४ ॥

प्रत्यक्षलक्षणानन्तरमनुमानलक्षणपरं सूत्रं पठति—अथ तत्पूर्वकं त्रिविधमनुमानमिति।

(१) पूर्व्वमीमांसायाम्—१।१।४ सू०। (२) "यत्रान्यतम" इत्येवं पाठः समुचितः।

## न्यायवार्त्तिकम्

तत्पूर्वकमिति। अनेन समानासमानजातीयेभ्योऽनुमानं व्यवच्छिद्यत इति। तानि ते तत् पूर्वं यस्य तदिदं तत्पूर्वकम्। यदा तानीति विग्रहः तदा समस्तप्रमाणाभिसम्बन्धात् सर्वप्रमाण-पूर्वकत्वमनुमानस्य वर्णितं भवति। पारम्पर्येण पुनस्तत् प्रत्यक्ष एव व्यवतिष्ठत इति तत्पूर्वकत्व-

## न्यायवार्त्तिकतात्पर्य्यटीका

अत्रानुमानमिति सिद्धवत् प्रमाणविशेषरूपलक्ष्यानुवाद एव "नाप्रत्यक्षं प्रमाण"मित्य-प्रामाण्यमनुमानस्य सुदूरं प्रतिक्षिपति। दृष्टप्रामाण्याप्रामाण्यविज्ञानव्यक्तिसाधर्म्येण हि कासां-चिद्व्यक्तीनां प्रामाण्यमप्रामाण्यं वा विदधीत। दृष्टसाधर्म्यं चानुमानमेवेति कथं तेनैव तस्या-प्रामाण्यम्। अपि चानुमानमप्रमाणमिति वाक्यप्रयोगोऽज्ञं विप्रतिपन्नं सन्दिग्धं वा पुरुषं प्रत्यर्थवान्, न च परपुरुषवर्त्तिनो देहधर्म्मा अपि सन्देहाज्ञानविपर्य्यासा गौरत्वादिवत् प्रत्यक्षा वीक्ष्यन्ते, न च तद्वचनात् प्रतीयन्ते, वचनस्यापि प्रत्यक्षादन्यस्याप्रामाण्योपगमात्। पुरुषविशेष-मनधिकृत्य तु वचनमनर्थकं प्रयुञ्जानो नायं लौकिको न परीक्षकः इत्युन्मत्तवदनवधेयवचनः स्यात्, परिशिष्टं तु परीक्षापर्वणि निवेदयिष्यते (१)। तस्मादकामेनापि प्रमाणमनुमानमुपेतव्यमिति। लक्ष्यं प्रमाणभेदमनुमानमनूद्य तत्पूर्वकमिति लक्षणं विधत्ते। अथेत्यानन्तर्य्ये उक्तं प्रत्यक्षमनु-मानस्य हेतुः, इदानीमनुमानं हेतुमद्व्युत्पाद्यत इत्यर्थः। लक्षणसूत्रतात्पर्य्यमाह—अनुमानेति। तदेव स्फुटयति—अनेनेति। समानजातीयानि प्रमाणतया प्रत्यक्षादीनि, असमानजातीयानि चानु-मानाभासादीनि, यथा क्षणिकत्वादिषु सत्त्वादीनि। स्यादेतदतिव्यापकमेतत्तत्पूर्वकत्वम्, तदिति हि प्रत्यक्षं परामृशत्यानन्तर्य्यात्। तथा च प्रत्यक्षपूर्वकत्वमनुमानस्येवागमस्मृतिसंशयविपर्य्या-सानामप्यस्तीति तान्यप्यनुमानं प्रसज्येरन्। अनुमानादिपूर्वकं चानुमानं न प्रत्यक्षपूर्वकमिति नानुमानं स्यादनुमानलक्षणेनाव्यापनात्। तस्मादव्याप्त्यतिव्याप्तिभ्यामलक्षणमेतदित्यत आह—तत्पूर्वकमिति। तत्पूर्वकमित्यावृत्त्या विग्रहत्रयप्रदर्शनम्। तत्र प्रथमे विग्रहे तानीत्यनन्तरं सूत्रमुल्लङ्घ्य विभागसूत्रगताः प्रत्यक्षादयः संबन्धनीयाः, योग्यत्वात्। यथाऽऽहुः "यस्य येना-भिसंबन्धो दूरस्थस्यापि तस्य सः" इति। तदनेन लक्षणस्याव्याप्तिः परिहृता। तदिदमाह—यदा तानीति। नन्वेवं प्रत्यक्षपूर्वकमिति भाष्यविरोध इत्यत आह—पारम्पर्य्येणेति। पारं-पर्य्येण हि प्रत्यक्षपूर्वकत्वमुक्तं भाष्यकृता, तस्मान्न विरोध इति। अतिव्याप्तिनिरासाय द्वितीयं

## वृत्तिः

अनुमानं लक्षयति, विभजते च—( अथ तत्पूर्व्वकमिति )।

आनन्तर्यवाचकोऽथशब्दो हेतुहेतुमद्भावसङ्गतिसूचनाय। तत्पूर्वकं—प्रत्यक्षपूर्वकम्,

(१) २।१।२७ सूत्रस्य भाष्यवार्त्तिकादौ।

## न्यायवार्त्तिकम्

मुक्तं भवति। यदाऽपि विवेकात् ते पूर्वं यस्येति, ते द्वे प्रत्यक्षे पूर्वं यस्य प्रत्यक्षस्य तदिदं तत्पूर्वकं प्रत्यक्षमिति। ते च द्वे प्रत्यक्षे। लिङ्गलिङ्गिसम्बन्धदर्शनमाद्यं प्रत्यक्षम्, लिङ्गदर्शनं द्वितीयम्। बुभुत्सावतो द्वितीयाल्लिङ्गदर्शनात् संस्काराभिव्यक्त्युत्तरकालं स्मृतिः, स्मृत्यनन्तरं च पुनर्लिङ्गदर्शनमयं धूम इति।

## न्यायवार्त्तिकतात्पर्य्यटीका

विग्रहं विवृणोति यदाऽपीति। ते इति विग्रहे अनन्तरसूत्रगतमेव प्रत्यक्षपदं संबध्यते। तथा च द्वे प्रत्यक्षे पूर्वे यस्य प्रत्यक्षस्य लिङ्गपरामर्शज्ञानस्य प्रत्यक्षफलस्य, तदिदं तत्पूर्वकं प्रत्यक्षम्, तत्तु स्वविषये प्रत्यक्षमप्यनुमेयार्थप्रत्ययं कुर्वदनुमानम्। तदिदं तदित्युच्यते। अत्रापि प्रत्यक्षग्रहणमुपलक्षणार्थम्, अनुमाने इत्याद्यपि द्रष्टव्यम्। स्यादेतत्, संबन्धग्रहणसमये यदेतत्तदर्थगोचरं प्रत्यक्षं प्रथममथ तदर्थविषये द्वितीये प्रत्यक्षे सति या तत्पदविषया स्मृतिरुत्पद्यते साऽपि प्रत्यक्षद्वयपूर्वा। एवं लिङ्गालिङ्गिसंबन्धस्मृतिरपि प्रत्यक्षद्वयपूर्वेति तदवस्थैवातिव्याप्तिरित्याशयवान् पृच्छति—कतरे द्वे (१) इति। उत्तरम्—लिङ्गेति। सर्वसन्देहेष्विदमुपतिष्ठते। 'व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति भावः। न च द्वितीयलिङ्गदर्शनं व्याप्तिस्मरणसमये विनश्यदवस्थमप्यस्ति, व्याप्तिसंस्कारोद्बोधसमयजन्मना स्वजनितेन संस्कारेणास्य व्याप्तिस्मरणसमये विनाशात्। विनश्यदवस्थस्य द्वितीयलिङ्गदर्शनस्य व्याप्तिस्मरणेन सह यौगपद्येऽपि तयोः परस्परवार्त्तानभिज्ञतया मिथो घटनायोगात्। न चात्मा तु घटयिष्यतीति युक्तम्। वृत्त्या खल्वयं घटयेत्, न स्वरूपतः, तस्मादुभाभ्यामुत्पन्नं परामर्शज्ञानमिन्द्रियार्थसन्निकर्षजं तृतीयं प्रत्यक्षमेषितव्यम्। लिङ्गलिङ्गिसंबन्धदर्शनमाद्यं प्रत्यक्षमित्यत्र संबन्धपदेनानुमानाङ्गं संबन्धं विवक्षन् परोक्तान् संबन्धविकल्पाननुमानानङ्गभूतान् प्रतिक्षिपति,—प्रत्यक्षमिति च तस्य प्रमाणमाह। तथा हि केचिदविनाभावं तादात्म्यतदुत्पत्तिनिबन्धनमनुमानाङ्गमाहुः। द्विविधो ह्यर्थः प्रत्यक्षश्च परोक्षश्च, तत्र यो बुद्धौ साक्षादात्मीयं रूपं निवेशयति स प्रत्यक्षः। स हि स्वविषयाया बुद्धेः जनक इति तमन्तरेण बुद्धिरात्मानमनासादयन्ती तस्य सत्तां निश्चापयतीति युक्तम्। परोक्षस्तु बुद्धौ साक्षात्स्वरूपोपधानसामर्थ्यरहितोऽयुक्तप्रतिपत्तिरेव। न चान्यदर्शनेऽन्यकल्पना युक्ता, अतिप्रसङ्गात्। नान्तरीयकतया त्वन्योऽप्यन्यं गमयेत्। स हि प्रतिबद्धस्वभावो यथाविधः सिद्धस्तथाविधंसन्निधानं सूचयति, स च प्रतिबन्धो न दर्शनमात्रादवसेयः, तथा सति स श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यप्यनुमानं स्यात्। इहापि हि स्तो दर्शनादर्शने। तस्मात्तादात्म्यतदुत्पत्तिनिबन्धन एव प्रतिबन्धः। यदाह—

(१) "कतरे द्वे" इति वार्त्तिके नास्ति, किन्तु "ते च द्वे प्रत्यक्षे" इति पाठस्तत्र दृश्यते।

## न्यायवार्त्तिकतात्पर्य्यटीका

कार्य्यकारणभावाद्वा स्वभावाद्वा नियामकात् ।
अविनाभावनियमोऽदर्शनान्न न दर्शनात् ॥

तथा च लिङ्गविकल्पं विना न लिङ्गिविकल्पः, न लिङ्गविकल्पो लिङ्गानुभवं विना, न लिङ्गानुभवो लिङ्गं विना, न च लिङ्गं विना लिङ्गिनमिति लिङ्गिस्वलक्षणाप्रतिभास्यपि पारंपर्य्येण तत्प्रतिबन्धात्तत्रापि संवादकोऽनुमानविकल्प इति । कार्य्यकारणभावश्चेदम्—अस्मिन्सति भवति सत्स्वपि तदन्येष्वस्मिन्नसति न भवत्येवमाकारो नान्वयव्यतिरेकाभ्यामतिरिच्यते, तौ च प्रत्यक्षपृष्ठभाविना विकल्पेनावसीयेते । तथा हि सत्यग्नौ धूम इति प्रत्यक्षमेव विकल्पानुगत-व्यापारमध्यवस्यति । असति चाग्नौ न धूम इत्यपि प्रत्यक्षमेव । न ह्यग्निधूमानुपलम्भावन्याव-तस्तद्विविक्तवस्तूपलम्भात् नाप्यनयोर्व्यतिरेकोऽन्यस्तद्विविक्ताद्वस्तुनः । एवं तादात्म्यमपि विपर्य्यये बाधकप्रमाणोपपत्त्या निश्चेतव्यम् । यथा सत्त्वस्य क्षणिकतया सह तादात्म्यं विपक्षेऽक्षणिके क्रमाक्रमयोर्व्यापकयोरनुपलम्भान्निश्चीयते, तस्मात्तादात्म्यतदुत्पत्तिभ्यामेव प्रतिबन्धो नान्यत इति । अत्रोच्यते—सत्यं यत्किञ्चित् क्वचिद् दृष्टं तस्य यत्र प्रतिबन्धः तद्विदस्तस्य तद्गमकं तत्रेत्यनु-जानीमः । स एव तु प्रतिबन्धो न तावत्तदुत्पत्त्या सम्भवति । का पुनरियं तदुत्पत्तिर्धूमस्य ? किं वह्न्यनन्तरं भावः सः ? तादृशोऽस्ति रासभस्यापि तत्प्रतिबद्धोऽपि धूमः स्यात् । अथ तदनन्तरमेव भावः, न च रासभानन्तरं भवन्नपि तदनन्तरमेव भवति, तस्मिन्सत्यप्यसत्यग्नौ तद-भावात् । असत्यपि तस्मिन्सत्यार्द्रेन्धनवति वह्नौ तद्भावात् । अथ यद्यपि धूमस्य वह्निभावानु-विधानं तत्रोपलब्धं तथाऽपि देशान्तरादिषु तद्भावोऽस्य कुतस्त्यः ? तथा हि भूयो भूयो रासभे दृष्टे धूमो दृष्टस्तदभावे चादृष्टो न स तत्कार्य्यः । तज्जातीयस्यैव धूमस्य रासभं विना सति वह्नौ भावादेवं सत्यप्यग्नौ पिशाचेन जनितो धूमः क्वचिद्देशादौ तज्जातीय एव रासभवद्वह्न्यभावेऽपि पिशाचादेव भविष्यतीत्यवश्यं शङ्कया भाव्यं नियामकमपश्यताम् । न च सति भावमात्रं नियामकम्, तस्य रासभादिष्वविशेषात् । तदनन्तरमेवेति चावधारणस्य च शङ्कायामभावात् । अवधारणेन तु शङ्कापनयने परस्पराश्रयप्रसङ्गात् । स्यादेतत्, यो यो धूमो दृष्टः स सर्वस्तावदार्द्रेन्धन-सहितवह्न्यनन्तरमेव न पिशाचानन्तरम्, स च कादाचित्कतया निमित्तमपेक्षमाणो यदनन्तरमेव गम्यते तदेवाप्रतीतव्यभिचारं निमित्तं करोति, न तु प्रतीतव्यभिचारं रासभादि, नापि सर्वथाऽनुप-लब्धपूर्वपिशाचादिः, यदि न तन्निमित्तं कस्माद्विनाऽपि वह्निं क्वचिद्धूमो नोपलभ्यते । अथासौ सर्वथा वह्निसहितः, तथा सत्यार्द्रेन्धनवत् कथं वन्हिरपि न कारणम् ? कारणं चेत् कथं तमन्तरेण धूमभावशङ्का ? अकारणस्य हि कार्य्यस्य नित्यं सत्त्वमसत्त्वं वा स्यादनपेक्षत्वान्न कादाचित्कत्वम् । नाप्यनेकं कारणमकारणत्वप्रसङ्गादेव । वह्न्यनन्तरमेव भाव इति हि धूमस्य वह्निकार्य्यत्वम् । स चेद् वह्नेरप्यनन्तरं नवकारार्थः स्यादिति न वह्नेः कार्य्यम् । एवमन्यस्यापि न कार्य्यं

## न्यायवार्त्तिकतात्पर्य्यटीका

न ह्यन्यानन्तरमेव भवति, वह्नेरप्यनन्तरं भावात्, ततश्चाहेतुको धूमः स्यात्। तथा च कादाचित्कत्वव्याहतिः। सत्यम्, तत्कार्य्यत्वसिद्धौ स्यादेवम्, तदेव तु तदनन्तरमेव भाव इत्येवंरूपं नास्ति। यद्यपि विना वह्निं नोपलब्धो धूमो यद्यपि च पिशाचानन्तरं नोपलभ्यते, तेषामनुपलब्धेः, तथाऽपि पिशाचकार्य्य एव धूमस्तत्र तत्र वह्निः कुतश्चित्स्वहेतोरुपनिपतितो रासभ इव न धूमस्य जनकस्तेन तदभावेऽपि तज्जातीय एव कारणभेदजन्मा कदाचित्कादाचित्को धूमः स्यादित्यनिवृत्तिरेव शङ्कायाः। न च दृष्टसम्भवे नादृष्टं कल्पयितुं युक्तमिति शक्यं भवद्भिर्वक्तुम्, अनुपलब्धिलक्षणप्राप्तस्याशक्यनिराकरणत्वात्। न चानुपलब्ध्यन्तराण्यपि तन्निषेधे प्रभवन्ति। तस्मादनन्तरमेवेत्यवधारणाभावान्नैवं कार्य्यकारणभावावधारणं युक्तम्। न च यदन्यसहितानन्तरमुपलब्धं तत्तदन्यरहितात्तस्माद्भवद् भिन्नजातीयं भवति उक्तं हि रासभसहिताद् वह्नेर्यादृशो धूमस्तादृश एव तद्विरहिताद्वह्नेरिति। तस्मादेवंविधा शङ्कापिशाची स्वनिवारकं तदुत्पत्तिनिश्चयमास्कन्दती न शक्या निवारयितुम्। अपि चास्तु तदुत्पत्तिनिश्चयः तथाऽपि कस्मात्कारणमन्तरेण न कार्य्यं भवति। तथा च सत्यनपेक्षतया कादाचित्कत्वविहतिरिति चेद्, यथाऽऽह—

नित्यं सत्त्वमसत्त्वं वा हेतोरस्यानपेक्षणात्।
अपेक्षातो हि भावानां कादाचित्कत्वसम्भवः॥ इति।

अस्तु तर्हि संबन्धः स्वाभाविकतया अन्यानपेक्षोऽव्यभिचारी गमकत्वाङ्गम्। स च यो वा स वा भवतु, कृतं कार्य्यकारणभावावधारणायासेन। यथा चैतत्तथाऽग्रे(१)दर्शयिष्यामः।

अपि च कार्य्यात् कारणमनुमीयमानं ततः पूर्वमेवानुमीयेत न तु वर्त्तमानकालम्, न हि हेतुसत्ता कार्य्यकाला कार्य्योत्पादाङ्गमपि तु तत्पूर्वकाला। न हि नदीपूरभेदः स्वसत्तासमयवर्ति वर्षं गमयत्यपि तु तत्पूर्वकालम्। तत्कालं तु न तस्य कारणमत एव साधकबाधकप्रमाणाभावेन तत्कालवर्तिनि वर्षे सन्दिहाना न तदर्थिनः प्रवर्त्तन्ते। एवं धूमादप्यग्निस्तत्पूर्वकाल एवानुमीयेत न तु वर्त्तमानकालः, तथा च सति न तदर्थिनस्तत्र निःशङ्कं प्रवर्त्तेरन्। अपि च रसादन्यद्रूपं रससमानकालमनुमिमतेऽनुमातारः, न चानयोरस्ति कार्य्यकारणभावः तादात्म्यं वा। यद्युच्येत तत् पूर्वेभ्यो रूपरसगन्धस्पर्शक्षणेभ्यो रसक्षणो जायते, स स्वकारणं पूर्वरूपक्षणमनुमापयन् यादृशा तेन जनितस्तादृशमेवानुमापयति, स चानुमापकरसक्षणसमानकालरूपक्षणान्तरजनक एव स्वकारणमिति तादृशमेव गमयति, तथा च कार्य्यसमानकालरूपानुमानसिद्धिः। एतेन धूमानुमानं व्याख्यातम्। यथाऽऽह—

---

(१) १२८ पृ: २६ पं "तस्माद् यो वा स वा", इत्यत आरभ्य १२९ पृ: ४ पं "अनुमानाङ्गम्" इत्यन्तभागे।

## न्यायवार्त्तिकतात्पर्य्यटीका

एकसामग्र्यधीनस्य रूपादेरसतो गतिः ।
हेतुधर्म्मानुमानेन धूमेन्धनविकारवत् ॥ इति ।

अत्रोच्यते । योऽयं गमकरससमानकालो रूपक्षणः, स किं तज्जनकस्य रूपक्षणस्य स्वभाव उत तत्स्वभावावच्छेदकोऽस्वभावभूतः ? न तावत् स्वभावः, एकस्मिन्नभिन्ने जन्यजनकभावानुपपत्तेः, तस्य भेदाश्रयत्वात् । तदस्वभावभूतः कथं तदनुमाननिवेशी ? तदवच्छेदकत्वादिति चेत्, ननु नैतावताऽप्यस्य कारणभाव इति कथं कार्य्यं हेतोर्गम्येत । विशिष्टेन कारणस्वभावेनास्वभावोऽप्यसावाक्षिप्यते विशेषणतयेति चेत्, नन्वाक्षिप्यते ज्ञाप्यत इत्यनर्थान्तरम्, सा किं कारणानुमितिः प्रागप्यनुमितिसमये पश्चाद्वा ? न तावत् प्राक् न हि सत्तामात्रेण कारणं तद्गमयत्यतिप्रसङ्गात् । किन्तु स्वज्ञानेन । न च कार्य्यमस्य गमकम्, अकारणत्वादित्युक्तम् । अत एवानुमितिसमयेऽप्यगमकम् स्वज्ञानेन गमकत्वात्, उभयोश्च ज्ञानयोः सह भवतोः सव्येतरविषाणवत् कार्य्यकारणभावाभावात् । तथा च रसात्कार्य्यात्तत्कारणं रूपमनुमातव्यम्, ततश्चानुमिताद्रूपात् कारणात्तत्कार्य्यं रससमानकालं रूपमनुमातव्यम्, तथा च कारणात् कार्य्यानुमानं तादात्म्यतदुत्पत्तिभ्यामभूदिति नाभ्यामेव प्रतिबन्धसिद्धिः । लौकिकानां चैतद्रसाद्रूपानुमानम्, न चैते पिशितचक्षुषः क्षणानामन्योन्यभेदमध्यवस्यन्ति । न चानध्यवस्यन्तः प्रवृत्तिरूपोत्पादनसामर्थ्यं रसहेतुं रूपमनुमातुमुत्सहन्ते । न च स्वलक्षणानुरोधेन लक्ष्यस्यान्यथाकरणं युक्तं परीक्ष्यकारिणाम्, अतिपतितलोकमर्यादानां तेषां तत्त्वानुपपत्तेः । यथाऽऽहुः—

"सिद्धानुगममात्रं च कर्त्तुं युक्तं परीक्षकैः ।
न सर्वलोकसिद्धस्य लक्षणेन निवर्त्तनम्" ॥ इति ।

अपि चाद्यतनस्य सवितुरुदयस्य ह्यस्तनेन सवितुरुदयेन, चन्द्रोदयस्य च समानकालस्य समुद्रवृद्ध्या, मध्यनक्षत्रदृष्ट्या चाष्टमास्तमयोदयस्य, न कार्य्यकारणभावस्तादात्म्यं वा, अथ च दृष्टो गम्यगमकभावः । अपि च तादात्म्ये कथं गम्यगमकभावः, न हि तदेव कर्म्म कर्तृ चेति युक्तम्, तस्य भेदाश्रयत्वात् । यद्यपि च वृक्षत्वशिंशपात्वे परमार्थतो न भिन्ने तथाऽपि भेदान्तरप्रतिक्षेपाप्रतिक्षेपाभ्यां कल्पितभेदकयोर्गम्यगमकभाव इति चेन्न, वास्तवमेव वृक्षत्वशिंशपात्वयोर्भेदमुपपादयिष्यामः (१) । अपि च काल्पनिकमपि रूपं विचार्य्यमाणं न यथा भिन्नमेवम्-

### वृत्तिः

प्रत्यक्षं—प्रत्यक्षविशेषो व्याप्त्यादिविषयकः, तेन व्याप्तिविशिष्टपक्षधर्मताज्ञानजन्यत्वं लभ्यते । अनुमानम्—अनुमितिः । यत इत्यध्याहारेण च करणलक्षणम् ।

(१) पञ्चषपंक्त्यनन्तरमेव "यथा हि सामानाधिकरण्यम्" इत्यादिना उपपादनमवधेयम् ।

## न्यायवार्त्तिकतात्पर्य्यटीका

भिन्नमपि न भवति, वस्तुनोऽपि तुच्छत्वप्रसङ्गात्। काल्पनिकस्यावास्तवत्वेन तत्त्वानुपपत्तेः। तस्मात् कल्पनारूढयोर्न वस्तुतादात्म्यम्, नापि परस्परम्, तथा सति द्रव्यपार्थिववृक्षशिंशपादि-विकल्पानां शब्दानां च पर्य्यायत्वप्रसङ्गात्। स्यादेतत्। कल्पना भेदविरहिणां भेदमुल्लिखन्त्यपि परस्परमेषामभेदमवगाहते, सामानाधिकरण्याकारत्वात्, अभेदानुल्लेखे तदनुपपत्तेः। तथा च तादात्म्यं सिद्धमिति। तदयुक्तम्, यथा हि सामानाधिकरण्यं न भावानामभेदसाधकम्, जात्यादि-शब्दा हि जात्यादीन् निमित्तीकृत्य द्रव्ये वर्त्तन्ते। तच्चाधिकरणमेकमिति सामानाधिकरण्य-मश्नुवते। न पुनर्जात्यादीन्यपि मिथो मिश्रयन्ति। शब्दसमानविषयाणां विकल्पानामपीयमेव गतिः। तस्माद्यत्र गम्यगमकभावो न तत्र तादात्म्यम्, यत्र तादात्म्यं न तत्र गम्यगमकभाव इति सिद्धम्। यत्तु विदितशिंशपाव्यवहारमविदितवृक्षव्यवहारमुच्चायां शिंशपायां वृक्षशब्दः प्रयुक्तः, तस्मादुच्चत्वमेव वृक्षशब्दप्रवृत्तिनिमित्तमिति मन्यमानं मूढं प्रति शिंशपात्वेन वृक्षव्यवहारमात्रं साध्यते, वामनायामपि शिंशपायां वृक्ष इति व्यवहर्त्तव्यम्, शिंशपामात्रानुबन्धित्वाद्वृक्षत्वस्येति। तत्रापि चेद्व्यवहारः साध्यः शिंशपाया भिन्न इति, न तादात्म्यम्। व्यवहारयोग्यता चेत् सा शिंशपाया अभिन्नेति न गम्यगमकभावः। व्यावृत्तिभेदे चोक्तम्। तस्मात्तादात्म्यतदुत्पत्तिभ्यां प्रतिबन्ध इति मनोरथमात्रम्, यच्च वैशेषिकैः (१) चतुष्प्रकारः संबन्ध उच्यते "अस्येदं कार्य्यं कारणं संबन्ध्येकार्थसमवायि विरोधि चेति लैङ्गिक"मिति। अत्रापि संबन्धिपदेनैव सर्वोपसंग्रहात् शेषाभिधानं व्यर्थम्। न च संबन्धिपदोपात्तस्यातिप्रसक्तिः शेषपदैर्निवार्य्यते। तथा सति शेषपदान्येव सन्तु कृतं संबन्धिपदेन, तेभ्य एव संबन्धिभेदानामधिगतेः, न चैवं चातुर्विध्यं संबन्धस्यानुमानाङ्गस्य, तच्चेष्यते, तथा च संबन्धिपदस्य सर्वमात्रावरोधेऽतिव्याप्तिः। अपि च भूतं वर्षमभूतस्य वाय्वभ्रसंयोगस्य कथं विरोधि, तद्धि तदनुकूलमेव। एवमभूतमपि वर्षं भूतस्य वाय्वभ्रसंयोगस्याप्रतिकूलम्। एवं भूतो नकुलजयो न भूतस्य सर्पपराजयस्य विरोधी, नाप्यभूतोऽसावभूतस्य विरोधी, येषां पुनर्विरोधः तेषामन्यतमदन्यतमस्य न लिङ्गमपि तु प्रतिक्षेपकमेव, एतेनैव—

> "मात्रानिमित्तसंयोगिविरोधिसहचारिभिः।
> स्वस्वामिबध्यघाताद्यैः सांख्यानां सप्तधाऽनुमा॥

इत्यपि पराकृतं वेदितव्यम्। तस्माद्यो वा स वाऽस्तु संबन्धः केवलं यस्यासौ स्वाभाविको नियतः स एव गमको गम्यश्चेतरः संबन्धीति युज्यते। तथा हि धूमादीनां वह्न्यादि-संबन्धः स्वाभाविकः, न तु वह्न्यादीनां धूमादिभिः। ते हि विनाऽपि धूमादिभिरुपलभ्यन्ते,

---

(१) काशीमुद्रितवैशेषिकसूत्रपुस्तके तु "अस्येदं कार्य्यं कारणं संयोगि विरोधि समवायि चेति लैङ्गिकम्" इति ९।२।१ सूत्रं दृश्यते।

## न्यायवार्त्तिकतात्पर्य्यटीका

यदा त्वार्द्रेन्धनादिसंवन्धमनुभवन्ति, तदा धूमादिभिः सह संबध्यन्ते। तस्माद् वह्न्यादीनामार्द्रेन्धनाद्युपाधिकृतः संवन्धो न स्वाभाविकः ततो न नियतः। स्वाभाविकस्तु धूमादीनां वह्न्यादिसंवन्ध उपाधेरनुपलभ्यमानत्वात्। क्वचिद् व्यभिचारस्यादर्शनादनुपलभ्यमानस्यापि कल्पनानुपपत्तेः। अतो नियतः संबन्धोऽनुमानाङ्गम्। न चादृश्यमानोऽपि दर्शनानर्हतया साधकबाधकप्रमाणाभावेन सन्दिह्यमान उपाधिः स्वाभाविकत्वं प्रतिबध्नातीति साम्प्रतम्। अवश्यं शङ्कया भवितव्यं नियामकाभावादिति दत्तावकाशा खल्वियं प्रमाणमर्य्यादातिक्रमेण शङ्कापिशाची लब्धप्रसरा न क्वचिन्नास्तीति नायं क्वचित् प्रवर्त्तेत, सर्वत्रैव कस्यचित् कथञ्चिदनर्थस्य शङ्कास्पदत्वात्। अनर्थशङ्कायाश्च प्रेक्षावतां निवृत्त्यङ्गत्वात्। अन्ततः स्निग्धान्नपानोपयोगेष्वपि मरणादिदर्शनात्। तस्मात्प्रामाणिकलोकयात्रामनुपालयता यथादर्शनं शङ्कनीयम्, न त्वदृष्टपूर्वमपि, विशेषस्मृत्यपेक्षो हि संशयो नास्मृतेर्भवति न च स्मृतिरननुभूतचरे भवितुमर्हति। तस्मादुपाधिं प्रयत्नेनान्विष्यन्तोऽनुपलभमाना नास्तीत्यवगम्य स्वाभाविकत्वं सम्बन्धस्य निश्चिनुमः। स्यादेतत्, अन्येनान्यस्य सहकारेण चेत् स्वाभाविकः सम्बन्धो भवेत्, सर्वं सर्वेण स्वभावतः सम्बध्येत। तथा च सर्वं सर्वस्माद्भवेत। अथान्यस्य चेद् अन्यत् कार्यं, कस्मात्सर्वं सर्वस्य न भवति ? अन्यत्वाविशेषात्। ततश्च स एवातिप्रसङ्गः। यद्युच्येत न भावस्वभावाः पर्य्यनुयोज्याः, तस्मादन्यत्वाविशेषेऽपि किञ्चिदेव कारणं कार्य्यञ्च किञ्चिदिति। नन्वेष स्वभावानामननुयोगो भिन्नानामकार्य्यकारणभूतानामपि स्वभावप्रतिबन्धे तुल्य एव, तस्माद् यत्किञ्चिदेतत्। कः पुनः प्रमाणेन स्वाभाविकः सम्बन्धो गृह्यते ? प्रत्यक्षं सम्बन्धिषु प्रत्यक्षेण। यदाह—लिङ्गलिङ्गिसंवन्धदर्शनमाद्यमिति। यदा तावत्प्रथमं वह्निधूमयोः सहार्द्रेन्धनयोः संवन्धं पश्यति तदा द्वयोरपि किं स्वाभाविकः संवन्ध औपाधिको वा ? अथ धूमस्यौपाधिको वह्नेः स्वाभाविकः वह्नेस्त्वौपाधिको धूमस्य स्वाभाविक इति न शक्यं निर्द्धारयितुम्। तत्र वह्नेरनार्द्रेन्धनस्य विना धूममयोगोलकादौ दर्शनाद् आर्द्रेन्धनोपाधि(१)रस्य धूमेन संवन्धो न तु स्वाभाविक इति निश्चीयते। धूमविशेषस्य (२) तु विना वह्निमनुपलम्भाद् उपाधिभेदस्य चादृश्यमानस्य कल्पनायां प्रमाणाभावाद् विशेषस्मृत्यपेक्षस्य (३) च संशयस्यानुपलब्धपूर्वे अनुत्पादाद् उत्पादे चाऽतिप्रसङ्गात् प्रेक्षा-

---

(१) आर्द्रेन्धनकारणक इत्यर्थः। (२) अविच्छिन्नमूलकत्वादिविशिष्टस्य धूमस्येत्यर्थः। (३) "विशेषस्मृत्यपेक्षस्य" कोटिद्वयोपस्थित्यधीनस्य, "संशयस्य," "अनुपलब्धपूर्वे" इत्यत्र सप्तम्यर्थो विषयत्वम्, तथाच पूर्व्वानुपस्थितम् उपाधिरूपं पदार्थं विषयीकृत्येत्यर्थः, "अनुत्पादा"दित्यनेन सम्बन्धः। ननु उपाधेरनुपस्थितावपि तत्संशयोत्पादे को दोष इत्याह "उत्पादे चे"त्यादि। "अतिप्रसङ्गात्" धूमनिष्ठे वह्निसम्बन्धेऽपि औपाधिकत्वसन्देहेन अस्वाभाविकत्वधिया धूमे वह्निव्यभिचारसंशयप्रसङ्गात्, "प्रेक्षावत्प्रवृत्त्युच्छेदात्" विवेकिनामनुमानप्रवृत्त्यभावापत्तेरित्यर्थः।

## न्यायवार्त्तिकम्

तदिदमन्तिमं प्रत्यक्षं पूर्वाभ्यां प्रत्यक्षाभ्यां स्मृत्या चानुगृह्यमाणं परामर्शरूपमनुमानं भवति। कः पुनरनुमानार्थः? अनुमीयतेऽनेनेति करणार्थः। किं पुनरस्य फलम्? अग्निविषया प्रतिपत्तिः। कथं पुनरन्यविषयं करणम् अन्यविषयां क्रियां करोति? (१) शाल्यादिविषयस्य मुषलादेः करणस्य श्यामाकेऽभिहतिर्भवति। न अनियमादिति। यद्विषयं करणं

## न्यायवार्त्तिकतात्पर्य्यटीका

वत्प्रवृत्त्युच्छेदात् स्वाभाविकः संबन्धोऽवधार्य्यते। तदिदमवधारणं न मानसम्, अनपेक्षस्य मनसो बाह्यप्रवृत्तावन्धबधिराद्यभावप्रसङ्गात्। भूयोदर्शनसापेक्षस्य च प्रवृत्तौ प्रमाणान्तरापातात्, न हि मनो निमित्तमित्येव मानसं प्रत्यक्षं भवति। तथा सति न किञ्चिद्मानसम्, प्रत्ययमात्रस्य मनोनिमित्तत्वात्। तत्तदसाधारणकारणापेक्षया च तत्प्रमाणव्यपदेशे त्वत्रापि भूयोदर्शनमसाधारणमिति प्रमाणान्तरं जातम्। तस्मादभिजातमणिभेदतत्त्ववद्भूयोदर्शनजनितसंस्कारसहितमिन्द्रियमेव धूमादीनां वह्न्यादिभिः स्वाभाविकसंबन्धग्राहीति युक्तमुत्पश्यामः। एवं मानान्तरविदितसंबन्धिषु मानान्तराण्येव यथास्वं भूयोदर्शनसहायानि स्वाभाविकसंवन्धग्रहणे प्रमाणान्युन्नेतव्यानि, स्वभावतश्च प्रतिबद्धा हेतवः स्वसाध्येन, यदि साध्यमन्तरेण भवेयुः, स्वभावादेव प्रच्यवेरन्निति तर्कसहायैरनिरस्तसाध्यव्यतिरेकवृत्तिसन्देहा यत्र दृष्टास्तत्र स्वसाध्यमुपस्थापयन्त्येव। न च श्यामादिषु मैत्रतनयादीनां स्वाभाविकप्रतिबन्धसम्भवः, अन्नपानपरिणतिभेदस्योपाधेः श्यामताया मैत्रतनयसंबन्धं प्रति विद्यमानत्वेन मैत्रतनयत्वस्यागमकत्वात्। एतेन पक्वान्यस्य वृक्षस्याग्रवर्त्तीनि फलानि एतद्वृक्षप्रभवत्वात् पतितफलवदित्यादयोऽप्यौपाधिकसम्बन्धा व्याख्याताः। तस्मात्सर्वमवदातम्।

नन्वन्तिमप्रत्यक्षमतीताभ्यां प्रत्यक्षाभ्यां कथमनुगृह्यत इत्यत आह—स्मृत्या चेति। चो हेत्वर्थे। यद्यपि स्वरूपतो लिङ्गदर्शने अतीते, तथाऽपि तज्जनिता स्मृतिरनुगृह्णाति यस्मादतस्ताभ्यामनुगृह्यते। अनुग्रहश्च करणमेव। सम्बन्धस्मृतिसहकारिणेन्द्रियेण स्वसाध्याविनाभूतलिङ्गविज्ञानं यदुपजन्यते तत्परामर्श इत्याख्यायते, तथाभूतलिङ्गगोचर एव चतुर्थो वाक्यावयव उपनय इत्याख्यायते। अत्र पृच्छति—कः पुनरिति। अनुमानशब्दस्यार्थो न तावदनुमितिः। न खलु लिङ्गपरामर्शोऽनुमितिः, प्रत्यक्षफलत्वात्। तस्मादनुमीयते अनेनेति करणार्थो वक्तव्यः। स च लिङ्गविषयः क्रिया च लिङ्गिविषयेति(२) विषये वैषम्यान्न क्रियाकारणभाव इति भावः। उत्तरम्—अनुमीयत इति। तेनैवाभिप्रायेण पृच्छति—किं पुनरिति। उत्तरम्—अग्नीति। प्रष्टा स्वाभिप्रायमुद्घाटयति—कथं पुनरन्यविषयमिति। एकदेशिन उत्तरम्—नानियमादिति। वृक्षो-

(१) शाल्यादीत्यस्मात् प्राक् "न हि" इत्यस्यापेक्षा, अथवा "भवति" इत्यनन्तरं प्रश्नबोधकचिह्नयोगेन काकुस्वरवशादपि नञर्थप्रतिपत्तिसम्भवेन ग्रन्थार्थसङ्गतिः स्यादिति बोध्यम्। (२) आदर्शे—"लिङ्गविषयेति" इति पाठः।

## न्यायवार्त्तिकम्

तद्विषया क्रियेति न नियमोऽस्ति। दृष्टा हि वृक्षादिविषयस्य छेदनस्यावयवे क्रियेति। वृक्षः छिद्यते अवयवे क्रियेति। क्वचित् पुनर्यद्विषयं करणं तद्विषयैव क्रिया। तद्यथा तण्डुलाः पच्यन्ते पाकस्तेष्वेव। क्वचित् पुनरात्मैव भवति कर्त्ता करणम्, क्रिया तस्यैव, तद्यथा वृक्षस्तिष्ठतीति। वृक्ष आत्मना तिष्ठति। किमुक्तं भवत्यात्मनैवेति ? यस्मादयं स्वस्थितौ करणान्तरं न प्रयुङ्क्ते। एवमन्यविषयस्य करणस्यान्यविषया क्रियेति। क्वचित् पुनर्यद्विषयं प्रमाणं तद्विषयैव क्रिया, यदा स एवार्थः प्रमीयते इति। किं पुनस्तस्य प्रमीयते ? प्रमितत्वात्। प्रमीयते, हेयत्वेनोपादेयत्वेनोपेक्षणीयत्वेन वाऽवगम्यत इति। तन्न। प्रमाण-फलयोर्विषयभेदानभ्युपगमात्। यदा पुनस्तत्पूर्वं यस्य तदिदं तत्पूर्वकमिति, तदा भेदस्याविव-

## न्यायवार्त्तिकतात्पर्य्यटीका

देशेन प्रवर्तितः परशुः कर्त्रा न तदवयवोद्देशेन, तस्माद् वृक्षविषयः परशुर्न तदवयवविषयः। द्वैधीभावश्चावयवेषु, न वृक्षे, तस्य ततो विनाशादिति भावः। क्वचित्पुनर्यद्विषयमिति। औष्ण्यापेक्षो वह्निसंयोगः करणं तण्डुलेषु रूपादिपरावृत्तिरूपः पाकः तेष्वेव तण्डुलेन पिठरं लक्षयति। न केवलं समानविषयत्वानियमः कर्त्तुः करणं भिन्नमित्यपि नियमो नास्तीत्य-नियमाभिधानप्रसङ्गेनाह—क्वचित्पुनरिति। स्थितिः स्वावयवेषु समवायो वा प्रदेशविशेषे संयोगो वा। एवमनियमं दृष्टान्त उक्त्वा दार्ष्टान्तिके योजयति—एवमन्यविषयस्येति। धूम-विषयस्य प्रमाणस्याग्निविषया क्रिया प्रमितिः। यदाऽग्निविषयमेव ज्ञानं प्रमाणं तत्राह—क्वचित्पुनरिति। आक्षिपति—किं पुनरिति। अत्र हेतुमाह—प्रमितत्वात्। उत्तरम्—प्रमीयते हेयत्वेनेति। अनियमवादिन एकदेशिनो मतं नियमवादी दूषयति—तन्नेति। हेतुमाह—प्रमाणफलयोरिति। यद्यन्यविषयं करणमन्यविषया क्रिया भवेत् ततश्छेदने खदिरं प्राप्ते पनसादावपि च्छिदा स्यादित्यतिप्रसङ्गः स्यात्। यद्यपि वृक्षोद्देशेन कर्त्रा परशुः प्रयुक्तस्तथाऽप्ययं वृक्षमिव तदवयवानपि प्राप्त इति तद्विषयो भवति, तेन तदवयवद्वैधीभावमुखेन वृक्षविषयामपि द्वैधीभावक्रियां जनयतीति न वैयधिकरण्यं करणफलयोः। एवं यद्यपि लिङ्गविषयं प्रत्यक्षफलतया लिङ्गज्ञानम्, तदनुबद्धस्य तस्य मानसप्रत्यक्षगोचरत्वात्। लिङ्गनिरूपणमन्तरेण तदनिरूपणात्। न तु लिङ्गज्ञानं लिङ्गिनं विना न निरूप्यते, तस्मात्प्रतिपत्त्यनुबन्धितया विषयो न लिङ्गज्ञानस्य लिङ्गी, किन्तु लिङ्गमेव, तथाऽपि लिङ्गिविषयप्रतिपत्तिजनकत्वाल्लिङ्गज्ञानं भवति लिङ्गिविषयम्। न

## वृत्तिः

अथवा करणलक्षणमेवेदम्, तत्र अनुमानमिति करणल्युटा अनुमितिकरणमिति समाख्याबलादेव लब्धम्।

## न्यायभाष्यम्

तत्पूर्वकमित्यनेन लिङ्गलिङ्गिनोः सम्बन्धदर्शनं लिङ्गदर्शनं चाऽभिसम्बध्यते।

## न्यायवार्त्तिकम्

क्षितत्वात् लिङ्गलिङ्गिसम्बन्धदर्शनानन्तरलिङ्ग(१)दर्शनसम्बन्धस्मृतिभिर्लिङ्गपरामर्शो विशिष्यते, तस्य तत्पूर्वकत्वात्। किं पुनस्तैरनुमीयते? शेषोऽर्थ इति। अनुमानमित्यत्र किं कारकम्? भावः करणं वा। यदा भावस्तदा हानादिबुद्धयः फलम्। यदा करणं तदा शेषवस्तुपरिच्छेदः फलमिति।

लिङ्गलिङ्गिसम्बन्धस्मृतिर्लिङ्गदर्शनं वा इति सन्देहः। एके तावद्वर्णयन्ति लिङ्गलिङ्गि-

## न्यायवार्त्तिकतात्पर्य्यटीका

चातिप्रसङ्गः, स्वाभाविकसम्बन्धशालित्वाल्लिङ्गस्य लिङ्गिनि, तस्माद् द्विविधो विषयभावः प्रतिपत्त्यनुबन्धितया प्रतिपाद्यतया च, तत्र पूर्वः फलस्य, उत्तरस्तु प्रमाणस्येति तद्विवेकः। तस्मात्सुष्ठूक्तम्—प्रमाणफलयोर्विषयभेदानभ्युपगमादिति। स्थितौ तु भेदो दर्शयिष्यते(२)कर्त्तुः करणस्येति। तदेवं तानि ते इति विग्रहद्वयं परस्परापेक्षमुपपाद्य तानि तदिति विग्रहद्वयं परस्परापेक्षमुपपादयति—यद्वा पुनरिति। लिङ्गलिङ्गिसंबन्धदर्शनं च अनन्तरलिङ्गदर्शनं च तत्स्मृति(३)श्चेति विग्रहः। अत्रापि सर्वसन्देहेष्विदमुपतिष्ठते, व्याख्यानतो विशेषप्रतिपत्तिर्न हि सन्देहादलक्षणमिति भावः। ननु यदि प्रमाणफलयोरेकविषयत्वं तर्हि परामर्शज्ञानविषयीकृत एवार्थो विषयीकर्त्तव्यो नान्यः, स च प्रत्यक्षप्रमाणविषय एवेति कृतमनुमानेनेत्याशयवान् पृच्छति—किं पुनरिति। तैर्विशिष्टेन लिङ्गपरामर्शेनेत्यर्थः। उत्तरम्—शेषोऽर्थः। प्रत्यक्षप्रमिताल्लिङ्गादन्यो लिङ्गी तद्विषयत्वं च लिङ्गपरामर्शस्योक्तमिति। पृच्छति—अनुमानमित्यत्र किं कारकम्। अनुमीयतेऽनेनेति करणकारकमेव युक्तं तस्यैव लिङ्गदर्शनद्वयस्मृतिपूर्वकत्वात्, न त्वनुमितिरनुमानं प्रमाणव्यापारत्वेनातन्निमित्तत्वात् करणकारकादन्यत्वाद् अतत्पूर्वकत्वाच्चेति भावः। उत्तरम्—भावः करणं वा। नतूक्तं न भावः कारकमित्यत आह—यदेति। न द्रव्यादीनामेव करणत्वम्, अपि तु व्यापारस्यापि, अन्यथा कर्मनामधेयेषूद्भिदादिशब्देषु न करणविभक्तिः श्रूयेत—उद्भिदा यजेत, दर्शपौर्णमासाभ्यां यजेतेत्यादि। संभवति तस्यापि सिद्धस्य फलभावनायां निमित्तत्वम्। एवं वह्निप्रमायाः सिद्धायाः संभवति हानादिबुद्धिनिमित्तभावः। एतस्मिंश्च कल्पे तत्पूर्वकमित्यत्र यदा हानादिसंबन्धावधारणसमये प्रथमं ज्ञानं वह्नित्वस्य लिङ्गस्य दर्शनम्, अथानुमानिकं द्वितीयम्, अथ सम्बन्धस्य स्मृतिरिति त्रयमेकीकृत्य परामर्ष्टव्यम्, तत्पूर्वको हि तथा चायमनुमीयमानो वह्निरिति लिङ्गपरामर्शः। तस्माद् दाहपाककारित्वादुपादेयो वह्निरिति ज्ञानमनुमानस्य फलम्, ततश्च तत्पूर्वकत्वमपि सिद्धं भवतीति भावः। करणकारकपक्षे फलमाह—यदा करणमिति।

(१) आदर्शे तु "-नन्तरं लिङ्ग-" इत्येवं सानुस्वारः पाठः। (२) २।१।१६ सूत्रवार्त्तिके। (३) वार्त्तिके—"सम्बन्धस्मृतिभि"रिति पाठः।

## न्यायवार्त्तिकम्

सम्बन्धस्मृतिरनुमानमिति इतरैर्लिङ्गलिङ्गिसम्बन्धदर्शनादिभिरनुगृह्यमाणा। अपरे तु मन्यन्ते लिङ्गपरामर्शोऽनुमानमिति। वयं तु पश्यामः—सर्वमनुमानम्, अनुमितेस्तन्नान्तरीयकत्वात्। प्रधानोपसर्जनताविवक्षायां लिङ्गपरामर्श इति न्याय्यम्। कः पुनरत्र न्यायः? आनन्तर्य-प्रतिपत्तिः। यस्माल्लिङ्गपरामर्शादनन्तरं शेषार्थप्रतिपत्तिरिति, तस्माल्लिङ्गपरामर्शो न्याय्य इति। स्मृतिर्न प्रधानम्। किं कारणम्? स्मृत्यनन्तरमप्रतिपत्तेः। न हि भवति यत्र धूममद्राक्षं तत्राग्निमद्राक्षमिति। एतस्याश्च स्मृतेरनन्तरं तस्मादग्निरिति शेषार्थग्रह इति युक्तं वक्तुम्। तस्मात् स्मृत्यनुगृहीतो लिङ्गपरामर्शोऽभीष्टार्थप्रतिपादको भवतीति। एवं चोपनयस्यार्थवत्ता। यदि चायं स्मृत्यनुगृहीतो लिङ्गपरामर्शोऽनुमानं भवति, एवं सत्युपनयोऽर्थवानिति। एवं च सति वाक्याङ्गत्वमुपनयस्योक्तं भवति। तस्माद् व्यवस्थितमेतत् तत्पूर्वकमनुमानमिति। यदि प्रत्यक्षपूर्वकमनुमानं संस्कारे निर्णये च प्रसङ्ग इति, प्रत्यक्षपूर्वको भावनाख्यः स्मृति-हेतुः संस्कारः निर्णयश्च प्रत्यक्षपूर्वकत्वादनुमानं प्रसज्यत इति। नैष दोषो विज्ञानस्याधिकृतत्वात्, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमिति ज्ञानाधिकारो वर्तत इति तेन न संस्कारेऽतिप्रसङ्गः। निर्णये

## न्यायवार्त्तिकतात्पर्यटीका

अत्र विमृशति—लिङ्गेति। तत्पूर्वकत्वानुमितिनिमित्तत्वसमानधर्मदर्शनात्संशयः। अत्राचार्यदेशीय-मतमाह—एके तावदिति। सत्स्वपीतरेषु स्मृतेरभावादनुमितेरनुत्पादेन स्मृतिरेवानुमानम्, इतरे तदनुग्राहका इत्यर्थः। मतान्तरमाह—अपर इति। सत्स्वपीतरेषु लिङ्गपरामर्शं विनाऽनु-मितेरनुत्पादाल्लिङ्गपरामर्श एवानुमानमितरैरनुगृहीत इत्यर्थः। स्वमतमाह—वयं त्विति। अन्वयव्यतिरेकाभ्यामशक्यो गुणप्रधानभावो विवेक्तुम्, तयोः सर्वत्र तुल्यत्वादिति भावः। तत्कि-मिदानीं नास्ति गुणप्रधानभाव इत्यत आह—प्रधानेति। नान्वयव्यतिरेकात्तत्रभवतो न न्याया-न्तरमिति भावः। पृच्छति—कः पुनरत्रेति। उत्तरमाह—आनन्तर्येति। नेहास्ति तिरोहितं किञ्चित्। अतिव्याप्तिं चोदयति—यदीति। ननु भवतु प्रत्यक्षद्वयपूर्वकः संस्कारोऽनुमानं तेनापि शेषोऽनुमास्यत इत्यत आह—स्मृतिहेतुर्नानुमितिहेतुरित्यर्थः। परिहरति—नैष दोष इति। विशिष्ट-ज्ञानं विज्ञानं विशेषश्च स्मृतेरन्यत्वं न हीन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानं स्मृतिः। तस्याः संस्कारमात्र-प्रभवतयाऽन्यस्मादनुत्पत्तेः। तेन च ज्ञानेन स्वकारणं विशेषितम्, प्रत्यक्षसूत्रे यत इत्यध्याहारात्। तस्मादिहापि स्वकारणविशेषकं स्मृतेरन्यद्विज्ञानमधिकृतम्। न च संस्कारः प्रत्यक्षपूर्वोऽपि तादृशज्ञानकारणमिति न तस्य प्रसङ्ग इत्यर्थः। निर्णयेऽनुपजनितफले प्रसङ्गं निवारयति—निर्णय इति। विभागसूत्राक्षिप्तप्रमाणसामान्यलक्षणपूर्वकं विशेषप्रमाणलक्षणं तदपेक्षं प्रवर्तमानं नानुपजनितफलेऽप्रमाणे निर्णयमात्रे प्रवर्त्तितुमर्हति, जनितफलस्तु निर्णयः प्रमाणमेवेति भावः।

## न्यायवार्त्तिकम्

तूभयथा, कदाचित् प्रमाणं कदाचित् फलम्। स्वविषयपरिच्छेदकत्वात् प्रमाणमिति।

त्रिविधमिति। अन्वयी व्यतिरेकी अन्वयव्यतिरेकी चेति। तत्रान्वयव्यतिरेकी विवक्षित-तज्जातीयोपपत्तौ विपक्षावृत्तिः, यथा अनित्यः शब्दः सामान्यविशेषवत्त्वे सत्यस्मदादिवाह्य-करणप्रत्यक्षत्वाद् घटवदिति। अन्वयी विवक्षिततजातीयवृत्तित्वे सति विपक्षहीनः

## न्यायवार्त्तिकतात्पर्य्यटीका

स्वविषयपरिच्छेदकत्वात् फलं परिच्छेद एव परिच्छेदकः, स्वार्थिकः प्रत्ययः। त्रिविधमिति सूत्रावयवसर्थगौरवाद्वार्त्तिककार उद्भाष्यं व्याचष्टे— त्रिविधमितीति। अन्वयव्यतिरेकिणं लक्षयति— तत्रेति। विवक्षितोपपत्तिः पक्षधर्मता, तज्जातीयोपपत्तिरन्वयः, विपक्षावृत्तिर्व्यतिरेकः। अन्वयिमात्राद्व्यतिरेकिमात्राच्च व्यावृत्तो अन्वयव्यतिरेकी दर्शनीय इति हेतुत्रयसाधारणे अबाधित-विषयत्वासत्प्रतिपक्षत्वे सती अपि रूपे न दर्शिते। विवक्षितप्रत्ययमन्तरेण चान्वयव्यतिरेकयो-स्तज्जातीयातज्जातीयवृत्तिव्यावृत्त्योरशक्यप्रतीतित्वाद्विवक्षितोपादानम्, तत्प्रसङ्गेन च तद्धर्मता हेतु-त्रयसमानाऽपि दर्शिता। तस्योदाहरणमाह—यथेति। प्रत्यक्षत्वादिति हेतुरात्मनि नित्येऽस्तीत्यत उक्तम्—वाह्यकरणेति। तथाऽपि सामान्यविशेषे घटत्वादौ व्यभिचार इत्यत उक्तम्—सामान्य-विशेषवत्त्व(१)इति। तथाऽपि परमाणुभिर्बाह्यप्रत्यक्षैर्योगिनां व्यभिचार इत्यत उक्तम्--अस्मदादीति। तथा चायं नित्येभ्य आकाशादिभ्यो घटादिषु चानित्येष्वन्वित इति भवत्यन्वयव्यतिरेकी। अन्वयिनं लक्षयत्यन्वयीति। विपक्षहीन इति। विपक्षाभावेन ततो व्यतिरेकाभावं दर्शयति। सद्भ्यामभावो निरूप्यते नैकेन सतेत्युक्तं (२) तेन हेतोर्यतो विपक्षान्निवृत्तिः स एव नास्तीति कुतो निवर्त्तताम्। पक्षादन्यस्य सर्वस्यैव सपक्षत्वात्। न निवर्तत इति चेदस्तु हेतोस्तत्र वृत्तिरवृत्तिनिषेधरूपत्वाद्वृत्तेरिति चेत्, यस्याभावाधिकरणत्वमपि न भवति, निरुपाख्यस्य तस्य भावाधिकरणत्वशङ्केति सुभाषितम्। न खलु मुमूर्षोस्तोयाभ्यवहारेऽसमर्थस्य शष्कुलीभक्षणं शङ्कते चेतनः। तत्किमिदानीं भावाभावौ न परस्पराभावात्मानौ यदेकनिषेधेनान्यविधिः स्यात्? सत्यम्, यत्रैकतर एतयोर्न्निषिध्यते व्यतिरेको निषिध्यते विधीयते वा, तत्र तदितरविधिनिषेधोऽवश्यं भवेत्। न त्विह परमार्थतः कस्यचिन्निषेधः। न चात्र निरुपाख्यो हेतोर्व्यतिरेको निषिध्यते न निरुपाख्यो निषेधाधिकरणमिति। न च वचः स्वचरितविरुद्धं न चैतत्तत्त्वतो निरुपाख्ये हेतो-र्व्यतिरेकं व्यासेधामो नाप्यन्वयं विदध्मः, नो खलु अयं सकलप्रतिपत्त्यभाजनं क्वचिदप्युपयुज्यते। उपयोगे वा निरुपाख्यो न भवेत्। कस्तर्हि न निरुपाख्यहेतोर्व्यतिरेक इत्यस्य वचनस्यार्थः। अथ निरुपाख्ये हेतोर्व्यतिरेक इत्यस्य भवद्भाषितस्य कोऽर्थः, अहृदयवाचामहृदया एव प्रतिवाचो

(१) आदर्शे 'सामान्यविशेषवत्' इति। (२) २७ पृ: २० पं "निषेध्यनिषेधाधिकरणाधीने" तत्रादिना ग्रन्थे न स्वयमेवोक्तम्।

## न्यायवार्त्तिकम्

यथा सर्व्वानित्यत्ववादिनामनित्यः शब्दः कृतकत्वादिति। अस्य हि विपक्षो नास्ति। व्यतिरेकी विवक्षितव्यापकत्वे सति सपक्षाभावे सति विपक्षावृत्तिः, यथा नेदं जीवच्छरीरं निरात्मकं अप्राणादिमत्त्वप्रसङ्गादिति। अथवा त्रिविधमिति, पूर्ववच्छेषवत् सामान्यतोदृष्टं चेति। पूर्वं साध्यम्, तद् व्याप्त्या यस्यास्तीति तत् पूर्ववत्। साध्यतज्जातीयः शेषः, तद्यस्यास्तीति तत्

## न्यायवार्त्तिकतात्पर्य्यटीका

भवन्ति। यक्षानुरूपो बलिरिति हि लौकिकानामाभाणकः। न चात्यन्तादृष्टपूर्वाणां कल्पनाजालगोचरत्वमिति चोपपादितमन्यथाख्यातिनिरूपणावसरे (१)। कल्पितगोचरश्च व्यतिरेकोऽपि काल्पनिक इति नानुमानाङ्गं भवति। स्वाभाविकरूपसम्पन्नं हि प्रमाणं तत्त्वज्ञानरूपफलाय कल्पते, न कल्पितरूपसम्पदा, तस्याः सर्वत्र सुलभत्वादिति। तत्त्वविषयत्वं चानुमानस्योपपादयिष्यते, तस्मादनुपाख्ये विपक्षे हेतोर्व्यतिरेकनिवृत्तौ वा व्यतिरेके वा सहृदयानां मूकतैवोचिता। न चैतावता हेतोरगमकत्वम्, न हि व्यतिरेकोऽस्तीत्येव गमको भवति, मा भूदसाधारणस्यापि गमकत्वम्, किन्तु स्वसाध्येन सह स्वाभाविकसंबन्धशालितया, सा चान्वयव्यतिरेकाभ्यामिवान्वयमात्रेणाप्युपाधिरहितेन शक्या ज्ञातुमिति कृतं व्यतिरेकेण। विपक्षसंभवे तु तत्रापि वृत्तिशङ्कानिराकरणाय व्यतिरेकग्रहणमुपासनीयमिति सर्वमवदातम्।

उदाहरणमाह—यथेति। स्वमते त्वभिधेयो विशेषः प्रमेयत्वात् सामान्यवत्, परमाण्वाकाशादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वाद् घटवदित्यादयो द्रष्टव्याः, विश्वस्यैव सदसद्भेदभिन्नस्य यथास्वं पक्षसपक्षयोरन्तर्भावेण विपक्षाभावादिति। व्यतिरेकिणं लक्षयति—व्यतिरेकीति। तमिमं व्यतिरेकिणं हेत्ववयवलक्षण(२) व्याख्यानावसरे वार्त्तिककृद् दर्शयिष्यतीति नेहोपपादितः। तदेवं त्रिविधमित्यवच्छिद्य (३) व्युत्पाद्य सम्प्रति पूर्ववदित्यादिना एकवाक्यतया व्याचष्टे—अथवा त्रिविधमिति। तिसृष्वपि विधासु साध्यवचनस्य पूर्वमुपपादनात् पूर्वं साध्यं तद्यस्यास्त्यधिकरणतया तत्पूर्ववत्। तथाऽप्यनित्याः परमाणवो गन्धवत्त्वाद् घटवदित्यपि हेतुः स्यात्, अस्ति साध्यं तस्यापि, पार्थिवानामप्यणूनामनित्यत्वेन सिषाधयिषितत्वादित्यत आह—व्याप्त्येति। अस्ति गन्धवत्त्वस्य साध्यं न तु व्याप्त्या, पृथिवीमात्रवृत्तितया चतुर्षु परमाणुषु तदभावात्। साध्यस्योप-

## वृत्तिः

तच्च व्याप्तिज्ञानं प्रत्यक्षपूर्वकं—सहचारप्रत्यक्षपूर्वकम्। विभजते—त्रिविधमिति। पूर्वं—कारणम्, तद्वत्—तल्लिङ्गकम्, यथा मेघोन्नतिविशेषेण वृष्ट्यनुमानम्। शेषः

(१) १।१।२ सूत्रव्याख्याने। (२) १।१।३५ सू०। (३) 'विशिष्येत्यर्थः'।

## न्यायभाष्यम्

लिङ्गलिङ्गिनोः सम्बन्धं दृष्टयोर्दर्शनेन लिङ्गस्मृतिरभिसम्बध्यते। स्मृत्या लिङ्गदर्शनेन चाऽप्रत्यक्षोऽर्थोऽनुमीयते।

पूर्ववदिति—यत्र कारणेन कार्यमनुमीयते, यथा मेघोन्नत्या भविष्यति वृष्टिरिति।

## न्यायवार्त्तिकम्

शेषवत्। पूर्ववन्नाम साध्यव्यापकम्, शेषवदिति समानेऽस्ति, सामान्यतश्चादृष्टम्। च-शब्दात् प्रत्यक्षागमाविरुद्धं चेत्येवं चतुर्लक्षणं पञ्चलक्षणमनुमानमिति।

अथवा त्रिविधमिति। पूर्ववच्छेषवत् सामान्यतोदृष्टं चेति। तत्र पूर्ववन्नाम यत्र कारणेन कार्यमनुमीयत इति भाष्यम्। किं पुनरिदमुक्तं भवति कारणेन कार्यमनुमीयत इति? यदि तावदयमर्थः कारणदर्शनात् कार्यास्तित्वं प्रतिपद्यत इति, तन्नास्ति, न हि कारणं गृहीत्वा स्वस्थात्मा कश्चित् कार्यं प्रतिपद्यत इति तथा च व्याहतं भवतीति। अथ पुनरेवमनुमीयते यत्र कारणं तत्र कार्यमिति, एतदपि नास्ति, कार्यकारणयोर्भिन्नदेशत्वात्। तन्तवः स्वावयवेषु

## न्यायवार्त्तिकतात्पर्य्यटीका

युक्तत्वात् ततोऽन्यस्तज्जातीयः शेषः साध्यसामान्येन समान इति यावत्। तदिदमाह—साध्यतज्जातीय इति। पदानि विभज्यार्थमाह—पूर्ववन्नामेति। सामान्यतोऽदृष्टमिति नञमन्तर्भाव्य व्याचष्टे—सामान्यतश्चेति। तथा च, बाधितविषयं प्रकरणसमं चानुमानं स्यादित्यत आह—च-शब्दादिति। वार्तिकस्थ-च-शब्देनासत्प्रतिपक्षत्वमपि सूचितम्। तेन सूत्रस्थेनाबाधितत्वमसत्प्रतिपक्षत्वमपि रूपद्वयं समुचितमित्युक्तं भवति। नन्वेवं त्रिविधोऽपि हेतुः पञ्चलक्षणः स्यादित्यत आह—एवमिति। एतदुक्तं भवति अबाधितविषयमसत्प्रतिपक्षं पूर्ववदिति ध्रुवं कृत्वा शेषवदित्येका विधा, सामान्यतोदृष्टमिति द्वितीया, शेषवत्सामान्यतोदृष्टमिति तृतीया, तदेवं त्रिविधमनुमानम्। तत्र चतुर्लक्षणं द्वयम्। एकं पञ्चलक्षणमिति।

तदेवं स्वमतेन सूत्रं व्याख्याय भाष्यकृन्मतेन व्याचष्टे—अथ वेति। आक्षेप्तुं स्वरूपतो व्याचष्टे—तत्रेति। पूर्वं कारणं कार्यात्, तद् यस्यास्ति विषयतया परामर्शज्ञानस्यानुमानस्य तत्पूर्ववदित्यर्थः। विकल्प्याक्षिपति—यदि तावदिति। सर्वत्रानुमानप्रसङ्गादिति भावः। अतिप्रसङ्गभिया कल्पान्तरमातिष्ठते—अथ पुनरिति। दूषयति—एतदपीति। दूषणान्तरं समु-

## वृत्तिः

कार्यम्, तल्लिङ्गकं शेषवत्, यथा नदीवृद्ध्या वृष्ट्यनुमानम्। सामान्यतोदृष्टं—कार्यकारणभिन्नलिङ्गकम्, यथा पृथिवीत्वेन द्रव्यत्वानुमानम्।

## न्यायवार्त्तिकम्

अंशुषु, पटः तन्तुष्विति। कारणदर्शनाच्च कार्यमनुमीयते इति ब्रुवाणोऽनुमानमुद्रां भिनत्ति। का पुनरियमनुमानमुद्रा? नानुपलब्धे न निर्णीते न्यायः प्रवर्तत इति। यदि कारणदर्शनात् कार्यमनुमीयते अनुपलब्धेऽर्थे न्यायः प्रवर्तत इति स्यात्, तथा च व्याहतं स्यात्। नानभ्युपगमात्। क एवमाह कारणदर्शनात् कार्यास्तित्वं प्रतिपद्यत इति। को वा ब्रवीति यत्र कारणं तत्र कार्यमिति। कार्यं तु कारणविशेषणत्वेनोपयुक्तं गुणभूतमनुमीयत इति सूत्रार्थः। तथा च न मुद्राभेद इति। एवं शेषवदादिष्वपि द्रष्टव्यम्। अत्रापि कारणं कार्यस्याङ्गभूतमनुमीयत इति। कथं पुनः शेषशब्देन कार्यमुच्यते? द्वयोरनुमानभावेनोपक्षिप्तयोः कारणस्योपयोगाद् अनुपयुक्तं कार्यमिति कार्यं शेषशब्दवाच्यम्। उदाहरणम्—मेघोन्नत्या भविष्यति वृष्टिरिति कारणेन कार्यानुमानम्। कथं पुनरस्य प्रयोगः? वृष्टिमन्त एते मेघाः गम्भीर-

## न्यायवार्त्तिकतात्पर्य्यटीका

चिनोति—कारणदर्शनाच्चेति। नासिद्धाश्रयो हेतुर्गमक इति भावः। परिहरति—नेति। द्वयमपि नाभ्युपेयत इत्यर्थः। किं तर्ह्यभ्युपेयत इत्यत आह—कार्यं त्विति। एनं प्रकारमन्यत्राप्यतिदिशति—एवमिति। पृच्छति—कथमिति। उत्तरम्—द्वयोरिति। पूर्वशब्देन कारणाभिधायिना प्रतिसंबन्धितया कार्यमप्युपक्षिप्तमतो द्वयोरप्युपक्षिप्तयोः कारणस्योपयोगादनुमानभावेनेति योजना। उदाहरणमाह—उदाहरणमिति। यद्यपि कारणमात्रं व्यभिचरति कार्योत्पादम्, तथाऽपि यादृशं न व्यभिचरति तत्र निपुणेन प्रतिपत्रा भवितव्यम्। अन्यथा धूममात्रमपि वह्निमत्तां व्यभिचरतीति न धूमविशेषो गमको भवेत्। रसाद्रूपानुमाने तु वैनाशिकानामापादितं कारणात् कार्यानुमानमस्माभिः। अपि चान्त्यतन्तुसंयोगानन्तरं पटो जायते तत्रापि शक्यं कारणात्कार्यानुमानम्। यदा खल्वयमन्यत एवोद्बुद्धसंस्कारो व्याप्तिस्मृतिमान् अविचलेष्वितरेषु तन्तुषु अत्यन्तानुत्पन्नायां क्रियायामिन्द्रियसन्निकर्षात् प्रथममेव परामृशति—तथा चेयमिति, तदैव क्रियातो विभाग इत्येकः कालः, अथ यदा विभागात् पूर्वसंयोगनाशस्तदा परामर्शादवश्यंभाविपटविशिष्टेयं क्रियेत्यनुमानोत्पाद इत्येकः कालः, अथान्त्यस्य तन्तोः तन्तुसंयोगोऽथ पटोत्पादोऽतस्तत्र रूपाद्युत्पादः, अथ प्रत्यक्षदर्शनमित्यनुमानोत्पादस्य परस्ताच्चतुर्थे क्षणे प्रत्यक्षम्। यदि तु क्रियोत्पादानन्तरमालोचनमिष्यते तथाऽपि तृतीये क्षणे प्रत्यक्षस्योत्पादान्नानवसरमनुमानम्। अपि च

## वृत्तिः

अथवा पूर्वम्—अन्वयः, तद्वत् केवलान्वयीत्यर्थः, यथा अभिधेयं प्रमेयत्वादित्यादि। शेषः—व्यतिरेकः, तद्वत् केवलव्यतिरेकीत्यर्थः, यथा पृथिवीतरेभ्यो भिद्यते गन्धवत्त्वादित्यादि। सामान्यतोदृष्टम्—अन्वयव्यतिरेकि, यथा वह्निमान् धूमादित्यादि ॥ ५ ॥

## न्यायभाष्यम्

शेषवत्तत्—यत्र कार्येण कारणमनुमीयते, पूर्वोदकविपरीतमुदकं नद्याः पूर्णत्वं शीघ्रत्वञ्च दृष्ट्वा स्रोतसोऽनुमीयते भूता वृष्टिरिति। सामान्यतोदृष्टम्—व्रज्यापूर्वकमन्यत्र

## न्यायवार्त्तिकम्

ध्वानवत्त्वे सति बहुलबलाकावत्त्वे सति अचिरप्रभावत्त्वे सति उन्नतिमत्त्वात् वृष्टिमन्मेघवदिति। नद्याः पूर्णत्वं शेषवदुदाहरणम्। कथं पुनरेतन्नदीपूरो नद्यां वर्तमान उपरि वृष्टिमद्देशमनुमापयति, व्यधिकरणत्वात्? नैवोपरि वृष्टिमद्देशानुमानं नदीपूरः। किं तर्हि? नद्या एवोपरि वृष्टिमद्देशसम्बन्धित्वमनुमीयते नदीधर्मेण। उपरि वृष्टिमद्देशसम्बन्धिनी नदी स्रोतः-शीघ्रत्वे सति पूर्णफलकाष्ठादिवहनवत्त्वे सति पूर्णत्वात् पूर्णवृष्टिमन्नदीवदिति। भविष्यति, भूता वेति कालस्याविवक्षितत्वात् यः कश्चित् काल उपादेय इति॥

सामान्यतोदृष्टं नाम अकार्याकारणीभूतेन (१) यत्राविनाभाविना विशेषणेन विशेष्यमाणो

## न्यायवार्त्तिकतात्पर्य्यटीका

बधिरो मुरजमुखमभिहत्य स्वकारणाभिघातादेव स्वकारणात् तत्कार्यं शब्दं निःशङ्कमनुमिमीते। एवमन्यान्यपि कारणात्कार्यानुमानान्यूहनीयानि। शेषवदुदाहरणमाह—नद्या इति। चोदयति—कथं पुनरिति। परिहरति—नेति। अनुमीयतेऽनेनेत्यनुमानं नदीपूरः, न तु वृष्टिरनुमीयमाना पूरविशेषान्नातीता शक्याऽनुमातुम्, अनुमानसमये तदत्ययस्याशक्यनिश्चयत्वात्। नापि च वर्त्तमाना तदत्ययस्यापि तदानीं संभवात्। एवं भविष्यन्त्यपि साधकबाधकप्रमाणाभावेन सन्दिग्धैव। तस्मात्त्रैकाल्याशक्यनिश्चयत्वादनुपपन्नमनुमानमित्यत आह—भविष्यतीति। कारणस्य कार्य्यात् पूर्व्वकालता शक्या निश्चेतुम्, कार्येण लिङ्गेन तु न, अतीतत्वादिति सन्देहः क्षतिमावहति। यः कश्चिदिति योग्याभिप्रायम्, स च कार्यस्य पुरस्तात्ततो निश्चयव्याप्त इत्यर्थः।

सामान्यतोदृष्टोदाहरणं भाष्यकारीयं दुरवबोधम्, शेषवदुदाहरणान्तर्गतं च। अत्रापि कार्येण सवितुर्देशान्तरप्राप्त्या तत्कारणस्य व्रज्याया अनुमानात्। न चैतावताऽनुमानस्य त्रैविध्यं भवति, उदाहरणमात्रस्यानन्त्येनानन्त्यप्रसङ्गात्। तस्माद्भाष्यकारव्याख्यानमरोचयमानो वार्त्तिककारोऽन्यथा व्याख्यायोदाहरणान्तरमाह—सामान्यतोदृष्टं नामेति। साध्यधर्माविनाभाविना विशेषणेन साध्यधर्मेण विशिष्यमाणो धर्मी गम्यते गमकत्वेन, हेतुविशिष्टो हि धर्मी गमकः, जिज्ञासितधर्म्मविशिष्टश्च गम्यः। यथाऽऽहुः—

> स एव चोभयात्माऽयं गम्यो गमक इष्यते।
> असिद्धेनैकदेशेन गम्यः सिद्धेन बोधकः॥ इति।

(१) 'अकार्य्यकारणभूतेन' इति तात्पर्य्यधृतपाठः।

## न्यायभाष्यम्

दृष्टस्याऽन्यत्र दर्शनमिति, तथा चाऽऽदित्यस्य, तस्मादस्त्यप्रत्यक्षाऽप्यादित्यस्य व्रज्येति।

## न्यायवार्त्तिकम्

धर्मी गम्यते तत् सामान्यतोदृष्टम्, यथा बलाकया सलिलानुमानम्। कथं पुनर्बलाकया सलिलानुमानम्? यावानस्य देशो बलाकयाऽजहद्वृत्तित्वेन प्रसिद्धो भवति तावन्तमन्तर्भाव्य वृक्षादिकमर्थं पक्षीकृत्य बलाकावत्त्वेन साधयति।

अपरे तु(१) मन्यन्ते—सामान्यतोदृष्टम् आदित्यस्य गत्यनुमानमिति। तन्न बुद्ध्यामहे कथमनुमीयते? यदि तावद् गतिमानादित्य इति अस्य गतिरनुमीयते, तत्केन प्रतिपद्यते? न ह्यादित्यस्य गतेश्च किञ्चित् सम्बन्धि लिङ्गमस्ति, न चासम्बद्धोऽर्थोऽनुमातुं शक्यत इति सर्वं सर्वेणानुमीयेतेति। अथ देशान्तरप्राप्तिर्लिङ्गमिति? तन्न, अदृष्टत्वात्। न हि सवितुः कश्चिद्देशान्तरप्राप्तिं पश्यति। देशान्तरं खल्वाकाशादि दिग्देशो वा। उभयं चाप्रत्यक्षम्। न चान्या गतिरस्ति। तस्माद्देशान्तरप्राप्तिदर्शनमयुक्तम्। सर्वत्र खल्वयमादित्यस्य मण्डलमेव केवलमुपलभते। न च वस्तुमात्रदर्शनादनुमानं युक्तम्। अपि च केनचित् प्रकारेण आदित्यस्य गतिः शक्या द्रष्टुम्, उपलब्धिलक्षणप्राप्तत्वात्। न पुनर्देशान्तरप्राप्तिर्नित्यातीन्द्रियत्वात्। न हि कदाचित् प्रत्यक्षाप्रत्यक्षवृत्तिः संयोगो भवति प्रत्यक्षः। अथ देवदत्तस्य देशान्तरप्राप्तिदर्शनेनादित्यस्य गत्यनुमानं सामान्यतोदृष्टमिति मन्यसे, न केवलमादित्यस्य, सर्वार्थानां गत्यनुमाने हि भवानपि गच्छतीत्येवं किमिति नानुमीयते। नैवेद(२)मादित्यगत्यनुमानं साक्षात्। किं तर्हि? देशान्तरप्राप्तिमनुमाय तया गत्यनुमानमित्यदोषः। देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे

## न्यायवार्त्तिकतात्पर्य्यटीका

अविनाभावित्वं स्वभावप्रतिबद्धत्वं सर्वेषामेव हेतूनां सामान्यतोऽत्र धर्मधर्मिणोरभेदविवक्षया हेतुरेव सामान्यमुक्तः। सामान्येनाविनाभाविना हेतुना लक्षितं दृष्टं धर्मिरूपमनुमानं सामान्यतोदृष्टमनुमानम्। तृतीयायास्तसिः। तदेतत्पूर्ववच्छेषवतोरपि प्रापकं तत्पदसन्निधानात् गोबलीवर्दन्यायेन ते परित्यज्यान्यत्र निविशते। तदिदमुक्तम्—अकार्यकारणभूतेनेति। उदाहरणमाह—यथा बलाकयेति। भाष्यकारीयमुदाहरणमुपन्यस्याक्षिपति—अपरे पुनरिति। तदिति गतिमानिति परामृशति—उपलब्धिलक्षणप्राप्तत्वादिति। कर्म्मणो हि महत्त्वरूपविशेषैकार्थसमवाय उपलब्धिलक्षणप्राप्तिः प्रत्यक्षोपलब्धियोग्यता। समाधत्ते—नैवमिति। देशान्तरप्राप्तिमानादित्यः द्रव्यत्वे सति क्षयवृद्धिप्रत्ययाविषयत्वे च सति प्राङ्मुखोपलभ्यत्वे च

(१) 'अपरे पुनः' इति तात्पर्य्यधृतपाठः। (२) "नैव"मिति तात्पर्य्यधृतपाठः।

## न्यायवार्त्तिकम्

सति क्षयवृद्धिप्रत्ययाविषयत्वे च प्राङ्मुखोपलभ्यत्वे च तदभिमुखदेशसम्बन्धादनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वात्। मण्यादावेतत्सर्वमस्ति स च देशान्तरप्राप्तिमान्, एवं चादित्यः,तस्माद्देशान्तरप्राप्तिमानिति। अनया देशान्तरप्राप्त्या अनुमितया गतिरनुमीयते इति। देशान्तरप्राप्तिमत्त्वे वाऽनुमानम्—देशान्तरप्राप्तिमानादित्यः अचलचक्षुषो व्यवधानानुपपत्तौ दृष्टस्य पुनर्दर्शनाविषयत्वात् देवदत्तवदिति। एके तावद् दिक्प्रत्यक्षत्वेऽनुमानं ब्रुवते—प्रत्यक्षा दिक् अङ्गुल्या व्यपदेशाचन्द्रवदिति, तच्च न, अरूपित्वात्। अरूपा दिक् कथं बाह्यकरणप्रत्यक्षा भविष्यति ? कथं तर्हि अङ्गुल्या व्यपदेशः ? दिग्देशसम्बन्धिषु वृक्षादिषु दिग्व्यपदेशात्। ये दिग्देशसम्बन्धिनो वृक्षादयस्तान् दिगित्युपचरन्ति, आदित्येन सहोपलब्धेः। प्राचीत्ययं शब्दः

## न्यायवार्त्तिकतात्पर्य्यटीका

तदभिमुखदेशसंबन्धादनुत्पन्नपादविहारस्य परिवृत्य तत्प्रत्ययविषयत्वात्, मण्यादिवत्। तत्प्रत्ययविषयत्वादित्युच्यमाने पुरःस्थितेन स्थाणुना व्यभिचारः, सोऽपि हि प्रत्यभिज्ञाविषयो भवति तत्रैव स्थितः, तन्निवृत्त्यर्थं परिवृत्येत्युक्तम्। तथाऽपि गुणादिभिर्व्यभिचारः, तन्निवृत्त्यर्थं द्रव्यत्वे सतीत्युक्तम्। तथाऽपि प्रदीपादिभिर्व्यभिचारस्तन्निवृत्त्यर्थं क्षयवृद्धिप्रत्ययाविषयत्वे सतीति विशेषणम्। तथाऽपि पृष्ठतोऽवस्थितया स्थूणया व्यभिचारस्तन्निवृत्त्यर्थं प्राङ्मुखोपलभ्यत्वे सतीति विशेषणम्। उपलभ्यता चोपलब्धिकर्म्मता। सा चेहातीता विवक्षिताऽन्यथा पूर्वापरजलधिवेलावगाहिना तुहिनशैलेन व्यभिचारः। यद्यप्ययमपि परावृत्य तत्प्रत्ययवतोऽतिपतितोपलब्धिकर्म्मभावस्तथाऽपि तदा नरान्तरस्योपलभ्यः, मार्तण्डमण्डलं त्वस्ताचलचूडावलम्बि न प्राच्यां कस्यचिदुपलम्भगोचर इति वैषम्यम्, तथाऽपि यदि द्रष्टैव पुरोऽवस्थितस्य पश्चिमाभिमुखस्य प्रासादस्य स्वयमुपनिपत्य पृष्ठतो भवति, तदोक्तलक्षणस्य हेतोरस्ति व्यभिचारः, तन्निवृत्त्यर्थमनुत्पन्नपादविहारस्येति विशेषणम्। तदभिमुखदेशसंबन्धादिति ल्यब्लोपे पञ्चमी। स्वाभिमुखदेशमुद्दिश्यानुत्पन्नः पादविहारो यस्य स तथोक्तः। तमुद्दिश्य खल्वयं पद्भ्यां संचरमाणः प्रासादस्य पृष्ठतो भवतीति भावः। देशान्तरप्राप्तौ साधनान्तरमाह—देशान्तरेति। सत्यविनाश इति च द्रष्टव्यम् (१)। ये त्विममनुमानपरंपरामसृष्यमाणा दिशः प्रत्यक्षतामिच्छन्ति, विप्रतिपन्नं चानुमानेन बोधयन्ति, तन्मतमुपन्यस्य दूषयति—तच्च नेति। अरूपमात्मसुखाद्यपि प्रत्यक्षमिति शङ्कमानेन बाह्यकरणेत्युक्तम्। पृच्छति—कथं तर्हीति। उत्तरम्--दिग्देशेति। अन्यथासिद्धतया अङ्गुल्या निर्देशस्य दिक्प्रत्यक्षत्वेन न स्वाभाविकः संबन्ध इत्यर्थः। स्यादेतत्।

---

(१) ननु प्रथमदर्शनानन्तरं यस्य दृष्टस्य नाशः तस्मिन् पुनर्दर्शनविषयत्वाभावेन हेतुसत्त्वात्, साध्यस्य च देशान्तरप्राप्तिरूपस्य तत्राभावाद् व्यभिचार इत्याशङ्कापरिहारायाह—"सत्यविनाशे" इति, तथाच हेतुशरीरे चविनाशे सति इति दलप्रवेशेनैव तत्र व्यभिचारासम्भव इति बोध्यम्।

## न्यायवार्त्तिकम्

आदित्यसम्बन्धविशिष्टदिग्देशे वर्तते। तेनाद्येनादित्यदर्शनेन सह वृक्षादीनुपलभन्ते, तान् प्राचीत्युपचरन्ति, उपचर्य चाङ्गुल्या व्यपदिशन्ति।

अथवा त्रिविधमिति लिङ्गस्य प्रसिद्धसदसन्दिग्धतामाह। प्रसिद्धमिति पक्षे व्यापकम्, सदिति सजातीयेऽस्ति, असन्दिग्धमिति सजातीयाविनाभावि। अथवा त्रिविधमिति नियमार्थम्, अनेकधा भिन्नस्यानुमानस्य त्रिविधेन पूर्ववदादिना संग्रह इति नियमं दर्शयति। कथमनेकधा भिन्नमिति? अन्वयव्यतिरेकि द्विधा सजातीये सदेव सदसच्च। अन्वय्यपि द्विधैव। एवं व्यतिरेक्येकरूपम्, सपक्षाभावात्। तदिदं पञ्चधा भिन्नमनुमानं कालभेदेन पञ्चदशधा भवति। तदपि पुनः पुरुषभेदानुविधानात् षष्टिभेदं भवति। तस्य त्वान्तर्गणिकोऽनन्तभेद इति। सोऽयमनुमानभेदः एवंभिन्नस्त्रिविधमित्यनेन सङ्गृह्यीत इत्यतो नियमार्थं त्रिविधग्रहणमिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

अप्रत्यक्षायां दिशि दिग्देशसंबन्धिषु वर्त्यतेदेव कुत इत्यत आह—आदित्येनेति। तद्विभजते—प्राचीत्यग्रमिति। तत्पुनरिदं प्रत्यक्षम् आ चोदयात् आ चास्तमयाद्देशाद्देशान्तरं संचरणं मार्तण्डमण्डलस्य, अनाकालित(?)द्रव्यत्वे सतीत्यादिदण्डकानुमानानामिन्द्रियव्यापारानन्तरमुपजायमानत्वात्। तत्र मा भूवन्नाकाशदिगादयः प्रत्यक्षाः, तथाऽपि परितो निष्पतदतिविशदमयूखजालमध्यवर्तिनो हेलिमण्डलस्य त एव मयूखभागभेदाः देशान्तर इति तेषां प्रत्यक्षाणां प्रत्यक्षेण सवितृमण्डलेन संयोगविभागाः प्रत्यक्षा भविष्यन्तीति युक्तम्। इदं त्वतिस्फुटतया नाभिधाय शिष्यव्युत्पादनायाक्षुण्णं मार्गान्तरं दर्शितमिति मन्तव्यम्। तदेवं रूपेण स्पर्शानुमानम्, शिंशपात्वेन श्रुतेन वृक्षत्वानुमानमित्यादि सामान्यतोदृष्टेन संगृहीतं वेदितव्यम्।

स्वमतेन व्याख्यान्तरमाह—अथ वा त्रिविधमिति। तद्विभजते—प्रसिद्धमिति। पक्षैकदेशे सदपि सिद्धम्, पक्षव्यापकं तु प्रकर्षेण सिद्धमित्यर्थः। यद्यप्यविनाभावः पञ्चसु चतुर्षु वा रूपेषु लिङ्गस्य समाप्यत इत्यविनाभावेनैव सर्वाणि लिङ्गरूपाणि संगृह्यन्ते, तथापीह प्रसिद्धसच्छब्दाभ्यां द्वयोः संग्रहे गोबलीवर्दन्यायेन तत्परित्यज्य विपक्षव्यतिरेकासत्प्रतिपक्षत्वाबाधितविषयत्वानि संगृह्णाति। अत्रापि यथासंभवं चतुर्णां पञ्चानां वा रूपाणां लिङ्गसंबन्धः। तदनेन प्रबन्धेनानुमानवादिनां स्वरूपसंख्याफलविप्रतिपत्तयो निराकृताः। अत्र तत्पूर्वकमिति स्वरूपविप्रतिपत्तिः, अनुमानमिति समाख्यानिर्वचनसामर्थ्यात्फलविप्रतिपत्तिः। त्रिविधमिति न्यूनाधिकसंख्याव्यवच्छेदेन संख्याविप्रतिपत्तिर्निराकृता। संप्रत्यान्तर्गणिकभेदानामानन्त्यादनुमानस्याशक्यलक्षणत्वमिति यदि कश्चिदनुमन्येत तन्निराकरणाय त्रैविध्यमनुमानस्योच्यत इति त्रिविधपदस्य तात्पर्यान्तरमाह—अथ वेति। त्रिविधत्वेन यतो नियतमतः शक्यलक्षणमित्यर्थः। अनित्यः शब्दः कृतकत्वादिति सपक्षे सदेव। अनित्यः शब्दोऽस्मदादिप्रयत्नानन्तरीयकत्वादिति सपक्षे सदसत्। तदिदमन्वयव्यतिरेकि द्विविधम्।

## न्यायभाष्यम्

अथवा पूर्ववदिति—यत्र यथापूर्वं प्रत्यक्षभूतयोरन्यतरदर्शनेनाऽन्यतरस्याऽनुमानम्,

## न्यायवार्त्तिकम्

पूर्ववदित्युक्तं किं पुनरत्र पूर्ववत्, किं कार्यम्, उत कारणम् ? यदि पूर्वमस्यास्तीति पूर्ववत्, कार्यं पूर्ववत् प्राप्नोति। ततश्च कारणेन कार्यानुमानमिति व्याघातः। पूर्वमस्यास्तीति पूर्ववदिति ब्रूमो न पुनः कार्यम्। किं तर्हि ? ज्ञानम्, ज्ञानस्य पूर्वं विषयः। तदिदं पूर्ववदिति, तेन कार्यानुमानमिति। एवं शेषवदादिष्वपि तद्विषयाणि ज्ञानानीत्युक्तं भवति। अथवा पूर्ववदिति

## न्यायवार्त्तिकतात्पर्य्यटीका

एवमन्वय्यपि द्वेधा, तत्र सपक्षे सदेव यथा परमाण्वादयः कस्यचित्प्रत्यक्षाः प्रमेयत्वाद् घटवदिति। तथा सपक्षे सदसद्यथा तत्रैव साध्ये सत्त्वाद् घटादिवदिति। कालभेदः त्रैकाल्यम्। प्रतिपन्नोऽप्रतिपन्नः संदिग्धो विपर्य्यस्तश्चेति पुरुषभेदः। पूर्वं सिद्धवत्पूर्ववदित्यनूद्य तस्योदाहरणमुक्तम्, संप्रति प्रश्नपूर्वकं तदर्थाभासनिराकरणेन तात्त्विकमस्यार्थमाह—पूर्ववदित्युक्तमिति, भाष्यव्याख्यान इत्यर्थः। पूर्ववदित्यस्य व्याख्यानं शेषवदित्यत्रापि योजयति सामान्यतोदृष्टे च ज्ञानमतिदिशति—एवं शेषवदादिष्विति। अथ वा पूर्ववदिति भाष्यम्। तस्यार्थः—पूर्वेण तुल्यं वर्त्तत इति पूर्ववत्। क्रियातुल्यतायां च वतिरिति क्रियातुल्यता दर्शिता। अत्रेति(१)। पूर्वमन्यतरदर्शनेन सह यत्रान्यतरदर्शनं दृष्टान्तधर्मिणि, यथापूर्वं प्रत्यक्षभूतयोरिति प्रमाणमात्रोपलक्षणम्। एवं साध्यधर्म्मिणि अन्यतरधर्म्मदर्शनेन साधनधर्म्मदर्शनेनान्यतरस्य साध्यधर्म्मस्यानुमानमनुमितिदर्शनमिति भवति क्रियातुल्यता। तदेतद्भाष्यमनुभाष्य व्याचष्टे—अथ वेति। अत्र दिङ्नागेन धूमादग्निरूपधर्मान्तरानुमानम् अग्निदेशयोः संबन्धानुमानं च दूषयित्वाऽग्निविशिष्टदेशानुमानं समर्थितम्। तथा चाह—

> "केचिद्धर्मान्तरं मेयं लिङ्गस्याव्यभिचारतः।
> संबन्धं केचिदिच्छन्ति सिद्धत्वाद्धर्म्मधर्मिणोः॥
> लिङ्गं धर्मे प्रसिद्धं चेत्किमन्यत्तेन मीयते।
> अथ धर्मिणि तस्यैव किमर्थं नानुमेयता॥
> संबन्धेऽपि द्वयं नास्ति षष्ठी श्रूयेत तद्वति।
> अवाच्योऽनुगृहीतत्वान्न चासौ लिङ्गसंगतः"॥

न हि संबन्धधर्म्मतया लिङ्गं प्रमीयते, अपि तु देशसंगतमित्यर्थः।

> "लिङ्गस्याव्यभिचारस्तु धर्म्मेणान्यत्र दृश्यते।
> तत्र प्रसिद्धं तद्युक्तं धर्म्मिणं गमयिष्यति"॥ इति।

(१). "अत्र" इति पाठो भाष्यवार्त्तिकयोर्न दृश्यते, भाष्ये तु "यत्र" इति पाठः।

## न्यायवार्त्तिकम्

वतिप्रत्यय एषः, यथा पूर्वं प्रत्यक्षेण दृष्टोऽर्थः तथानुमानेनापि तमेवार्थं प्रतिपद्यत इति पूर्ववद्द दृष्टो भवति।

अन्ये पुनरन्यथा वर्णयन्ति। यथा तेनैव धूमेनाग्निं प्रतिपद्यत इति। किं पुनरनेन धूमेन प्रतिपद्यत इति? किमग्निम्, उत देशम्, उत सत्ताम्, उताग्निमन्तं देशम्? तत्र न तावदग्निं प्रतिपद्यते, धर्मधर्मिभावानुपपत्तेः। नाग्निर्धूमस्य धर्मः, न वाग्निधर्मो धूमः, प्रतीतत्वाच्चाग्नेर्नानुमेयत्वमस्ति। एतेन सत्ता देशश्च व्याख्यातः, अग्निसत्तायाः प्रतीतत्वाद्द देशस्य चेति। अग्निमान् देश इति चेन्न, धूमस्यातद्धर्मत्वात्। अथापीदं स्यात् अग्निमान् देशो धूमेनानुमीयते। तच्च नैवम्। कस्मात्? अतद्धर्म्मत्वात्। न हि धूमोऽग्निमतो देशस्य धर्म्मः। न चाग्नेर्देशमात्रसम्बन्धो न प्रतीतः। अयमग्निमानिति चेत् न, तस्यादृष्टत्वात्। देशविशेषोऽग्निमत्तयाऽनुमीयते न देशमात्रम्, न, तस्यादृष्टत्वात्। न ह्ययं देशविशेषं पश्यति, केवलं तु शून्यमभिधानमुच्चारयति अयं देशोऽग्निमानिति। न च धूममात्रमग्निप्रतिपादकम्, धूममात्रं(१) वाऽयं पश्यति, अतो देशविशेषो नानुमेयः। अविनाभावेन प्रतिपादयतीति चेत्, अथापीदं स्याद्द अविनाभावोऽग्निधूमयोरस्तो धूमदर्शनादग्निं प्रतिपद्यत इति। तन्न, विकल्पानुपपत्तेः। अग्निधूमयोरविनाभाव इति कोऽर्थः? किं कार्य-

## न्यायवार्त्तिकतात्पर्य्यटीका

तत्र दिङ्नागदूषितान् कल्पान् अन्यांश्च विकल्पान् दिङ्नागसमर्थितं च कल्पमुपन्यस्य दूषयति—अन्ये पुनरिति। धर्मधर्मिभावानुपपत्तेरिति। धर्मेण हि धर्मी प्रतिपत्तव्यो नान्यथा, अतिप्रसक्तेरिति भावः। देशस्य च स्वरूपेणेत्यर्थः। शङ्कते—अथापीदमिति। निराकरोति—तच्च नैवमिति। यः कश्चिद्वा देशोऽग्निमान् साध्यो धूमवान् वा देशभेदः, तत्र पूर्वस्मिन् कल्पे निराकरणमाह—अतद्धर्मत्वादिति। यः कश्चिदग्निमत्तया देशः साध्यते न तस्यावश्यं धूमो धर्म्म इत्यर्थः। न चैतत् साध्यं सिद्धत्वादित्याह—न चाग्नेरिति। द्वितीयं कल्पमाशङ्कते—अयमिति। निराकरोति—न, तस्येति। शङ्कां विभजते—देशेति। निराकरणं विभजते—न ह्ययमिति। न ह्ययमेवंवादी दिङ्नागो धूमाधारं देशविशेषं पश्यति। न ह्यस्य मते पर्वतो नाम कश्चिदवयवी यदाधारो धूम उपलभ्येत, किन्तु परमाणवः परमसूक्ष्मा अतीन्द्रियाः पर्वतः, एवं धूमोऽपि तादृश एव। यथा वक्ष्यति "सर्वाग्रहणमवयव्यसिद्धे"रिति(२)। येषामपि देशभेदोऽवयवी दर्शनार्हः तेषामपि वियद्वर्त्तिनीं धूमलेखामभ्रंलिहामुपलभ्यानुपलब्धदेशानां नानुमानसंभव इति भावः। शङ्कते—अविनाभावेनेति। तदेव विभजते—अथापीति। निराकरोति—

(१) आदर्शे—'धूममात्र' इति पाठः। (२) २।१।३४ सू०।

## न्यायवार्त्तिकम्

कारणभावः, उतैकार्थसमवायः, तत्सम्बन्धमात्रं वा ? अस्तु तावत् पूर्वः कार्यकारणभाव इति, तन्न, अतद्वृत्तित्वात्। न हि धूमोऽग्नौ वर्तते नाप्यग्निर्धूमे, स्वकारणवृत्तित्वात्। अतो न कार्यकारणभावः। नैकार्थसमवायोऽपि, ताभ्यामन्यस्यानारम्भात्। न हि भिन्नजातीयाभ्यां द्रव्यमारभ्यते। न च तावन्यत्र वर्तेते स्वकारणवृत्तित्वादित्युक्तम्। सम्बन्धमात्रं तत्र वर्तत इति ? तदप्यनुमातुं न शक्यत इति। कथम् ? यदि तावदयं कुरुते अस्ति सम्बन्धोऽग्नि-धूमयोरिति, तन्न, अप्रतीतत्वात्। अनग्निकस्यापि धूमस्य दर्शनान्न सम्बन्धानुमानम्। रूपस्पर्शवत् साहचर्यं भविष्यति ? न, उभयोर्व्यभिचारित्वात्। अनग्निर्धूमो दृष्टोऽधूमश्चाग्निरिति उभयं व्यभिचारि, तस्मान्न साहचर्यमिति। यत्र धूमस्तत्र वह्निरित्यनेनैव प्रत्युक्तम्। न चान्या गतिरिति। तस्मान्न धूमेन वह्निरनुमीयते। लोकविरोध इति चेत् यदि धूमेनाग्नेरनुमानं न भवेत् नतु लोको विरुध्यत इति चेत्, नास्ति विरोधः, धूमविशेषेणाग्निविशेषणस्य धूमस्य

## न्यायवार्त्तिकतात्पर्य्यटीका

तन्नेति। विकल्पयति—अग्निधूमयोरिति। कार्य्यकारणभावमालम्बते—अस्त्विति। दूषयति—तन्नेति, धूमेन हि वह्निरस्तीत्यनुमीयते, न च कार्यसत्ता निमित्तकारणसत्तया व्याप्ता। न हि यदा यत्र वा पटस्तदा तत्र वा कुविन्दः। नाप्यसमवायिकारणसत्तया, न हि यदा यदा संयोगस्तदा कर्म। तस्मात् समवायिकारणाविनाभावः कार्यस्य वक्तव्यः, तत्रेदं दूषणमतद्वृत्तित्वादिति। एकार्थसमवायमविनाभावं दूषयति—नैकेति। एकार्थसमवाय इति हि द्वेधा, एकस्यार्थस्य समवाय एकत्रार्थे समवाय इति, तत्र प्रथमं कल्पं दूषयति—ताभ्यामिति। यदि हि वह्निधूमाभ्यामेको-ऽर्थः कश्चिदारभ्येत ततोऽसौ तयोः समवेयात्, न त्वेतदस्तीत्यर्थः। द्वितीयं कल्पं दूषयति—न च ताविति। तत् किमसंबद्धावेव वह्निधूमौ, तथा च प्रतीतिविरोध इत्यत आह—संबन्ध-मात्रमिति। संयोग इत्यर्थः। तदेव तर्ह्यवधार्य्यतामित्यत आह—तदपीति। पृच्छति—कथमिति। उत्तरम्—यदि तावदिति। कुरुते प्रयोगम्(१)। अस्ति संबन्धोऽग्निधूमयोर्धूमादिति। दूषयति—तन्नाप्रतीतत्वात्। तदनेनानैकान्तिकत्वं दर्शयति। संबन्धान्तरमाशङ्कते—रूपस्पर्श-वदिति। न हि बौद्धसिद्धान्ते द्रव्यं नाम किञ्चिदस्ति यत्र रूपस्पर्शौ समवेतौ, किं त्वेक-सामग्र्यधीनतया नियतसाहचर्यौ, तथा वह्निधूमावपि इत्यर्थः। दूषयति—नोभयोरिति। उभय-साहचर्य्यनिराकरणेन यत्र धूमस्तत्राग्निरित्यपि पराकृतम्, तस्यापि साहचर्य्यविशेषत्वादित्याह—यत्र धूम इति। गत्यन्तराभावादुपसंहरति—न चेति। शङ्कते—लोक इति। निराकरोति—नास्तीति। यत्र तावत् पर्वतनितम्बवर्तिनी धूमलेखा सततमुद्गच्छन्ती दृश्यते, तत्रासौ देश एव

(१) 'कुरुते' इति वार्त्तिकोक्तक्रियायाः कर्मपदं पूरयति—प्रयोगमिति।

## न्यायभाष्यम्

ऽप्रत्यक्षस्याऽनुमानम्, यथा धूमेनाऽग्निरिति। शेषवन्नाम परिशेषः, स च प्रसक्तप्रतिषेधेऽन्यत्राऽप्रसङ्गाच्छिष्यमाणे सम्प्रत्ययः, यथा सदनित्यमेवमादिना (१) द्रव्यगुणकर्मणामविशेषेण सामान्यविशेषसमवायेभ्यो विभक्तस्य (२) शब्दस्य, तस्मिन् द्रव्यकर्मगुणसंशये, न द्रव्यम्, एकद्रव्यत्वात्, न कर्म, शब्दान्तरहेतुत्वात्, यस्तु शिष्यते सोऽयमिति

## न्यायवार्त्तिकम्

प्रतिपाद्यत्वात्। कथं पुनरयमग्निर्धूमविशेषणं भवति? यदा गुणभूतो भवति। अनुमेयोऽग्निमानयं धूम इति। धूमविशेषेणासाधारणेनानुमीयत इति। उभयं हि तदा प्रत्यक्षं धूमश्च तद्गताश्च सातत्यसंहत्यूर्द्ध्वगतिस्वभावादयो धर्मा इति। ते चैते धूमधर्मा धूमवृत्तयोऽप्रसिद्धं धूमधर्ममनुमापयन्ति। सर्वस्यानुमेयस्य वस्तुनो धर्मी प्रतिपादकश्च धर्मः प्रसिद्धो भवति। यथा—शब्दस्यात्मसत्ता प्रसिद्धा कृतकत्वं च धर्मः, त्वनित्यत्वलक्षणोऽप्रसिद्ध इति। तद्विशेषणोऽयमनुमीयत इति।

शेषवन्नाम परिशेष इति भाष्यम्। न कर्म शब्दः शब्दान्तरहेतुत्वादित्युभयव्यावृत्तेरसाधारणम्, न हि शब्दान्तरहेतुत्वं कर्मणि नाकर्मणीति। न, अन्यार्थत्वात्, शब्दान्तरहेतुत्वमित्यस्य समानजातीयारम्भकत्वादित्यर्थः। तथा च न दोषः।

## न्यायवार्त्तिकतात्पर्य्यटीका

तद्विशिष्टोऽनुमीयते इति लोकप्रसिद्धमेवेति किमत्र वक्तव्यम्। यत्र तु भूयिष्ठतया तस्य धूमस्य दूरत्वेन देशो न लक्ष्यते, धूम एव त्वभ्रंलिहो लिम्पन्निवाभ्रमण्डलमवलोक्यते, तत्र देशानुमानप्रयासालसतया दृश्यमानो धूमविशेष एवाग्निमत्तया साध्यते धूमत्वैकार्थसमवायिभिः तद्गतैः संतत्यूर्द्ध्वगमनादिभिरित्याह—धूमविशेषेणेति। विशिष्यतेऽनेनेति विशेषः संतत्यूर्द्ध्वगमनादिः, तेन धूममात्राद्वह्निव्यभिचारिणो वह्न्यविनाभावी धूमो विशेष्यत इत्यर्थः। शेषमतिरोहितार्थम्।

शेषवन्नाम परिशेषः, द्रव्यत्वकर्म्मत्वयोः शब्दे निराकार्य्यत्वेनोपयुक्तत्वात्ताभ्यामन्यद् गुणत्वं शेषः, स यस्यानुमानस्य प्रतिपाद्यतया, तच्छेषवत्, तत्र न द्रव्यं शब्दः एकद्रव्यत्वात्। द्विविधमेव हि द्रव्यमद्रव्यमनेकद्रव्यं च। अद्रव्यं परमाण्वादि, अनेकद्रव्यं च घटादि। शब्दस्त्वेकद्रव्यं तस्मान्न द्रव्यं रूपादिवत्। न कर्म्म, शब्दान्तरहेतुत्वादिति। तदेतद्भाष्यमाक्षिपति—न कर्मेति। परिहरति—नेति। अन्यमस्यार्थं दर्शयति—समानजातीयारम्भकत्वादिति। यत् समानजातीयारम्भकं न तत् कर्म्म, यथा रूपादय इति। कार्यत्वात्तावच्छब्दः समवायिकारणवान्। तत्र च पृथिव्यादिनिषेधान्नभोऽस्य समवायिकारणम् (३)। न चैष नभोव्यापकः सर्वत्रोप-

(१) "सदनित्यमादिना" इति वि-ठि-ज-चा-फ०। (२) "विभक्तस्य" इति ज-ग चा-फ०। (३) चादर्शे—'नभोऽप्यसमवायिकारणम्' इति।

## न्यायभाष्यम्

शब्दस्य गुणत्वप्रतिपत्तिः। सामान्यतोदृष्टं नाम—यत्राऽप्रत्यक्षे लिङ्गलिङ्गिनोः सम्बन्धे केनचिदर्थेन लिङ्गस्य सामान्यादप्रत्यक्षो लिङ्गी गम्यते, यथेच्छादिभिरात्मा, इच्छादयो

## न्यायवार्त्तिकम्

सामान्यतोदृष्टं नाम यत्राप्रत्यक्षे लिङ्गलिङ्गिनोरिति भाष्यम्। लिङ्गलिङ्गिनोः सम्बन्धोऽप्रत्यक्ष इति किं यदाऽनुमीयते तदा अप्रत्यक्ष आहो न कदाचित्प्रत्यक्षः ? यदि यदाऽनुमीयते तदाऽप्रत्यक्षः, सर्वमनुमानमेवमिति विशेषणमनर्थकम्। अथ न कदाचित् प्रत्यक्षः, कथं तर्ह्यनुमानमत्र प्रवर्तते ? व्याहतं च भवति नानुपलब्धे न निर्णीत इति। न, विशेषणभूतस्याप्रत्यक्षस्य सर्वदाऽनुमेयत्वात्। यदितरधर्मदर्शनाद्ध धर्मिणोऽधिगतिसाधनं तत्सामान्यतो दृष्टम्, यथा इच्छादिभिरात्मा,

## न्यायवार्त्तिकतात्पर्य्यटीका

लम्भप्रसङ्गात्। तस्मादव्यापकः, कर्णशष्कुल्युपसन्निहितं च नभः श्रोत्रम्, ताल्वादिसंयोगोपधानेन च नभःप्रदेशे शब्दः समवेतः प्राप्यकारि च श्रोत्रं न च वक्तृवक्त्रावरुद्धनभःप्रदेशं प्राप्नोति, न चाद्रव्यं शब्दो गत्वा श्रोत्रेण संबध्यते, तस्माद्वीचीतरङ्गरीत्या स्वदेशानन्तरदेशे शब्दान्तरारम्भणपरंपरया श्रोत्रदेशोत्पन्नं शब्दं गृह्णातीति सिद्धं सजातीयारम्भकत्वादिति। इदं तु परिशेषस्योदाहरणं नादरणीयम्। व्यतिरेकिणो हि नामान्तरमिदं परिशेष इति। एष पुनरन्वयव्यतिरेकी द्रव्यकर्मान्यत्वे सति सदाद्यभेदस्य सपक्षे रूपादौ सत्त्वाद्विपक्षे सामान्यादावभावात्। तस्मादात्मतन्त्रतासाधनमिच्छादीनां परिशेषोदाहरणं द्रष्टव्यम्। तच्चानन्तरमेव वक्ष्यतीति(१)।

सामान्यतोदृष्टं नामेत्यादिभाष्यमनुभाष्याक्षिपति—सामान्यत इति। कथं तर्ह्यनुमानमत्र प्रवर्त्तत इति। नित्यपरोक्षेण सह कस्यचिल्लिङ्गस्य संबन्धादर्शनादित्यर्थः। व्याहतं चेति। स खल्वत्यन्तापरिदृष्टः स्वरूपतो वा साध्येत दृष्टधर्मिविशेषणतया वा ? तत्र पूर्वस्मिन् कल्पे नानुपलब्ध इति व्याघातः, उत्तरस्मिन् संदिग्ध इति, विशेषस्मृत्यपेक्षो हि संशयो नात्यन्तानुपलब्धधर्म्मवत्तायां कश्चिद्भवितुमर्हति। न खलु सहस्ररसवत्तया केचिद्द द्रव्ये संशेरत इति भावः। समाधत्ते—न विशेषणभूतस्येति। न तावत् स्वरूपेणानुमीयते येन नानुपलब्ध इति व्याहन्येत, किन्तु दृष्टस्य धर्मिणो विशेषणतया। न चैवं सर्वानुमानाविशेषः। साध्यधर्मिण्यस्मदादिभिः कदाचिदपि प्रत्यक्षेणानुपलम्भात्। तज्जातीयेन तु दृष्टान्तधर्मिणोदृष्टेन प्रत्यक्षतो वा मानान्तराद्वा साधनधर्मस्य स्वाभाविकप्रतिबन्धग्रहसंभवादित्यर्थः। उदाहरणमाह—यथेच्छादिभिरात्मा।

(१) १५७ पृष्ठे—"आत्मतन्त्रता परिशेषात्" इत्यादिना ग्रन्थेन वार्त्तिककारो वक्ष्यति।

## न्यायभाष्यम्

गुणाः, गुणाश्च द्रव्यसंस्थानाः, तद्यदेषां स्थानं स आत्मेति ।

विभागवचनादेव त्रिविधमिति सिद्धे त्रिविधवचनं महतो महाविषयस्य न्यायस्य लघीयसा सूत्रेणोपदेशात् परं वाक्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवेऽनादरः । तथा चाऽय(१)मित्थं भूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते च्छले शब्दादिषु च बहुलं समाचारः शास्त्र इति ।

## न्यायवार्त्तिकम्

इच्छादयः खलु धर्मिणो भवन्ति । आत्मा च विशेषणं गुणभूत इति । इच्छादीनां गुणत्वं प्रतीतो धर्मः । तेन धर्मेणात्मगुणविशिष्टानेव इच्छादीननुमिमीते । परतन्त्रा इच्छादयो गुणत्वात्, रूपवत् । पारतन्त्र्यप्रतिपत्तिरस्मादनुमानात्, आत्मतन्त्रता तु कुतः? आत्मतन्त्रता परिशेषात् आत्मसंवेद्यत्वात् बाह्यकरणाप्रत्यक्षत्वाच्च । न पृथिव्यादिषु, पृथिव्यादिगुणाः आत्मपरात्मप्रत्यक्षाः बाह्यकरण-प्रत्यक्षाश्च आत्माऽबाह्यकरणप्रत्यक्षाश्चेच्छादयः तस्मान्न पृथिव्यादिष्वाकाशान्तेषु, न दिक्काल-मनःसु, तद्गुणानां तद्वदतीन्द्रियत्वात् । न च द्रव्यान्तरं शिष्यते । आत्मा शेषः । तस्मात् तत्तन्त्र इति ।

## न्यायवार्त्तिकतात्पर्यटीका

तदेव विभजते—इच्छादयः खलु धर्मिणो भवन्ति मानसप्रत्यक्षदृष्टाः, तेषाम् आत्मा विशेषणं कुतः? गुणभूतोऽवच्छेदकतया यतस्तस्मादात्मविशिष्टा इच्छादयः साध्या इत्युक्तं भवति । साधनधर्म्मं तद्वर्त्तिनं दर्शयति—इच्छादीनां गुणत्वमिति । ननूक्तमनुपलब्धचरेण साध्यधर्म्मेण न संदेहविषयत्वमनुपलब्धचरश्चात्मेति कथं तद्विशिष्टा इच्छादयो न्यायविषया इति शङ्कामुररीकृत्य प्रयोगं सूचयति—परतन्त्रा इति । मा तत्र सैत्सीदात्मा, पारतन्त्र्यमात्रं तु सिद्धमित्यर्थः । तेन सामान्यतोदृष्टस्य पारतन्त्र्यमात्रविषयता, न च पारतन्त्र्यमिच्छादीनामनुमेयात्मवादिनां कदाचिदप्यस्मदादिप्रत्यक्षगोचरः परस्य तदाश्रयस्य नित्यपरोक्षत्वादिति । तदेवं सामान्यतोदृष्टमुदाहृत्य परिशेषोदाहरणं पारमार्थिकं प्रश्नपूर्वकमादर्शयति—पारतन्त्र्येति । इच्छादीनां हि बाधकैरपनीते द्रव्याष्टकगुणत्वे गुणत्वमेव व्यतिरेकी हेतुरात्मपारतन्त्र्ये प्रमाणम् । यद्यपि चायं स्वरूपेणात्मा न प्रसिद्धस्तथाऽपि द्रव्याष्टकव्यतिरेकादिशब्दैरदूरविप्रकर्षेण परामृष्टः शक्नोति विशेष्टुं धर्मिणि च न्यायप्रवृत्त्यङ्गं संशयमापादयितुमिति निरवद्यम् । अत्र भाष्यं विभागवचनादेव त्रिविधमिति सिद्ध इति, तस्यार्थस्त्रिविधमिति विभागवचनादेव त्रिविधे पूर्ववदादौ सिद्धे किमर्थं पूर्ववदाद्युपादानं सूत्रेणेति । तत्र समाधानं त्रिविधवचनं त्रिविधस्य पूर्ववदादेर्वचनमुक्तिः । महतस्त्रिविधस्य, महाविषयस्यातीतानागतवर्त्तमानविषयस्य, लघीयसा सूत्रेण तत्पूर्वक-मित्येतावतैवोपदेशे परं वाक्यलाघवं मन्यमानस्यान्यस्मिन् वाक्यलाघवेऽनादरः सूत्रकार-

(१) "चायमस्य त्वंभूतेन" इति पा० ।

## न्यायभाष्यम्

सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम्। कस्मात्?। त्रैकाल्यग्रहणात्—

## न्यायवार्त्तिकम्

सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानमिति भाष्यम्। किं तावद्धर्मिणमभिप्रेत्यार्थभेद उत धर्ममिति? यदि तावद्धर्मिणमभिप्रेत्य, न कदाचिदसद्विषयमनुमानम्। न ह्यनुपलब्धसामान्ये अर्थे अनुमानं प्रवर्तत इत्युक्तम्, न चासतः सामान्यदर्शनमस्ति। अथ धर्ममभिप्रेत्य ब्रूषे? धर्मा अपि त्रिविधा भवन्ति। विधीयमानाः, प्रतिषिध्यमानाः, स्वतन्त्राश्चेति। तत्र विधीयमानो धर्मः पृथिव्यां गन्धवत्त्वम्, प्रतिषिध्यमानोऽपृथिव्यां गन्धवत्त्वम्, स्वतन्त्रः समवायिनां समवाय इति। कथं पुनः स्वतन्त्रः? समवायान्तराभावात्। यद्धि यत्र वर्तते तद् वृत्त्या वर्तते। न च समवायस्य वृत्तिरस्ति। अथ समवायान्तरं स्यात् समवायस्य, तस्यापि समवायान्तरकल्पनायामनवस्था स्यात्, व्यवस्थायामाद्य एव व्यवस्था। किमिदं श्रद्दधानेन प्रतिपत्तव्यमनाश्रितः समवाय इति आहोस्विन्न्यायो वाऽप्यस्ति? न सन्देहः, अस्त्येव न्यायः, पञ्चपदार्थवृत्ति-

## न्यायवार्त्तिकतात्पर्य्यटीका

स्येति शिष्यान् व्युत्पिपादयिषोः। अत्र निदर्शनम् तथा चायम् अस्य समाचारः इत्थंभूतेन वाक्यविकल्पेन वैचित्र्येण प्रवृत्त इति योजना, एवं तावल्लक्षणभेदादनुमानं भिन्नं प्रत्यक्षाद्दर्शितम्, भाष्यकारस्तु विषयभेदादपि भेदमाह—सद्विषयं च प्रत्यक्षं सदसद्विषयं चानुमानम्। चो विषयभेदं समुच्चिनोति। सदिति वर्त्तमानम्। असदित्यतीतानागते। प्रत्यक्षं हि लौकिकं वर्त्तमानविषयमेव। अनुमानं तु त्रैकाल्यविषयम्, यद्यपि प्रत्यक्षमप्यतीतानागतयोः संप्रति निषेध्ययोर्निषेधे वर्त्तमानमसद्विषयं तथाऽपि न निषेध्ययोः प्रवर्त्तत इत्येतावतैव सद्विषयमुक्तम्। अनुमानं तु तयोरपि प्रवर्त्तत इत्येतावता असद्विषयमुक्तम्। तदेतदाक्षिपति—सद्विषयं चेति। न ह्यनुपलब्धसामान्य इति, सामान्यत उपलब्धो विशेषतश्चानिर्णीतो धर्मो न्यायप्रवृत्तावधिक्रियते, न त्वनुपलब्धसामान्य इत्यर्थः। न चासतः स्वतन्त्रस्य सामान्यदर्शनमस्तीति। द्वितीयं कल्पमाशङ्कते—अथेति। एतद्दूषयितुं धर्म्मत्रैविध्यमाह—धर्म्मा इति। तद्विभजते—तत्रेति। पृच्छति—कथं पुनरिति। यदि हि स्वतन्त्रः समवायो न तर्हि कस्यचिद्विशेषणं तथा च न विशेषणतया गृह्येतेति भावः। उत्तरम्—समवायान्तराभावात्। न विशेषणत्वं स्वातन्त्र्येण निराकुर्म्मः, किन्तु वृत्तिमस्येत्यर्थः। कस्मात् पुनरस्य न समवायान्तरमभ्युपेयत इत्यत आह—अथेति। पृच्छति—किमिदमिति। अनवस्थाप्रसङ्गो हि नाम तर्को नैष प्रमाणमन्तरेण निर्णयाय पर्याप्त इत्यर्थः। उत्तरम्—न संदेहः। किं त्वस्त्येव न्यायः। तमाह—पञ्चेति। अयं पञ्चपदार्थवृत्तिशब्दो बहुव्रीहिणा

## न्यायवार्त्तिकम्

शब्दविषयत्वात् (१) परमाणुवद्, अनाश्रितः समवाय इति न्यायः, व्यापकत्वे सतीह बुद्धिनिमित्तत्वाद् आत्मवत्। यदि पुनराश्रितः समवायः स्यात् ततः किं स्यात्? कार्यमनाधारं स्यात्। कथमिति? पूर्वं तावत्कार्यमात्मानं लभते पश्चात् कारणेषु समवायेन वर्तत इति प्राग् वृत्तेरनाश्रितं प्राप्नोति। समवायश्च कार्यकारणयोर्वर्तत इति वृत्तिरस्य वाच्या, न हि वर्तमानं किञ्चिद् अवृत्तिमद् दृष्टम्। प्राप्तित्वात् संयोगवद्वर्तत इति चेत् न, व्याघातात्। प्राप्तिः संयोगो वर्तत इति किमयं प्राप्तिधर्मः आहोस्वित् कार्यधर्म इति। वयं च ब्रूमः कार्यधर्मो न प्राप्तिधर्म इति। तथा कार्यान्तराण्यपि प्राप्तिमन्ति सन्तीति। यदि पुनरियं वृत्तिः प्राप्तिधर्मोऽभविष्यत् प्राप्तेरपि प्राप्त्यन्तरमभविष्यदित्यनवस्थादोषः, प्राप्तेर्वृत्तिमत्त्वात्। न चैतामनवस्थां कश्चिच्छक्तः प्रतिपादयितुम्, प्रमाणाभावादिति। समवायश्च समवायान्तरेण वर्तते इति ब्रुवाणः शास्त्रं बाधते

## न्यायवार्त्तिकतात्पर्य्यटीका

परमाणौ वर्त्तते, षष्ठीसमासेन च समवाये (२)। न च कथञ्चिच्छब्दाभेदमात्रमनुमानाङ्गम्, मा भूद् गोशब्दसाम्येन वागादीनामपि विषाणित्वमित्यपरितोषान्न्यायान्तरमाह—अनाश्रितः समवाय इति। इह बुद्धिनिमित्तत्वं कारणत्वम्। संयोगेनानैकान्तो मा भूदित्यत उक्तम्—व्यापकत्वे सतीति। सत्युपलब्धिकारणान्तरसद्भावे सर्वत्रोपलभ्यता व्यापकत्वम्। तच्चेह प्रत्ययकारणत्वमात्मनि च समवाये चाविलक्षणमिति। न्यायेतिकर्तव्यतां तर्कं पृच्छति—यदि पुनरिति। उत्तरम्—कार्यमिति। उक्तमनवस्थाप्रसङ्गमवतारयितुमनाधारत्वप्रसङ्ग उक्तः। स्यादेतत्, भवतु वृत्तेः प्रागनाश्रितं कार्यं पश्चात् समवैष्यति, तुरीसंयुक्तेभ्य इव तन्तुभ्य उत्पद्य पटः पश्चात्तुर्य्या, इत्यत आह—समवायश्चेति। अनवस्थाप्रसङ्गः पूर्वोक्त इत्यर्थः। शङ्कते—प्राप्तित्वादिति। प्रमाणसत्त्वात् प्राप्तसमवायस्य वृत्तिर्न शक्या अनवस्थाभिया परित्यक्तुमित्यर्थः। विमर्षपूर्वकं शङ्कां निराकरोति—किमिति। संयोगे प्राप्तित्वस्य निवृत्त्या स्वाभाविकः संबन्धः कार्यत्वस्योपाधेः तत्प्रयोजकस्य व्रियमानत्वादित्यर्थः। अथ प्राप्तिधर्म्मोऽपि कस्मान्न भवतीत्यत आह—यदि पुनरियमिति। नन्वियमनवस्था कस्माद् बीजाङ्कुरादिष्विवेहापि नाभ्युपेयत इत्यत आह—न चैतामनवस्थामिति। अनिदंप्रथमेष्वनादित्वाच्छक्या प्रतिपादयितुमनवस्था प्रमाणेन, न त्विदंप्रथमेष्वादिमत्त्वेन तस्याशक्यनिश्चयत्वात्। तदिदमुक्तम्—प्रमाणाभावादिति। शास्त्रविरोधश्च समवायान्तराभ्युपगम इत्याह—

---

(१) "पञ्चपदार्थवृत्तिः" इत्येवं शब्देन प्रतिपाद्यत्वादित्यर्थः। (२) "पञ्चपदार्थवृत्तिः" इति शब्दात् पञ्चानां पदार्थानां द्रव्यगुणकर्मसामान्यविशेषरूपाणां वृत्तिः सम्बन्धो येनेति बहुव्रीहिणा परमाणोर्लाभः, पञ्चानां पदार्थानां वृत्तिः इत्येवं षष्ठीतत्पुरुषेण च समवायस्य लाभ इति नैकसमासतात्पर्येण समवायपरमाण्वोर्द्वयोः प्रतीतिः सम्भवतीति निरुक्तदृष्टान्तमूलानुमितिर्नोपपद्यते इत्यभिप्रायः।

## न्यायवार्त्तिकम्

"तत्त्वं भावेन व्याख्यात"मिति (१)। सम्बन्धिनिवृत्तौ सम्बन्धोऽवतिष्ठते इति न प्रमाणमस्ति। न नास्ति, ख्यातिनिमित्तानां निवृत्तेः, ख्यातिनिमित्तान्यस्य निवर्तन्ते। न समवायः, अकृतत्वात्। अकृतकः समवाय इति च कार्यस्याधारवत्त्वेनानुमीयते। यद्ययं कृतकः स्यात् कार्येण सहोपादानादनाश्रितं कार्यं स्यात्। अथ कार्यात् पूर्वं भवतीति? तथापि कस्येति वाच्यम्। अथ पश्चाद् भवतीति? कार्यानाधारतादोषस्तदवस्थः। तस्मात् स्वतन्त्रः समवाय इति सिद्धम्। तत्र प्रतिषिध्यमानधर्मविषयमनुमानम् असद्विषयं न पुनर्विधीयमानस्वतन्त्र-

## न्यायवार्त्तिकतात्पर्य्यटीका

समवायश्चेति। तत्त्वमेकत्वं समवायस्य, भावेन सत्तया, व्याख्यातमिति शास्त्रमाह, तदनेकत्वमुपपादयता बाध्येतेत्यर्थः। चोदयति—संवन्धिनिवृत्ताविति। तथा च विनश्यति, विनष्टे च तस्मिन् यो दृश्यते स ततोऽन्य उत्पन्न इति सिद्धं समवायस्य नानात्वमिति। परिहरति—न नास्तीति। ख्यातिरुपलब्धिः। कस्मात् (२)? अकृतकत्वात्। अकृतकत्वमेव कुत इत्यत आह—अकृतक इति। कार्यं स्वोपादानेनाकृतकसंवन्धवद् आधारवत्त्वादिति व्यतिरेकी हेतुः। व्यतिरेकाव्यभिचारमाह—यद्ययमिति। उत्पद्यमानः खल्वयं समवायः सह कार्य्येण, न कार्यस्य, न हि सहोत्पन्नौ रूपस्पर्शौ मिथः संबध्येते, एकार्थसमवायस्तयोः, सोऽपि नास्ति, सन्नप्यसौ न (३) कार्य्यमाधारवत् करोति, तस्मात् सहेत्यादि, कार्य्यमनाधारं स्यादित्यर्थः। शङ्कते—अथेति, कार्य्यात् पूर्व्वमुत्पन्नः समवायः पश्चादुत्पद्यमानं कार्यमुपादानाधारकं करिष्यति कार्यहेतुबलादित्यर्थः। निराकरोति—तथाऽपीति। त्रिभ्यो हि कारणेभ्यः कार्यं भावरूपं जायते। कार्यकारणसमवायस्य च कार्यकारणे समवायिकारणे वक्तव्ये, कार्यात् प्रागजातस्य च समवायस्य न कार्य्यं कारणम्। न च निमित्तकारणमात्रादस्य जन्मेति सांप्रतम्, भावोत्पादस्य सर्वत्र कारणत्रयपूर्वकत्वनियमात्। तस्मात् समवायस्य समवाय्यसमवायिकारणाभावान्न कार्यात् प्रागुत्पाद इति सूक्तम्—तथाऽपि कस्येति वाच्यमिति। शङ्कते—अथेति। दूषयति—कार्य्येति। न च पटतुरीसंयोगवत्समवायस्य पश्चात्कार्यकारणसमवाय इति युक्तम्। संयोगजस्य संयोगस्य कारणत्रयसंभवादस्य तु समवायान्तरमन्तरेण कारणत्रयायोगात्, अन्यथाऽनवस्थाप्रसङ्गादिति भावः। उपसंहरति—तस्मादिति। ततश्च न ज्ञायते किमभिप्रेत्यासद्विषयमित्युक्तमित्याक्षेप इति। समाधत्ते—तत्र प्रतिषिध्यमानेति। अतीतानागते

(१) "तत्त्वं भावेन" इति वैशेषिकदर्शने ७।२।२८ सू०। "व्याख्यातम्" इति तु तत्पूर्व्वसूत्रानुवृत्त्या परिगृहीतम्। (२) वार्त्तिके "न समवायः" इत्युक्तम्; तस्य हेतुमवतारयितुमयं प्रश्नः। (३) 'सन्नप्यसौ न' इत्यनन्तरं 'कार्यमाधारवत्' इत्यादिः 'पश्चादुत्पद्यमानम्'इत्यन्तः पाठः क-पुस्तके नास्ति।

## न्यायभाष्यम्

त्रिकालयुक्ता अर्था अनुमानेन गृह्यन्ते, भविष्यतीत्यनुमीयते, भवतीति, चाभूदिति च, असच्च खल्वतीतमनागतं चेति ॥ ५ ॥

## न्यायवार्त्तिकम्

विषयम्। भवतीत्यसद्विषयमिति चेत् भवति जायत इत्येकोऽर्थः, न, जायमानार्थानभ्युपगमात्। भवति विद्यत इति। एवं तावद् व्यवस्थितमेतत् तत्पूर्वकमनुमानमिति।

अपरे तु ब्रुवते नान्तरीयकार्थदर्शनं तद्विदोऽनुमानमिति। अस्यार्थः—योऽर्थो यमर्थमन्तरेण न भवति स नान्तरीयकः, नान्तरीयकश्चासावर्थश्चेति नान्तरीयकार्थः, तस्य दर्शनं तद्विदोऽनुमानम्, यस्तं वेद तन्नान्तरीयकोऽयमिति। अत्रार्थग्रहणमतिरिच्यते, न हि नान्तरीयकः स्यान्नार्थ इति। नान्तरीयकार्थ इति च समासपदमेतत्, तत्र यदि षष्ठीसमासो नान्तरीयकस्यार्थ इति, नान्तरीयकं तावत् कृतकत्वम्, तस्यार्थो धर्मः, प्रयोजनं वा ? यदि धर्मः कृतकत्वस्यार्थः, सत्त्वमेयत्वाभिधेयत्वाद्यनुमानं प्राप्तम्। अथ प्रयोजनम्, अनित्यत्वप्रतिपत्तिर्हेतुः प्राप्तः। अथ बहुव्रीहिः नान्तरीयकोऽर्थो यस्येति, तत्रापि कृतकत्वं नान्तरीयकम्, तद्यस्य स हेतुः प्राप्तः। तच्च कृतकत्वं घटादेः, शब्दस्यानित्यत्वस्य वा ? यदि घटादेः, घटादिर्हेतुः प्राप्तोऽनित्यः शब्दो घटादिति। अथ शब्दस्य, शब्दो हेतुः प्राप्तः अनित्यः शब्दः शब्दात्। अथानित्यत्वस्य साधनभावेन कृतकत्वं धर्मः, तथाऽप्यनित्यः शब्दोऽनित्यत्वादिति प्राप्नोति, अनित्यत्वस्यार्थः कृतकत्वमिति। सर्वथा कृतकत्वमनित्यत्वे न हेतुः। अथ सामानाधिकरण्यं नान्तरीयकश्चासावर्थश्चेति, तथाऽप्यसमर्थः।

## न्यायवार्त्तिकतात्पर्य्यटीका

संप्रति प्रतिषिध्यमाने तद्विषयमनुमानमसद्विषयमुक्तम्। तन्निषेधस्तु भवतु प्रत्यक्षगोचरः, तथाऽपि सिद्धो विषयभेद इत्यर्थः। अत्र चैष धर्म्मत्रैविध्यक्रमः द्वेधा तावद् विधीयमानः, प्रतिषिध्यमानश्च, विधीयमानश्च द्वेधा—परतन्त्रः, स्वतन्त्रश्चेति। स्वतन्त्रस्य धर्मत्वं विशेषणत्वमात्रविवक्षया द्रष्टव्यम्। ननु विधीयमानोऽप्यसन् प्रत्यक्षश्च क्वचिद्, यथा व्याप्रियमाणे कुलाले जायमानो घटः, विस्फारिताक्षो हि तदा घटो भवतीति प्रत्येति। न चासौ तदा सन्, सतो भवनं प्रत्यकर्तृत्वात् गगनवदिति शङ्कते—भवतीति। निराकरोति—न, जायमानेति। जायमानस्यार्थस्य विधिविषयस्य सत्तयाऽसत्तया वाऽनभ्युपगमात्। निषेधविषयतया तु तस्यासत्त्वमभ्युपेयत एव। कस्तर्हि भवति-शब्दस्यार्थ इत्यत आह—भवतीति। घटो जायत इति तु लौकिकः प्रयोगो घटशब्दं घटार्थेषु तदवयवेपूपचर्य्य तेषां च सिद्धतया कर्तृत्वादुपपादनीय इति। उपसंहरति—एवं तावदिति। स्वलक्षणं समाधाय परेषामनुमानलक्षणं दूषयितुमुपन्यस्यति—अपरे त्विति। तस्यार्थमाह—अस्यार्थ इति। दूषयति—अत्रेति। यथासंभवं समास

## न्यायवार्त्तिकम्

समासः, विशेषणविशेष्यनियमासम्भवात्। उभयपदव्यभिचारे सति समानाधिकरणो भवति नीलोत्पलवत्। नीलशब्दस्याप्यनेकार्थवृत्तित्वात् उत्पलशब्दस्यापि तथाभावात् सामानाधिकरण्यं भवति। न पुनरिह नान्तरीयक इत्युक्ते अस्ति व्यभिचारोऽर्थोऽनर्थ इति, यतोऽर्थग्रहणं समर्थं स्यादिति। एकपदव्यभिचारेऽपि दृष्टं सामानाधिकरण्यम्, यथा पृथिवी द्रव्यम्? अत्रापि उभयपदव्यभिचारः, प्रधानाङ्गभावभेदेन द्रव्यशब्देन द्रव्यमुच्यते, द्रव्यत्वं च। पृथिवीशब्देनापि प्रधानाङ्गविवक्षायां द्रव्यमुच्यते पृथिवी पृथिवीत्वं चेति उभयपदव्यभिचारात् पृथिवी द्रव्यमिति युक्तमुक्तम्। इदं पुनर्न युक्तं नान्तरीयकार्थदर्शनमिति। कस्मात्? अर्थप्रत्यायनार्थत्वाच्च प्रयोगस्य, अर्थप्रत्यायनार्थं हि शब्दप्रयोगमिच्छन्ति। नान्तरीयकमित्युक्ते अर्थो गम्यते, अतो न युक्तोऽर्थशब्द इति। तद्विद इति च न युक्तम्, नैवान्यथा नान्तरीयक इति। न हि नारिकेल-

## न्यायवार्त्तिकतात्पर्य्यटीका

विकल्प्य दूषयति—नान्तरीयकार्थ इति चेति। सत्त्वं विधिविषयज्ञानगम्यत्वं न तु सामान्यम्, सत्त्वादिभिरनित्यत्वनान्तरीयककृतकत्वधर्मैरनित्यत्वानुमानं स्यात्, न च शक्यम्, तेषामाकाशादिषु नित्येषु व्यभिचारादित्यर्थः। तथाऽप्यसमर्थः समास इति। पूर्वमर्थातिरेकमात्रं दूषणमुक्तम्, संप्रति त्वर्थातिरेकेण हेतुना विशेषणसमासानुपपत्तिरित्यपौनरुक्त्यम्। 'विशेषणं विशेष्येण बहुलमि'त्यत्र विशेषणपदोपादानमात्रेण विशेष्यपदोपादानमात्रेण वान्यतरस्यार्थात्प्राप्तेरुभयपदोपादानस्यैतत्प्रयोजनम्—यत्रोभयोः प्रत्येकं व्यभिचारः समुदाये त्वव्यभिचारस्तत्र समासो यथा स्यादिति, स चात्र नास्तीति समासानुपपत्तिरित्यर्थः। सामर्थ्यं प्रयोजनाभिसंबन्धः। चोदयति—एकपदेति। परिहरति—अत्रापीति। प्रधानं व्यक्तिर्विशेष्यत्वात्, अङ्गं जातिर्विशेषणत्वात्। पृथिवीत्युक्ते भवति संशयः—किं पृथिवीत्वं सामान्यमस्य विवक्षितं यथा पशुना यजेतेति, किं वा तद्विशेष्यं द्रव्यम्, यथा ग्रहं संमार्ष्टीति, अत्रेदमुपतिष्ठते द्रव्यमिति। तद्धि पृथिवीत्वात् सामान्यविशेषात् पृथिवीं व्यवच्छिनत्ति, एवं द्रव्यमित्युक्ते द्रव्यत्वसामान्यं व्यक्तिर्वेति विमर्षे पृथिवीत्येतदुपतिष्ठते, न द्रव्यत्वसामान्यम्, किन्तु पृथिवी। न च द्रव्यत्वपृथिवीत्वयोः सामानाधिकरण्यमस्ति, न हि भवति पृथिवीत्वं द्रव्यत्वमिति, तस्मात्सामानाधिकरण्यसंभवात् प्रधानैकव्यक्तिलाभः। इह त्वर्थो नान्तरीयकत्वं व्यभिचरति, नान्तरीयकत्वं नार्थम्, न ह्यस्ति संभवो नान्तरीयकश्च स्यान्न चार्थ इति, नान्तरीयकशब्दवाच्यस्यानभिधेयत्वासंभवात्। वस्तुवचनेऽप्यर्थशब्दस्य लक्ष्यासंभवाद् अविषयं लक्षणम्, न हि दिङ्नागमते किञ्चिदस्ति वस्तु यन्नान्तरीयकं सद्धेतुर्भवति। यथाऽऽह—"सर्वोयमनुमानानुमेयभावो बुद्ध्यारूढेन धर्मधर्म्मिभावेन न बहिः सदसत्त्वमपेक्षत" इति। अव्यापकं च, न हि वस्त्वेव नान्तरीयकमसतोऽपि नान्तरीयकत्वादिति भावः। दूषणान्तरमाह—तद्विद इति चेति। नान्तरीयकदर्शनमित्युच्यमाने शब्दसामर्थ्यादेव लभ्यते

## न्यायवार्त्तिकम्

द्वीपवासिनो धूमदर्शने नान्तरीयकमिति ज्ञानमस्ति। अतस्तद्विद इत्यपि न वक्तव्यम्। एतेन तादृगविनाभावि धर्मोपदर्शनं हेतुरिति प्रत्युक्तम्। कोऽतिदेशार्थः? यथा नान्तरीयकार्यदर्शनेऽर्थग्रहणमयुक्तं तथा धर्मग्रहणमपीति। उदाहरणं तु यथा धूमोऽग्नेरिति। एतच्च न सम्भवतीत्यनेकधा वर्णितम्। अपरे तु मन्यन्ते—

"अनुमेयेऽथ तत्तुल्ये सद्भावो नास्तिताऽसति।"

इत्यनुमानम्। एतेनानुमेयैकदेशवृत्तेरपि सङ्गृहीतत्वादलक्षणम्। यथाऽनित्याः परमाणवो गन्धवत्त्वाद् घटवत्। अनुमेये सद्भाव इत्यभिधानादप्रसङ्गः, नाप्रसङ्गः, एकदेशवृत्तेस्तद्धर्मत्वाद् विपक्षैकदेशवृत्तिवत्। यथा विपक्षैकदेशे वर्त्तमानो न विपक्षे नास्ति, एवं पक्षैकदेशे वर्तमानो न पक्षे नास्तीत्येतद्व्युदासे यत्नः कर्तव्यः। न कर्त्तव्योऽवधारणान्निवृत्तेः। अनुमेये सद्भाव इत्यवधारणे द्वे। किमनुमेय एव सद्भावोऽथानुमेये सद्भाव एव। किं पुनरनेन पूर्वेणावधारणेन क्रियते किमसम्भवो निवर्त्यते अथ सम्भवो ज्ञाप्यते, उभयथापि नावधारणार्थो, विनापि तदधिगतेर्विनाप्यवधारणेनायमर्थो गम्यते अनुमेये सद्भावोऽसद्भावो नेति। न चैकदेशवृत्तिर्निराकृत इत्यवधारणं

## न्यायवार्त्तिकतात्पर्य्यटीका

नान्तरीयकत्वविशिष्टार्थदर्शनम्, सति संभवे शब्दार्थपरित्यागाभावात्। अतस्त्रिविधलिङ्गदर्शनसिद्धेः किमपरमवशिष्यते यदवबोधाय तद्विद इत्युपादीयत इत्यर्थः। एतदेव व्यतिरेकमुखेन निरूपयति—न हीति। एतल्लक्षणदूषणं लक्षणान्तरेऽप्यतिदिशति—एतेनेति। पृच्छति—क इति। न ह्यस्मिन् लक्षणे तद्विद इत्यस्ति, येन तदतिरिच्यते इति भावः। उत्तरम्—यथेति। तेषामुदाहरणं दूषयति—उदाहरणमिति। तदनेन दिङ्नागस्य लक्षणं दूषयित्वा अन्येषां लक्षणं दूषितम्।

संप्रति दिङ्नागस्य स्वकीयलक्षणप्रपञ्चार्थं वाक्यमनुमेयेऽथ तत्तुल्य इत्याद्युपन्यस्य दूषयति—अपरे त्विति। अनन्तरलक्षणकारमपेक्ष्यापर इत्युक्तम्। देशयति—अनुमेय इति। न हि योऽनुमेये संश्चासंश्च स शक्यः सन्निति वक्तुमित्यर्थः। समाधत्ते—नाप्रसङ्ग इति। यद्येवं स्याद् यो विपक्षे द्वेधा स विपक्षावृत्तिरिति हेतुरेव स्यान्न सव्यभिचार इत्यर्थः। पुनश्चोदयति—न कर्त्तव्य इति। कुतः अवधारणान्निवृत्तेः। अनुमेये सद्भाव एवेत्यवधारणेनानुमेये सद्भावस्य नियतत्वात् कुतः पक्षैकदेशवृत्तेः प्रसङ्ग इति भावः। एतन्निराकर्तुं यथासंभवं विकल्पयति—अनुमेय इति। तत्र पूर्वकल्पस्य तात्पर्यं विकल्पयति—किं पुनरनेनेति। असंभवोऽत्यन्तासंभवो निराक्रियते, यथा नीलं सरोजं भवत्येव, नात्यन्तं न भवतीति। न तु नीलमेव सरोजं मानीलमिति, नापि सरोजमेव नीलं नान्यदिति। अथ संभव इति। अन्वयपरो न व्यतिरेकपर इत्यर्थः। एतद्विकल्पद्वयं दूषयति—उभयथाऽपीति। दूषणान्तरं चाह—न चैकदेशवृत्तिरिति। न ह्यत्यन्तायोगव्यवच्छेदेनायोगो व्यवच्छिन्नो भवति, नापि संभवमात्रविधा-

## न्यायवार्त्तिकम्

व्यर्थम् उत्तरपदबाधा च। अथोत्तरमवधारणमवगम्यते तस्य व्याप्तिरर्थः तथाप्यनुमेयमवधारितं व्याप्त्या न धर्मो, यत एव करणं ततोऽन्यत्रावधारणमिति। सम्भवव्याप्त्या चानुमेयं नियतम्, व्याप्त्यतिव्याप्तिभ्यां च सम्भवः प्रसृतः। द्वौ राशी शिष्यमाणौ तत्तुल्यो विपरीतश्च। तत्र नास्तिताऽसतीत्यनेन विपरीतान्निवर्त्यताम्, तत्तुल्ये सद्भाव इति किमर्थमारभ्यते? न ह्यनेनाप्राप्तं किञ्चित् प्राप्यते। तत्तुल्ये च सम्भवमात्रं विवक्षितमिति। सम्भवमात्रं च व्याप्त्यतिव्याप्तिभ्यामनियतेन सम्भवेन लभ्यते। अथ तत्तुल्ये सद्भाव, इत्येतदप्यवधारणार्थमारभ्यते, किं पुनरत्रावधार्यते? किं तत्तुल्य एव सद्भावः, तत्तुल्ये सद्भाव एवेति। यदि तत्तुल्ये एव सद्भाव इति सद्भावोऽवधारितः। तदा पूर्वोत्तरपदे बाधिते भवतः। न हि भवति देवदत्तमेव

## न्यायवार्त्तिकतात्पर्य्यटीका

नेनासंभवो व्यवच्छिन्नो भवति। ततश्चायोगाव्यवच्छेदादेकदेशवृत्तिरनुमानाभासो न व्यवच्छिन्न इत्यर्थः। स्यादेतद्, विशेष्यसंगतोऽयमेवकारोऽनुमेय एव संभवति यथा पार्थ एव धनुर्धर इति। न चायमन्ययोगव्यवच्छेदो विनैवकारं लभ्यते, तस्मान्न व्यर्थमवधारणमित्यत आह—उत्तरपदबाधा च। न ह्यस्ति सम्भवोऽनुमेय एवास्ति न तुल्ये(१) चेति, तस्मात्तत्तुल्य इत्यस्य बाधा। च-कारो नैकदेशवृत्तिर्निराकृत इति दूषणं समुच्चिनोति। अनुमेय एव सद्भावपक्षं यथासंभवं दूषयित्वा अनुमेये सद्भाव एवेति द्वितीयं पक्षं दूषयितुमुपन्यस्यति—अथोत्तरमिति। तस्य प्रयोजनं दर्शयति—तस्य व्याप्तिरर्थः। सद्भाव एवेति किल विशेषणसङ्गतमवधारणमयोगं व्यवच्छिन्दत् व्याप्तिं दर्शयति, तथा च व्याप्तिरस्यार्थ इत्यर्थः। दूषयति—तथाऽप्यनुमेयमवधारितं संभवस्य व्याप्त्या न धर्म्मः सद्भावः (२)। हेतुमाह—यत एव करणं ततोऽन्यत्रावधारणमिति। मा वधारि सद्भावोऽवधार्य्यतां चानुमेयम्, किमेतावताऽपीत्यत आह—संभवव्याप्त्या चेति। अनुमेयं खल्ववधारितं सद्धेतुसंभवं परित्यज्य नान्यत्र वर्त्तते, ततश्चानुमेयं हेतुसम्भवव्याप्त्याऽवधारितं भवति, हेतुसंभवस्त्वनवधारितः सर्व्वत्रैव तत्तुल्ये च विपक्षे च प्रसृतः, स च कश्चित्तुल्यविपक्षौ व्याप्नोति, कश्चित्तदेकदेशवृत्तिः, तदस्य हेतुसंभवस्य विपक्षेऽपि प्रसक्तस्य प्रतिषेधाय युक्तमसति नास्तीति। तत्तुल्ये तु प्रसक्तमप्रतिषिद्धमनुमतमेवेति तत्तुल्ये सद्भाव इति व्यर्थमित्यर्थः। स्यादेतत्, तुल्ये हेतुसद्भावसिद्धावपि तत्तुल्ये व्याप्त्या हेतोः सद्भावो भवत्वित्येतदर्थं तत्तुल्ये सद्भाव इति वचनमित्यत आह—तत्तुल्ये चेति। यदि पुनर्व्याप्तिर्विवक्ष्यते कृतकत्वे साध्ये प्रयत्नानन्तरीयकत्वं न हेतुः स्यात्, न ह्ययं सपक्षव्यापक इति भावः। देशयति—अथ तत्तुल्य इति। दूषयितुं विकल्पयति—किं पुनरत्रेति। पूर्वस्य विरोधाद्बाधनम्, उत्तरस्य पौनरुक्त्यादिति। पूर्वपदेन सह विरोधे निदर्शनमाह—न हि भवतीति। अनुमेयसद्भाव इत्य-

(१) "न तुल्ये" इत्यत्र "तत्तुल्ये" इति पाठः समुचितः प्रतिभाति। (२) "सद्भेदे" इति ख पु-पाठः।

## न्यायवार्त्तिकम्

भोजय यद्वदत्तं च, तथेहापि तत्तुल्य एव सद्भावः अनुमेये चेत्युन्मत्तवाक्यम्। अथ तत्तुल्ये सद्भाव एव, तत्तुल्यैकदेशवृत्तेरहेतुत्वं यस्तज्जातीयस्यैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिस्ते, न स हेतुरिति

## न्यायवार्त्तिकतात्पर्य्यटीका

नेनानुमेयव्यक्तौ हेतोर्लब्धायां तत्तुल्य एव सद्भाव इति समुच्चीयमानावधारणं विपक्षमात्राद्वृत्तिं व्यवच्छिनत्ति, न तु अनुमेयात्।

नरं च नारायणमेव चादौ स्वतः सुतौ द्वौ जनयां बभूव।

इति यथेति चेदत आह—तथेहापीति। समुच्चीयमानावधारणे हि तत्तुल्येन यथाऽन्ययोगव्यवच्छेदेनैवकारः संबध्यते तथा अनुमेयेनापि संबध्येत, तथा चानुमेयैकदेशवृत्तिरपि हेतुः स्यात्, न खलु नरं च नारायणमेवेति निपातो नारायणेन सहान्ययोगव्यवच्छेदेन संबध्यते, नरेण चायोगव्यवच्छेदेनेति भावः। अथावधारणस्यावैचित्र्येण संबन्धमिच्छताऽनुमेये यथा अयोगव्यवच्छेदस्तथा तत्तुल्ये अयोगव्यवच्छेदेन संबन्ध उच्येतेति शङ्कते—अथ तत्तुल्य इति। निराकरोति—तत्तुल्ये इति। एतदेव स्फोरयति—इति ते (१), तव दर्शने, न च यस्यानुमेये सद्भाव एवेत्यनूद्य तस्य तत्तुल्य एव सत्त्वमिति विधातुं शक्यम्। न ह्यनूद्यमानं शक्यं विशेष्टुम्, तथा सति तद्विशेषणाय प्रयत्नान्तरास्थाने सति वाक्यभेदप्रसङ्गात्। यथा "यस्योभयं हविरार्त्तिमार्च्छेदैन्द्रं पञ्चशरावमोदनं निर्वपेदि"ति। तत्र हि यद्यपि स्वरूपेणार्त्तेरशक्यप्रतिपत्तित्वेन हविषा विशेषणं मृग्यते, तथापि न शक्यं हविरुभयत्वेन विशेष्टुं विना यत्नादिति वाक्यभेदभिया प्रतीयमानमप्युभयत्वमविवक्षितम्, एवमत्रानुमेयइत्यविवक्षितम्। अथ तद्विवक्षयैव वाक्यभेदमुपेत्य पश्चाद्वाक्यैकवाक्यतयाऽभिमतार्थसिद्धिरास्थीयते। न च विरोधाद्वाक्ययोरेकवाक्यताविरहः। तत्तुल्य एवेत्यन्ययोगव्यच्छेदस्य विपक्षमात्रविषयत्वेनाप्युपपत्तौ विरोधासिद्धेः। तस्मादन्यापोहार्थत्वेन पदानां विरोधो वक्तव्यः। तथा हि अनुमेये सद्भाव इत्यत्रानुमेय एव नाननुमेये, सद्भाव एव नासद्भाव इति पदार्थः। तथा च तत्तुल्यविपक्षयोर्हेतोरभावो दर्शितः। एवं तत्तुल्ये सद्भाव इत्यत्रापि तत्तुल्य एव नातत्तुल्ये, सद्भाव एव नासद्भाव इति पदार्थः। तथा चानुमेयेऽसद्भाव इत्युक्तं भवति। न चानुमेयतत्तुल्यपदार्थयोः परस्परपरीहारवतोः समुच्चयसम्भवः। द्वयोरपि विपक्षमात्रव्यावृत्तिपरत्वात् परस्परसमुच्चयसद्भाव इति चेन्न, अवृक्षोऽगौ (२) रित्यनयोरपि हस्त्यादिनिवृत्तिमात्रपरत्वेनाभिन्नार्थयोः सामानाधिकरण्यप्रसङ्गात्, तस्माद्विरोधात् समुच्चीयमानावधारणं न युक्तमिति। न च समुच्चीयमानावधारणं दिङ्नागो मेने, यदेवमूचे वैशेषिकलक्षणदूषणावसरे—यदि रूपमेव चाक्षुषं ततो न द्रव्यं चाक्षुषं स्यात्, तथा च महदनेकद्रव्यसमवायाद्रूपाच्चोपलब्धिरिति द्रव्यचाक्षुषत्वाभिधानं व्याहन्येतेति। अत्र हि पूर्ववद्द्रव्यसहितरूपमेव चाक्षुषं न गन्धरसादीति शक्यं समुच्चीय-

(१) "इति ते" इति वार्त्तिके न दृश्यते, किन्तु "प्रयत्नानन्तरीयकत्वादिस्ते" इत्यत्र केवलं "ते" इत्यस्ति।
(२) "चेत् नाश्वो गौ-" इति ख-पु, वयन्त्वत्र चेन्न, "अश्वो गौ-" एतादृशपाठमेव सम्यक् तया मन्यामहे।

## न्यायवार्त्तिकम्

प्राप्तम्। असति नास्तितेति चासम्प्रधार्य प्रोक्तं यदसत्स्वरूपमेव तन्नास्ति। न ह्यसदाधारो भवति यतस्तत्प्रतिषेधः स्यात्। एतदप्यवधारणार्थमारभ्यते? किमवधार्यते? नास्तितैव असत्येव वेति? यदि तावन्नास्तितैव, असतीति व्यर्थम्, अनुक्तेऽपि तदधिगतेः। अनुक्तेऽप्येतद्गम्यतेऽसति नास्तीति। अथ पुनरसत्येव नास्तिता? गौर्विषाणित्वादित्ययमपि हेतुः प्राप्नोति। एवं ह्यसत्येव नास्ति, न पुनर्नास्त्येव। यदप्येकद्विपदपर्युदासेन ससिकासम्भवे षट्प्रतिषेधमुक्त्वा त्रिलक्षणो हेतुरभिधीयते एतदपि द्विपदयुक्तयोरन्वयिनोर्हेतुत्वात् द्विपदयुक्तस्य च व्यतिरेकिण एकस्य हेतुत्वादयुक्तम्, अनभ्युपगतनित्यपक्षस्य कृतकत्वप्रयत्नानन्तरीयकत्वे द्विपदयुक्ते एव विपक्षाभावाद्धेतू भवतः। व्यतिरेक्यपि तत्तुल्यासम्भवात् द्विपदयुक्तश्च भवति हेतुश्चेति, यथा नेदं

## न्यायवार्त्तिकतात्पर्य्यटीका

मानावधारणम्, तस्मात् समुच्चीयमानावधारणाभिधानं कीर्त्तेः (१) स्वातन्त्र्येण, तच्चायुक्तमिति (२) कृतं विस्तरेण।

असति नास्तितेति दूषयति—असतीति। कस्मात्? यदसत् तत्तुच्छं स्वमेव नास्ति, तन्न सदिति शक्यं व्यवहर्तुम् असदिति वा, भवतु, तथापि कस्मात्तस्मिन् हेतोर्न व्यावृत्तिर्भवतीत्यत आह—न ह्यसदिति। यथा चैतत्तथाऽन्वयिहेतूपादानावसरेऽस्माभिरुक्तम् (३)। स्वरूपेण दूषयित्वा एतद्गतमवधारणं दूषयिष्यन्ननूद्य विकल्पयति—किमवधार्यत इति। प्रथमं कल्पं दूषयति—यदि तावदिति। तत्तुल्य एव सद्भाव इत्यनेन गम्यते इत्यर्थः। द्वितीयं कल्पं दूषयति—अथ पुनरिति। गौरयं विषाणित्वादित्ययं हेतुर्विपक्ष एव नास्ति, पक्षसपक्षव्यापकत्वात्। न तु नास्त्येव, विपक्षैकदेशे महिषादौ वृत्तेः। अतो विपक्ष एव नास्ति इत्ययमपि हेतुः स्यात्। तदेवमवयवार्थं दूषयित्वा समुदायार्थं दूषयितुमुपन्यस्यति—यदप्येकद्विपदपर्युदासेनेति। तत्रैकपदपर्युदासेन त्रयः पक्षाः, द्विपदपर्युदासेऽपि त्रय इति षट्कम्, तत्पर्युदासेन ससिकापरिग्रहः। यथाऽनुमेये सद्भाव इत्युच्यमाने (४) विपक्षवृत्तेरपक्षधर्मस्य च हेतुत्वं स्यात्, यथा नित्यः शब्दः चाक्षुषत्वात् सामान्यवदिति। नास्तिता सतीत्युच्यमाने योऽपक्षधर्मस्तुल्ये नास्ति स हेतुः स्यात् यथा (५) नित्यः शब्दोऽसत्त्वात्। अनुमेये तत्तुल्ये चेत्युच्यमाने अनित्यः शब्दः प्रमेयत्वादिति विपक्षवृत्तिर्हेतुः स्यात्। अनुमेयेष्वसति च नास्तीत्युच्यमाने नित्यः शब्दो जातिमत्त्वे (६) श्रावणत्वाद् इत्ययं तत्तुल्यहीनोऽपि हेतुः स्यात्, तत्तुल्येऽस्ति असति च नास्तीत्येतावत्युच्यमानेऽनित्याः परमाणवः कृतकत्वादित्यय-

(१) 'कीर्त्तिः' इति ख। (२) 'तच्चोपयुक्तम्' इति ख। (३) १४४ पृ: २० पंक्तितो द्रष्टव्यम्। (४) "सद्भाव इत्युच्यमाने" इत्यनन्तरं ख-पुस्तके—"यस्य तत्तुल्ये नास्तिता विपक्षे च वृत्तिः सोऽपि हेतुः स्यात्, यथा—नित्यः शब्दः कृतकत्वादिति। तत्तुल्येऽस्तीत्युच्यमाने" इत्यधिकः पाठः। (५) "यथा" इत्यत्र "तथापि" इति क-पु पाठः। (६) अत्र "सति" इति पूरणीयम्।

## न्यायवार्त्तिकम्

निरात्मकं जीवच्छरीरम् अप्राणित्वप्रसङ्गात्। अतोऽव्यापकत्वादलक्षणमेतदिति। एतेन सम्बन्धादेकस्मात् प्रत्यक्षाच्छेपसिद्धिरनुमानमिति लक्षणं प्रत्युक्तम्। कथमिति? न ह्येकस्मात् प्रत्यक्षादनुमानं भवति। अथापि सम्बन्धादेकस्मात् प्रत्यक्षादिति, एतदपि नैव, न ह्ययं तदा सम्बन्धं पश्यति यदाऽनुमिमीत इति। अथ पूर्वं दृष्टमिति? तथाप्यनुपलब्धलिङ्गस्यानुमानं (१) प्रसज्येत। न चान्या गतिरस्ति। रूपेण च स्पर्शानुमाने स्वदृष्टिव्याकोपः। न ह्ययं रूपस्पर्शयोः सम्बन्धमुपलभते। अथैकार्थसमवायः सम्बन्ध इति? सोऽपि स्वदर्शनव्याघाताद्युक्त इति। न हि रूपस्पर्शावेकस्मिन्नर्थे वर्तेते। यत्र रूपं तत्र स्पर्श इति एतदपि नास्ति। न क्वचिद्रूपं स्पर्शो

## न्यायवार्त्तिकतात्पर्य्यटीका

सपक्षधर्मो हेतुः स्यात्, तदेतत् सर्वं मा भूदिति समुदायोपादानप्रयोजनम्। तदेतद्दूषयति एतदपीति। सपक्षव्याप्त्यव्याप्तिभ्यां द्विरूपयुक्तस्यान्वयिनो द्वित्वम्।

संप्रति सांख्यीयमनुमानलक्षणं दूषयति—एतेनेति। सम्बन्धोऽविनाभावः साधनस्य साध्येन, तस्मात् प्रत्यक्षाद् दृढतरप्रमाणावधारितात्। तथाऽपि यत्राविनाभूते लिङ्गे भवत एकस्मिन् धर्मिणि विरुद्धाव्यभिचारिणी, तयोरपि हेतुत्वं प्रसज्येतेत्यत उक्तम्—एकस्मादिति। शेषस्य अनुमेयस्य सिद्धिः। अनुपपन्नत्वमात्रसाम्येनोक्तमेतेन न प्रयुक्तमिति (२)। अनुपपत्तिं पृच्छति—कथमिति। यथासम्भवमनुपपत्तिमाह—न हीति। यदि प्रत्यक्षशब्दो ज्ञानवचनः ज्ञानं चैकत्वेन विशिष्यते, तदैतद् दूषणम्। अथ सम्बन्धविशेषणमेकस्मादिति, प्रत्यक्षशब्दस्तु ज्ञेये न तु ज्ञाने, तदेतदुपन्यस्य दूषयति—अथापि संबन्धादिति। शङ्कते—अथेति। संबन्धस्य प्रत्यक्षतोक्ता पूर्वम्; न त्वनुमितिकाल इत्यर्थः। दूषयति—तथाप्युपलब्धसंबन्धस्य पूर्वमनुमानकाले चानुपलब्धलिङ्गस्यानुमानं प्रसज्येतेति। स्यादेतत्, संबध्यत इति व्युत्पत्त्या संबन्धो लिङ्गम्, तेनाविनाभूताद्धेतोः प्रत्यक्षादनुमेयसिद्धिरिति। तथा च गृहीताविनाभावाल्लिङ्गात् सम्प्रति प्रत्यक्षादित्युपपन्नमित्यत आह—न चान्या गतिरिति। अत्रापि व्याख्याने एकस्मादिति व्यर्थम्, तथा हि अन्वयव्यतिरेकमात्रसंपत्तिरविनाभाव उच्यते सर्वरूपसंपत्तिर्वा, तत्र प्रथमे कल्पे मा भूद्विरुद्धाव्यभिचारी, बाधितविषयस्तु हेतुः स्यात्। द्वितीये तु कल्पे न सर्वरूपसम्पन्नो हेतुर्विरुद्धाव्यभिचारी भवतीत्येकस्मादित्यतिरिच्यते। तस्मात्सूक्तं न चान्या गतिरस्तीति। अव्यापकत्वं लक्षणदोषमाह—रूपेण चेति। न तावदनयोस्तादात्म्यम्, भिन्नेन्द्रियग्राह्यत्वाद्भिन्नबुद्धिबोध्यत्वाच्च। न चातदात्मनोस्तयोः संबन्धः कश्चिदुपलभ्यते। न च प्रति-

(१) "तथापि" इत्यनन्तरम् "उपलब्धसम्बन्धस्य पूर्वमनुमानकाले च" इत्यधिकः पाठस्तात्पर्यटीकायाम्, स च "तथापि" शब्दस्य व्याख्यात्मक इति मन्ये। (२) "प्रत्युक्तम्" इति वार्त्तिकपाठः, तस्य तात्पर्यमाह "न प्रयुक्तम्" इति।

## न्यायभाष्यम्

अथोपमानम्—

(सू)—प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ ६ ॥

प्रज्ञातेन सामान्यात् प्रज्ञापनीयस्य प्रज्ञापनमुपमानमिति। यथा गौरेवं गवय इति।

## न्यायवार्त्तिकम्

वा। परस्पराधाराधेयत्वेन स्यादिति चेत्, परस्पराधाराधेयभावेऽपि (१) न रूपं स्पर्शे न स्पर्शो रूप इति। एतेन सप्तविधः सम्बन्ध इति प्रत्युक्तम्। न हि कार्यकारणभावादीनां सम्बन्धानां रूपस्पर्शयोरन्यतरः सम्बन्ध इति रूपेण स्पर्शानुमानं युक्तमित्यतोऽव्यापकत्वादलक्षणमिति निश्चितमनुमानम् ॥ ५ ॥

अथोपमानम्। सूत्रार्थः पूर्ववत्। प्रसिद्धसाधर्म्यादिति, प्रसिद्धं साधर्म्यं यस्य, प्रसिद्धेन वा

## न्यायवार्त्तिकतात्पर्य्यटीका

क्षणपरिणामवादे कुण्डबदरादीनामपि कश्चिदस्ति संबन्ध इत्यपि द्रष्टव्यम्। शङ्कते—अथेति। निराकरोति—सोऽपीति। न हि सांख्यानां बौद्धानां वा राद्धान्तेऽस्ति संबन्धः समवायो नाम, नापि तदाश्रयो द्रव्यम्, अतः स्वदर्शनव्याघात इत्यर्थः। यद्युच्येत प्राधानिकत्वाद्रूपादीनां प्रधानमेकमाश्रयः, तथा च यत्र रूपं तत्र स्पर्श इत्यत आह—यत्र रूपमिति। कुतः ? न क्वचिदिति। न हि प्रधानमाधारः कार्याणाम्, अपि तु प्रधानात्मकत्वमेषामिष्यते, तथा च यत्र तत्रेत्यनुपपत्तिः। न च तादात्म्यमित्युक्तम्। न च भेदाभेदावेकत्र संभवतो विरोधादिति भावः। शङ्कते—परस्परेति। यथा ह्यासन्दिकाङ्गानि भिन्नान्यनौत्तराधर्य्यव्यवस्थितान्यपि (२) परस्पराश्रयतया न पतन्ति, एवं रूपस्पर्शावपि परस्पराश्रयावित्यर्थः। निराकरोति—परस्पराधारभावेऽप्यन्यत्रासन्दिकाङ्गादौ, नासौ रूपस्पर्शयोः, कुतः ? न रूपं स्पर्शे न च स्पर्शो रूप इति। परस्परसंयोगप्रतिबध्यगुरुत्वान्यासन्दिकाङ्गानि न पतन्त्यवस्थितानि परस्पराधारत्वेनापदिश्यन्ते। रूपस्पर्शादीनां तु स्थितिर्न परस्परहेतुका, अपि तु भोगापवर्गलक्षणपुरुषार्थहेतुकेति भावः। एतेन साङ्ख्यानां सप्तविधः सम्बन्धः प्रत्युक्तः। शेषं सुबोधम् ॥ ५ ॥

विभागसूत्रेऽनुमानानन्तरमुपमानस्योद्देशाद्यथोद्देशं च लक्षणादनुमानलक्षणानन्तरमुपमानलक्षणमाह—अथोपमानमिति भाष्यम्। सूत्रं पठति—

प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम् ॥ अत्रापि यत इत्यध्याहार्यम्। सिद्धिः साधनम्। तदेतद्भाष्यकारेण व्याख्यातम् "प्रज्ञातेन" प्रसिद्धेन। गवा साधर्म्यात् सामान्या-

(१) "परस्पराधारभावेऽपि" इति तात्पर्यपाठः। (२) "आसन्दिका" आसनविशेषः, तस्याः "अङ्गानि" तुरवेवादीनि, "अनौत्तराधर्य्यव्यवस्थितान्यपि" उपर्यधोभावेन अनवस्थितान्यपीत्यर्थः।

### न्यायभाष्यम्

किं पुनरत्रोपमानेन क्रियते ? यदा खल्वयं गवा समानधर्मं प्रतिपद्यते तदा प्रत्यक्षत-स्तमर्थं प्रतिपद्यत इति, समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इत्याह। यथा

### न्यायवार्त्तिकम्

साधर्म्यं यस्य, सोऽयं प्रसिद्धसाधर्म्यो गवयः, तस्मात् साध्यसाधनमिति। समाख्यासम्बन्ध-प्रतिपत्तिरुपमानार्थः। किमुक्तं भवति ? आगमाहितसंस्कारस्मृत्यपेक्षं सारूप्यज्ञानमुपमानम्।

### न्यायवार्त्तिकतात्पर्य्यटीका

द्गवयस्य। साधर्म्यं च सामान्यमभिदधता न सामान्यातिरिक्तं सादृश्यं नामार्थान्तरमस्तीत्युक्तं भवतीति। साधर्म्यं चाप्रसिद्धं न साध्यसाधनायालमिति साधर्म्यप्रसिद्धिरपि द्रष्टव्या। सा च यथा गौस्तथा गवय इत्याप्तवाक्यात्। तदिदमुक्तम्—यथा गौरिति। साध्यसाधनपदव्याख्यानं—प्रज्ञापनीयस्य गवयशब्दवाच्यतया प्रत्यक्षदृश्यमानगोसादृश्यस्य गवयत्वसामान्यविशेषवतः पिण्डस्य प्रज्ञापनमुपमानम्। पिण्डस्य हि गवयशब्दवाच्यतां पुरुषोऽतिदेशवाक्यस्मरण-सहकारिणः प्रत्यक्षाद्गवयगताद्गोसादृश्यात् प्रजानन् तेन प्रज्ञाप्यत इति प्रमाणव्यापारः प्रज्ञापनमुक्त-मिति। अत्र वार्त्तिककारः प्रथमं तावत् सूत्रतात्पर्यमाह—सूत्रार्थः पूर्ववत्। समानासमान-जातीयव्यवच्छेद इत्यर्थः। साध्यसाधनमित्युच्यमाने प्रत्यक्षादिसाधने छुरादिसाधने घटे प्रसङ्गः। अत उक्तं प्रसिद्धसाधर्म्यादिति। यद्यपि प्रसिद्धसाधर्म्यमुपमानमित्युच्यमाने प्रमाणविशेषाभिधा-य्युपमानपदसामानाधिकरण्यात् कारकत्वलाभस्तथापि तदाभासनिराकरणाय साध्यसाधनपदो-पादानम्, तेनोपमानाभासमपाकृतं भवति। अवयवार्थं विभजते—प्रसिद्धेति। वार्तिककारेण बहुव्रीहिद्वयसंभवो दर्शितः, न तु तृतीयासमासो भाष्यकारीयो निरस्तः। भाष्यकारेण हि संज्ञितया गवयप्रतिपत्तिः फलं साध्यसाधनपदवाच्यमुक्ता, आक्षिप्तप्रयोज्यव्यापारत्वात्। प्रयोजकव्यापारस्य प्रज्ञापनस्य पश्चान्निष्कृष्याभिधानं कृतम्—समाख्यासम्बन्धप्रतिपत्तिरुपमानार्थ इति। एत-देव साध्यसाधनपदार्थतया वार्तिककारो व्याचष्टे—समाख्यासंबन्धप्रतिपत्तिरुपमानार्थः फलम्। साध्यपदेन समाख्यासंबन्ध उच्यते तस्य साधनं सिद्धिः प्रतिपत्तिरिति। ननु प्रतिपद्यतामयं गोसादृश्ययुक्तं गवयम्, समाख्यासंबन्धप्रतिपत्तिस्तु कुतस्त्या ? न हि यो यत्सदृशं यं प्रतिपद्यते

### वृत्तिः

उपमानं लक्षयति—( प्रसिद्धेति )। प्रसिद्धस्य—पूर्वप्रमितस्य गवादेः साधर्म्यात्—सादृश्यात्, तज्ज्ञानात्, साध्यस्य गवयादिपदवाच्यत्वस्य, साधनं सिद्धिः; उपमानम् उपमितिः। यत इत्यध्याहारेण च करणलक्षणम्। अथ वा साध्यसाधन-

## न्यायभाष्यम्

गौरेवं गवय इत्युपमाने प्रयुक्ते गवा समानधर्म(१)मर्थमिन्द्रियार्थसन्निकर्षादुपलभमानो-(२)ऽस्य गवयशब्दः संज्ञेति संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति। यथा मुद्ग स्तथा मुद्ग-

## न्यायवार्त्तिकम्

यदा ह्यनेन श्रुतं भवति यथा गौरेवं गवय इति, प्रसिद्धे गोगवयसाधर्म्ये पुनर्गवा साधर्म्यं पश्यतोऽस्य भवत्ययं गवय इति समाख्यासम्बन्धप्रतिपत्तिः।

## न्यायवार्त्तिकतात्पर्य्यटीका

स तस्य समाख्यामप्यवगच्छतीत्याशयवान् पृच्छति—किमुक्तं भवति। उत्तरम्—आगमेति। आगमानुभवाहितात् संस्कारात् स्मृतिः। एतदुक्तं भवति, न केवलं सारूप्यज्ञानं समाख्या-संबन्धप्रतिपत्तिहेतुः, अपि त्वागमार्थस्मृत्यपेक्षमिति। नन्वसत्यागमानुभवे कुतः स्मृतिरित्यत आह—यदा ह्यनेनेति। प्रसिद्धसाधर्म्यादित्यत्र प्रसिद्धिरुभयी श्रुतिमयी प्रत्यक्षमयी च। श्रुति-मयी यथा गौरेवं गवय इति, प्रत्यक्षमयी च यथा गोसादृश्यविशिष्टोऽयमीदृशः पिण्ड इति। तत्र प्रत्यक्षमयी प्रसिद्धिरागमाहितस्मृत्यपेक्षा समाख्यासंबन्धप्रतिपत्तिहेतुः। यद्यपि यथा गौरेवं गवय इत्येतस्मादपि गोसदृशस्य गवयशब्दः समाख्येति शक्यमवगन्तुम्, न खलु प्रत्यक्ष एव संज्ञाकर्म, समानजातीयव्यवच्छिन्ने हि तद्भवति, तच्च यदि मानान्तरेणापि तथाऽवगम्यते संज्ञाकर्म निवारयेत्, गोसादृश्येन चोपलक्षितः पिण्डो य इति सर्वनाम्ना परामृष्टः शक्यो घटादिभ्योऽसमानजातीयेभ्यो महिषादिभ्यश्च समानजातीयेभ्यो व्यवच्छिन्नोऽवगन्तुं गवयः, तथापि यावदयमसौ गवय इति साक्षात् प्रतीते संबन्धिनि संज्ञां न निवेशयति तावदयं परिप्लुतमतिः प्रमाता कच्चित् खलु द्रक्ष्यामि तादृशं पिण्डं यत्र गवयसंज्ञां प्रतिपत्स्य इति प्रमोत्सुक एवोदीक्षते। न चासौ वाक्यमात्रसहायोऽप्रत्यक्षीकृतगोसदृशगवयपिण्डमसौ (३) गवयाख्य इति प्रतिपत्तुमर्हति, न च वाक्यं विना प्रत्यक्ष्यमात्रात्, तस्मादागमप्रत्यक्षा-भ्यामन्यदेवेदमागमस्मृतिसहितं सादृश्यज्ञानमुपमानाख्यं प्रमाणमास्थेयम्। ननु यदोदीच्येन क्रमेलकं निन्दतोक्तं धिक्करभमतिदीर्घवक्रग्रीवं लम्बोष्ठं कठोरतीक्ष्णकण्टकाशिनं कुत्सितावयव-सन्निवेशमपसदं पशूनामिति, तदुपश्रुत्य दाक्षिणात्य उत्तरापथं गतस्तादृशं वस्तूपलभ्य नूनमसौ

## वृत्तिः

मिति करणल्युटा करणलक्षणमेवेदम्। अत्र च वैधर्म्योपमितिमपि मन्यन्ते टीकाकृतः। (४)यथाऽतिदीर्घग्रीवत्वादिपश्वन्तरवैधर्म्यज्ञानादुष्ट्रे करभपदवाच्यताग्रहः। एवमन्योऽप्युप-

(१) "-धर्माणम्" इति फ०। (२) "उपलभमान" इति वि०। (३) "गोसदृशे पिण्डोयमसौ" इति ख-पु-पाठः। (४) "यथा च" इति नि-व०।

## न्यायभाष्यम्

पर्णी, यथा माषस्तथा माषपर्णीत्युपमाने प्रयुक्ते उपमानात् संज्ञासंज्ञिसम्बन्धं प्रतिपद्यमानस्तामोषधीं भैषज्यायाऽऽहरति ।

## न्यायवार्त्तिकतात्पर्य्यटीका

करभ इत्यवैति, तत्कतमदेतेषु प्रमाणम् ? न तावदुपमानम्, साधर्म्याभावात् । नापि पञ्चमं प्रमाणमुपगम्यते । यद्युच्येत निन्दापरं वाक्यं करभस्य तादृशत्वे न प्रमाणम्, न ह्यन्यपराच्छब्दादन्यस्यावगम इति । यत्र तर्हि तादृक्त्वे पर्यवस्यति वाक्यं तत्र का गतिः । अथ तत्रापि तादृक् करभ आगमावगतः प्रत्यक्षेण प्रत्यभिज्ञायते, करभशब्दवाच्यता च तस्य तत्पूर्वं तादृक्करभपरत्वेऽप्यागमस्य प्रयोगमात्रादवगता अनुमानात् । यो हि यत्र प्रयुज्यते शब्दोऽसति वृत्त्यन्तरे स तस्य वाचको यथा गोशब्दो गोत्वे, प्रयुक्तश्चायं तादृशि, तस्मात्तस्य वाचक इति । यदिदं प्रागेव प्रयोगादनुमितं वाचकत्वमस्य, प्रत्यक्षसमये केवलं स्मर्यत इति । समानमेतदपवादवाक्येऽपि, तत्रापि वाक्यादवगतसाधर्म्यवान् पिण्डः प्रत्यक्षेण प्रत्यभिज्ञायते, प्रयोगादनुमितं च गवयशब्दवाच्यत्वं स्मर्यते, इति न फलान्तरमवशिष्यते यत्रोपमानं प्रमाणान्तरमिति । अत्रोच्यते—न तावदाकाशादिशब्दवदेष गवयशब्दः साक्षात् पिण्डस्य वाचकः, किन्तु गवयत्वं निमित्तीकृत्य पिण्डे वर्तत इति परमार्थः । न च यथा गौरेवं गवय इति वाक्याद्गवयत्वमवगतं न ह्यनवगतसंबन्धं गवयपदमवधारयति, ततस्तदवगमात् संबन्धवेदने परस्पराश्रयप्रसङ्गः । न च गोसादृश्येनोपलक्ष्यते । न खल्वनुपलब्धचरेण गवयत्वेन गोसादृश्यं संबद्धं दृष्टम्, न चादृष्टसंबन्धमुपलक्षकम् । न हि पुरुषेणादृष्टसंबन्धो दण्डः पुरुषमुपलक्षयितुमर्हति । तस्मात् सम्बन्धिनो गवयत्वस्य सर्वथाऽनुपलब्धेः कुतो वाक्याद्वाऽनुमानाद्वा वाच्यवाचकसम्बन्धावगमः ? कुतस्तरां च सम्बन्धस्मृतिः ? गवयत्वसामान्यविशेषवति च पिण्डे प्रत्यक्षे युक्तः सम्बन्धावगमः, सम्बन्धिनो गवयत्वस्य प्रत्यक्षत्वात् । तथापि किं गवयत्वजातिमान् पिण्डो वाच्यः न चादृष्टगोसादृश्यवानिति कुतो विनिगमनेति चेद् वाक्यार्थस्मरणसहकारि गवयत्वजातिमतः पिण्डस्य गोसादृश्यदर्शनमेव तर्कसहायं गवयत्वाभिधाने प्रमाणम्, तर्कश्च गोसादृश्यविशिष्टपिण्डाभिधाने कल्पनागौरवप्रसङ्गः । तथा हि सादृश्यविशिष्टपिण्डाभिधाने, नाप्रतीतं सादृश्यं पिण्डं विशिनष्टीति तत्प्रतिपत्तव्यम् । न च शब्दादन्यतस्तदवगम इति शब्दस्य तत्र वाचकत्वं कल्पनीयम् । न

## वृत्तिः

मानस्य विषय इति भाष्यम् । तथा च (२) मुद्गपर्णीसदृशी ओषधी विषं हन्तीत्यतिदेशवाक्यार्थे ज्ञाते, मुद्गपर्णीसादृश्यज्ञाने जाते इयमोषधी विषहरणीत्युपमित्या विषयीक्रियत इत्यादि ॥ ६ ॥

---

(२) व-नि-पु० "च" नास्ति ।

## न्यायभाष्यम्

**एवमन्योऽप्युपमानस्य लोके विषयो (१) बुभुत्सितव्य इति ॥ ६ ॥**

## न्यायवार्त्तिकम्

प्रत्यक्षागमाभ्यां नोपमानं भिद्यते। कथमिति ? यदा तावुभौ गोगवयौ प्रत्यक्षेण पश्यति तदा ह्ययमनेन सरूप इति प्रत्यक्षतः प्रतिपद्यते। यदाऽपि शृणोति यथा गौरेवं गवय इति, तदाऽस्य शृण्वत एव बुद्धिरुपजायते, केचिद् गोधर्मा गवयेऽन्वयिन उपलभ्यन्ते, केचिद् व्यतिरेकिण इति। अन्यथा हि यथा तथेत्येव न स्यात्। भूयस्तु सारूप्यं गवा गवयस्य इत्येवं प्रतिपद्यते। तस्मान्नोपमानं प्रत्यक्षागमाभ्यां भिद्यत इति। गवा गवयसादृश्यं प्रतिपद्यते गवयसत्तां चेति,

## न्यायवार्त्तिकतात्पर्य्यटीका

चाविशिष्टं सादृश्यं पिण्डविशेष एव गवयपदमवस्थापयितुमर्हति, यस्य कस्यचिद् येन केनचित् सादृश्यादिति तदपि गवा विशेषणीयम्। न चान्यतो गोत्वस्यापि प्रतीतिरिति तदपि गवयपदे-नाभिधातव्यमिति कल्पनागौरवम्, गवयत्वजातिमत्पिण्डाभिधाने तु लाघवमिति तदनुजानाति। साधर्म्यग्रहणं च धर्ममात्रोपलक्षणमिति करभसंज्ञाप्रतिपत्तिरप्युपमानफलमिति नाव्यासिः। नापि पञ्चमप्रमाणाभ्युपगमः। अतएव बहून्युदाहरणान्युक्त्वाऽप्याह स्म भगवान् भाष्यकारः—एवमन्योऽप्युपमानस्य लोके विषयो बुभुत्सितव्य इति। तस्मात्सर्वं चतुरस्रम्।

तदीदृशमुपमानफलमविद्वान् सादृश्यज्ञानं सादृश्यविशिष्टज्ञानं वोपमानफलमिति भ्रान्तो भदन्तो दिङ्नाग आक्षिपति—प्रत्यक्षेति। पृच्छति—कथमिति। उत्तरम्—यदा ताविति। उपलक्षणं चैतत् उभौ प्रत्यक्षेण पश्यतीति। यदापि गवयमेकं प्रत्यक्षेण पश्यति, स्मरति च गाम्, तदापि गोसादृश्यं गवयस्य प्रत्यक्षमेव, गोस्थ(२)मप्रत्यक्षम् अप्रत्यक्षत्वाद् गोरिति चेत्, हन्त भोः किम-भिमतं सादृश्यमायुष्मतां यदप्रत्यक्षायां गवि न प्रत्यक्षम्? सामान्यबाहुल्यं जात्यन्तरवर्ति जात्यन्तरस्य, यथाऽऽहुः (३)—

> सामान्यान्येव भूयांसि गुणावयवकर्मणाम्।
> भिन्नप्रधानसामान्यव्यक्तं सादृश्यमुच्यते ॥ इति

चेत्, तत्किमिदानीं कर्णत्वादि(४)-सामान्यं गोगवयगतकर्णादिभेदेन भिन्नमित्यपि वक्तुमध्य-वसितोऽसि। तस्माद्यथा कालाक्ष्यां गवि गोत्वमीक्षितवतः स्वस्तिमत्यां प्रत्यभिज्ञायमानं तदित्यवगतं भवति तथेहापीति न फलातिरेकः। तस्मान्न सादृश्यप्रतीतिफलमुपमानं प्रत्यक्षाद्वाक्याद्वा व्यतिरिच्यत इति सूक्तम्। भदन्तभ्रान्तिमुद्घाटयति—गवेति। गवयसत्तां सादृश्यविशिष्टमित्यर्थः (५)। अर्थतत्त्वमुक्तं स्मारयति—गवयेति। उपसंहरति—

(१) 'लोकविषयो' इति वि०। (२) गवि स्था स्थितिर्यस्य इति व्युत्पत्त्या गोस्थमिति, तथा च न पत्वविधिः, गोगतं गवयसादृश्यमिति तत्पर्य्यवसितार्थः। (३) 'यथाहुः' इति क-पु नास्ति। (४) 'कमलादि' इति क-पु०। (५) सादृश्यविशिष्टं गवयमिति बोध्यम्।

## न्यायभाष्यम्

अथ शब्दः—

### (सू)—आप्तोपदेशः शब्दः ॥ ७ ॥

आप्तः खलु साक्षात्कृतधर्मा यथादृष्टस्याऽर्थस्य चिख्यापयिषया प्रयुक्त उपदेष्टा।

## न्यायवार्त्तिकम्

अहो प्रमाणाभिज्ञता भदन्तस्य। गवा गवयसारूप्यप्रतिपत्तेस्तु संज्ञासंज्ञिसम्बन्धं प्रतिपद्यत इति सूत्रार्थः। तस्मादपरिज्ञाय सूत्रार्थं यत्किञ्चिदुच्यते ॥ ६ ॥

अथ शब्दः। आप्तोपदेश इति ॥ न शब्दमात्रमिति सूत्रार्थः। आप्तः खलु साक्षात्कृतधर्मा।

## न्यायवार्त्तिकतात्पर्य्यटीका

तस्मादिति। प्रयोगस्तु—प्रत्यक्षादिभ्यः प्रमाणान्तरमुपमानम्, तज्जन्यप्रमाविलक्षणप्रमाजनकत्वात्। यदि न तेभ्यो विलक्षणमभविष्यद् न तद्विलक्षणां प्रमामकरिष्यत्, यथा तान्येव, न चैतत्तथा, तस्मात्तथेति। ६ ॥

अथ शब्द इति भाष्यम्। उपमानानन्तरं शब्दोद्देशादुपमानलक्षणानन्तरं शब्दस्य लक्षणमित्यर्थः। लक्षणसूत्रं पठति—आप्तोपदेशः शब्दः। अत्र शब्द इति लक्ष्यपदम्। आप्तोपदेश इति लक्षणम्। उपदिश्यतेऽनेनेत्युपदेशो वाक्यज्ञानं तदर्थज्ञानं वाभिधीयते, तत्र वाक्यज्ञानप्रामाण्यपक्षे तदर्थज्ञानं फलम्, पदार्थस्मृत्यादयस्त्वान्तरालिका इतिकर्तव्यता। तदर्थज्ञानप्रामाण्यपक्षे तु हानादिबुद्धिः फलम्। यद्यपि विधिरुपदेशः प्रवर्तनमित्यनर्थान्तरम्, यद्यपि चायं नियोज्यप्रयोजने प्रवृत्तिनिवृत्ती विदधदाज्ञाध्येषणाभ्यामतिरिच्यते, ते हि नियोक्तृप्रयोजने प्रवृत्तिनिवृत्ती विधत्तः, तथापि भूतार्थपरोपनिषदादिशब्दव्यापकत्वात् परप्रयोजनवद्वचनमात्रविवक्षयोपदेशपदं व्याख्येयम्। यद्यपि "सदेव सौम्येदमग्र आसीद्" इत्यादि वचनं क्वचिन्न प्रवर्तयति कुतश्चिद्वा न निवर्तयति पुरुषम्, तथापि पुरुषश्रेयोऽभिधत्त इत्युपदेश इत्युच्यते। तथाप्यतिव्याप्तिः, चैत्यवन्दनादिवाक्यानामप्येवं लक्षणत्वादत उक्तम्—आप्तेति। आप्तानामृष्यार्य्यम्लेच्छानामुपदेशः शब्दो न त्वनाप्तानां मायामोहनिर्मितानां बुद्धर्षभादीनां प्रमाणविरुद्धक्षणिकसर्वधर्मनैरात्म्यवादिनामिति। तदेवाह वार्तिककारः—न शब्दमात्रमिति सूत्रार्थः।

सूत्रस्थाप्तलक्षणपरं भाष्यम्—आप्तः खलु साक्षात्कृतधर्मा। दृढेन प्रमाणेनावधारिताः साक्षात्कृता धर्माः पदार्था हिताहितप्राप्तिपरिहारार्था येन स तथोक्तः। तथापि तत्त्वं विद्वानकारुणिकतया विपरीतोपदेशोऽनिवारितः ? चिख्यापयिषेत्यकृपाभ्यासकारिते

### न्यायभाष्यम्

साक्षात्करणमर्थस्याऽऽप्तिः, तया (१) प्रवर्तत (२) इत्याप्तः। ऋष्यार्यम्लेच्छानां

### न्यायवार्त्तिकम्

साक्षात् करणमर्थस्याप्तिः तया सह वर्तत (३) इत्याप्तः। स्वर्गापूर्वदेवतादिषूपदेशो न प्राप्नोति अतीन्द्रियत्वात्, यदि साक्षात्करणमर्थस्याप्तिः, स्वर्गापूर्वदेवतादीन् न कश्चित् पश्यतीति तत्प्रतिपादको व्यवहारो न स्यात्, तस्मादाप्तश्चासावुपदेशश्चेति युक्तं, नाप्तस्योपदेश इति। नैष दोषः। न ब्रूमोऽस्मदादीनां प्रत्यक्षाः स्वर्गादय इति। अपि तु यस्य प्रत्यक्षाः तस्योपदेश इति।

कः पुनरत्र न्यायः स्वर्गादयः कस्यचित् प्रत्यक्षा इति? ब्रूमः, सामान्यविशेषवत्त्वात्, आश्रितत्वात् कस्यचित् प्रत्यक्षा इति। यदाश्रितं तत्कस्यचित् प्रत्यक्षमिति। परार्थत्वात्—यत् परार्थं तदपि कस्यचित्प्रत्यक्षमिति। वस्तुत्वादागमविषयत्वात्—यद्वस्तु यच्च कथ्यते

### न्यायवार्त्तिकतात्पर्य्यटीका

निराकृते इति। प्रयुक्त उत्पादितप्रयत्न इत्यलसत्वम्। तथापि स्थानकरणपाटवाभावेन वर्णनिष्पादनासामर्थ्येनाप्तः प्रसज्येतेत्यत आह—उपदेष्टा। स्थानकरणपाटववानित्यर्थः।

आप्त इति प्रकृतिप्रत्ययसमुदायात् प्रकृतिं निष्कृष्य तदर्थमाह—साक्षात्करणमिति। अनेन चोक्तस्वरूपसंपदुपलक्षिता। प्रत्ययार्थमाह—तयेति। आप्तलक्षणस्य व्यापकत्वमाह—ऋषीति। दर्शनादृषिः साक्षात्कृतत्रैकाल्यवृत्तिप्रमेयमात्रः, आराद् यातः पातकेभ्य इत्यार्य्यो मध्यलोकः, म्लेच्छाः प्रसिद्धाः। म्लेच्छा अपि हि प्रतिपथमवस्थिताः पान्थानामपहृतसर्वस्वा मार्गाख्याने हेतुदर्शनशून्या अवन्त्याप्ता इति। तदनेन—"आप्तं दोषक्षयं विदुः" इति परेषामाप्तलक्षणमव्यापकमुक्तं भवति। तदेतद्भाष्यमाक्षेप्तुमनुभाषते—आप्तः खल्विति। आक्षिपति—स्वर्गेति। आक्षेप्ता भाष्यमाक्षिप्य सूत्रं समाधत्ते—आप्तः, आप्तो युक्त इति यावत्। अपौरुषेयो वैदिक उपदेशः स्वर्गापूर्वदेवताविषयः स्वतः प्रामाण्ये सिद्धे निर्दोषतया युक्त उपपन्नः, लौकिकर्ष्यार्यम्लेच्छानां प्रमाणान्तरमूलो युक्तः, मानान्तराभावे तु नाप्तोऽयुक्त इत्यर्थः। समाधत्ते—न ब्रूम इति। पौरुषेयत्वं वेदानां द्वितीयाध्याय उपपादयिष्यते(४)। तस्मात् पुरुषस्यैवाप्तोपदेश इति साधु व्याख्यानं भाष्यकारीयमिति भावः।

पृच्छति—कः पुनरिति। अस्ति स्वर्गादीनामप्रत्यक्षत्वे न्यायः—योगिप्रत्यक्षं न स्वर्गादिविषयः प्रत्यक्षत्वादस्मदादिप्रत्यक्षवदिति भावः। उत्तरम्—ब्रूमो न्यायम्। तमाह—सामान्यविशेष-

### वृत्तिः

शब्दं लक्षयति—( आप्तोपदेश इति )। शब्द इति लक्ष्यकथनम्, तदर्थः प्रमाणशब्द इति। आप्तोपदेश इति लक्षणम्। आप्तः—प्रकृतवाक्यार्थ-

(१) "तया" इति वि०। (२) "वर्त्तत" इति भा०। (३) "तया प्रवर्त्तत" इति भाष्ये। (४) वार्त्तिककृता "मन्त्रायुर्वेद"तत्रादिद्वितीयाध्यायप्रथमाह्निकचरमसूत्रस्य व्याख्याने उपपादयिष्यते।

## न्यायवार्त्तिकम्

तत् कस्यचित्प्रत्यक्षं भवति, यथा घटादि। अनित्यत्वात् कस्यचित्प्रत्यक्षा इति। असिद्धमपूर्वस्यानित्यत्वम्? न प्रायणानुपपत्तेः। यदि धर्माधर्मौ नित्यौ भवतः कस्य प्रक्षयात्प्रायणमिति। यदि पुनरनित्यौ, विपच्यमानयोरुपभोगात् प्रक्षये सति विपच्यमानकर्माशयान्तराभावात् पूर्वशरीरात् प्रच्यवनं मनसः, उत्तरशरीरे सम्प्राप्तिश्चेति जन्ममरणे स्तः, तस्मान्न नित्याविति। नित्ये वाऽपूर्वे परिकल्पिते तस्य साधारणता असाधारणता वा वक्तव्या। यदि साधारणता, सर्वप्राणिसाधारणोऽभ्युदयः स्यात्, न वाऽन्यन्नियामकमस्ति, क्रियालोपश्चेति। नित्यत्वे व्यञ्जकभेदान्नोभयदोषः, नित्यत्वे साधारणत्वे वा अदृष्टस्य न साधारणोऽभ्युदयो नापि क्रियाविलोप इति। कस्मात्? व्यञ्जकभेदात्, नित्यमप्यपूर्वं योऽभिव्यनक्ति तस्य फलम्, अभिव्यक्त्यर्था क्रियेति, अतो न क्रियालोप इति। येन यदभिव्यज्यते तस्यैव तत् फलदातृ भवतीति दृष्टम्। न दृष्टम्। न हि देवदत्तप्रकाशितं घटं यज्ञदत्तो न पश्यति। नित्यस्य वाऽपूर्वस्य काऽभिव्यक्तिः? किमुपलब्धिः, अथ फलप्रदानसामर्थ्यम्, आहोस्विदावरणापगमः? यद्युपलब्धिः सा नास्ति। न हि कदाचिदप्ययमपूर्वं पश्यति, अतीन्द्रियत्वात्। अथ फलप्रदानसामर्थ्यमभिव्यक्तिः, फलप्रदानसामर्थ्यं किमपूर्वम् अथापूर्वधर्म इति? यद्यपूर्वम्, न हि किञ्चित्कृतम्। अथापूर्वधर्मः, तद्व्यतिरेकेणाप्यन्यदपूर्वमित्यत्र किं प्रमाणम्? वयं तु पश्यामः—यतः फलं तदपूर्वमिति। अथावरणाद्यपगमोऽभिव्यक्तिः? किमस्यावरणमिति वक्तव्यम्, न ह्यतीन्द्रियाणामर्थानामावरणसम्भवासम्भवौ

## न्यायवार्त्तिकतात्पर्य्यटीका

वत्वात्(१) कस्यचित् प्रत्यक्षा इति। अत्र यावति पक्षे यो हेतुः सिद्धस्तस्य तन्मात्रं पक्षीकार्यम्। योगजे च प्रत्यक्षे सिद्धे तत्साधकादेव प्रमाणात् तस्य स्वर्गादिविषयत्वमपि सिद्धमिति धर्मिग्राहकप्रमाणविरुद्धं मीमांसकानामनुमानं नोदेतुमप्युत्सहते प्रागेव तद्बाधितुम्, असिद्धे तु योगजे प्रत्यक्ष आश्रयासिद्धो हेत्वाभासः, अस्माकं तु सम्यञ्चो बहवश्च न्याया इति भावः। अनित्यत्वं हेतुमाक्षिपति—असिद्धमिति। परिहरति—नेति। नित्ये वाऽपूर्व इति। अथ त्रयः कल्पाः किमेकमपूर्वं सर्वपुरुषसाधारणम्, आहो असाधारणम्? यदा त्वसाधारणं तदापि किं प्रतिपुरुषमेकैकमसाधारणम् आहो प्रतिपुरुषमनेकमिति? तत्र प्रथमं कल्पं दूषयति—यदि साधारणेति। न हि कदाचिदप्ययमपूर्वं पश्यति लौकिकः पुरुषः, योगिनस्त्वनभिव्यक्तमपि पश्यन्तीति भावः।

## वृत्तिः

यथार्थज्ञानवान्, तस्योपदेश इत्यर्थः। प्रकृतवाक्यार्थयथार्थज्ञानप्रयुक्तः शब्द इति फलितार्थः। अथ वा आप्तः—यथार्थः उपदेशः—शाब्दबोधो यस्मात् (२)।

---

(१) वार्त्तिके "आश्रितत्वात्" इत्यधिकपाठः। (२) "यस्मा"दित्यनन्तरं "तत्" इत्यधिकपाठः नि०।

### न्यायभाष्यम्

समानं लक्षणम्। तथा च सर्वेषां व्यवहाराः प्रवर्त्तन्त इति। एवमेभिः प्रमाणैर्देव-मनुष्यतिरश्चां व्यवहाराः प्रकल्पन्ते, (१) नाऽतोऽन्यथेति ॥ ७ ॥

### न्यायवार्त्तिकम्

चिन्त्यते। एतेन प्रतिपुरुषं नित्यत्वं प्रतिषिद्धं वेदितव्यम्। कथमिति? तत्रापि क्रियाविलोप-दोषः व्यञ्जकस्य चासामर्थ्यमिति। उत्कर्षार्था च प्रवृत्तिरयुक्ता नित्यस्याभेद्यत्वादिति। व्यञ्जक-भेदानुविधानाद्भेद इति चेत्, न। एकस्मिन्नदृष्टत्वात्। अथापीदं स्यात् एकमप्यपूर्वं व्यञ्जकभेदानु-विधानाद्भिन्नमिव भवति तद्भेदादुत्कर्षापकर्षौ भवत इति। एतदपि नास्ति। एकस्मिन्नदृष्ट-त्वात्। न ह्येकं किञ्चिद्व्यञ्जकभेदानुविधायि दृष्टं यत एवं स्यादिति। ननु च खड्गादिभेदा-न्मुखभेदः तदनुविधानाद् दृष्टः, न दृष्ट इति ब्रूमः। किं पुनस्तद् यदि न दृष्टम्? मिथ्या प्रत्ययः स इति ब्रूमः। भिन्नमिव तत्, न पुनर्भिन्नमेव, एकस्यानेकरूपस्यासम्भवात्। न ह्येकमनेकरूपं सम्भवति। तस्मादपूर्वस्यैकत्वं वा ह्यातव्यं उत्कर्षापकर्षहेतुत्वं वेति। प्रतिपुरुषमनेकं नित्यं वेति—अथाऽयं पक्ष आश्रीयते प्रतिपुरुषमनेकत्वं नित्यत्वं वाऽपूर्वस्य, अनिवृत्तो व्याघातः, प्रायणानुपपत्तिप्रसङ्गदोषः क्रियाविलोपश्च न व्यावर्तते। अभिव्यक्तिस्तु फलं ददातीति किं यदा-ऽभिव्यक्तिस्तदा फलं ददाति, उत क्रियानिवृत्त्युत्तरकालमिति? यदाऽभिव्यक्तिस्तदा फलं ददाति तन्न दृष्टम्, न ह्यश्वमेधक्रियानन्तरमेव स्वर्गप्राप्तिर्भवति। अथोत्तरकालम्? असती क्रिया व्यञ्जिका,

### न्यायवार्त्तिकतात्पर्य्यटीका

द्वितीयं कल्पं दूषयति—एतेन प्रतिपुरुषमिति। उत्कर्ष आधिक्यमवयवोपचय इति यावत्। शङ्कते—व्यञ्जकेति। एकमपि व्यञ्जकभेदादुत्कर्षवन्निष्कर्षवद्दृष्टम्, यथा महति दर्पणे महन्मुखं, तदेव कनी-निकायामण्विति। न दृष्ट इति ब्रूम इति। शङ्किता पृच्छति—किं पुनस्तत् यदि न दृष्टम्, तद्वयदि भेदेन तद् दृष्टं दृष्टिर्नास्ति, किम्पुनस्तत् यद्भेदेन भेददर्शनमिव भासते। समाधाता स्वाभि-प्रायमाह—मिथ्या प्रत्यय इति। न भेददर्शनमपजानीमहे किन्तु पारमार्थिकं भेदम्, न च कल्पितोऽपूर्वभेदः पारमार्थिकाय कार्यायालमिति भावः। उत्कर्षापकर्षकर्तृत्वं कर्मण इति शेषः। तृतीयं कल्पमातिष्ठते—प्रतिपुरुषमनेकमिति। दूषयति—अनिवृत्त इति। अथोत्तरकालमिति।

### वृत्तिः

शाब्दत्वं च जातिविशेषः। तथा च यथार्थशाब्दज्ञानकरणत्वमर्थः। अत्र च विशेष्या-वृत्त्यप्रकारकत्व-तद्वति तत्प्रकारकत्वादिप्रमालक्षणानामेकं लक्षणे परं च लक्ष्यतावच्छेदके निवेशनीयमतो नाऽभेदः ॥ ७ ॥

(१) 'प्रकल्प्यन्ते' इति ज०।

## न्यायवार्त्तिकम्

तया चानुगृह्यमाणं ददातीति चित्रम्, न हि किञ्चिदपूर्वं नाभिव्यक्तमिति सर्वं सर्वदा फलदातृ स्यादिति। अथापि स्वपक्षरिरक्षयिषया क्रियानित्यत्वमपि प्रतिपद्येथा एवमप्यनिवृत्तो व्याघातः क्रियाविलोपादिक इति। तदेवं यथा यथा अपूर्वस्य नित्यत्वं प्रतिपद्यते तथोपपत्तिं न सहत इति।

आप्तोपदेश इति किमाप्तानामविसंवादित्वं वा प्रतिपाद्यते आहोस्विदर्थस्य तथाभाव इति ? यद्याप्तानामविसंवादित्वं प्रतिपाद्यते, तदनुमानात्। अथार्थस्य तथाभावः, सोऽपि प्रत्यक्षेण।

## न्यायवार्त्तिकतात्पर्य्यटीका

अश्वमेधक्रियया तावदपूर्वं स्वकाल एवाभिव्यक्तं फलदानाभिमुखीकृतम्, अभिव्यञ्जकसमानकालत्वादभिव्यक्तेः, प्रदीपादिषु दर्शनात्। तथापि फलं तावन्न दत्ते यावत् क्रिया न निवर्त्तते, निवृत्तायां तु फलं दत्त इत्यर्थः। दूषयति—असतीति। तत् खलु पूर्वं सदपि फलं नाकार्षीचरमभाविन्याः क्रियायाः, तज्जन्याया वाभिव्यक्तेः, अनुत्पादात्। उत्पन्नायां तु क्रियायामभिव्यक्तौ वा कस्मान्न करोति। न हि क्रियाविनाशस्य क्वचिदुपयोगः। तस्मादकामेनापि त्वया सत्या एव क्रियाया व्यञ्जकत्वमनुग्राहकत्वं चाङ्गीकर्त्तव्यम्, तच्चैतदुभयमपि चित्रमित्यर्थः। अपि च साऽसती चेत्क्रियाऽभिव्यनक्ति, तथा सति असत्तायाः सर्वत्र सुलभत्वान्न किञ्चिदपूर्वं नाभिव्यक्तमिति क्रियाविलोपः प्रयत्नविलोप इत्यर्थः।

अत्र शब्दं प्रमाणान्तरमसहमानो दिङ्नागस्तल्लक्षणं विकल्प्याक्षिपति—आप्तोपदेश इति। अन्यस्मादन्यस्य निश्चयो न तावदसम्बन्धादतिप्रसङ्गात्। न च शब्दोऽर्थात्मनाप्यर्थकार्यः, विनाप्यर्थं पुरुषविवक्षामात्रादेव तदुत्पादात्। तस्मान्न साक्षाच्छब्दादर्थनिश्चयः, विवक्षाकार्यतया तु विवक्षां गमयेत्। सा चार्थाभिप्रायपूर्वा, अभिप्रायश्च कश्चिन्मनोमात्रयोनिरपरस्तु प्रमाणमूलः, तत्र यः प्रमाणनिश्चितमर्थं विवक्षति यथाविवक्षमुच्चारयति स आप्तः, तस्य वचनात् कार्यात् कारणं विवक्षा अनुमीयते, तस्याश्च कारणमर्थज्ञानम्, ततश्चार्थज्ञानस्यार्थकार्यत्वादिति प्रमाणगतिः। तत्राप्तोपदेश इत्यत्रोपदेशक्रियया उपदेष्टार उपस्थापिताः, ते च प्रायेण विसंवादका दृष्टा इत्याप्तग्रहणेन तेषामविसंवादित्वम्, ततश्चोपदेशादर्थनिश्चयो भवत्वित्येतदर्थं यद्युच्यते इत्याह—यद्याप्तानामिति, उपदेष्टॄणामित्यर्थः। इमं कल्पं दूषयति—तदनुमानात्। अविसंवादित्वमुपदेष्टुरानुमानिकम्, तादृशस्य वचनमर्थनिश्चये अनुमानमेव। तथा हि यद् यन्निर्दोषसत्त्वीयं वचनं तत्सर्वमर्थवद्, यथा बुद्धस्य क्षणिकनैरात्म्यादिविषय उपदेशः, तथा चायं विवादाध्यासित उपदेश इति। यथोक्तं भदन्तेन आप्तवाक्याविसंवादसामान्यादनुमानतेति। द्वितीयं कल्पमातिष्ठते—अथार्थस्य तथाभावः। अत्र हि उपदिश्यत इत्युपदेशोऽर्थ उच्यत इति आप्त्युपदेशो(१) यस्मात्स तथोक्तः। एतदुक्तं भवति यस्माच्छब्दादवगम्यार्थं प्रवर्तमानः प्राप्नोति

(१) "आप्त उपदेशो" इतीत्थं पाठः समुचित इति मन्ये।

## न्यायवार्त्तिकम्

यदा ह्ययमर्थं प्रत्यक्षेणोपलभते तदा तथाभावमर्थस्य प्रतिपद्यत इति। तन्न, सूत्रार्थापरिज्ञानात्। नायं सूत्रार्थः आप्तोपदेशः शब्द इति, अपि त्विन्द्रियसम्बद्धासम्बद्धेष्वर्थेषु या शब्दोल्लेखेन प्रतिपत्तिः साऽऽगमार्थः। तस्मादसम्बद्धोऽयं विकल्पः॥ ७॥

## न्यायवार्त्तिकतात्पर्यटीका

तमेवार्थम्, स आप्तोपदेशः शब्दः प्रमाणम्। एवं शब्देन योऽर्थो दर्शितस्तस्याप्त्या तथाता दर्शिता, तदिदमुक्तमर्थस्य तथाभाव इति। दूषयति—सोऽपीति। तदेव स्फुटयति—यदा हीति। आप्त्या हि तथात्वं विनिश्चिन्वन् अर्थस्य नाप्रतिपन्नतया निश्चेतुमर्हति, प्रतिपत्तिश्च प्रायेण प्रत्यक्षेणेति प्रत्यक्षत इत्युक्तम्। तमिममाक्षेपमपाकरोति—तन्नेति। नाप्तत्वसहायः शब्दोऽर्थं बोधयतीति सूत्रार्थः। नापि शब्दार्थप्राप्त्या शब्दार्थतथात्वमिति। कस्तर्हीत्यत आह—अपि त्विति। इन्द्रियसम्बद्धासम्बद्धेष्विति दृष्टादृष्टेष्वित्यर्थः। यथोक्तम्—स द्विविधो दृष्टादृष्टभेदादिति(१)। एतदुक्तं भवति नाप्तत्वहेतुकमविसंवादित्वमनेन सूत्रेणागमार्थतया प्रतिपाद्यते, नाप्यर्थतथात्वमागमार्थतया प्रतिपाद्यते, नाप्यागमः प्रत्यक्षानुमानाभ्यां न भिद्यते, किन्तु उपदेशः शब्द इत्युक्तम्। उपदेश इति च कारकपदम्, उपदिश्यते ज्ञाप्यते प्रयोजनवानर्थोऽनेनेति। तथापि वातिकाद्युपदेशोऽपि शब्दः स्यादित्यत उक्तम्—आप्तेति। नोपदेशपदादेवागमस्य वाक्यार्थप्रतिपत्तिफलमुक्तम्, तदिदमुक्तम्—या शब्दोल्लेखेन पदार्थस्मरणावान्तरव्यापाराच्छब्दादेवार्थं प्रत्येमीत्यनेनोल्लेखेन प्रतिपत्तिरागमार्थः (२)फलमिति। आप्तत्वं चागमस्यार्थं प्रत्याययित्वा स्वस्याव्यभिचारित्वम्, न च यतः प्रामाण्यमवगम्यते ततः प्रमेयमपि, तथा च सति प्रामाण्यज्ञानहेतोरनुमानादेव प्रत्यक्षादिप्रमेयावगतिरिति प्रत्यक्षादीनामप्रामाण्यप्रसङ्गः। तस्मिंश्चासति कस्यानुमानमपि प्रामाण्यमवधारयेत्। न चाप्तवाक्यं कार्य्यं स्ववक्तृज्ञानानुमानद्वारेणार्थेऽप्यनुमानमेव त्वर्थस्य प्रत्यायकमिति साम्प्रतम्। यदि हि नार्थं प्रत्याययेज्ज्ञानमात्रमनुमापयेत्, तथा च नार्थविशेषसिद्धिः। न च ज्ञानस्यार्थादन्योऽस्ति कश्चिद्विशेषः तस्माद्वक्तृज्ञानविशेषणाय पूर्वं शब्दादेव केवलाद्वाक्यार्थज्ञानमेषितव्यम्। एवञ्च कृतं वक्तृज्ञानानुमानेनार्थप्रतिपत्त्यर्थेन केवलं प्रामाण्यज्ञानाय तदुपयोग इति। न चाविनाभाव एव सम्बन्धो येन शब्दार्थयोरसम्बन्धेन गम्यगमकत्वं न स्यात्। अस्ति साङ्केतिकः सम्बन्धोऽनयोरिति वक्ष्यते (३)। न चाविनाभावः प्रत्यायनाङ्गम्, चक्षुरादयो नीलादिभेदव्यभिचारिणोऽपि दृष्टास्तत्प्रतिपादका इत्युक्तम्। तस्मात् पदानि कृतसङ्केतानि स्वार्थं स्मारयित्वा आकाङ्क्षायोग्यतासत्तिसध्रीचीनानि अदृष्टपूर्वं वाक्यार्थं बोधयन्ति, न सङ्गतिग्रहणमपि प्रतीक्षन्त इति दूरेऽनुमानाद्भवन्ति। यथा त्वेतत्तथोद्देशे (४) लेशत उक्तम्, उपपादितं च तत्त्वबिन्दौ। तस्मात्सर्वमवदातम्॥ ७॥

---

(१) एतत्तु अव्यवहितपरवर्त्ति सूत्रम्, तत्र तु "दृष्टादृष्टार्थत्वात्" इति पाठभेदः। (२) "प्रतिपत्तिः साऽऽगमार्थः" इति वार्त्तिकपाठः। (३) २।१।५२ सूत्रटीकायाम्। (४) ९ पृ: २४ पं।

# (सू)—स द्विविधो दृष्टादृष्टार्थत्वात् ॥ ८ ॥

## न्यायभाष्यम्

यस्येह दृश्यतेऽर्थः स दृष्टार्थः। यस्याऽमुत्र प्रतीयते सोऽदृष्टार्थः। एवमृषिलौकिकवाक्यानां विभाग इति। किमर्थं पुनरिदमुच्यते? स न मन्येत दृष्टार्थ एवाऽऽप्तोपदेशः प्रमाणम्, अर्थस्याऽवधारणादिति, अदृष्टार्थोऽपि प्रमाणमर्थस्याऽनुमानादिति ॥ ८ ॥

इति प्रमाणभाष्यम्।

## न्यायवार्त्तिकम्

स द्विविध इति नियमार्थम्। अनेकधा भिन्न आगमः प्रत्यक्षानुमानविषयतायामेव व्यवतिष्ठते इति। वक्तृभेदेन वा द्वैविध्यं दृष्टादृष्टार्थप्रवक्तृकत्वात्। प्रत्यक्षत उपलब्धार्थः दृष्टार्थः। अनुमानोपलब्धार्थोऽदृष्टार्थः। ऋष्यार्यम्लेच्छानामेतत् समानं लक्षणमिति(१)। सर्वेषामागमेन व्यवहारदर्शनादनियमः। एवं चत्वार्येतानि प्रमाणानि यैर्देवमनुष्यतिरश्चां व्यवहारः कल्प्यत इति ॥ ८ ॥

इति प्रमाणवार्त्तिकम् ॥

## न्यायवार्त्तिकतात्पर्य्यटीका

स द्विविधो दृष्टादृष्टार्थत्वादिति सूत्रस्य तात्पर्यमाह—नियमार्थम्। तद्विभजते—अनेकधेति। दृष्टादृष्टार्थत्वादिति भाष्यमतेन व्याचष्टे—प्रत्यक्षेति। आप्तप्रणीतत्वलिङ्गानुमितप्रामाण्यशब्दैकविषयस्वर्गयागादिसम्बन्धादीनामनुमानविषयता। तथाऽऽह भाष्यकारः—यस्यामुत्र प्रतीयते सोऽदृष्टार्थ इति। अदृष्टार्थोऽपि प्रमाणमर्थस्यानुमानादिति, न दृष्टोऽर्थो यस्यागमस्य स तथा, एवमितरोऽपीति। तदेव भाष्यमतेन व्याख्याय स्वमतेन व्याचष्टे—वक्तृभेदेनेति। दृष्टोऽर्थो येन स दृष्टार्थः प्रवक्ता, एवमदृष्टोऽनुमितोऽर्थो येन स तथा, ऋषयोऽस्मदादयश्च (२)। अनुमितार्था अस्मदादय एवेति। एवमपि शब्दद्वैविध्यसाधने मा भूदपक्षधर्मतेति प्रवक्तृपदेन पूरयति—दृष्टादृष्टार्थ-

## वृत्तिः

विभजते—(स द्विविध इति)। सः—प्रमाणशब्दः। शब्दतदुपजीविप्रमाणातिरिक्तप्रमाणगम्यार्थको दृष्टार्थकः। शब्दतदुपजीविप्रमाणमात्रगम्यार्थकोऽदृष्टार्थकः। तथा च दृष्टार्थकत्वादृष्टार्थकत्वभेदात् प्रमाणशब्दस्य द्वैविध्यमित्यर्थः ॥ ८ ॥

समाप्तं प्रमाणलक्षणप्रकरणम् ॥ २ ॥

---

(१) सप्तमसूत्रभाष्य एवं ग्रन्थोऽस्ति, अत्र केवलम् "एतत्" इत्यधिकम्। (२) "दृष्टार्था ऋषयोऽस्मदादयश्च" इत्येवं पाठो भवितुमुचित इति मन्ये।

### न्यायभाष्यम्

किं पुनरनेन प्रमाणेनाऽर्थजातं प्रमातव्यमिति ?—

## (सू)—आत्मशरीरेन्द्रियार्थबुद्धिमनःप्रवृत्तिदोषप्रेत्यभावफल-दुःखापवर्गास्तु प्रमेयम् ॥ ९ ॥

### न्यायवार्त्तिकम्

किं पुनः***(१) प्रमेयविशेषविषयत्वात् नायं प्रमेयविशेषः प्रमेयमात्रस्य प्रमाणलक्षणोद्देशेन बोधितत्वात् प्रमेयविशेषावधारणा न सिध्यति, तत् प्रमेयं यदनेन यथावत्परिज्ञायमानमपवर्गाय। अपरिज्ञायमानश्चासावात्मेति। एतदर्थप्रकाशनायात्मादिसूत्रम्। अयमेव च सूत्रार्थ इति। अत्रापि (समान) (?) यथावचनं विग्रहः उभयावधारणप्राप्तावन्यतरावधारणे

### न्यायवार्त्तिकतात्पर्य्यटीका

प्रवक्तृकत्वादिति। अदृष्टार्थः प्रवक्ता यस्यागमस्य स तथोक्तः। अस्यार्थं सविग्रहं करोति—प्रत्यक्षत इति। शेषं सुबोधम्। न सामान्यतोदृष्टानां वाक्यानां प्रामाण्यम्। स इति (२) विप्रकृष्टो नास्तिकः परामृष्यत इति भाष्ययोजनिका। परिशिष्टं तु परीक्षापर्वणि(३)निवेदयिष्यते ॥८॥

इति प्रमाणटीका।

इह प्रमेयं हेयोपादेयभावेनावस्थितं मुमुक्षुणा प्रतिपित्सितम्, तच्च परीक्षितस्वप्रमाणविशेषाधीनप्रतिपत्ति, लक्षणं चास्य प्रमाणविशेषः। न चावान्तरप्रमाणसामान्यप्रत्यक्षादिलक्षणमन्तरेणात्मादिप्रमाणावतारः कर्तुं शक्यः, तस्य प्रत्यक्षादिसामान्यविशेषत्वात्, अतः प्रत्यक्षादिलक्षणानन्तरं तदवतारः। अपरीक्षितं च न तत्तत्त्वनिर्णयाय पर्य्याप्तमिति परीक्षा विधायिष्यते (४)। तत्परिकरश्च संशयादय इति युक्तं तेषां पश्चाल्लक्षणम्। तदिह प्रमेयलक्षणाय तद्विभागोद्देशसूत्रमवतारयितुं भाष्यकारः पृच्छति स्म—किं पुनरनेन प्रमाणेनेति। जात्यभिप्रायमेकवचनम्, प्रकृते प्रमेये यथायथं प्रमाणानामुपयोगात्, तदेतद्भाष्यमनूद्य वार्तिककार आक्षिपति—किं पुनरिति। प्रमेयनान्तरीयकत्वं प्रमाणानां सामर्थ्यम्। समाधत्ते—नेति। प्रत्यक्षादिलक्षणसामर्थ्यात् प्रमेयमात्रं सिद्धम्, विशिष्टं तु प्रमेयमद्यापि न सिध्यतीति तदर्थं प्रश्नः। स च विशेषो यथावदिति न (५) दर्शित इति अयमेव च सूत्रार्थ इति। येषां तत्त्वज्ञानातत्त्वज्ञानाभ्यामपवर्गसंसारौ भवतः,

---

(१) आदर्शपुस्तकसम्पादकैरत्र एवमेव तारकाचिह्नयोगेन ग्रन्थमुद्रणं कृतम्, परन्तु पादटीकायामावेदितं यत्—तेषामादर्शेषु कुत्रापि एतदंशः पतितः, कुत्रापि च खण्डित इति। (२) एतत्सूत्रभाष्ये "स न मन्येत" इत्यादि ग्रन्थः, तद्घटकं "स" इति पदं परामृष्टं "स" इति इत्यनेन। (३) २।१।५२ सूत्रादारभ्य कतिपयसूत्रपर्यन्तं ग्रन्थपरीक्षापर्व। (४) तृतीयाध्यायादारभ्य चतुर्थाध्यायस्य प्रथमाह्निकपर्यन्तग्रन्थेन। (५) "क" वार्त्तिके ६२ पृः पादटीकारूपेणोद्धृते तात्पर्यपाठे "न"कारो नास्ति।

## न्यायवार्त्तिकम्

दोषः। किं पुनरत्राऽवधार्यते—किमात्माद्येव प्रमेयम् अथ प्रमेयमेवात्मादीति। यद्यात्माद्येव प्रमेयम्, दिगादीनां सामान्यविशेषसमवायानां सूत्रेऽनभिधानादव्यापकम्। अथ पुनः प्रमेयमेवात्मादि तथा च "प्रमेया च तुलाप्रामाण्यवदि"ति (१) व्याघातः। तत्र सुवर्णादि द्रव्यपरिच्छेदसाधनत्वात् परिच्छेद्यत्वाच्च प्रमाणप्रमेयशब्दाभिलाप्यम्। लोकविरोधश्च एकस्यानेककारकवाच्यत्वात् वृक्षस्तिष्ठतीति। यथा तत्रैकं वृक्षाख्यं वस्त्वनेकेन कारकशब्देनोच्यते तस्य तस्य निमित्तस्य सन्निपातात्। एवं प्रमेयं प्रमाणमिति, न, सूत्रार्थापरिज्ञानात्। आत्माद्येव प्रमेयं यथावत् परिच्छिद्यमानमपवृत्तये भवतीत्ययं सूत्रार्थो, न प्रमेयान्तरनिराकरणार्थः सूत्रारम्भः। प्रमेयमेवात्मादीति न दोषः। किमुक्तं भवतीति ? मुमुक्षुणा प्रमेयमेवात्मादि बोद्धव्यमेव। नास्य प्रमेयत्वं विधीयते, नान्यस्य च प्रमेयत्वं निराक्रियते, अपि तु मुमुक्षुणा बोद्धव्यमेवैतदित्यनूद्यते, तस्मादुभयमवधार्यते। न च यथोक्तदोषः। उपेत्य ब्रूमो दिगाद्यप्यत्रैव लभ्यते उपपत्तिसामर्थ्यात्। का पुनरुपपत्तिः ? प्रवृत्तेर्विंशतिभेदात् तत्संस्कारकत्वेऽपि न दिगादयोऽपि लभ्यन्ते, सामान्यविशेषसमवायाश्च विशेषणविशेष्यभावेन, आत्मादयो विज्ञेयत्वेनोपदिष्टाः तेषां चेतरेतरव्यवच्छेदकभावेन सामान्यविशेषसमवाया विशेषणं कृतं सूत्रे इति। न पुनरिदं प्रमेयावधारणार्थं सूत्रम्, न तु प्रमेयविशेषावधारणार्थम्, प्रमेयमात्राव-

## न्यायवार्त्तिकतात्पर्य्यटीका

त एत एव न न्यूना नाधिका इत्यर्थः। प्रथमसूत्रव्यवस्थामतिदिशति—अत्रापीति। उक्तमर्थमनाकलयन्नाक्षिपति—उभयेति। दिगादीनामिति। द्रव्येषु दिक्कालपरमाणूनामनभिधानात्। वृक्षस्तिष्ठतीति। इतिशब्द आद्यर्थे, तेन वृक्षं पश्यति, वृक्षेण चन्द्रमसं पश्यतीत्यादयो वेदितव्याः। समाधत्ते—न, सूत्रार्थापरिज्ञानादिति। न प्रमेयपदं प्रमेयमात्रे वर्त्तते किन्तु यत्तत्त्वतो ज्ञायमानमपवर्गसाधनं तस्मिन्, तच्चात्माद्येव नान्यदिति युक्तोऽन्ययोगव्यवच्छेद इत्यर्थः। अयोगव्यवच्छेदेऽपि न दोष इत्याह—प्रमेयमेवेति। नन्वस्मिन् पक्षे न कदाचिदपि प्रमाणता स्यादित्यस्ति दोष इत्यत आह—किमुक्तं भवतीति। नास्य पुरुषमात्रं प्रति प्रमेयत्वं विधीयते, अपि तु मोक्षमाणशिष्यं प्रति विधीयते। अनूद्यत इति, प्रमाणान्तरमूलकत्वेन विधानदार्ढ्यं दर्शयति। उपसंहरति–तस्मादिति। कौशलमात्रमात्मनः ख्यापयितुमभ्युपेत्य समाधानान्तरमाह—उपेत्येति। प्रवृत्तिसंस्कारकत्वमस्ति दिक्कालयोः, "प्राङ्मुखोऽन्नानि भुञ्जीत" "प्राचीनप्रवणे वैश्वदेवेन यजेत" "पौर्णमास्यां पौर्णमास्या यजेत" "अमावास्यायाममावास्यया यजेते"ति श्रवणात्। कौशलमात्रमिदं न तु समाधानमित्याह—न पुनरिदमिति। विहितविधानादिति। प्रमाणविधान-

---

(१) २।१।१६ सूत्रम्। केषुचित् पुस्तकेषु "प्रमेयता च तुलाप्रामाण्यवत्" इत्येवं पाठभेदः।

## न्यायभाष्यम्

तत्राऽऽत्मा सर्वस्य द्रष्टा सर्वस्य भोक्ता सर्व्वज्ञः(१) सर्वानुभावी। तस्य भोगायतनं शरीरम्। भोगसाधनानीन्द्रियाणि। भोक्तव्या इन्द्रियार्थाः। भोगो बुद्धिः। सर्वार्थोपलब्धौ नेन्द्रियाणि प्रभवन्तीति सर्वविषयमन्तःकरणं मनः। शरीरेन्द्रियार्थबुद्धिसुख(२)वेदनानां निर्वृत्तिकारणं प्रवृत्तिः, (३)दोषाश्च। नाऽस्येदं शरीरमपूर्वमनुत्तरं च, पूर्वशरीराणामादिर्नास्ति, उत्तरेषामपवर्गोऽन्त(४) इति प्रेत्यभावः। ससाधनसुखदुःखोपभोगः फलम्। दुःखमिति नेदमनुकूलवेदनीयस्य सुखस्य प्रतीतेः प्रत्याख्यानम्। किं तर्हि? जन्मन एवेदं ससुखसाधनस्य दुःखानुषङ्गात् दुःखेनाऽविप्रयोगाद्विविधबाधना-

## न्यायवार्त्तिकम्

धारणार्थं च प्रवृत्तौ विहितविधानादकुशलः सूत्रकारः स्यात्। आद्येन वा सूत्रेण प्रमेयं विहितमिति पुनर्विधानादुन्मत्तवाक्यमिदं स्यात् एवं चार्थमेवार्थकं सूत्रकारः 'तु' शब्दमाह।

## न्यायवार्त्तिकतात्पर्य्यटीका

सामर्थ्येन विहितमित्यर्थः। न केवलं प्रमाणविधानाक्षिप्तम्, अपित्वाद्यसूत्रगतप्रमेयपदादपि लब्धमित्याह—आद्येन वेति। एतस्मिन्नर्थे सूत्रकारस्यानुमतिमाह—एवं चार्थमिति। भाष्यम्—सर्वस्य सुखदुःखसाधनस्य द्रष्टा, सर्वस्य सुखदुःखस्य भोक्ता, यतः सुखदुःखसाधनं सर्वम्, सर्वं च सुखदुःखं जानाति, अतः सर्वज्ञः। न चाप्राप्तान्येतानि जानातीत्यत आह—सर्वानुभावी, अनुभवः प्राप्तिः। तदेतद्वैराग्योत्पादायोक्तम्, एवमुत्तरत्रापि बोद्धव्यम्। आत्मन्ययं विशेषो यदनेन रूपेण हेयः, केवलेन चोपादेयः। शरीरादीनि तु हेयान्येव। अपवर्ग उपादेय एवेति। अविद्यमानं पूर्वं शरीरं यस्य तद् अपूर्वं शरीरम्, तन्निषेधति—नास्येदमिति? प्रमेयतत्त्वमविदुष आत्मनः अविद्यमानमुत्तरं शरीरं यस्य तद् अनुत्तरम्, तदपि निषिद्धं चेत्यनुकर्षणात्। ननु यथा पूर्वेषां शरीराणामनादितेत्येवमुत्तरेषामप्यनन्तता, तथा च मोक्षमाणानां प्रवृत्तयः तदर्थानि शास्त्राणि चानर्थकानि प्रसज्येरन्नित्यत आह—उत्तरेषामिति, प्रमेयतत्त्वावगमादित्यर्थः। ननु सुखेऽप्युद्देष्टव्ये दुःखमात्रोद्देशः किं सुखं प्रत्याचष्टे? तथा चानुभवविरोध इत्यत आह—नेदमिति।

## वृत्तिः

प्रमेयं विभजते, लक्षयति च—( आत्मशरीरेति )। अत्र तुशब्दः पुनरर्थे। तथा चैतेषां पुनः प्रमेयत्वम्, न तु प्रमाविषयत्वेन संयोगादीनामपि। प्रमेयशब्दो हि वादादिशब्दवत् परिभाषाविशेषेण द्वादशसु प्रवर्त्तते। तत्र च प्रकृष्टं मेयं प्रमेय-

(१) "सर्व्वज्ञ" इति ख पु नास्ति। (२) "दुःख" इत्यधिकम् भा-वि-टि०। (३) "प्रवृत्तिदोषाय" इति भा०। (४) "अपवर्गान्त" इति ग०।

## न्यायभाष्यम्

योगाद् दुःखमिति समाधिभावनमुपदिश्यते। समाहितो भावयति, भावयन्निर्विद्यते, निर्विण्णस्य वैराग्यम्, विरक्तस्याऽपवर्ग इति। जन्ममरणप्रबन्धोच्छेदः सर्वदुःखप्रहाण-मपवर्ग इति। अस्त्यन्यदपि द्रव्यगुणकर्मसामान्यविशेषसमवायाः प्रमेयम्, तद्भेदेन चाऽपरिसङ्ख्येयम्; अस्य तु तत्त्वज्ञानादपवर्गो मिथ्याज्ञानात् संसार इत्यत एतदुपदिष्टं विशेषेणेति ॥ ९ ॥

## न्यायवार्त्तिकम्

अन्यदपि प्रमेयमस्ति, यस्य तु तत्त्वज्ञानान्निःश्रेयसं तदिदं प्रमेयमिति "तु" शब्देन ज्ञापयति। सुखं पुनः कस्मादत्र नोक्तम्? किमभावादन्यत उपलब्धेर्वा, न तावदभावात्, प्रत्यात्मवेदनीयत्वात्, प्रत्यात्ममेव वेदनीयं सुखमुपलभ्यमानं न शक्यं नास्तीति वक्तुम्। न चान्यत उपलब्धिः, अस्मादेव। अनभिधानं तु वैराग्यज्ञापनार्थम्। कथम्? नायं मोक्षमाणः सर्वं दुःखं भावये-दिति तस्य दुःखभावनार्थः सुखस्यानपदेशः। सर्वं दुःखं भावयतस्त्रैलोक्यस्यानभिरतिसंज्ञा भवति। तां चोपासीनस्य त्रैलोक्यविषया तृष्णा विच्छिद्यते। तृष्णा नाम पुनर्भवप्रार्थना। साऽस्य सर्वं दुःखमिति भावयतो न भवति, न हि कश्चिद् दुःखं प्रार्थयते। तृष्णाप्रहाणाद्यानि

## न्यायवार्त्तिकतात्पर्य्यटीका

तदेतद्भाष्यं वार्त्तिककार आक्षेपसमाधानाभ्यां व्याचष्टे—सुखं पुनरिति। न चान्यत आत्मादि-पदात्, उपलब्धिः, अस्मादेव आत्मादिभ्यो भेदेन प्रत्यात्ममुपलभ्यमानत्वादेव, निर्विद्यत इत्यस्य व्याख्यानम्—अनभिरतिसंज्ञेति, उपेक्षाबुद्धिः। निर्विण्णस्य वैराग्यमित्यस्य

## वृत्तिः

मिति योगार्थः। प्रकर्षश्च संसारहेतुमिथ्याज्ञानविषयत्वं(१), मोक्षहेतुधीविषयत्वं वा। रूढ्या च तावदन्यान्यत्वमर्थः। लक्षणमपि तदेव। प्रमेयं किमित्याकाङ्क्षायामात्मादयो दर्शिता इत्यतो वचनभेदेऽपि नाऽनन्वयः। वेदाः प्रमाणमित्यादावप्येवम्। अन्यथा आत्मसूत्रे विगतिः स्यात्। तथा च वक्ष्यते (२)।

प्रमेयत्वेनैक्यमिति प्रतिपादनाय अन्यतमाज्ञानेऽपि नापवर्ग इति प्रतिपादनाय वा प्रमेयमित्येकवचनमित्यन्ये। तच्चिन्त्यम् (३)।

---

(१) मिथ्याज्ञानविषयत्वस्य प्रकर्षरूपतास्वीकारो न सर्व्वजनरुचिकर इति कल्पान्तरमाह—मोक्षहेत्वित्यादि।
(२) १।१।१० सूत्रस्य वृत्तौ। (३) अत्रेदं चिन्तावीजं यत् प्रमेयत्वेनैक्यप्रतिपादनायात्र यद्येकवचनं तर्हि "प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानि" इत्यत्र प्रमाणत्वेनैक्यप्रतिपादनाय प्रमाणशब्दोत्तरमपि तथा प्रसङ्गः। "अन्यतमाज्ञानेऽपि नापवर्गः" इत्येतत्प्रतिपादकत्वञ्च एकवचनस्य कष्टकल्पनालभ्यमिति।

## न्यायभाष्यम्

तत्राऽऽत्मा तावत्प्रत्यक्षतो न गृह्यते। स किमाप्तोपदेशमात्रादेव प्रतिपद्यत इति ? (१) नेत्युच्यते। अनुमानाच्च प्रतिपत्तव्य इति। कथम् ?

### (सू)—इच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमिति॥१०॥

## न्यायवार्त्तिकम्

पुनर्भवसाधनानि, तानि नोपादत्ते। तदनुपादानादनागतौ धर्माधर्मौ न भवतः। यावप्युत्पन्नौ तावप्युपभोगात् क्षयं गच्छतः। सोऽयं धर्माधर्मलक्षणस्य संसारबीजस्य उच्छेदादपवृज्यते न पुनर्जायत इति, अस्यार्थस्य प्रदर्शनार्थं सुखानभिधानमिति ॥ ९ ॥

आत्मनः समानासमानजातीयविशेषणार्थं सूत्रम्—इच्छेति॥ आगमस्यानुमानेन प्रतिसन्धानार्थं वा। आगमेन प्रतिपन्न आत्मा, तस्यानुमानेन प्रतिसन्धानार्थम्। प्रमाणसंप्लवस्योदाहरणार्थं वा। यत्तदवोचाम प्रमाणानि संप्लवन्ते इति, तस्यायं विषयः।

## न्यायवार्त्तिकतात्पर्य्यटीका

व्याख्यानं तां चोपासीनस्य, तयैव विरोधिगुणेन तृष्णा विच्छिद्यते सुखानभिधानेन दुःखपक्षनिक्षेपं सूचयति। तथा च सुखेऽस्य वैराग्यं भवतीति तात्पर्य्यार्थः ॥ ९ ॥

अपवर्गस्यात्मार्थत्वेन प्रमेयेष्वात्मनः प्राधान्यात् प्रथममात्मलक्षणसूत्रमिच्छेत्यादि, तदवतारार्थं भाष्यम्—तत्रात्मेति। अहमिति ज्ञानं गौराद्याकारं शरीरावभासनं न शक्यं घटादिज्ञानवद् द्रागात्मनि प्रमाणयितुमित्यभिप्रायः, परदेहवर्त्यात्माभिप्रायं वा। तदत्र वार्त्तिककारः सूत्रतात्पर्य्यमाह—समानेति। समानजातीयं शरीरादि, असमानजातीयं प्रमाणसंशयादि। सत्येवास्मिन् प्रयोजने प्रयोजनान्तरमन्वाचिनोति—आगमस्येति। ततश्चाप्तोक्तत्वानुमानसिद्धमपि प्रामाण्यं शब्दस्यानेन तदर्थसंवादकेनानुमानेन दृढतरं भवतीत्यर्थः। प्रयोजनान्तरं चान्वाचिनोति—प्रमाणसंप्लवस्येति। द्वावपि वा शब्दौ चार्थेऽन्वाचये द्रष्टव्यौ। तदनेन वार्त्तिकेन अनुमानाच्च प्रतिपत्तव्य इति भाष्यं व्याख्यातम्। इच्छाया आत्मलिङ्गत्वकथनपरं भाष्यं

## वृत्तिः

अत्राऽपि आत्मा च शरीरं च इन्द्रियाणि चाऽर्थाश्च बुद्धिश्च मनश्च प्रवृत्तिश्च दोषाश्च प्रेत्यभावश्च फलं च दुःखं चाऽपवर्गश्चेति यथावचनं विग्रहं वर्णयन्ति। अत्र प्राधान्यात् कारणरूपप्रमेय(२)षट्कमभिधाय कार्यरूपप्रमेयषट्कमभिहितम्। तत्र पूर्वपूर्वस्य प्राधान्यात् प्रथममुद्देश इति वदन्ति ॥ ९ ॥

(१) भा-पु "इति" नास्ति। (२) नि-भा-व पु "प्रमेय" इति नास्ति।

## न्यायभाष्यम्

यज्जातीयस्याऽर्थस्य सन्निकर्षात् सुखमात्मोपलब्धवान्, तज्जातीयमेवाऽर्थं पश्यन्नुपादातुमिच्छति, सेयमादातुमिच्छा एकस्यानेकार्थदर्शिनो दर्शनप्रतिसन्धानाद्भवति (१) लिङ्गमात्मनः। नियतविषये हि बुद्धिभेदमात्रे न सम्भवति, देहान्तरवदिति। एवमेकस्या-

## न्यायवार्त्तिकम्

यज्जातीयस्याऽर्थस्य सन्निकर्षादिति भाष्यम्। तत्रेच्छादीनां प्रतिसन्धानमात्मास्तित्वप्रतिपादकम्। तत्रेदं विचार्यते—कथमिच्छादि अनुपलभ्यमानमात्मानं गमयति? स्मृत्या सहैकविषयभावात्, यस्मादेवेच्छादयः स्मृत्या सहैकविषया भवन्ति तस्मादेककर्तृकत्वं प्रतिपादयन्ति। न हि नानाकर्तृकाणां नानाविषयाणां नानानिमित्तानां च प्रतिसन्धानमस्ति।

## न्यायवार्त्तिकतात्पर्य्यटीका

यज्जातीयस्येति। यज्जातीयस्येति व्याप्तिस्मृतिकथनम्, तज्जातीयं पश्यन्निति पक्षधर्मोपनयः। तस्मादयं सुखहेतुरित्यनुमायादातुमिच्छति, सेयमिच्छेदृशी व्याप्तिग्रहणतत्स्मरणपक्षधर्मताग्रहणानुमानेच्छादीनामेककर्तृकत्वं सूचयति, भेदे प्रतिसन्धानाभावेन तदनुपपत्तेः, तदिदमुक्तम्—एकस्येति। यश्चासावेकोऽनुभविता च स्मर्त्ता चानुमाता चैपिता च स आत्मा, न च शरीरमेवं भवितुमर्हति, तस्य बाल्यकौमारयौवनवार्द्धकभेदेनाऽन्यत्वात्। नेन्द्रियम्, इन्द्रियान्तरगृहीत इन्द्रियान्तरेणाप्रतिसन्धानप्रसङ्गात् यमहमद्राक्षं तं स्पृशामीति। नापि मनः, तस्य करणत्वेनैवानुमानात्। वक्ष्यति ह्येतत्सर्वं "ज्ञातुर्ज्ञानसाधनोपपत्तेरि"त्यत्र सूत्रे (२)।

स्यादेतत्। असत्यप्यात्मनि ज्ञातरि सत्यपि च बुद्ध्यादीनां भेदे तत्सन्तानाभेदेन प्रतिसन्धानव्यवस्थोपपत्स्यत इत्यत आह—नियतविषये इति। नियतविषय इति बुद्धिभेदस्य प्रतिसन्धानमपाकरोति, मात्रग्रहणेन च सन्तानं सन्तानिव्यतिरिक्तमपाकरोति, तदभ्युपगमे वा स एवात्मेति सिद्धं नः समीहितम्। तदेतद्भाष्यमनुभाष्य वार्तिककारस्तात्पर्य्यमस्याह—यज्जातीयस्येति। तत्र विचारमारभते—तत्रेति। पूर्वपक्षमाह—कथमिच्छादीति। परिहरति—स्मृत्येति। नन्वेकविषयाणां स्मृत्यादीनां नानाकर्तृकत्वे को विरोध इत्यत आह—

## वृत्तिः

तत्र प्रथमोद्दिष्टमात्मानं लक्षयति—( इच्छाद्वेषेत्यादि )। अत्र चाऽऽत्मनः प्रत्यक्षत्वाल्लिङ्गकथनमसङ्गतम्। न च शरीरातिरिक्तात्मव्युत्पादनार्थं तदिति वाच्यम्,

(१) 'भवन्ति' इति टि०। 'भवन्तौ' इति ख-ग-भा०। (२) ३।१।१७ सूत्रभाष्ये इति बोध्यम्।

## न्यायवार्त्तिकम्

न हि रूपरसगन्धस्पर्शप्रत्ययाः प्रतिसन्धीयन्ते। न हि भवति यद्रूपमद्राक्षं सोऽयं स्पर्श इति। नापि भवति यत् स्पर्शमस्पार्क्षं तद्रूपं पश्यामीति। नापि देवदत्तदृष्टे यज्ञदत्तप्रतिसन्धानं दृष्टम्। न हि भवति देवदत्तो यमद्राक्षीत् यज्ञदत्तस्तमद्राक्षमिति(१)। किं कारणम्? बुद्धिभेदानां प्रतिनियतविषयत्वादिति। प्रतिनियतविषया इतरेतरव्यावृत्तिरूपा नैरात्म्यवादिनो न भवन्तीति न युक्तं प्रतिसन्धानम्, तस्माद् यः प्रतिसन्धाता स आत्मेति।

कार्यकारणभावात् प्रतिसन्धानमिति चेत्, अथापि मन्येथा नैककर्तृकत्वात् प्रतिसन्धानम्, किं तर्हि? कार्यकारणभावात्, पूर्वपूर्वबुद्धिविशेषादुत्तरमुत्तरं बुद्ध्यन्तरं पूर्वबुद्धिशक्त्यनुविधानात् सकलाहितशक्तिकलापमुत्पद्यते, अतो नानात्वेऽपि बुद्धीनां कार्यकारणभावात् प्रतिसन्धानं बीजादिवदिति, तद्यथा शालिगुटिकाद्यनन्तरमङ्कुरः प्रादुर्भवति, तस्य शालिशक्त्यनुविधानं तत्पूर्वकतया व्यवतिष्ठते, अनन्तरं महाभूतैरनुगृह्यमाणमुत्तरशालिबीजं जनयति न यवबीजम्, अतत्पूर्वकत्वात्, तथेहाप्येकसान्तानिकीनां बुद्धीनां कार्यकारणव्यवस्थानात् प्रतिसन्धानम्, अतत्पूर्वकत्वात् न सन्तानान्तरबुद्धीनाम्, न पुनरेककर्तृकत्वात् प्रतिसन्धानमदर्शनात्, तदिदं प्रतिसन्धानमन्यथा भवन्नात्मनः सत्तां प्रतिपादयितुं शक्नोति। न, नानात्वस्याबाधनात्, कार्यकारणभावात् प्रतिसन्धानं ब्रुवन् न नानात्वं बाधते। किं कारणम्? कार्यकारणभावः खलु नानात्वाधिष्ठानः, उभयपक्षसम्प्रतिपन्ने च नानात्वे न प्रतिसन्धानं दृष्टम्। कस्मात्? अन्येनानुभूतस्यान्येनास्मरणात्। न चास्मृतं

## न्यायवार्त्तिकतात्पर्य्यटीका

न हीति। नानाविषयत्व उदाहरणमाह—न हि रूपेति। नानानिमित्तत्व उदाहरणमाह—नापि भवतीति। यत् यस्मान्निमित्तात् त्वगिन्द्रियात् स्पर्शमहमस्पार्क्षं तत् तस्मान्निमित्ताच्चक्षुषो रूपं पश्यामीति। नानाकर्तृकत्व उदाहरणमाह—न हि भवति देवदत्त इति। तदेतत्किल प्रतिसन्धानं कर्तृभेदाद्देवदत्तयज्ञदत्तादेर्व्यतिरेकबलेनैककर्तृत्वं साधयतीत्युक्तम्, तदेतदनुपपन्नं भिन्नकर्तृकाद्व्यतिरेकस्योपाधिसम्भवेन स्वाभाविकप्रतिबन्धज्ञानवैकल्यात्। अस्ति हि देवदत्तयज्ञदत्तविज्ञानानां भिन्नकर्तृकत्वमकार्यकारणभावश्च, तत्र किमकार्य्यकारणभावात् प्रतिसन्धानस्य व्यतिरेक उत भिन्नकर्तृकत्वादिति सन्दिग्धव्यतिरेकत्वादसाधनाङ्गं प्रतिसन्धानमित्याशयवांश्चोदयति—कार्य्यकारणभावादिति। तदिदमुक्तम्—तदिदं प्रतिसन्धानमन्यथा भवदिति। गूढाभिप्रायः

## वृत्तिः

अग्रिमपरीक्षावैयर्थ्यापत्तेः (२), लक्षणाकथनेन न्यूनत्वं चेति चेन्न(३)। लिङ्ग(४)पदस्य लक्षणार्थत्वात्। न च लिङ्गमित्येकवचनेन मिलितानां लक्षणत्वं प्रतीयते, तच्चाऽयुक्तम्,

---

(१) अत्र "यज्ञदत्त" इत्यनन्तरम् "अहमि"त्यध्याहार्य्यम्। (२) ३।१।४ सूत्रेण यत् शरीरातिरिक्तात्मसाधनं तद्वैयर्थ्यापत्तेरित्यर्थः। (३) "चेत्" इत्यस्मात् परं "न" नास्ति नि-पु०। (४) "तल्लिङ्ग" इति क-आ-च०।

## न्यायभाष्यम्

ऽनेकार्थदर्शिनो दर्शनप्रतिसन्धानात् दुःखहेतौ द्वेषः, यज्जातीयोऽस्यार्थः (१) सुखहेतुः प्रसिद्धस्तज्जातीयमर्थं पश्यन्नादातुं प्रयतते(२) एकमनेकार्थदर्शिनं दर्शनप्रतिसन्धातार-(३) मन्तरेण न स्यात्। नियतविषये बुद्धिमात्रे(४) न सम्भवति, देहान्तरवदिति। एतेन दुःखहेतौ प्रयत्नो व्याख्यातः। सुखदुःखस्मृत्या चाऽयं तत् साधनमाददानः सुख-मुपलभते दुःखमुपलभते, सुखदुःखे वेदयते। पूर्वोक्त एव हेतुः। बुभुत्समानः खल्वयं विमृशति किं स्विदिति, विमृशंश्च(५) जानीते इदमिति, तदिदं ज्ञानं बुभुत्साविमर्शाभ्या-मभिन्नकर्तृकं गृह्यमाणमात्मलिङ्गम्। पूर्वोक्त एव हेतुरिति। तत्र देहान्तरवदिति विभज्यते यथाऽनात्मवादिनो देहान्तरेषु नियतविषया बुद्धिभेदा न प्रतिसन्धीयन्ते

## न्यायवार्त्तिकम्

प्रतिसन्धातुं शक्नोति। अकार्यकारणभावेऽनुपपत्तेः। न ब्रूमः कार्यकारणभावे दृष्टं प्रतिसन्धानम्, अपि त्वकार्यकारणभावे न दृष्टमिति अतत्पूर्वकत्वादित्युक्तम्। तस्मादयथार्थोऽयमुपालम्भ इति। तदयुक्तम्, विवादकारणाव्यतिरेकादिति। एवं ब्रुवाणो भवान् न कारणमतिरेचयति। मयोक्तं नानात्वे न दृष्टमिति। त्वं न ब्रूषेऽकार्यकारणभावान्नानात्वे न दृष्टमिति अनैकान्तिकत्वान्न विवादकारणमतिरिच्यते। तुल्यं भवतोऽपि, नानात्वेऽदर्शनादिति ब्रुवता न विवादकारणमति-रेचितं भवति। अभ्युपगमादनुत्तरं तुल्यमिति ब्रुवताऽभ्युपगतं भवति। नासाधनात्—न मया कार्यकारणभावात् प्रतिसन्धानं साध्यते अपि त्वन्यथैव तद्भवतीति हेतोरसिद्धार्थतादोषोऽभिधीयत इति, न, हेत्वर्थापरिज्ञानात्। न भवता हेतुरूपं विशेषतो व्यज्ञायि, केवलं हेतुसामान्यात्

## न्यायवार्त्तिकतात्पर्य्यटीका

परिहरति—नानात्वस्येति। चोदक आह—अकार्य्येति। गूढाभिप्राय एव परिहारवा-धाह—तदयुक्तमिति। अनैकान्तिकत्वं सन्दिग्धव्यतिरेकिता। चोदक आह—तुल्यं भवतो-ऽपीति। सिद्धान्ती गूढाभिप्राय एवाह—अभ्युपगमादिति। चोदक आह—नासाधनादिति। असिद्धार्थताऽन्यथासिद्धार्थता हेतोर्हेतुवचनस्येत्यर्थः। संप्रति समाधाता स्वाभिप्रायमावि-ष्करोति—न, हेत्वर्थापरिज्ञानात्। तदेतद्विभजते—न भवतेति। कः पुनरसौ हेतुविशेष इत्यत

---

(१) 'यस्यार्थ' इति ज०। (२) 'प्रयत्न' इति ल०। अतःपरं "सोऽयं प्रयत्न" इत्यधिकं भा०। (३) 'प्रतिसन्धानम्' इति वि०। (४) 'बुद्धिभेदमात्रे' इति ज०। (५) ज-भा-पु "च" नास्ति। "तु" इति वि-टि०।

## न्यायभाष्यम्

तथैकदेहविषया अपि न प्रतिसन्धीयेरन्, अविशेषात् । सोऽयमेकसत्त्वस्य समाचारः स्वयं-दृष्टस्य स्मरणम्, नाऽन्यदृष्टस्य, नाऽदृष्टस्येति(१) । एवं खलु नानासत्त्वानां समाचारोऽन्य-दृष्टमन्यो(२) न स्मरती(३)ति । तदेतदुभयमशक्यमनात्मवादिना व्यवस्थापयितु-मित्येवमुपपन्नमस्त्यात्मेति ॥ १० ॥

## न्यायवार्त्तिकम्

अन्यथैव भवतीति हेतुदोषोऽभ्यधायि । विशेषितं चैतत् प्रतिसन्धानम्, स्मृत्या सह पूर्वापर-प्रत्ययैकविषयत्वेन प्रतिसन्धानम्, सा च स्मृतिर्भवत्पक्षेऽनुपपन्ना । कस्मात्? अन्येनानुभूत-स्यान्येनास्मरणात् । न ह्यन्येनानुभूतस्यान्येन स्मरणम्, न ह्यन्येनानुभूतमन्यः स्मरति, अस्ति च

## न्यायवार्त्तिकतात्पर्य्यटीका

आह—विशेषितं चैतत्प्रतिसंधानम्, तत्कथयति—स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वं (४)प्रतिसंधानम्, यज्जातीयं सुखहेतुचन्दनवनितादि सुखहेतु प्रतीतं स्मरामि, तज्जातीयमिमं प्रत्ये-मीति प्रतिसंधानम् । तदनेन शालिबीजाङ्कुरस्य परंपरया शालिबीजान्तरजननलक्षणात्प्रतिसंधानात् कार्य्यकारणभावनियताद्व्यवच्छिनत्ति । नन्वियं पूर्वापरप्रत्ययसंहतिः स्मृतिरपि कार्य्यकारणभावादे-वोपपत्स्यते कृतमेकेन कर्त्रेत्यत आह—सा च स्मृतिर्भवत्पक्षेऽनुपपन्ना । पृच्छति—कस्मात् । उत्तरम्—अन्येन निमित्तेन अनुभूतस्य अन्येन निमित्तेनास्मरणात् । न हि भवति येनैव चक्षुषा घटमद्राक्षं तेनैव त्वगिन्द्रियेण तं स्पृशामीति । निमित्तभेदे प्रतिसंधानाभावमुक्त्वा विषयभेदे-ऽप्याह—न ह्यन्येन स्वभावेन घटत्वादिनाऽनुभूतस्यान्येन वृक्षत्वादिना स्मरणम्, न हि भवति यमहं घटमद्राक्षं सोऽयं वृक्ष इति । कर्तृभेदे प्रतिसंधानाभावमाह—न ह्यन्येन देवदत्तेनानुभूत-मन्यो यज्ञदत्तः स्मरति, न हि भवति योऽहं देवदत्तोऽद्राक्षं सोऽहं यज्ञदत्तः स्मरामीति । न चेदं सत्यपि भेदे कार्य्यकारणभावात् प्रतिसंधानं भवितुमर्हति, न हि यत्र स्फुटतरः कार्य्यकारण-भावः तन्तुपटयोर्घटकपालयोर्वा दृश्यते तत्र प्रतिसंधानं भवति ये तन्तवः स एव पट इति वा,

## वृत्तिः

वैयर्थ्यादिति वाच्यम् । किं लक्षणमित्याकाङ्क्षायामिच्छादीनामभिधानात् मिलितं लक्षणमिति प्रत्यायकाभावात् । तथा च प्रत्येकमेव लक्षणम् । अत्र ज्ञानेच्छाप्रयत्ना-नामात्ममात्रस्य लक्षणत्वम्, सुखदुःखद्वेषाणां संसारिणो लक्षणत्वमिति(५) ॥ १० ॥

---

(१) "नाऽदृष्टस्य" इति ज-भा-पु नास्ति । (२) "मन्ये" इति ज-भा० । (३) "स्मरन्ति" इति ज-भा० । (४) "पूर्व्वापरप्रत्ययैकविषयत्वेन" इति वार्त्तिकपाठः । (५) "लक्षणत्वादिति" ल० ।

## न्यायवार्त्तिकम्

स्मृतिः, तस्मात् यस्मिन् पक्षे स्मृतिः सम्भवति तत्र प्रतिसन्धानमिति न्याय्यम् (१)। भवानस्मान् स्मृत्यनुपपत्त्या भावयति, न हि नः पक्षे स्मृतिर्न सम्भवति। कथमिति? कार्यकारणभावादेव यत्कायचित्तसन्ताने स्मृतिरनुभवो वोत्पद्येते (२) स कायचित्तसन्तानः स्मर्ता चानुभविता च

## न्यायवार्त्तिकतात्पर्य्यटीका

यो घटक्षणः स एव कपालक्षण इति वा। वस्तुतः कार्य्यकारणभूतानामगृहीतभेदानां प्रतिसंधानहेतुभावः, सभागेषु क्षणेषु तथा दर्शनादिति चेत् तन्न, आमलकफलस्यैकस्यापनये तत्रैव स्थाने आमलकान्तरावस्थापने भवति प्रतिसंधानम्, न च तयोरामलकयोरस्ति कार्य्यकारणभावः। पूर्वापरप्रत्यययोः स्मृत्या सहैकविषयत्वं कर्त्तरि कार्य्यकारणभावनिबन्धनं न कर्म्मणीति चेत्? हन्त नैरात्म्यसाक्षात्कारसात्मीभावेऽप्यस्ति विज्ञानानां कार्य्यकारणभाव इति तन्निबन्धनं प्रतिसंधानं पूर्ववदेव प्रसज्येत। सैव चात्मदृष्टिर्दोषाणां निदानं परममिति व्यर्थो नैरात्म्यसाक्षात्कारसात्मीभावप्रयासः। अथासदपि प्रतिसंधानं कार्य्यवशादाह तथागतो नट इव रामत्वमात्मनः, यदि तत्कार्य्यकारणभावनिबन्धनम्, कथमसत्कार्य्यं कथमाहार्य्यम्। अथ कार्यकारणभावोऽप्यवस्तुसन् कल्पनामात्रनिबन्धनः, स तर्हि तादृशः शालिबीजस्योत्पादं वास्तवं न नियन्तुमर्हति, न जातु कल्पितवह्निभावो माणवको दहनपाकयोरुपयुज्यते। न च प्रत्ययानां भेदाग्रहात् प्रतिसंधानमिति सांप्रतम्, प्रवृत्तिविज्ञानानां रूपादिविषयाणां भेदेन पृथग्जनैरपि प्रतीयमानत्वात्। आलयविज्ञानस्य च प्रवृत्तिविज्ञानातिरिक्तस्यानुपलब्धेः(३)। अहमिति च सत्त्वदृष्टेः क्षणिकत्वनिराकृतावसति बाधके स्थिरवस्तुविषयत्वात्। तस्मात् स्मृत्या सह पूर्वापरप्रत्यययोरेकविषयत्वलक्षणस्य प्रतिसंधानस्यानेककर्तृकत्वाद् व्यतिरेको निरुपाधिरेककर्तृकत्वं साधयति, स चैकः कर्त्ता शरीरेन्द्रियबुद्धिभ्यो भिन्न आत्मेति सिद्धम्। तदनेनाशयेनोक्तम्—अस्ति च स्मृतिरुक्तरूपा। तस्माद् यस्मिन् पक्षे स्मृतिः सम्भवति तत्र प्रतिसन्धानं न्याय्यमिति। स च कर्त्रेकत्वपक्ष इति भावः। आशयमविद्वान् पुनः परः प्रत्यवतिष्ठते—भवानिति। पर एवैकग्रन्थेनाह—कथमिति, कथं न सम्भवतीत्यर्थः। स्यादेतत्, योगिचित्तमपि सर्वज्ञस्य चेतस आलम्बनप्रत्यय इति तस्यापि योगिचित्तेन प्रतिसन्धानं स्यादित्यत आह—यत्कायेति। एतदुक्तं

(१) "प्रतिसन्धानं न्याय्यमिति" इति तात्पर्य्यं। (२) "वोत्पद्येते" इत्यत्र "वा"कारः चकारार्थकः, अत एव क्रियायां द्विवचनप्रयोगः। (३) "अयं घट इत्यादिज्ञानं प्रवृत्तिविज्ञानम्, अहं जानामीत्यादिज्ञानम् आलयविज्ञानम्, क्षणिकविज्ञानवादिनां बौद्धानां मते तादृशम् अहं ज्ञानमेवात्मा, स्वमते तु "अहं" पदार्थस्यात्मनः सुखादिविशेषगुणयोगं विना प्रत्ययाभावात् तथाविधस्य आलयविज्ञानस्य अवश्यम् आत्मव्यतिरिक्तपदार्थविषयकत्वमपि स्वीकार्य्यमिति तव तादृक् पदार्थगोचरप्रवृत्तिसाधनत्वेन प्रवृत्तिविज्ञानत्वमप्यवश्यं पर्य्यवस्यतीति प्रवृत्तिविज्ञानातिरिक्तालयविज्ञानस्यानुपलब्धिः"।

## न्यायवार्त्तिकम्

भवति। न, अस्थिरत्वाद् बुद्धीनाम्। स्थिरं हि वासकेन वास्यमानं दृष्टं न च बुद्धीनां स्थिरत्वमस्ति, असम्बन्धाच्च—असम्बद्धं च वासकेन वास्यमानं दृष्टम्, न च वासकेन सम्बन्धो बुद्धीनामस्ति। शक्तिविशिष्टचित्तोत्पादो वासनेति चेद् अथाप्येवं कल्प्येत पूर्वचित्तसहजाच्चेतनाविशेषात् पूर्वशक्तिविशिष्टं चित्तमुत्पद्यते सोऽस्य शक्तिविशिष्टचित्तोत्पादो वासनेत्युच्यते। अत्रोक्तमस्थिरत्वाद्वासकेनासम्बन्धाच्चेति।

यश्चासौ चेतनाविशेषः पूर्वचित्तसहभावी स नापि वर्त्तमाने चेतस्युपकारं करोति नाप्यनागते। कथमिति? वर्तमानं तावदविकार्यं यथाभूतं जायते तथाभूतमेव नश्यति, अनागते सोऽपि न सम्बध्यते न चासम्बद्धं वासयतीत्युक्तम्। तस्मात् कार्यकारणभावात्

## न्यायवार्त्तिकतात्पर्य्यटीका

भवति उपादानोपादेयभावेनावस्थितः चित्तप्रवाहः सन्तानः, न च योगिचित्तमुपादानं सर्वज्ञस्य चेतसः, आलम्बनप्रत्ययो हि तदिति। कायग्रहणं च एकसन्तानोपलक्षणपरम्, तेन जन्मान्तरेऽपि स्मृतिरुपपन्नेति। तमिममस्मदभिप्रायानभिज्ञं परमन्यथापि बोधयितुं विश्वास इति सिद्धान्त्यन्यथा स्मृत्यनुपपत्तिमाह—नअस्थिरत्वात् बुद्धीनाम्। न ह्यजातानन्वयध्वस्तयोरस्ति कश्चिद् विशेष इति पूर्वोत्पन्नोऽनुभवः काञ्चन वासनामाधाय प्रध्वंसते, यथा कालान्तरे स्मृतिराधीयत इत्यभ्युपगन्तव्यम्। न चास्थिरा बुद्धिः शक्या वासयितुम्, इत्यात्मा स्थिरोऽभ्युपेय इत्यर्थः। युक्त्यन्तरमाह—असंबन्धाच्चेति, न च बुद्धीनामसमानकालानामस्ति संबन्ध इत्यर्थः। पुनः परः प्रत्यवतिष्ठते—शक्तीति। नास्माकं क्षणिकवस्तुवादिनामस्ति तज्जगति यदवस्थितं वासकेन वास्यमानं दृष्टमिति भावः। ननु तथाऽप्यसमानकालतया संबन्धरहितमशक्यं वासयितुमिति ग्रहणकवाक्यविवरणव्याजेनापाकरोति—अथापीति। पूर्वचित्तं प्रवृत्तिविज्ञानं यत्तत् षड्विधम्, पञ्च रूपादिविज्ञानान्यविकल्पकानि, षष्ठं च विकल्पविज्ञानम्, तेन सह जातः समानकालः चेतनाविशेषस्तदालयविज्ञानमित्युच्यते। अहंकारास्पदं स्मृतिशक्तिः, सा च न शक्तात्तज्ज्ञानाद्व्यतिरिच्यते, तेन कथञ्चिद्भेदविवक्षया शक्तिविशिष्टमित्युच्यते। सिद्धान्तवाद्याह—अत्रोक्तमिति। उपपादयिष्यते (१) हि भावानां सर्वजनप्रतीतिसिद्धा स्थिरता क्षणभङ्गनिराकरणेन, तथा च स्थिरस्य संबद्धस्य च वस्त्रादेर्मृगमदादिना वास्यत्वं दृष्टमिति नास्थिरेऽसंबद्धे च भवितुमर्हतीत्यर्थः।

स्यादेतत्, अस्थिरयोरपि ज्ञानयोः समानकालतयाऽस्ति संबन्ध इति कस्मादन्यतरचित्तवासितमन्यतरच्चित्तं स्मृतिं नाधत्त इत्यत आह—यश्चासाविति। वक्ष्यमाणापेक्षोऽपिशब्दः। ननु वर्त्तमाने चेतसि मा कार्षीदुपकारम् अनागते तु करिष्यतीत्यत आह—नापीति। पृच्छति—कथमिति। उत्तरम्—वर्त्तमानं तावदिति। प्रकृतमुपसंहरति—तस्मादिति। इतोऽप्य-

(१) ३ अ० २ आ०।

## न्यायवार्त्तिकम्

स्मृतिरित्यशिक्षितो वासनमिति (?)। इतश्च न भवत्पक्षे स्मृतिः, भावस्य भवित्रपेक्षत्वात्। सर्वो हि भावो भवितारमपेक्षते क्रियात्वादुत्पत्तिवदिति। स्मृतेश्च भविता कर्म वा भवेत् कर्त्ता वा, तण्डुलानां पाचक इति कर्मणि, देवदत्तस्य गतिरिति कर्त्तरि। तत् न तावत्कर्मण्यसतोऽपि सम्भवात्। यदाऽविद्यमानं स्मरति तदाऽनाधारा स्मृतिः प्राप्नोति। अथ कर्त्राधारा सा, तदाऽस्मत्पक्षे प्रयुक्ता न भवत्पक्षे। कस्मात्? कर्तुरनभ्युपगमात्। न हि भवन्तः कर्तारं स्मृत्यर्थकं प्रतिपद्यन्त इति। अनाधारैव स्मृतिरिति यदाऽयं पक्षो भवति तदाऽनुमानं नास्ति, कार्यस्यानाधारस्यादर्शनादिति। कार्यं सर्वमाधारवत् दृष्टं रूपादि, तच्च स्मृतिः, तस्मादाधारवती। कार्यकारणयोर्भावभवितृव्यवहारः, कार्यक्षणो भावः कारणक्षणो भवितेति। एवं च किमन्येन भवित्रा कल्पितेनेति। तच्च न, कालभेदात् कार्यकारणयोर्भिन्नकालत्वादाश्रयाश्रितभावानुपपत्तेः कुण्डबदरादिवदिति। अथापीदं स्यात् उत्पत्तिर्भावः उत्पत्ता भवितेति स्मृतिरप्युत्पद्यते यस्मात् तस्या अप्युत्पत्तिर्भावो भविष्यति स्मृतिरप्युत्पन्नी भवितेति। तच्च न, विरोधादनभ्युपगमाच्च। यदि स्मृतिव्यतिरिक्तोत्पत्तिः, व्याहतं भवति, स्वरूपं च वक्तव्यम्, न हि भवन्त उत्पत्तिमद्व्यतिरेकेणोत्पत्तिं मन्यन्ते। व्यतिरिक्तां चोत्पत्तिं मन्यमानेन भवता तस्याः स्वरूपं वक्तव्यम्। स्वरूपं च निरूप्यमाणं तन्त्रं बाधते। कथमिति? उत्पत्तिः स्वकारणसत्तासम्बन्धः, सत्ता वा स्वकारणसम्बन्धविशिष्टा, उभयं च तन्त्रेणाभ्युपगतमिति विरोधः। अथ स्मृत्यव्यतिरिक्तोत्पत्तिपूर्वकम्? किं क्व वर्त्तत इति शून्यमभिधानम्। उत्पत्तिर्भाव

## न्यायवार्त्तिकतात्पर्य्यटीका

सत्यात्मनि विज्ञानमात्रात्कार्य्यकारणभावात्स्मृतिर्नोत्पद्यत इत्याह—इतश्चेति। कस्मात्? भावस्य भवित्रपेक्षत्वात्, भाव उत्पत्तिमान् धर्म्मः, भविता धर्म्मी पाको विक्लित्तिः संयोगभेदः, स च तण्डुलावयवसमवेतोऽप्यवयवावयविनोरभेदोपचारात्तण्डुलानामित्युक्तम्। गतिः परिस्पन्दो देवदत्ते कर्त्तरीति सिद्धान्ती क्षणिकतावादिनमुत्थाप्याक्षणिकत्वाभिप्रायेण दूषयति—अनाधारैवेति। पूर्वपक्षी क्षणिकत्वाभिप्रायेणाह—कार्य्येति। सिद्धान्तवाद्यक्षणिकत्वाभिप्रायेण परिहरति—तच्च नेति। समानकालयोराधाराधेयभावो दृष्टो यथा कुण्डबदरयोः स्थिरमेव हि कुण्डं स्थिरस्यैव बदरस्य गुरुत्वेन पततो गुरुत्वं प्रतिबध्नदधःपतनं निवारयदाधारो भवति। यद्युच्येत न स्मृतिर्भावः किन्तु भवित्री, उत्पत्तिरस्या भावः, न तु भवितुर्भवित्रन्तरापेक्षा युक्ता, अनवस्थापातादिति शङ्कते—अथापीदमिति। निराकरोति—तच्च नेति। विरोधादिति विवृणोति—यदीति। कस्माद्व्याहतमित्यत आह—स्वरूपं चेति। चो हेत्वर्थे, स्वरूपमुत्पत्तेरुच्यमानं स्वतन्त्रं बाधते यतः तस्माद्विरोध इत्यर्थः। अनभ्युपगमादिति विवृणोति—न हि भवन्त इति। विरोधादिति स्फोरयति—व्यतिरिक्तां चेति। तन्त्रं शास्त्रम्। शङ्कते—अथेति। तथा च न विरोधो नाप्यभ्युपगम

## न्यायवार्त्तिकम्

उत्पत्री स्मृतिरिति। यदा चोत्पत्तिः स्मृतेर्भावत्वेन विवक्षिता भवति तदैवं वक्तुं न्याय्यम्। यदा तु स्मृतिर्भावस्तदा भवित्रा भवितव्यम्। कस्मात्? भावस्य भवित्रपेक्षत्वादित्युक्तम् (१) तस्मात् कथञ्च न भवत्पक्षे स्मृतिः सम्भवतीति स्मृतिमन्तरेण न प्रतिसन्धानमस्तीति। अस्ति चेदं प्रतिसन्धानम्, तस्माद्व यत्कर्तृकमेतत् सोऽर्थोऽन्य एक आत्मेति।

अथवाऽन्वयेनान्यः सूत्रार्थोऽभिधीयते इति। देवदत्तस्य रूपरसस्पर्शप्रत्ययाः एकानेकनिमित्तकाः स्मृत्या सह मयेति प्रतिसन्धानात् कृतसङ्केतानां वृद्धानामेकस्मिन् नर्तकीभ्रूक्षेपे युगपदनेकप्रत्ययवत्। यथा नानाकर्तृकाणां कृतसङ्केतानां नानाभूताः प्रत्यया निमित्तस्य भ्रूक्षेपस्यैकत्वात् प्रतिसन्धीयन्ते, तथेहापि नानाविषया निमित्तस्य एकत्वात् प्रतिसन्धास्यन्ते, यत्तन्निमित्तं स आत्मेति। अथवेच्छाद्वेषप्रयत्नसुखदुःखज्ञानान्यात्मनो लिङ्गमित्यन्यथा वर्णयन्ति। गुणा इच्छादयः, गुणाः परतन्त्रा भवन्तीति न्यायः, गुणत्वं पारिशेष्यात्। न सामान्य-

## न्यायवार्त्तिकतात्पर्य्यटीका

इत्यर्थः। निराकरोति—किं क्वेति। अभिधानस्वरूपमाह—उत्पत्तिरिति। अपि चोत्पत्तेर्भावत्वेऽपि न स्मृतिर्न भावः, भावत्वस्य कार्यमात्रानुबन्धित्वात्, स्मृतेश्च कार्य्यत्वात्। न चानवस्था, नित्ये व्यवस्थानात्। तथा च स्मृतेर्भावस्य भविता आत्मैव नित्यः परिशिष्यत इत्याशयवानाह—यदा चोत्पत्तिरिति। प्रकृतमुपसंहरति—तस्मादिति। तत् सिद्धमेतत्—स्मृतिः पूर्वापरप्रत्ययाभ्यामेककर्तृका, उभाभ्यां सहैकविषयत्वेन प्रतिसन्धीयमानत्वात्। या पुनर्नाभ्यामेककर्तृका सा न तथा प्रतिसन्धीयते, यथा देवदत्तस्य स्मृतिर्यज्ञदत्तप्रत्ययाभ्याम्, न त्वियं न तथा, तस्मात्तथेति।

तदेवं व्यतिरेकिसमर्थनं कृत्वाऽन्वयव्यतिरेकिणमत्रार्थं प्रमाणयति—अथ वेति। अनेकग्रहणमनेकनिमित्तप्रतिषेधशङ्कानिरासार्थं येन प्रागनुभूता रूपादयस्तेनैव गन्ध उपलभ्यत इति खलु मयेति स्मृत्या मम प्रतिसन्धानं तस्माद्भरतमताभ्यासेनाभिनये ये कृतसङ्केतास्तेषाम्, यच्चोक्तं परैः—

"नर्त्तकीभ्रूलताक्षेपो न ह्येकः पारमार्थिकः।
परमाणुसमूहत्वादेकत्वं तस्य कल्पितम्॥" इति।

तत्राह—भ्रूक्षेपस्य एकत्वात्। न भ्रूः परमाणुसमूहोऽपि तु अवयवि द्रव्यमेकम्, तद्गतं च रेचितमपि क्रियैकैव। भवतु वा परमाणुसमूह एव भ्रूक्षेपः, तथाऽपि समूहस्य समूहिभ्योऽनन्यत्वात् परमाणव एव, तेषां च प्रत्येकमेकता, अनेकभरतमतनिपुणप्रतिपत्तृसाधारणता च। अस्ति च तेषामपि स्वगोचरो विकल्पोत्पादनपरंपरया मयेति प्रतिसन्धानहेतुभाव इति यत्किञ्चिदेकत्वं तस्य कल्पितमिति। तदेवं प्रतिसन्धानद्वारेणेच्छादीनामात्मलिङ्गत्वमुक्त्वा सम्प्रति गुणतया लिङ्गतां वार्तिककृदाह—अथ वेति। गुणत्वेनेच्छादीनां पारतन्त्र्यं रूपादिवत्साधनीयम्, तच्चानित्यत्वेनैव

(१) स्वयमेव १९१ पृष्ठे १ पंक्तौ उक्तम्।

## न्यायभाष्यम्

तस्य भोगाधिष्ठानम्—

### ( सू )—चेष्टेन्द्रियार्थाश्रयः शरीरम् ॥ ११ ॥

कथं चेष्टाश्रयः ? ईप्सितं जिहासितं वाऽर्थ(१)मधिकृत्येप्साजिहासाप्रयुक्तस्य

## न्यायवार्त्तिकम्

विशेषसमवायाः, अनित्यत्वात्। न द्रव्यं कर्म वा व्यापकद्रव्यसमवायात् शब्दवदित्यादि- सामान्यतोदृष्टमित्येतस्मिन्ननुमानं व्यवस्थितम्। एतेनानित्यत्वात् पारतन्त्र्यमिच्छादीनां कार्यत्वाच्च रूपादिवदित्युक्तम्। अयावद्द्रव्यभावित्वेन शरीरगुणत्वप्रतिषेधः (२), तत्प्रतिषेधा- च्चात्मगुणत्वमिति परिशेषात् सिद्ध आत्मेति ॥ १० ॥

चेष्टेन्द्रियार्थाश्रयः शरीरमिति। का पुनरियं चेष्टा ? हिताहितप्राप्तिपरिहारार्थः स्पन्दः।

## न्यायवार्त्तिकतात्पर्य्यटीका

सामान्यविशेषसमवायेभ्यो व्यावर्तकेन सिद्धम्, न ह्यनित्यो भावो द्रव्यात् स्वतन्त्रो भवति। तस्माद् गुणत्वसाधकादेव हेतोः पारतन्त्र्यसिद्धेः कृतं गुणत्वेन पारतन्त्र्यसाधकेनेति हृदि निधाय वार्तिककारस्तदपि पूर्वमुक्तमिति सिद्धेन पारतन्त्र्येण गुणत्वमपि साधयति। न चैतदनित्यस्य पारतन्त्र्यं द्रव्येण सिध्यति, द्रव्यकर्म्मणोरप्यनित्ययोः पारतन्त्र्यात्। तस्मादनित्यत्वसिद्धेन द्रव्यपार- तन्त्र्येण द्रव्यकर्म्मभ्यां विवेचयति—न द्रव्यं कर्म्म वेच्छादयः, व्यापकद्रव्यसमवायात् शब्दवदित्यादि, यद्यप्यनित्यत्वेन द्रव्यसमवायमात्रं सिध्यति, तथाऽपि द्रव्यकल्पनमात्रेणैवोपपत्तौ तदवयवकल्पनायां प्रमाणाभावेन तद् द्रव्यमनवयवं तावत् सिद्धम्। अनवयवद्रव्यं द्वेधा—व्यापक- मणु च। न तावदणु, तत्र तत्रेच्छादीनामुपलब्धेः। क्वचिदन्यतरकर्म्मणा क्वचित् स्वभावतस्तत्संयोगोप- पत्तौ तद्गतिकल्पनायां प्रमाणाभावात् सिद्धमस्य व्यापकत्वम्, तदेतदादिग्रहणव्याख्यानम्। तदनया वक्रोक्त्या नित्यत्वं परममहत्त्वं चाऽऽत्मनो दर्शितमिति। एतच्च सामान्यतोदृष्टमनुमानं सूत्रयता सर्वं वर्णितमित्याह—सामान्यत इति। यत्पूर्वं हृदि स्थितमिच्छादीनां पारतन्त्र्ये साध्येऽनित्यत्वहेतु- कानुमानम्, तदुद्घाटयति कार्य्यत्वमपि हेतुं समुच्चिनोति—एतेनेति। नन्वस्तु द्रव्यपारतन्त्र्यं तथाऽपि शरीरपारतन्त्र्यमस्तु, कृतमनुपलब्धचरेणात्मना ?—इत्यत आह—अयावदिति। सर्वपुरुष- साधारण्यप्रसङ्गाच्च न पृथिव्यादिगुणाः, तदुत्पत्तौ करणत्वेन कल्पनाच्च नाकर्तुर्मनसः, तस्माद्दृष्ट- द्रव्यातिरिक्तं द्रव्यान्तरम्, तत्रेच्छादयः, स चात्मेति सिद्धमित्याह—तत्प्रतिषेधादिति ॥ १० ॥

आत्मानं लक्षयित्वाऽऽत्मनो दुःखनिदानानामिन्द्रियादीनां सर्वेषां साक्षात्पारंपर्य्येण शरीर- माश्रित्य तन्निदानत्वमिति तदेवास्य दुःखमूलकारणमित्यनन्तरं शरीरं लक्षयितुं सूत्रम्—चेष्टेत्यादि।

(१) "चाऽर्थम्" इति चा०। (२) चादर्शे—"शरीरे गुणत्वप्रतिषेधः" इत्येवं पाठः।

## न्यायभाष्यम्

तदुपायानुष्ठानलक्षणा समीहा चेष्टा, सा यत्र वर्त्तते तच्छरीरम्। कथमिन्द्रियाश्रयः ? यस्याऽनुग्रहेणाऽनुगृहीतानि उपघाते चोपहतानि स्वविषयेषु साध्वसाधुषु वर्तन्ते स

## न्यायवार्त्तिकम्

सुखसाधनोपलब्धौ तदीप्साप्रयुक्तस्य यः परिस्पन्दः सा चेष्टेति गम्यते। एवं दुःखसाधनोपलब्धौ तज्जिहासानुष्ठानलक्षणः परिस्पन्द इति। कथमिन्द्रियाणां शरीरमाश्रयः, स्वकारणवृत्तित्वादवृत्तित्वाच्च ? यानि तावत्कार्याणीन्द्रियाणि तानि स्वकारणवृत्तीनि। यदकार्यं तदवृत्ति। घ्राणादीनि

## न्यायवार्त्तिकतात्पर्य्यटीका

तदवताराय भाष्यम्—तस्येति, तस्येत्यात्मानं परामृशति। भोगः सुखदुःखसंवित्, तदधिष्ठानं शरीरम्, तदनेन सर्वस्यास्यानर्थसंभारस्य परमनिदानं शरीरमतस्तदेवेन्द्रियादिभ्यः पूर्वं लक्षणीयमित्युक्तम्। अत्र चेष्टाश्रयत्वेनेन्द्रियाश्रयत्वेनार्थाश्रयत्वेन च प्रत्येकं समानजातीयेभ्य आत्मेन्द्रियादिभ्योऽसमानजातीयेभ्यः प्रमाणसंशयादिभ्यः शरीरं व्यवच्छिद्यते। कथं चेष्टाश्रय इति भाष्यम्, तस्यार्थं व्याचष्टे—का पुनरिति। चेष्टा व्यापारः, स चातिव्यापकतया अव्यापकतया च न लक्षणम्, वृक्षादिषु भावात्, अभावाच्च पाषाणमध्यवर्तिमण्डूकादिशरीरे इति भावः। अत्रोत्तरभाष्यम्—ईप्सितमित्यादि, तद्व्याचष्टे—हिताहितेति। प्रयुक्तस्य उत्पादितप्रयत्नस्य, न व्यापारमात्रं चेष्टाऽभिमता, अपि तु विशिष्टो व्यापारः, स च न वृक्षादिष्वस्तीति नातिव्यापकता। यद्यपि च दारुयन्त्रादिष्वीदृशो व्यापारोऽस्ति तथापि मूर्त्तान्तराप्रयोगे (१) सतीति विशेषणान्न व्यभिचारः, तेषां शरीरे मूर्त्तेन प्रयोगात्। शरीरस्य मूर्त्तान्तराप्रयुक्तस्य ईदृशव्यापाराश्रयत्वम्, पाषाणमध्यवर्तिनश्च मण्डूकदेहस्य तद्व्यापारायोगेऽपि तद्योग्यत्वात्, पाटिते पाषाणे तादृशस्य तद्व्यापारस्य दर्शनादिति भावः। कथमिन्द्रियाश्रय इति भाष्यं व्याचष्टे—कथमिति

## वृत्तिः

क्रमप्राप्तं शरीरं लक्षयति—( चेष्टेन्द्रियेत्यादि )। अत्र चेष्टादिमिलिताश्रयत्वं(२) न लक्षणम्, वैयर्थ्यात्, अपि त्वाश्रयपदस्य प्रत्येकमन्वयात् चेष्टाश्रयत्वादिलक्षणत्रये तात्पर्यम्। चेष्टात्वं च प्रयत्नजन्यतावच्छेदको जातिविशेषः। न च शरीरा-

---

(१) ननु "इतराप्रयोगे सति" इत्येवं विशेषणेनैव व्यभिचारवारणसम्भवे मूर्त्तेत्युपादानं व्यर्थमिति चेन्न, इतरपदेनात्र लक्ष्यीभूतशरीरव्यतिरिक्ताभिप्रायेण प्रकृते लक्ष्ये इच्छादिप्रयुक्ततया इतराप्रयोगाभावादव्याप्तिः प्रसज्येत, इति तद्वारणार्थं तस्य सार्थक्यात्, स्वयमपि एतत्सूत्रटीकायाः शेषभागे 'मूर्त्तान्तराप्रयोगे सति' इत्यादिना सार्थक्यान्तप्रदर्शनाच्च। (२) "चेष्टादीनां मिलितानामाश्रयत्वमि"ति का·भा·व०।

## न्यायभाष्यम्

एषामाश्रयः तच्छरीरम्। कथमर्थाश्रयः? यस्मिन्नायतने इन्द्रियार्थसन्निकर्षादुत्पन्नयोः

## न्यायवार्त्तिकम्

त्वक्पर्यन्तानि कार्याणि, श्रोत्रमनसी त्वकार्ये। न च घ्राणादिमनःपर्यन्तमिन्द्रियं शरीरवृत्ति, तस्मादयुक्तमिन्द्रियाश्रयः शरीरमिति। शरीरानुविधानमिन्द्रियाश्रयत्वं ब्रूमः, न पुनराधाराधेय-भावेनेन्द्रियाणि शरीरे वर्तन्त इति। अपि तु शरीरस्योपघातानुविधानमिन्द्रियाश्रयत्वस्यार्थः। शरीरानुग्रहेणानुगृह्यन्ते, तदुपघाते चोपहन्यन्ते इत्ययमाश्रयार्थः, तस्मादयथार्थ आक्षेप इति। एतेनार्थानामाश्रयार्थ उक्तो वेदितव्यः। किं कारणम्? न हि गन्धादयोऽर्थाः शरीरवृत्तयः। यत्तु तेषां कार्यं सुखदुःखोपलब्धिनिमित्तत्वम्, तन्नासति शरीरे भवतीति शरीराश्रया उच्यन्ते। यथा ग्रामीणा ग्रामण्यमाश्रिता इति। कथं पुनरेते चेष्टादयः सामान्यशब्दाः सन्तो विशेषवृत्तयो भवन्तीति? सामान्यशब्दानामपि विशेषवृत्तित्वम् सामर्थ्यात्, सामर्थ्यं प्रकरणादि, ब्राह्मणान् भोजयेति यथाऽशेषब्राह्मणभोजनस्याशक्यत्वात् विशेषेण सन्निधीयमानं प्रकरणापन्नं ब्राह्मणविशेष-माह, एवं चेष्टादिशब्दानामपि सामर्थ्याद्विशेषेऽवस्थानम्। सामर्थ्यं च लोकतस्तदधिगतिः प्रमाणासम्भवो वा। लोकतस्तावत् चेष्टाशब्दं न क्रियामात्रे प्रयुङ्क्ते किन्तु विशेष इति। यथा

## न्यायवार्त्तिकतात्पर्य्यटीका

संयोगितया त्विन्द्रियाश्रयत्वे घटादीनामपि शरीरत्वप्रसङ्गः, तेषामपीन्द्रियसंयोगित्वादिति भावः। यस्येत्यादिपरिहारभाष्यं व्याचष्टे—शरीरेति। एतेनेति। तदवृत्तित्वेनानुपपत्त्याऽर्थानामप्य-न्यादृश आश्रयार्थो व्याख्येयः। यद्यपि गन्धादयो विषया न स्वरूपेण शरीरमाश्रयन्ते तथाऽपि यत्तेषां सुखाद्युपलम्भहेतुत्वं कार्य्यं प्रयोजनं तदर्थमाश्रयन्ते इत्यर्थः। तदनेन यस्मिन्नित्यादि-भाष्यं व्याख्यातम्। चोदयति—कथं पुनरिति। परिहरति—सामान्येति। विशेषेण बुभुत्सितत्वादिना प्रकरणापन्नं नियन्त्रितं सामर्थ्यम्। प्रकरणादीत्यादिपदसंगृहीतमपरमपि सामर्थ्य-शब्दार्थमाह—सामर्थ्यं चेति। अपरमप्याह—प्रमाणेति। अत्र प्रथमे पक्षे चेष्टाशब्दो व्यापार-

## वृत्तिः

वयवेऽतिव्याप्तिः, अन्त्यावयवित्वेन विशेषणात्। न च निष्क्रिय(१)शरीरेऽव्याप्तिः(२), तादृशे मानाभावात्। अत एव वाऽऽह(३) इन्द्रियार्थाश्रय(४) इति। इन्द्रियाश्रयत्वं च अवच्छेदकताख्यस्वरूपसम्बन्धविशेषेण, चक्षुष्मान् देवदत्तोऽयमित्यादिप्रतीतेः। अर्थाश्रय-त्वमित्यत्रार्थशब्दो न रूपादिपरः, तदाश्रयत्वस्य घटादावतिव्याप्तेः, किन्तु सुखदुःखान्यतर-

(१) "विनष्ट"त्राधिकपाठः ख-पु०। (२) "अतिव्याप्तिरिति" आ-पु प्रामादिकः पाठः। (३) "अत एवाह" इति का-आ-नि-व०। (४) "इन्द्रियाश्रय" इति का-आ-नि-व०।

## न्यायभाष्यम्

सुखदुःखयोः प्रतिसंवेदनं प्रवर्तते स एषामाश्रयः, तच्छरीरमिति ॥ ११ ॥

## न्यायवार्त्तिकम्

स्पन्दते, सर्पति, धावतीति। यथैते स्पन्दादिशब्दाः क्रियावाचकाः सन्तः क्रियाविशेषेष्ववतिष्ठन्ते तथा चायं चेष्टाशब्दः। सामान्यवाच्यपि प्रमाणासम्भवात् क्रियाविशेषे वर्तते, न क्रियामात्राधारस्य शरीरव्यक्तिहेतुत्वं सम्भवतीति। एवं च घटादिष्वप्रसङ्गः। यैरप्यन्नाद्यादिपदप्रयोगे

## न्यायवार्त्तिकतात्पर्य्यटीका

विशेषे स्पन्दादिवन्मुख्यार्थः, तदेतत् लोकस्तावदित्यादिना तथा चायं चेष्टाशब्द इत्यन्तेन दर्शितम्। प्रमाणासंभवो वेति द्वितीयं पक्षं विवृणोति—सामान्यवाच्यपीति। अपिरभ्युपगमे, प्रमाणासंभवोऽनुपपत्तिः, सा तु "न क्रियामात्रे" इत्यनेन दर्शिता(१)। एवं चेष्टापदव्याख्यानेन, घटादिषु न शरीरत्वप्रसङ्गः। एवं भाष्यानुसारेण स्वमतेन प्रत्येकं चेष्टाश्रयत्वादिशरीरलक्षणं वर्णयित्वा समस्तमेवेदं शरीरलक्षणमिति ये वर्णयन्ति तन्मतमपाकरोति—यैरपीति। यदि आद्यपदं लक्षणं चेष्टाश्रय इति, तदा घटेन व्यभिचारः, तदर्थं द्वितीयपदोपादानम् इन्द्रियाश्रय इति, इन्द्रियसंयोगीत्यर्थः। तथापि तेनैव व्यभिचारः, घटादीनामपि प्राप्यकारित्वेनेन्द्रियाणामिन्द्रियसंयोगित्वादत आह—अर्थाश्रय इति, एवमपि व्यभिचारस्तदवस्थ एव, घटादीनामपि रूपाद्यर्थसमवायेनार्थाश्रयत्वात्। अथ समवायाभिप्रायेणाश्रयत्वम्, तथाऽपि न समवाय इन्द्रियाणां शरीरे। घ्राणस्य पार्थिवत्वेन समवायो न विरुद्ध इति चेन्न, तस्य शरीरावयवसमवायित्वेन शरीरासमवायात्। यदि नासिकाग्रमेव घ्राणम्, अथ तदाधारमतीन्द्रियम्, तथाऽपि न तत्समवेतं शरीरम्, प्रत्यक्षाप्रत्यक्षवृत्तेर्वायुवनस्पतिसंयोगवदप्रत्यक्षत्वप्रसङ्गाद्देहस्य। अपि च यदा चेष्टेन्द्रियार्थस्य समवायेन शरीरत्वम्, हन्त भो इन्द्रियसमवायिकारणेषु परमाणुषु समस्तमेतदस्तीति

## वृत्तिः

परः। अत एव भाष्यम् 'यस्मिन्नायतने सुखदुःखयोः प्रतिसंवेदनं प्रवर्त्तते स एषामाश्रयस्तच्छरीरम्'इति। वस्तुतस्तु अन्यतराश्रयत्वमपि न लक्षणम्, किन्तु सुखाश्रयत्वम्, दुःखाश्रयत्वं चेति लक्षणद्वये तात्पर्यम्। शरीरस्य तदाश्रयत्वमवच्छेदकतासम्बन्धेन। हस्तादेरलक्ष्यत्वे त्वन्त्यावयवित्वेन विशेषणीयम्। स्वर्गिशरीरे, नारकिशरीरे, वृक्षादौ च(२)सुखदुःखस्वीकारान्नाऽव्याप्तिः(३)। न च तच्छून्यखण्ड(४)शरीरेऽव्याप्तिः, सुखाद्याश्रयवृत्ति-

(१) किञ्चित्पूर्व्वमेव वार्त्तिककारेण दर्शिता। (२) नि पु "च" नास्ति। (३) नातिव्याप्तिरिति आ-पु प्रामादिकः पाठः। (४) "खञ्ज" इति नि-पु०।

## न्यायभाष्यम्

भोगसाधनानि पुनः—

**(सू)—घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्यः ॥१२॥**

जिघ्रत्यनेनेति(१) घ्राणं गन्धं गृह्णातीति। रसयत्यनेनेति रसनं रसं गृह्णातीति। चष्टेऽनेनेति चक्षू रूपं पश्यतीति। (२)त्वक्स्थानमिन्द्रियं त्वक्। तदुपचारः

## न्यायवार्त्तिकम्

घटादिष्वप्रसङ्ग(३)इति देश्यं क्रियते तदप्यनेन व्याख्यानेन प्रत्युक्तम्। सति तु प्रसङ्गे समस्तपदप्रयोगेऽपि न परमाणुषु प्रसङ्गो वार्य्यत इति। यथा त्वस्माभिर्वर्णितं तथा न क्वचिदपि शरीरादन्यत्र वर्तत इति ॥ ११ ॥

घ्राणरसनचक्षुस्त्वक्श्रोत्राणीन्द्रियाणि भूतेभ्य इति सूत्रम्। लक्षणसूत्राणि समाना-

## न्यायवार्त्तिकतात्पर्य्यटीका

तेषामपि शरीरत्वप्रसङ्ग इत्याह—समस्तेति। स्यादेतत्, भवन्मतेऽपि चक्षुरादिभिरिन्द्रियैर्व्यभिचारः, तेषामपि यथोक्तव्यापाराधारत्वादत आह—यथा त्विति। मूर्त्तान्तराप्रयोगे सतीति विशेषितम्, चक्षुरादयस्तून्मीलनान्मूर्त्तेन शरीरेण प्रयुज्यन्त इति न प्रसङ्गः। श्रोत्रं तु चेष्टाधार एव न भवति। तदेतदुक्तलक्षणं शरीरं भावयन्निर्विद्यत इति सिद्धम् ॥ ११ ॥

इन्द्रियस्योपनायकत्वेनार्थादिभ्यो विशेषादिन्द्रियाणामर्थादिभ्यः पूर्वं लक्षणम्, न च विशेषलक्षणमकृते सामान्यलक्षणे शक्यमिति भाष्यकारः प्रथममिन्द्रियाणां सामान्यलक्षणं निर्वेदोपयुक्तमाह—भोगसाधनानीति। अनेन यच्छरीरसंयुक्तं सत् कारकदोषव्यतिरिक्तं साक्षात्प्रतीतिसाधनं तदिन्द्रियमिति सामान्यलक्षणं सूचितम्। साक्षात्प्रतीतिसाधनमिन्द्रियमिति वक्तव्ये भोगसाधनाभिधानं निर्वेदोपयोगीति। पारंपर्य्येण च भोगसाधनत्वं घ्राणादीनाम्, साक्षान्मनस एव तत्साधनत्वात्। सुखदुःखसाक्षात्कारस्य भोगत्वात्।

घ्राण—भ्यः(४)॥ अत्रेन्द्रियाणीति लक्ष्यनिर्देशः, घ्राणादीनीत्यर्थः। तेषां पञ्चानां पञ्चैव

## वृत्तिः

द्रव्यत्वव्याप्यजातिमत्त्वस्य विवक्षितत्वात्। तादृशजातिश्च मनुष्यत्वचैत्रत्वादिः। कल्पभेदेन नरसिंहशरीराणां भेदान्नरसिंहत्वजातिमादाय नरसिंहशरीरे लक्षणसमन्वय इति ॥११॥

---

(१) "जिघ्रत्यनेन" इति ग-ल-भा-भा०। (२) "स्पृशत्यनेनेति स्पर्शनम्" इत्यधिकपाठः भा-भा-ज०। (३) अत्र 'घटादिष्वतिप्रसङ्गः' इत्येवमेव पाठो भवितुमुचितः प्रतिभाति। (४) टीकाकृद्भिः संक्षेपार्थं सूत्रस्याद्यन्तांशलेखनशैल्या अनया रीत्या पाठः परिगृहीतः, एवमग्रेऽपि बोध्यम्।

## न्यायभाष्यम्

स्थानादिति। श्रृणोत्यनेनेति श्रोत्रं शब्दं गृह्णातीति। एवं समाख्यानिर्वचनसामर्थ्याद्बोध्यं स्वविषयग्रहणलक्षणानीन्द्रियाणीति।

## न्यायवार्त्तिकम्

समानजातीयविशेषणार्थानि सर्वाणीति सूत्रार्थो द्रष्टव्यः। उद्देशसामान्याल्लक्षणाभिधानम्, नामधेयेन पदार्थाभिधानमात्रमुद्देश इत्युद्देशलक्षणमुक्तम्(१)इदं च तथाभूतं तस्मादलक्षणमिति। नेदं तथा, करणभावात् स्वविषयग्रहणलक्षणत्वमिन्द्रियाणाम्, करणस्वभावकानीन्द्रियाणीति तेषामतीन्द्रियाणां यत् स्वविषयग्रहणं तेन लक्ष्यन्त इति स्वविषयग्रहणलक्षणत्वं वेदितव्यम्, असाधारणत्वादिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

लक्षणानीति कथयति—लक्षणसूत्राणीति। आपाततः सूत्रम्, विचार्य्यमाणानि च सूत्राणीत्यर्थः। समानजातीयं घ्राणादेरसनादि, प्रतिनियतविषयत्वात्। असमानजातीयं तु मनआदि सर्वविषयमिति। जिघ्रतीत्यादिभाष्यनिराकरणीयशङ्कामाह—उद्देशेति, प्रमाणाद्युद्देशेन साम्यादित्यर्थः। लक्षणं हि विधेयम्, लक्ष्यं चोद्देश्यम्, ज्ञातं चोद्दिश्यतेऽज्ञातं च विधीयत इति। न चैकस्य युगपज्ज्ञानाज्ञाने संभवतः, नापि लक्ष्यलक्षणत्वे इति भावः। परिहरति—नेदं तथा यथोद्देश इत्यर्थः। कस्मात्? करणभावात् स्वविषयग्रहणलक्षणत्वं यतो घ्राणादीनाम्। एतदुक्तं भवति—इन्द्रियाणामतीन्द्रियत्वात्सर्वदा स्वस्वविषयोपलब्धिकरणत्वेनैवानुमातव्यानि, तस्मात् स्वस्वविषयोपलब्धिसाधनत्वमेव समानासमानजातीयव्यवच्छेदकतया लक्षणम्, तदेकार्थसमवायि घ्राणत्वादि लक्ष्यम्। अत्र च घ्राणादिशब्दाः पङ्कजादिपदवदवयवार्थं निमित्तीकृत्य क्वचित् क्वचित् सामान्यविशेषे वर्त्तन्ते, अवयवार्थस्य प्रतीयमानस्यासति बाधके परित्यागायोगात्। अश्वकर्णादौ वृक्षविशेषवाचके वाजिकर्णायोगेन बाधकेनावयवार्थपरित्यागात्। अवयवार्थयोगेऽपि गन्धाद्युपलब्धिसाधने सन्निकर्षादौ घ्राणादिशब्दाप्रयोगात् अवयवार्थान्वितं घ्राणत्वाद्येव घ्राणादिशब्दप्रवृत्तिनिमित्तम्, तथा च घ्राणादिपदमेव घ्राणत्वादिपरं लक्ष्यनिर्देशः, तच्च "इन्द्रियाणी"त्यनेन सूचितम्, तदेव त्ववयवार्थपरं लक्षणनिर्देशो घ्राणेति। न च सन्निकर्षेण गन्धोपलब्धिसाधनेन च व्यभिचारः, इन्द्रियसामान्यलक्षणयुक्तस्य गन्धोपलब्धिसाधनत्वं(२)न सन्निकर्षस्यास्ति, तदनेन जिघ्रतीत्यादि स्वविषयग्रहणलक्षणानि इत्यन्तं भाष्यं व्याख्यातम्। निर्वचनग्रहणेन पदप्रवृत्तिनिमित्तमात्र-

## वृत्तिः

इन्द्रियं विभजते लक्षयति च— ( घ्राणरसनेत्यादि )। यद्यपि मनसोऽपीन्द्रियत्वमस्त्येव, तथाऽपि घ्राणेत्यादेरुपलक्षणपरत्वान्न दोषः। वस्तुतस्तु 'इन्द्रियाणि'-

(१) ८४ पृष्ठे भाष्ये वार्त्तिके च उक्तम्। (२) "इन्द्रियसामान्यलक्षणयुक्तस्य" इत्यत्र षष्ठ्यर्थो निष्ठत्वम्, तथा च इन्द्रियसामान्यलक्षणयुक्तनिष्ठं यद् गन्धोपलब्धिसाधनत्वम्, तत् "सन्निकर्षस्य" सन्निकर्षे नास्तीत्यर्थः।

## न्यायभाष्यम्

भूतेभ्य इति। नाना(१)प्रकृतीनामेषां सतां विषयनियमः, नैकप्रकृतीनाम्। सति च विषयनियमे स्वविषयग्रहणलक्षणत्वं भवतीति ॥ १२ ॥

## न्यायवार्त्तिकम्

भूतेभ्य इति पृथिव्यादिकारणोपदेशो नियमार्थः। कः पुनरयं नियमः? भूतगुणविशेष ग्रहणसाधनत्वम्, न सर्वमिन्द्रियं सर्वभूतगुणविशेषं गृह्णातीति। अपि तु यज्जातीयमिन्द्रियं भवति तस्य यो गुणविशेष इतरेतरभूतव्यवच्छेदहेतुर्गन्धादिः स तेनैवेन्द्रियेण गृह्यत इत्ययं नियमः।

## न्यायवार्त्तिकतात्पर्य्यटीका

मुच्यते, तेन त्वक्पदमपि संगृहीतं भवति। तस्यापि त्वक्स्थाने इन्द्रिये स्पर्शोपलब्धिसाधने एवोपचार इति।

भूतेभ्य इति सूत्रावयवतात्पर्यपरं भाष्यं भूतेभ्य इति, नानाप्रकृतीनामित्यादि, तद्वार्त्तिककारो व्याचष्टे—भूतेभ्य इति। पृथिव्यादीति। पृच्छति—कः पुनरिति। उत्तरम्—भूतगुणविशेषग्रहणसाधनत्वम्, घ्राणेनैव पृथिव्या यो गुणविशेषो गन्धः स गृह्यते, न रसनादिना। एवं रसनेनैवापां यो माधुर्यं गुणविशेषः स गृह्यते, एवं चक्षुषैव शुक्लभास्वरं रूपं तेजस इति, एवं त्वचैवानुष्णाशीतस्पर्शोऽपाकजो वायोः, एवं श्रवणेनैव शब्दो नभस इति नियमः। अत्र च प्रयोगः—गन्धोपलब्धिः करणसाध्या क्रियात्वात् छिदिक्रियावदिति। एवं सा तदन्यक्रियाकरणातिरिक्तकरणनिष्पाद्या तदन्वयव्यतिरेकाननुविधाने सति कार्य्यत्वात्, या क्रिया यत्करणान्वयव्यतिरेकाननुविधाने सति कार्य्या, सा सर्वा तत्क्रियाकरणातिरिक्तकरणनिष्पाद्या, यथा पटादिक्रिया घटादिक्रियाकरणदण्डाद्यतिरिक्त-करणनिष्पाद्या, तथा चेयम्, तस्मात्तथा। तच्च करणं चक्षुराद्यतिरिक्तं घ्राणम्, तद्द्रव्यम्, संयोगाधारत्वात्, तच्च पार्थिवम्, द्रव्यत्वे सति रूपादिषु मध्ये गन्धस्यैव व्यञ्जकत्वात् पार्थिवान्तरवत्। एवं रसनादिष्वपि योज्यम्। तदिदमुक्तं यज्जातीयमिन्द्रियं पार्थिवं पाथसीयं वा भवति, तस्य पृथिव्याः पाथसो(२) यो गुणविशेषो गन्धो वा मधुर एव वा रसभेदः, तेन पृथिवी अब्वाय्वादिभ्यः, आपो वा पृथिव्यादिभ्यो व्यवच्छिद्यन्ते, इतरेतरभूतव्यवच्छेदहेतुः

## वृत्तिः

इत्यस्य बहिरिन्द्रियाणीत्यर्थः। तेन 'भूतेभ्यः' इत्यस्य नाऽसङ्गतिः। अत्र चैतानि इन्द्रियाणीति वदता घ्राणाद्यन्यान्यत्वं लक्षणमिति सूचितम्।

---

(१) ग-पु "नाना" नास्ति। (२) अत्रैको "वा"कारः अपेक्ष्यते, पूर्वापरक्रमानुरोधात्।

## न्यायवार्त्तिकम्

ऐकात्म्ये पुनरयं नियमो न स्यात्। यदि पुनरिन्द्रियाण्येकात्मकानि एककारणकानि स्युः कारणस्वभावानुविधानादैकात्म्याद्विषयव्यवस्था न स्यात्, सर्वं सर्वार्थमेकं वा सर्वार्थमिति स्यात्। एककारणानामपि स्वभावभेदो रूपादिवदिति चेत्—अथ मन्येथाः दृष्ट एककारणानां पाकजरूपादीनां स्वभावभेदः। कतमत् पुनरेकं कारणं रूपादीनाम्? अग्निसंयोग इति न, सिद्धान्तापरिज्ञानात्। न ब्रूमोऽग्निसंयोगादेकस्माद्रूपादय इति, अपि तु पूर्वरूपादिविशेषापेक्षात्, यद्द्रव्यं पच्यतेऽग्निसंयोगेन, तस्य ये पूर्वरूपादयस्तेषां यः स्वगतो विशेषः(१)तमपेक्षमाणोऽग्निसंयोग उत्तरान् रूपादीन् विशिष्टानारभते। एवं च कृत्वा परमाणोः पक्वतरतमादिभेदः। तस्मान्नैककारणपूर्वका रूपादय इति न किञ्चिदप्येककारणकं कार्यं दृष्टमिति। सर्वं हि कार्यं प्रादुर्भवत् समवाय्यसमवायिनिमित्तकारणेभ्यो भवतीति। एकं कर्म्म संयोगविभागकारणं दृष्टमिति चेन्न, अनभ्युपगमात्। स्यान्मतिर्ननु च दृष्टं कर्म्म संयोगविभागकारणकमिति, न, अनभ्युपगमात्। नैतदभ्युपगच्छामो निरपेक्षं कर्म संयोगविभागयोः कारणमिति, यदि तर्हि कर्मापि सापेक्षं संयोगविभागौ करोति, कर्मलक्षणहानिः। यन्निरपेक्षं संयोगविभागकारणं तत् कर्मेत्युक्तं तद्धीयेत, लक्षणहानेश्च न कर्म्म, ततश्च संयोगविभागौ न कर्म्म पूर्वकाविति। नैष दोषः। न ब्रूमो निरपेक्षं

## न्यायवार्त्तिकतात्पर्य्यटीका

स तेनैवेन्द्रियेण गृह्यते, नान्येनेति। न चैवं रसना अपामिव पृथिव्या अपि रसभेदं गृह्णातीति पार्थिवी भवति, तथात्वे तया गन्धोऽप्युपलभ्येत। येन "तेनैवेन्द्रियेणे"ति नियमो गुणविशेषमवधारयति, न त्विन्द्रियमिति। अत्र च कर्णशष्कुलीसंयोगोपाधिना श्रोत्रस्य नभसः कथञ्चिद् भेदं विवक्षित्वा भूतेभ्य इति पञ्चम्यर्थो व्याख्यातः। अनेन खल्वाहङ्कारिकाणीन्द्रियाणि इति यदाहुः सांख्यास्तन्निराकृतम्। निराकरणहेतुमाह—ऐकात्म्य इति श्लिष्टं पदम्, सांख्यानां किल राद्धान्ते कारणात्मकं कार्य्यम्, तच्च कारणमिन्द्रियाणामहङ्कार एक इत्यैकात्म्यमेककारणकत्वम् तथा चैकात्म्यमेकत्वं घ्राणादीनामित्यनियमः स्यादिति। तदेतद्विभजते—यदि पुनरिति। शङ्कते—एकेति। विभजते—अथेति। एकः पाक्य एकोऽग्निसंयोगः एकं चौष्ण्यमित्यर्थः। निराकरोति—न ब्रूम इति। यद्यप्यौष्ण्यं निमित्तं साधारणम्, तथापि गन्धाद्युत्पत्तौ पूर्वगन्धादिध्वंसानां भेदादुत्पन्नं कार्य्यनानात्वमिति। तदिदमुक्तं ये पूर्वे रूपादयः तेषां स्वगतो विशेषः

## वृत्तिः

प्रत्यक्षजनकतावच्छेदकतया इन्द्रियत्वमखण्डोपाधिरूपमित्यन्ये। घ्राणत्वादिकं जातिविशेषरूपम्। कर्णशष्कुल्यवच्छिन्नं नभः श्रोत्रम्।

(१) "ये पूर्वे रूपादयः तेषां स्वगतो विशेषः" इति तात्पर्य्यं।

### न्यायभाष्यम्

कानि पुनरिन्द्रियकारणानि ?

## पृथिव्यापस्तेजो वायुराकाशमिति भूतानि ॥ १३ ॥

संज्ञाशब्दैः पृथगुपदेशो भूतानां विभक्तानां (१) सुवचं कार्यं भविष्यतीति ॥ १३ ॥

### न्यायवार्त्तिकम्

कर्म कारणमिति न किञ्चिदपेक्षत इति। अपि तु चरमभाविनिमित्तान्तरं नापेक्षत इत्ययं निरपेक्षार्थः। यथा द्रव्यजातं समानजातीयद्रव्यं संयोगं च चरमभाविनमपेक्षमाणं द्रव्यमारभते, नैवं कर्मजातीयं पश्चाद्भाविनिमित्तमपेक्षते, अपि तु कर्म सत्, संयोगविभागावारभते, तस्माच्च कर्मलक्षणहानिः, न चैकपूर्वकत्वं संयोगविभागयोरिति ॥ १२ ॥

### न्यायवार्त्तिकतात्पर्य्यटीका

प्रध्वंस इत्यर्थः। अथ रूपत्वादिसामान्यमेव कस्मात् न स्वगतो विशेष इत्यत आह—एवं च कृत्वेति। रूपत्वादिसामान्यानां तादवस्थ्ये न पक्वतरतमादिभेदः, प्रध्वंसानां तु स्तोकभूयस्त्वं निःशेषत्वे नोपपद्यत इति भावः। पुनः शङ्कते—एकं कर्म्मेति। निराकरोति—नेति। समवायिकारणं स्वात्मप्रत्यासत्तिं वाऽपेक्षत इति भावः। शङ्कते—यदि तर्हीति। लक्षणहानिस्तथा च लक्ष्यहानिरित्यर्थः। निराकरोति—चरमभाविनिमित्तान्तरं भावरूपमित्यर्थः। संयोगाभावं तूत्तरसंयोगजननायापेक्षत एव। उपसंहरति—तस्मादिति ॥ १२ ॥

इन्द्रियप्रकृतित्वं तु भूतलक्षणं वेदितव्यम् ॥ १३ ॥

### वृत्तिः

घ्राणादीनि किंप्रकृतिकानीत्याकाङ्क्षायामाह—भूतेभ्य इति। तेनेन्द्रियाणामहङ्कारप्रकृतिकत्वं नेति मन्तव्यम्। व्युत्पादयिष्यते चेदं तृतीयाध्याये (२)।

अत्र घ्राणादीनां चतुर्णां पृथिव्यादिजन्यत्वं सम्भवति, श्रोत्रस्य कर्णशष्कुल्यवच्छिन्नाकाशस्य कर्णशष्कुल्या जन्यत्वादेव जन्यत्वव्यपदेशः।

अथ वा अभिन्नानीति पूरयित्वा भूताभिन्नानीति व्याख्येयम्। घ्राणादीत्यस्योपलक्षणपरत्वे तु भूतेभ्य इति बहिरिन्द्रियपरम् (३) ॥ १२ ॥

---

(१) 'विभक्तानाम्' इति-ल-पु नास्ति। (२) ३।१।३५ सूत्रवृत्तौ। (३) घ्राणादीत्यस्य उपलक्षणपरत्वे 'भूतेभ्यः' इत्यंशस्य भूतप्रकृतिकानीति भूताभिन्नानीति वा अर्थकरणे द्वयोरेव पक्षयोरसङ्गतिः, घ्राणादिषु मनसोऽपि संगृहीतत्वेन तत्र भूतप्रकृतिकत्वस्य भूताभेदस्य चासम्भवात्, अत उपलक्षणपक्षे 'भूतेभ्यः' इत्यंशस्यार्थं योजयितुमाह—घ्राणादीत्यादि। तथाच 'भूतेभ्यः' इत्यनेन सर्व्वेषामिन्द्रियाणां भूतप्रकृतिकत्वं भूताभिन्नत्वं वा न निरूप्यते, किन्तु बहिरिन्द्रियाणामेवेति इन्द्रियोद्देशावसरे मनस उपलक्षणावश्यकत्वेऽपि नासङ्गतिरिति भावः।

## न्यायभाष्यम्

इमे तु खलु—

### गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्थाः ॥१४॥

पृथिव्यादीनां यथाविनियोगं गुणा इन्द्रियाणां यथाक्रममर्था विषया इति ॥ १४ ॥

## न्यायवार्त्तिकम्

गन्धरसरूपस्पर्शशब्दाः पृथिव्यादिगुणास्तदर्था इत्येतत् सूत्रम्। पृथिव्यादिगुणा इत्येतस्मिन् पदेऽनेकः समासः सम्भवति। कथमिति ? पृथिव्यादीनां गुणा इति षष्ठीसमासः,

## न्यायवार्त्तिकतात्पर्य्यटीका

क्रमप्राप्तमर्थलक्षणमवतारयति भाष्यकारः—इमे त्विति। तु-शब्देनार्थमात्राद् व्यवच्छिनत्ति। येषामिन्द्रियविषयत्वेन भाव्यमानानां निःश्रेयससाधकत्वम्, मिथ्याज्ञानविषयीकृतानान्तु संसारनिमित्तता, त इमे इत्यर्थः।

गन्ध—र्थाः (सू॰ १४)॥ अत्र चोद्देशक्रमस्मारिता अर्था लक्ष्यतया प्रतिपत्तव्याः, तेषां च लक्षणं तदर्था इति। तदित्यनन्तरलक्षितानीन्द्रियाणि परामृशति, तेषामिन्द्रियाणामर्थाः। इन्द्रियैरर्य्यमाणत्वमर्थानां लक्षणम्। एतावतैव लक्षणे पर्य्यवसिते सुहृद्भावेन विभागाभिधानं पृथिव्यादिगुणा इति। पृथिव्यप्तेजांसि च गुणाश्च धर्म्माः संख्याकर्म्मादयः। विभागेऽप्येतावताऽवगते गन्धाद्यभिधानं सुहृद्भावेनेन्द्रियविषयनियमज्ञापनार्थम्। पृथिव्यादीनामिति। भाष्यं न षष्ठीसमासज्ञापनार्थम्, अपि त्वर्थाभिधानमात्रम्। यथाविनियोगमिति। यथाक्रमं पृथिव्यादिष्वनिलान्तेषु गन्धादयः स्पर्शान्ताः चतुस्त्रिद्व्येकनियमेन विनियुक्ताः, शब्दश्चाकाश एवेत्यर्थः। तदर्था इति लक्षणपदं व्याचष्टे—इन्द्रियाणामिति। येन क्रमेण घ्राणादय इन्द्रियसूत्रे पठिताः, येन चेह गन्धादयः, तदनतिक्रमेणेत्यर्थः। अत्र वार्त्तिककारः पृथिव्यादिगुणा इत्यत्रानेकसमासप्रतिभासनात् संशयं कृत्वा द्वन्द्वसमासमवधारयति—पृथिव्यादिगुणा इति। षष्ठीसमासे-

## वृत्तिः

भूतान्येव कानीत्याकाङ्क्षायामाह—( पृथिव्याप इत्यादि )।

आरम्भे परस्परानपेक्षत्वसूचनायाऽसमासकरणम्। भूतत्वं तु बहिरिन्द्रियग्रहणयोग्य(१)विशेषगुणवत्त्वम्। पृथिवीत्वादयस्तु जातिविशेषा इति ॥ १३ ॥

क्रमप्राप्तमर्थं विभजते लक्षयति च—( गन्धरसेत्यादि )।

वैशेषिकाणां द्रव्यगुणकर्मस्वर्थशब्दाभिधेयत्वमतः पञ्चानां गन्धादीनामेव कथं तत्त्व-

(१) 'ग्रहणायोग्येति' नि पु-पाठः।

## न्यायवार्त्तिकम्

पृथिव्यादीनि च गुणाश्चेति द्वन्द्वः, पृथिव्यादयो गुणा येषामिति बहुव्रीहिः, एवमनेकसमासोपपत्तेः संशयः किमत्र तत्त्वमिति ? द्वन्द्वः समास इति तत्त्वम्। षष्ठीसमासस्तावन्न, पृथिव्यादीनामनिन्द्रियार्थत्वप्रसङ्गात्। यदि पृथिव्यादीनां गुणा इति षष्ठीसमासः स्यात्, पृथिव्यादीनां गन्धादिगुणविशेषणत्वेनोपयुक्तानामिन्द्रियार्थत्वं न स्यात् विशेषणवैयर्थ्यं च स्यादिति। गन्धरसरूपस्पर्शशब्दा इत्युक्ते पृथिव्यादिगुणा गम्यन्ते ततश्च पृथिव्यादिग्रहणं व्यर्थम्। न हि गन्धादीनां द्वैराश्यमस्ति पृथिव्यादिगुणत्वं चान्यगुणत्वं च यतो विशेषणमर्थवत् स्यात्, तस्मान्न षष्ठीसमासः। गुणिनामसिद्धेर्न बहुव्रीहिः पृथिव्यादयो गुणा येषां, के ते गुणिनो येषां पृथिव्यादयो गुणाः। न च पृथिव्यादीनां गुणत्वं शक्यं प्रतिपादयितुम्। न चान्यथा बहुव्रीहिः। प्रायेणायं समानाधिकरणपूर्वो भवति यथा चित्रगुरिति, गोमत्तायां प्रसिद्धायां चित्रगुणसम्बन्धे चाप्रसिद्धे गवां चित्रगुरिति बहुव्रीहिः, न पुनरिह गुणी प्रसिद्धः। नापि पृथिव्यादीनां गुणत्वं प्रसिद्धम्। विशेषणत्वाद्द गुणाः पृथिव्यादय इति स्यात्, तन्न, सर्वो गुण एव स्यादेतस्यां कल्पनायाम्, न हि कस्यचित् कश्चित् विशेषणं विशेष्यो वा न भवतीति सर्वगुणत्वप्रसङ्गः, तस्माद्बहुव्रीहिरपि न। उभयसमासप्रतिषेधादन्यसमासाभावाच्च द्वन्द्वः। यस्मात् षष्ठीतत्पुरुषबहुव्रीही प्रतिषिद्धौ समासान्तरं च न सम्भवतीति शिष्यमाणश्च द्वन्द्वः, तस्मात् द्वन्द्वः समास इति। न द्वन्द्वः समासः, शास्त्रयुक्त्योरभावात्। यद्ययं द्वन्द्वो भवति शास्त्रं युक्तिर्वा पृथिव्यादीनामिन्द्रियार्थत्वे वक्तव्या इति, न, उभयस्याऽप्युपपत्तेरिति। उभयं पृथिव्यादीनाम् इन्द्रियार्थत्वे शास्त्रं युक्तिश्च सम्भवति। शास्त्रं तावत् दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

नाभिन्नार्थत्वात् सप्तमीसमासो न दर्शितः। ननु कण्ठेकाल इतिवद्वैयधिकरण्येऽपि बहुव्रीहिर्भविष्यति पृथिव्यादीनां गुणा येभ्यो गन्धादिभ्यस्ते तथा। तथा हि परमाणुगता गन्धादयोऽवयविनि गन्धाद्यारभन्ते, नभोगतश्च शब्दो नभसि समानजातीयं शब्दमित्यत आह— न चान्यथेति। ज्ञापकवशात् क्वचिद् व्यधिकरणानां बहुव्रीहिः, ज्ञापककृतं च न सर्वत्र, न च गन्धादीनां पृथिव्यादिगुणहेतुत्वप्रतिपादनं क्वचिन्निर्वेदायोपयुज्यत इति भावः। अन्यसमासः कर्म्मधारयादिः। द्वन्द्वमवधारितमाक्षिपति—न द्वन्द्व इति। समाधत्ते—न, उभयस्यापीति।

## वृत्तिः

मित्याशङ्कानिरासाय तदर्था इत्युक्तम् (१)। तेषामिन्द्रियाणामर्थाः—विषयाः, उद्दिष्टा अपि त एवेत्याशयः। इत्थं च तदर्थत्वं लक्षणमिति मन्तव्यम्। तच्छब्देन बहि-

(१) "तदित्युक्तम्" इति ख।

## न्यायवार्त्तिकम्

युक्तिरपि दर्शनस्पर्शनयोरेकविषयत्वेन प्रतिसन्धानम्, यमहमद्राक्षं तं स्पृशामीति दृष्टिस्पर्शनविषया युक्तिः। शास्त्रमप्यस्मिन् पक्षे सम्भवतीति। ऐन्द्रियकत्वाभिधानाच्च सामान्यस्येति। तस्मात् सिद्धं पृथिव्यादीनि च गुणाश्चेति द्वन्द्वः समास इति। पृथिव्यादिग्रहणेन पृथिव्यप्तेजांसि बाह्यकरण-ग्राह्याण्यपदिश्यन्ते, गुणग्रहणेन च सर्व आश्रितो गुण इति सङ्ख्यापरिमाणपृथक्त्वसंयोगविभागपरत्वा-परत्वस्नेहवेगकर्मसामान्यविशेषाः, अनाश्रितश्च समवायस्तद्धर्मत्वाद् गुण इति। गन्धरसरूपस्पर्श-शब्दास्तर्हि पृथङ् न वक्तव्याः, गुणग्रहणेन ग्रहणात्। पृथिव्यादिगुणास्तदर्था इति सूत्रे वक्तव्यम्, लघु चैवं भवतीति स एवार्थः सेत्स्यतीति, न कर्तव्यम्। गन्धरसरूपस्पर्शशब्दानां पृथगभिधान-मिन्द्रियविशेषनियमज्ञापनार्थम्। इन्द्रियाणि गन्धरसरूपस्पर्शशब्देषु तत्सामान्येषु नियतानि अन्यत्रानियतानि। तत्र पृथिव्यप्तेजांसि द्वीन्द्रियग्राह्याणि, शेषश्च गुणराशिः, सत्तागुणत्वे च सर्वेन्द्रियग्राह्ये, समवायोऽभावश्च तथा।

दर्शनस्पर्शनाभ्यामेकार्थग्रहणादित्येतदमृष्यमाणः पर आह—स्पर्शग्रहणमेव स्पर्शनेन, रूपग्रहणमेव चक्षुषेति। स पर्य्यनुयोज्यः—अथ रूपस्पर्शौ चक्षुःस्पर्शनाभ्यां गृह्येते इति कथमवगम्यते? यस्माच्चक्षुःस्पर्शनाभ्यां तद्विशिष्टः प्रत्ययो भवति। अनास्पदस्तर्हि प्रतिषेधः, घटादावपि तद्विशिष्टप्रत्ययदर्शनात्। घटादिकमप्यर्थं दर्शनस्पर्शनाभ्यामुपलभमानश्च तद्विशिष्टं घटादिकमर्थं प्रतिपद्यते। तस्मादसम्प्रधारितः प्रतिषेध इति। रूपादिभ्यस्तथा सन्निविष्टेभ्यो घटादिप्रत्यय इति चेत्, यदिदं भवताऽपदिश्यते दर्शनस्पर्शनाभ्यामयं घटं प्रतिपद्यत

## न्यायवार्त्तिकतात्पर्य्यटीका

पृथिव्यादिग्रहणेनेति। यद्यादिशब्देन वाय्वादयो गृह्येरन्, तदर्था इति लक्षणमव्यापकं स्यात्, तेषां बाह्येन्द्रियार्थत्वाभावादित्यर्थः। गुणग्रहणेन सर्व इति आश्रितानाश्रिताभिप्रायम्, गुण-शब्दस्य धर्म्मवचनत्वात्। विशेषस्तु रेखोपरेखादिः, न त्वन्त्यः, तस्यातीन्द्रियत्वात्। एतेषां च यथायोगं मिथ्याज्ञानसम्यग्ज्ञानविषयाणां रागवैराग्यहेतुत्वमूहनीयम्। चोदयति—गन्धेति। परिहरति—न कर्तव्यं लघुसूत्रम्, गन्धादीनां पृथगभिधानं कर्त्तव्यमित्यर्थः। नियममाह—इन्द्रियाणीति। तत्रेत्यनियतेषु मध्ये, पृथिव्यप्तेजांसि द्वीन्द्रिय(१) ग्राह्याणि, शेषश्च गुणराशिः संख्यादिर्विशेषान्तो द्वीन्द्रियग्राह्य इत्यर्थः। तथा, सर्वेन्द्रियग्राह्य इत्यर्थः।

अत्र बौद्धमुत्थापयति—दर्शनस्पर्शनाभ्यामिति। तस्य पर्य्यनुयोगमाह—स इति। स्वसंवेदनेन मानसेन वा रूपाद्यालम्बनप्रत्ययो रूपादिविशिष्टो यथाऽनुभूयते एवं रूपाद्यतिरिक्तघटादिविशिष्टोऽनुभूयत इत्यर्थः। अत्र पर आह—रूपादिभ्यस्तथा सन्निविष्टेभ्य इति, तथेत्याकारं निर्दिशति।

(१) क-पुस्तके "इन्द्रिय" इति पाठः।

## न्यायवार्त्तिकम्

इति, मिथ्यैतत्। रूपादय एव तेन तेनाकारेण सन्निविशन्ते, तानयमुपलभ्य तथाकारान् प्रतिपद्यमानो घट इति प्रपद्यते, न पुना रूपादिव्यतिरिक्ता घटादय इति। न, आकारार्थानभिधानात्—अतथाभूतस्य तथाभूतेन सामान्यमाकारशब्दस्याभिधेयम्। तद्यथा स्थाण्वाकारः पुमानित्यपुरुषस्य स्थाणोराकारः, पुरुषेण यत् सामान्यं स आकारशब्दस्यार्थः स्थाणुपुरुषप्रसिद्धौ सत्यां भवतीति। न पुनर्भवतां घटाकारा रूपादय इति रूपादिषु घटाकारबीजं किञ्चिदस्ति। तस्मात् घटाकारा रूपादय इति यत्किञ्चिदेतदिति। रूपादिमात्रे च घटादिबुद्ध्यभावः, यस्य रूपादिमात्रं घटादयः तस्य तेषां समानत्वात्, यास्ता(१) बुद्धयो विविक्ता गौरश्वो घट इति, ता न प्राप्नुवन्ति, रूपादिगतस्य बुद्धिनियामकस्य विशेषस्य हेतोरभावात्। संस्थानभेदाद् भेदप्रत्यय इति चेत्, केनचित् संस्थानविशेषेणावतिष्ठमाना रूपादयः संस्थानभेदानुविधानाद् घटादिबुद्धिहेतवो भवन्तीति। नैतदस्ति, संस्थानस्यान्यत्वेऽनन्यत्वे संज्ञाभेदमात्रत्वात्

## न्यायवार्त्तिकतात्पर्य्यटीका

सन्निवेशो व्यवस्थानम्। रूपादिपरमाणव एव तेन तेनाकारेणोत्पन्ना एकयोदकाहरणक्रियया व्यवच्छिन्ना घटादय इत्युच्यन्ते, अनुरञ्जनादिकया तु रूपादिव्यपदेशः। यथाह घट इत्यपि च रूपादय एवैकार्थक्रियाकारिणस्तथा व्यपदिश्यन्त इति। निराकरोति—न आकारार्थेति। तथार्थस्य यथापदार्थेन नित्यासिसम्बन्धात् यथा घटस्तथा सन्निविष्टा रूपादय इत्यर्थो गम्यते, तेन घटाकारेण घटसादृश्येनेत्ययमर्थः, तथा च दूषणमिति। दूषणान्तरमाह—रूपादिमात्रे चेति। न तावद्रूपादिक्षण एको घटः, क्षणान्तरे तत्प्रयोगाभावप्रसङ्गात्, तस्माद्रूपादिमात्रमविवक्षितम्, तथा सत्येतद्दूषणमित्यर्थः। शङ्कते—संस्थानभेदादिति। यथासंस्थाना रूपादयोऽर्था अनुभूयन्ते, तथा

## वृत्तिः

रिन्द्रियाणि परामृश्यन्ते। तथा चैकैक(२)बहिरिन्द्रियमात्रग्राह्यविशेषगुणत्वमर्थत्वम्(३), बहिरिन्द्रियद्वयाग्राह्यबहिरिन्द्रियग्राह्यगुणत्वं(४) वा तदर्थः। पृथिव्यादिगुणा इति

---

(१) 'यातामा' इति ख-पु-पाठः। (२) 'चैक' इति व-का-आ०। (३) अत्र 'अर्थत्वं' यदि विशेषगुणत्वमात्रमुच्यते तर्हि सुखादावतिव्याप्तिः स्यात्, अत एकैकेत्यादि ग्राह्यपर्यन्तं विशेषणम्, एकैकमात्रबहिरिन्द्रियग्राह्यत्वं तदर्थः, अत्र बहिःपदेन सुखादावतिव्याप्तेर्वारणम्। एकैकमात्रेत्यनुपादाने स्नेहादावतिव्याप्तिः, तत्र चक्षुस्त्वगिति बहिरिन्द्रियद्वयग्राह्यविशेषगुणत्वसत्त्वात्, अतस्तद्वारणार्थं तदुपादानम्। अत्र मात्रपदेन एकैकबहिरिन्द्रियव्यतिरिक्तग्राह्यत्वस्याभावपर्य्यन्तो यः पर्य्यवसितार्थो लभ्यते स तु अभावद्वयघटितत्वेन गौरवग्रस्त इति तदपेक्षया लाघवादाह—बहिरिन्द्रियद्वयेत्यादि। अत्र वृत्तौ "अर्थत्वम्" इति नि-व-का-आ पुस्तकेषु नास्ति। (४) 'बहिरिन्द्रियग्राह्यबहिरिन्द्रियाग्राह्यगुणत्व'मिति व-का-आ०।

## न्यायवार्त्तिकम्

व्यर्थाभिधानप्रसङ्गाच्च। यदि संस्थानं रूपादिभ्योऽन्यत्, द्रव्यं(१) तदिति संज्ञाभेदमात्रम्। अथानन्यत्तथापि रूपादीनां संस्थानभेदानुविधानात् घटादिप्रत्यया इति व्यर्थमभिधानम्। घटादिप्रत्यया मिथ्याप्रत्यया इति चेत्—स न मन्यते घटादिप्रत्ययाः सम्यक्प्रत्यया इति, किन्तु शब्दवासनावशान्मिथ्याप्रत्यया भवन्तीति। तदयुक्तम्। मिथ्याप्रत्ययानां सम्यक्प्रत्ययानुकारित्वात्—यत्र ते मिथ्याप्रत्यया लोके भवन्ति सर्वत्र ते सम्यक्प्रत्ययाऽनुकारिणो भवन्ति, न पुनर्घटादिप्रत्ययानां मिथ्याप्रत्ययत्वेन कल्पितानां बीजमस्ति। न चैते निर्बीजाः प्रादुर्भवन्ति, तस्मान्न मिथ्याप्रत्यया इति। मिथ्याप्रत्ययाश्चैत इत्यव्यतिरेके प्रमाणोपपत्तौ सत्यां सिध्यति, न चाव्यतिरेकप्रतिपादकं प्रमाणमस्ति। न नास्ति, तदग्रहे तद्बुद्ध्यभावात्, यद् यस्मादनर्थान्तरं भवति तदग्रहे तस्याग्रहो दृष्टः, तद् यथा(२)—यूपस्य पङ्क्तेश्च, यच्च यतोऽर्थान्तरं भवति तदग्रहे तस्य ग्रहो दृष्टः, तद् यथा—रूपाद्यग्रहे बालग्रह इति। नायं हेतुरनैकान्तिकत्वात्, ये घटादिभावमापन्नाः पृथिव्यादयस्तेषां पृथिव्यां संगृह्यमाणायामर्थान्तरभूतानामबादीनामग्रहणम्। अथ चार्थान्तरभूता अबादयो न दर्शनविषयभाजो भवन्ति, तस्मादनेकान्तः। अथ न चत्वारि महाभूतानि तथा सन्निविष्टानीति पक्षस्तथापि रूपं चत्वारि महाभूतानीति वचनं व्याहन्यते। अथ ब्रूषे नैव नो रूपादिव्यतिरिक्ताः पृथिव्यादय इति ? तथाप्यस्य वाक्यस्यायमर्थो भवति रूपादयो रूपमिति, ततश्च कामेऽष्टद्रव्यकोऽणुरिति व्याहन्येत। अथ पृथिव्यादीनां सङ्घातमात्रे रूपादि-

## न्यायवार्त्तिकतात्पर्य्यटीका

सन्निविष्टेभ्यो घटादिप्रत्यया इत्यर्थः। निराकरोति—नैतदिति। अन्यत्वे तदेवावयवीति संज्ञाभेदमात्रम्। अनन्यत्वे व्यर्थाभिधानम्। शङ्कते—घटादिप्रत्यया इति। एकानेकविचारासहत्वाद् असन्त एव घटादयोऽनादिविकल्पवासनाजनितविकल्पप्रत्ययप्रतिभासमानाः। शब्दशब्देन विकल्पमुपलक्षयति—शब्दवासनावशादिति। निराकरोति—तदयुक्तमिति। बीजं मिथ्याप्रत्ययस्य सम्यक्प्रत्ययविषयोऽर्थः, तस्य क्वचिदभ्युपगमेऽभिमतार्थहानमित्यर्थः। यस्तु भिन्नलोकमर्य्यादतया ब्रूते आदिमान् मिथ्याप्रत्ययः सम्यग्ज्ञानं निमित्तीकरोति, अयं पुनरनादिः पूर्वपूर्वमिथ्याप्रत्ययजन्मा मिथ्याप्रत्ययप्रवाहः, कृतमत्र सम्यग्ज्ञानेनेति, तं प्रत्याह—मिथ्याप्रत्ययाश्चैत इति। रूपादिव्यतिरेके अवयविन इत्यर्थः। परस्त्वव्यतिरेके प्रमाणमाह—न नास्तीति। न हि मांसतोयातिरिक्तः कश्चिद्यूपो नाम, नापि तृणराजतरुव्यतिरिक्ता पङ्क्तिर्नाम। दूषयति—नायं हेतुरिति। ये घटादिभावमापन्ना भवतां दर्शने इति, कामेऽष्टद्रव्यकोऽणुरशब्दः रूपधातुररूपधातुः कामधातुरिति त्रैधातुकं जगत्, तत्र कामधातुस्वरूपमुक्तम्,

(१) "अन्यद्द्रव्यम्" इति ख-पु०। (२) "तद् यथा" इत्यत्र "तथा" इति ख-पु०।

## न्यायवार्त्तिकम्

व्यवहारः ? तथापि न रूपं पृथिव्यादयो वस्तुतः सन्ति। कथमिति ? पृथिव्यादीनां सङ्घातो रूपं पृथिव्यादयश्च रूपादिसङ्घात इति संहन्यमानस्याभावान्न सङ्घातोऽस्ति, सर्वः सङ्घातः संहन्यमानतन्त्रो दृष्ट इति सर्वथा न व्याघातान्मुच्यते।

तदग्रहे तद्बुद्ध्यभावादिति(१) तच्छब्दार्थानुसृतावसम्बद्धार्थम्। यदा तच्छब्दस्यार्थोऽनुस्रियते तदा तदग्रहे तस्यैवाग्रह इति प्राप्तम्, तच्चासम्बद्धार्थम्, यदा पृथिव्यादि रूपादिविशेषणं साध्यते तदा तदग्रहे तद्बुद्ध्यभावादित्यस्य हेतोः(२) पृथिव्यादिविशेषणानां रूपादीनां तच्छब्देनानभिसम्बन्धात्। एतेन पृथिव्यादिविशेषणा रूपादयः प्रत्युक्ताः। अत्रापि रूपाद्यग्रहे रूपादि-

## न्यायवार्त्तिकतात्पर्य्यटीका

कामे कामधातौ,अष्टद्रव्यकोऽणुः—रूपरसगन्धस्पर्शा इति चत्वारि द्रव्याणि, पृथिव्यप्तेजोवायु(३)रिति चत्वारि, द्रव्यशब्दो वस्तुवचनः, तेषामष्टद्रव्यकोऽणुरित्यागमः। सोऽयं रूपाद्यतिरिक्तपृथिव्याद्यनभ्युपगमे बाध्येत। अथ वैयात्यादुच्यते—पृथिव्यादीनामिति, ततश्च सांवृतत्वेनाष्टसंख्यासिद्धेर्नागमविरोध इति भावः। उत्तरम्—तथाऽपीति। मा भूवन् वस्तुतः, उभयेऽपि सांवृता भविष्यन्तीत्यत आह—संहन्यमानस्येति। यो हि यत्तन्त्रः स तदभावमभ्युपगम्याशक्याभ्युपगमः, न खलु संयुज्यमानानामभावे संयोगः शक्याभ्युपगम इत्यर्थः। न च संवृतिः, सा हि पररूपं स्वरूपेण संवृणोति, संहन्यमानाभावे च न संघातो न संहन्यमाना इति किमनया स्वरूपेणाव्रियेतेति भावः।

तदेवं—तदग्रहे तद्बुद्ध्यभावादित्यस्य व्याघातदोषं दर्शयित्वा स्वसामर्थ्यालोचने न विवक्षितलिङ्गाभिधायिता, किन्त्वसंबद्धार्थता हेतुवचनस्येत्याह—तदग्रहे इति। एवं किलात्राभिमतम्—पृथिव्यादयो रूपादिभ्योऽभिन्ना, रूपाद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति। तन्न तदेतदग्रहे (४) तद्बुद्ध्यभावादित्यनेन न शक्यं वक्तुम्, तदग्रह इत्यत्र तच्छब्दः प्रधानपरामर्शी, पृथिव्यादयश्च धर्मितया प्रधानमिति त एव परामर्ष्टव्याः। तथा च पृथिव्याद्यग्रहे

## वृत्तिः

लक्ष्यनिर्देशः। ते के गुणा इत्याकाङ्क्षायां गन्धेत्यादि। पृथिव्यादीनां गुणा इति षष्ठीसमासो भाष्यसम्मतः(५), तेन गुणगुणिनोरभेदो नेति सूचितम् ॥ १४ ॥

---

(१) २०६ पृष्ठस्थवार्त्तिकस्यैव ८मपंक्तौ "तदग्रहे तद्बुद्ध्यभावात्" इति। (२) "हेतोः" इत्यनन्तरं ख-पुस्तके—"पृथिव्याद्यग्रहे पृथिव्यादिबुद्ध्यभावादिति हेत्वर्थः प्राप्नोति, किं कारणम् ?" इत्यधिकः पाठः। (३) 'वायवः' इत्येवं बहुवचनान्तःपाठः समीचीनः, अथवा—पृथिव्यप्तेजःसहकृतो वायुरिति मध्यपदलोपिसमाससमाहृत्य निरुक्तपाठ एव कथञ्चित् समाधेयः। (४) "तदेतदग्रहे" इत्यत्र "तदग्रहे" इति पाठः सङ्गतः, पूर्व्वापरसामञ्जस्यानुरोधात्। (५) "भाष्यादिसम्मत" इति ख-ब-आ०।

## न्यायवार्त्तिकम्

बुद्ध्यभावादिति हेत्वर्थः प्राप्नोति, तच्छब्दस्य प्रधानसम्बन्धित्वात्। एवं रूपादिमात्रं पृथिवी, पृथिवीमात्रं रूपादय इति पृथिव्येव रूपादयो रूपादय एव पृथिवीति पूर्ववत् प्रसङ्गः। सर्वत्र प्रतिज्ञापदयोर्व्याघातो वचनभेदात्, पृथिवीत्येकवचनं रूपादय इति बहुवचनम्, वचनभेदानुविधानं च यत्र, तत्रार्थभेदः, तद् यथा नक्षत्राणि शशीति। अस्ति चात्रापि वचनभेदः तस्मादत्राप्यर्थ-भेदेन भवितव्यम्। नन्वेकस्मिन्नर्थे वचनभेदो दृष्टस्तद् यथा चत्वार आश्रमाश्चातुराश्रम्यमिति। तन्नानभ्युपगमात्, नायं वचनभेदः क्वचिदेकत्वे दृष्टः, चातुराश्रम्यमिति चतुर्णामाश्रमाणां समानं धर्मसाधनत्वमभिधीयते। एतेन षडेव गुणाः षाड्गुण्यं विशेष एव वैशेषिकमिति प्रत्युक्तम्। तदग्रहे तद्बुद्ध्यभावादिति चासिद्धोऽप्ययं हेतुः। कथमसिद्धः? रूपाद्यग्रहे द्रव्यग्रहात्,—

## न्यायवार्त्तिकतात्पर्य्यटीका

पृथिव्यादिबुद्ध्यभावादिति स्यात्। तथा च प्रतिज्ञातस्तेषां रूपाद्यभेदो न सिध्येदित्यसंबद्धम्। अथ रूपादयः पक्षीक्रियन्ते, तथाऽपि रूपाद्यग्रहे रूपादिबुद्ध्यभावादिति स्यात्, तथापि न प्रति-ज्ञातार्थसिद्धिरित्यसंबद्धार्थमित्यर्थः। एवं शब्दान्तरेणापि प्रतिज्ञाप्रयोगे तुल्यः प्रसङ्ग इत्याह—एवं रूपादिमात्रमिति। प्रतिज्ञादोषमाह—सर्वत्र चेति(१)। नानात्वैकार्थसंबन्धनियतायाः बहुत्वसंख्याया अभेदैकार्थनियतैकत्वसंख्यया सामानाधिकरण्यविरोध इत्यर्थः। तदेतदनैका-न्तिकमिति चोदयति—नन्विति। निराकरोति—तन्नानभ्युपगमादिति। समानं धर्म्मसाधनम्—यमाः पञ्च, नियमाः पञ्च, ब्रह्मचारिगृहस्थवानप्रस्थयतीनामविशेषेणैव दश धर्मसाधनम्, तेषां धर्म्मसाधनत्वमेकं चातुराश्रम्यमिति प्रकृतिगतविभक्तिराह। आश्रमप्रकृतिगता तु विभक्तिः प्रकृत्यर्थसमवेतामेव बहुत्वसंख्यामाह, समानार्थानामपि प्रकृतीनां रूपभेदेन तत्परस्य प्रत्ययस्य सामर्थ्यभेदात्। यथा अप्तोयशब्दयोस्तुल्यार्थत्वेऽपि तोयशब्दात्परा विभक्तिस्तोयानीति तोय-समवेतामेव बहुत्वसंख्यामाह। आप इति न तोयगताम्, अपि तु तत्संबद्धगताम्, तत्संबद्धाश्च तदवयवास्तद्गतरूपादयो वा बहव इत्येकस्यामपि पाथःकणिकायां बहुवचनोपपत्तिराप इति। न च सोरस्ताडं क्रन्दतोऽपि लोकस्य निवृत्तेर्नैवमिति सांप्रतम्। लोको हि दृष्टव्यवहारमात्र-प्रयोजनो न विवेचयति, परीक्षकास्तु तदनुसारिणो विवेचयन्त्येव। अन्यथा हि प्रत्यक्षादिलक्षण-प्रणयनवैयर्थ्यप्रसङ्गः। एतेन दाराः षण्णगरीत्यादयो व्याख्याताः। षाड्गुण्यमपि षण्णां गुणाना-मेकं राजप्रयोजनसाधकत्वम्, वैशेषिकमित्यत्रापि विशेषाणां समानासमानजातीयव्यवच्छेदकत्व-मेकमुच्यत इति गमयितव्यम्। हेतुदोषमाह—असिद्धोऽपीति। स्फटिकस्य धवलं रूपम्, तच्च नीलद्रव्यानुषङ्गादभिभूतं न प्रतीयते, स्फटिकश्च प्रतीयते, न च नीलस्य स्फटिकलक्षणस्योत्पत्तिरिति तृतीये निवेदयिष्यते, (२) तस्मादसिद्धो हेतुरित्यर्थः। दृष्टान्तश्च साध्यविकल इत्याह—

(१) वार्त्तिके "च" नास्ति। (२) ३।२।९ सूत्रवार्त्तिके।

## न्यायवार्त्तिकम्

यस्मान्नीलाद्युप्रधानभेदानुविधायिनः स्फटिकमणे रूपानुपलब्धौ स्फटिक इति प्रत्ययो दृष्टः। योऽप्ययं दृष्टान्तो यूपवत् पङ्क्तिवच्चेति तन्न भवता यूपो व्यज्ञायि न पङ्क्तिः। यूपो हि नाम उत्पन्नपाकजानां द्रव्याणां कालविशेषानुग्रहे सति द्रव्यान्तरसंपृक्तानां पाकजोत्पत्तौ यः संयोगः स यूप इति, स चार्थान्तरवदित्यसिद्धो दृष्टान्तः। एतेन पानक(१)काञ्जिकविरेका(२)वक्षारादयः प्रत्युक्ताः। पङ्क्तिरप्येकदिग्देशसम्बन्धिषु परस्पर(३)प्रत्यासत्त्यनुगृहीतेषु अवधारितानवधारितेयत्तेषु भिन्नभिन्नजातीयेष्वाधारेषु वर्तमाना बहुत्वसङ्ख्यैवोच्यते। एवमनियतदिग्देशसम्बन्धिषु गजतुरगस्यन्दनेषु परस्परप्रत्यासत्त्यनुगृहीतेषु(४) अवधारितानवधारितेयत्तेषु वर्तमाना बहुत्वसङ्ख्यैव सेनेत्युच्यते। एवं जातिविशिष्टपुरुषोपग्रहेण वर्तमाना परिषत्। प्रव्रजितविशेषोपग्रहेण वर्तमाना सङ्घः। एवं यथासम्भवं पूगवनयूथब्राह्मणगणशब्दा अपि द्रष्टव्याः। एवमनियतदिग्देशसम्बन्धिष्वनाद्यन्तेषु मध्यशून्येषु वर्तमाना कुण्डलकं बहुत्वसंख्यैवेति। तस्मात् पङ्क्तिरनर्थान्तरमित्यसिद्धो दृष्टान्तः। अथार्थान्तरे किं प्रमाणमिति ? उपलभ्यस्य समस्तैरूप-

## न्यायवार्त्तिकतात्पर्य्यटीका

योऽप्ययमिति। उत्पन्नपाकजानां तैले सर्पिषि वा भृष्ट(५)मांसपिण्डावयवानाम्, द्रव्यान्तरेण तोयेन संयुक्तानां (६) पाकजोत्पत्तौ सत्याम्, न चासौ सहसेत्युक्तम्—कालविशेषानुग्रहे सतीति। स च संयोगभेद एव तोयमांसयोः, न त्ववयवी, विजातीययोरनारम्भकत्वात्। नापि यूपजातीयं तोयसंयोगि द्रव्यं क्षीरजातीयमिवेति युक्तम्। तोयविरहे काठिन्येऽपि क्षीरबुद्धिव्यपदेशयोस्तादवस्थ्यात्। इह तु काठिन्ये न यूपबुद्धिव्यपदेशाविति संबन्धभेद एव तोयमांसयोर्यूष इति न्याय्यम्, स चानुभवसिद्धः संयोगिव्यतिरिक्तः। एवं बहुत्वसंख्या संख्येयातिरिक्ताऽनुभवसिद्धैवेति। एवं तत्र तत्र व्याख्येयम्। अनाद्यन्तेष्वनारब्धावयविष्विति द्रष्टव्यम्। न च परकीयसाधनदोषोद्भावनमात्रात् स्वपक्षसिद्धिरिति सिद्धान्तिनं साधनं पृच्छति—अथ रूपादिभ्योऽर्थान्तरे द्रव्ये किं प्रमाणमिति। यतोऽयं परो रूपादिभ्योऽर्थान्तरं द्रव्यं प्रत्यक्षेण विद्वानपि स्वसिद्धान्ताभ्यासाहितव्यामोहापस्मारो न तथा व्यवहरति, अतोऽनेनानुमानेन स व्यवहार्य्यते। अस्ति हि सर्वेषामेव लौकिकपरीक्षकाणां ब्राह्मणस्य कमण्डलुरितिवत् चन्दनस्य रूपादय इति व्यपदेशः। तत्र च परो रूपाद्युपलम्भमभ्युपगच्छति चन्दनोपलम्भमपि, अन्यथा तद्बुद्ध्यभावात् इत्येतावन्मात्रे वक्तव्ये कथमाह—"तदग्रहं" इति, तेनाधिगच्छामो रूपादिग्रहेऽस्य चन्दनबुद्धिरभिमतेति। न चासौ मनोमात्रयोनिः स्मार्त्तीति न्याय्यम्, उपपादितमेतस्याः सविकल्पिकाया

(१) "पाक-" इति ख-पु०। (२) "विवेका" इति ख०। (३) "परापर-" इति ख०। (४) "परप्रत्यासत्त्यु परगृहीतेषु" इति ख०। (५) "पिष्ट-" इति क-पु पाठः। (६) "संपृक्तानाम्" इति वार्त्तिके।

## न्यायवार्त्तिकम्

लभ्यैर्व्यपदेशः, यदिदं चन्दनमुपलभ्यते तस्य श्वेतं रूपं तिक्तो रसः पटुर्गन्धः शीतः स्पर्श इति। यश्चायं प्रत्यक्षस्य प्रत्यक्षेण व्यपदेशः सोऽर्थान्तरे दृष्टो यथा ब्राह्मणस्य कमण्डलुरिति। न खल्वयमेवं(१) प्रतिपद्यते—यदिदं श्वेतं रूपं तदनुमीयमानरसगन्धस्पर्शानामिति। सेनावनादिभिरनेकान्त इति चेत्—अथापि स्याद् बुद्धिः दृष्टोऽनर्थान्तरेऽपि व्यपदेशः सेनाया हस्ती, काननस्य वृक्ष इति? न, असिद्धत्वात्, असिद्धमेतद् अनर्थान्तरत्वं सेनायाः काननस्य च। यथा च तदर्थान्तरं सेना काननं वा तदुक्तमिति(२)। तदसत्त्वमिति चेत्—अथाप्येवं कल्प्येत—सङ्ख्यैव तावन्नास्ति कुतोऽर्थान्तरभाव इति? नैवम्(३)। संख्या नास्तीति ब्रुवता एकानेकप्रत्ययानां विधीयमानं प्रतिषिध्यमानं वा निमित्तमुपादेयम्। कस्मात्? एकानेकप्रत्ययानामप्रत्याख्येयत्वात्, विशिष्टाश्च प्रत्यया भवन्तो न निमित्तप्रत्याख्यानेन भवितुमर्हन्ति। किं कारणम्? कुम्भप्रत्ययनिमित्तान्यनिमित्तक(४) एकानेकप्रत्ययः कुम्भप्रत्ययविलक्षणत्वात् नीलादिप्रत्ययवत्(५), तस्माद् यत्तत्प्रत्ययनिमित्तं सा सङ्ख्येति। तत्प्रत्ययविषयनिमित्तप्रत्यय-

## न्यायवार्त्तिकतात्पर्य्यटीका

इन्द्रियजन्यत्वं व्यवसायात्मकपदव्याख्यानावसरे(६)। द्रव्यबाधकप्रमाणानि च परीक्षापर्वणि(७) निराकरिष्यन्ते। तस्मात्सिद्धमुपलभ्यत्वं चन्दनस्य व्यपदेश्यस्य, सोऽयं चन्दनो विवादगोचरेभ्यो रूपादिभ्यो भिन्नः, स्वयमुपलभ्यस्य च समस्तैरुपलभ्यैर्व्यपदिश्यमानत्वात्। प्रधानमपि सांख्यैर्व्यपदिश्यते प्रधानस्य रूपादय इति, तन्निवृत्त्यर्थमुपलभ्यस्येति। प्रधानं तु काल्पनिकं नोपलभ्यते, तथाऽपि रूपादीनां मूलकारणं प्रधानमित्यस्ति सांख्यानां व्यपदेशोऽत उक्तमुपलभ्यैरिति। तथाऽपि रूपादीनां परस्परभिन्नानामन्योन्यं व्यपदेश्यव्यपदेशकभाव उपपत्स्यत इत्युक्तम्—समस्तैरिति। अतः समस्तेभ्यो व्यपदेशकेभ्यश्चन्दनं भिन्नं भवति। उपलभ्यस्योपलभ्येनेति वक्तव्ये प्रत्यक्षस्य प्रत्यक्षेणेति वचनं रूपावगमसमयेऽनुमेयेभ्यो रसादिभ्य एकान्ततो व्यपदेशं व्यावर्त्तयितुम्, न त्वस्यानुमान उपयोग इति। अस्यानैकान्तिकत्वमुद्भाव्य निराकरोति—सेनावनादिभिरिति। संख्यायाम् असत्त्वमाशङ्क्य निराकरोति—तदसत्त्वमिति चेदिति। विधीयमानं प्रतिषिध्यमानमिति यथासंख्यं निषेधस्य विध्यधीननिरूपणतया निषेध्यमेकत्वमङ्गीकार्य्यम्, तच्च संख्येत्यर्थः। ननु सन्त्वमी प्रत्ययाः, ते तु द्रव्यमात्रनिबन्धना भविष्यन्ति, कृतं सङ्ख्ययेत्यत आह—विशिष्टाश्चेति। न द्रव्यातिरिक्तनिमित्तप्रत्याख्यानेन

(१) "न खल्वेवम्" इति ख०। (२) कतिपयपंक्तिभ्यः प्रागेव—"सेनेत्युच्यते" इत्यादिना उक्तम्। (३) "नैव" इति ख-पु०। (४) "कुम्भप्रत्ययान्यनिमित्तक-" इति ख०। (५) "नीलप्रत्ययवत्" इति ख०। (६) १।१।४ सूत्रटीकायाम्। (७) तृतीयाध्याये।

## न्यायवार्त्तिकम्

व्यतिरेकेण ततोऽन्यस्य तद्विशिष्टप्रत्ययस्योत्पत्तौ (१) निमित्तान्तराकाङ्क्षित्वं दृष्टम्। तद्यथा वस्त्रचर्मकम्बलेषु वस्त्रचर्मकम्बलप्रत्ययास्तेभ्य एव (२) भवन्ति। तेषु तु योऽन्यो नीलमिति प्रत्ययः स निमित्तान्तराद्भवन् दृष्टः, तथा च घटादिष्वपि घटादिविषयनिमित्तव्यतिरेकभाजः तत्र एकादिप्रत्ययाः (३), तस्मात्तैरपि निमित्तान्तराद्भवितव्यम्। यन्निमित्तं ते सङ्ख्यादय इति। महत्पुष्पितशब्दाभ्यां सामानाधिकरण्यान्न सङ्ख्या सेना वनं वा भवितुमर्हति, यदि सङ्ख्या सेना वनं वा, महती सेना पुष्पितं वनमिति न (४)प्राप्नोति, न सङ्ख्यायां महत्त्वमस्ति न पुष्पयोग इति। नैष दोषः। महती सेनेति किमुच्यते? तानेव गजादीन् सङ्ख्याधारा-(५) नवधारितानवधारितेयत्तान् स्थान्यङ्गान्तरोपचये सति महती सेनेति व्यपदिशन्ति(६)। तत्रेयं स्थानिषु(७) गजादिषु(८) महच्छब्दवाच्येष्वपचयोपचयकरणात् बहुत्वसङ्ख्या महतीत्युच्यते। पुष्पितमित्यत्रापि पुष्पसम्बन्धिषु वृक्षेषु पुष्पसम्बन्धेनैकार्थसमवायमनुभवन्ती बहुत्वसङ्ख्यैवाभिधीयते, यथा मधुरो रसः, तिक्तो गुडश्चेति। अत एव व्यपदेशात् सङ्ख्यादीनामप्यर्थान्तरभावः। असति दर्शनान्न हेतुः, यथा गर्त्तश्छिद्रमिति। न, अपरिज्ञानात्—गर्तो हि नाम

## न्यायवार्त्तिकतात्पर्य्यटीका

इत्यर्थः। प्रयोगान्तरमाह—तत्प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेणेति। घटप्रत्ययस्य विषयश्च निमित्तम्, घटप्रत्ययश्च तद्व्यतिरेकेणेति, तद्विशिष्टसंख्यादिप्रत्ययस्य निमित्तान्तराकाङ्क्षित्वात्, तत्किमर्थमत उक्तम्—उत्पत्ताविति। चर्मणि द्वीपिनं हन्तीतिवद् घटादिविषयनिमित्तव्यतिरेकभाज इत्यत्रापि प्रत्ययग्रहणं कर्त्तव्यम्। चोदयति—महत्पुष्पितेति। न संख्याया गुणस्य परिमाणपुष्पयोगसंभव इत्यर्थः। परिहरति—नैष दोष इति। स्थानशब्देन तिष्ठतीति व्युत्पत्त्या संख्योच्यते, सा येषामस्ति ते गजवाजिपदातिप्रभृतयः स्थानिनः प्रत्येकं महान्तः, तत्र ते क्वचिच्छतमेव, क्वचित् पुनस्तज्जातीयस्थान्यङ्गान्तरसन्निधाने सत्युपचिताः सहस्रं भवन्ति। तेन बहुत्वसंख्योपचयोपकरणात्तदेकार्थसमवेतमहत्त्वोपचारान्महती सेनेत्युच्यते। न चैतावता यत्र शतं गजादयः यत्र च सहस्रम्, तयोः सेनयोर्महत्त्वाविशेषः, उपचयापचयोपकरणत्वेन विशेषितत्वात्। एवं पुष्पितवनादयो द्रष्टव्याः। प्रत्ययभेदाद् द्रव्यादिभ्यः संख्याया भेदमुक्त्वा व्यपदेशभेदादप्याह—अत एवेति।

---

(१) "निमित्तान्तराकाङ्क्षित्वाद् यः प्रत्ययविषयनिमित्तप्रत्ययव्यतिरेकेण प्रत्ययो भवति तस्य" इत्यधिकपाठः ख-पुस्तके। (२) "तेभ्य एव" इत्यत्र "त एव" इति ख०। (३) "घटादिष्वपि" इत्यनन्तरं ख-पुस्तके "घटाविषयनिमित्तव्यतिरेकभाक् तत्र कादिप्रत्ययाः" इत्यधिकपाठः। (४) "इति न" इत्यंशः ख-पु नास्ति। (५) "धारा" इत्यंशः ख-पु नास्ति, किन्तु "सङ्ख्यानवधारिता" इत्येवं पाठः। (६) "व्यपदिशन्ति" इत्यत्र "अपदिशन्ति" इति ख०। (७) "संज्ञानिषु" इति ख०। (८) ख-पुस्तके "गजादिषु" इति नास्ति।

## न्यायवार्त्तिकम्

रूपादिमद्भिः सावयवैरारब्धकार्यैर्मध्यशून्यैः संस्थानविशेषोपहितमाकाशमिति। एतेन छिद्रं व्याख्यातम्। एकस्मिन्नपि दर्शनात् व्यपदेशादर्थान्तरभावो(१) न युक्तः, तद् यथा खदिरस्य स्थाणुरिति। बहुषु चाऽसंयुक्तेषु(२) दर्शनात्, तद् यथा प्रासादानां मालेति। संयुक्तेषु चाऽसजातीयेषु(३) दर्शनात् त्रिवृत्पृथिव्युदकतेजसां विरेक(४) इति। यत्तावदेकस्मिन्नपि दर्शनादिति, तदयुक्तम्, खदिरशब्दस्य जातिविशिष्टद्रव्यवाचित्वात्, खदिरशब्देन जातिविशिष्टं द्रव्यमुच्यते, स्थाणुशब्देनापि संस्थानविशेषोऽभिधीयते, संस्थानविशेषश्च प्रचयाख्यः संयोगः। स चार्थान्तरमिति। एतेन सर्पकुण्डलकम्, प्रतिमायाः शरीरम्, सुवर्णस्याङ्गुरीयकम्, शिलापुत्रकस्य शरीरम्, इत्यादिकं भेदवाचकमित्युक्तं भवति। प्रासादानां माला पंक्तिवद् द्रष्टव्या। संयोगो विरेक(५) इत्युक्तमेतत्। गुणसमुदायव्यतिरेकेणाग्रहणादिति चेत्—अथापि मन्येथाः(६) यदि रूपादिव्यतिरिक्तं द्रव्यं स्यात् तद्रूपादीनन्तरेण पृथगुपलभ्येत, न तूपलभ्यते, तस्मान्नास्ति। अग्रहणस्य द्विनिमित्तत्वादनेकान्तः, किमिदमग्रहणं ग्राह्यस्याभावादाहो ग्रहे हेत्वभावादिति सन्दिह्यते। ग्राह्याभावादिति चेत्, प्रतिज्ञार्थेन हेत्वर्थस्याक्षेपादयुक्तो हेतुः। ग्रहणाभावादिति चेत्, न व्यतिरेकप्रतिषेधः। यश्च तदग्रहे तद्बुद्ध्यभावादिति हेतोर्दोषः, सोऽस्यापि द्रष्टव्य

## न्यायवार्त्तिकतात्पर्य्यटीका

स्थाणुशब्देनापीति। मूर्त्तानां समानदेशत्वाभावान्न पर्वसु खदिरश्च स्थाणुश्च समवेतौ। न चावस्थितसंयोगेभ्यस्तरुविनाशापेक्षेभ्यः स्थाणोरुत्पत्तिरिति युक्तम्। यस्य द्रव्यस्य यावत्संयोगप्रचयोऽसमवायिकारणं स तावानुत्पन्नमात्र एव तज्जनकः, तस्य च क्षेपायोगात्। तस्मात् पर्वणां संस्थानविशेष एव स्थाणुरिति गमयितव्यम्। अथावस्थितसंयोगानां द्रव्यनाशापेक्षाणां जनकत्वम्; ततः संयोगप्रचयपदेन स्थाणुत्वसामान्यविशेषवद् द्रव्यमुपलक्षणीयम्, तच्च खादिरतरोर्भिन्नमिति। प्रतिमाया महारजतमय्या अवयविन्याः शरीरं संस्थानमेव, एवं शिलापुत्रकस्यावयविनः संस्थानमेव शरीरम्। शङ्कते—गुणसमुदायेति। अतादात्म्येनाग्रहणं व्यतिरेकेणाग्रहणम्, पृथक्शब्दोऽप्यतादात्म्यमेव ब्रूते। दूषयति—अग्रहणस्येति। सतामपि वस्तूनामनुपलम्भो यथा मूलकीलकादीनां प्रमाणाभावेन, शशविषाणादीनां चानुपलम्भो ग्राह्याभावेन, तस्माद्व्यतिरेकाग्रहणमात्रं हेतुरनेकान्त इति। शङ्कते—ग्राह्याभावादिति चेत्, ग्राह्याभावे सत्यग्रहणादिति हेतुः, न त्वग्रहणमात्रमित्यर्थः। दूषयति—प्रतिज्ञार्थेनेति। प्रतिज्ञार्थस्यासिद्धत्वेन तद्विशिष्टो हेतुरसिद्ध इत्यर्थः। शङ्कते—ग्रहणेति, ग्रहणंप्रमाणम्। निराकरोति—

(१) "अर्थान्तराभाव" इति ख०। (२) "वाऽसंयुक्तेषु" इति ख०। (३) "वाऽसजातीयेषु" इति ख०। (४) "वृत्ताव्युदकतेजांसि विवेक" इति ख०। (५) "संयोगी विवेक" इति ख०। (६) "अथानुमन्येथाः" इति ख०।

### न्यायभाष्यम्

अचेतनस्य करणस्य बुद्धेर्ज्ञानं वृत्तिः चेतनस्याकर्तुरुपलब्धिरिति युक्तिविरुद्धमर्थं प्रत्याचक्षाणक इवेदमाह—

## ( सू )—बुद्धिरुपलब्धिर्ज्ञानमित्यनर्थान्तरम् ॥ १५ ॥

नाचेतनस्य करणस्य बुद्धेर्ज्ञानं भवितुमर्हति, तद्धि चेतनं स्यात्, एकश्चायं चेतनो

### न्यायवार्त्तिकम्

इति। सोऽयमनन्यत्ववादो यथा यथा विचार्यते तथा तथा(१) स्पष्टमन्यत्वं प्रतिपादयति, प्रमाणानामेकत्रोपपत्तेः एकत्र चानुपपत्तेरिति। तस्माद् व्यवस्थितमेतत् पृथिव्यादीनि गुणाश्चेति द्वन्द्वः समासः ॥ १४ ॥

अथ बुद्धेरवसरप्राप्ताया लक्षणापदेशद्वारेण सूत्रम्—बुद्धिरुपलब्धिरित्यादि एतैः पर्यायशब्दैर्योऽभिधीयते पदार्थः सा बुद्धिरिति। पर्यायशब्दाः कथं लक्षणम्? व्यवच्छेदहेतुत्वात्। सर्वं हि लक्षणमितर(२)पदार्थव्यवच्छेदकम्, एतैश्च पर्यायशब्दैर्नान्यः पदार्थोऽभिधीयत इत्य-

### न्यायवार्त्तिकतात्पर्य्यटीका

न प्रमाणाभावमात्राद् व्यतिरेकप्रतिषेधः, यस्तु योग्यप्रमाणाभावादिति विशेषहेतुः, तं प्रत्याह—यश्च तद्ग्रह इति। असिद्धता हेतुदोषः। दर्शनस्पर्शनाभ्यामेकार्थप्रतिसन्धानमेव रूपादिव्यतिरिक्तग्रहणमितो गुणसमुदायव्यतिरेकेणाग्रहणमित्यसिद्धो हेतुरिति।—एकत्र अन्यत्वे, प्रमाणानामुपपत्तेः, एकत्र अनन्यत्वे, प्रमाणानामनुपपत्तेरिति। प्रकृतमुपसंहरति—तस्मादिति ॥१४॥

आत्मादीनां बुद्धिहेतूनां लक्षणस्यानन्तरं हेतुमती बुद्धिर्लक्षणीयेत्याह वार्त्तिककारः—अथ बुद्धेरवसरप्राप्ताया इति। लक्षणं तावत्प्रकृतत्वादपदेष्टव्यमेव, तदपदेशद्वारेणान्यदपि किञ्चित् सूचनीयम्, अत एवोक्तं—सूत्रमिति। अन्यच्च सांख्यमतनिराकरणम्। यथोक्तं भाष्यकारेण—अचेतनस्य करणस्य बुद्धेरिति। इवकारेण नेदं प्रत्याख्यानपरम्, अपि तु लक्षणपरादयमर्थः प्रतीयमानोऽपेक्षितश्च नोपेक्षणीय इत्युक्तं भवति।

बुद्धि—रम् (सू, १५) ॥ सूत्रतात्पर्य्यमाह—एतैरिति। पृच्छति—कथमिति। समानासमानजातीयव्यवच्छेदकं हि लक्षणमव्यभिचारितया, पर्य्यायशब्दाश्च संकेतमात्राधीनप्रवृत्तयः क्व नाम न संभवन्ति, तस्मान्नैते लक्षणमिति भावः। उत्तरम्—व्यवच्छेदेति। ननु व्यभिचार-

### वृत्तिः

बुद्धिं लक्षयितुमाह—( बुद्धिरित्यादि )।

अनर्थान्तरम्—समानार्थकम्, न तु साङ्ख्यानामिव बुद्धितत्त्वस्य(३) महत्तत्त्वापर-

(१) "तदा तदा" इति ख०। (२) "इतरेतर" इति ख०। (३) "बुद्धिसत्त्वस्य" इति ख०।

## न्यायभाष्यम्

देहेन्द्रियसंघातव्यतिरिक्त इति। प्रमेयलक्षणार्थस्य वाक्यस्यान्यार्थप्रकाशनमुपपत्तिसामर्थ्यादिति ॥ १५ ॥

## न्यायवार्त्तिकम्

साधारणत्वाल्लक्षणम्। उपपत्तिसामर्थ्यात् पर्यायशब्दाभिधानाद् बुद्धिवृत्तेर्निराकरणम्। य आहुः—'बुद्धेर्ज्ञानं वृत्तिरात्मन उपलब्धिर्वृत्तिरिति' तन्निराकरणार्थं समानार्था एते शब्दा इति बुद्धिवृत्तिः पृथङ्निराकृता भवति। का पुनरत्रोपपत्तिर्भवति? आत्मोपलभते बुद्धिर्जानीत इति ब्रुवाण उभयोश्चैतन्यं प्रतिपद्यते, उभयचैतन्ये च प्रत्ययव्यवस्थानुमानं न (१)स्यात्। यदि

## न्यायवार्त्तिकतात्पर्य्यटीका

संभवेन व्यवच्छेदकत्वमयुक्तमत आह—एतैश्चेति। संकेतो हि द्वेधा, सार्वजनीनो यथा गौरिति गोजातीयस्य वाचकः, प्रादेशिकश्च यथा चैत्र इति पुरुषभेदस्य। तत्र सार्वजनीनः शक्नोति व्यवच्छेदबुद्धिं भावयितुम्, तद्विवक्षयैवोक्तम्—एतैश्चेति। उपपत्तिसामर्थ्यादिति भाष्यावयवं व्याचष्टे —पर्य्यायेति। अत्रेतनस्येत्यादि भाष्यम्, तद्व्याचष्टे—य आहुर्बुद्धेरिति। बुद्धिः किल त्रैगुण्यविकारः, त्रैगुण्यं चाचेतनमित्यचेतनं केवलमिन्द्रियप्रणालिकयाऽर्थाकारेण परिणमते, चितिशक्तिश्चापरिणामिनी नित्यचैतन्यस्वभावा, तस्याः सन्निधानादयस्कान्तमणिकल्पा बुद्धिस्तत्प्रतिबिम्बोद्ग्राहितया चैतन्यरूपतामापन्नेवार्थाकारपरिणताऽर्थं चेतयते, तेन योऽसौ नीलाकारः परिणामो बुद्धेः, स ज्ञानलक्षणा वृत्तिरित्युच्यते। आत्मप्रतिबिम्बस्य तु बुद्धिसंक्रान्तस्य यो बुद्ध्याकारनीलसंबन्धः स आत्मनो व्यापार इवोपलब्धिरात्मनो वृत्तिरित्याख्यायते, तदिदं बुद्धितत्त्वं जडप्रकृतितया इन्दुमण्डलमिव स्वयमप्रकाशं चैतन्यमार्त्तण्डमण्डलच्छायापत्त्या प्रकाशते, प्रकाशयति चार्थानिति। तन्निराकरणाय पर्य्यायोपन्यासः। नात्मवृत्तेरुपलब्धेरन्याऽस्ति बुद्धिः, नापि बुद्धिवृत्तिर्ज्ञानमन्यदिति। अयमभिसंन्धिः—न तावद्बुद्धेरात्मच्छायापत्तिरिन्दाविव मार्त्तण्डमण्डलतेजःसंक्रान्तिः पारमार्थिकी, चितेरपरिणामितया संक्रमायोगात्। तस्माद् भ्रान्तिः, सा च न तावद्बुद्धेः, तस्या अचैतन्यात्। नाप्यात्मनः, तस्यावृत्तिकत्वात्, तथात्वे परिणामापत्तेः। तस्मात्कृपणधनमिवात्मचैतन्यं न स्वपरोपकारीति बुद्धेः स्वाभाविकं चैतन्यमास्थेयम्, तथाच उभयचैतन्ये दूषणमुक्तम्(२)। प्रत्ययव्यवस्थया यदेककर्तृकत्वानुमानं तन्न स्यादित्यर्थः। अथ

## वृत्तिः

पर्यायस्य परिणामविशेषो ज्ञानम्। यथा चैतत्तथा वक्ष्यते। तथा च बुद्ध्यादिपदवाच्यत्वमनुभवसिद्धज्ञानत्वजातिरेव वा लक्षणमिति भावः ॥ १५ ॥

(१) "न" इति ख-पु नास्ति। (२) "उभयचैतन्ये च" इत्यादिना वार्त्तिके उक्तम्।

### न्यायभाष्यम्

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहाः सुखादिप्रत्यक्षमिच्छादयश्च मनसो लिङ्गानि। तेषु सत्स्वयमपि—

## (सू)—युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्॥ १६॥

अनिन्द्रियनिमित्ताः स्मृत्यादयः करणान्तरनिमित्ता भवितुमर्हन्तीति। युगपच्च

### न्यायवार्त्तिकम्

बुद्धिश्चेतना आत्मा चेतनो न बुद्ध्यवसितानर्थानात्मोपलभेत(१)। किं कारणम्? चेतनान्तरोपलब्धानां(२) चेतनान्तरस्याप्रतिपत्तेः। अस्ति च प्रतिपत्तिः, तस्मादेकश्चेतन इति। बुद्धिवृत्त्यविशिष्टायां च ज्ञातृवृत्तौ कल्पितायामात्मनः स्वरूपं वक्तव्यम्। बुद्धिरध्यवस्यत्यात्मा चेतयत इति चेत्—अथापीदं स्यात् यथा बुद्धिरर्थानध्यवस्यति तथाऽऽत्माऽधिदेशमधिकालं चोपलभत इति। अध्यवस्यत्युपलभत इति पर्यायशब्दौ। न च पर्यायशब्दैः पदार्थनानात्वं युक्तम् यथा ध्वनिर्नाद इति। अन्यथा हि ध्वनिर्नाद इत्यत्रापि नानात्वं स्यात्। अथात्मा चेतयते बुद्धिर्ज्ञापयतीति चेत्(३)? अद्धा बुद्ध्या जानीते पुरुषो न बुद्धिः, बुद्धिर्ज्ञापयतीति, बुद्धिर्ज्ञानसाधनं भवतीति॥ १९॥

स्मृत्यनुमानागमसंशयप्रतिभास्वप्नज्ञानोहा इति भाष्यम्। एते स्मृत्यादयो मनसो लिङ्गं भवन्ति। किमेत एव? न(४)। किं तर्हि? इयं च युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्।

यस्मादिन्द्रियार्थसन्निकर्षे सत्यपि युगपज्ज्ञानानि न(५) सम्भवन्ति, अतो गम्यते—

### न्यायवार्त्तिकतात्पर्य्यटीका

द्वयोश्चेतनयोरेका वृत्तिर्भेदाग्रहो वा, तेनैककर्तृकत्वाभिमान इत्यत आह—बुद्धिवृत्त्यविशिष्टायामिति। बुद्धिर्ज्ञानसाधनमिति। बुद्ध्यतेऽनेनेति व्युत्पत्त्या मन उच्यते, गन्धादिविषयतया सुखदुःखविषयतया चेयं बुद्धिर्भाव्यमाना निर्वेदाय कल्पत इति॥ १९॥

भाष्यकारः क्रमप्राप्तं मनोलक्षणसूत्रमवतारयन्नुत्सूत्रमन्यान्यपि लक्षणान्याह—स्मृतीत्यादि। सुखादिप्रत्यक्षमित्यादिशब्देन विषयतयेच्छादयः संगृहीताः। इच्छादय इत्यादिशब्देन कार्य्यतया सुखादयः संगृहीताः। युग—ङ्गम् (सू०, १६)॥

अनिन्द्रियनिमित्ता अबाह्येन्द्रियनिमित्ता इत्यर्थः। स्मृतीत्यादिभाष्यस्य वार्त्तिककारस्तात्-

(१) "लभते" इति ख०। (२) "चेतनोपलब्धानाम्" इति ख०। (३) "चेत्" इति ख-पु नास्ति।
(४) ख-पु "न" नास्ति। (५) "न" इति ख-पु नास्ति।

## न्यायभाष्यम्

खलु घ्राणादीनां गन्धादीनां च सन्निकर्षेषु सत्सु युगपज्ज्ञानानि (१) नोत्पद्यन्ते, तेनानुमीयते, अस्ति तत्तदिन्द्रिय(२)संयोगि सहकारि निमित्तान्तरमव्यापि, यस्यासन्निधेर्नोत्पद्यते

## न्यायवार्त्तिकम्

अस्ति तदिन्द्रिय(३)संयोग(४)सहकारि निमित्तान्तरमव्यापि, यस्य सन्निधानासन्निधानानुविधानात् ज्ञानस्योत्पत्त्यनुत्पत्ती भवत इति। कुतः ? कारणवैकल्ये कार्यप्रतिबन्धादिति सूत्रार्थः।

कथं पुनः स्मृत्यादयो मनसो लिङ्गं भवन्त्यन्यत्र(५) वर्तमाना इति ? न ब्रूमः स्मृत्यादयो मनोवृत्तित्वान्मनसो लिङ्गं भवन्ति। अपि तु गन्धादिक्रियान्यत्वे सति क्रियात्वात् करणान्तरप्रयोजकत्वम्, या गन्धादिभ्योऽन्या क्रिया सा करणान्तरप्रयोज्या दृष्टा, यथा रथादिक्रिया। क्रिया चेयं स्मृत्यादिका तस्मादियमपि करणान्तरं प्रयोजयति। सुखादयो वा गन्धादिभ्योऽन्यत्वे(६) सति विषयत्वाच्चक्षुरादिव्यतिरिक्तकरणान्तरप्रयोजका रथादिवदिति। तद्यथा रथादयो विषयाः चक्षुरादिव्यतिरिक्तं करणं वास्यादि(७) प्रयोजयन्ति, विषयाश्च सुखादयः, तस्मात्तैरपि करणान्तरं प्रयोजयितव्यमिति। अथायुगपज्ज्ञानोत्पत्तिर्ज्ञानधर्मः सा कथं मनोलिङ्गं भवति ? अथासम्बद्धमपि लिङ्गमिष्यते ? सर्वं सर्वस्य लिङ्गं स्यात्, अस्त्यात्मा काकस्य कार्ष्ण्यादित्येतदपि स्यात्, न त्वेवं भवति। तस्मान्नासम्बद्धं लिङ्गं सम्भवति(८)। असम्बद्धमपि लिङ्गं भवतीत्येके—यथा प्रत्यग्रशरावदर्शनं कुलालावृत्ति कुलालसद्भावं गमयति भ्रान्तिमच्चक्रदर्शनं

## न्यायवार्त्तिकतात्पर्य्यटीका

पर्य्यमाह—स्मृतीति। अनिन्द्रियेत्यादि(९) भाष्यं व्याचष्टे—यस्मादिति। इन्द्रियगतरूपादिव्यावृत्त्यर्थमुक्तमिन्द्रियसंयोगीति। तथाप्याकाशादीनां मनस्त्वं मा भूदत उक्तम्—सहकारीति। तथाप्यालोकस्य मा भूदत उक्तम्—निमित्तान्तरमिति। तथाप्यात्मनो मा भूदत उक्तम्—अव्यापीति।

आक्षिप्य भाष्यं समाधत्ते—कथं पुनरिति। चक्षुरादिभ्योऽनुत्पत्तौ सत्यां क्रियात्वात्। अत्र च य आत्मनो विशेषगुणास्ते सर्वे इन्द्रियजन्मानो यथा गन्धादिप्रत्ययाः, तथा च विवादाध्यासिताः स्मृत्यादयः, तस्मात्तेऽपीन्द्रियजन्मानः, एवं च संस्कारादिषु न करणत्व-

## वृत्तिः

मनो लक्षयति—( युगपज्ज्ञानेत्यादि )।

युगपत्—एककाले, एकात्मनीति पूरणीयम्। ज्ञानानामनुत्पत्तिर्यतः स एव धर्मो

(१) "युगपद्‌ भानानि" इति अ-ग०। (२) "तदिन्द्रिय" इति वि-टि०। (३) "तत्तदिन्द्रिय" इति भाष्ये। (४) अत्र "संयोगि" इत्येवं पाठः सुष्ठुतरः, भाष्यतात्पर्य्याभ्यां तथा प्रतीतेः। (५) "भवन्त्यत्र" इति ख०। (६) "सुखादयो रागान्यत्वे" इति ख०। (७) "वास्या स्यादिति" इति ख०। (८) "लिङ्गं सम्भवति" इत्यत्र "लिङ्गमिति" इति ख०। (९) आदर्शे—"अनेनेन्द्रियत्यादि" इति पाठः।

## न्यायभाष्यम्

ज्ञानं सन्निधेश्चोत्पद्यत इति। मनःसंयोगानपेक्षस्य हीन्द्रियार्थसन्निकर्षस्य ज्ञानहेतुत्वे युगपदुत्पद्येरन् ज्ञानानीति ॥ १६ ॥

## न्यायवार्त्तिकम्

चेति, तन्न, नैवात्र कुलालसद्भावो बोद्धव्यः किन्तु देश एवाविदूरकुलालवत्त्वेन साध्यः; तस्य प्रत्यग्रशरावत्वं धर्मः भ्रान्तिमचक्रवत्त्वेनापि (१)देशोऽविदूरकुलालवत्त्वेन साध्यते, तस्मान्नासम्बद्ध-मनुमानं क्वचिदिति। युगपज्ज्ञानानुत्पत्तिस्तर्हि कथं मनसाऽसम्बद्धा मनोलिङ्गं भवति। युगप-ज्ज्ञानोत्पत्तेरेव पक्षीकरणान्नासम्बद्धम्। कथमिति? रूपादिग्रहणानि चक्षुरादिव्यतिरेके-णाधिष्ठायकान्तरापेक्षाणि अयुगपदुत्पत्तेः। तद् यथा अनेकशिल्पपर्यवदातस्य पुरुषस्य (२) अनेकं वास्यादि युगपत् सन्निधानेनोपस्थितं हस्ताद्यधिष्ठायकापेक्षं न युगपदनेकरथादिक्रियां निर्वर्तयति, तथा चक्षुरादि न युगपदनेकं ज्ञानं करोति, तस्मात्तदप्यधिष्ठायकान्तरमपेक्षत इति। इन्द्रियाणि वा पक्षी-कृत्य वक्तव्यम्। कथमिति? चक्षुरादीन्द्रियम् आत्मप्रवृत्ता (३) वधिष्ठायकान्तरापेक्षम्, अयुगपत् प्रवृत्तेः वास्यादिवदिति। यदि तर्हि चक्षुरादीन्द्रियं मनःसन्निधानापेक्षमर्थानामयुगपद्ग्राहि, य एकेन्द्रियग्राह्यास्तेषु कथमयुगपद्ग्रहणम्? न हि तत्रासन्निहितं मन इति। सम्बन्धिभेदादिति चेत्, युगपत्सम्बन्धिषु कथम्? भवतु तावन्नीलादिभेदेषु एकेन्द्रियविषयेषु इन्द्रियविषय(४)सम्बन्धि-भेदादयुगपद्ग्रहणम्, अथ ये युगपत् सम्बध्यन्ते तेषु कथं शुक्लो गौर्गच्छतीति प्रत्यया न (५) युगपत् प्राप्नुवन्ति? बुभुत्साभेदादयुगपद्ग्रहणमित्येके—एके तावद् ब्रुवते सम्बद्धोऽप्यर्थोऽबुभुत्सि-तत्वान्न गृह्यत इति, तन्न, मनोनिवृत्ति (६) प्रसङ्गात्—एवं तर्हि मनः परित्याज्यम् यदि बुभुत्साभेदादयुगपद्ग्रहणानि भवन्ति। अन्यत्रापि बुभुत्साभेदो(७) न दण्डवारित इति मन इदानी-मनर्थकं परित्याज्यम्। सत्यां च बुभुत्सायामयुगपद्ग्रहणे न्यायोऽन्योऽवधारणीयः, तस्मादन्य-

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रसङ्ग इति। सौत्रं हेतुमाक्षिप्य समाधत्ते—अथायुगपदिति। संवन्धिभेदादिति। यदा तस्यैव मनःसंयुक्तस्येन्द्रियस्य क्रमेण नीलादयोऽर्थाः संबध्यन्ते तदा तत्क्रमात् क्रम इत्यर्थः।

## वृत्तिः

ज्ञानकरणाणुत्वं मनसो लिङ्गं—लक्षणमित्यर्थः। तथा हि चक्षुरादिषु विषयसम्बद्धेष्वपि यस्याऽसन्निधाना(८)देकं न ज्ञानं जनयति, तत्सम्बन्धा(९)दपरं च ज्ञानं जनयति, तदेव

---

(१) "चक्रत्वेनापि" इति ख०। (२) "पुरुषस्य" इति ख नास्ति। (३) "प्रयुक्ता" इति ख०। (४) "एकेन्द्रियविषयेषु इन्द्रियविषय" इति ख-पु नास्ति। (५) "न" इति ख-पु नास्ति। (६) "मनोवृत्ति" इति ख०। (७) "अन्यत्वाद्बुभुत्साभेद" इति ख०। (८) "यस्याऽऽसत्त्वभावादिति" आ०-न०। (९) "यत् सम्बन्धादि"ति आ।

## न्यायभाष्यम्

क्रमप्राप्ता तु—

### ( सू )—प्रवृत्तिर्वाग्बुद्धिशरीरारम्भः (१) ॥ १७ ॥

मनोऽत्र बुद्धिरित्यभिप्रेतम्, बुध्यतेऽनेनेति बुद्धिः। सोऽयमारम्भः शरीरेण वाचा मनसा च पुण्यः पापश्च दशविधः। तदेतत्कृतभाष्यं द्वितीयसूत्र इति ॥ १७ ॥

## न्यायवार्त्तिकम्

निमित्तमयुगपद्ग्रहणमिति। किं पुनर्निमित्तम्? करणत्वम्, यथैवायं करणधर्मो नानधिष्ठितं करणं प्रवर्तत इति, तथा सम्बद्धस्याप्यनेकक्रियाकारित्वं नास्ति, न हि किञ्चित्(२) करणं सम्बद्धमपि सदेकदाऽनेकां क्रियां(३) शक्नोति कर्तुम्। यदि पुनरात्मैवाधिष्ठाता भवेत् तथाप्यात्मनो युगपदनेकेन्द्रियसम्बद्धस्यानिषेधादयुगपज्ज्ञानोत्पत्तौ न्यायोऽन्योऽवधार्य्यः। स च नान्तरेण मन इति सिद्धं मनः ॥ १६ ॥

प्रवृत्तिर्वाग्बुद्धिशरीरारम्भ इति। शरीरेण मनसा वाचा च। सेयं प्रवृत्तिः प्रत्येकं

## न्यायवार्त्तिकतात्पर्य्यटीका

बुभुत्साक्रमं गृहीत्वा सिद्धान्तेऽपि मनःपरित्यागो मा भूदत उक्तम्—सत्यां बुभुत्सायामयुगपद्ग्रहण इति। न हि किंचित्करणं संबद्धमपि सदिति स्यात्, यद्येवं धारावाहिकज्ञानोत्पत्तिर्न स्यात्, द्वितीयादिज्ञानेष्वपि सैव सामग्रीति सकृदेव यावत् कर्त्तव्यकरणात् समर्थस्य क्षेपायोगात्। क्षेपयोगे वा पश्चादपि न जनयेत्, अविशेषात्। न च कर्त्तुरप्ययं क्रमकारिताधर्मः, स ह्यनेककरणाधिष्ठानेन युगपन्नानाकार्य्याणि करोति, युगपन्माणवको गच्छति, पठति, वहति चाऽऽचार्य्यस्य कमण्डलुमिति, तस्मात् सर्वमवदातम्। तदिदमपि मनः स्मृत्यादिसाधनतया भाव्यमानं निर्वेदाय कल्पत इति सिद्धम् ॥ १६ ॥

क्रमप्राप्ता त्विति भाष्यम्। प्रवृत्तिलक्षणमवतारयितुं मनसोऽपि प्रवृत्तिर्दर्शनीया, न चाप्रतिपादिते मनसि शक्या दर्शयितुमिति मनसोऽनन्तरत्वं प्रवृत्तेरित्यर्थः।

## वृत्तिः

चाणु निखिलज्ञानजनकं सुखादिसाक्षात्कारासाधारणकारणम्, तदेकमेव लाघवात् सिद्धं मन इत्यर्थः। एवमव्याख्याने च लक्षणप्रकरणे प्रमाणोपन्यासोऽसङ्गतः स्यादिति।

अन्ये तु सति धर्मिणि लक्षणचिन्तेत्यतो मनःसाधनाय 'युगपत्'—इति सूत्रम्। इत्थञ्च मनःसिद्धौ निःस्पर्शाणुत्वादिकं लक्षणं सुकरमित्याशय इति वदन्ति ॥ १६ ॥

---

(१) ज-ग-आ-पा-ल-पुस्तकेषु "इति" इत्यधिकम्। (२) "किंचित्" इति ख-पु नास्ति। (३) अत्र ख-पुस्तके—"भिन्नाम्" इत्यधिक पाठः।

## न्यायवार्त्तिकम्

दशविधा पुण्या पापा च। पुण्या—कायेन परित्राणं परिचरणं दानमिति। वाचा सत्यं हितं प्रियं स्वाध्यायश्च इति। मनसा दया स्पृहा श्रद्धा चेति। विपर्ययेण पापा दशविधैव। क्षणिकत्वात् प्रवृत्तेर्जन्मकारणत्वानुपपत्तिः, सेयं प्रवृत्तिः क्षणिका सती जन्मकारणमिति न युक्तम्, ततश्च द्वितीयसूत्रव्याघातः। न, प्रवृत्तिफले प्रवृत्त्युपचारात्। प्रवृत्तिफले धर्माधर्मौ अस्मिन् (१) सूत्रे प्रवृत्तिरित्युच्यते। कस्मात्? तत्साधनत्वात् अन्नं वै प्राणिनः प्राणा इति यथा(२)॥ १७॥

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रवृ—म्भः (सू० १७)॥ आरम्भः प्रवृत्तिः, सा द्विधा ज्ञानहेतुः क्रियाहेतुश्च। तत्र या ज्ञानोत्पादद्वारेण पुण्यपापहेतुः सा वाक्प्रवृत्तिः, वागिति च ज्ञापकहेतूपलक्षणम्, तेन मनसा इष्टदेवताद्यनुचिन्तनं चक्षुरादिभिः साध्वसाधुदर्शनादिसूचितं भवति। क्रियाहेतुर्द्वयी कायनिमित्ता मनोनिमित्ता चेति। तदेतद्वार्त्तिककारो विभजते—शरीरेणेति। ननु प्रवृत्तेर्जन्महेतुत्वमुक्तं द्वितीयसूत्रे,न चेयं क्षणिका सती आमुष्मिकं जन्म साधयितुमर्हति, तस्माद् द्वितीयसूत्रव्याघात इति चोदयति—क्षणिकत्वादिति। परिहरति—नेति॥ १७॥

## वृत्तिः

प्रवृत्तिं लक्षयति विभजते च—( प्रवृत्तिरित्यादि )।

अत्र च प्रवृत्तित्वं रागजन्यतावच्छेदको जातिविशेषः, स एव लक्षणम्। ईश्वरकृतेरपि लक्ष्यत्वे यत्नत्वमेव तथा, जीवनयोनियत्ने निवृत्तौ च मानाभावात्। तत्सद्भावेऽपि प्रवृत्तित्वं नित्ययत्नसाधारणं तद्व्यावृत्तं वा तथा, द्वन्द्वानन्तरश्रुतारम्भपदस्य प्रत्येकमन्वयाद्वागारम्भादिभेदेन त्रिविधा प्रवृत्तिः। बुद्धिशब्देनात्र मनोऽभिप्रेतम् इति भाष्यम्(३)। शरीरशब्दश्च चेष्टावत्त्वेन हस्तादिसाधारणः। तथा वचनानुकूलो यत्नो वागारम्भः, वचनाननुकूलः शरीरगोचरो यत्नश्चेष्टानुकूलयत्नो वा शरीरारम्भः, एतद्द्वयभिन्नो यत्नो बुद्ध्यारम्भः, स च ध्यानदयादेवदर्शनाद्यनुकूलः पर्यवस्यति।

प्राञ्चस्तु सामान्यविशेषलक्षणेष्वदृष्ट(४)जनकत्वं निवेशयन्ति। इयं च कारणरूपा प्रवृत्तिः, कार्यरूपा तु धर्माधर्मात्मिकेति॥ १७॥

---

(१) "प्रवृत्तिफलं धर्माधर्म्मौ धर्मिण" (?) इति ख०। (२) "यथा" इति ख-पु नास्ति। (३) "भाष्यम्" इति व-चा-पु-नास्ति। (४) "लक्षणे चादृष्ट" इति व०।

## न्यायभाष्यम्

## (सू)—प्रवर्त्तनालक्षणा दोषाः ॥ १८ ॥

प्रवर्तना प्रवृत्तिहेतुत्वम्, ज्ञातारं हि रागादयः प्रवर्तयन्ति पुण्ये पापे वा। यत्र मिथ्याज्ञानं तत्र रागद्वेषाविति। प्रत्यात्मवेदनीया हीमे दोषाः कस्माल्लक्षणतो निर्दिश्यन्त इति? कर्मलक्षणाः खलु रक्तद्विष्टमूढाः, रक्तो हि तत्कर्म कुरुते येन कर्मणा सुखं दुःखं वा लभते(१), तथा द्विष्टस्तथा मूढ इति(२)। रागद्वेषमोहा इत्युच्यमाने बहु नोक्तं भवतीति ॥ १८ ॥

## न्यायवार्त्तिकम्

प्रवर्तनालक्षणा दोषाः। का पुनरियं प्रवर्तना? ययाऽवशः प्रवर्तते। तं प्रवर्तमानं रागादयः प्रवर्तयन्तीति। सेयं प्रवृत्तिहेतुत्वात् प्रवर्तनेत्युच्यते यथा कारणा कारणेति। सा पुनरियं प्रवर्तना कथं गम्यते? प्रत्यात्मं प्रत्यक्षा, परशरीरे त्वानुमानिकी, आत्मवदिति।

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रयोज्यव्यापारपूर्वकत्वेन प्रयोजकव्यापारनिरूपणात् प्रवृत्त्यनन्तरं दोषलक्षणम्। प्रव—षाः (सू० १८)॥ रागद्वेषौ हि मोहप्रभवौ पुरुषं प्रवर्त्तमानं प्रवर्त्तयतः, तयोर्धर्मः प्रवर्त्तना, सा च मोहैकार्थसमवायः, तावद्धि अयं रागादिवशः स्पन्दते यावदस्य मोहो वर्तत इति। प्रत्यात्मवेदनीया इति चोद्यभाष्यम्, तस्यार्थः—लक्षणं खल्वनुमानम्, न च प्रत्यात्मवेदनीयेषु समानासमानजातीयव्यावृत्तेषु स्फुटतरेषु तद् युक्तमिति भावः। परिहारभाष्यम्—कर्म्मलक्षणा इति। तस्यार्थः स्वरूपतः स्फुटत्वेऽपि न निर्वेदविषयतया स्फुटता, तथा चेह प्रयोजनम्, प्रवर्त्तनावत्त्वेन चैते निर्वेदविषयाः, सा च प्रवृत्त्या कार्य्येण लक्ष्यत इति कर्म्मलक्षणा इत्युक्तम्। यतः कर्म्मणा प्रवृत्त्या प्रवर्त्तकरागादियुक्ताः पुरुषा लक्ष्यन्ते, अतो रागादीनां प्रवर्त्तनावत्त्वमपि लक्षितं भवति। बहु नोक्तं भवतीति स्वरूपमात्रं रागादीनामुक्तं भवति, न तु प्रवर्त्तनावत्त्वमपि तेषामित्यर्थः। तदेतत्सर्वं वार्त्तिककारः प्रश्नपूर्वकं व्याचष्टे—का पुनरिति। अवशोऽस्वतन्त्रः। सा पुनरियं प्रवर्त्तना

## वृत्तिः

दोषं लक्षयति—( प्रवर्त्तनेत्यादि )।

दोषा इति बहुवचनं रागद्वेषमोहात्मकलक्ष्यत्रयज्ञापनाय। प्रवर्त्तना—प्रवृत्तिजनकत्वम्, तदेव लक्षणं येषाम्। यद्यपीदं शरीरादृष्टेश्वरेच्छादावतिव्याप्तम्, तथापि लौकिकमानस(३)-

(१) "भजते" इति ज-भा०। (२) "इति" शब्दात् परं "दोषाः" इत्यधिकं ज-भा०। (३) "मानस" इति व-भा-पु नास्ति।

## न्यायभाष्यम्

## ( सू )—पुनरुत्पत्तिः प्रेत्यभावः ॥ १९ ॥

उत्पन्नस्य क्वचित्सत्त्वनिकाये मृत्वा या पुनरुत्पत्तिः स प्रेत्यभावः। उत्पन्नस्य—सम्बद्धस्य। सम्बन्धस्तु देहेन्द्रियमनोबुद्धिवेदनाभिः। पुनरुत्पत्तिः—पुनर्देहादिभिः सम्बन्धः। पुनरित्यभ्यासाभिधानं यत्र क्वचित्प्राणभृन्निकाये वर्त्तमानः

## न्यायवार्त्तिकम्

यथा आत्माऽहङ्कारविषयत्वेनावतिष्ठमानः प्रत्यात्मं प्रत्यक्षो भवति। न ह्ययमहङ्कारबुद्धिरानुमानिकी, नागमिकी। कथं नानुमानिकी ? लिङ्गाभावात्। कथं नौपदेशिकी ? अनुपदिष्टार्थप्रतिपत्तेः। तस्माद्रूपादिवत् प्रत्यात्ममात्मा प्रत्यक्ष इति। प्रवृत्तिनिवृत्त्यनुमेयस्तु परशरीर इति ॥ १८ ॥

पुनरुत्पत्तिः प्रेत्यभावः। पूर्वोपात्तशरीरादिपरित्यागादन्यशरीरोपसंक्रान्तिः स प्रेत्यभाव इति। पुनर्ग्रहणं संसारानादित्वज्ञापनार्थम्। पुनः पुनर्जन्ममरणे भवत इत्यनादित्वं संसारस्य दर्शयति। कः पुनरयं संसारः ? दुःखादीनां मिथ्याज्ञानपर्यन्तानामविच्छेदेन यः कार्यकारणभावः स संसार इति। स चानादिः पूर्वापरकालनियमाभावात्। यदि पूर्वं दुःखम्,

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रवर्त्तकानां दोषाणां व्यापारः कथं गम्यते ? दोषा हि गम्यन्ते न तु तेषां प्रवृत्तिहेतुत्वमपीत्यर्थः। उत्तरम्—प्रत्यात्ममिति। स्वपरात्मनोर्यथासंख्यं प्रत्यक्षानुमानाभ्याम्, मोहैकार्थसमवायो हि रागादीनां मानसप्रत्यक्षवेदनीय इत्यर्थः ॥ १८ ॥

उद्देशक्रमप्राप्तं प्रेत्यभावं लक्षयति—पुन—वः (सू० १९) ॥ सत्त्वनिकायः प्राणिनिकायः। नन्वात्मनो नोत्पत्तिः संभवति नित्यत्वादित्यत आह भाष्यकारः—उत्पन्नस्य संबद्धस्येति। तदेतद्वार्त्तिककारो व्याचष्टे—पूर्वेति। पुनर्ग्रहणमिति पुनरित्यभ्यासमाह, तथा चानादिता

## वृत्तिः

प्रत्यक्षविषयत्वे(१)सतीति विशेषणीयम्। यागादिगोचरप्रमावारणाय प्रमान्यत्वे(२) सतीति विशेषयन्ति ॥ १८ ॥

प्रेत्यभावं लक्षयति—( पुनरुत्पत्तिरित्यादि )।

प्रेत्य—मृत्वा भावः—जननं प्रेत्यभावः। तत्र पुनरित्यनेनाभ्यासकथनात् प्रागुत्पत्तिस्ततो मरणं तत उत्पत्तिरिति प्रेत्यभावोऽयमनादिरपवर्गान्तः। एतज्ज्ञानं च

(१) "सविषयत्वे" इति आ-व०। (२) "प्रमाजन्यत्वे" इति आ०।

### न्यायभाष्यम्

पूर्वोपात्तान् देहादीन् जहाति तत्प्रैति। यत् तत्रान्यत्र वा देहादीनन्यानुपादत्ते तद्भवति। प्रेत्यभावः—मृत्वा पुनर्जन्म, सोऽयं जन्ममरणप्रबन्धाभ्यासोऽनादिरपवर्गान्तः प्रेत्यभावो वेदितव्य इति ॥ १६ ॥

## ( सू )—प्रवृत्तिदोषजनितोऽर्थः फलम् ॥ २० ॥

सुखदुःखसंवेदनं फलम्। सुखविपाकं कर्म दुःखविपाकं च। तत्पुनर्देहेन्द्रियविषयबुद्धिषु सतीषु(१)भवतीति सह देहादिभिः फलमभिप्रेतम्। तथा हि

### न्यायवार्त्तिकम्

तज्जन्मना विना न युक्तम्। अथ पूर्वं जन्म, तदा धर्माधर्मावन्तरेण न युक्तम्। अथ पूर्वं धर्माधर्मौ, तावपि विना रागद्वेषाभ्यां न युक्तौ। अथ पूर्वं रागद्वेषौ, न मिथ्याज्ञानादृते तयोः प्रादुर्भाव इति। मिथ्याज्ञानं तर्ह्यादिः ? तदपि शरीरादीनन्तरेण न युक्तम्। सोऽयं दुःखादीनां मिथ्याज्ञानपर्यन्तानां कार्यकारणभावोऽविच्छिन्नः संसार इति आजरञ्जरीभाव इति चोच्यते। सोऽयं संसारः किमात्मन आहो मनस इति ? यदि क्रियामधिकृत्योच्यते तदा मनसः, तद्धि संसरति। अथोपभोगमधिकृत्योच्यते तदाऽऽत्मनः, स हि सुखदुःखे उपभुङ्क्त इति ॥ १९ ॥

प्रवृत्तिदोषजनितोऽर्थः फलम्। शरीरादिजन्यं सर्वं फलम्, धर्माधर्मप्रवर्तकत्वात्।

### न्यायवार्त्तिकतात्पर्यटीका

सूचिता भवति। तदेतद्वार्त्तिकजातं द्वितीयसूत्रे कृतव्याख्यानम्। पूर्वाभ्यस्तसूत्रे (२) चायमर्थ उपपादयिष्यते। आजरञ्जरीभाव इत्यागमभाषयाऽस्यार्थस्यागमिकत्वं सूचयति। क्रियामित्युपसर्पणमपसर्पणं चेत्यर्थः ॥ १९ ॥

यद्यपि शरीरेन्द्रियबुद्धिसुखदुःखभोगातिरिक्तं गौणमुख्यभिन्नं फलं नास्ति, ते च यथायोगं पूर्वं लक्षिताः, तेन च रूपेण निर्वेदोपयोगिनः, तथाऽपि प्रवृत्तिदोपजनितत्वेनापि रूपेणामी निर्वेदोपयोगिन इति तेन रूपेण लक्ष्यन्ते—प्रवृ—लम् (सू० २०)॥ अत्र च प्रवृत्तिजनित इति वक्तव्ये

### वृत्तिः

वैराग्य उपयुज्यते, तेन(३) न प्रेत्येति व्यर्थम्। तदीयमरणं च तदीयजीवनादृष्टनाशः, तदीयश्चरमप्राणसंयोगध्वंसः, तदीयप्राणध्वंसो वा। तदीयोत्पत्तिस्तु तदीयविजातीयशरीराद्यप्राणसंयोग इति ॥ १९ ॥

---

(१) "सतीषु" इति भा नास्ति। (२) ३।१।१९ सूत्रे। (३) "इति" इति आ-व०।

## न्यायभाष्यम्

प्रवृत्तिदोषजनितोऽर्थः फलमेतत्सर्वं भवति। तदेतत्फलमुपात्तमुपात्तं(१)हेयम्, त्यक्तं त्यक्त(२)मुपादेयमिति नाऽस्य हानोपादानयोर्निष्ठा पर्यवसानं वास्ति, स खल्वयं फलस्य हानोपादानस्रोतसोह्यते लोक इति ॥ २० ॥

## न्यायवार्त्तिकम्

मुख्यकल्पनायां सुखदुःखोपभोग एव, तदवसानात्। यस्माद्धर्माधर्मयोः सुखदुःखोपभोग आवसानिकं( ३ ) फलम्, तस्य तु नान्तरेण शरीरादीन् सम्भव( ४ ) इति कृत्वा शरीरादीन् धर्माधर्मावारभ्य सुखदुःखोपभोगं कुरुत इति। सोऽयं फलशब्दः सुखदुःखोपभोगे मुख्यः, शरीरे गौण इति। २० ॥

## न्यायवार्त्तिकतात्पर्य्यटीका

दोषग्रहणं न केवलं प्रवृत्तिं प्रति दोषाणां हेतुभावः, अपि तु प्रवृत्तिकार्ये सुखदुःखे अपि प्रति, इति दर्शनार्थम्। दोषसलिलावसिक्तायां खलु आत्मभूमौ धर्म्माधर्म्मबीजे सुखदुःखे जनयतः नान्यथा। न चास्ति संभवो न तत्र हृष्यति तच्च तस्य सुखम्, न च तद् द्वेष्टि तच्च तस्य दुःखमिति। सूत्रे अर्थग्रहणं गौणमुख्यफलावरोधार्थम्, भाष्ये च—निष्ठा समाप्तिः, सा च प्रलयेऽप्यस्तीत्यत उक्तम्—पर्य्यवसानमिति। अवसानमात्रमस्ति, न पुनः परितः, पुनरपि सर्गहानोपादानयोर्भावादित्यर्थः। सुबोधं वार्त्तिकम् ॥ २० ॥

## वृत्तिः

फलं लक्षयति— ( प्रवृत्तिदोषेत्यादि)।

अत्र च मुख्यं फलं सुखदुःखोपभोगः, तथा च भाष्यम्—'सुखदुःखसंवेदनं फलम्'। तत्र च धर्माधर्मात्मकप्रवृत्तेः प्रयोजकत्वात्तत्र दोषस्य हेतुत्वात् प्रवृत्तिदोषजनित इत्युक्तम्। लक्षणं तु सुखदुःखान्यतरसाक्षात्कार इति। गौणं फलं तु शरीरादिकं सर्वमेव। तथा च भाष्यम्—'तत्पुनर्देहेन्द्रियबुद्धिषु सतीषु भवतीति सह देहेन्द्रियादिभिः फलमभिप्रेतम्, तथाहि प्रवृत्तिदोषजनितोऽर्थः फलमेतत्सर्वं भवति' इति। इत्थं च जन्यत्वमेव फलत्वम्; प्रवृत्तिदोषजनित इति तु निर्वेदोपयोगादुक्तम् ॥ २० ॥

---

(१) ज-पु "उपात्तम्" इति पदं सकृदस्ति। (२) "त्यक्तं त्यक्तम्" इत्यत्र "त्यक्तत्यक्तम्" इति ज०। (३) "आवसायिकम्" इति ख०। (४) "शरीरादीनसम्भव" इति ख।

## न्यायभाष्यम्

अथैतदेव—

### (सू)—बाधनालक्षणं दुःखम् (१) ॥ २१ ॥

बाधना पीडा ताप इति। तयाऽनुविद्धमनुषक्तमविनिर्भागेन वर्त्तमानं दुःखयोगाद् दुःखमिति। सोऽयं सर्वं दुःखेनानुविद्धमिति(२)पश्यन् दुःखं जिहासुर्जन्मनि दुःखदर्शी निर्विद्यते, निर्विण्णो विरज्यते, विरक्तो विमुच्यते ॥ २१ ॥

## न्यायवार्त्तिकम्

बाधनालक्षणं दुःखम्। एतदेव शरीरादिबाधनानुषङ्गाद् दुःखमित्युच्यते। स्वभावतस्तु दुःखमेव दुःखम्, लक्षणशब्दोऽनुषङ्गार्थः, सर्वमिदं शरीरादि दुःखानुषक्तमिति। अत्र शरीरं दुःखस्य निमित्तम्, निमित्तार्थोऽनुषङ्गः। इन्द्रियाणि विषया बुद्धय इति साधनं साधनार्थोऽनुषङ्गः। सुखं दुःखाविनाभावि, अत्राप्यविनाभावोऽनुषङ्गः स्वरूपतस्तु दुःखं दुःखमिति। सर्वं स्वरूपतो दुःखमिति केचित्। न, प्रत्यक्षविरोधात्। न हि प्रत्यक्षं सुखं शक्यं प्रत्याख्यातुम्। दुःखविकल्प इति चेत्—अथापीदं स्यात् दुःखविकल्प एव सुखमिति, न पुनः स्वरूपतोऽस्तीति। न, विकल्पे नञ्प्रयोगासंभवात्, (३)नहि विकल्पे नञ् प्रवर्तमानो(४)दृष्टः, न हि ब्राह्मणविशेषे भवत्यब्राह्मण इति। एवं दुःखविशेषेऽदुःखमिति न स्यात्। यदि च सुखं(५) न स्याद्धर्मवैयर्थ्यम्। किं कारणम्? सुखसाधनं धर्म इति, सुखं च नास्तीति व्यर्थो धर्मः, दुःखप्रतिषेधः फलमस्येति न युक्तम्, धर्मस्याभावफलत्वप्रसङ्गात्, अभावफलो धर्म

## न्यायवार्त्तिकतात्पर्य्यटीका

नानुक्ते शरीरादौ तेषां दुःखत्वं शक्यं लक्षयितुमिति तल्लक्षणेभ्यः परमिदं दुःखलक्षणम्—बाध—खम् (सू० २१)॥ अत्र च बाधनेति बाधनाविषयां बुद्धिं लक्षयति, तेन बाधना च तदनुषङ्गिणश्च शरीरादयो गौणमुख्यभावेन लक्षिता भवन्ति। सैव हि बाधनाबुद्धिर्दुःखे मुख्या, शरीरादौ गौणीति। अलमेभिरिति प्रत्ययो निर्वेदः, वशितया योगिनः स्वयमुपलभन्ते, स्वयमुपनतेषु विषयेषु औदासीन्यमुपेक्षाबुद्धिर्वैराग्यम्, लक्षणशब्द इति वार्त्तिकम्। अनुषङ्गश्च संबन्धः, स च बाधनायां विषयविषयिभावः शरीरादिषूक्तः। केचिद्विरक्तम्मन्या मन्यन्ते न दुःखं नामास्ति स्वरूपत इति, तान्निराचिकीर्षुराह—स्वरूपतस्तु दुःखमिति। विकल्पो विशेषः। अभावफलत्वप्रसङ्गादिति। यद्यप्युपात्तदुरितक्षयहेतवोऽपि धर्म्माः सन्ति, तथाऽप्यधिकोत्कर्षशालित्वादि-

---

(१) अत्र "इति" इत्यधिकं भा-दि-टि०। (२) "दुःखेन.नुविद्धं वहन्तम्" इति ज-भा०। (३) "नञ्प्रयोगाभावात्" इति ख०। (४) "न विकल्पो न नञवर्त्तम.नो" इति ख०। (५) "खम्" इति ख०।

## न्यायभाष्यम्

यत्र तु निष्ठा यत्र तु पर्यवसानं सोऽयम् (१)—

### ( सू )—तदत्यन्तविमोक्षोऽपवर्गः ॥२२॥

तेन—दुःखेन जन्मना अत्यन्तं विमुक्तिरपवर्गः। कथम्? उपात्तस्य जन्मनो हानम्, अन्यस्य चाऽनुपादानम्। एतामवस्थामपर्यन्तामपवर्गं वेदयन्तेऽपवर्गविदः। तदभयमजरममृत्युपदं ब्रह्म क्षेमप्राप्तिरिति।

## न्यायवार्त्तिकम्

इति। प्रवृत्तिद्वैतं च लोके दृष्टं तन्न स्यात्, हितमाप्स्यामीत्येकः प्रवर्तते, अनिष्टं हास्यामीत्यपरः प्रवर्तते, हितस्याभावात् प्रवृत्तिद्वैतं च न स्यात्। दुःखभावनोपदेशो न स्यात्, प्रतिपक्षासम्भवात्। सक्त्यभावश्च (२), न हि कश्चिद् दुःखे सज्यत इति। तस्मान्न मुख्यतः (३)सर्वं दुःखम्, दुःखभावनोपदेशेन च दुःखमित्युच्यते॥ २१॥

तदत्यन्तविमोक्षोऽपवर्ग इति। तेन शरीरादिना दुःखान्तेनाऽऽत्यन्तिको वियोग इति।

## न्यायवार्त्तिकतात्पर्य्यटीका

फलानां दर्शपौर्णमासादीनां सहस्रसंवत्सरपर्यन्तानां विधायकेभ्यो वचनेभ्यो भावफल एव धर्म्मो गम्यते, भावस्यैवोत्कर्षशालित्वादिति ॥ २१ ॥

क्रमप्राप्तमपवर्गलक्षणमवतारयति भाष्यकारः—यत्र त्विति।

तद्—र्गः (सू० २२)॥ 'तत्' इति अनन्तरं गौणमुख्यभेदभिन्नं दुःखं परामृशतीत्याह भाष्यकारः—तेन दुःखेनेति। मुख्यमेव दुःखमिति भ्रमो मा भूदत आह—जन्मनेति। अनेन जायमाना दुःखशब्देन सर्वे शरीरादय उच्यन्त इत्युक्तं भवति। अभयमिति पुनःसंसारभयाभावमाह, "अभयं च ब्रह्म" इति असकृदभयश्रुतेः। ये तु ब्रह्मैव नामरूपप्रपञ्चात्मना परिणमत इत्याहुः तान् प्रत्याह—अजरमिति। सर्वात्मना परिणाम एकदेशेन वा? पूर्वस्मिन् कल्पे सर्वात्मना

## वृत्तिः

दुःखं लक्षयति—( बाधनेत्यादि )।

बाधना—पीडा तदेव लक्षणं स्वरूपं यस्य। तथा चाऽनुभवसिद्धदुःखत्वजातिरेव लक्षणम्। शरीरेन्द्रियार्थेषु दुःखसाधनत्वात् सुखे च दुःखानुषङ्गाद् दुःखव्यवहारो गौण इति। अत एवाग्रिमसूत्रे तत्पदेन मुख्य(४)दुःखपरामर्शः ॥ २१ ॥

---

(१) "यत्र तु निष्ठा सोऽयं यत्र तु पर्यवसानम्" इति ज०। (२) "स ह्यभाव" इति ख०। (३) "मुख्यः" इति ख०। (४) "सुख" इति व०।

## न्यायभाष्यम्

नित्यं सुखमात्मनो महत्त्ववन्मोक्षे व्यज्यते, तेनाऽभिव्यक्तेनाऽत्यन्तं विमुक्तः सुखी भवतीति केचिन्मन्यन्ते। तेषां प्रमाणाभावादनुपपत्तिः। न प्रत्यक्षं नानुमानं नागमो वा विद्यते नित्यं सुखमात्मनो महत्त्ववन्मोक्षेऽभिव्यज्यत इति।

नित्यस्याभिव्यक्तिः—संवेदनम्, तस्य हेतुवचनम् (१)। नित्यस्याभिव्यक्तिः—संवेदनम्—ज्ञानमिति, तस्य हेतुर्वाच्यो यतस्तदुत्पद्यत इति।

## न्यायवार्त्तिकम्

आत्यन्तिकी सुखाभिव्यक्तिरित्येके(२)—एके त्वात्यन्तिकीं सुखाभिव्यक्तिं मुक्तिं ब्रुवते, तन्न, प्रमाणासम्भवात्। मुक्तस्यात्मनो नित्यं सुखमिति न प्रमाणमस्ति। न नास्ति, नियामकत्वादिति चेत्, अनेककारणनिष्पन्नसुखस्यात्मनि समवायो नियामकमन्तरेण न युक्तः, तस्मादात्मनि नित्यं सुखमस्ति, येनेदं सुखं नियम्यमानमात्मानमाश्रयत इति चेत्, न; सर्वोत्पत्तिमत्प्रसङ्गात् सुखवदात्मनि दुःखमपि नित्यं कल्पयितव्यं इच्छादयश्चेति। अनैकान्तिकता वा। अभिव्यक्त्यर्थानभिधानाच्च। नित्यं सुखमभिव्यज्यत इति कोऽभि-

## न्यायवार्त्तिकतात्पर्यटीका

ब्रह्मणोऽन्यथात्वाद् विनाशप्रसङ्गः। एकदेशपरिणामे तु सावयवत्वेन घटादिवदनित्यत्वप्रसङ्ग इति सूक्ष्ममजरमिति। वैनाशिकाः प्राहुः प्रदीपस्येव निर्वाणं मोक्षः तस्य चेतस इति, तान् प्रत्याह—अमृत्युपदमिति। एतदुपपादयिष्यते (३) वार्त्तिककारः। तदेतद्भाष्यं वार्त्तिककारो व्याचष्टे—तेनेति। आत्यन्तिकग्रहणं महाप्रलयावस्थानिवृत्त्यर्थम्।

अत्र भाष्यं नित्यं सुखमात्मन इत्यादि, तस्यार्थः—"विज्ञानमानन्दं ब्रह्मे"ति सामानाधिकरण्यश्रुतेः ब्रह्मस्वभावं सुखम्, तथा च ब्रह्मणो नित्यत्वात् तदपि नित्यमित्यर्थः। आत्मन इति षष्ठी राहोः शिर इतिवन्मन्तव्या। तदेतद्भाष्यं व्याचष्टे—आत्यन्तिकीति। तेषामित्यादि भाष्यं व्याचष्टे—तन्नेति। अत्रानुमानमुपन्यस्यातिप्रसङ्गेन निराकरोति—नेति। अथात्मनि दुःखमेकं नित्यं नेच्छति तत्राह—अनैकान्तिकता वा। नित्यस्याभिव्यक्तिरित्यादिभाष्यं व्याचष्टे—

## वृत्तिः

अपवर्गं लक्षयति—( तदत्यन्तेत्यादि )।

तस्य—दुःखस्य, अत्यन्तविमोक्षः—स्वसमानाधिकरणदुःखासमानकालीनो ध्वंसः।

(१) 'नित्यस्य' इत्यारभ्य 'वचनम्' इत्यन्तः पाठो ज-पु-नास्ति। (२) भाद्याः। (३) एतत्सूत्रवार्त्तिकस्यैव शेषांशे "चित्तं विमुच्यते इत्यन्ये" इत्यादिना "न चित्तस्यापवर्गः सिध्यति" इत्यन्तेन सन्दर्भेण।

## न्यायभाष्यम्

सुखवन्नित्यमिति चेत्? संसारस्थस्य मुक्तेनाऽविशेषः। यथा मुक्तः सुखेन तत्संवेदनेन (१) च सन्नित्येनोपपन्नस्तथा संसारस्थोऽपि प्रसज्यत इति, उभयस्य नित्यत्वात्।

## न्यायवार्त्तिकम्

व्यक्त्यर्थः? ज्ञानमिति चेत् नित्यमनित्यं वेति कल्पनानुपपत्तिः। अनित्यमिति चेत् कारणं वक्तव्यम्। आत्ममनःसंयोगो वा कारणं तस्यापेक्षाकारणं वक्तव्यम्। यदि मन्यसे आत्ममनःसंयोगो ज्ञानस्य कारणम्, तस्य तदर्थापेक्षाकारणं वक्तव्यम्। न हि द्रव्यगुणकर्मस्वारब्धव्येषु (२) संयोगो निरपेक्षं कारणमिति। आत्ममनःसंयोगः सुखापेक्षः कारणमिति (३)चेन्न,कैवल्यविरोधात्। अथ मन्यसे आत्ममनःसंयोगो नित्यमात्मनि व्यवस्थितं सुखमपेक्षमाणो ज्ञानकारणं भवतीति, तन्न युक्तम्, कैवल्यविरोधात्। यथाऽयमात्ममनःसंयोगो विषयमात्रमपेक्षमाणो निमित्तान्तरनिरपेक्षः सुखज्ञानं करोति, एवं रूपादीनपि विषयानपेक्षमाणः (४) तद्विषयाणि ज्ञानानि कुर्य्यात्। ततश्च कैवल्यं निवर्त्तते, सर्वानर्थानयमात्मा लभत इति। नित्योपलब्धिप्रसङ्गाच्चेति। योगजधर्मानुगृहीतो (५) नित्ये सुखे ज्ञानं करिष्यतीति चेत्, न युक्तम्, तत्क्षये तदभावात्। यदा योगजो धर्मः क्षीणो

## न्यायवार्त्तिकतात्पर्यटीका

नित्यमिति। अयमभिसन्धिः—सुखं तावदात्मनो गुणो नात्मा। उपपादितो(६)हि गुणगुणिनोर्भेदः, एवं विज्ञानमप्यात्मगुणः, न ह्युदयव्ययवतीभ्यो ज्ञानव्यक्तिभ्योऽनुदयव्ययधर्मा भवितुमर्हत्यभिन्न आत्मा। न चात्मैव ज्ञानस्वभावः तद्विषयोपधानेनोदयव्ययधर्मेव भविष्यतीति सांप्रतम्, घटमहं जानामीति मानस्यां बुद्धौ त्रयाणामपि ज्ञानज्ञेयज्ञातॄणां भेदेनानुव्यवसायात्। विषयतज्ज्ञानभेदेऽपि ज्ञातुरेकत्वेन प्रतिसन्धीयमानत्वात्। न चैतदसति बाधके भेदज्ञानं भ्रान्तमिति युक्तम्। न चागन्तुकज्ञानातिरिक्तं स्वाभाविकमात्मनि चैतन्यमनुभूयते। न चात्मैव तत्स्वभावः, सुषुप्तत्वानुपपत्तेः। अचेतयन्नेव हि सुषुप्त इत्युच्यते। न च तदा विषयशून्यं स्वनिष्ठमात्मचैतन्यमित्युक्तम्, तदवस्थाभेदस्य सुषुप्तोत्थितेन स्वप्रान्तिकस्येव स्मरणप्रसङ्गात्। सुखं च न ज्ञानजातीयमित्युपपादितं प्रत्यक्षसूत्रे। न च किञ्चिदपि स्वयंप्रकाशमिति चतुर्थे निवेदयिष्यते। (७) तदेवं व्यवस्थिते दूषणं भाष्यवार्त्तिकोक्तं द्रष्टव्यं यथाऽयमात्ममनःसंयोग (८) इति। संसारावस्थायां तावदयमात्ममनःसंयोगो (९) धर्मं निमित्तमपेक्षमाणः सुखज्ञानमकार्षीत्। यदि तु मुक्त्य-

(१) "अतत्संवेदनेन" इति टि०। (२) "आरब्धेषु" इति ख०। (३) "कारणम्" इति ख-पु नास्ति। (४) "रूपादीनामपि विषयानपेक्षमाणम्" इति ख०। (५) "गृहीते" इति ख०। (६) २०९ पृ:—तात्पर्यस्य ८म-पंक्तितः कतिपयपंक्तिभिः। (७) ४।२।३४ सूत्रवार्त्तिके। (८)-(९) आदर्शे उभयत्रैव "आत्मनः संयोग" इति पाठः।

## न्यायभाष्यम्

अभ्यनुज्ञाने च धर्माधर्मफलेन साहचर्यं यौगपद्यं गृह्येत। यदिदमुत्पत्तिस्थानेषु धर्माधर्मफलं सुखं दुःखं वा संवेद्यते पर्यायेण, तस्य च नित्य(१)संवेदनस्य च सहभावो यौगपद्यं गृह्येत, न सुखाभावो (२)नानभिव्यक्तिरस्ति, उभयस्य नित्यत्वात्।

अनित्यत्वे हेतुवचनम्। अथ मोक्षे नित्यस्य सुखस्य संवेदनमनित्यम्? यत उत्पद्यते स हेतुर्वाच्यः।

आत्ममनःसंयोगस्य निमित्तान्तरसहितस्य हेतुत्वम्। आत्ममनःसंयोगो हेतुरिति चेत्? एवमपि तस्य सहकारि निमित्तान्तरं वचनीयमिति।

धर्मस्य कारणवचनम्। यदि धर्मो निमित्तान्तरम्? तस्य हेतुर्वाच्यो यतः उत्पद्यत इति।

योगसमाधिजस्य कार्यावसायविरोधात्प्रक्षये(३)संवेदननिवृत्तिः। यदि योग-

## न्यायवार्त्तिकम्

भवति तदास्य किमनुग्राहकमिति वाच्यम्। योगजधर्मो न क्षीयते इति चेत् न युक्तम्, उत्पत्तिधर्मकस्य सर्वस्यानित्यत्वात्, सर्वमुत्पत्तिधर्मकमनित्यं दृष्टमिति। नित्योऽसौ योगसमाधिजो धर्म इति चेत्, योगजसमाधिजश्च नित्यश्चेति व्याहतम्। नित्यं ज्ञानमिति चेन्न, सुखवत् प्रमाणाभावात्, मुक्तसंसारस्थयोरविशेषप्रसङ्गाच्च। सुखदुःखसंवेदनपर्यायश्च न स्यात्, नित्यमयं सुखमुपलभेत

## न्यायवार्त्तिकतात्पर्य्यटीका

वस्थायां तदनपेक्ष एव सुखज्ञानं करोति, हन्त रूपादिज्ञानेषु इन्द्रियान्तराण्यपि नापेक्षेतेति भावः। शङ्कते—योगजेति। न वयं विषयमात्रापेक्षां ब्रूमो येन रूपादिष्वपि ज्ञानमुत्पादयेत्, अपि तु संसारावस्थायां यत् सुखज्ञानायानेनापेक्षितं तदपेक्षते, धर्मश्च तदा तेनापेक्षित इति मुक्त्यवस्थायामपि धर्ममेवापेक्षते, एतावान् विशेषो यदयं योगज इति। तथा च न रूपादिज्ञानप्रसङ्ग इति। शङ्कते—नित्योऽसाविति। निराकरोति—योगेति। ननु त्वन्मते यथा सुखसंवेदनं जिहासितम् एवम्

## वृत्तिः

तस्य च जन्मापायादेव सम्भव इत्याशयेन 'दुःखेन जन्मनाऽत्यन्तविमुक्तिरपवर्गः' इति भाष्यम्। दुःखेन—दुःखानुषक्तेनेत्यर्थः (४)॥ २२॥

॥ प्रमेयलक्षणप्रकरणं समाप्तम्॥

---

(१) "नितंरा स" इति ग०। "नितराम्" इति वि-टि०। (२) "सुखाभावे" इति टि०। (३) "प्रक्षये" इति ज-ग-आ०। (४) "दुःखानुषङ्गिनेत्यर्थः" इति आ-व०।

## न्यायभाष्यम्

समाधिजो धर्मो हेतुः ? तस्य कार्यावसायविरोधात् प्रक्षये(१)संवेदनमत्यन्तं निवर्तते(२)।

असंवेदने चाऽविद्यमानेनाऽविशेषः(३)। यदि धर्मक्षयात्संवेदनोपरमो नित्यं सुखं न संवेद्यत इति ? किं(४) विद्यमानं न संवेद्यते, अथाविद्यमानमिति नानुमानं विशिष्टेऽस्तीति।

अप्रक्षयश्च धर्मस्य निरनुमानमुत्पत्तिधर्मकत्वात्। योगसमाधिजो धर्मो न क्षीयत इति नास्त्यनुमानम्। उत्पत्तिधर्मकमनित्यमिति विपर्ययस्य त्वनुमानम्। यस्य तु संवेदनोपरमो नास्ति तेन संवेदन(५)हेतुर्नित्य इत्यनुमेयम्।

नित्ये च मुक्तसंसारस्थयोरविशेष इत्युक्तम्। यथा मुक्तस्य नित्यं सुखं तत्संवेदनहेतुश्च, संवेदनस्य तूपरमो नास्ति, कारणस्य नित्यत्वात्, तथा संसारस्थस्यापीति। एवं च (६) सति धर्माधर्मफलेन सुखदुःखसंवेदनेन साहचर्यं गृह्येतेति।

शरीरादिसम्बन्धः प्रतिबन्धहेतुरिति चेत् ? न, शरीरादीनामुपभोगार्थत्वात्

## न्यायवार्त्तिकम्

ततश्च मोक्षार्थः प्रयासो व्यर्थः स्यात्। न चायं सुखं जिहासति, विवेकहानस्याशक्यत्वात्। दुःखं जिहासमानः सुखमपि जिहासति। न चायं कदाचिद् दुःखमुपलभत इति कस्य हानार्थं प्रवर्त्तेत। शरीरादिप्रतिबन्धादप्रसङ्ग इति चेत्, नित्यं सुखमुपलभत इति नास्ति प्रसङ्गः, यस्माच्छरीरादयो नित्यसुखस्योपलब्धेः प्रतिबन्धका भवन्तीति। न, शरीरादीनामुपभोगार्थत्वात्, नित्यं शरीरादि(७)प्रसङ्गाच्च। यथा मुक्तस्य नित्यं सुखं कल्प्यते एवं शरीरादयोऽपि नित्याः कल्पयितव्याः, एवमस्य कैवल्यं(८)साधीयो भवति। शरीरादीनां नित्यत्वं दृष्टविरुद्धमशक्यं

## न्यायवार्त्तिकतात्पर्य्यटीका

अस्मन्मतेऽपि सुखसंवेदनहानाय घटिष्यत इत्यत आह—न चायं सुखमिति। अस्मन्मते हि दुःखहानायैव तदनुषक्तं सुखं जिहासितम्, नित्यं तु सुखं सर्वदुःखविनिर्मुक्तं सन्न दुःखहानाय जिहासितं भवतीत्यर्थः। न केवलमानुकूल्यात्प्रतिबन्धकत्वं नास्ति शरीरादीनाम्, प्रत्युत मुक्त्यवस्थायामपि

(१) "प्रलये" इति फ-ग-भा०। (२) "निवर्त्तेत" फ-वि-भा०। "निवर्त्तयति" इति ज-भा-ग०। (३) "मानेनाविशेष" इत्यत्र "मानाविशेष" इति ज०। (४) "किम्" इति वि-टि नास्ति। (५) "संवेदनेन" इति ज-भा०। (६) भा-पु "च" नास्ति। (७) "नित्यशरीरादि" इति ख०। (८) "वैकल्यम्" इति ख०।

## न्यायभाष्यम्

विपर्ययस्य चाननुमानात्। स्यान्मतम्—संसारावस्थस्य शरीरादिसम्बन्धो नित्यसुखसंवेदनहेतोः प्रतिबन्धकः, तेनाविशेषो नास्तीति। एतच्चायुक्तम्, शरीरादयः उपभोगार्थास्ते भोगप्रतिबन्धं करिष्यन्तीत्यनुपपन्नम्; न चास्त्यनुमानमशरीरस्यात्मनो भोगः कश्चिदस्तीति।

## न्यायवार्त्तिकम्

कल्पयितुमिति चेत्, न, सुखस्यापि तर्ह्यस्मदादेर्दृष्टविरुद्धं(१)नित्यत्वमशक्यं कल्पयितुम्, प्रमाणाभावादित्युक्तम्, तच्च नास्ति। कस्मात्? इष्टार्थाधिगमार्थत्वात्। इहायं लोकः प्रवर्त्तमान इष्टाधिगमार्थं प्रवर्त्तते, प्रवर्त्तन्ते च मोक्षमाणाः, तेषामपीष्टाधिगमार्थया प्रवृत्त्या भवितव्यम्, सेयं प्रवृत्तिर्नित्यसुखेऽर्थवती नान्यथेति। न, प्रवृत्तिद्वैतदर्शनात्। द्वे प्रवृत्ती लोके दृष्टे इष्टाधिगमार्थाऽनिष्टहानार्था च। तत्रेदं पारिव्राज्यं किमिष्टाधिगमार्थमाहोऽनिष्टहानार्थमिति सन्दिह्यते, आगमादिति चेत्—आगमादेतद्गम्यते मुक्तस्यात्मनो नित्यं सुखमिति मुक्तः सुखी भवतीति श्रूयते। आगमोऽप्येवं विचारणीयः—किमयं नित्येन सुखेन योगमाह, उत दुःखेनात्यन्तिकवियोगमाहेति। दृष्टश्च दुःखाभावेऽपि सुखशब्दप्रयोगो बहुधा लोक इति। एवं च ज्वरादिवियोगे लौकिका व्याचक्षाणा भवन्ति सुखिनः संवृत्ताः स्म इति। यदि पुनरयं सञ्चक्षाणको मोक्षे नित्यं सुखमिति सुखरागेण प्रवर्त्तते, न मुच्येत। कस्मात्? रागस्य बन्धनसमाम्नानात्, बन्धनसमाम्नातो राग इति। यद्यपि द्वेषात् प्रवर्त्तते दुःखं हास्यामीति, तथापि न मुच्येत, द्वेषस्य बन्धन-

## न्यायवार्त्तिकतात्पर्य्यटीका

कल्पनीया (२)इत्याह—नित्यं शरीरादिति। सिद्धान्तिनो वचनमनुभाष्य दूषयति—प्रमाणाभावादित्युक्तं तच्च नेति। शास्त्रेण हि मोक्षसाधने लोकः प्रवर्त्तनीयः, अप्रवर्त्तमानश्च प्रवर्त्तनीयः, इष्टार्थी च प्रवर्त्तते तत्साधने, सुखं चेष्टमिति सुखात्मको मोक्ष इत्यर्थः। सेयं लोकप्रवृत्तिरनैकान्तिकत्वेन संशयहेतुरिति परिहरति—न, प्रवृत्तीति। स्यादेतद् मुख्यासंभवेन गौणमाश्रीयते, सुखशब्दश्च सुखे मुख्यः, भाक्तस्तु दुःखनिवृत्तौ, तस्मान्नित्यानन्द एव मोक्ष इत्यत आह—यदि पुनरिति। संचक्षाणकः संख्यानप्रवृत्तो योगी, धर्माधर्मौ तावदात्मनि पारमार्थिकौ, न त्वविद्याकल्पितौ, तौ च वीतरागेणासक्तेन सता शक्यौ भोगेन क्षेतुम्, न सक्तेन, स हि सक्तस्तेषु तेषु विषयेषु उपात्तमुपात्तं भुञ्जानस्त्यक्तं त्यक्तं चोपाददानः संसारान्न मुच्यते, तस्मादयं रागो बन्धनमिति समाम्नातः, तन्निबन्धना च प्रवृत्तिः परिहर्त्तव्या, अन्यथा तु नित्यसुखावधारणजनितेयं तृष्णापिशाची

१ (१) "तर्ह्यस्मदादेरदृष्टविरुद्धम्" इति ख०। (२) "कल्पनीयता" इति पाठो भवितुमुचितः।

### न्यायभाष्यम्

इष्टाधिगमार्था प्रवृत्तिरिति चेत्? न, अनिष्टोपरमार्थत्वात्। इदमनुमानम्(१)—इष्टाधिगमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणाम्, (२)नोभयमनर्थकमिति। एतच्चायुक्तम्, अनिष्टोपरमार्थो मोक्षोपदेशः प्रवृत्तिश्च मुमुक्षूणामिति(३)। नेष्टमनिष्टेनाननुविद्धं सम्भवतीति इष्टमप्यनिष्टं सम्पद्यते, अनिष्टहानाय घटमान इष्टमपि जहाति, विवेकहानस्याशक्यत्वादिति।

दृष्टातिक्रमश्च देहादिषु तुल्यः। यथा दृष्टमनित्यं सुखं परित्यज्य नित्यं सुखं कामयते, एवं देहेन्द्रियबुद्धीरनित्या दृष्टा अतिक्रम्य मुक्तस्य नित्या देहेन्द्रियबुद्धयः कल्पयितव्याः, साधीयश्चैवं मुक्तस्य चैकात्म्यं कल्पितं भवतीति।

उपपत्तिविरुद्धमिति चेत्? समानम्(४)। देहादीनां नित्यत्वं प्रमाणविरुद्धं कल्पयितुमशक्यमिति? समानं(५) सुखस्यापि नित्यत्वं(६) प्रमाणविरुद्धं कल्पयितुमशक्यमिति।

आत्यन्तिके च संसारदुःखाभावे सुखवचनादागमेऽपि(७) सत्यविरोधः। यद्यपि

### न्यायवार्त्तिकम्

समाज्ञानादिति, रागद्वेषौ हि बन्धनमिति, न, अप्रतिकूलत्वात्। अप्रतिकूलं दुःखहानं भवति, न पुनरयं दुःखं द्वेष्टि अद्विषंश्चायं प्रवर्त्तमानोऽप्रतिकूलं दुःखहानमधिगच्छतीति।

### न्यायवार्त्तिकतात्पर्य्यटीका

लब्धप्रसरा विषयसुखेष्वपि प्रत्यासन्नेषु पुरुषं प्रवर्त्तयन्ती मोक्षमस्य सुदूरं प्रतिक्षिपेदिति मनागपि प्रसरोऽस्या न दातव्यः। तस्मान्नित्यानन्दप्रतिपादकश्रुतिरात्यन्तिके दुःखवियोगे भाक्तीति युक्तमिति भावः। चोदयति—यद्यपीति। रागवद् द्वेषस्यापि प्रसरो न दातव्यः, तस्य च त्वया प्रसरो दत्त इति तुल्यो दोष इति। परिहरति—न, अप्रतिकूलत्वात्। यथा नित्यसुखोपादानं मोक्षप्रतिकूलया सक्त्या प्रतिकूलं नैवमात्यन्तिकदुःखहानं द्वेषानुषक्तम्, द्वेषः क्रोधो मन्युरित्यनर्थान्तरम्, ज्वलनात्मको हि स भवति, नैवं वैराग्यम्, अलंप्रत्ययो हि स इत्यप्रतिकूलं दुःखहानमित्यर्थः।

---

(१) "इदमनुमानम्" इति ज नास्ति। (२) अत्र "इति" इत्यधिकं ज-पु०। (३) "नोभयमनर्थकमिति" इत्यारभ्य—"मुमुक्षूणामिति" एतत्पर्यन्तः पाठो ज-भा-पु नास्ति। (४) "समानाम्" इति वि-टि०। (५) "समानाम्" इति टि०। (६) "नित्यत्वम्" इति ज-पु नास्ति। (७) टि-पु० "अपि" नास्ति।

## न्यायभाष्यम्

(१)कश्चिदागमः स्यात् मुक्तस्यात्यन्तिकं सुखमिति ? सुखशब्द आत्यन्तिके दुःखाभावे प्रयुक्त इत्येवमुपपद्यते, दृष्टो हि दुःखाभावे(२) सुखशब्दप्रयोगो बहुलं लोक इति।

नित्यसुखरागस्याप्रहाणे मोक्षाधिगमाभावः, रागस्य बन्धनसमाज्ञानात्। यद्ययं मोक्षो(३) नित्यं सुखमभिव्यज्यत इति, नित्यसुखरागेण मोक्षाय घटमानो न मोक्षमधिगच्छेत्(४), नाधिगन्तुमर्हतीति। बन्धनसमाज्ञातो हि रागः। न च बन्धने सत्यपि कश्चिन्मुक्त इत्युपपद्यत इति।

प्रहीण(५)-नित्यसुखरागस्याप्रतिकूलत्वम्। अथास्य नित्यसुखरागः प्रहीयते, तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवति ? यद्येवम्, मुक्तस्य नित्यं सुखं भवति, अथाऽपि न भवति, नास्योभयोः पक्षयोर्मोक्षाधिगमो विकल्प्यते(६) इति ॥ २२ ॥

## न्यायवार्त्तिकम्

चित्तं विमुच्यत इत्यन्ये, रागादीनां तत्र सामर्थ्यात्। यस्माद्रागादिवशं चित्तमालम्बनान्तरं (७)गत्यन्तरेषूत्पद्यते, न पुनरात्मनि रागादीनां सामर्थ्यमस्ति। न, अयत्नतः(८)तत्सिद्धेः। ये

## न्यायवार्त्तिकतात्पर्य्यटीका

तदनेन नित्यं सुखमात्मनो व्यज्यते मोक्ष इत्यादि तस्मिन् प्रहीणे नास्य नित्यसुखरागः प्रतिकूलो भवतीत्येवमन्तं भाष्यजातं व्याख्यातं बोद्धव्यम्। यद्येवमित्यादेर्भाष्यस्यायमर्थः—एवं वैराग्येण मोक्षमाणस्य प्रवृत्तौ सत्याम्, प्रसक्तस्य (९) यदि नित्यं सुखं भवति कामं भवतु, मा भूत् उभयोरपि पक्षयोर्वीतरागप्रवृत्तौ न मोक्षाधिगमो विकल्प्यते, न संन्दिग्धो भवतीत्यर्थः।

वैनाशिकानां मोक्षमुपन्यस्यति—चित्तं मुच्यत(१०)इति। संसारी हि मुच्यते। रागादयस्तद्धेतवः। न चात्मनि नित्ये रागादयः संसारं कर्तुमुत्सहन्ते, नित्यस्याविकार्य्यत्वेन तादवस्थ्यादुपनेयाऽपनेयाभावात्। यथाऽऽहुः—

वर्षातपाभ्यां किं व्योम्नश्चर्मण्यस्ति तयोः फलम्।
चर्मोपमश्चेत् सोऽनित्यः ख-तुल्यश्चेदसत्फलः ॥

चित्तं तु कार्य्यं रागादिवशात्संसारी तद्वियोगाच्च मुच्यत इति युक्तमित्यर्थः। देवमनुष्यादि-

---

(१) "यद्यपि" इत्यनन्तरम्—"च" अधिकः दि-टि-भा०। (२) "दुःखादेरभावे" इति ल-ग-भा०। (३) "मोक्षे" इति ज-फ-भा-ग०। (४) "अधिगच्छतु" इति टि०। (५) "प्रहाणे" इति ल०। (६) "विकल्प" इति ल-फ०। (७) ख-पु अनुस्वारो नास्ति। (८) "अयने" इति ख। (९) "प्रसक्तस्य" इत्यत्र "मुक्तस्य" इति पाठः समुचितः। (१०) "विमुच्यत" इति वार्त्तिके।

## न्यायभाष्यम्

स्थानवत एव तर्हि संशयस्य लक्षणं वाच्यमिति तदुच्यते—

## न्यायवार्त्तिकम्

चित्तस्यानुत्पादनं निरोधं वाऽपवर्गमिच्छन्ति तेषामयत्नतः(१)सिद्धो मोक्षः। किं कारणम्? जन्मनो विनाशार्थत्वात्, जातं विनष्टमित्ययत्नसिद्धमेतदिति(२)सन्ततेरनुत्पादोऽपवर्ग इति चेत्, न; तस्याशक्यत्वात्। सन्ततेरनुत्पादो(३) न शक्यते कर्तुम्। कार्यकारणभावप्रवाहस्य सन्ततिभावात्। अनागतानुत्पादः क्रियत इति चेत्, अनागतानुत्पादस्य विद्यमानत्वात् किं क्रियत इति सर्वथा न चित्तस्यापवर्गः सिध्यतीति। कस्य तर्ह्यपवर्गः? योऽपवृज्यते। कोऽपवृज्यते? आत्मा। अथ काऽपवृक्तिः? दुःखादिभिर्वियोग इति॥ २२॥

प्रमेयानन्तरं प्राप्तिः संशयस्य, स्थानवतो लक्षणवचनमिति या प्रमेयानन्तरं क्रमप्राप्तिः साऽभिधीयते—

## न्यायवार्त्तिकतात्पर्य्यटीका

जातिर्गतिस्तत्रोत्पत्तिः। तदेतद्दूषयति—न, अयत्नत इति। क्षणिकत्वाच्चित्तस्य, जन्म विनाशप्रयोजनमेव, जन्मानन्तरमेव विनाश इति क्षणस्याभेद्यत्वेनोपनेयापनेयाभावात्। स्वरसभङ्गित्वाच्च वैयर्थ्यमित्यर्थः। शङ्कते—सन्ततेरिति। अनादिः खलु कार्य्यकारणप्रवाहरूपा बुद्धीनां सन्ततिः, स चात्मसाक्षात्कारोन्मूलितसवासनक्लेशजालस्य निवर्त्तते, निवृत्तिश्चेयमेव तस्या यत्तत्सन्तानवर्त्तिनश्चेतसोऽनागतस्यानुत्पाद इति भावः। निराकरोति—न, तस्याशक्यत्वात्। उत्पन्नस्यानुत्पादो न शक्यः, नापि सन्ताननिवृत्तिः शक्या कर्त्तुम्, अन्त्यक्षणानुपपत्तेः। स ह्यन्त्यक्षणः किंचिदारभते न वा? आरम्भे नान्त्य इति न कार्यकारणप्रवाहनिवृत्तिः, प्रवाहश्च सन्तान इति न सन्ताननिवृत्तिः। अनारम्भे तस्यासामर्थ्येनासत्त्वात्ततः पूर्वे सर्व एव क्षणा असन्तः स्युरिति कस्योच्छेद इति भावः। शङ्कते—अनागतानुत्पाद इति। तथा सत्यनागतानुत्पादलक्षणार्थक्रियाकारित्वादन्त्यक्षणोपपत्तिरिति भावः। निराकरोति—अनागतेति। प्रागभावस्यानादित्वादिति भावः। पृच्छति—तर्हि कस्येति(४)। नित्यस्यानुपकार्य्यत्वादुपनेयापनेयाभाव इति भावः। उत्तरम्—य इति। यथा चाक्षणिकस्यैवोपकार्यत्वं तथा क्षणभङ्गभङ्गे उपपादयिष्यत इति सिद्धम्॥ २२॥

संशयलक्षणावतारपरं भाष्यं स्थानवत एव तर्हीति। तस्यार्थः—स्थानं क्रमः तद्वत एव तर्हि, इदानीमिति क्वचित् पाठः। स्थानवत एव तर्हीति तर्हि तदानीमुद्देशसमये, क्रमवतः

(१) "अयने" इति ख०। (२) "विनश्यदयने सिद्धम्" इति ख०। (३) "सन्ततेरुत्पादो" इति ख०।
(४) "कस्य तर्हि" इति वार्त्तिके।

(सू)—समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशयः ॥ २३ ॥

### न्यायभाष्यम्

समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शः संशय इति। स्थाणुपुरुषयोः समानं धर्ममारोहपरिणाहौ पश्यन् पूर्वदृष्टं च तयोर्विशेषं बुभुत्समानः किंस्विदित्यन्यतरं नावधारयति, तदनवधारणं ज्ञानं संशयः। समानमनयोर्धर्ममुपलभे विशेषमन्यतरस्य

### न्यायवार्त्तिकम्

समानानेकधर्मोपपत्तेरिति सूत्रम्। तत्र समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्च(१) त्रिविध एव संशय इतरपदविशेषणाद् भवतीति सूत्रार्थः। तत्र विषयस्वरूपानवधारणात्मकः प्रत्ययः संशयः(२)समानधर्मादिभ्य उत्पन्नो विषयस्य(३)विशेषं नावधारयति यः स संशय इत्युच्यते। प्रत्ययोऽनवधारणात्मकश्चेति व्याहतम्? प्रत्ययस्यैतत् प्रत्ययत्वं यद्विषयावधारणा-

### न्यायवार्त्तिकतात्पर्य्यटीका

संशयस्य प्रमेयानन्तरमुद्दिष्टस्य, प्रमेयलक्षणानन्तरं स्थानं क्रमो लक्षणस्येत्यर्थः। तदेतद्वार्त्तिककारो व्याचष्टे—प्रमेयेति। एतदेव स्फुटयति—येति। स्थानं क्रमग्रहणेन व्याख्यातं मत्वर्थश्च प्राप्तिग्रहणेन।

समा—यः (सू० २३)॥ अत्र च विमर्शः संशय इति संशयसामान्यलक्षणम्, तत्र च संशय इति लक्ष्यनिर्देशो विमर्श इति लक्षणपदम्। एकस्मिन् धर्मिणि विरोधिनानार्थावमर्शो विमर्शः—किंस्विदिति ज्ञानम्। तदनेनासमानजातीयेभ्यः प्रमाणादिभ्यः समानजातीयेभ्यश्च विपर्य्ययादिभ्यः संशयो निवर्तितो भवति समानेत्यादीनि तु त्रीणि विशेषलक्षणानि। तेषु विमर्शः संशय इत्यनुवर्तनीयम्। अत्र विशिष्टोऽवमर्शो विमर्शाविशिष्टः संशयो लक्ष्यपदम्, समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेरिति त्रीणि प्रत्येकं शेषैः पदैरुपेतानि लक्षणानीति, तदेतदाह वार्त्तिककारः—तत्र समानेति। त्रिविध एवेति ये पञ्चविधमाचक्षते ते निराकृताः। तदनव-

### वृत्तिः

क्रमप्राप्तं संशयं लक्षयति—( समानेत्यादि )।

संशय इति लक्ष्यनिर्देशः। विमर्श इत्यत्र विशब्दो विरोधार्थः, मृशिर्ज्ञानार्थः,

---

(१) ख-पु०—"संशय" इत्यधिकम्। (२) "सूत्रार्थः" इत्यनन्तरं ख-पुस्तके—"तत्र" इत्यादिकः "संशय" इत्यन्तः पाठो नास्ति। (३) ख-पु०—"विषयस्य" इति वारद्वयमस्ति।

## न्यायवार्त्तिकम्

त्मकत्वं(१)न चेदयं(२)विषयस्वरूपमवधारयति प्रत्ययत्वं तर्हि व्याहतं भवति। न, स्वरूप-प्रत्यायनात् स्वरूपमस्य(३)प्रतीयते, न पुनरयं विषयस्वरूपमवधारयति, अतश्च संशयः, प्रतीयत इति प्रत्यय इति उच्यते।

समानशब्दः साधारणार्थः समानस्य धर्मस्योपपत्तेरिति साधारणस्येति यावत्। किं पुन-रत्र साधारणम्, किं गुण आहो सामान्यमिति? यदि गुणः स न साधारणः। कस्मात्? एकद्रव्यवृत्तित्वात् परिमाणस्य, एकद्रव्यवृत्ति परिमाणं तत् कथं साधारणं भविष्यतीति। सामान्यमपि न युक्तम्, द्रव्यावृत्तित्वात् न ह्यूर्द्ध्वत्वं द्रव्ये वर्त्तते, किन्तु गुणे परिमाणे(४),न ह्यूर्द्ध्वत्वं परिमाणे वर्त्तमानं सामान्यं द्रव्ये संशयं कर्त्तुमुत्सहते। कस्मात्? गुणस्या-वधारितत्वात् यद्वृत्ति सामान्यं सोर्थोऽवधारित इति। न, साधारणार्थस्यान्यथा व्याख्यानात्। न ब्रूमो गुणः साधारण इति। नापि सामान्यम् अपि तु साहश्यार्थः, यावद्हमर्थौ पूर्वमद्राक्षं तयोर्यो धर्मः ऊर्द्ध्वत्वलक्षणो वर्त्तते तेन धर्मेण सदृशोऽयं धर्म उपलभ्यत(५)इति।

## न्यायवार्त्तिकतात्पर्य्यटीका

धारणं ज्ञानं संशय इति संशयसामान्यलक्षणपरं भाष्यं व्याचष्टे—तत्र विषयस्वरूपेति। प्रत्ययो-ऽनवधारणात्मकश्चेति। आक्षेपपरिहारौ प्रथमसूत्र एव व्याख्यातौ(६)। प्रत्ययशब्दस्य निश्चयवचनत्वमभ्युपेत्य व्याख्यानं प्रतीयते इति। परमार्थतस्तु प्रत्ययशब्दो ज्ञानपर्य्यायः। ज्ञानत्वं तु सामान्यं संशयादिष्वप्यस्तीति न विरोध इति।

समानधर्मोपपत्तेरिति व्याचष्टे—समानेति। विकल्प्याक्षिपति—किं पुनरिति। कस्मादिति। मा कार्षीद् द्रव्ये संशयम्, गुण एव कस्मान्न करोतीति प्रश्नार्थः। समाधत्ते—न, साधारणेति। यादृशं संख्याप्रचयपरिमाणभेदयोगि परिमाणं स्थाणुपुरुषयोः, तादृशमस्यापि पुरोवर्त्तिनो द्रव्यस्य परिमाणम्, तस्मात्सदृशपरिमाणधर्मस्य धर्मिणः उपपत्तिरित्यर्थः। महत्त्वदीर्घत्वसामान्यवद्धर्मयोगस्तु सन्नपि न संशयकारणम्। असादृश्ये तद्योगेऽपि संशयाभावादिति भावः। स्यादेतत्, उपपत्तिः सत्ता, न च सदृशो धर्मः सत्तामात्रेण संशये हेतुः, अपि तूपलब्धः। न चोपलब्धेर्वाचकमत्रास्ति

## वृत्तिः

एकस्मिन् धर्मिणीति पूरणीयम्। तेनैकस्मिन् धर्मिणि विरोधेन भावाभावप्रकारज्ञानं संशयः।

---

(१) "प्रत्ययश्चैतत् यदुद्द विषयावधारणात्मकत्वम्" इति ख॰। (२) "न चेदम्" इति ख॰। (३) "स्वरूपस्य" इति ख॰। (४) "परिमाणे" इति ख-पु॰ नास्ति। (५) "उपलभत" इति ख॰। (६) ३६ पृष्ठे—वार्त्तिकस्य तृतीयपंक्तौ तात्पर्य्यस्य च चतुर्थपंक्तौ द्रष्टव्यम्।

## न्यायवार्त्तिकम्

तस्य उपपत्तिरध्यवसायः। यदुक्तं भवति सदृशस्य धर्मस्योपलब्धेस्तदुक्तं भवति समानस्य धर्मस्योपपत्तेरिति। कस्मात् पुनरेवं नोच्यते समानधर्मोपलब्धेरिति ? अनुक्तमपि यस्माद् गम्यते, गम्यमानस्याभिधानं व्यर्थम्। केन पुनरेतद् गम्यते इति विशेषापेक्ष इति वचनेन। कथम् ? विशेषस्यापेक्षा आकाङ्क्षा सा चानुपलभ्यमानविशेषे युक्ता। यदि चायं विशेषं न पश्यति विशेषानुपलब्धेर्गम्यत एव सामान्यं पश्यतीति। अथ पुनरयं न सामान्यं न विशेषं पश्येत्तदा विशेषापेक्ष इति व्यर्थं वचनं स्यात्, एतेन सामर्थ्येन गम्यते सामान्यमुपलभत इति। अथ चोपलब्धिपर्याय एवोपपत्तिशब्द इति। उपपत्तिः प्रमाणगम्यता सा चोपलब्धिः। यः पुनरनुपलभ्यमानसद्भावो धर्मः सोऽविद्यमानवद्भवतीति। का पुनर्विद्यमानस्याविद्यमानेन समानता ? प्रमाणानालम्बनत्वम्। अविद्यमानमपि प्रमाणस्यालम्बनं स्वतन्त्रं न भवति, तदप्यनुपलब्धिलक्षणं

## न्यायवार्त्तिकतात्पर्य्यटीका

पदमित्यत आह—तस्योपपत्तिरध्यवसाय इति। यद्यप्ययमुपपत्तिशब्दः सत्तावचनस्तत्परश्च, तथाऽपि पदान्तरसमभिव्याहारादवगम्यते सत्तामात्राभिधानेऽपि तदुपलब्धिर्विवक्षितेति। विषयविषयिणोरभेदविवक्षया सामानाधिकरण्यमुपपत्तिरुपलब्धिरिति। पृच्छति—कस्मादिति। अस्मदायत्ते हि शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इत्यर्थः। उत्तरम्—अनुक्तमपीति। विशेषापेक्ष इति विशेषस्यापेक्षोच्यते। अपेक्षाशब्दश्च यद्यपीच्छायां वर्त्तते तथापीह जिघृक्षायां वाक्यसामर्थ्यात्। न च सा संशयस्य हेतुः, तस्याः संशये सति भावात्। तस्माद्विशेषापेक्षया जिघृक्षालक्षणयेह विशेषयोः पुरोवर्तिनोस्तु सादृश्यात्स्मरणे सत्यग्रहणं लक्षणीयम्, यथा गङ्गाशब्दस्तीरं स्वसंबद्धमेव लक्षयति न तु तीरमात्रम्, एवं बुभुत्सयाऽपि स्मर्यमाणमेवागृह्यमाणं संबद्धं लक्षणीयं न त्वगृह्यमाणमात्रम्। अनेनैवाभिप्रायेण वक्ष्यति भाष्यकारः—(१) विशेषस्मृत्यपेक्ष इति। तस्माद्विशेषग्रहणप्रतिषेधात् सामान्यज्ञानमभ्यनुज्ञातं भवतीति भावः। परिहारान्तरमाह—अथ वेति। स्यादेतत्, उपपत्तिशब्दः सत्तावचनश्चोपलब्धिवचनश्च, तथा च विनिगमनायां को हेतुरित्यत आह—यः पुनरिति। नन्वभावः प्रमाणालम्बन उक्तस्तत्कथं न विरोध इत्यत उक्तम्—स्वतन्त्रमिति। अथ वा सत्तावाचकोऽप्ययमुपपत्तिशब्दः स्वाभिधेयविषयामुपलब्धिं

## वृत्तिः

तत्र कारणमुखेन विशेषलक्षणान्याह—यसमानेत्यादि। उपपत्तिः—ज्ञानम्, तथा च समानस्य—विरुद्धकोटिद्वयसाधारणधर्मस्य ज्ञानादित्यर्थः। अनेकधर्मः—असाधारण-

(१) एतत्सूत्रभाष्यस्यैव शेषपंक्तौ।

## न्यायवार्त्तिकम्

प्राप्त(१)मिति। विषयशब्देन वा विषयिणं प्रत्याह(२), समानधर्मोपपत्तिशब्देन वा विषयी प्रत्ययो विधीयते। लौकिकं वा न्यायमनेन वाक्येनावलम्बीति, यथा लोके वक्तारो भवन्ति धूमेनाग्निरनुमीयत इति। न च वाक्ये दर्शनशब्दः श्रूयते। अर्थप्रत्यायकत्वात् वाक्ये दर्शनशब्दमनुजानाति धूमं दृष्ट्वाऽथाग्निरनुमीयते इति।

अव्यवच्छेदहेतोरिति वक्तव्यम्—यदिदं समानधर्मोपपत्तेरिति पदम् एतस्मिन्नव्यवच्छेदहेतोः(३) समानस्य धर्मस्योपपत्तेरिति वक्तव्यम्। न हि केवला समानधर्मोपपत्तिः संशयकारणमन्यथा कृतकत्वादिनाऽपि संशयः स्यात्, समानं हि कृतकत्वं सर्वानित्यानामिति, व्यवच्छेदहेतुत्वान्न भवति। न, समानार्थापरिज्ञानात्। व्यवच्छेदहेतुश्च भवति समानश्च धर्म इति न युज्यते, व्यवच्छेदहेतुर्नाम विवक्षिततज्जातीयवृत्तित्वे सति यो विजातीयावृत्तिः(४) स व्यवच्छेदहेतुः, तस्य च समानार्थता नास्ति। समानो हि धर्मो यो विवक्षिततज्जातीयवृत्तित्वे सति अन्यजातीयवृत्तिः। तस्मादव्यवच्छेदहेतोरिति न वक्तव्यम्।

सोऽयं साधारणो धर्म उपलभ्यमानः संशयहेतुः। किं केवल इति? न केवलः। किं

## न्यायवार्त्तिकतात्पर्य्यटीका

लक्षयतीत्याह—विषयशब्देनेति। न चेयमलौकिकी लक्षणेत्याह—लौकिकमिति। यथा धूमो न सत्तामात्रेण हेतुस्तथोक्तं प्रागिति।

एकदेशिनामुपसंख्यानमुपन्यस्यति—अव्यवच्छेदेति। ते हि मन्यन्ते व्यवच्छेदहेतुरपि धर्मः समानो भवति, यथा कृतकत्वं साध्यधर्मिणि शब्दे दृष्टान्तधर्मिणि च घटादौ समानमिति, न चासौ नित्यत्वसंशयहेतुः अपि त्वनित्यत्वस्यायोगं साध्यधर्मिणि व्यवच्छिनत्ति, तस्मादव्यवच्छेदहेतोरिति वक्तव्यमित्यर्थः। तदेतद् वक्तव्यं दूषयति—न समानेति। समानो हि धर्मः प्रतिसंबन्धिनमपेक्षते—केनेति, संशयपदेन च स्वविषयोपस्थापकेन परस्परविरोधिनावुपस्थितौ तेन ताभ्यां समान इति गम्यते। तेन विवक्षिततज्जातीयवृत्तित्वे सति अन्यजातीयवृत्तिरेव गम्यते, न चैवं कृतकत्वम्, तस्मान्न वक्तव्यमव्यवच्छेदहेतोरिति। समानशब्दार्थः सादृश्यं तच्च नास्तीत्यर्थः।

## वृत्तिः

धर्मः, तज्ज्ञानादित्यर्थः। (५)साधारणधर्मवद्धर्मिज्ञानजन्योऽसाधारणधर्मवद्धर्मिज्ञानजन्य-

---

(१) "लक्षणप्राप्त" इति ख०। (२) "प्रत्याह" इत्यत्र "प्रत्ययमाह" इति कस्यापि हस्तलिखितपरिशोधनं दृश्यते, तत् सम्यगेवेति मन्यामहे। (३) "पदमेतन्न व्यवच्छेदहेतोः" इति ख०। (४) "विजातीयवृत्तिः" इति ख०। (५) "तथाच" इत्यधिकम्, श्या-व०।

## न्यायवार्त्तिकम्

तर्हि ? उपलब्ध्यनुपलब्ध्यव्यवस्थातश्च । यदि चोपलब्ध्यनुपलब्धी न व्यवस्थिते भवत इति । किमेतावन्मात्रं साधनमिति ? नेत्युच्यते । यदि विशेषाकाङ्क्षा भवति समानधर्म-मुपलभते । उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते इदन्तया वाऽनिदन्तया वा । विशेषाकाङ्क्षायां च सत्यामर्थसन्देहो भवतीति ।

किमिदं समस्तं कारणमसमस्तं वा ? समस्तमिति ब्रूमः । यदि समानधर्मोपपत्तेरिति केवलमुच्येत उपलब्धविशेषस्यापि सामान्यत उपलब्धिरस्तीति तस्याऽपि संशयः स्यादिति । यदि पुनरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च संशय इत्येतावदुच्येत अनुपलब्धसामान्यस्यापि क्वचिदुपलब्ध्य-नुपलब्ध्यव्यवस्थाऽस्तीति संशयः स्यात् इति । विशेषापेक्ष इत्येतावति चोच्यमानेऽनुपलब्ध-सामान्यस्यापि क्वचिद्विशेषस्मृतिरस्तीति संशयः स्यात् । एवं समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्य-व्यवस्थातश्चेति पदद्वयेऽपि नौयानप्रेङ्खादिगतस्य न भवति संशयः । एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो

## न्यायवार्त्तिकतात्पर्य्यटीका

अत्रैवोपलब्धीत्यादिपदद्वयं शङ्कापूर्वकं योजयति—सोऽयं साधारण इति । उपलब्ध्यनुपलब्धी न व्यवतिष्ठेते इति शिरःपाण्यादीनामुपलब्धिर्वक्रकोटरादेरनुपलब्धिः पुरुषस्य साधकं प्रमाणम्, तद्विरुद्धशिरःपाण्यादेरनुपलब्धिर्वक्रकोटरादेरुपलब्धिः पुरुषस्य बाधकप्रमाणम्, तद्धि पुरुष एवायमिति वा इदंतया व्यवतिष्ठते, इदंतानिषेधेन वा नायं पुरुष इति नेदंतया व्यवतिष्ठते, तदभावो व्यवस्था । तदनेन साधकबाधकप्रमाणाभावो दर्शितः । विशेषाकाङ्क्षायां चेति विशेषस्मृतिर्दर्शिता ।

विमर्षपूर्वकं समस्तमित्यवधारयति—किमिदमिति । तत्रैकपदपरिग्रहे दोषमाह—यदि समानेति । विशेषः शिरःपाण्यादिः, विशिष्यते ह्यनेन पुरुषः स्थाणोरिति अनुपलब्ध-सामान्यस्यापि क्वचिदुपलब्ध्यनुपलब्ध्यव्यवस्थाऽस्तीति । यथा सप्तमे रसे दशमे द्रव्ये । न हि तत्र साधकं बाधकं वाऽस्ति प्रमाणानां च संशयः । विशेषापेक्ष इत्येतावतीति, तद् यथा हस्तिनं दृष्ट्वा तत्संबन्धिनौ स्थूणाहस्तिपकौ स्मरति न च तत्र सन्दिग्धे, द्विपदपरिग्रहे (१) दोषमाह—एवं समानेति । नौदोलाद्यारूढो हि गच्छन् विदूरे आरोह-परिणाहवद्वस्तुदर्शने सत्यपि च साधकबाधकप्रमाणाभावे विशेषस्मृत्यभावान्नग इति वा नाग इति

## वृत्तिः

श्चेत्यर्थः । विप्रतिपत्तिः—विरुद्धकोटिद्वयोपस्थापकः शब्दः, तस्मादित्यर्थः । यद्यपि शब्दस्य न संशायकत्वम्, तथापि शब्दात्कोटिद्वयोपस्थितौ मानसः संशय इति वदन्ति ।

---

(१) "एकद्विपदपरिग्रहे" इति क-पु-पाठः ।

## न्यायवार्त्तिकम्

विशेषापेक्ष इति पदद्वयेऽभिधीयमाने(१)ऽत्यन्तानुपलब्धेऽर्थे संशयः स्यात्। समानधर्मोपपत्तेर्विशेषापेक्ष इति चोच्यमाने सामान्यधर्मदर्शने सत्यपि विशेषाकाङ्क्षायां च सत्यामुपलब्ध्यनुपलब्ध्योर्व्यवस्थानान्न भवति संशयः। एवं च(२) यदाऽयं द्रष्टा दृष्टपूर्वं(३) सामान्यविशेषवन्तमर्थमुपलभते तत्र चोपलब्ध्यनुपलब्धी व्यवस्थिते भवतः। सोऽयं द्रष्टा तस्मात् स्थानात् यदाऽपैति, ततोऽस्यापगमाद्विषयविप्रकर्षान्निमित्तादल्पविषया विशेषा नाभासन्ते, महाविषयं सामान्यमवभासते, उपलब्ध्यनुपलब्धी पुनर्व्यवतिष्ठेते, विशेषार्थस्मृतिश्च नास्ति(४), न च सन्दिह्यते, तस्मादेकद्विपदपर्युदासेन समस्तं लक्षणमुच्यत इति। समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्ष इति चैकपदपर्युदासः कृतः। समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च समानधर्मोपपत्तेर्विशेषापेक्ष इति च उपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति च द्विपदपर्युदासः कृतः समस्तपदपरिग्रहेण। यस्मात् समानधर्मोपपत्तेरुपलब्ध्यनुपलब्ध्यव्यवस्थातश्च विशेषापेक्षो विमर्शः संशय इत्याह। तेन ज्ञापयति समस्तमेतल्लक्षणमिति। विमर्श इति नानार्थावमर्शनं विमर्शः। उभावर्थौ मृशतीव संशीतिः संशय इति भावसाधनम्, करणसाधनं वा संशेते(५)ऽनेनात्मा छम्न

## न्यायवार्त्तिकतात्पर्य्यटीका

वा न सन्दिग्धे, एवमुपलब्ध्यनुपलब्ध्यव्यवस्थातो विशेषापेक्ष इति च पदद्वये विधीयमानेऽन्यतः स्मर्यमाणाद्विशेषात्सदृशधर्मवति धर्मिण्यनुपलभ्यमाने संशयः स्यात्, अस्ति हि तदा विशेषस्मृतिः साधकबाधकप्रमाणाभावश्च, न खल्वनुपलभ्यमाने समानधर्म्मे धर्म्मिणि तद्गता वक्रकोटरादयो वा शिरःपाण्यादयो वा शक्यग्रहा इति। यदाऽयं द्रष्टेति। यदा खल्वयं द्रष्टा प्रतिपरु(६)-रङ्कुरोद्भेदपुलकिताभिर्मन्दमलयमारुतान्दोलनललितलास्यशालिनीभिः शाखाभिर्मधुमदमुदितमधुपमालागुञ्जितवल्लकीवाद्यमनोहराभिर्मत्तपुंस्कोकिलकलविपञ्च्यमानपञ्चमाभिरारब्धसङ्गीतकं सहकारतरुमालोक्याथ विदूरवर्त्ती कुञ्जरसदृशधर्मवन्तमनुभवति, तदाऽस्यास्ति समानधर्मोपलब्धिः; अस्ति च करि-तरु-रूपविशेषस्मृतिः, न तु साधकबाधकप्रमाणाभाव इति न संशेते। कतिपयव्यक्त्याश्रयत्वं सहकारत्वादेर्विशेषस्याल्पविषयत्वम् आरोहपरिणाहादेस्तु बहुव्यापित्वं महाविषयत्वं नानार्थावमर्षणं च विरुद्धार्थावमर्षणम्, तदनेन स्थाणुपुरुषयोरित्यादि भाष्यं व्याख्यातम्। पश्यन्नित्युपपत्तिविवरणम्, विशेषं बुभुत्समान इति 'विशेषापेक्ष' इत्यस्य विवरणम्, किं स्विदिति 'विमर्ष'विवरणम्। स्यादेतत्—संशयोत्तरकाला बुभुत्सेति, कथं बुभुत्समानः संशेत इत्यत उक्तं भाष्यकृता—समानमनयोरिति। विशेषापेक्षाशब्देनेच्छावाचिनाऽगृह्यमाणविशेषस्मरणं लक्षितमिति भावः। सेयं साधकबाधकप्रमाणानुपपत्तौ सत्यां समानधर्मोपलब्धिर्विनभ्यदवस्था विशेष-

(१) "विधीयमाने" इति ख०। (२) "एवं च" इति ख-ड-नास्ति। (३) "दृष्टपूर्व्वम्" इत्यत्र "पूर्व्वम्" इति ख०। (४) "विशेषानुस्मृतिर्नास्ति" इति ख०। (५) "संशय्यते" इति ख०। (६) "परुस्" शब्दः पर्ववाचकः, ('पाँब्' इति यस्य बङ्गभाषायां प्रसिद्धिः)।

## न्यायभाष्यम्

नोपलभ इत्येषा बुद्धिः अपेक्षा—संशयस्य प्रवर्त्तिका वर्त्तते, तेन विशेषापेक्षो विमर्शः संशयः।

अनेकधर्मोपपत्तेरिति। समानजातीयमसमानजातीयं चाऽनेकम्। तस्यानेकस्य

## न्यायवार्त्तिकम्

इव भवति। क उपमार्थः? अर्थानवधारणमुपमानार्थः। एतेनानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति व्याख्यातम्। कोऽतिदेशार्थः? यथाऽऽद्यपक्षे त्रिपदपरिग्रहेण एकद्विपदपर्युदासः कृतः तथानन्तरयोरपि द्रष्टव्यमिति।

अनेकधर्मोपपत्तेः संशय इति—अनेकस्यानेकश्च धर्म इति केचित्, अनेकस्य धर्मोऽनेकधर्मः अनेकस्य द्रव्यगुणकर्मलक्षणस्य संयोगजत्वं धर्मः, अनेकश्च धर्मः संयोगजत्वनिर्गुणत्वनिष्क्रियत्वक्षणिकत्वानि शब्दे, तदेवमनेकधर्मोपपत्तेः संशय इति केचित्, तद्युक्तम्, समानधर्मोपपत्तेरित्यत्र चरितार्थत्वात्। समानधर्मोपपत्तेरित्यनेनैव यश्चैकोऽनेकवृत्तिः यश्चानेक एकवृत्तिः स लभ्यत इति चरितार्थत्वात्। न पुनरनेकधर्माभिधानेन प्रयोजनमस्तीति। अथानेकधर्मशब्दस्य कोऽर्थः? असाधारणो धर्मः। कथं पुनरसाधारणो धर्मोऽनेकधर्म इत्यनेन समासपदेनाभिधीयते? समानासमानजातीयविशेषकत्वात्, समानजातीयमसमानजातीयं चानेकम्, तस्माद्विशेषो—

## न्यायवार्त्तिकतात्पर्य्यटीका

स्मृत्या सहाविनश्यदवस्था एकस्मिन् क्षणे सती संशयज्ञानस्य हेतुरिति सिद्धम्। त्रिपदपरिग्रहमनेकधर्मोपपत्तेर्विप्रतिपत्तेरित्यत्रापि योजयति—एतेनेति। द्वे द्वित्वेनैकीकृत्याद्यानन्तरयोरिति द्रष्टव्यम्।

अनेकधर्मोपपत्तेरित्यत्र भाष्यकृतो व्याख्यां ग्रहीतुमेकदेशिव्याख्यानमुपन्यस्य दूषयति—अनेकेति। शब्दो हि संयोगजः, संयोगजत्वं हि कार्य्ये द्रव्ये गुणे च रूपादौ शरीरादिक्रियायां चास्तीति द्रव्यगुणकर्मणां समानम्, तस्मादनेकस्य धर्मश्चरितार्थः। एवं शब्दगतोऽनेकोऽपि धर्मः समानतयैव द्रव्यत्वादिसन्देहहेतुः त्रिषु, संयोगजत्वं साधारणं सत्त्वादिना निर्विभक्तस्य, निर्गुणत्वं गुणकर्म्मणोः। एवं क्षणिकत्वं द्रव्यगुणकर्म्मणामिति समानधर्म्मोपपत्त्या गतार्थमित्यर्थः। पृच्छति—अथेति। भाष्यकृद्व्याख्ययोत्तरम्—असाधारण इति। पुनः पृच्छति—कथमिति। समासपदशब्देन तदेकदेशोऽनेकशब्दो लक्ष्यते, समासगतेनानेकशब्देनेत्यर्थः। उत्तरम्—

## वृत्तिः

उपलब्धेः—ज्ञानस्य, अनुपलब्धेः—व्यतिरेकज्ञानस्य, याऽव्यवस्था—सद्विषयत्वानिर्धारणम्, प्रामाण्यसंशय इति फलितोऽर्थः।

## न्यायवार्त्तिकम्

विशेषको धर्म्मः अनेकस्माद्विशेषोऽनेकधर्म इति तस्य चानेकस्य धर्मो यथास्वं सोऽयमनेकधर्म इति। एकानेकप्रत्ययहेतुर्वा धर्मोऽनेकधर्मः, यत एष(१)प्रत्ययो भवतीदमेकमिदमनेकमिति। तत्रैकप्रत्ययहेतुरभेदः अनेकप्रत्ययहेतुर्वा धर्मो विशेषः, यथा शब्दस्य विभागजत्वम्, सामान्यविशेषसमवायेभ्यः शब्दस्य सदादिना विशेषेण निर्भक्तस्य, तस्मिंस्तु द्रव्यं गुणः कर्म वेति विभागजत्वात्

## न्यायवार्त्तिकतात्पर्य्यटीका

समानेति। एतदुक्तं भवति यतोऽनेकस्मात्समानासमानजातीयादेष स्वाश्रयं व्यावर्त्तयति, अतोऽनेकापादानकव्यावृत्तिहेतुत्वाल्लक्षणयाऽनेक इत्युच्यते। तदनेन समानजातीयमसमानजातीयं चानेकमिति भाष्यं तस्माद्विशेष इत्यध्याहृत्य व्याख्यातम्। अध्याहृतविशेषपदविवरणं विशेषको धर्म इति। संबन्धसामान्यविवक्षया षष्ठी तस्यानेकस्येति। लक्षणाबीजान्तरमाह—तस्य चानेकस्येति। निवर्त्त्यनिवर्त्तकसंबन्धेनानेकशब्देन धर्म्मो लक्ष्यत इत्यर्थः। तदनेन विनैवाध्याहारं समानजातीयमसमानजातीयं चानेकम्, तस्य धर्म्मो निवर्त्तकतयेति व्याख्यातम्। न त्वत्र समासभ्रान्तिः कर्त्तव्या, दर्शयिष्यति बहुव्रीहिमिहैव (२) वार्त्तिककारः। तदनेन लक्षणाबीजद्वयोपन्यासेनासाधारणो धर्म इति ग्रहणकवाक्यं व्याख्यातम्। प्रकारान्तरेणानेकधर्म्मपदं व्याचष्टे—एकानेकेति। एकं चानेकं च तदुभयमनेकं तदेतस्यानेकस्य प्रत्ययहेतुर्धर्म्मोऽनेकधर्म्मः भेदाभेदप्रत्ययहेतुरित्यर्थः। विभागजत्वं विभागजानां शब्दानामन्योन्यस्याभेदप्रत्ययहेतुः तदितरेभ्यश्च भेदप्रत्ययहेतुरिति तदिदमाह—यतो विभागजन्यत्वादेष प्रत्ययो भवतीदं विभागजं शब्दजातमेकम्, इदं च ततोऽन्यदनेकं भिन्नम्, तत्र य एवैकप्रत्ययहेतुर्धर्म्मोऽभेदप्रत्ययहेतुः, स एवानेकप्रत्ययहेतुर्धर्म्मोऽनेकधर्म्मो भेदप्रत्ययहेतुर्विशेषः। जात्यभिप्रायं चैकवचनम्, सदादिर्हि धर्म्मो द्रव्यगुणकर्म्मणामभेदप्रत्ययहेतुः, सामान्यादिभ्यश्च शब्दं निर्विभजति, तदिदमाह—यतः सदादेरेष प्रत्ययो भवतीदमेकं यतश्च विभागजत्वादेष प्रत्ययो भवतीदमनेकमिति तस्मात्सिद्धमेकं चानेकञ्च, अनेकमिति तत्प्रत्ययहेतुरुपचारेणानेक इति। तदिदमुक्तभाष्यं व्याख्यातम्। अत्रोदाहरणमाह—यथेति। द्रव्यादिकोटित्रयविशेषे संशयप्रदर्शनार्थमुक्तम् सामान्यविशेषसमवायेभ्य इति। "सदनित्यं द्रव्यवत्कार्य्यं कारणं सामान्यविशेषवदिति द्रव्यगुणकर्मणामविशेषः" (३) तेनानेन सदादिना, निर्विभक्तस्य (४) पृथक्कृतस्येत्यर्थः।

स्यादेतत्, यद् येन सहचरितं दृष्टं तत् क्वचिद्दृश्यमानं तत्स्मारयत्तद्विरुद्धेनापि संबन्धादनिश्चाययत्संशयहेतुर्भवति, यथा समानो धर्म्मः। असाधारणस्तु धर्म्मो विभागजत्वं न ऋते शब्दात्

(१) "एव" इति ख०। (२) २५२ पृष्ठस्थवार्त्तिकस्य १८ पंक्तौ। (३) वैशेषिकदर्शने—१।१।८ सूत्रम्। (४) वार्त्तिके "निर्भक्तस्य" इति।

## न्यायवार्त्तिकम्

संशयः। न हि किञ्चित् द्रव्यगुणकर्मणामन्यतमं विभागाज्जायमानं दृष्टम्, सर्वत्रासम्भवात्, विभागजत्वं संशयं करोति सर्वतो व्यावृत्तेरिति। ननु च विभागजो विभागो विद्यते गुणः? सत्यम्, अनभ्युपगतविभागजविभागस्यैतदेवं भवति। यः पुनरभ्युपगतविभागजविभागः तस्यायं

## न्यायवार्त्तिकतात्पर्य्यटीका

क्वचित्पृथिव्यादौ वा उत्क्षेपणादौ गन्धादौ वा दृष्ट इति कथं स्मारयेत्, अस्मारयन् वा कथं संशयं जनयेत्। तस्मात् कोऽयं भवेदित्यतो धर्मादिति जिज्ञासामात्रमुत्पादयेत्, न त्वयं वाऽयं वेति संशयमित्यत आह—न हीति। कस्मान्न दृष्टमित्यत आह—सर्वत्रासंभवात्। न हि द्रव्यादेर्विभागतो जन्म संभवति, तदन्वयव्यतिरेकाननुविधानादित्यर्थः। नन्वत एवोक्तं न संशयहेतुरित्यत आह—विभागजत्वं संशयं करोति सर्वतो व्यावृत्तेरिति। अयमर्थः—यद्यपि विभागजत्वं न द्रव्यादौ क्वचिद्दृष्टम्, तथाऽपि तद्व्यतिरेकः प्रत्येकं द्रव्यादौ दृष्ट इति विभागजत्वेन सदाद्यविशेषवान् शब्दो द्रव्यकर्मभ्यां व्यावर्त्तमानः किं गुणः, गुणकर्म्मभ्यां व्यावर्त्तमानः किं द्रव्यम्, गुणद्रव्याभ्यां व्यावर्त्तमानः किं कर्मेति व्यतिरेकमुखेण तत्तत् स्मारयन् असाधारणो धर्म्मो भवति संशयकारणमिति। देशयति—ननु चेति। अयमभिसन्धिः वंशे पाट्यमाने वंशदलयोः क्रिया, ततस्तयोर्मिथो विभागः, ततो वंशदलावरुद्धनभोभागविभागः, सोऽयं विभागजो विभागो न वंशदलकर्म्मजः, अवयवक्रिया हि तदवरुद्धनभोभागविभागजनिका द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकत्वेन व्याप्ता विकसत्कमलकुड्मले दृष्टा, न हि तत्र मुकुलिताद् विकासि कमलमन्यत्, आकुञ्चितप्रसारिताङ्गुलिकरतलवत् तत्त्वेन प्रत्यभिज्ञायमानत्वात्। वंशदलक्रियाऽपि चेत्तादृशी नूनमनयाऽपि द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनिकया भवितव्यम्, तथा च द्रव्यं कार्य्यमपि न नश्येत्, तस्मान्नानया वंशदलाकाशविभागो जनयितव्यः, न चान्यदस्य कारणं संभवति। तस्माद्वंशदलक्रियाजनितो दलयोर्विभागः कार्य्यैकार्थसमवेतः तदवरुद्धाकाशप्रदेशविभागस्यासमवायिकारणमेषितव्यः, एवं च गुणः शब्दो विभागजत्वाद् विभागजविभागवदिति विभागजत्वं गुणत्वनिश्चयहेतुरिति सिद्धं भवति। परिहरति—अनभ्युपगतविभागजविभागस्य एतद्विभागजत्वमेवं संशयकारणं भवति। अनभ्युपगमबीजं च कुतः पुनरेतदेवमवगतं पद्मपत्रावयवक्रिया विभागद्वयजनिकेति, विभागद्वयक्रमकल्पनायां प्रमाणाभावादिति चेद्, हन्त वंशदलयोरपि तुल्यम्। ननूक्तं द्रव्यारम्भकसंयोगाप्रतिद्वन्द्विविभागजनकं स्यात्

## वृत्तिः

अन्ये तु उपलब्ध्यव्यवस्था—प्रामाण्यसंशयः, अनुपलब्धिः—उपलब्धिविरोधि भ्रमत्वम्, तदव्यवस्था—तत्संशय इत्याहुः।

## न्यायवार्त्तिकम्

निर्णयहेतुः गुणः शब्दो विभागजत्वात् विभागजविभागवदिति। अस्तु वा तस्यापि विभागजविभागासमवायिकारणकत्वात् विभागजविभागासमवायिकारणकः शब्दो नान्यः पदार्थ इति। तदेवं विभागजत्वं विभागजविभागासमवायिकारणत्वं नर्ते(१) शब्दाद्भवतीति सर्वतो व्यावृत्तः

## न्यायवार्त्तिकतात्पर्य्यटीका

कर्म्म, ततश्च द्रव्यनाशो न स्यादिति। अथ विपर्य्ययः कस्मान्न भवतीति वंशदलद्वयक्रियैव विभागद्वयजनिका, पद्मपत्रावयवक्रिया त्ववयवविभागजनिका, तदवयवाकाशविभागस्त्ववयवविभागजन्मा। यदि च पद्मपत्रावयवक्रिया उभयजनिका भवेत्, वंशदलक्रियैव द्रव्यारम्भकसंयोगप्रतिद्वन्द्विनं विभागं जनयेदिति। न चान्यतरत्र विभागविपर्ययौगपद्यनिश्चयक्रमप्रमाणाभावश्च तुल्यः, तस्मात्पद्मपत्रावयवक्रियाविभागजनकत्वसन्देहादशक्यनिश्चयो व्याप्यव्यापकभावः। क्रियावैलक्षण्यात्तु स्वहेतुवैलक्षण्यजन्मनः कार्यस्य विभागस्य वैलक्षण्यं स्यात्, यदेको द्रव्यारम्भकसंयोगप्रतिद्वन्द्वी, अप्रतिद्वन्द्वी चेतरः, तथाऽपि चैतद्वैलक्षण्यं क्रियाया अभ्युपगन्तव्यं यदेका विभागमेकं जनयति, अन्या तु विभागद्वयमिति। तस्मादेतदुदाहरणबलेन न विभागजविभागसिद्धिः। यस्त्वङ्गुलिकर्मानन्तरमङ्गुलितरुविभागो हस्ततरुविभागः शरीरतरुविभागश्च दृश्यते, तत्राङ्गुलितरुविभागमङ्गुल्याश्रया क्रिया करोतु, हस्ततरुविभागन्तु न शक्ता जनयितुम्, तस्याः स्वाश्रयसमवायात्, स्वाश्रयसमवेतकार्य्यजनने च क्रियायाः सामर्थ्यावधारणात्। तस्माद्धस्तादितरुविभागः क्रियातोऽसंभवन्नङ्गुलितरुविभागमेव कार्य्यैकार्थसमवायलक्षणप्रत्यासत्त्या निमित्तीकरोतीति विभागजविभागसिद्धिं मन्यते, तं प्रत्याह—यः पुनरिति। अस्तु वा विभागजो विभागः, तथाऽपि विभागजत्वमीदृशमसाधारणमेवेत्यत आह—अस्तु वेति। अस्तु तस्याभ्युपगतविभागजविभागस्यापि विभागजत्वमसाधारणं विशिष्टम्, तदेव दर्शयति—विभागजेति। पाट्यमाने हि वंशे शब्दोत्पत्तौ वंशदलयोर्विभागो निमित्तकारणम्, वंशदलावरुद्धाकाशविभागस्त्वस्यासमवायिकारणम्, न तु भेर्य्याकाशसंयोगवद् वंशदलाकाशसंयोगोऽसमवायिकारणं भवितुमर्हति। तथा हि प्रयोगः—योऽयं वंशदलविभागनिमित्तः शब्दः, स निमित्तसमानजातीयासमवायिकारणजन्यः, तदसाधारणनिमित्तजन्यत्वात्, यो यः शब्दो यदसाधारणनिमित्तजन्मा, स सर्वस्तज्जातीयासमवायिकारणजन्यः, यथा भेरीदण्डसंयोगनिमित्तः शब्दो भेर्य्याकाशसंयोगासमवायिकारणकः, तथा चायं, तस्मात्तथा। तदेवं वंशदलविभागलब्धजन्मना वंशदलाकाशविभागेनासमवायिकारणेन जनितः शब्दः।

## वृत्तिः

वस्तुतस्तु प्रामाण्यसंशयस्य न संशयहेतुत्वम्, किन्तु अगृहीताप्रामाण्यकज्ञानस्य विरोधितया सति प्रामाण्यसंशये तज्ज्ञानस्याऽविरोधितया साधारणधर्मदर्शनादित एव संशयोत्पत्ति-

(१) "न ते" इति ख०। "नर्ते" इत्यत्र न+ऋते इति सन्धिविश्लेषः।

## न्यायभाष्यम्

धर्मोपपत्तेः—विशेषस्योभयथा दृष्टत्वात्। समानजातीयेभ्योऽसमानजातीयेभ्यश्चाऽर्था विशिष्यन्ते, गन्धवत्त्वात्पृथिवी अबादिभ्यो विशिष्यते गुणकर्मभ्यश्च। अस्ति च शब्दे विभागजन्यत्वं विशेषः। तस्मिन् द्रव्यं गुणः कर्म वेति सन्देहः, विशेषस्योभयथा दृष्ट-

## न्यायवार्त्तिकम्

संशयहेतुः। तुल्यजातीयेष्वर्थान्तरभूतेषु विशेषस्योभयथा दृष्टत्वादिति। समानधर्मोपयोगाद्वा-ऽसमानानेकधर्मो भवति। यद्वा द्वयस्यापि संशयकारणत्वेनोपनीतस्य समानधर्मस्यासमानस्य च समानस्य धर्मस्योपयोगादनुपयुक्तोऽसमानः सोऽनेकशब्दस्य विषयविशेष इति।

## न्यायवार्त्तिकतात्पर्य्यटीका

तदेवं विभागजविभागासमवायिकारणकत्वं शब्दस्य, तदपि यद्यप्यङ्गुल्याकाशविभागजहस्ताकाश-विभागासमवायिकारणे कायाकाशविभागेऽस्ति, तथाऽपि कारणमात्रविभागजविभागासमवायि-कारणकत्वादिति हेतुर्भाष्यकारेण विभागजत्वादित्यनेन(१) सूचितः। न चाङ्गुल्याकाश-विभागपूर्वकः कायाकाशविभाग एवम्, स हि कारणाकारणविभागपूर्वको न तु कारणमात्रविभाग-पूर्वकः, तदिदमुक्तम् विभागजविभागासमवायिकारणकः शब्दो नान्यः पदार्थ इति। ननु सहचरितो दृष्टः स्मारयन् विशेषसंशयहेतुर्भवति, न तु यो व्यावृत्तः, तेनासाहचर्य्यादिति शङ्कामपनेतुं भाष्यकारीयमुत्तरमाह—तुल्यजातीयेष्विति। यद्यपि व्यतिरेकमुखेणासाधारणः शक्तः स्मारयितुम्, तथाऽपि भाष्योक्तमप्युक्तम्, यत् खलु सदादिरूपसंपन्नं विशेषवत्तत्समानजातीयेभ्यो-ऽसमानजातीयेभ्यश्च व्यावृत्तम्, यथा पृथिवी द्रव्यम्। अबादिभ्यश्च द्रव्यान्तरेभ्यो गुणकर्म्मभ्यश्च विजातीयेभ्यो गन्धवत्त्वेन व्यावृत्तं द्रव्यजातीयम्, एवं रूपत्वेन रूपं गुणः, उत्क्षेपणत्वेनोत्क्षेपणं कर्म, तथाविधः शब्दः सदादिरूपसम्पन्नो विभागजत्वेन समानासमानजातीयेभ्यो विशिष्यते, तस्माद्भवति द्रव्यं गुणः कर्म्म वेति संशय इति। पूर्वव्याख्यानतोऽनेकशब्देनासाधारणधर्मो लक्ष्यत इत्युक्तम्, संप्रति समानशब्दपर्य्यालोचनयाऽप्यनेकशब्दोऽसाधारणे वर्त्तते लक्षणयैवेत्याह—समानधर्मस्य संशयकारणत्वेनोपयोगाद्वेति। समानं हि प्रतियोगितयाऽसमानं बुद्धौ सन्निधा-पयति, तत्र द्वयस्यापि समानशब्देन श्रुत्यर्थाभ्यामुपात्तस्य समानधर्मस्यासमानस्य च समानस्य

## वृत्तिः

रिति(२)। उपलब्धीत्यादिकं तादृशस्थले संशयो भवतीत्येतावन्मात्रपरम्। चकारो व्याप्यसंशयस्य व्यापकसंशयहेतुत्वं समुच्चिनोतीति वदन्ति।

---

(१) अस्मदुपलब्धभाष्येषु—"विभागजन्यत्वम्" इति पाठः। (२) "संशयोत्पत्तेरिति" ख०।

## न्यायवार्त्तिकम्

कस्मात् पुनरेवमेव नोच्यते समानासमानधर्मोपपत्तेरिति ? नैवं शक्यमभिधातुम् अनेकस्माद् व्यावृत्तो यो धर्म इति अयं विग्रहो न लभ्यते, लाघवं वा प्रयोजनमेकाक्षरापचयात् लाघवं प्रयोजनमाश्रित्यैवमभिधानं वा । यद्यनेकधर्मार्थोऽसाधारणार्थः असाधारणश्च धर्मः संशयकारणमिति, नेदं निरात्मकं जीवच्छरीरम् अप्राणादिमत्त्वप्रसङ्गादित्ययमप्यसाधारणत्वात् संशयहेतुः(१) प्राप्तः । नैष दोषः, यथैव साधारणो धर्मः संशयहेतुरिति नान्वयिनः साधारणत्वे सति संशयहेतुत्वं भवति, अन्वयव्यभिचारात् । एवं व्यतिरेकिणोऽपि सत्यसाधारणत्वे(२) विपर्ययसम्बन्धस्याव्यभिचाराद्धेतुभाव इति । तस्मान्नैकवृत्तित्वमनेकवृत्तित्वं संशयकारणत्वे निर्णयहेतुत्वे वा हेतुः । किं तर्हि ? साधारणासाधारणत्वे सति व्यभिचाराव्यभिचारौ संशयनिर्णयहेतू । यो व्यभिचारी स संशयहेतुः, योऽव्यभिचारी स निर्णयहेतुरिति । यदि तर्ह्युभयोर्व्यभिचारित्वात् संशयहेतुत्वम्, ननु समानधर्मोपपत्तेरित्यनेनैव गतमेतत्, गतार्थत्वात् न संशयहेतुत्वेन पृथग् उपादेयमिति ? सत्यम्, न व्यभिचारितामन्तरेणान्यत् संशयकारणमपि तु व्यभिचारितायां सत्यां विधीयमानव्यभिचारः प्रतिषिध्यमानव्यभिचारश्चेति भेदः, समानधर्मोपपत्तेरित्यनेन विधीयमानव्यभिचार उपदिश्यते, विभागजत्वादित्यनेन प्रतिषिध्यमानव्यभिचार इति । एतावता पृथगभिधानम् ।

नञः पर्युदासविषयत्वादव्यभिचारिधर्मद्वयोपनिपातोऽनेकधर्म इति केचित्—एके त्वनेकधर्म

## न्यायवार्त्तिकतात्पर्य्यटीका

संशयकारणत्वेनोपयोगादिति योजना । पृच्छति—कस्मादिति । अस्मदायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामह इति भावः । उत्तरम्—नैवमिति । असाधारणो हि धर्मो व्यतिरेकमुखेन संशयहेतुः, स चानेकस्माद् व्यावृत्त्या सिध्यति, सा च लाक्षणिकानेकपदाधीना नाऽसमानपदाल्लभ्यत इति प्रयोजनवल्लाक्षणिकपदोपादानम् । लक्षणैव चेयमनेकस्माद् व्यावृत्तोऽनेकधर्म इति विग्रहेण निर्वर्ण्यत इति । अभ्युच्चयमात्रमाह—लाघवं वेति । असाधारणस्य संशयकारणत्वे व्यावृत्तिः प्रयोजिकेति मन्वानश्चोदयति—यद्यनेकेति । परिहरति—नैष दोष इति । व्यभिचाराव्यभिचारौ हि संशयनिर्णययोः प्रयोजकौ, नान्वयव्यतिरेकमात्रमित्यर्थः । चोदयति—यदि तर्हीति । सपक्षासपक्षसाधारण्यं हि हेतोर्व्यभिचारः, स चेत्संशयस्य कारणम्, हन्त समानधर्मोपपत्तिरेव सर्वत्र संशयकारणमिति कृतमनेकग्रहणेनेत्यर्थः । परिहरति—सत्यमिति । सत्यं सपक्षासपक्षसाधारण्यं हि हेतोर्व्यभिचारः, स च संशयस्य प्रयोजकः तथाऽप्येकस्यान्वयः साधारणोऽपरस्य व्यतिरेक इत्येतावतोभयोपादानमित्यर्थः ।

---

(१) "संशयहेतुत:" इति ख० । (२) अतः परं "विपर्यय" इत्यत आरभ्य "साधारणासाधारणत्वे" इत्यन्तः पाठः ख-पु० नास्ति ।

## न्यायवार्त्तिकम्

इत्यन्यथा व्याचक्षते—एकस्मादन्योऽनेकधर्म इति। एवं च विरुद्धाव्यभिचारिधर्मद्वयोपनिपातो लभ्यते, यं प्रति तर्कमाहुः स च संशयहेतुः, यथा श्रावणत्वकृतकत्वे शब्दस्येति। तदयुक्तम्, असम्भवात्। न ह्यव्यभिचारिणौ विरुद्धावेकस्मिन्नर्थे धर्मौ सम्भवतः, वस्तुनो द्वैरूप्यासम्भवात्, यद्युभावव्यभिचारिणौ स्याताम् एकं वस्तु द्व्यात्मकं भवेत्। न चैतदस्ति तस्मान्नोभावव्यभिचारिणाविति। न चायं प्रयोगो युक्तः। कथमिति? यदि तावदेवं प्रयुङ्क्ते यथा प्राक्तनो (१) हेतुः तथाऽयमपीति। प्रसिद्धेन व्यपदेशा भवन्तीति सिद्धं पूर्वस्य हेतुत्वम्(२)। विरुद्धार्थप्रतिपत्तिबाधितत्वादुत्तरस्यानभिधानम्। अथैवं क्रियते यथेदं द्वितीयमनुमानं न भवति तथा प्राक्तनमपीति। एवमपि प्रतिपन्नद्वितीयानुमानस्यासाधकत्वम्। अथ विरुद्धधर्मावेकत्र सम्भवत इति सम्भवान्न विरुद्धौ। कश्च विरुद्धार्थः? किं सहासम्भवः, आहो विरुद्धार्थसाधकत्वम्, अथ स्वरूपमिति? यदि सहासम्भवः, स नास्ति, दर्शनात्। अथ विरुद्धार्थसाधकत्वं विरोधः, तदपि न युक्तम्, वस्तुनो द्व्यात्मकत्वासम्भवात्। यदि विरुद्धार्थसाधकत्वमनयोर्धर्मयोर्भवेत्, एकं वस्तु द्व्यात्मकमापद्येत। अथ स्वरूपमनयोर्विरुद्धमिति न किञ्चिद्बाधितं भवति, यस्मात् कृतकत्वं न श्रावणत्वं श्रावणत्वं वा न कृतकत्वं तस्मान्न संशय इति। उपेत्य वा विरोधं यदि विरुद्धाभ्यां कृतकत्वश्रावणत्वाभ्यां शब्दे संशयः क्रियते, स विशेषदर्शनादुपजातः कस्य दर्शनान्निवर्तते। न हि विशेषदर्शने सति विशेषाकाङ्क्षा भवति यथोपलब्धसामान्यस्य विशेषाकाङ्क्षा भवति। प्रत्यक्षतो निवर्तिष्यत इति चेत्, न, योऽनुमानाभ्यां सन्निपतिताभ्यामर्थे संशयः, स प्रत्यक्षान्निवर्तिष्यत इति, तन्न युक्तम्, प्रत्यक्षाविषयत्वात्, नायमर्थः प्रत्यक्षस्य विषय इति किं शब्दो नित्योऽनित्यो (३) वेति। आगमान्निवर्तिष्यत इति चेत्, न, आगमस्य च विचार्य-

## न्यायवार्त्तिकतात्पर्य्यटीका

एवमनेकधर्मोपपत्तेरिति स्वमते व्याख्याय परमतव्याख्यानं दूषयितुमुपन्यस्यति—अन्ये इति। नित्यः शब्दः श्रावणत्वात् शब्दत्ववदित्येकः पञ्चरूपोपपन्नोऽव्यभिचारी हेतुः, अनित्यः शब्दः कृतकत्वाद् घटवदित्यपरः पञ्चरूपोपपन्नोऽव्यभिचारी हेतुरिति। तद्दूषयति—तदयुक्तमिति। न ह्यव्यभिचारिणौ पञ्चरूपोपपन्नावित्यर्थः। न चायं प्रतिवादिनः प्रयोगोऽपि युक्तः, विरुद्धशब्दस्यार्थो विरुद्धार्थ इति, स्वरूपमनयोर्विरुद्धं परस्पराभाववदित्यर्थः। विशेषदर्शनादुपजात इति। संशयस्य हि विशेषादर्शनं जनकम्, विशेषदर्शनं च निवर्तकमिति, स चेत् त्वन्मते निवर्तकादुत्पद्येत, अव्यभिचारिहेतुजनिताद्विशेषदर्शनान्नास्य निवृत्तिः स्यादित्यर्थः। न च यदा निवर्तकमस्यास्ति तदा जनकमपीत्याह—न हि विशेषदर्शने सतीति।

स्यादेतत् प्रत्यक्षमेव स एवायं गकार इत्याकारं प्रत्यभिज्ञासमाज्ञातं शब्दस्य स्थेमानमाकलयत्,

(१) ख-पु०—"प्रयुक्तो नो" इत्येवं पाठः। (२) "सर्व्वस्याहेतुत्वम्" इति ख०। (३) "शब्दोऽनित्यो" इति ख०।

## न्यायवार्त्तिकम्

माणत्वात्, आगम एवायं विचार्यते किं शब्दो नित्योऽथानित्य इति। न चायं प्रत्यक्षविषयो नागमविषयः अनुमानोपमानाभ्यां(१) च नायं परिच्छेत्तुं शक्यते सोऽयमनिवर्त्यः संशयः प्राप्तः। भवतु किं नो बाध्यते? कथं न बाध्यते, यदा वस्त्वन्तरपरिच्छेदकमनुमानं न भवति, यथाऽनित्या बुद्धिः कृतकत्वादिति, इदं खलु कृतकत्वं शब्दे दृष्टम्, स चानवधारितस्वभावो नित्योऽनित्य इति। तत्र चोपलभ्यमानं कृतकत्वमन्यत्र बुद्ध्यादौ संशयहेतुरिति सर्वमनुमानमनित्यत्वसाधकं न स्यात्। सर्वं चानुमानमयं न्यायो बाधत इति। यश्च न्यायोऽनुमानमूलमुच्छिनत्ति

## न्यायवार्त्तिकतात्पर्य्यटीका

तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यतीति नित्यत्वं परिच्छेत्स्यतीत्यत आह—नायमर्थः प्रत्यक्षस्य विषयः। तदेव हि प्रत्यक्षं संशयस्य निवर्तकं यदनन्यथासिद्धम्, यथौष्ण्यग्राहि वह्नेः। इदं तु सादृश्येनापि संभवात्स्वयं सन्दिग्धं सन्न संशयोच्छेदायालमित्यर्थः। मा भूत्प्रत्यक्षस्य विषयः, भवति त्वागमस्य, नो खलु क्षणिकः शब्दोऽर्थप्रत्यायने समर्थः, तस्यान्वयव्यतिरेककालानवस्थायिनोऽशक्यसमयत्वेनार्थप्रतिपत्तेरनुपपत्तेः। तस्माद् यद्यपि साक्षान्नित्योऽयमित्यागमो नाभिधत्ते, तथाऽपि विदितसंगतेरर्थप्रत्ययं कुर्वन्नात्मनो नित्यतामाक्षिपन्नित्यताविषयो भवति, यथाऽऽहुः—"नित्यस्तु स्याद्दर्शनस्य परार्थत्वात्" इत्यत आह—नागमविषयः। यद्यपि वर्णव्यक्तयः क्षणिकाः, तथाऽपि स्वस्वसामान्यविशेष'गत्वा'द्युपहिता गवादिव्यक्तय इव गोत्वाद्युपधानाः शक्यसंकेता इति न नित्यतामाक्षिपत्यागम इत्यर्थः। भवतु किं नो बाध्यत इति। न खलु चन्द्रमसः परभागे हरिणसदसद्भावसन्देहः शक्यः कदाचिदप्युच्छेत्तुमस्मदादीनामित्यर्थः। कथं न बाध्यत इति। सन्दिग्धनित्यानित्यभावे शब्दे कृतकत्वं दृष्टमिति नानित्यत्वेन स्वभावतः प्रतिबद्धम्, तथा च न बुद्ध्यादीनामनित्यत्वं साधयितुमर्हतीत्यर्थः। सर्वमिति। कृतकत्वं प्रयत्नानन्तरीयकत्वप्रत्ययभेदभेदित्वादित्यर्थः (२)। सर्वं चानुमानमिति। यदि च पञ्चरूपो-

## वृत्तिः

विशेषापेक्षः—कोटिस्मरणसापेक्षः। वस्तुतस्तु संशयस्य धारावाहिकत्वं स्यादत आह—विशेषेति, विशेषं विशेषदर्शनम्, अपेक्षते निवर्त्तकत्वेन। तथाच, विशेषदर्शननिवर्त्यत्वकथनमुखेन विशेषादर्शनजन्यः संशय इत्युक्तम् ॥ २३ ॥

---

(१) "अनुमानाभ्याम्" इति ख०। (२) "कृतकत्व-प्रयत्नानन्तरीयकत्व-प्रत्ययभेदभेदित्वादीत्यर्थः" इत्येवात्र पाठो भवितुमुचितः, तथाहि "सर्वमिति" इत्यनेनोपात्ते वार्त्तिकपाठे यः "सर्व"शब्दः तदर्थविवरणायैव कृतकत्वादित्रयस्य प्रदर्शनसम्भवाद् ग्रन्थसङ्गतिः। आदर्शानुरूपतया उपरि गृहीतस्तु पाठश्चिन्त्यः।

## न्यायवार्त्तिकम्

नासौ न्यायविदा युक्तोऽभिधातुम् (१)। नित्यासम्भवात् नायमस्माकन्न्यायो बाधते, यस्य नित्यं किञ्चिदस्ति तस्य विरुद्धाव्यभिचारी भवति। अस्माकं तु पक्षे नित्यं किञ्चिन्नास्तीति। न, बाधापरिज्ञानात्, न भवता बाधविषयोऽवलोकितः, किन्तु नित्यमस्माकं नास्तीति एतावन्मात्रमवलोक्य परपक्षे दोषोऽभिधीयते इति भवतामपि पक्षे विरुद्धाव्यभिचारी कृतावकाशः, कथम्? सप्रतिघं विज्ञानं सत्त्वाद्रूपवदित्येकः, अप्रतिघं विज्ञानं नीरूपत्वा(२)द्वेदनावदित्यपरः। तदेवमव्यभिचारिधर्मद्वयोपनिपातान्न सप्रतिघं नाप्रतिघं सिद्ध्येत्, तस्मादपन्यायोऽयं विरुद्धयोश्च धर्मयोः सन्निपाताच्छब्दे संशय इति। धर्मयोः सातत्यादभिलापानुपपत्तिः नायमतद्धर्मा कदाचिदपि शब्द उपलभ्यते सततं तु तद्धर्मैव भवति श्रावणः कृतकश्चेति अभिलापो न स्यात् नित्योऽनित्यो वेति। न हि कदाचिदयं द्रष्टा एकस्मिन् वस्तुनि स्थाणुपुरुषधर्मावुपलभमानः शक्नुयाद्वक्तुं स्थाणुर्वा पुरुषो वेति। नैवं भविष्यतीति। व्याहतमुच्यते। ननु च भवताऽभिधीयते नित्य इति, मयाप्यभिधीयते अनित्य इति, कथं नाभिलप्यते, सोऽयं विरुद्धाव्यभिचारी न्यायो विचार्यमाणः सर्वथाऽनुमानं बाधत इति अलमनेन। अथ कृतकत्वश्रावणत्वे सहिते (३) हेतू भवत इति? तथापि कृतकत्वश्रावणत्वे सहिते न विभागजत्वादन्यत्रासम्भवाच्च संशयहेतू भवतः, सोऽयमस्माद्भिद्यते यथैव विभागजत्वमन्यावृत्तित्वादसाधारणं शब्दे संशयं करोति तथा कृतकत्वश्रावणत्वे अपि शब्दवृत्तित्वादन्यत्रासम्भवाच्च संशयहेतू भवतः सोऽयमसाधारण एव न धर्मान्तरमतः तद्ग्रहणेनैवायं सङ्गृहीत इति तस्मादेकस्मादन्यो धर्मो-

## न्यायवार्त्तिकतात्पर्यटीका

ऽपि हेतुः, संशयकारणं सर्वमनुमानमेवमिति सर्वमप्रमाणं स्यादित्यर्थः। वैनाशिकाः प्राहुर्नित्यासंभवादिति। न, बाधापरिज्ञानादिति, बाधविषयापरिज्ञानादित्यर्थः। स्वदेशे परोत्पत्तिप्रतिबन्धकत्वं सप्रतिघत्वम्, सौत्रान्तिकमते हि रूपं सप्रतिघमिष्यते मूर्त्तं च, नित्य एवेति अनित्य एवेति वाऽभिलापो नोपपद्येत, स्थाणुरेवेति वा पुरुष एवेति वाऽभिलापः। चोदयति—नैवं भविष्यतीति, मा भूदभिलाप इत्यर्थः। परिहरति—व्याहतमिति। स एवैकग्रन्थेनाह—ननु चेति। तदेवं पञ्चरूपोपपन्नयोर्हेत्वोरेकत्र समावेशाभावः उक्तः। यदि पुनरसत्प्रतिपक्षत्वरूपरहितयोरेकत्र संभवोऽङ्गीक्रियते, तथा च संशयहेतुत्वमित्यभिप्रायेण शङ्कते—अथ कृतकत्वेति। निराकरोति—तथाऽपीति। प्रत्येकं सत्प्रतिपक्षत्वम्, मिलितयोस्त्वसाधारणत्वम्, तादृशोऽन्यत्रादर्शनादित्यर्थः। तत्किमिदानीं सत्प्रतिपक्षतया कृतकत्वमसाधनमेव

(१) "नासौ न्यायविदा युक्तोऽभिधातुम्" इत्यत्र "नायं न्यायो बाधितुं युक्त" इति ख०। (२) "स्वरूपत्वा-" इति ख०। (३) अत्र "सम्भूय" इति क-पुस्तके अधिकः पाठः।

## न्यायभाष्यम्

त्वात्। किं द्रव्यस्य सतो गुणकर्मभ्यो विशेषः, आहोस्विद्गुणस्य सत इति, अथ कर्मणः सत इति ? विशेषापेक्षा—अन्यतमस्य व्यवस्थापकं धर्मं नोपलभ इति बुद्धिरिति।

विप्रतिपत्तेरिति। व्याहतमेकार्थदर्शनं विप्रतिपत्तिः, व्याघातः—विरोधोऽसहभाव इति। अस्त्यात्मेत्येकं दर्शनम्, नास्त्यात्मेत्यपरम्, न च सद्भावासद्भावौ सहैकत्र सम्भवतः, न चान्यतरसाधको हेतुरुपलभ्यते, तत्र तत्त्वानवधारणं संशय इति।

उपलब्ध्यव्यवस्थातः खल्वपि सच्चोदक(१)मुपलभ्यते तडागादिषु, मरीचिषु चाऽविद्यमानमुदकमिति, अतः क्वचिदुपलभ्यमाने तत्त्वव्यवस्थापकस्य प्रमाणस्यानुपलब्धेः किं सदुपलभ्यतेऽथासदिति संशयो भवति।

अनुपलब्ध्यव्यवस्थातः। सच्च नोपलभ्यते मूलकीलकोदकादि, असच्चानुत्पन्नं

## न्यायवार्त्तिकम्

ऽनेकधर्म इति न (२) वक्तव्यमिति। यदा पुनरेवम्भूतौ धर्मावेकस्य वस्तुनो भवतः तदोपलब्धा तस्य वस्तुनः किं प्रतिपत्तव्यमिति ? तदा तयोरेव धर्मयोः सामर्थ्याधिगतौ यत्नः कर्तव्यः, नोभावेतौ साधने, कतरोऽत्र साधनं कतरश्च न साधनमिति सामर्थ्याधिगमे यत्नः करणीय इति। यत्नश्च क्रियमाणोऽनित्यत्वसाधनेष्वेवावतिष्ठत इति। कुतः ? नित्यत्वस्य प्रमाणबाधितत्वात्। तच्चोपरिष्टाद्वक्ष्यामः (३)। तदेवं व्यवस्थितमेतत् अनेकधर्मोपपत्तेरसाधारणात् धर्मात् संशय इति।

विप्रतिपत्तेः संशय इति व्याहतार्थप्रवादो विप्रतिपत्तिशब्दस्यार्थो व्याहतार्थप्रवादविषयत्व-

## न्यायवार्त्तिकतात्पर्य्यटीका

शब्दानित्यत्वे, यथा च बहु व्याहतं स्यादित्याशयवान् पृच्छति—यदा पुनरेवंभूताविति। उत्तरम्—तदा तयोरिति। ननु कृतकत्वस्य साध्यत्वात् श्रावणत्वस्य च सिद्धत्वात् प्रथमभाविना नित्यानुमानेन सिद्धाङ्गकेनापहृतविषयं चरमभाविसाध्याङ्गकमनित्यानुमानमेव बाध्यतामित्यत आह—यत्नश्च क्रियमाण इति। सिद्धमपि श्रावणत्वमनुनासिकत्वाद्यनित्यधर्मसाधारणतया सव्यभिचारं सन्नित्यत्वस्य साधनं न भवितुमर्हतीति। कृतकत्वस्य तु पाक्षरूप्यम् (४), नित्यत्वस्य च प्रमाणबाधनमुपपादयिष्यत इत्यर्थः (५)।

विप्रतिपत्तेरित्यस्य व्याख्यानम्—विप्रतिपत्तेरिति। यद्यपि विरुद्धा प्रतिपत्तिर्ज्ञानं विप्रतिपत्तिः तथाऽपि तस्या वादिप्रतिवादिगताया अत्यन्तपरोक्षत्वात् संशयकारणत्वानुपपत्तेः स्वकार्यं प्रवादं

(१) "खच्चोदक-" इति वि-टि०। (२) "न" इति ख-पु नास्ति। (३) २।२।२२ सूत्रवार्त्तिके—"अनित्यः शब्दो गुणत्वे सति" इत्यादिना। (४) पक्षसत्त्वादिपञ्चरूपोपपन्नत्वमव्याहतमिति शेषः। (५) वार्त्तिककृता २।२।२२ सूत्रव्याख्याने।

## न्यायभाष्यम्

निरुद्धं वा, ततः क्वचिदनुपलभ्यमाने संशयः, किं सन्नोपलभ्यते उताऽसदिति(१) संशयो भवति। विशेषापेक्षा पूर्ववत्।

पूर्वः समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे(२), एतावता

## न्यायवार्त्तिकम्

नुपलभमानस्योपलब्ध्यनुपलब्ध्योश्चाव्यवस्थाने सति तद्गतविशेषाननुस्मृतौ च सत्यां संशयो भवतीति। तत्र समानोऽनेकश्च धर्मो ज्ञेयस्थः, उपलब्ध्यनुपलब्धी पुनर्ज्ञातृस्थे इति भाष्यम्। तत्रोपलब्ध्यनुपलब्ध्योस्तावत् पृथक् संशयकारणत्वं न भवतीति चर्चितमेतत्। समानोऽनेकश्च धर्मो ज्ञेयस्थ इत्येतदपि न बुद्ध्यामहे। किमत्र धर्मः संशयकारणमथ ज्ञानमिति? न धर्मः संशयकारणमित्यनेकधा समर्थितम्। समानानेकधर्मज्ञानं तु संशयकारणं तच्च ज्ञातरि वर्तत इति नास्ति भेदः। समानानेकधर्मयोस्तु पृथगभिधाने उक्तं प्रयोजनम्, विधीयमानप्रतिषिध्यमानधर्मभेदादिति। विप्रतिपत्तेरित्ययं वक्तृगतः संशयहेतुः। केऽत्र सम्यक्प्रतिपन्नाः के मिथ्येति श्रोतुः सन्देहो भवति एतावता भेदेन पृथगभिधानम्। समानधर्मः सर्व एवायमिति चेत् समानधर्मोपपत्तेरनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति(३) सर्व एवायं समानधर्म एवाऽभिधीयते, तस्माद्वैयर्थ्यात्

## न्यायवार्त्तिकतात्पर्य्यटीका

लक्षयतीत्यर्थः, अत्र भाष्यकार उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च पृथक् संशयकारणत्वं मत्वा समानधर्मोपपत्तेरित्यनेन गतार्थतां परिहरन्नाह स्म—पूर्वः समानोऽनेकश्चेत्यादि। तदुपन्यस्य वार्त्तिककारो दूषयति—तत्रेति। नो खलु समानानेकधर्मोपलब्धौ सत्याम्, सत्यां च विशेषस्मृतौ, साधकबाधकप्रमाणासद्भावे संशयो भवतीत्युक्तम्, तस्मान्नोपलब्ध्यनुपलब्ध्यव्यवस्थे पृथक् संशयकारणे इति। विशेषमपि दूषयति—समान इति। ननु यदि नास्ति भेदः, तत्किमिदानीं सर्वेषां ज्ञातृस्थत्वाविशेषेण त्रयाणामपि संशयकारणानां समानानेकविप्रतिपत्तीनामभेदः, तथा च पृथगुपादानवैयर्थ्यमित्यत आह—समानानेकधर्मयोरिति। पुनश्चोदयति—समानधर्मः सर्व एवायमिति। अयमभिसन्धिः असाधारणो ह्यदृष्टपूर्वः क्वचिदपि न संशयं कर्त्तुमुत्सहते, यत् पुनरसाधारणवत्त्वं संशयहेतुत्वेनोपवर्णितं भाष्यकृता तत् समानमेव, न त्वसाधारणम्, यथाऽऽहुः—

> अन्योऽसाधारणो धर्मस्तद्वत्ताऽन्या च दृश्यते।
> सर्वसाधारणी सा चेदिष्टा संशयकारणम्।
> ततः साधारणस्यैव सिद्धा संशयहेतुता॥

(१) "उतासन्निति" फ०ग०। (२) "ज्ञातृगते" इति फ०ग०। (३) "समानधर्मोपपत्तेर्विशेषापेक्षो विमर्शश्च प्रतिपत्तेश्चेति" इति ख०।

## न्यायवार्त्तिकम्

पृथगनेकधर्मोपपत्तेर्विप्रतिपत्तेश्च इति न प्रयोजनमस्ति। अत एवं कर्तव्यम्—समानधर्मोपपत्ते-र्विशेषापेक्षो विमर्शः संशय इति, न, सूत्रार्थापरिज्ञानात्, सूत्रार्थमपरिज्ञायैवैतच्चोद्यते। यथा च भेदः समानानेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति तथा वर्णितम्।

अपरे पुनः समानधर्मोपपत्त्यादिभिः पदैः पृथक् पञ्चविधं संशयं वर्णयन्ति—समानधर्मोपपत्ते-र्विशेषापेक्षो विमर्शः संशय इति, एवं शेषेषु पदेषु। तन्न युक्तम्, उपलब्ध्यनुपलब्ध्यव्यवस्थायाः पूर्वपदविशेषणत्वात्, समानधर्मोपपत्तौ सत्यामुपलब्ध्यनुपलब्ध्यव्यवस्थायां च सत्यां विशेषापेक्षो विमर्शः संशय इति सूत्रार्थः। एवमनेकधर्मोपपत्तेर्विप्रतिपत्तेश्चेति वाच्यम्। तस्मान्नोपलब्ध्यनुप-लब्ध्यव्यवस्था पृथक् संशयकारणमिति। उपलब्ध्यनुपलब्ध्योर्द्वैविध्यात्(१) संशयो न युक्तः, कुतः? लोकविरोधात्—उपलब्ध्यो(२)र्द्वैविध्यात् संशयो भवतीति ब्रुवाणो लोकं बाधते। कथमिति? यत्किञ्चिदयमुपलभते सर्वत्रास्य संशयेन(३) भवितव्यम्। किं कारणम्? उपलम्भमात्रं द्वेधा भवति। उपलब्ध्योर्द्वैविध्यात्तु यः संशयो भवति तस्य कुतो निवृत्तिः? विशेषदर्शनान्निवर्त्तते इति चेत् विशेषेष्वप्येवम्—य एते विशेषा उपलभ्यन्ते किमेते सन्त आहोऽसन्त इति यावद् वाच-

## न्यायवार्त्तिकतात्पर्य्यटीका

यच्च वार्त्तिककारेण सर्वव्यावृत्त्याऽसाधारणस्य संशयकारणत्वमुक्तम्, तत्रापि तदभावस्य साधारणस्य संशयहेतुत्वम्, किमायातमसाधारणस्य? यथाऽऽहुः—

सर्वतोऽस्य निवृत्तत्वादभावात् संशयो यदि।
अनन्यवृत्तिरूपस्य ततोऽसाधारणस्य किम्॥ इति।

विप्रतिपत्तिरपि विरुद्धहेतुद्वयसमुत्था एकस्मिन् संशयकारणम्, विरुद्धहेतुद्वयसमावेशश्चासाधारण एव, स च साधारणे निविशत इति सूक्तम् सर्व एवायं समानधर्म एवाभिधीयत इति। परिहरति—न सूत्रार्थापरिज्ञानादिति। न वयं सर्वत्र साधारणमपजानीमहे अन्वयव्यतिरेक-व्यभिचारवक्तृगतत्वभेदमात्रमाद्रियमाणाः कारणभेदेन त्रिविधं संशयमाचक्ष्महे इत्यर्थः।

वार्त्तिककारो भाष्यकारमतमुपन्यस्य दूषयति—अपरे पुनरिति। साधकबाधकप्रमाणाभाव-रहितं त्र्यमपि न संशयकारणमुक्तमित्यर्थः। अपि चैतयोः पृथक् संशयकारणत्वेऽतिप्रसङ्गान्निश्चय-पूर्वं न प्रवर्त्तेत लोकः, तथा च लोकविरोध इति दर्शयति—उपलब्ध्यनुपलब्ध्योर्द्वैविध्याच्चेति। न चास्य क्वचिदाश्वासो निःशङ्कता, न चानभ्यासदशापन्ने उपलब्ध्यनुपलब्ध्यव्यवस्थायाः संशय इति वाच्यम्, अनभ्यासदशापन्ने हि दूराद् वह्निज्ञाने उपलब्ध्यव्यवस्थायाम् अपि न नागो नगो वेति संशयः,

(१) अत्र—"च" इति तात्पर्य्यटीकायामधिकं दृश्यते। (२) "उपलब्ध्यनुपलब्ध्योः" इति ख०।
(३) "संशयो न" इति ख०।

## न्यायवार्त्तिकम्

दुपलभ्यते सर्वत्रोपलब्धिद्वैविध्यात् संशय इत्यनिवर्त्यः संशयः। एवमनुपलब्धिद्वैविध्येऽपि वक्तव्यम्। न चास्य क्वचित् समाश्वासः स्यात्। यदाऽयमपवरकादौ सर्पादीनुपलभते तदा सर्पवत् तद्देश्म उतासर्पवदिति संशयः, अयमपि संशयोऽनिवर्त्य एवेति सर्वत्राश्वासो न स्यात्। येषां च पञ्चविधः संशय इति सूत्रार्थः तैरप्यस्य कारणकृतो भेदो वक्तव्यः स्वभावकृतो वा। तद्यदि कारणकृतः? न पञ्चविधः, अनेकरूपः संशय इति प्राप्तम्। अथ स्वभावभेदात्? न,(१) स्वभावभेदस्यासम्भवादेकरूपः संशयः, संवीतिः संशय इति। तस्मात् पञ्चविधः संशय इति न सूत्रार्थः।

समानधर्मग्रहणान्न संशयो धर्मिविषयत्वात्—यदिदमुच्यते समानधर्मोपपत्तेः संशय इति, तदयुक्तम्, धर्मिविषयत्वात्। न हि समाने धर्मे उपलब्धे धर्मिणि संशयो (न) (२) युक्तः, धर्मधर्मिणोर्भेदात्। न हि गवि दृष्टे अश्वे संशयः ( धर्मिणश्चादृष्टत्वात् नानुपलब्धे न निर्णीतेऽर्थे संशयो भवतीति च व्याघातः। धर्मधर्मिभावात् संशय इत्येके तावत् परिहारं ब्रुवते—धर्मे दृष्टे धर्मिणि संशयः धर्मधर्मिभावात्(३)। न पुनर्गवि दृष्टे अश्वे संशयो भवति) (४)धर्मधर्मिभावानुपपत्तेः, न, नानात्वानिवृत्तेः, न हि धर्मधर्मिभावेन नानात्वं निवर्तते। अथ धर्मधर्मिभावो नियामकः? इच्छादिसूत्रं तर्हि व्याहन्यते। कथमिति? इच्छादयः प्रतिसन्धानादात्मानं गमयन्तीति सूत्रार्थः। अत्र परः प्रत्यवस्थितः कार्यकारणभावात् प्रतिसन्धानमिति नानात्वस्याबाधनादित्यनेन निवर्तेत। इह पुनर्भवता धर्मधर्मिभावादिति पुनर्ब्रुवता नानात्वमेव धर्मधर्मिभावनियामकमुच्यत इति शक्नुयात् परोऽपि वक्तुं कार्यकारणभावो नियामक इति। तस्मादपव्याख्यानमेतत् धर्मधर्मिभावात् संशय इति। अथ समानधर्मोपलब्धेरन्यस्मिन्ननुपलब्धे(५) धर्मिणि संशयो भवतीति कः परिहारः?। अयं परिहारः, बहुव्रीहिः समासोऽतो धर्मिणोऽभिधानम्—समानधर्मोपपत्तेरित्यनेन पदेन बहुव्रीहिसमासे धर्म्येव व्यपदिश्यते। कथम्?

## न्यायवार्त्तिकतात्पर्य्यटीका

किन्तु किंशुककुसुमनिचयो वा उषर्बुधो वेति, अत्र समानधर्मोपपत्तिरेव कारणमितरसहिता। एवमयोग्यानुपलब्धिमात्रादपि न संशयो विना समानधर्मादिदर्शनमित्युक्तम्। विकल्प्य दूषणान्तरमाह—येषां चेति। सामग्रीभेदेन भेदे त्रैविध्यं संशयस्य सामग्रीनिवेशिकारणभेदेन तु न पञ्चविधः, अपि त्वनेकविध इत्यर्थः।

समानानेकधर्मोपपत्तेरित्यत्र षष्ठीतत्पुरुषं मत्वाऽऽक्षिपति—समानधर्मग्रहणादिति।

(१) "न" इति ख-पु० नास्ति। (२) अत्र "न"कारो निरर्थक इति वन्धनीमध्ये स्थापितः। (३) "धर्मधर्मिभावानुपपत्तेः" इति ख०। (४) वन्धनीमध्यस्थः पाठः प्रमादादापतित इति प्रतिभाति। (५) "अनुपलब्धे" इत्यत्र "उपलब्धे" इति ख०।

## न्यायवार्त्तिकम्

समानो धर्मो यस्य स भवति समानधर्मा, समानधर्मण उपपत्तिः समानधर्मोपपत्तिः। किमुक्तं भवति? समानधर्मवतो धर्मिणो दर्शनादिति।

विशेषापेक्षो विमर्शः संशय इति विशेषापेक्षो विशेषस्मृत्यपेक्ष इति। अथ सा विशेषस्मृतिः किंविशेषविषया? किं संशयविषयविशेषविषया (१)उतान्यविषयेति? योऽसौ संशयस्य विषयः तं समानधर्माणमुपलभते तस्यायं विशेषाननुस्मरति उतान्यस्येति। यदि तावत् तस्य? तन्न युक्तम्, तद्विशेषाणां क्वचिदननुभूतत्वात्। योऽर्थः पूर्वमुपलब्धविशेषः तद्गतान् विशेषाननुस्मरतीति युक्तम्, तद्विशेषाणामनुभूतत्वात्, यदा पुनरयमनुपलब्धपूर्वविशेषः सामान्यत उपलभ्यमानः सन्दिह्यते तत्र विशेषानुस्मृतिः, कथम्? तद्विशेषाणामननुभूतत्वादिति, न, सामान्यवचनत्वात्। विशेषापेक्ष इति सामान्यवचनं पुनरनेनावधार्यते तस्य वाऽन्यस्य चेति। यदा तद्गता विशेषाः सुस्मूर्षिता भवन्ति तदाऽनुभूतेषु विशेषविषया स्मृतिः, यदा त्वनुपलब्धपूर्वेऽर्थे संशयः तदा सादृश्यादन्यगतान् विशेषान् सुस्मूर्षत इति। एवं तावद्व्यवस्थितं त्रिविधः संशय इति।

अनेन च संशयलक्षणेन यान्यविरुद्धानि संशयलक्षणानि तान्यपि संगृहीतानि। यथा काश्यपीयम्(२) "सामान्यप्रत्यक्षात् विशेषाप्रत्यक्षात् विशेषस्मृतेश्च संशय" इति। अस्यार्थः सामान्यप्रत्यक्षादिति सामान्यवतः प्रत्यक्षाद्धर्मिण इति, न पुनरयं पदार्थः सामान्यस्य(३) प्रत्यक्षादिति। विशेषाप्रत्यक्षत्वमव्यवस्थितविशेषत्वं नास्मिन् विशेषा व्यवस्थिता इति, विशेषस्मृतेश्च संशय इति समानम्। कथं पुनरनेन सूत्रेणासाधारणोऽपि लभ्यत इति? लभ्यते, व्यभिचरितत्वात्, व्यभिचारि साधारणम्, तच्चासाधारणेऽपि व्यभिचारित्वमस्तीति लभ्यते। अनेकधर्मोपपत्तिस्तर्हि पृथङ् न पठितव्या, अन्वयव्यतिरेकभेदविवक्षायां पृथगभिधानं पुनः संशयकारणभेदविवक्षयेति। ये त्वत्र विशेषाप्रत्यक्षाद्विशेषस्मृतेश्चेति(४)पदयोः पौनरुक्त्यं वर्णयन्ति—

## न्यायवार्त्तिकतात्पर्यटीका

बहुव्रीहिं मत्वा समाधत्ते—अयं परिहार इति। अथेति। कश्चासौ विशेषश्चेति किंविशेषः अनुपलब्धपूर्वो विशेषोऽस्य इत्यर्थः। उपलब्धपूर्वायां व्यक्तौ संशये तद्गता विशेषाः सुस्मूर्षिताः तज्जातीयव्यक्त्यन्तरसंशये त्वन्यगतास्ते सामान्यद्वारेणोपलब्धा एवेति—सामान्यप्रत्यक्षादिति। सामान्यवानेव सामान्यः यथा "सामान्योऽयं धर्मसेतुर्नृपाणामि"ति। सामान्यश्चासौ प्रत्यक्षश्चेति धर्मी तथोक्तः, अव्यवस्थितविशेषत्वं साधकबाधकप्रमाणाभाव इत्यर्थः।

---

(१) "किं संशयविषयविशेषविषया" इति ख-पु० नास्ति। (२) कणादकृतं २।२।१७ सूत्रम्।
(३) "सामान्यवतः" इत्यनन्तरम्—"प्रत्यक्षा"दित्यारभ्य 'सामान्यस्य' इत्यन्तः पाठः ख-पु० नास्ति।
(४) "विशेषास्मृते"रिति ख०।

## न्यायवार्त्तिकम्

सामान्यप्रत्यक्षाद्विशेषस्मृतेश्च संशय इत्यभिधीयमाने किल गम्यत एतद्विशेषाप्रत्यक्षादिति, न हि कश्चिद्विशेषान् प्रत्यक्षान् स्मरति। तन्न, सूत्रार्थापरिज्ञानात्। नायं सूत्रार्थः विशेषाणामप्रत्यक्षत्वमिति। अपि त्वव्यवस्थितविशेषवत्त्वम्, नास्मिन् विशेषा व्यवस्थिता (१)इत्यतो नायं दोष इति।

अन्ये तु संशयलक्षणमन्यथा व्याचक्षते—साधर्म्यदर्शनाद्विशेषोपलिप्सोर्विमर्शः संशय इति। तैरपि साधर्म्यस्यावधारितत्वात् संशयस्य विषयो वक्तव्यः। धर्मीति चेत्(२), ननूक्तः संशयस्य विषयो धर्मी ?। सत्यमुक्तो न पुनर्युक्तः। कथं न युक्तः ? यदि तावद्धर्मव्यतिरिक्तं धर्मिणमभ्युपैति, व्याहतं भवति। धर्मधर्मिणोश्च नानात्वाभ्युपगमे धर्मस्यावधृतत्वात् धर्मिणश्चादृष्टत्वात् न संशयः, न ह्यन्यस्मिन् दृष्टेऽन्यत्र संशयो भवति। अथाप्यस्मद्दिशा साधर्म्याभिधानेन धर्म्येवोच्येत ? तन्न युक्तम्, सधर्मणो भावः साधर्म्यम्, साधर्म्यमिति च भावाभिधानेन धर्मोऽभिधीयते, न धर्मी, न च युक्तोऽन्यस्य दर्शनादन्यत्र संशय इति। अथार्थान्तरभावं नाभ्युपैति ? तथापि साधर्म्यस्यावधृतत्वात् क्व संशय इति। यदि चायं धर्मिणं नोपलभते, कस्यायं विशेषमुपलिप्सेत ? न हि साधर्म्यस्य विशेषाः सम्भवन्तीति। अथ सामान्यवतो विशेषा इति ? तन्न, तस्यादृष्टत्वादित्युक्तम्। न सामान्यस्य विशेषाः सन्तीति सामान्यवतो विशेषा भवन्तीत्येवं ब्रुवता सामान्यविशेषतद्वतां भेदोऽनुज्ञातो भवति व्यर्थञ्चाभिधानं न सामान्यस्य विशेषास्तद्वतो विशेषा इति। उपलब्ध्यनुपलब्धिव्यवस्थाने च साधर्म्यदर्शने सत्यपि

## न्यायवार्त्तिकतात्पर्यटीका

बौद्धाभिमतं संशयलक्षणमुपन्यस्यति—अन्ये त्विति। गूढाभिप्रायो दूषयति—तैरपीति। अविदिताभिप्रायः शङ्कते—धर्मी चेदिति। दूषणवादी स्वाभिप्रायमुद्घाटयति—यदि तावदिति। बौद्धानां हि राद्धान्ते न रूपादिधर्माश्रयः कश्चिदस्ति धर्मी, ततश्च सिद्धान्तव्याकोपः। यदि त्वाह भवतु राद्धान्तव्याकोपो न हि शास्त्राश्रयो वाद इति, तत्रापि दोषान्तरमाह—धर्मधर्मिणोश्चेति। अथाप्यस्मद्दिशेति। समानानेकधर्मपदवद्बहुव्रीहिरित्यर्थः। सामान्यशब्दो हि भवितरि दृष्टो यथा "सामान्यार्थसमुत्थाने विभागस्तु समः स्मृतः" इति भावः। व्यर्थं चाभिधानमिति। सामान्यविशेषतद्वदभ्युपगमेऽपि तद्वतोऽश्रवणात् साधर्म्यस्य सामान्यस्य विशेषा इति गम्येत, न च सामान्यस्य विशेषा इति विरुद्धार्थमभिधानं स्यादित्यर्थः। वैशेषिकलक्षणे हि विशेषाप्रत्यक्षादित्यनेन साधकबाधकप्रमाणाभावो दर्शितः, इह त्वसौ वक्तव्यः, तस्मान्नूनं बौद्धलक्षणमित्याह—उपलब्धीत्यादि। यदि च साधर्म्य-

(१) "विशेषा व्यवस्थिता" इत्यत्र "विशेषाप्रत्यक्षत्वम्" इति ख०। (२) "धर्मी चेत्" इति तात्पर्य्यं।

## न्यायभाष्यम्

**विशेषेण पुनर्वचनम्। समानधर्माधिगमात्समानधर्मोपपत्तेर्विशेषस्मृत्यपेक्षो विमर्श इति ॥ २३ ॥**

## न्यायवार्त्तिकम्

**विशेषोपलिप्सायां च न संशयो भवतीति उपलब्ध्यनुपलब्ध्यव्यवस्थात इति वक्तव्यम् अनेकधर्मदर्शनादिति च।**

**समानानेकधर्मोपपत्तेरित्येवमादिवाक्यं संशयलक्षणम्, तद्विचार्यते—किन्तावदयं कारणोपदेश आहो संशयस्वरूपावधारणमिति? यदि कारणनिर्देशः? अत्यल्पमिदमुच्यते समानानेकधर्मादिभ्य इति, अन्यान्यपि संशयकारणानि, तान्युपसंख्येयानि। यथाऽऽत्ममनःसंयोग आन्तरस्य, आत्ममनःसन्निकर्षः इन्द्रियार्थसन्निकर्षो बाह्यस्येति। अथ स्वरूपावधारणम्? कारणनिर्देशोऽनर्थकः, संशीतिः संशय इति वक्तव्यम्। अस्तु तावत् कारणावधारणम्। ननूक्तं कारणान्तरमप्युपसंख्येयमिति? न, नेदं कारणावधारणार्थम्, अपि त्वसाधारणकारणनिर्देशोऽयम्। तस्मादिन्द्रियार्थसन्निकर्षादीनामप्रसङ्गः। कुतः(१)? प्रत्यक्षसाधारणत्वात्। स्वरूपनिर्देशो वा भवतु—इदमेवास्य स्वरूपं समानधर्मादिभ्यो जन्मेति। सोऽयमेवम्भूतः संशयो विचाराङ्ग-**

## न्यायवार्त्तिकतात्पर्यटीका

दर्शनादित्यनेनान्वयमात्रव्यभिचारोऽभिमतो बौद्धेन, ततोऽनेकधर्मदर्शनादिति वक्तव्यमिति। तदेवं सामान्यलक्षणमेकं त्रीणि च विशेषलक्षणानीति स्थितम्।

तदेतानि चत्वारि लक्षणानि पुञ्जीकृत्य विचारयति—समानेति। यदि तावत्संशयसामान्यलक्षणे स्थिते त्रीणि विशेषलक्षणानि, ततः संशयत्वेनोपगृहीतानां त्रयाणां परस्परव्यवच्छेदकमात्रं लक्षणं वक्तव्यम्, ततः समानानेकधर्मोपपत्तेर्विप्रतिपत्तेरित्येतावन्मात्रं वक्तव्यम्, कृतमत्र शेषेण, तन्मात्रादेव परस्परव्यवच्छेदसिद्धेः। तस्मात् परस्परव्यवच्छेदमनपेक्ष्य संशयकारणकथनपरमेतत् सूत्रम्, तथा चान्यान्यपि संशयकारणानि सन्तीति तान्यपि वक्तव्यानि। यदा खल्वयमात्मनः शमादौ संशेते—किमहं चन्दनवनितादिसन्निधाने रज्ये विरज्ये वेति, सोऽयमस्यात्मनः सन्निकर्षजन्मा संशयः आन्तरस्य शमादेर्विषयस्येति समाधत्ते—अस्तु तावदिति। यद्यपि तावन्मात्रेण समानजातीयव्यवच्छेदसिद्धिः तथाऽपि विजातीयव्यावर्त्तनाय सामान्यलक्षणमनुवर्त्तनीयम्, तथा च प्रतिपत्तिगौरवं स्यादिति तल्लाघवाय शेषापेक्षा युक्ता। आत्मनः सन्निकर्षादयस्त्वत्यन्तसाधारणा विजातीयव्यवच्छेदायापि नालमिति नोपात्ता इति भावः। एवं संशयकारणावधारणादर्थात् संशयभेदावधारणमित्युक्तम्, संप्रति कारणविशेषेण संशयस्वरूपमेवोच्यत इत्याह—स्वरूपनिर्देशो वेति। विप्रतिपन्नोऽपि

(१) "कुतः" इति ख-पु० नास्ति।

## न्यायभाष्यम्

स्थानवतां लक्षण(१)मिति समानम् ।

### ( सू )—यमर्थमधिकृत्य प्रवर्तते तत्प्रयोजनम् ॥ २४ ॥

यमर्थमाप्तव्यं हातव्यं वा व्यवसाय(२) तदाप्तिहानोपायमनुतिष्ठति, प्रयोजनं तद्वेदितव्यम्, प्रवृत्तिहेतुत्वात् । इममर्थ(३)माप्स्यामि हास्यामि वेति व्यवसायोऽर्थस्याधिकारः, एवं व्यवसीयमानोऽर्थोऽधिक्रियत इति ॥ २४ ॥

## न्यायवार्त्तिकम्

तयोपादीयते । संशयवद्विपर्ययोऽपि विचाराङ्गम्, सोऽपि पदार्थत्वेन वक्तव्यः ? सत्यमसौ पदार्थो न तु विचाराङ्गमित्यतो नाभिधेयः । कथं न विचाराङ्गम् ? यथा सन्दिग्धस्तद्विशेषप्रतिपत्तये यतते नैवं विपर्यस्त इति, इत्यतो न्यायविधानङ्गत्वात् नाभिधीयते ॥ २३ ॥

यमर्थमधिकृत्य प्रवर्तते तत् प्रयोजनम् । यमर्थमधिकृत्येति व्यवसायोऽधिकारः(४) । कस्य

## न्यायवार्त्तिकतात्पर्य्यटीका

पुरुषः सन्दिग्धवत्प्रतिपाद्य एवेति मन्वानश्चोदयति—संशयवदिति । विप्रतिपन्नो न शिष्यः, किन्तु जल्पवितण्डाभ्यां शिष्यतां नीत्वा सन्दिग्ध एव प्रतिपाद्यत—इत्यभिप्रायेण परिहरति—सत्यमिति ॥ २३ ॥

उद्देशक्रमप्राप्तस्य प्रयोजनस्य लक्षणम्—यम···नम् (सू, २४) ॥

अत्रार्थशब्दो गौणमुख्यप्रयोजनावरोधार्थः । तत्र मुख्यं सुखदुःखप्राप्तिपरिहारौ, गौणं तु तत्साधनम् । अत्र भाष्यं—यमर्थमित्यादि । अत्राधिकृत्येत्यस्य व्याख्यानम्—व्यवसाय निश्चित्येत्यर्थः । ससाधनौ च सुखदुःखप्राप्तिपरिहारावर्थः, न च सुखदुःखप्राप्तिपरिहारौ स्वरूपेण प्रवृत्तिनिवृत्तिगोचराविति तदुपायप्रवृत्त्यैव चेतनप्रवृत्तिगोचराविति दर्शयति—तदाप्तिहानोपायमनुतिष्ठतीति । प्रवृत्तिहेतुत्वादिति । यद्यपि सुखदुःखाप्तिहाने तदुपायाश्च सन्ति तथाऽपि सामान्येन ज्ञायमानानीच्छाद्युपहारमुखेण प्रवृत्तिहेतवः । ननु सूत्रेऽधिकृत्येत्यस्ति भाष्ये व्यवसायेति तत् कुतो न विरोध इत्यत आह—व्यवसायोऽर्थस्याधिकार इत्यादि । तदेतद्वार्त्तिककारो व्याचष्टे—यमर्थमधिकृत्येति, व्यवसायेति । पृच्छति—कस्येति ? सुखदुःखाप्तिपरिहारयोर्व्यवसाय-

## वृत्तिः

क्रमप्राप्तं प्रयोजनं लक्षयति—( यमर्थमित्यादि ) ।

अधिकृत्य——उद्दिश्य । तथा च प्रवृत्तिहेत्विच्छाविषयत्वं तत्त्वम् । विषयत्वं

(१) "लक्षणवचन" इति ज० । (२) "अध्यवसाय" इति ज-भा-ग० । (३) "इदमर्थं" इति फ० । (४) "व्यवसायोऽर्थस्याधिकारः" इति भाष्ये ।

## न्यायवार्त्तिकम्

व्यवसायः ? सुखदुःखसाधनानाम्। इदं सुखसाधनमिति ज्ञात्वा सुखाप्तये(१) प्रयतते, इदं दुःखसाधन(२)मिति चाधिगम्य दुःखहानायेति। सुखदुःखयोरवाप्तिहानाभ्यामयं लोकः प्रयुज्यत इति सुखदुःखाप्तिहानी प्रयोजनमिति। अनेन च प्रयोजनेन सर्वेऽर्थाः संगृहीता भवन्तीति। एतस्मिंश्च सूत्रार्थे परस्य दोषविवक्षया चोद्यमानस्य वक्तुमशक्तस्य व्याहारो लौकिकोऽयमर्थः प्रयुज्यतेऽनेनेति प्रयोजनमिति। न चानेन न्यायस्य किञ्चित् क्रियत इति न्यायाङ्गभावो नास्तीति। यत्तावल्लौकिकोऽयमर्थ इति, एतत् नर्ते(३) प्रकृष्टतार्किकादन्यो वक्तुमर्हति—अयमेव च पदार्थो लौकिको न प्रमाणादय इति। कश्चासौ लौकिक इति ? यदि प्रमाणोपपन्न इत्ययमर्थः, अतिद्दोषोऽयम्, प्रमाणोपपन्नं न वक्तव्यमिति। अथान्यो लौकिकशब्दार्थः ? तन्न बुध्यामहे कथमन्य इति। यदपि प्रयोजनं न्यायस्याङ्गं न भवतीति, तदयुक्तम्, या खलु निष्प्रयोजना चिन्ता सा न न्यायाङ्गमिति। परीक्षाविधेस्तु प्रधानाङ्गं प्रयोजनमेव, तन्मूलत्वात् परीक्षाविधेरिति ॥ २४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

स्तत्रैव प्रवर्तयेत्, न चानयोः प्रवृत्तियोग्यता, न चान्यनिश्चयोऽन्यत्र प्रवर्त्तयति, अतिप्रसङ्गादिति भावः। उत्तरं—सुखदुःखसाधनानामिति। ततश्च प्रतीतिप्रवृत्त्योः संप्रतिपत्तिरित्यर्थः। सर्वव्यापितामस्य दर्शयति—अनेन प्रयोजनेनेति। वितण्डाया अपि प्रयोजनमुक्तं प्रथमसूत्रे। चोद्यमानस्य प्रवर्त्तमानस्येत्यर्थः। शङ्कते—यदीति। लोक्यतेऽनेनेति लोकः प्रमाणम्, तदन्वितस्तदुपपन्नः, न च प्रमाणमीदृशम्, अनवस्थाप्रसङ्गादिति भावः। निराकरोति—अतिद्दोषोऽयमिति। यथा च प्रमाणस्य प्रमाणोपपन्नताऽनवस्था तथा द्वितीये (४) निवेदयिष्यते। न च प्रसिद्धतरतया न प्रयोजनं लक्षणीयमिति युक्तम्, कथमस्य प्रयुक्तौ साधनत्वं क्व च प्रयोजयति कथं च व्यापकमिति सर्वस्य परीक्षकवेदनीयत्वात्। अथान्य इति। अप्रामाणिको लौकिक इति, यथा वटे वटे वैश्रवण इति। निराकरोति—तन्न बुध्यामह इति। प्रयोजनस्य प्रामाणिकत्वादित्यर्थः। यदप्युक्तं न्यायस्याङ्गं प्रयोजनं (५) न भवति तस्मान्न वक्तव्यमिति, तन्न युक्तम् (६)। या खलु निष्प्रयोजनेति, न ब्रूमः प्रयोजनं न्यायस्याङ्गमित्यपि, मुख्यं प्रयोजनमेव हि तन्न स्याद् यदते पुरुषादन्यार्थमिति, प्रयोजनवांस्तु न्यायो

## वृत्तिः

साध्यताख्यविषयताविशेषः, तेन(७) सुखत्वादिवारणम्। प्रवृत्तिहेत्विति स्वरूपकथनम्। तक्षकचूडामणिसुमेर्वादिप्राप्तिवारकं तदिति केचित्।

(१) "दुःखाप्तये" इति क०। (२) "सुखसाधन" इति ख०। (३) "न ऋते" इति पदविश्लेषः। (४) २।१।१८ सूत्रतात्पर्ये। (५) "प्रयोजनं न्यायस्याङ्गम्" इति वार्त्तिके। (६) "तदयुक्तम्" इति वार्त्तिके। (७) "ज्ञान" इत्यधिकम्, श्रा० व०।

## (सू)—लौकिकपरीक्षकाणां यस्मिन्नर्थे बुद्धिसाम्यं स दृष्टान्तः ॥ २५ ॥

### न्यायभाष्यम्

लोकसामान्य(१)मनतीता लौकिका नैसर्गिकं वैनयिकं बुद्धयतिशयमप्राप्ताः। तद्विपरीताः परीक्षकाः। तर्केण प्रमाणैरर्थं परीक्षितुमर्हन्तीति। यथा

### न्यायवार्त्तिकम्

लौकिकपरीक्षकाणामिति सूत्रम्। बुद्धिसाम्यविषयो दृष्टान्त इति सूत्रार्थः। एवं चाका-

### न्यायवार्त्तिकतात्पर्यटीका

निष्प्रयोजनां तद्गतां चिन्तामङ्गीकरोति, फलवत्सन्निधावफलं तदङ्गमिति न्यायात्। तस्मादनङ्गमपि प्रयोजनं परीक्षाया मूलं स्वर्ग इव सेतिकर्त्तव्यताकस्य यागाद्यनुष्ठानस्येति सिद्धम्॥ २४॥

क्रमप्राप्तं दृष्टान्तं लक्षयति—

लौकि—न्तः ( सू, २५ )॥ दृष्टान्त इति लक्ष्यनिर्देशः, शेषं लक्षणम्। साध्यसाधर्म्यात्तद्धर्मभावित्वेनार्थ्यते तथा साध्यवैधर्म्यादतद्धर्मभावित्वेनार्थ्यते यः सोऽर्थस्तस्मिन्, तथा च नातिव्याप्तिः (२)। उदाहरणसूत्रा(३)चैतद्विशेषप्रतिलम्भः। लोकसामान्यं किं तदित्यत आह—नैसर्गिकमिति। शास्त्रपरिशीलनलब्धजन्मा बुद्धयतिशयो वैनयिकः तद्रहिता लौकिकाः प्रतिपाद्या इति यावत्। तद्विपरीतास्तदुभयसम्पन्नाश्च परीक्षकाः प्रतिपादका इति यावत्, कथाबहुत्वाच्च बहुवचनम्। तदनेन वादिप्रतिवादिनौ दर्शितौ, तयोर्बुद्धिसाम्यं व्याचष्टे—

### वृत्तिः

अत्र च निरुपाधीच्छाविषयत्वात् सुखदुःखाभावयोर्मुख्यं प्रयोजनत्वम्। तदुपायस्य तु तदिच्छाधीनेच्छाविषयत्वाद्गौणं प्रयोजनत्वमिति ॥ २४ ॥

---

(१) "लोकसाम्य-" इति ख० ग० श्रा० ज०। (२) "लौकिकपरीक्षकाणा"मित्यादिसूत्रवाक्यस्य यथाश्रुतार्थमात्रमेव चेत् लक्षणम्, तर्हि लौकिकपरीक्षकोभयसिद्धानामपि पदार्थानां मध्ये कस्य कुत्र दृष्टान्तता स्यादिति नियन्त्रणं न शक्यते कर्त्तुम्, तथा च पर्वतादौ धूमादिहेतुकवह्न्याद्यनुमाने घटादेरपि दृष्टान्ततापसक्तिरूपातिव्याप्तेः सम्भवः, अतः "साध्यसाधर्म्या"दित्यादिना "अर्थ" पदार्थं विशिष्य तद्घटितत्वेन लक्षणस्यापि तत्तत्प्रकृतसाध्यादिनियन्त्रितभावं सम्पाद्य निरुक्तातिव्याप्तेः परीहारं दर्शयति—"तथाच नातिव्याप्ति"रिति। अत्र "साध्यसाधर्म्याद्"इति "तथा साध्यवैधर्म्यादिति च दलद्वयं क्रमेणान्वयिव्यतिरेकिरूपयोर्द्विविधदृष्टान्तयोः संग्रहार्थमिति बोध्यम्। (३) १।१।३६ सू०।

## न्यायभाष्यम्

यमर्थं लौकिका बुध्यन्ते तथा परीक्षका अपि, सोऽर्थो दृष्टान्तः। दृष्टान्तविरोधेन (१) हि प्रतिपक्षाः प्रतिषेद्धव्या भवन्तीति, दृष्टान्तसमाधिना च स्वपक्षाः स्थापनीया भवन्तीति, अवयवेषु चोदाहरणाय कल्पत(२) इति ॥ २५ ॥

## न्यायवार्त्तिकम्

शाद्यवरोधः(३) इति। यदि पुनरेवमवधार्यते लौकिकानां परीक्षकाणां च यो विषयः स दृष्टान्त इत्यलौकिकार्थो न दृष्टान्तः स्यादाकाशादिरिति। उदाहरणत्वेन तु लौकिकपरीक्षकविषयस्याभिधानं(४) न तु लौकिकपरीक्षकाणामेवेति।

सोऽयं दृष्टान्तः सारूप्यव्युत्पत्त्यर्थो वा स्यादसिद्धसाधनार्थो वा? यदि तावत् सारूप्यव्युत्पत्त्यर्थस्तदा नोपमानाद्भिद्यते। अथासिद्धसाधनार्थो नोदाहरणाद्भिद्यते। यद्युपमानं प्रमाणेऽन्तर्भावः। अथोदाहरणमवयव इति न पृथक् दृष्टान्तोऽस्तीति। इदं तूत्तरमप्रतिसमाधेयमिति पश्यामः, कस्मात्? त्रयस्याप्यपरिज्ञानात्। एवं ब्रुवता न दृष्टान्तो नोदाहरणं नोपमानं विज्ञातमिति। सारूप्यव्युत्पत्त्यर्थं तावदुपमानं न भवतीति वर्णितम्, दृष्टान्तः सारूप्यव्युत्पत्त्यर्थः, असिद्धसाधनार्थो वेति दृष्टान्तो न भवति। उदाहरणार्थमुदाहरणं वर्णयन्तो वक्ष्याम इति ॥ २५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

यथा यमर्थमिति। लक्षणप्रयोजनमाह—दृष्टान्तविरोधेनेति। दृष्टान्तस्य विरोधो विरुद्धत्वं साध्यविकलत्वादि। प्रतिपक्षा इति प्रतिपक्षासाधनानि, समाधिरभूतदोषारोपस्य प्रतिषेधः। लक्षितश्च दृष्टान्त उदाहरणलक्षणाय कल्पते, घटत इति भाष्यम्। अत्र वार्त्तिककारो लौकिकपरीक्षकस्वरूपमविवक्षितमिति मन्वान आह—बुद्धिसाम्येति। अविवक्षाप्रयोजनमन्वयव्यतिरेकाभ्यामाह—एवं चेति। परेषां दृष्टान्तलक्षणाक्षेपमुपन्यस्य दूषयति—सोऽयं दृष्टान्त इति। दृष्टान्तस्य प्रयोजनमाह—दृष्टान्तः सारूप्यव्युत्पत्त्यर्थः। यथाऽऽक्षेप्त्रोक्तं तत्तदक्षरमनूद्य दूषयति—असिद्धसाधनार्थो वेति। न खल्वसिद्धः साध्येन साधनस्याविनाभावो दृष्टान्तेन साध्यत इत्यर्थः ॥ २५ ॥

## वृत्तिः

क्रमप्राप्तं (५) दृष्टान्तं लक्षयति—(लौकिकेत्यादि)।

लौकिकः—अप्राप्तशास्त्रपरिशीलनजन्यबुद्धिप्रकर्षः, प्रतिपाद्य इति फलितार्थः।

---

(१) "दृष्टान्ताविरोधेन" इति आ०। (२) "कल्पत" इति आ०। (३) "आकाशाद्यवबोध" इति ख०। (४) "विषयस्याभिधानात्" इति ख०। (५) ल पु०—"क्रमप्राप्तम्" इति नास्ति।

## न्यायभाष्यम्

अथ सिद्धान्तः, इदमित्थम्भूतञ्चेत्यभ्यनुज्ञायमानमर्थजातं सिद्धम्, सिद्धस्य संस्थितिः सिद्धान्तः, संस्थितिरित्थम्भावव्यवस्था धर्मनियमः।

स खल्वयम्—

**( सू )—तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्तः ॥ २६ ॥**

## न्यायवार्त्तिकम्

इदमित्थम्भूतं चेति भाष्यम्। इदमिति सामान्यतोऽवगममाह। इत्थम्भूतं चेति विशेषतः(१)। एतदुक्तम्भवति—सामान्यविशेषवदर्थाभ्यनुज्ञा सिद्धान्त इति। अस्यार्थस्य प्रदर्शनार्थं सूत्रम्—तन्त्राधिकरणाभ्युपगमसंस्थितिः सिद्धान्त इति।

## न्यायवार्त्तिकतात्पर्यटीका

अत्र भाष्यकारः सिद्धान्तसामान्यलक्षणसूत्रमपठित्वैव तात्पर्यं व्याचष्टे—अथ सिद्धान्त इत्यादिना। तत्रेदमित्थंभूतमिति वार्त्तिककारो व्याचष्टे—इदमिति सामान्यत इति। भाष्ये तु संस्थितिरित्थंभावव्यवस्थेति सामान्योपक्रमस्याभ्युपगमस्य प्रमाणतो विशेषपर्यन्तता-परिसमाप्तिः संस्थितिरित्यर्थः। अत्रैवार्थे सूत्रमित्याह वार्त्तिककारः—अस्यार्थस्येति।

## वृत्तिः

परीक्षकः—शास्त्रपरिशीलनप्राप्तबुद्धिप्रकर्षः, प्रतिपादक इति फलितार्थः। तथा च प्रतिपाद्यप्रतिपादकयोरिति पर्यवसन्नम्। 'बहुवचनं कथाबहुत्वमपेक्ष्य'—इति टीका(२)। वस्तुतो लौकिकयोः परीक्षकयोर्वेत्यर्थाद्युक्तमेव बहुवचनम्। बुद्धिसाम्यमिति(३)। बुद्धेः साध्यसाधनोभयवत्त्वविषयिण्याः,—तदभावविषयिण्या वा, साम्यम्, अविरोधो यस्मिन्नर्थे स दृष्टान्तः। वादिप्रतिवादिनोः साध्यसाधनोभयवत्त्वप्रकारकतदभाववत्त्व(४)-प्रकारकान्यतरनिश्चयविषयो दृष्टान्त इति पर्यवसितोऽर्थः ॥ २५ ॥

क्रमप्राप्तं सिद्धान्तं लक्षयति—(तन्त्राधिकरणेत्यादि)।

तन्त्रं शास्त्रं तदेवाधिकरणं ज्ञापकतया यस्य तादृशो(५)योऽभ्युपगमस्तस्य समीचीन-तयाऽसंशयरूपतया स्थितिः, तथा च शास्त्रितार्थनिश्चयः सिद्धान्तः। अत्र च 'अभ्युपगम्य-मानोऽर्थः सिद्धान्त' इति भाष्यम्। 'अभ्युपगमः सिद्धान्त' इति वार्त्तिकटीके। न चात्र

---

(१) "विशेषः" इति क०। (२) तात्पर्यटीकायाम् "कथाबहुत्वाच्च बहुवचनम्" इति। (३) '२' चिह्नात् परः '३'-चिह्नपूर्ववर्त्ती पाठः आ० व० नास्ति। (४) "भाववत्त्व" इत्यत्र "भावद्वय" इति आ० व०। (५) "तादृशस्य" इति आ० व०।

### न्यायभाष्यम्

तन्त्रार्थसंस्थितिः तन्त्रसंस्थितिः, तन्त्रमितरेतराभिसम्बद्धस्यार्थसमूहस्योपदेशः शास्त्रम्। अधिकरणानुषक्तार्थ(१)संस्थितिरधिकरणसंस्थितिः, अभ्युपगमसंस्थितिरनवधारितार्थपरिग्रहः, तद्विशेषपरीक्षणायाभ्युपगमसिद्धान्तः।

तन्त्रभेदात्तु खलु

## (सू)—स चतुर्विधः (२) सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थित्यर्थान्तरभावात्॥ २७॥

### न्यायवार्त्तिकम्

किं पुनरिदं सूत्रं लक्षणार्थमाहो विभागार्थमिति। किं चातः? यदि लक्षणार्थं तन्त्राधिकरणग्रहणं न कर्तव्यम्, एतावद्भवत्वभ्युपगमव्यवस्था सिद्धान्त इति। अथ विभागार्थम्? सर्वतन्त्रग्रहणं कर्तव्यम्, प्रतिज्ञादिवत्। यथा प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवा इति समस्ताभिधानम्, एवं सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसंस्थितिरिति वक्तव्यम्। लक्षणार्थं च सूत्रान्तरं वक्तव्यम्॥ २६॥

### न्यायवार्त्तिकतात्पर्यटीका

तन्त्रा—न्तः (सू, २६)॥ सूत्रार्थमाक्षिपति—किं पुनरिति। लक्षणार्थं चेति, सामान्यलक्षणार्थम्, न खलु सामान्यलक्षणमन्तरेण शक्यो विभाग इत्युक्तम्॥ २६॥

### वृत्तिः

विरोधः शङ्क्यः, आचार्यैः परिहृतत्वात्। तथा च त्रिसूत्रीनिबन्धः 'अर्थाभ्युपगमयोर्गुणप्रधानभावस्य विवक्षातन्त्रत्वादर्थाभ्युपगमोऽभ्युपगम्यमानो वाऽर्थः सिद्धान्तः'। तेन सूत्रभाष्यवार्त्तिकटीकासु न विरोधः।

अत्र च भाष्यानुसारात् सर्वतन्त्रप्रतितन्त्राधिकरणाभ्युपगमसिद्धान्तान्यतमः सिद्धान्त इति सूत्रार्थ इति तु न युक्तम्, अग्रिमसूत्रानुत्थानापत्तेः।

तन्त्रसिद्धान्तत्वेन द्वयमनुगमय्य तन्त्राधिकरणाभ्युपगमान्यतमः सिद्धान्त इति केचित्॥ २६॥

---

(१) "-नुषङ्गार्था" इति फ॰ ग॰। "-नुषक्तार्था" इति ज॰ आ॰। (२) "स चतुर्विध" इति सूत्रांशः ल-भा-ग-आ-ज-पुस्तकेषु भाष्यपाठरूपेण परिगृहीतः, किन्तु सूत्रकारस्यात्र "अर्थान्तरभावात्" इति हेतुनिर्देशस्य साध्यनिर्देशमन्तरेणासङ्गतेः, १।१।५म सूत्रभाष्यस्य "विभागवचनादेव" इत्यादितः—"तथाचाऽयमित्थम्भूतेन वाक्यविकल्पेन प्रवृत्तः सिद्धान्ते छले शब्दादिषु च बहुलं समाचारः शास्त्रे" इत्येतावत्पर्यन्तपाठार्थपर्यालोचनेन भाष्यकारस्याप्येतादृशसूत्रपाठे सम्मतिबोधात्, न्यायसूचीनिबन्धे वाचस्पतिमिश्रैरपि एतदंशस्य सूत्रपाठरूपेण गृहीतत्वाच्च सूत्रपाठतैवास्य समीचीना प्रतिभाति। यद्यपि वार्त्तिकपाठधारणे विश्वनाथवृत्तिव्याख्याने च पर्यालोच्यमाने पुनरेतदंशस्य भाष्यपाठतैव प्रतीयते इति पाठावधारणं प्रति महदसौकर्यम्, तथापि प्राचीनतमानां भाष्यकाराणां १।१।५म सूत्रभाष्यीयनिरुक्तपाठार्थबलमेव प्राधान्येनावलम्ब्य सूत्रपाठतया सम्पादनमस्माभिरादृतम्।

## न्यायभाष्यम्

तत्रैताश्चतस्रः संस्थितयो(१)ऽर्थान्तरभूताः ॥ २७ ॥

## न्यायवार्त्तिकम्

सर्वतन्त्रप्रतितन्त्राभ्युपगमसंस्थित्यर्थान्तरभावा(२)दित्यस्य सूत्रस्यार्थो(३)ऽन्यो वक्तव्यः। अथेदं विभागार्थम्? तथापि पूर्वसूत्रं परित्यज्यताम्। अथ विभक्तानां पुनर्विभागः? त्रिविधा चास्य शास्त्रस्य प्रवृत्तिरिति व्याहतम्। विभागश्च नियमार्थः, विभक्तानां विभागः किमर्थः?। यदि नियमार्थः आद्येन सूत्रेण कृतत्वान्न प्रयोजनमस्तीति। तस्मात् पूर्वमुत्तरं वा सूत्रमनार्षमिति। नाऽनार्षम्, आद्यस्य लक्षणार्थत्वादुत्तरस्य विभागार्थत्वादिति। विभागश्च नियमार्थ इत्युक्तम्। एतेन अनेकधा भिन्नस्य सिद्धान्तस्य चतुर्धा संग्रह इति नियमं दर्शयति। अथाऽऽद्यं सूत्रं कथम्? लक्षणार्थमिति। तन्त्राधिकरणानामर्थानामभ्युपगम इति सूत्रार्थः। तन्त्रमधिकरणं येषामर्थानां भवति ते तन्त्राधिकरणाः, तेषामभ्युपगमसंस्थितिरित्थम्भावव्यवस्था धर्मनियमः (४) सिद्धान्तो भवतीति। किमुक्तम्भवति? योऽर्थो न शास्त्रितः तस्याभ्युपगमो न सिद्धान्त इति ॥ २७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

(५) समाधत्ते—नाऽनार्षमिति। लक्षणार्थत्वं सामान्यलक्षणार्थत्वम्। तन्त्र्यन्ते व्युत्पाद्यन्ते प्रमेयाण्यनेनेति तन्त्रं प्रमाणं तदेवाधिकरणमाश्रयो ज्ञापकत्वेन येषामर्थानां ते तथोक्ताः। अशास्त्रितः (६) अप्रामाणिक इत्यर्थः। आभिमानिकं च (७) प्रामाणिकत्वम्, तेन सिद्धान्तभेदिनामर्थानां सर्वेषां न प्रामाणिकत्वप्रसङ्गः। तदेव भाष्यकारेण व्याख्याय सामान्यलक्षणं पठितम्, एवं व्याख्यानपूर्वकमेव विभागसूत्रं पठति—तन्त्रार्थसंस्थितिरिति। तन्त्रग्रहणेन च

## वृत्तिः

विभजते—( स चतुर्विध इत्यादि )।

( स चतुर्विध इति शेषः(८) )। सर्वतन्त्रादिसंस्थितीनामर्थान्तरभावाद्भेदादित्यर्थः ॥२७॥

---

(१) "स्थितयो" इति आ०। (२) "स चतुर्विधः" इति सूत्रांशो वार्त्तिककृता परित्यक्तः, एतेनानुमीयते यद् वार्त्तिककृन्मते एतदंशो भाष्यान्तर्गत एवेति। (३) "सूत्रार्थो" इति आदर्शे पाठः। (४) पूर्वसूत्रभाष्यस्यायं पाठो व्याख्याप्रसङ्गादत्रोपात्तः। (५) न च सूत्रोल्लेखादिकमकृत्वा अकाण्ड एव कथं "समाधत्ते" इत्यादिकथनम् इति वाच्यम्, पूर्वसूत्रव्याख्यातः अपृथग्भावेनैव वार्त्तिककृत्तात्पर्यकृद्भ्यामेतत्सूत्रव्याख्यायाः सम्पादितत्वात्, आदर्शे मुद्रणमपि तथैव दृश्यते, अस्माभिस्तु प्रतिसूत्रं विभज्य निर्देशशैल्या एवं सम्पादितम्। (६) वार्त्तिके—"न शास्त्रित." इति पाठः। (७) अत्र "च"कारस्थाने "न" इत्येवं पाठ एव समुचितः प्रतिभाति अर्थसङ्गत्यनुरोधात्। (८) "स चतुर्विधः" इत्यंशस्य सूत्रादौ गृहीतत्वादत्रायं बन्धनीचिह्ननिवेशः।

### न्यायभाष्यम्

तासाम्—

## ( सू )—सर्वतन्त्राविरुद्धस्तन्त्रेऽधिकृतोऽर्थः सर्वतन्त्रसिद्धान्तः ॥ २८ ॥

यथा घ्राणादीनीन्द्रियाणि गन्धादय इन्द्रियार्थाः पृथिव्यादीनि भूतानि प्रमाणैरर्थस्य ग्रहणमिति ॥ २८ ॥

### न्यायवार्त्तिकम्

सर्वेषां सम्प्रतिपत्तिविषयः सर्वतन्त्रसिद्धान्त इति। यथा प्रमाणानि प्रमेयसाधनानि।

न दृष्टान्तात् सर्वतन्त्रसिद्धान्तो भिद्यते तत्राप्यविप्रतिपत्तिरिहापीति? भिद्यत इत्याह, दृष्टान्तो हि वादिप्रतिवादिभ्यामेव निश्चितः, न पुनरेवं(१) सर्वतन्त्रसिद्धान्त इति। अनुमानागमयोराश्रयो दृष्टान्तो नैवं सर्वतन्त्रसिद्धान्त इति। यद्यनुमानागमयोराश्रयो दृष्टान्त इति प्रत्यक्षेऽपि प्रसङ्गः, प्रत्यक्षमप्यनुमानागमयोराश्रयः, तत्कारणत्वात्। यः प्रत्यक्षविषयः सोऽर्थो दृष्टान्तोऽधिगतोऽर्थः कथ्यत इत्यनुमानागमयोराश्रयः, अधिगमसाधनं तु प्रत्यक्षम्, तस्मान्न प्रत्यक्षे प्रसङ्गः ॥ २८ ॥

### न्यायवार्त्तिकतात्पर्यटीका

सर्वतन्त्रप्रतितन्त्रयोरुपादानम्, तयोरपि तन्त्रत्वात्। तदिदमुक्तं—तन्त्रभेदात्त्विति। अनवधारितार्थपरिग्रह इति, साक्षाच्छास्त्रे नोपात्तो यथा मनस इन्द्रियभाव इति ॥ २७ ॥

सर्व—न्तः ( सू, २८ ) ॥ यद्यपि घ्राणादिषु भौतिकत्वाभौतिकत्वादौ विप्रतिपत्तयस्तथाऽपि इन्द्रियत्वे नास्ति विप्रतिपत्तिरिति। तदेतद्वार्त्तिककारो व्याचष्टे—सर्वेषामिति। अत्र चोदयति—न दृष्टान्तादिति। परिहरति—भिद्यत इति। न चैवं सर्वतन्त्रसिद्धान्तः; तस्य सर्वैरेव निश्चितत्वादिति। अनुमानागमयोरिति। संबन्धग्रहणाश्रयावनुमानागमौ, यत्र च संबन्धग्रहः स दृष्टान्त इत्यर्थः ॥ २८ ॥

### वृत्तिः

सर्वतन्त्रसिद्धान्तं लक्षयति—( सर्वतन्त्राविरुद्ध इत्यादि )।

सर्वतन्त्राविरुद्धः सर्वशास्त्राभ्युपगत इति बहवः। वस्तुतो यथाश्रुत एवार्थः अन्यथा तन्त्रेऽधिकृत इत्यस्य वैयर्थ्यापत्तेः। अत एव च जात्यादेरसदुत्तरत्वमपि सर्वतन्त्रसिद्धान्तः।

न च तन्त्रेऽधिकृत इति स्पष्टार्थं लक्षणे तु न देयमेवेति वाच्यम्। मनस इन्द्रियत्वस्य(२) सर्वतन्त्रसिद्धान्ततापत्तेः।

नव्यास्तु सूत्रस्योपलक्षणमात्रत्वाद्वादिप्रतिवाद्युभयाभ्युपगतः कथानुकूलोऽर्थः स इति वदन्ति ॥ २८ ॥

(१) "न चैवम्" इति तात्पर्यं। (२) "इन्द्रियत्वस्यापि" इति भा-च०।

## ( सू )—समानतन्त्रसिद्धः(१) परतन्त्रासिद्धः प्रतितन्त्र-सिद्धान्तः ॥ २९ ॥

### न्यायभाष्यम्

यथा नासत आत्मलाभः, न सत आत्महानम्, निरतिशयाश्चेतनाः देहेन्द्रियमनःसु विषयेषु तत्तत्कारणेषु (२) च विशेष इति साङ्ख्यानाम्, पुरुषकर्मादिनिमित्तो भूतसर्गः कर्महेतवो दोषाः प्रवृत्तिश्च, स्वगुणविशिष्टाश्चेतनाः, असदुत्पद्यते उत्पन्नं निरुध्यत इति योगानाम् ॥ २९ ॥

## (सू)—यत्सिद्धावन्यप्रकरणसिद्धिः सोऽधिकरणसिद्धान्तः ॥३०॥

यस्यार्थस्य सिद्धावन्येऽर्था अनुषज्यन्ते, न तैर्विना सोऽर्थः सिध्यति तेऽर्था यदधि-

### न्यायवार्त्तिकम्

सामान्यविशेषतद्वतां नियमेनाभ्युपगमः प्रतितन्त्रसिद्धान्त इति। यथा भौतिकानीन्द्रियाणीति योगानाम्(३), अभौतिकानीति सांख्यानामिति ॥ २९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

समा—न्तः (सू. २९) ॥ समानशब्द एकपर्यायः। नैयायिकानां हि समानं तन्त्रं न्यायशास्त्रम्, परतन्त्रं च सांख्यादिशास्त्रम्। चेतना आत्मनः, निरतिशया अपरिणामिनो न केनचिद्धर्मेणोपजनापायधर्मेण युज्यन्ते। प्राकृतेषु च तत्कारणेषु महदहङ्कारपञ्चतन्मात्रभूतसूक्ष्मेषु विशेषोऽतिशय इत्यर्थः। तदेतत् सूत्रं वार्त्तिककृद्व्याचष्टे—सामान्येति। योगानामेव, सांख्यानामेवेति नियमः ॥ २९ ॥

यत्—न्तः (सू, ३०) ॥ यस्यार्थस्य साध्यस्य वा हेतोर्वा सिद्धौ इति विषयसप्तमी, न तु निमित्तसप्तमी, द्वयोर्ज्ञानयोर्न्निमित्तनैमित्तिकत्वायोगात्। तेन यस्मिन्नर्थे ज्ञायमाने तदनुषङ्गिणोऽर्थास्तदन्तर्भावेन ज्ञायन्ते सोऽर्थः साक्षादधिक्रियमाणस्तदनुषङ्गिणां चाऽऽधारः तदाश्रयत्वात्तत्सिद्धेः,

### वृत्तिः

प्रतितन्त्रसिद्धान्तं लक्षयति—(समानतन्त्रेत्यादि)।

समानशब्द एकार्थस्तेनैकतन्त्रसिद्ध इत्यर्थः स्वतन्त्रसिद्ध इति पर्यवसितोऽर्थः। तथाच वादिप्रतिवाद्येकतरमात्राभ्युपगतस्तदेकतरस्य प्रतितन्त्रसिद्धान्त इति फलितार्थः यथा मीमांसकानां शब्दनित्यत्वम् ॥ २९ ॥

---

(१) "समानतन्त्रासिद्ध" इति ग०। (२) "तत्तत्कारणे" इति फ-ग०। आ-वि-टि-पुस्तकेषु अयमंशो नास्ति। (३) नैयायिकानामित्यर्थः।

## न्यायभाष्यम्

ष्ठानाः सोऽधिकरणसिद्धान्तः, यथा देहेन्द्रियव्यतिरिक्तो(१) ज्ञाता 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणादि'ति (२) अत्रानुषङ्गिणोऽर्था इन्द्रियनानात्वं नियतविषयाणीन्द्रियाणि स्वविषयग्रहणलिङ्गानि ज्ञातुर्ज्ञानसाधनानि, गन्धादिगुणव्यतिरिक्तं द्रव्यं गुणाधिकरणमनियत(३)विषयाश्चेतना इति पूर्वार्थसिद्धावेतेऽर्थाः सिध्यन्ति न तैर्विना सोऽर्थः सम्भवतीति ॥ ३० ॥

## न्यायवार्त्तिकम्

वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति। तस्योदाहरणं भाष्ये, यथा इन्द्रियव्यतिरिक्तो(४)ज्ञाता दर्शनस्पर्शनाभ्यामेकार्थग्रहणादिति ॥ ३० ॥

## न्यायवार्त्तिकतात्पर्यटीका

स पक्षो वा भवतु हेतुर्वा तेन रूपेणाऽधिकरणसिद्धान्तः। पक्षस्तावद्—विवादाध्यासितमुपलब्धिमत्कारणमुत्पत्तिमत्त्वाद् वस्त्रादिवदिति। अत्र हि पृथिव्यादिगतेनोत्पत्तिमत्त्वेनोपलब्धिमत्पूर्वकत्वं तद्गतं साध्यमानं स्वसिद्धान्तर्गतानुषङ्गिसर्वज्ञत्वाद्युपेतमेव सिध्यति, नान्यथेहोपलब्धिमत्पूर्वकत्वसिद्धिरिति। भाष्ये हेतुः प्रतिसन्धानं सिध्यत् अनुषङ्गयर्थान्तरान्वितं सिध्यतीत्युदाहृतम्, तदेतत्सर्वावरोधार्थं वार्त्तिककृदाह—वाक्यार्थेति। हेतुरीदृशः पक्षश्च वाक्यार्थ इत्यर्थः। पूर्वोऽर्थो यः साक्षादधिकृतः तस्य सिद्धावन्तर्गत इति भाष्यार्थः ॥ ३० ॥

## वृत्तिः

अधिकरणसिद्धान्तं लक्षयति—(यत्सिद्धावित्यादि)।

यस्यार्थस्य सिद्धौ जायमानायामेव अन्यप्रकरणस्य प्रस्तुतस्य सिद्धिर्भवति सोऽधिकरणसिद्धान्त इत्यर्थः, यथाऽनन्तद्व्यणुकादिकं(५) पक्षीकृत्योपादानगोचरज्ञान(६)-चिकीर्षाकृतिमज्जन्यत्वे साध्यमाने सर्वज्ञत्वमीश्वरस्य। एवं हेतुबलादपि, यथा 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणादि'न्द्रियादिव्यतिरिक्त आत्मनि साधिते इन्द्रियनानात्वम्। तथा च यदर्थसिद्धिं विना योऽर्थः शब्दादनुमानाद्वा न सिध्यति, सोऽधिकरणसिद्धान्त इति तत्र तत्र विशिष्यैव लक्षणं कार्यम्(७)।

वस्तुतस्तु शब्दत्वमनुमानत्वं चाविवक्षितं प्रमाणमात्रमपेक्षितम्। अत एव प्रत्यक्षेण

---

(१) "देहेन्द्रिय" इत्यत्र देहशब्दः फ-पु० नास्ति। (२) ३।१।१ सूत्रम्। अत्र "ग्रहणादिति" इत्यत्र "ग्रहणादिभिः" इति ग०। (३) "करणं नियत" इत्येवं ज-पु० पाठः। (४) "देहेन्द्रियव्यतिरिक्तो" इति भाष्ये। (५) "यथा तद्द्व्यणुकादिकम्" इति आ-व०। (६) "गोचरापरोक्षज्ञान" इति आ-व०। (७) "तत्र तत्र" इत्यत आरभ्य "कार्यम्" इत्यन्तः पाठः आ-व-पु० नास्ति।

# ( सू )—अपरीक्षिताभ्युपगमात्तद्विशेषपरीक्षणमभ्युपगमसिद्धान्तः ॥ ३१ ॥

## न्यायभाष्यम्

यत्र किञ्चिदर्थजातमपरीक्षित(१)मभ्युपगम्यते, अस्तु(२) द्रव्यं शब्दः स तु नित्योऽथानित्य इति ? द्रव्यस्य सतो नित्यताऽनित्यता वा तद्विशेषः परीक्ष्यते, सोऽभ्युपगमसिद्धान्तः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च प्रवर्तत इति ॥ ३१ ॥

## न्यायवार्त्तिकम्

अपरीक्षिताभ्युपगमादिति सूत्रम्। अपरीक्षितोऽसूत्रित इति। योऽर्थः सूत्रेषु नोपनिबद्धः शास्त्रे वाभ्युपगतः सोऽभ्युपगमसिद्धान्त इति। यथा नैयायिकानां मन इन्द्रियमिति। वैशेषिकाणां नैयायिकानां च श्रोत्रमाकाशमिति।

अपरीक्षितः शास्त्रानभ्युपगतः स्वबुद्ध्यतिशयचिख्यापयिषया परबुद्ध्यवज्ञानाच्च

## न्यायवार्त्तिकतात्पर्यटीका

अथाभ्युपगमसिद्धान्तलक्षणसूत्रम्—अप—न्तः ( सू, ३१ ) ॥ तद्वार्त्तिककारो व्याचष्टे—अपरीक्षितोऽसूत्रित इति, सूत्रितस्य प्रायेण परीक्षासम्बन्धात् मनसो हीन्द्रियत्वेनासूत्रितस्यापि इन्द्रियत्वाभ्युपगमः प्रमाणाधिकरणो यतः तस्मादयमभ्युपगमसिद्धान्तः। सूत्रं चैवं योजनीयम्, असूत्रिताभ्युपगमाद्धेतोर्यतस्तद्विशेषपरीक्षणं क्रियते तस्माद्विशेषपरीक्षणाज् ज्ञायतेऽसूत्रितमप्यभ्युपगतं सूत्रकारेण। सोऽयमस्याभ्युपगमोऽभ्युपगमसिद्धान्तः।

एवं स्वमतेन सूत्रं व्याख्याय भाष्यकारव्याख्यानं दूषयति—शास्त्रानभ्युपगत इति।

## वृत्तिः

स्थूलत्वसाधनानन्तरमुक्तमात्मतत्त्वविवेके 'सोऽयमधिकरणसिद्धान्तन्यायेन स्थूलत्वसिद्धौ क्षणभङ्गभङ्ग' इति।

तत्र 'वाक्यार्थसिद्धौ तदनुषङ्गी योऽर्थः(३) सोऽधिकरणसिद्धान्त' इति वार्त्तिकफक्किकां लिखित्वा येन केनापि प्रमाणेन वाक्यार्थसिद्धौ जन्यमानायां योऽर्थः सिध्यति स तथेत्यर्थः' इति व्याख्यातं दीधितिकृता। एवं 'हेतुरीदृशः पक्षश्च वाक्यार्थ' इति टीकावचने चोपलक्षणमेतदित्युक्तम्(४)।

यत्तु जनकीभूतव्यापकताज्ञाने व्यापककोटाववविषयः प्रकृतानुमित्या व्यापककोटौ विषयीभूतः शाब्दजनकपदार्थज्ञानाविषयत्वे सति शाब्दविषयश्चेतिद्वयमधिकरणसिद्धान्त इति, तन्न, इन्द्रियनानात्वादौ भाष्याद्युदाहृतेऽव्याप्तेरिति ॥ ३० ॥

(१) "अपरीक्षितम्" इति आ-पु० नास्ति। (२) "अस्ति" इति ल-भा-घा०। (३) "योऽर्थः" इत्यत्र "यो यः" इति आ-व-पु० पाठः। (४) "तत्र तत्र विशिष्यैव लक्षणं कार्यम्" इत्यधिकः पाठः आ-व०।

## न्यायवार्त्तिकम्

प्रवर्त्तत इति न युक्तम्। कुतः? परावज्ञानस्यायुक्तत्वात्। यदि तावत् परस्यासामर्थ्यं बुद्धा नायं समर्थ इति प्रवर्त्तते तदाऽनेन न परः प्रतिपादितो भवति, किन्तु विप्रतिपादितः। यश्चाज्ञः किं तस्य प्रतिपादयितव्यम्। अथ परिज्ञातसामर्थ्यं पुरुषमवजानाति? तदपि न। अतिशयबुद्धिमतोऽवज्ञानस्यायुक्तत्वात्। तस्मान्नायं सूत्रार्थोऽशास्त्रिताभ्युपगमः सिद्धान्त इति।

सर्व एवायं पक्षः स्वमुखेनार्थापत्त्या वा विधीयत इति किमनेनातिविस्तृतेनेति केचित्। पक्षपर्याय एव सिद्धान्त इत्यपरे। पक्षस्य किलायं पर्यायः सिद्धान्त इति। सिद्धान्तः पक्ष(१)पर्यायोऽयमिति न बुद्ध्यामहे। सिद्धान्त इत्युपपन्नप्रमाणकोऽयमर्थः तत्प्रत्ययादभ्युपगमः पक्ष इत्यन्यतरवादिविप्रतिपन्नस्यान्यतरं प्रति कर्मतया वस्तुनो यदुपादानं स पक्षः, यथ कारकशब्दो यथ वस्तुशब्दो नैतौ पर्यायौ, अन्यथा परशुश्छेदनमिति। परशुरिति कदा अभिधीयते? यदा पुरुषव्यापारनिरपेक्षं वस्तु सन्निधीयमानतयाऽवतिष्ठते, छेदनमिति च यदोद्यम्योद्यम्य दारुणि निपात्यते, तावेतौ छेदनपरशुशब्दौ वस्तुनः क्रियासम्बन्धापेक्षौ(२) प्रवर्त्तेते इति। तथा सर्व एव कारकशब्दा न द्रव्यमात्रे न वा क्रियामात्रे प्रवर्तन्ते। किन्तर्हि? क्रियासाधने

## न्यायवार्त्तिकतात्पर्यटीका

प्रमाणीकृतेन शास्त्रेणाननुज्ञातः प्रमाणानधीन इत्यर्थः। प्रमाणतन्त्राभ्युपगमसंस्थितिरिति हि सिद्धान्तसामान्यलक्षणम्, न च प्रमाणानधीनाभ्युपगमस्तदन्वेतीति नायमीदृशोऽभ्युपगमसिद्धान्तो भवितुमर्हतीति हृदि निधायायुक्तताऽपि दर्शिता। अज्ञं प्रत्यसदाचारत्वात् प्रामाणिकं च पुरुषं प्रत्यशक्यत्वादिति (३)—बुद्धिमतोऽवज्ञानस्यायुक्तत्वादशक्यत्वा(४)दित्यर्थः। सर्व एवायं पक्ष इति। सर्वतन्त्रप्रतितन्त्रसिद्धान्तौ तावत्साक्षादभ्युपगम्यमानौ स्वमुखेनैव पक्षतयाऽभिधीयेते, अधिकरणाभ्युपगमौ तु साक्षादनभ्युपगम्यमानावप्यर्थादभ्युपगन्तव्याविति अर्थापत्त्या पक्षावित्यर्थः। ननु यद्युपपन्नः प्रमाणतयाऽभ्युपगमसिद्धान्तस्तर्हि सिद्धान्तभेदिनामर्थानां प्रामाणिकत्वेन विरुद्धधर्मसमालिङ्गिता भावाः प्रसज्येरन्नित्यत आह—तत्प्रत्ययात्, तस्य प्रमाणोपपन्नकर्मत्वस्य प्रत्ययादभिमानादित्यर्थः। पक्ष इति, पचि व्यक्तीकरण इत्यस्माद् व्युत्पन्नम्, कर्मतया व्यज्यमानतया वा उपादानं स्वार्थस्य पक्ष इति पदम्, उपादीयते

## वृत्तिः

अभ्युपगमसिद्धान्तं लक्षयति—(अपरीक्षितेति)।

अपरीक्षितस्य साक्षादसूत्रितस्य विशेषपरीक्षणं विशेषधर्मकथनम्। अभ्युपगमा-

(१) "पक्ष" इति ख-पु० नास्ति। (२) "क्रियासम्बन्धासम्बन्धापेक्षौ" इति ख-पु० पाठः। (३) "इति बुद्धिमतः" इत्यत्र "अतिबुद्धिमतः" इत्येवं पाठः समीचीनः प्रतिभाति, तथा हि वार्त्तिकस्य "अतिशयबुद्धिमतः" इत्यंशेन संवादसम्भवात्। (४) "-दशक्यत्वा-" इति क० नास्ति।

## न्यायवार्त्तिकम्

क्रियाविशेषयुक्त इति। कारकशब्दश्च पक्षो न सिद्धान्तः, स कथं पर्यायो भविष्यतीति। सर्वतन्त्रसिद्धान्तश्च पक्षपर्याय इति, अहो पर्यायशब्देषु कौशलं भदन्तस्य, पक्षो विचारणायामिष्टोऽर्थ इति चाभिधीयते अविचारणीयश्चार्थः पक्षेऽन्तर्भवतीति चित्रम्। अथ पुनः सर्वतन्त्रसिद्धान्तं नैव प्रतिपद्यते तेनापि सर्वतन्त्रसिद्धान्तं निह्नुवानेन तदसत्त्वप्रतिपादको न्यायोऽभिधेयः, यश्चासौ न्यायाभ्युपगमः स सर्वतन्त्रसिद्धान्त इति व्याहतं सर्वतन्त्रसिद्धान्तो नास्तीति। अथ न्यायमपि न प्रतिपद्यते, अनिवृत्तो व्याघातः वचनेऽवचने च, यदि तावन्न्यायोऽस्तीति ब्रवीति प्रतिपादयति च नास्ति चेति व्याहतम्। अथ ब्रवीति न(१) अवचनेऽस्यार्थो न सिध्यति। तस्मात् सर्वतन्त्रसिद्धान्तो नास्तीति सम्भ्रमव्याकृतम्। इदं च तावत् भवान् प्रष्टव्यो जायते किं पक्षः सिद्धान्तसामान्यं भवति, अथ संग्रहः पक्षशब्देन सिद्धान्तस्य, अथ सिद्धान्तस्य पक्षशब्दः पर्याय इति ? तद्यदि तावत् सिद्धान्तसामान्यं तन्नास्त्यव्यापकत्वात्। न हि पक्षः सर्वतन्त्रसिद्धान्तं व्याप्नोति असाध्यत्वात्। यथा सत्ता द्रव्यगुणकर्माणि व्याप्नोति व्यापकत्वात् सामान्यं भवति, न चैवं पक्ष इति पर्यायशब्दोऽपि न भवतीत्युक्तम्। यदि च पक्षः सिद्धान्तपर्यायः सर्वतन्त्रसिद्धान्तः साध्यो जायते। सर्वतन्त्रसिद्धान्तः साध्यश्चेति व्याघातः। अर्थापत्तितोऽधिकरणसिद्धान्तस्याभेद इति चेत्—अथापि (२)

## न्यायवार्त्तिकतात्पर्यटीका

ऽनेनेति व्युत्पत्त्या क्रियासाधन इति प्रधानक्रियासाधने, क्रियाविशेषयुक्त इति अवान्तरव्यापारयुक्ते, तेन हि प्रधानक्रियायां कारकाणां वैचित्र्यं भवतीति। यश्चासौ न्यायस्याभ्युपगम इति। यावदभ्युपगतं न्याय्यसाधनं न्याय इति, तावदभ्युपगतं भवति प्रमेयसाधनं प्रमाणमिति, न च धर्मिण्यनभ्युपगते तदाश्रयोऽभ्युपगतो भवति। तस्मादुभयथाऽपि सर्वतन्त्रसिद्धान्तानपह्नव इत्यर्थः। अथ संग्रहः पक्षशब्देनेति, यथा दण्डिशब्देन दण्डसंबन्धोपहितसीमानः समानासमानजातीयाः सर्वे संगृह्यन्ते, तथा पक्षशब्देनापीत्यर्थः। अयं तु कल्पः सर्वतन्त्रसिद्धान्तव्यापकत्वकथनेनैवार्थादपाकृत इति न पृथग् निराकृतः। पक्षशब्दो हि व्यज्यमानत्वोपाधिनिबन्धनप्रवृत्तिः, न च व्यज्यमानत्वमस्ति निसर्गव्यक्ते सर्वतन्त्रसिद्धान्त इति भावः।

## वृत्तिः

दिति ज्ञापकत्वे पञ्चमी, अभ्युपगमज्ञापकमित्यर्थः। विशेषपरीक्षया ज्ञायते सूत्रकृतोऽभ्युपगतमिदमिति। तथा च साक्षादसूत्रिताभ्युपगमोऽभ्युपगमसिद्धान्तः यथा मनस इन्द्रियत्वमिति ॥ ३१ ॥

### समाप्तं न्यायाश्रयसिद्धान्तलक्षणप्रकरणम्।

(१) ख-पु०—"न" इति नास्ति। (२) अत्र ख-पु० "न"कारः अधिकः।

## न्यायभाष्यम्

अथावयवाः—

**(सू)—प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः ॥ ३२ ॥**

दशावयवानेके नैयायिका वाक्ये सञ्चक्षते, जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदास इति, ते कस्मान्नोच्यन्त इति। तत्राप्रतीयमानेऽर्थे प्रत्ययार्थस्य प्रवर्तिका

## न्यायवार्त्तिकम्

मन्येथाः अर्थापत्तितोऽधिकरणसिद्धान्तो न भिद्यते, वाक्यार्थप्रतिपत्तौ तद्विपरीतवाक्यार्थप्रतिपत्तिरर्थापत्तिर्वाक्यानुषङ्गी योऽर्थः सोऽधिकरणसिद्धान्त इति ॥ ३१ ॥

प्रतिज्ञाहेतूदाहरणोपनयनिगमनान्यवयवाः। अवयवानां विभागोद्देशार्थं सूत्रम्। विभागोद्देशश्च नियमार्थः। किं नियन्तव्यम्? दशावयवं त्र्यवयवं च वाक्यम्, एके तावद्ब्रुवते

## न्यायवार्त्तिकतात्पर्यटीका

वाक्यार्थप्रतिपत्ताविति। पीनो देवदत्तो दिवा न भुङ्क्ते इत्यस्य दिवाभोजननिषेधोऽर्थः, तस्मात्तद्विपरीतरात्रिभोजनविधिरर्थापत्तिर्लोकसिद्धा, सा च न यथा प्रमाणान्तरफलं तथा द्वितीये निवेदयिष्यते (१)। तदनेन प्रबन्धेन भदन्तदिङ्नागोदितानि दूषणानि निराकृतानि ॥ ३१ ॥

प्रति—वाः (सूः ३२) ॥ वार्त्तिककारः सूत्रतात्पर्यमाह—अवयवानामिति। नन्ववयवसामान्यलक्षणमन्तरेणाशक्यो विभागोद्देशः, तद्विशेषलक्षणं च, न चेदं सामान्यलक्षणं विभागपरत्वादित्यत आह—सूत्रम्। विभागपरमप्येतदर्थादवयवसामान्यलक्षणं सूचयतीति सूत्रम्। अन्यपरादपि वाक्यात् प्रतीयमानोऽर्थोऽपेक्षितः स्वीक्रियत एवेति शाब्दाः। तत्रावयवपदादेव सामान्यलक्षणमवगम्यते। अवयवत्वेनैकवाक्यता दर्शिता, सा च पदानां परस्परासंप्रत्यायितापेक्षितसंबन्धयोग्यार्थप्रत्ययेन भवति, तस्मात्तथाविधार्थप्रत्यायनमेव प्रतिज्ञादीनामवयवसामान्यलक्षणं सिद्धमिति सूत्रमित्यनेन दर्शितं वार्त्तिककृतेति। विभागोद्देशतात्पर्यमाह—विभागेति। त्र्यवयवग्रहणमुपलक्षणार्थम्, द्व्यवयवमित्यपि द्रष्टव्यम्। अत्र भाष्यं तत्राप्रतीयमान इति,—सामान्येनावगतधर्मिणि विशेषेणाग्निमत्त्वादिना सन्दिग्धे, अग्निमत्त्वादितत्त्वावधारणं प्रत्ययः, तस्यार्थः

## वृत्तिः

क्रमप्राप्तानवयवान् लक्षयितुं विभजते—(प्रतिज्ञेति)।

अनेन विभागेन प्रतिज्ञाद्यन्यतमत्वमवयवत्वमिति लक्षणं सूचितम्।

अत्र प्रतिज्ञादीनां पञ्चानामवयवत्वकथनाद्दशावयववादो व्युदस्त इति मन्तव्यम्।

(१) स्वयमेव २।२।६ सूत्रटीकायाम्।

## न्यायभाष्यम्

जिज्ञासा। अप्रतीयमानमर्थं कस्माज्जिज्ञासते ? तं तत्त्वतो ज्ञातं हास्यामि वोपादास्य उपेक्षिष्ये वेति। ता एता(१) हानोपादानोपेक्षाबुद्धयस्तत्त्वज्ञानस्यार्थः, तदर्थमयं जिज्ञासते। सा खल्वियमसाधनमर्थस्येति। जिज्ञासाधिष्ठानं संशयश्च व्याहतधर्मोपसङ्घातात् तत्त्वज्ञाने(२) प्रत्यासन्नः, व्याहतयोर्हि धर्मयोरन्यतरत्तत्त्वं भवितुमर्हतीति। स पृथगुपदिष्टोऽप्यसाधनमर्थस्येति। प्रमातुः प्रमाणानि प्रमेयाधिगमार्थानि, सा शक्यप्राप्तिर्न साधकस्य वाक्यस्य भागेन युज्यते प्रतिज्ञादिवदिति। प्रयोजनं तत्त्वावधारणमर्थसाधकस्य वाक्यस्य फलं नैकदेश इति। संशयव्युदासः प्रतिपक्षोपवर्णनं तत्प्रतिषेधेन(१) तत्त्वज्ञानाभ्यनुज्ञानार्थम्,(२) न त्वयं साधकवाक्यैकदेश इति। प्रकरणे

## न्यायवार्त्तिकम्

दशावयवं वाक्यम्, अपरे त्र्यवयवमिति, उभयनियमज्ञापनार्थः प्रतिज्ञादीनां विभागोद्देश इति। कथं पुनर्जिज्ञासादयोऽवयवा न भवन्ति ? पराप्रतिपादकत्वात्। परप्रतिपादका ये वाक्याङ्गभूता इतरेतराप्रत्यायितेनार्थेनार्थवन्तो वाक्याङ्गतामुपयान्ति तेऽवयवाः। वाक्याङ्गत्वमवयवार्थः। किं पुनर्वाक्यम् ? यस्य प्रतिज्ञादिभिरुपकृतस्य विशेषावस्थापनमर्थः तद्वाक्यम्, वाक्यार्थं संहत्यैते पञ्च निष्पादयन्तीत्यवयवा इत्युच्यन्ते, न पुनर्जिज्ञासादयः परप्रतिपादका इत्यतो न वाक्यस्यावयवा

## न्यायवार्त्तिकतात्पर्यटीका

प्रयोजनं हानोपादानोपेक्षाबुद्धयः, अस्य प्रवर्त्तिका उत्पादिका जिज्ञासा प्रत्ययसाधनानुसरणद्वारेण प्रत्यासत्तिः संशयतत्त्वज्ञानयोर्विशेषगता, न तु स्वरूपगता, संशयानन्तरया जिज्ञासया संशयस्य व्यवधानात्। शक्यं प्रमेयं तस्मिन् प्राप्तिः शक्तता प्रमाणानां प्रमातुश्च, सा च स्वरूपसहकारिभ्यां द्वेधा, तासिमां भाष्यकारोऽनया वाचोभङ्ग्या दर्शयति—प्रमातुः प्रमाणानीति। प्रतिज्ञादिवदिति वैधर्म्यदृष्टान्तः। प्रतिपक्षोपवर्णनमिति। यदि शब्दो नित्यः स्यान्न स्यात्कृतक इति अनित्यत्वस्य नित्यत्वं प्रतिपक्षः, तस्मिन् हेत्वभाववर्णनं न चायमकृतक इति, तदुपवर्णनप्रतिषेधे सति तत्त्वज्ञानाभ्यनुज्ञानार्थम्, तत्त्वं(३) ज्ञायतेऽनेनेति तत्त्वज्ञानं प्रमाणं तदभ्यनुज्ञानार्थं संशयव्युदास(४)स्तर्कापरनामा, व्युदस्यते ह्यनेन प्रमाणाभ्यनुज्ञानद्वारेण प्रमाणेतिकर्तव्यताभूतेन संशय इति। तदेतद्भाष्यजातं प्रश्नपूर्वकं वार्तिककृद्व्याचष्टे—कथं पुनरिति। न पुनर्जिज्ञासादयः परप्रतिपादकाः शब्दादवगताः सन्तः। अथ मा भूवन् परप्रति-

## वृत्तिः

ते च यथा दर्शिता भाष्ये 'जिज्ञासा संशयः शक्यप्राप्तिः प्रयोजनं संशयव्युदासश्च' इति। एते प्रतिज्ञादिसहिता दश। व्याख्याताश्चैते तात्पर्यटीकायां प्रयोजनहानादिबुद्धयः,

(१) "तावता" इति चा०। (२) "क ज्ञाने" इति ग०। (३) क-पु०—"तत्त्वम्" इति नास्ति।
(४) भाष्यपाठव्युत्क्रमेणात्र "संशयव्युदास" इति पाठधारणं व्याख्यानावसरे अन्वयानुरोधादिति बोध्यम्।

## न्यायभाष्यम्

तु जिज्ञासादयः समर्था अवधारणीयार्थोपकारात्(३)। तत्त्वार्थसाधक(४)भावात्तु प्रतिज्ञादयः साधकवाक्यस्य भागा एकदेशा अवयवा इति ॥ ३२ ॥

## न्यायवार्त्तिकम्

इति। निश्चितत्वाच्च—निश्चितश्च साधयिता भवति। न तस्य जिज्ञासासंशयौ स्तः। प्रयोजनमपि साधनादेव गम्यते। शक्यप्राप्तिश्चेति—न ह्यशक्यमप्रयोजकं वा कश्चित् साधयतीति तस्मात् प्रयोजनशक्यप्राप्ती अपि न वाक्यावयवौ। प्रकरणे तु जिज्ञासादयः समर्था इति भाष्यम्। प्रकरणमेते उत्थापयन्तीति। न हि जिज्ञासादीनन्तरेण प्रकरणस्योत्थानमस्तीति प्रकरणोत्थापका नावयवाः(५) जिज्ञासादय इति। परप्रतिपादकत्वात्तु प्रतिज्ञादीनामयमधिकार इति ते उपदिश्यन्ते। ऽव्यवयवमपि वाक्यं यथा न भवति तथोपनयनिगमनयोरर्थान्तरभावं वर्णयन्तो वक्ष्यामः(६) ॥ ३२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

पादकाः स्वप्रतिपादका एव कस्मान्न भवन्तीत्यत आह—निश्चितत्वाच्चेति। साधनादेव गम्यते प्राप्तं च ज्ञायत इत्यर्थः। शक्यप्राप्तिश्च ज्ञायत इत्यर्थः। तत् किं सर्वथैवानङ्गं जिज्ञासादय इत्यत उक्तं भाष्यकृता प्रकरणे तु जिज्ञासादयः समर्था इति। तदनुभाष्य व्याचष्टे—प्रकरणे त्विति। प्रकरणं कथाप्रवृत्तिः, तदुत्थापका जिज्ञासादयोऽवयवा अङ्गमित्यर्थः। ते च जिज्ञासादय उत्पन्नाः प्रकरणस्योत्थापकाः स्वरूपेण, न पुनः स्वज्ञानेन, येन स्वशब्दप्रतिपाद्याः सन्तः प्रकरणेऽप्यङ्गं भवेयुः, यथा प्रतिज्ञादयः स्वज्ञानेन स्वार्थान् प्रतिपादयन्तः। तस्मात्सर्वथैव जिज्ञासादिवाचकपदप्रयोगोऽनर्थक इति भावः। अत एवाह—परप्रतिपादकत्वादिति। "तु" शब्दो जिज्ञासादिभ्यो व्यवच्छिनत्ति। ऽव्यवयवमपीत्यपिना ह्यवयवप्रतिषेधं समुच्चिनोति। उपनयनिगमनयोरित्यत्र प्रतिज्ञाया अपीति द्रष्टव्यम् ॥ ३२ ॥

## वृत्तिः

तत्प्रवर्त्तिका जिज्ञासा, तज्जनकः संशयः, शक्यप्राप्तिः प्रमाणानां ज्ञानजननसामर्थ्यम्, संशयव्युदासस्तर्कः। अयमेवार्थो निबन्धे निष्टङ्कितः।

---

(१) "तत्प्रतिषेधे" इति ग-झा०। (२) "तत्त्वाभ्यनुज्ञानार्थम्" इति फ-ख-ग-झा०। (३) ज-पु०—"अवधारणीयार्थोपकारा" इत्येवं पाठः। (४) "तत्त्वसाधक" इति ग-फ०। "अर्थ साधक" इति ज-आ०। "तव साधक" इति टि०। (५) "नावयवा" इत्यत्र "अवयवा" इति ख०। (६) १।१।३९ सूत्रवार्त्तिके।

## न्यायभाष्यम्

तेषां तु यथाविभक्तानाम्—

### ( सू )—साध्यनिर्देशः प्रतिज्ञा ॥ ३३ ॥

प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनं प्रतिज्ञा(१) साध्यनिर्देशः अनित्यः शब्द इति ॥ ३३ ॥

## न्यायवार्त्तिकम्

तेषां त्ववयवत्वेन सामान्येन संगृहीतानामितरेतरविशेषकं लक्षणमुच्यत इति । साध्यनिर्देशः प्रतिज्ञेति । तत्र—प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यस्तस्य निर्देशः—प्रतिज्ञा परिग्रहवचनम् । उदाहरणम्—अनित्यः शब्द इति ।

सिद्धत्वाद्धर्मिणो न साध्यतेति केचित्—धर्मी किल धर्मलक्षणः सिद्ध एव, सिद्धश्च साध्यो न भवति । नैष दोषः, प्रज्ञापनीयधर्मविशिष्टस्येति वचनात् । न ब्रूमो धर्मिमात्रं साध्यमपि तु प्रज्ञापनीयधर्मविशिष्टो धर्मीति । यदि प्रज्ञापनीयः ? न विशेषणम्, अथ विशेषणम् ? न प्रज्ञापनीयः, नासिद्धं विशेषणं भवतीति सिद्धेनायं विशिष्यते न साध्येनेति । सत्यमप्रज्ञातं विशेषणं न भवतीति, प्रज्ञातं त्विदमनित्यत्वं घटे शब्दस्य साध्यमिति । एवं तर्हि शब्दस्यानित्यत्वं साध्यं न शब्द इति ? शब्दस्येति विशेषणान्न दोषः—शब्दस्येति ब्रुवता नानित्यत्वमात्रं साध्यत्वेनानुज्ञायते न धर्मिमात्रम् । किं तर्हि ? धर्मिणः शब्दस्य प्रज्ञातस्यानित्यत्वस्यान्यधर्मत्वेन (२) योऽयं विशेषणविशेष्यभाव इतरेतरनियामकत्वेन नियमः स साध्यः स चोभयाश्रयो भवति । उभयाश्रयत्वे सति किमुक्तम्भवति ? धर्मी विशेषणं धर्मो वा विशेषणमिति शब्दस्यानित्यत्वमनित्यत्वस्य वा शब्द इति ? धर्मी विशिष्यत इति युक्तम्, सामान्यतोऽधिगतत्वाद्विशेषतोऽनधिगतत्वाच्च विशेषप्रतिपादकत्वाच्चानुमानस्य । न च पुनर्धर्मस्य सामान्या-

## न्यायवार्त्तिकतात्पर्यटीका

साध्य—ज्ञा (सू, ३३)॥ परिगृह्यतेऽनेनेति परिग्रहः स च वचनं चेति परिग्रहवचनम् । उदाहरणमनित्यः शब्द इति, तदाक्षिप्य वार्त्तिककारः समाधत्ते—सिद्धत्वादिति । अग्निमानेव नातद्वान् नास्याग्निनेदानीमयोगः । स च पर्वतेऽग्निमति साध्यमाने विशेषणविशेष्ययोः परस्पर-

## वृत्तिः

जिज्ञासा विप्रतिपत्तिरिति कश्चित् ।

एतेषां च न न्यायावयवत्वं न्यायाघटकत्वात्, न वा न्यायजन्यबोधानुकूलत्वेनैवावयवत्वमतिप्रसङ्गात्(१)प्रयोजनाव्याप्तेश्च ॥ ३२ ॥

---

(१) "प्रतिज्ञा" इति वि० टि० नास्ति। (२) "प्रज्ञातस्य नितान्तंस्याधर्मत्वेन" इति ख०।
(१) "बोधानुकूलत्वेनैवावयवत्वम् एकदेशस्यापि तत्त्वप्रसङ्गात्" इति आ-व० ।

## न्यायवार्त्तिकम्

धिगमोऽस्ति । न नास्ति, किमयं धर्मः शब्दस्य उतान्यस्य ? घटस्येति (१), एवं तर्हि शब्दे-ऽनित्यत्वमित्ययमर्थः साध्यः, तस्य च न कृतकत्वादियोग इति युक्तम्, प्रज्ञापनीयधर्मविशिष्टो धर्मी साध्यः तस्य निर्देशः प्रतिज्ञा ।

उभयावधारणप्राप्तावन्यतरावधारणे च दोषः, यदि साध्यनिर्देशः प्रतिज्ञेति प्रतिज्ञालक्षणं ततः पूर्वोत्तरे द्वे अवधारणे न कल्प्येते । कथम् ? साध्यनिर्देश एव प्रतिज्ञेति प्रतिज्ञाऽवधृता, न साध्यनिर्देशः, प्रतिज्ञाऽन्यथा नास्ति, साध्यनिर्देशोऽन्यथाऽप्यस्तीति प्राप्तम् । ततश्च साध्य-निर्देशो न प्रतिज्ञाऽवधृताऽतो न साध्यनिर्देशो लक्षणम्, (२) व्यतिरेकित्वादिति । अथ साध्य-निर्देशः प्रतिज्ञैवेति साध्यनिर्देशोऽवधृतः, न च प्रतिज्ञा, साध्यनिर्देशोऽन्यथा नास्ति, प्रतिज्ञा-ऽन्यथाऽप्यस्तीति(३) ? एवमपि साध्यनिर्देशो न प्रतिज्ञालक्षणम् अव्यापकत्वात् । यदपि व्यतिरेकि तदप्यलक्षणम्, यथा विषाणित्वं गोः । यदप्यव्यापकं तदप्यलक्षणं (४) यथा गन्धवत्त्वं द्रव्यस्य । अथ पूर्वोत्तरेऽवधारणे न क्रियेते, तथापि किल वाक्यमनर्थकं भवति, न चान्या गति-रस्ति, तस्मात् साध्यनिर्देशः प्रतिज्ञेति न युक्तम् ।

सर्वस्मिन् वाक्येऽवधारणमिति (५) तु न बुद्ध्यामहे—तद्यथा—गोपालकेन मार्गोऽपदिष्टे एष पन्थाः श्रुघ्नं गच्छतीति नावधारणस्य विषयं पश्यामः, अवधारणस्य तु विषयः सामान्यश्रुतौ नियमः—येन वाक्येन समानश्रुत्याऽनेकार्थो गम्यते तत्रातिप्रसक्तावतिप्रसङ्गनिराकरणार्थमवधारण-

## न्यायवार्त्तिकतात्पर्य्यटीका

संबन्धलक्षणो नियमोऽर्थात् सिध्यति, न तु साक्षादयोगव्यवच्छेद एव साध्यः, लिङ्गस्यान्या-पोहविषयत्वानभ्युपगमात् । तस्य निर्देश इति निर्दिश्यतेऽनेनेति हि प्रतिज्ञावाक्यमुच्यते ।

अन्यान्यव्यवच्छेदं वाक्यार्थं मन्वानो भदन्तः प्रतिज्ञालक्षणमतिव्याप्त्यव्याप्तिभ्यामाक्षिपति—उभयेति । उभयोरवधारणयोः प्राप्तौ संशये किमिदमवधार्यते किं चेदमिति प्रसक्तावित्यर्थः । प्रतिज्ञाऽवधृतेति, यत एवकरणं ततोऽन्यत्रावधारणमिति हि शाब्दा इति भावः । व्यतिरेकि-त्वादिति, व्यभिचारित्वादित्यर्थः । समाधत्ते—सर्वस्मिन् वाक्य इति । संसर्गो वाक्यार्थ इत्युत्सर्गः, क्वचित्पुनरन्यव्यवच्छेदोऽपीति । सामान्यश्रुतौ नियम इति । यथेन्द्रियार्थसन्नि-

## वृत्तिः

प्रतिज्ञां लक्षयति—( साध्यनिर्देश इति ) ।

साधनीयस्यार्थस्य यो निर्देशः स प्रतिज्ञा । साधनीयश्च वह्निमत्त्वादिना पर्वतादिः,

---

(१) "घटस्य" इति ख-पु० नास्ति । (२) "ततः पूर्वोत्तरे" इत्यत आरभ्य—"लक्षणम्" इत्यन्तः पाठः ख-पु० नास्ति । (३) "प्रतिज्ञाऽन्यथाप्यस्तीति" इत्यंशः ख-पु० नास्ति । (४) "तदप्यलक्षणम्" इत्यंशः क-पु० नास्ति । (५) "असाधारणम्" इति ख० ।

## न्यायवार्त्तिकम्

मिति, न पुनः साध्यनिर्देशः प्रतिज्ञेत्युक्ते क्वचित् प्रसङ्गोऽस्ति यन्निराकरणायावधारणं क्रियेत। सर्वत्र च सावधारणं कुर्वाणो लोकं बाधत इति। यत्र च विशेषणस्यावकाशस्तत्रावधारणस्यापीति नायं दोषः पूर्वोत्तरेऽवधारणे न कल्प्येते इति। ननु साध्यनिर्देशः प्रतिज्ञेत्युक्ते साध्ययोर्हेतु-दृष्टान्तयोरपि प्रसङ्गो यथा नित्यः शब्दश्चाक्षुषत्वात्, नित्यः शब्दोऽस्पर्शत्वाद् बुद्धिवच्चेति। न, सूत्रार्थापरिज्ञानात्। साध्यनिर्देशः प्रतिज्ञेति प्रज्ञापनीयधर्मविशिष्टस्य धर्मिणः परिग्रहवचनम्। न च चाक्षुषत्वं प्रज्ञापनीयधर्मविशिष्टस्य धर्मिणः परिग्रहवचनम् अपि तु धर्मनिर्देशोऽयं चाक्षुषत्वादिति। तथा बुद्धेर्नित्यत्वमपि। अथ पुनः साध्यनिर्देशग्रहणादसाध्यनिर्देशनिवृत्तिः—साध्यनिर्देशग्रहणात् किलासाध्यनिर्देशो निवर्त्यते। असाध्यं च द्वेधा सिद्धमनुपपद्यमानसाधनं च। तत्र साध्यनिर्देश इत्यनेन वचनेनोभयं निवर्त्यते सिद्धमनुपपद्यमानसाधनं च। तत्रानुपपद्यमान(१)साधनं शब्दा(२)-ऽचाक्षुषत्वं बुद्धिनित्यत्वं च। तस्मान्न तत्र प्रसङ्गः। अथ (३) पुनः कृतकत्वाद्यन्यतरपक्षसिद्धं

## न्यायवार्त्तिकतात्पर्य्यटीका

कर्मोत्पन्नमित्युक्ते ज्ञानं सुखादि च सामान्येन प्राप्तम्, तत्र ज्ञानग्रहणं न विधायकम्, प्राप्तत्वादतः सुखादिव्यवच्छेदफलं विज्ञायते, यदि त्वस्मद्दर्शनमतिक्रम्य सर्वत्रावधारणं करोति, ततोऽस्य लोकविरोध इत्याह—सर्वत्र चेति। तत् किं लोके न क्वचिदवधारणमित्यत्राह—यत्र चेति। चोदयति—ननु चेति(४)। सिद्धप्रतिक्षेपः साध्यशब्दस्यार्थ इत्यभिप्रायः। परिहरति—न, सूत्रार्थेति। सर्वसन्देहेष्विदमुपतिष्ठते व्याख्यानतोऽर्थप्रतिपत्तिरिति भावः। चोदकः स्वाभि-प्रायमुद्घाटयति—अथ पुनरिति। असाध्यनिर्देशः सिद्धनिर्देशः तस्य निवृत्तिः साध्यशब्दा-दवगम्यते, न तु प्रज्ञापनीयोऽर्थ इत्यर्थः। परिहरति—असाध्यं चेति। भवेदेतद्यदि सिद्धमात्र-मसाध्यं स्यादपि त्वनुपपद्यमानं साधनं सिद्धिर्यस्य तदप्यसाध्यम्, तथा चासिद्धस्य चाक्षुषत्वादे-र्निवृत्तिरित्यर्थः। पुनश्चोदयति—अथ पुनरिति। न कृतकत्वादि साध्यं नाप्यनुपपद्यमान-

## वृत्तिः

तथा च पक्षतावच्छेदकविशिष्टपक्षे साध्यतावच्छेदकविशिष्टवैशिष्ट्यबोधकः शब्द इत्यर्थः। निगमनवारणाय च साध्यांशे साध्यतावच्छेदकातिरिक्ताप्रकारकत्वं (५) वाच्यम्, तदर्थश्च साध्यतावच्छेदकप्रकारताविलक्षणप्रकारताशून्यत्वम्, तेन प्रमेयवतः साध्यत्वे नाप्रसिद्धिः। उदासीनवाक्यवारणाय च न्यायान्तर्गतत्वेन विशेषणीयम्। न्यायत्वं च धातुत्वादि-

(१) "तत्रानुपलभ्यमान" इति ख०। (२) "शब्दा" इति ख-पु० नास्ति। (३) "अथ" इत्यत्र "न" इति ख०। (४) वार्त्तिके "च"कारो नास्ति। (५) "-रिक्तप्रकारकत्वम्" इति व०।

## न्यायवार्त्तिकम्

साध्यतयाप्युपाददीत (१) तदा कृतकत्वादेः साध्यनिर्देशस्य प्रतिज्ञात्वं प्राप्तमिति। नैष दोषः। विकल्पानुपपत्तेः, यदि तावदेवं (२) ब्रवीति कृतकत्वं साध्यमिति ? तदा सूत्रार्थापरिज्ञानादिति परिहारः। अथ कृतकः शब्द इत्येतत् साध्यमित्येवं प्रत्यवतिष्ठते, तदाभ्युपगम एव दोषत्वेन दर्शित इति न किञ्चिद् बाध्यते। यच्चेदमुच्यते—असाध्यनिर्देशनिवृत्तिद्वारेण साध्यनिर्देशः प्रतिज्ञेत्युच्यत इति, तद्विधीयमानप्रतिषिध्यमानशब्दार्थाभ्युपगमान्नियमो न युक्तः—क्वचिद्वाक्ये विधीयमानोऽर्थोऽभिधीयते, क्वचित् प्रतिषिध्यमान इति, एकान्तवादिनस्तु दोषः, यथा (३) च न प्रतिषिध्यमान एव पदार्थो भवति तथोपरिष्टाद्वक्ष्याम इति। साध्यनिर्देश इति च प्रतिज्ञायां साध्ययोर्हेतुदृष्टान्तयोः प्रसङ्ग इति। न प्रसङ्गः, सिद्धान्तविशेषणत्वात् साध्यशब्दस्य, सिद्धान्तविशेषणोऽयं साध्यशब्दः न साध्यमात्रम्, तथा च कः प्रसङ्गो हेतुदृष्टान्तयोः, सिद्धान्तश्चानन्तरोक्त्या साध्यशब्दस्य विशेषणं भवति सिद्धान्तानन्तरमवयवाभिधानात् (४)। यद्यनन्तरोक्त्या सिद्धान्तो विशेषणं तन्निर्देशः प्रतिज्ञेति कार्यम् ? न, सर्वतन्त्रसिद्धान्तनिराकरणार्थत्वात्। यदि तन्निर्देशः प्रतिज्ञेत्युच्यते सर्वतन्त्रसिद्धान्तोऽपि प्रकृतत्वात् तच्छब्देनानुकृष्येतेति तन्निर्देशोऽपि प्रतिज्ञेति स्यात्, अतः साध्यग्रहणेन साध्यसिद्धान्तः सम्बध्यते, न सर्वतन्त्रसिद्धान्त इति सामर्थ्यात् सर्वतन्त्रसिद्धान्तनिराकरणमिति। यद्यप्ययं सामान्यशब्दः तन्निर्देशः प्रतिज्ञेति, तथापि सामर्थ्यात् सर्वतन्त्रसिद्धान्तो निराक्रियते, सर्वतन्त्रसिद्धान्तस्यासाध्यत्वात्, इतरस्य च प्रतितन्त्रादेरवस्थायां

## न्यायवार्त्तिकतात्पर्य्यटीका

साधनम्, नापि कृतकत्वादि पराङ्गत्वेनोपात्तं येमाप्रज्ञापनीयं स्यादित्यर्थः। परिहरति—नैष दोष इति। प्रज्ञापनीयेन धर्मेण धर्मिणो विशिष्टस्य परिग्रहवचनमिति सूत्रार्थः ; न पुनर्धर्ममात्रपरिग्रहवचनमिति। अभ्युपगम्य व्यवच्छेदं शब्दार्थमेतदुक्तम्, परमार्थतस्त्वनियमः क्वचित् संसर्गः क्वचिद् व्यवच्छेद इत्यत आह—यच्चेदमिति। इतोऽपि नासिद्धयोर्हेतुदृष्टान्तयोः प्रसङ्ग इत्याह—साध्यनिर्देश इति च प्रतिज्ञायामिति। प्रमाणतन्त्रः खल्वभ्युपगमः सिद्धान्तः, न च चाक्षुषत्वादिषु प्रमाणमूलता, तदभिमानोऽपि बाधकादपाकृत इति। ननु यदि सर्वतन्त्रसिद्धान्तातिरिक्तानां सिद्धान्तान्तराणां साध्यत्वं तर्हि साध्येनैव चरितार्थत्वादपार्थकं पृथगभि-

## वृत्तिः

वत्परिभाषाविशेषविषयत्वं तत्तदानुपूर्वीकपदकदम्बत्वादिकं वा, तथा च (५) न्यायान्तर्गतत्वे

---

(१) "साध्यतयाऽप्युपाददीत" इत्यत्र "साध्यतयोपनीयते" इति ख०। (२) "तावत्" इति ख०। (३) "तथा" इति ख०। (४) "सिद्धान्तोऽनन्तरमवधारितत्वात्" इति ख०। (५) "न्यायत्वं च" इत्यारभ्य "तथा च" इत्यन्तः पाठः आ-व-पु० नास्ति।

## न्यायवार्त्तिकम्

साध्यत्वादिति। उदाहरणम् ब्राह्मणान् भोजयेति अशेषब्राह्मणभोजनस्याशक्यत्वात् सामर्थ्यान्नियम इति। यदि सामर्थ्यमास्थीयते समस्तस्यानभिधानम्, तन्निर्देशः प्रतिज्ञेत्येतदपि न कर्तव्यम्, प्रतिज्ञा (१) प्रतिज्ञेति वक्तव्यम्, सामर्थ्यतो नियमो गम्यत इति। मा वोचः, किन्नो बाध्यत इति? कथं न बाध्यते, यदभ्युपगतं तन्निवर्तते तन्निर्देशः प्रतिज्ञेति। जिज्ञासादिविशेषणाद्वा न प्रसङ्गः साध्यनिर्देशः प्रतिज्ञेति। जिज्ञासादिभिः प्रकरणोत्थापनावयवैर्विशेषितमिदं वाक्यं साध्यनिर्देशः प्रतिज्ञेति। यस्मिन्नर्थे जिज्ञासादयः सोऽर्थः साध्य इति तस्य निर्देशः प्रतिज्ञेति। तथा च हेतुदृष्टान्तयोः कः प्रसङ्गः। अर्हत्यर्थे वा कृत्याभिधानम्—साध्यनिर्देशः प्रतिज्ञेत्यर्हत्यर्थे कृत्यः, साधनमर्हतीति साध्यः, तस्य निर्देशः प्रतिज्ञा। न च हेतुदृष्टान्तौ साधनार्हावतो न प्रसङ्गः।

कर्मकरणयोर्धर्मभेदाद्वा अन्यः कर्मधर्मोऽन्यश्च करणधर्म इति, "कर्तुरीप्सिततमं कर्म"ति कर्मधर्मः, साधकतमं करणमिति करणधर्मः (२)। न चेतरस्य धर्म इतरधर्मो भवितुमर्हतीति। कर्मनिर्देशश्चायं साध्यनिर्देशः प्रतिज्ञेति करणनिर्देशश्चाक्षुषत्वादिति, अतोऽपि न प्रसङ्गः। साध्यासिद्धसिद्धभेदाद्वा,—अन्यत् साध्यमन्यत् सिद्धमन्यच्चासिद्धमिति। साध्यमन्यतरपक्षसिद्धमन्यतरं प्रति कर्मतया यदुपादीयते। उभयपक्षासम्प्रतिपन्नमसिद्धम्। उभयपक्षसम्प्रतिपन्नं सिद्धमिति। तेन यथा सिद्धमित्युक्ते न साध्ये नासिद्धे च

## न्यायवार्त्तिकतात्पर्य्यटीका

धानमेतेषाम्, अत उक्तमवस्थायामिति, विमत्यवस्थायाम्, सर्वतन्त्रे तु विमतिरशक्येत्युक्तम्। परिहारान्तरमाह—जिज्ञासादीति। विभागसूत्रेण प्रकरणोत्थानहेतवो वाक्यावयवतया निराकार्यतया जिज्ञासादयो बुद्धिस्थीकृतास्तेन यत्र जिज्ञासादयः स साध्यः, न च चाक्षुषत्वादिषु प्रमाणबाधितेषु सन्त्येत इत्यर्थः। परिहारान्तरमाह—अर्हत्यर्थ इति।

अपरमपि परिहारमाह—कर्मकरणयोर्वेति। एवं तावद् व्युत्पत्त्यादिपर्यालोचनया साध्यशब्दस्य न हेतुदृष्टान्तयोः प्रसङ्ग इत्युक्तम्, संप्रति लोक एवातिस्फुटास्तिस्रो विधा अर्थानाम्, कृतमत्र सूक्ष्मानुसरणेनेत्याह—साध्याऽसिद्धसिद्धभेदादिति। अन्यतरासिद्धयोर्हेतुदृष्टान्तयोः प्रसङ्गो मा

## वृत्तिः

सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकप्रकृतसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वं तत्।

प्रतिज्ञात्वावयवत्वादिकं परिभाषाविषयत्वरूपं तत्तद्व्यक्तित्वरूपं वेत्यपि वदन्ति ॥३३॥

(१) "प्रतिज्ञा" इति ख-पु० नास्ति। (२) "साधकतमं करणमिति करणधर्मः" इति ख-पु० नास्ति।

## न्यायवार्त्तिकम्

प्रसङ्गः, तथा साध्यमित्युक्ते नासिद्धे सिद्धे च प्रसङ्गः। अथाप्रसक्तमपि देश्यते, सर्वेऽर्थाः सिद्धा अपि प्रतिज्ञात्वेन देशनीया भवन्ति। अथवा साध्यनिर्देशः प्रतिज्ञेति प्रतिज्ञाद्यवयवविषयो योऽर्थः स साध्यः—यः प्रतिज्ञादीनामवयवानां विषयो धर्मो प्रसिद्धधर्मविशिष्टः स धर्मान्तराधिकरणत्वेन साध्यते, तथा च (१) हेतुदृष्टान्तयोः कः (२) प्रसङ्गः।

न चेदयं प्रसङ्गोऽस्ति तस्मादिष्टग्रहणमनर्थकम्, साध्यनिर्देशः प्रतिज्ञेति किल साध्यस्येष्टग्रहणेनाविशेषितत्वात्। साध्ययोर्हेतुदृष्टान्तयोः प्रसङ्ग इति मन्यमानैः कैश्चिदन्यथा पक्षलक्षणानि क्रियन्ते, तद्यथा—पक्षो यः साधयितुमिष्ट इति। अत्रेष्टग्रहणं तावदनर्थकं साध्यपदेन हेतुदृष्टान्ताभासोक्तेर्निराकृतत्वात् तन्निराकरणार्थमिष्टग्रहणमित्ययुक्तम्। कर्मग्रहणाच्चावाप्तमेतदिष्टमीप्सितमिति चानर्थान्तरम्। अथाप्यनिष्टपक्षव्युदासार्थमिष्टग्रहणं क्रियते अर्थतः किलास्य नेष्टं भवति यत् स्ववचनादिना विरुध्यत इति, यथाऽवाचकाः शब्दा इति, अवाचकत्वं च शब्दानां प्रतिज्ञायते शब्दा एवार्थप्रत्यायनायोच्चार्यन्त इति व्याहतम्। अनुष्णोऽग्निरिति प्रत्यक्षविरोधः।

अश्रावणः शब्द इति प्रत्यक्षविरोधं केचिद्वर्णयन्ति। तदयुक्तम्। इन्द्रियवृत्तीनामती-

## न्यायवार्त्तिकतात्पर्य्यटीका

भूदिति कर्मतया ते उपादीयन्त इत्युक्तम्। उभयपक्षेति, पक्षशब्दो बहुवचनः, संप्रतिपन्नमुभयोर्वर्गयोरित्यर्थः। परिहारान्तरमाह—अथ वेति। अवयवानामेतत्प्रकरणम्, तेषां च प्रधानैकार्थप्रत्यायनेनैकवाक्यतामापन्नानामवयवभावः, यत्प्रत्यायनोद्देशेन ते प्रवर्त्तन्ते तत् प्रधानम्, धर्मी च सिषाधयिषितधर्मविशिष्टः, तथा न च साक्षात्तत्प्रत्यायनाय ते विभवन्तीति तदर्थं साधने व्याप्रियन्ते, तेन सिषाधयिषितधर्मविशिष्टो धर्मी तेषां प्रधानं विषयः(३), प्रधानं च प्रथमं बुद्धौ विपरिवर्त्तत इति साध्यशब्देन स एवोच्यते, न तु हेतुदृष्टान्तावप्रधाने इत्यर्थः।

तदेवमदुष्टमस्मल्लक्षणमिति यदस्मल्लक्षणमनेन दोषेण भङ्क्त्वा भदन्तेनान्यथा लक्षणं प्रणीतम्, तदेव दुष्टमित्याह—न चेदयमिति। ननु यत्र साध्यपदमस्ति भवतु तत्रेष्टग्रहणमनर्थकम्, न त्वस्मिंस्तदस्तीति कथमिष्टग्रहणमनर्थकमित्यत आह—कर्मग्रहणाच्चेति। मा भूत् साध्यपदम्, अस्ति तु पक्षपदम्, तदपि हि पच्यमानं व्यज्यमानं साध्यमेवाह—तच्च कर्म चेप्सितमिति(४), प्राप्तुमिष्टमित्यर्थः। चोदयति—अथाप्यनिष्टेति। नन्वनिष्टः पक्ष इति विप्रतिसिद्धमित्यत उक्तम् अर्थतः किलेति। वस्तुव्यवस्थापनाय प्रवृत्तस्य तादृशं नेष्टमित्यर्थः।

बौद्धपक्षमुपन्यस्यन्नेव मध्ये तदभिमतं किञ्चिन्निराकरोति—अश्रावण इति। कृतव्याख्यानमेतत्-

---

(१) "तथाच" इत्यत्र "न तथा" इति ख०। (२) "कः" इति ख-पु० नास्ति। (३) क-पु० "विशिष्टश्च धर्मो तेषां प्रधानं विषयश्च" इति पाठः। (४) वार्त्तिके "तच्च कर्म च" इतीदं नास्ति, किन्तु "एतदिष्टमीप्सितम्" इति पाठो दृश्यते।

## न्यायवार्त्तिकम्

न्द्रियत्वात्—इन्द्रियवृत्तयोऽतीन्द्रिया इदमनेनेन्द्रियेण गृह्यते नेदमनेनेति न कस्यचित् प्रत्यक्षमस्ति किन्तु तद्भावाभावानुविधानात्। रूपादिज्ञानैरिन्द्रियवृत्तयोऽनुमीयन्ते तस्मान्नेदमुदाहरणम्। उदाहरणन्त्वनुष्णोऽग्निरिति युक्तम्। आगमविरुद्धमपि वैशेषिकस्य नित्यः शब्द इति, यथा इदमपि नागमविरुद्धमिति पश्यामः। न हि वैशेषिकेण शब्दानित्यत्वमागमतः प्रतिपन्नम्, अपि त्वनुमानात् कारणतो विकारात् (१) इत्येवमादेः, एतदप्यनुमानविरुद्धमेव। अथ सूत्रकारवचनात् प्रतिपन्नम् इत्यागमविरोधः? ननु च नित्यो घट इत्ययमप्यागमविरोधः प्राप्तः, तस्माद् ब्राह्मणेन सुरा पेयेत्यागमविरोधः। प्रसिद्धिविरुद्धं तु न बुध्यामहे कोऽयं प्रसिद्धिविरोध इति? प्रसिद्धिः प्रत्यक्षादीनां प्रमाणानामन्यतमेनार्थप्रतिपत्तिः यथा अचन्द्रः शशीति। तस्मात् पूर्वप्रमाणविरोध एवान्तर्भवतीति न प्रसिद्धिविरोधाभिधाने पृथक् प्रयोजनं पश्यामः। शक्यं तु प्रतिपत्तुं सर्व एवायं प्रसिद्धिविरोध इति। एतदर्थनिराकरणार्थमिष्टग्रहणं पठन्ति।

एतच्च सर्वं न युक्तमिति पश्यामः। कथम्? स्वार्थापवादादिदोषाणां प्रतिज्ञादोषत्वेनाभ्युप-

## न्यायवार्त्तिकतात्पर्यटीका

प्रथमसूत्रे(२)। अपि त्वनुमानतः कारणतो विकारादेः, (३) न हि व्यङ्ग्यं व्यञ्जकं कारणमनुविधत्ते। नो खलु महति प्रदीपे घटो महानल्पे वाऽल्प इति, महति तु कारणे महान् शब्द इति। तस्मात्कारणतो विकारात् कार्यः शब्दो, यथा महद्भिः स्थूलपिण्डैरारब्धोऽवयवी महानिति। तदनेन प्रत्ययभेदभेदित्वं हेतुरुपलक्षितो भवति। आदिशब्देन सतः शब्दस्याभिव्यक्तौ दोषादित्येवमादयो ग्राह्याः। दोषश्च दर्भेध्मादिवदुपयुक्तानामृचां निरिष्टिकत्वेन पुनरुपयोगः, कार्यत्वे पुनरन्यत्वेन निरिष्टिकत्वमित्यर्थः। यद्यप्यागमोऽपि शब्दानित्यत्वेऽस्ति यथा 'सोमं राजानमसृजत ततस्त्रयो वेदा असृज्यन्ते'ति, तथाऽपि "नासदासीन्नो सदासीदाम्नाय एव खल्वयमग्र आसीदि"ति नित्यत्वेऽप्यागमदर्शनादनिश्चयादनुमानस्यैवात्र प्रामाण्यम्, तथा चानुमानविरोध इति। प्रसिद्धिविरोधं तु न बुध्यामहे प्रमाणविरोधाद्भेदेन। अबोधमाह—कोऽयं प्रसिद्धिविरोध इति। एकग्रन्थेनाह—प्रसिद्धिः प्रत्यक्षादीनामिति। अचन्द्रः शशीति, यदि चन्द्रे शशिशब्दवाच्यत्वं निषिध्यते, तदा लोकव्यवहारावगतान्वयव्यतिरेकप्रभवानुमानविरोधः। अथ विकल्पज्ञानगोचरत्वनिषेधः, ततो भवतः स्वसंवेदनप्रत्यक्षविरोधः अस्माकं तु मानसप्रत्यक्षविरोध इति सर्वथा न प्रमाणादन्या प्रसिद्धिरिति। तदेवं बौद्धपक्षमुपन्यस्य तदुक्तान्युदाहरणानि दूषयित्वा बौद्धपक्षमुपसंहरति—एतदर्थेति।

तदेतद्दूषयति—एतच्चेति। वस्तु हि यादृशं स्वकारणादुत्पन्नं तादृशमेव तत्, न तस्यान्यथा

---

(१) "कारणतोऽधिकारात्" इति ख०। (२) ४१ पृष्ठे—"यत् पुनर्दिङ्नागेन" इत्यादिभिः कतिपयपंक्तिभिः। (३) वार्त्तिके तु—"अपि त्वनुमानात् कारणतो विकारात्" इत्येवं पाठः।

## न्यायवार्त्तिकम्

गमात् सर्व एते स्वार्थापवादादिदोषाः प्रतिज्ञादोषत्वेन सम्भवन्ति, न पक्षदोषत्वेन। कथमिति ? अर्थस्य तादवस्थ्यात्—यथाभूतोऽर्थोऽभिधीयमानः तथाभूत एवानभिधीयमान इति। वचनमपि तद्वंवमेवेति चेत् (१) ? वचनेऽप्येते दोषा मा भूवन्। सत्यममी नार्थदोषाः, न वचनदोषाः, किन्तु पुरुषदोषाः, ये हि कर्तृदोषास्ते क्रियाद्वारेण उद्भाव्यन्ते इति क्रियायां कर्तृदोषमुपचर्य दुष्टा क्रियेत्युच्यते एवं वक्तृदोषान् वचने उपचर्य दुष्टं वचनमित्युच्यते। मुख्यतस्तु नार्थे दोषो (२) न वचन इति। अर्थस्य स्वक्रियासामर्थ्यात् सर्वोऽर्थः स्वस्यां स्वस्यां क्रियायां समर्थः स तु स्वक्रियाव्यतिरेकेण क्रियान्तरे विनियुज्यमानः कर्तुरेवाकौशलं प्रकाशयति। एवं वचनमपि स्वस्मिन्नर्थे समर्थं विषयान्तरे तु प्रयुज्यमानं वक्तुः संमोहं प्रकटयति।

प्रतिज्ञायाः पक्षविषयत्वात् प्रतिज्ञादोषाः पक्षदोषा इत्युच्यन्ते। नैतद्युक्तम्, हेत्वादिदोषाणामपि पक्षदोषत्वप्रसङ्गात्। एवं सति हेत्वादयोऽपि पक्षविषया (३) इति कृत्वा हेत्वादिदोषा अपि पक्षदोषा भवन्तु, ततश्च दूषणं पक्षदोषा इति वक्तव्यम्, न पुनर्दूषणानि न्यूनतावयवोत्तरदोषाक्षेपभावोद्भावनानीति। अथ वाच्यवाचकभावेन नियमो भविष्यतीति न साध्यसाधनभावेनेति ? नैतद् युक्तम्, प्रमाणाभावादिति साधनविषयत्वेनावतिष्ठते पक्षो वचनविषयत्वेन च,

## न्यायवार्त्तिकतात्पर्य्यटीका

भाव इति न तत्र दोषो निविशते, तद्विषयाणि पदान्यपि प्रत्येकमदुष्टान्येव, या पुनः पौरुषेयी दृष्टमन्यत्रार्थमन्यत्र समारोप्य भ्रान्त्या वा परविप्रलम्भाय वा प्रतिज्ञादिरूपेण वाक्यक्रिया, सा स्ववचनविरोधादिशालिनी दुष्टा, तद्द्वारेण पुरुषो निगृह्यते नार्थो न पदानीति। स्वार्थापवादः स्ववचनविरोधः कर्तृदोषो भ्रमो वा विप्रलम्भो वा क्रियायामुपचर्यते। न च क्रियाया भ्रमो वा विप्रलम्भो वा, तयोरभिप्रायभेदतया पुरुषधर्मत्वात् क्रियाया वस्तुवाधनात् पुरुषाभिप्रायावगतिरिति क्रियाद्वारेणेत्युक्तम्।

चोदयति—प्रतिज्ञाया इति। तदेतदतिप्रसङ्गेन दूषयति—नैतद् युक्तं हेत्वादीति। न पुनर्दूषणानि न्यूनतावयवोत्तर(४)दोषाक्षेपभावोद्भावनानीति त्रैरूप्यसंपन्नो हेतुः पूर्णः, स त्रिषु रूपेष्वन्यतमेन रूपेण रहितो न्यूनोऽसिद्धो वा विरुद्धोऽनैकान्तिको वा भवतीति सोऽयं न्यूनतादोषो हेतोः। अवयवदोषश्च प्रतिज्ञादोषः स्ववचनविरोधादिः, हेतुदोषोऽसिद्धत्वादिः, एवमुदाहरणदोषः साध्याविकलत्वादिः, उत्तरदोषो जातिः प्राप्त्यप्राप्तिसमादिः, तस्याक्षेप उपादानं स्वीकार इति यावत्। भावोऽप्रतिभादिः, स हि

(१) "चेत्" इति ख-पु० नास्ति। (२) "वस्तुतस्तु पक्षदोषो नार्थे" इति ख०। (३) "पक्षविशेषा" इति ख०। (४) आदर्शस्थः "न्यूनतावयवान्तर" इत्येवं पाठः प्रामादिकः, उपजीव्ये वार्त्तिके तादृक्पाठाभावात्, तात्पर्यं च द्विपंक्त्यनन्तरम् "उत्तरदोषो जातिः" इत्येवं व्याख्यानग्रन्थेन स्फुटमेव प्रकृतपाठस्य प्रतिपादनात्।

## न्यायवार्त्तिकम्

तत्र वाच्यवाचकभावनियमाद्वचनदोषाः पक्षे भवन्तु, मा भूवन् साध्यसाधकभावात्। साधनदोषाः पक्षदोषा इति न प्रमाणमस्ति। वचनदोषाश्च पक्ष उपचर्यन्ते। न हि सम्भवे सत्युपचारो लभ्यते। तद्यथा मञ्चाः क्रोशन्तीति क्रोशनक्रियाया मञ्चेऽसम्भवात् लौकिकप्रयुक्तवाक्यान्वाख्यानं (१) कुर्वता मञ्चस्थाः पुरुषा इति स्थानिषु पुरुषेषु मञ्चशब्दमारोप्य प्रमाणासम्भवेनोपचारः क्रियते मञ्चाः क्रोशन्तीति। न पुनः प्रतिज्ञादिदोषाः प्रतिज्ञायां न सम्भवन्ति यतस्तत्रासम्भवन्तोऽवश्यमन्वाख्येयतया व्यवस्थिताः पक्षे उपचर्येरन्निति। आकस्मिकं च मुख्यार्थव्यतिक्रमं कुर्वाणेन यदुक्तं नैयायिकहेतुप्रतिषेधेनाऽऽकस्मिको मुख्यार्थव्यतिक्रमो लभ्यते इति, तद्व्याहन्येत। अर्थेष्टग्रहणेन लौकिकोऽर्थोऽभिधीयते इष्टमभिप्रेतमिष्टमपि मे मतमिति। अयमप्यर्थः साधनादेव गम्यते न हि कश्चिदनिष्टं साधयति। योऽप्यनिष्टभयात् साधयति तस्याप्यनिष्टनिवृत्तिरिष्टेति नानिष्टं साधयति तस्मादिष्टग्रहणमनर्थकम्। एवं विचारणायामिष्टोऽर्थः पक्ष इत्यत्रापीष्टग्रहणमनर्थकम्। का चेयं विचारणा? यदि साधनदूषणप्रयोगः, तत्रानेकार्थसन्निपाते न ज्ञायते कथमिष्टमिति? किं साध्यत्वेन साधनत्वेन दूषणत्वेन दूष्यत्वेन वेति। अथ संशयो विचारणा? तद्यथा आत्मनोऽस्तित्वनास्तित्वविचारणायामिति, आत्मनोऽस्तित्व-

## न्यायवार्त्तिकतात्पर्य्यटीका

वादिनो वा प्रतिवादिनो वाऽभिप्रायः, तस्योद्भावनानि दूषणानीति। न हि संभवे सत्युपचार इति। प्रतिज्ञागता हि दोषा यदि तद्गतत्वेनोद्भाव्यमाना न वादिनो निग्रहमापादयेयुः, ततस्तत्र निष्प्रयोजनत्वेनासंभवात् पक्ष एव उपचर्येरन्, पारयन्ति तु प्रतिज्ञागतानि दूषणानि निग्रहीतुं वादिनमिति। सोऽयं प्रतिज्ञादोषाणां प्रतिज्ञायां संभव इति। कस्मात् पुनर्मञ्चस्था इत्येव न प्रयुज्यत इत्यत उक्तं लौकिकप्रयुक्तवाक्यार्थान्वाख्यानम्(२), नानाद्धि लोकप्रयोगो नियोज्यः पर्यनुयोज्यो वेत्यर्थः। स्यादेतत्, इष्टग्रहणमनक्षरारूढमप्यभिप्रायव्याप्तं साध्यं यथा स्यादित्येवमर्थं यथा परार्थाश्चक्षुरादय इति। अत्र हि परार्थमात्रमक्षरारूढम्, न च तन्मात्रं साध्यम् अपि त्वात्मपारार्थ्यं तच्च नोच्चारयति मा भूदनन्वयो हेतुः संघातत्वादिति तस्मात्तदवरोधायेष्टग्रहणमित्याह—अथेष्टग्रहणेनेति। परिहरति—अयमप्यर्थः साधनादेव गम्यते। अयमभिसन्धिः वचनलिङ्गा हि वक्तुरभिप्राया भवन्ति, यत्परं च वचनं स वचनार्थः, तात्पर्यं चास्य क्वचिद्वाच्ये क्वचिल्लक्ष्य इति सर्व एवासौ वचनार्थः। यस्तु नैवंविधः कथमसौ वाद्यभिप्रायव्याप्त इत्यवगन्तव्यम्। न च क्वचिदपि पक्षः प्रतिज्ञापदवाच्यस्तस्य वाक्यार्थत्वेन लक्ष्यत्वादेवेति। अनिष्टनिवृत्तिरिष्टेति। तत्साधनमनिष्यमाणमपि तदानीमिष्टमेव, अन्यथा तत्र प्रयत्नानुत्पत्तेरिच्छापूर्वकत्वात्तस्येति। अथ संशयो विचारणेति। ततश्च संशयविषय-

(१) "लौकिकवाक्याख्यानम्" इति ख०। (२) "वाक्यान्वाख्यानम्" इति वार्त्तिके।

## न्यायवार्त्तिकम्

नास्तित्वसंशय इति यावदुक्तं भवति तावदिदमुक्तं भवति आत्मनोऽस्तित्वनास्तित्व-विचारणायामिति संशयो विचारणापदस्य नार्थः न विचारणा संशयपदस्य। विचारणा हि नाम संशयोत्तरकालभाविनी साधनदूषणप्रयोगरूपा अन्यतराधिकरणनिर्णयावसाना, सा न संशय इति। संशयः पुनरनवधारणात्मकः प्रत्यय इति। न च वादे संशयो भवति, तयोर्निश्चितत्वात्, निश्चितौ हि वादं(१) कुरुत इति। एतेन "साध्यत्वेनेप्सितः पक्ष" इति प्रत्युक्तम्। ईप्सित-ग्रहणस्यानिष्टनिराकरणार्थत्वात् 'विरुद्धार्थानिराकृत" इति न वक्तव्यम्। पक्षो यः साधयितुमिष्ट इत्यत्रेष्टग्रहणेनानिष्टपक्षनिराकरणमितीहापीप्सितग्रहणादनिष्टपक्षनिरास इत्युत्तरकारिकार्द्धं न कर्तव्यं(२) विरुद्धार्थानिराकृत इति। अथ विरुद्धार्थानिराकृत इत्यनेनानिष्टाः पक्षदोषा निरा-क्रियन्त ? ईप्सितग्रहणं तर्हि व्यर्थम्। अथोभयमीप्सितग्रहणं विरुद्धार्थानिराकृत इति च पक्षदोषाणां निराकर्तुं, तथाऽपि(३)पक्षो यः साधयितुमिष्ट इत्यत्रापि विरुद्धार्थानिराकृत इति कर्त्तव्यम्। सर्वथैते पक्षलक्षणे विचार्यमाणे एकस्य न्यूनत्वमेकस्याधिक्यं ख्यापयत इति। स्वयं साध्यत्वे-नेप्सित इति च स्वयंग्रहणं न कर्त्तव्यम्। किं कारणम् ? कर्मणः कर्त्रपेक्षत्वात्, यथा कर्त्ता वृक्षं छिनत्तीत्युक्ते स्वयमिति गम्यते न ह्यन्यस्य च्छेद्यमन्यश्छिनत्ति। एवं यस्य साध्यं स एव साधयितेति स्वयमिति गम्यते। सोऽयं परस्याक्षराधिक्यदोषानविविच्य स्ववचनप्रयोगेषु संमूढ इति। यदपि वादविधानटीकायां साधयतीति शब्दस्य स्वयं परेण च तुल्यत्वात् स्वयमिति विशेषणम्, साधयतीति किलायं शब्दः प्रयोज्ये प्रयोक्तरि च तुल्यरूपो भवतीति, सत्यम्, तुल्यरूप एष शब्दो न पुनः साधारणप्रयोगे प्रयोजनं पश्यामः। अत एवं वक्तव्यम्—पक्षो यः साधयितु-मिष्ट इति। तत्त्वभाक्तयोश्च तत्त्वसम्प्रतिपत्तेः प्रयोक्तर्यसम्प्रतिपत्तेः, यद्यप्ययं तुल्यरूपः शब्द-

## न्यायवार्त्तिकतात्पर्य्यटीका

इष्यमाणो जिज्ञास्यमानश्च साध्य एव भवति, न साधनादिरित्यर्थः। स्थानान्तरीयं च भदन्तस्य लक्षणम्—

"साध्यत्वेनेप्सितः पक्षो विरुद्धार्थानिराकृतः"

इति दूषयति एतेनेति। अत्रापि साध्यपदादूर्द्धं वृथाऽक्षरचतुष्टयमिति। तथा "पक्षो यः साधयितुमिष्ट" इत्यत्रापि च सुबन्धुलक्षणे विरुद्धार्थानिराकृतग्रहणं कर्त्तव्यम्। एतदुक्तं भवति —न केवलमस्माकमेतद्विरुद्धार्थानिराकृतपदमनर्थकं प्रतिभाति, समानतीर्थानामपि तथा विभाति, यतस्तैर्नोपात्तमिति। अत एवं वक्तव्यं पक्षो यः साधयितुमिष्ट इति। यद्यप्यत्रापि प्रयोज्य-

(१) "विवादं" इति ख। (२) "कारिकार्द्धं न वक्तव्य" इति ख। (३) "तथापि" इत्यत्र "तं वा" इति ख।

## न्यायवार्त्तिकम्

स्तथापि प्रयोज्य एव सम्भवति साधयतीति, न प्रयोक्तरि, भाक्तत्वात्, प्रयोज्ये चाञ्जसत्वात्। तुमुनश्च समानकर्तृकेषु नियमात्, साधयितुमिति तुमुनः प्रयोगोऽयम्, स चाऽयं समानकर्तृकेष्वेव दृष्टः, तद्यथा स्नातुं गच्छामीति। न पुनरनुन्मत्त एवं ब्रूयात् स्वयं स्नातुं यामीति, तथेहापि। यद्यपि साधयतिशब्दस्तुल्यरूपस्तथापि तुमुना विशेषितत्वात् प्रयोक्तर्यनतिप्रसङ्गः। यदपि स्वयं शब्देन शास्त्रानपेक्षमभ्युपगमं दर्शयतीति, अत्रोक्तम्। किमुक्तम्? पराज्ञानस्यायुक्तत्वादित्येवमादि। किं पुनः शास्त्रं यदनपेक्षमभ्युपगमं दर्शयति? ननु शास्त्रं प्रत्यक्षागमाभ्यामविरुद्धम्, आगमस्तदनपेक्षमभ्युपगमं दर्शयतीति ब्रुवताऽप्रमाणक(१)मर्थमभ्युपैतीत्युक्तम्। यश्चाप्रमाणकोऽभ्युपगमो नासावभ्युपगन्तुं स्वस्थात्मना युक्तः, नापि प्रतिपादयितुं युक्त इति। यद्यपि वादविधौ साध्याभिधानं प्रतिज्ञेति प्रतिज्ञालक्षणमुक्तं तदप्युभयथा दोषान्न युक्तम्। कथमिति? यदि तावत् पूर्वप्रकृतपक्षमपेक्षमाणेनेदमुच्यते साध्याभिधानं प्रतिज्ञेति, तदा साध्यग्रहणानर्थक्यम्। प्रकृतः पक्षस्तच्छब्देनाभिसम्भन्त्स्यत इति तदभिधानं प्रतिज्ञेति वक्तव्यम्। अथ पक्षानपेक्षं स्वतन्त्रमेतल्लक्षणम्, तथापि यो नैयायिकप्रतिज्ञायां दोष उक्तः स इह प्रसक्तः, यस्तु तत्रभवता परीहारः क्रियते, ममापि स एव परीहारो भविष्यतीति न वक्तव्यम्। मयानभ्युपगमात्

## न्यायवार्त्तिकतात्पर्य्यटीका

प्रयोजकव्यापारयोः 'साधयितुमि'ति समानं तथाऽपि तुमुना य एव साधयिता वादी स एवैषितेत्युक्तं भवति। न पुनर्वादिनो नियोक्ता साधयिता वादी चैषितेति। एषितृत्वं च वादिनो ध्रुवं कृत्वैतदुच्यते, यदा पुनरेषितृत्वमपि प्रयोजके संचार्यते तदा स्वयंग्रहणेनाप्यप्रतीकार इत्यभिप्रायः। तत्त्वभाक्तयोश्चेति। सिद्धः साध्यस्य प्रयोजकः कर्ता, स हि सिध्यन्तं साध्यं साधयति वादी, तस्मिन्नियं साधना समवेता। यस्तु तस्यापि प्रयोजकस्तृतीयस्थानपतितो न तस्मिन् साधना समवैतीति। यः कारयति स करोत्येवेति कथञ्चिदस्य भक्त्या कर्तृत्वं तच्चायुक्तं सति मुख्ये कर्त्तरीत्यभिप्रायः। आञ्जस्यं मुख्यत्वं पूर्वाभिप्रायस्थितमुद्घाटयति—तुमुनश्चेति। अत्रोक्तं भाष्यकारीयाभ्युपगमसिद्धान्तनिराकरणावसरेऽप्रमाणकमर्थमिति। यस्तावच्छास्त्राविरुद्धोऽर्थः प्रमाणसिद्धः स शास्त्रीय एव, शास्त्राभ्युपेतप्रमाणसिद्धत्वात्, तं व्युत्पादयन् न शास्त्रं बाधते। यस्तु प्रमाणीकृतवैशेषिकतन्त्रः शब्दनित्यत्वं साधयति सोऽनवधेयवचनः न हेत्वभिधानं यावत् परिषत्प्रतिवादिभ्यां नीयते, अपि तु प्रतिज्ञोच्चारणानन्तरमेव निगृह्यते। यस्तु वैशेषिकतन्त्राध्ययनमात्राद्वैशेषिकत्वमात्मनो दर्शयित्वा शब्दनित्यतां प्रतिजानीते नासौ प्रमाणीकृतवैशेषिकतन्त्र इति न निगृह्यते। यश्चाप्रमाणकोऽभ्युपगम इति। अभ्युपगम्यत इत्यभ्युपगमः, तदभिधानं प्रतिज्ञेति

(१) "अप्रमाणक" इति ख।

## (सू)—उदाहरणसाधर्म्यात्साध्यसाधनं हेतुः ॥ ३४ ॥

### न्यायभाष्यम्

उदाहरणेन सामान्यात् साध्यस्य धर्मस्य साधनं प्रज्ञापनं हेतुः, (१) साध्ये

### न्यायवार्त्तिकम्

भवता चाभ्युपगतत्वात्, यथा नाम कश्चित्परं ब्रूयात् माता तव बन्धकी स्त्रीत्वादिति स तस्योत्तरं ब्रूयात्। न बन्धकीत्वे स्त्रीत्वं हेतुः, किन्तु स्वपुरुषव्यतिरेकेण पुरुषान्तरसम्बन्ध इति। स्त्रीत्वाद्ध बन्धकीत्वं ब्रुवाणस्य मातुर्बन्धकीत्वमपरिहार्यम्। अथ परपुरुषसम्बन्धं हेतुमभ्युपेयात् स्त्रीत्वाद्ध बन्धकीत्वं व्याहतमिति, तथा भवतोऽपि व्याघातः साध्ययोर्हेतुदृष्टान्तयोः निर्देशं प्रतिज्ञा प्राप्नोतीति, तस्मादपेतसर्वदोषमिदं वाक्यं साध्यनिर्देशः प्रतिज्ञेति ॥ ३३ ॥

हेतोरवसरप्राप्तस्य लक्षणापदेशद्वारेणोदाहरणसाधर्म्यादिति सूत्रम्। उदाहरणेन साधर्म्य-

### न्यायवार्त्तिकतात्पर्य्यटीका

वक्तव्यमिति। साध्यग्रहणात्तद्ग्रहणस्य लाघवादित्यर्थः। यस्तु तत्रभवता नैयायिकेनेति। प्रकृतमुपसंहरति—तस्मादपेतेति ॥ ३३ ॥

अवान्तरसंगतिं प्रदर्शयन् प्रतिज्ञावचनस्य साधनाङ्गत्वमपि दर्शयति—हेतोरवसरप्राप्तस्येति। प्रतिज्ञानन्तरं हेतुवचनस्यावसरः। तथा हि परप्रत्ययनाय वचनमुच्चारयन्ति प्रेक्षावन्तः, तदेव च परे बोधयितव्या यद्‌ बुभुत्सन्ते; तथा सत्यनेनापेक्षिताभिधानात् परो बोधितो भवति। नो खल्वाम्रान् पृष्टः कोविदारानाचक्षाणः प्रष्टुरवधेयवचनो भवति। अनवधेयवचनस्य कथं प्रतिपादको नाम। यथा च माठर समिधमाहरेति गुरुणा प्रेषित एषोऽहमाहरामीत्यनुक्त्वा तदर्थं यदाऽयं गृहं प्रविशति तदाऽस्मै कुप्यति गुरुः—आः शिष्यापसद छान्दसवत्तर (?) माठर मामवधीरयसीति ब्रुवाणः। एवमनित्यं शब्दं बुभुत्समानायाऽनित्यः शब्द इत्यनुक्त्वा यदेव किंचिदुच्यते कृतकत्वादिति वा यत्कृतकं तदनित्यमिति वा कृतकश्च शब्द इति वा तत्सर्वमस्यानपेक्षितमापाततोऽसंबद्धाभिधानम्, तथा चानवहितो न बोद्धुमर्हतीति। यत्कृतकं तत्सर्वमनित्यम्, यथा घटः, कृतकश्च शब्दः, इति वचनमर्थसामर्थ्येनैवापेक्षितशब्दानित्यत्वनिश्चायकमित्यवधानमत्रेति चेन्न, परस्पराश्रयत्वप्रसङ्गात्। अवधाने सत्यतोऽर्थनिश्चयस्तस्माच्चावधानमिति। न च परिषत्प्रतिवादिनौ प्रमाणीकृतवादिनौ यदेतद्वचनमनुसन्धाय प्रयतिष्येते, तथा च सति न हेत्वाद्यपेक्षेताम्, तद्वचनादेव तदर्थनिश्चयात्। अनित्यः शब्द इति त्वपेक्षित उक्ते कुत इत्यपेक्षायां कृतकत्वादिति हेतुरुपतिष्ठते। सोऽयं पञ्चावयवप्रयोगे च तल्लक्षणे च प्रतिज्ञानन्तरकाल एवावसरो हेतोः, तदेवं हेतोरवसरप्राप्तस्य सामान्यलक्षणापदेशद्वारेण तद्विशेषलक्षणम्—

उदा—तुः (सू० ३४)॥ श्रुत्यर्थाभ्यामुभयलक्षणसूचनात्सूत्रम्। अत्र च हेतुरिति लक्ष्य-

(१) "प्रज्ञापनहेतुः" इति ख्या।

## न्यायभाष्यम्

प्रतिसन्धाय धर्म(१)मुदाहरणे च प्रतिसन्धाय तस्य साधनतावचनं हेतुः उत्पत्ति-

## न्यायवार्त्तिकम्

मुदाहरणसाधर्म्यम्। किं पुनरुदाहरणम्? वक्ष्यमाणकम्, तेन साधर्म्यं समानधर्मता, यो धर्मः साध्ये भवति तथाभूत एवोदाहरणेऽपीति, न पुनः स एव, अन्यधर्मस्यान्यत्रावृत्तेः, न ह्यन्यस्य धर्मोऽन्यत्र वर्तते, किन्तु तत्तुल्यः स एवेत्युच्यते(२) इति।

यदि पुनः साधर्म्यं हेतुरित्येतावन्मात्रमुच्येत भवत्येवं विवक्षितार्थसिद्धिः, अनिष्टप्रतिषेधस्तु

## न्यायवार्त्तिकतात्पर्य्यटीका

निर्देशः। स च विभागोद्देशे वाक्यावयव इति वचनरूपः। तस्य सामान्यलक्षणं साध्यसाधनं साध्यतेऽनेनेति व्युत्पत्त्या यद्यपि पारार्थ्यापन्नं कृतकत्वादिकमर्थमाह, तथाऽपि तस्य वचनात्मकहेतुसामानाधिकरण्यानुपपत्तेर्विपर्यये कृतकत्वादित्यादिकं वचनमुपलक्षयति। यदि च वचनं हेतुरित्युच्येत तत्साध्येन समभिव्याहृतं प्रतिज्ञा स्यात्। अथ वचनमित्येतावदुच्येत तदाऽतिव्याप्तिः स्यात्। उपचारे तु न क्वचित्प्रसङ्गः। उपनयादपि साधनं न पराङ्गतया गम्यते, किन्तु प्रातिपदिकार्थप्रधानतया स्वनिष्ठमिति न तत्रापि प्रसङ्गः। हेत्वाभासाश्च न साधनमिति साधनपदेनैव निराकृताः। न्यायवाक्यावयवत्वेन च नान्यशब्दे प्रसङ्गः। तदेवं समानासमानजातीयव्यवच्छेदकत्वं सिद्धं सामान्यलक्षणस्य। इदं चार्थम्, श्रौतं तु विशेषलक्षणम्। हेतुरिति यद्यपि सामान्यपदम्, तथाऽपि प्रकरणादन्वयव्यतिरेकिहेतुपरं द्रष्टव्यम्। तेन हेतुरिति लक्ष्यनिर्देशः, परिशिष्टं तु लक्षणम्, तदेतद्भाष्यकृद्व्याचष्टे—उदाहरणेनेति। साधर्म्यपदव्याख्यानं सामान्यादिति। साध्यसाधनपदव्याख्यानं साध्यस्य धर्मस्येति। साध्यस्येति धर्मिमात्रे बुद्धिर्मा भूदत उक्तं धर्मस्येति। धर्मसहितस्य धर्मिण इत्यर्थः। तदेव स्फुटयति—साध्ये प्रतिसन्धायेति। उदाहरणे साधर्म्यात्साध्यस्येत्यनेनान्वयपक्षधर्मत्वे अन्वयव्यतिरेकपक्षधर्मत्वानि च दर्शितानि। साध्यसाधनमित्यत्र च साध्यग्रहणेनाबाधितविषयत्वासत्प्रतिपक्षत्वे सूचिते, तद्विपरीतस्य साधनानर्हत्वादिति। तदेतद्वार्त्तिककारो व्याचष्टे—उदाहरणेनेति। यो धर्मो धूमादिः साध्ये भवति, स तथाभूत एवोदाहरणेऽपीति उदाह्रियत इत्युदाहरणं दृष्टान्तधर्मी तस्मिन्, न पुनः स एव, कुतः? अन्यधर्मस्येति। यदि तर्हि नान्यस्य धर्मोऽन्यत्र वर्त्तते, कथं तर्हि समानता, सा हि तत्त्वान्यत्वविरोधिनीत्यत आह—किं तु तत्तुल्यः स एवोच्यते, यथा तानेव शालीन् भुञ्ज्महे तानेव तित्तिरीनिति। तदनेन "सामान्यादि"ति भाष्यं व्याख्यातम्।

उदाहरणग्रहणप्रयोजनमाह—यदि पुनरिति। साधर्म्यमात्रं हि विरुद्धे चासाधारणे सव्यभि-

(१) "धर्मम्" इत्यत्र "धर्मान्" इति वि० टि०। (२) तात्पर्य्य—"स एवोच्यते" इति।

## न्यायवार्त्तिकम्

न स्यात्, साधर्म्यमात्रं हेतुरित्यतोऽनिष्टप्रतिषेधार्थमुदाहरणसाधर्म्य(१)ग्रहणम्। उदाहरणसाधर्म्यग्रहणादनुदाहरणसाधर्म्यमर्थान्निराकृतं भवति। अवधारणेन वा निराक्रियते उदाहरणेनैव साधर्म्यं न पुनरनुदाहरणेनापि साधर्म्यमेव न(२) पुनर्वैधर्म्यमपीति। कस्य पुनरुदाहरणेन साधर्म्यम्? कस्यान्यस्य पुनः स्यात्, साध्यस्य, प्रकृतत्वात् प्रत्यासत्तेश्च,—प्रकृतं प्रत्यासन्नं च साध्यं तस्मादुदाहरणसाधर्म्यं साध्यस्य। अत्रापि च साध्येन साधर्म्यमिति साधर्म्यमेवेत्यवधार्यते। किं पुनरनेनावधारणेन लभ्यते? साध्यैकदेशवृत्तिरहेतुरिति लभ्यते। सोऽयं हेतुः साध्योदाहरणाभ्यां प्रतिसंहितः। किं पुनरस्य प्रतिसन्धानम्? साध्ये व्यापकत्वम्, उदाहरणे चासम्भवः। एवं द्विलक्षणस्त्रिलक्षणश्च हेतुर्लभ्यते उदाहरणेनैव साधर्म्यमित्येवं ब्रुवताऽनभ्युपगतविपक्षस्याप्युदाहरणेनैव साधर्म्यमिति द्विलक्षणोऽपि हेतुर्भवतीत्युक्तम्। यदा पुनर्विपक्षमभ्युपैति तदाप्युदाहरणेनैव साधर्म्यं(३) नानुदाहरणेनेति त्रिलक्षणो हेतुरित्युक्तं भवति। तदेवं द्वावप्यन्वयव्यतिरेकिणौ यथा वैशेषिकस्यानित्यः शब्दः कृतकत्वात् सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षविषयत्वाद्वेति(४)। द्वावन्वयिनौ यथा सर्वानित्यतावादिनः अनित्यः शब्दः प्रमेयत्वात् अमूर्तत्वाच्च। तदेवमन्वयव्यतिरेकिभेदवानन्वयभेदवांश्चतुःप्रकारो हेतुरित्युक्तं भवति। तदेवं हेतुस्वरूपावधारणाद्धेत्वाभासा निराकृता भवन्ति। तत्रोदाहरणेनैव साधर्म्यमित्यनेन विपर्ययहेतोरनैकान्तिकस्य च निराकरणम्। साधर्म्यमेवोदाहरणेनेत्यनेनावधारणेन साध्यावृत्तिः साध्यैकदेशवृत्तिश्च निराकृत इति। तत्र तावद्विपर्ययहेतुरश्वो विषाणित्वाद् गौर्विषाणित्वादित्यनैकान्तिकः, साध्यावृत्तिश्चाक्षुषत्वादनित्यः शब्द इति। साध्यैकदेशवृत्तिरनित्याः परमाणवो गन्धवत्त्वादिति। स्वरूपतस्तर्ह्यनैकान्तिकादि ग्रहणं न कर्त्तव्यम्। यद्यनेन

## न्यायवार्त्तिकतात्पर्य्यटीका

चारे चास्ति, तेषामपि वचनं हेतुः स्यात्, तेषामपि यथास्वं साधारणत्वादित्यनिष्टमित्यर्थः। ननु तथाऽपि सव्यभिचारेऽप्युदाहरणसाधर्म्यमिति कथं निवर्त्यत इत्यत आह—उदाहरणेति। विशिष्टविधानस्य शेषनिषेधोऽर्थसिद्ध इत्यर्थः। पक्षान्तरमाह—अवधारणेन वेति। साधर्म्यादित्यतो विशेषेण सर्वसाधर्म्यप्राप्तावुदाहरणसाधर्म्यमपि प्राप्तमेवेति विधानानर्थक्यं परिसंख्यायकं सदवधारणार्थमेव भवति, तदवद्योतनाय च एवकार इत्यर्थः। साधर्म्यमेवेत्यत्र साध्यपदं योजनीयम्, तेन साध्यैकदेशासिद्धमपाकरिष्यति। पृच्छति—कस्य पुनरिति। उत्तरम्—कस्यान्यस्येति। अत्रैव हेतुद्वयमाह—प्रकृतत्वात् प्रत्यासत्तेश्च। साध्यं खल्वत्र प्रकृतं प्रधानम्, तदुद्देशेनावयवानां प्रवृत्तेः, साध्यसाधनमिति च पदेन सन्निधापितमिति तदेव द्वितीयमवधारणं स्फुटीकरोति—अत्रापि चेति। साध्ये प्रतिसंधायेति भाष्यार्थमाह—साध्योदाहरणाभ्यामिति। द्वाविति। सपक्षव्यापकाव्यापकावित्यर्थः। अनैकान्तिकस्य चेति। साधारणस्य वा असाधारणस्य

(१) "साधर्म्य" इति ख-पु० नास्ति। (२) "न" इति ख-पु० नास्ति। (३) "साधर्म्यात्" इति ख।
(४) "प्रत्यक्षत्वाद्वेति" इति ख।

## न्यायवार्त्तिकम्

हेतुलक्षणेन एवं भाव्यमानेनार्थादनैकान्तिकहेत्वादयो निराक्रियन्ते, नन्वनैकान्तिकः सव्यभिचार इत्येवमादिसूत्रानारम्भः। नातिप्रसक्तस्य नियमार्थत्वात् अनेकधा हेत्वाभासा भिन्ना इति तेषां नियमज्ञापनार्थमनैकान्तिकादिग्रहणमिति।

उदाहरणसाधर्म्याच्च किमन्यत् साध्यसाधनमित्येके। न किलोदाहरणसाधर्म्यव्यतिरेकेण साध्यसाधनमस्तीत्यत एवं सूत्रं कर्त्तव्यं "उदाहरणसाधर्म्यं हेतुरि"ति। अथ पुनः साध्यसाधन-शब्दोपादानमुदाहरणसाधर्म्यविशेषणार्थम्, एवमपि पञ्चम्यपदेशोऽनर्थक इति। न हि भवति नीलादुत्पलमिति। अन्ये तु पञ्चम्यपदेशानर्थक्यमन्यथा वर्णयन्ति। अर्थान्तरे दृष्टत्वादिहानर्थक इति। अर्थान्तरे किल पञ्चमी दृष्टा यथा ग्रामादिति। न पुनरिहोदाहरणसाधर्म्यव्यतिरेकेण

## न्यायवार्त्तिकतात्पर्य्यटीका

वेत्यर्थः। एवं भाव्यमानेनेति, परिभाव्यमानेन। नातिप्रसक्तस्येति परिसंख्यायकं हेत्वाभास-लक्षणं न विधायकमित्यर्थः।

एतत्किल हेतुलक्षणं भदन्तो दूषयांबभूव—साधनं यदि साधर्म्यं न वाक्यांशः, न ह्यर्थः पञ्चावयववाक्यस्यावयवः। न पञ्चमी, यदि साधनसाधर्म्ययोरत्यन्ताभेदो यदि वा सामान्यविशेष-भावेन कथंचिद्भेद उभयथाऽपि न पञ्चमी, साधनसामानाधिकरण्येन प्रथमाप्रसङ्गात्। अत्यन्ताभेदे चैकतरपदाप्रयोगात्। वाक्यं चेत्ततः पञ्चम्युपपद्यते, साधनं हि वाक्यरूपं साधर्म्यादर्थादुत्थितं यतः तद्विशेष्यं स्यात्। न हि वाक्यमेवार्थादुत्थितम्, अपि तु विवक्षाद्यपीति (१) न विशेष्यं कुतः साधनत्वादसम्भवः। अर्थसमुत्थानामपि ज्ञानविवक्षादीनामप्रसङ्गोऽसाधनत्वादिति न, तत्रापि द्वेधा दोषात्, साक्षात् साधनम्? पारंपर्येण वा? यदि पारंपर्येण वक्तृज्ञानम्, तर्हि साक्षात्साधर्म्य-समुत्थं पारंपर्येण च श्रोतुः साध्यविज्ञानसाधनं हेतुः स्यात्। अथ साक्षात्साधनम्, तर्हि श्रोतृज्ञानं पारंपर्येण साधर्म्यसमुत्थं साक्षात्साधनं हेतुः स्यात्। प्रकृते त्वन्यसम्भवः, यदि तु पञ्चावयव-वाक्यस्य प्रकृतत्वाज्ज्ञानादिव्यवच्छेदः, तथाऽप्यन्यसंभवः, उपनयस्यापि साधर्म्यसमुत्थत्वात्। स्वलक्षणेन बाधा चेत्, न, विकल्पादिसंभवात्। तस्मात् षष्ठ्यस्तु, तत्रापि विशेषणमनर्थकम्, साधर्म्यस्य हेतुरित्येतावन्मात्रं वक्तव्यमिति। तदेतद्दिङ्नागदूषणमुपन्यस्यति—उदाहरणसाधर्म्या-च्चेति। यद्यर्थात्मकं साधर्म्यमेव साधनमुच्यते तदैतद् दूषणमित्यर्थः। यदि पुनरर्थात्मकस्य साधर्म्यस्यार्थात्मकमेव साधनं सामान्यमुच्यते तत्राह—अथ पुनरिति। तदिदमुक्तं भदन्तेन—न पञ्चमी। अन्ये त्वेतदन्यथा व्याचक्षत इत्याह—अन्ये त्विति। विशेषातिरिक्तं न सामान्यं नाम किंचिदस्ति, तस्य कल्पनामात्रत्वात् भेदस्य वस्त्वधिष्ठानत्वादित्यभिप्रायः। दोषान्तर-

(१) "विपचाद्यपीति" इति ख।

## न्यायवार्त्तिकम्

साध्यस्य साधनमस्तीत्यतः पञ्चम्यपदेशोऽनर्थक इति। साध्यसाधनविशिष्टे चोदाहरणे साधर्म्य-हेतुत्वेन ब्रुवाणो नाभिधेयो हेतुरित्युक्तं भवति। तथा च साध्यनिर्देशः प्रतिज्ञेति व्याहतं भवति। न चाभिधानाभिधेयात्मकः समुदायो दृष्ट इति नैवोभयेषामवयवत्वम्। तत्र त्वेष दोषो न परिहारान्तरं प्रयोजयति, तेनैवापाकृतत्वाद् उदाहरणसाधर्म्यात् साध्यसाधनवचनं हेतुरित्येवं व्याचक्षाणेन समस्त एव दोषोऽपाकृतो भवतीति। अतो न परिहारान्तरं प्रयोजयति। साध-र्म्यस्य व्यभिचार्यव्यभिचारित्वाद् विशेषणयोगो न तद्वचनस्यापकारकत्वात्, यत्तत्प्रकारवत्तद्विशेष्यते, साधर्म्ये चैतदस्ति न च वचसीति। वचसः कारकत्वं न भवतीति न बुद्ध्यामहे यथैवार्थः प्रकारवान् तथा वचनमपीति। अर्थस्तावत् कथं प्रकारवान्? उभयथाभावात्—यस्मादयमर्थ उभयथा भवति नित्योऽनित्यः मूर्तोऽमूर्तश्च। वचनमपि तद्वदुभयथा भवतीति तुल्यं नित्यानित्यमूर्तोऽमूर्त-शब्दाभिधेयमिति। दृष्टश्च शब्दे विशेषणयोगः यथा किमयमाह गौरित्ययमाह, इतिपरतया शब्दः शब्दान्तराद् व्यवच्छिद्यते। स्वयं वचनविशेषकाणि बहूनि वाक्यानि प्रयुक्तानि। तद्यथा स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति। अथ वचनं नैवंविधमिति सिद्ध्यसिद्ध्यर्थं वचनं वाद इत्येवमादि व्याहतम्। सोऽयं सूक्ष्मेक्षिकया परस्य दोषानभिदधानो लोकादप्यपभ्रष्ट इति। यदप्यर्थान्तरे दृष्टत्वादित्यनर्थकः पञ्चम्यपदेश इति? एवं ब्रुवाणः स्वसिद्धान्तं बाधते, न हि भवन्तः सेनावनादीन्यर्थान्तरभूतानि प्रतिपद्यन्ते। अथ च पञ्चम्यपदेशो भवति वनादयं वृक्ष

## न्यायवार्त्तिकतात्पर्य्यटीका

माह—साध्यसाधनेति। यदा हि साध्यसाधनं नामोदाहरणसाधर्म्यादतिरिक्तं नास्ति, किन्तु शब्दमात्रमवशिष्यते, तदोदाहरणसाधर्म्यमनेनाभिधेयत्वेन विशेषणीयम्, तथा च साध्यनिर्देशः प्रतिज्ञेत्यनेन विरोधः, अनेन ह्यवयवः शब्दात्मकः प्रतिज्ञा लक्ष्यते, हेत्वादिसमुदायापेक्षया चावयवो भवति, न चाभिधानाभिधेयात्मकः समुदायो दृष्ट इति। तस्मात्समुदायाभावा-न्नोभयेषामवयवत्वम्, तदिदमुक्तं न वाक्यांश इति। तदेतल्लक्षणं व्याचक्षाणैरस्माभिः परिहृत-मिति न परिहारान्तरं प्रयोजयतीत्याह—तत्र त्विति। उक्तं यथा हेतुपदसन्निधौ साधनपदं हेतुपदे प्रवर्त्तते न चोपनये प्रसङ्गः, तस्य प्रातिपदिकार्थमात्रप्रधानत्वेन हेतुभावाप्रकाशकत्वात्। अत्र चोदयति—साधर्म्यस्येति, साधर्म्यस्य लिङ्गस्य कृतकत्वादित्यादिहेतुपदवाच्यस्य व्यभि-चार्यव्यभिचारित्वयोगादुदाहरणविशेषणयोगो न पुनः साध्यसाधनपदवाच्यस्य कृतकत्वादित्यादे-र्हेतुवचनस्येत्यर्थः। तदुक्तं भदन्तेन तत्रापि विशेषणमनर्थकं वचनेऽपीत्यर्थः। तदेतद्दूषयति—वचस इति। वचनमपि दर्शनभेदेनोभयथाऽपि भवति, यथा मीमांसकानां नित्यं वचनम्, वैशेषिकाणामनित्यमिति, केषांचिदमूर्त्तः शब्दः केषांचिन्मूर्त्त इति, यथाऽऽहुः—"वायुरापद्यते शब्दतामि"ति। तथा प्रातिस्विकमपि भेदं सर्वेषामेव शब्दानामितिकरणो दर्शयतीत्याह—दृष्टश्चेति।

## न्यायभाष्यम्

धर्मकत्वादिति। उत्पत्तिधर्मकमनित्यं दृष्टमिति ॥ ३४ ॥

## न्यायवार्त्तिकम्

आनीतः सेनातोऽश्व इति। दृष्टश्च तन्त्रान्तरे पञ्चम्यपदेशोऽनर्थान्तरे सन्धिविग्रहाभ्यां षाड्गुण्यं सम्पद्यते इति। अनभ्युपगतार्थान्तरविपक्षस्य च हेतुर्विपक्षाद्विशेष इति पञ्चम्या अर्थान्तरवाचकत्वं कुतः यदप्युदाहरणसाधर्म्यस्येति वक्तव्यं नोदाहरणसाधर्म्यादिति। तदपि न, विवक्षातः कारकशब्दप्रयोगात्,—यदा साधर्म्यमभिधीयमानतया विवक्षितं भवति उदाहरणसाधर्म्यस्येति युक्तम्। यदा तूदाहरणसाधर्म्यस्य निमित्तभावो वचनेऽपि विवक्षितस्तदोदाहरणसाधर्म्यादिति निमित्तपञ्चमी युक्ता। कथं पुनरुदाहरणसाधर्म्यस्य निमित्तभावः? सति भावात्, यस्मादुदाहरणसाधर्म्यं बुद्धा विवक्षाप्रयत्नवायूदीरणताल्वाद्यभिघातादयः शब्दस्य निमित्तं भवन्ति अतः पारम्पर्येणोदाहरणसाधर्म्यमपि निमित्तमिति। तस्मात् पञ्चम्यभिधानमेव ज्यायः।

उदाहरणमनित्यः शब्द उत्पत्तिधर्मकत्वात्, उत्पत्तिधर्मकमनित्यं स्थाल्यादि दृष्टमिति। किं पुनरनित्यं नाम? यस्याऽनित्यत्वं तदनित्यम्। अथानित्यत्वं किम्? उभयान्तावच्छिन्न-

## न्यायवार्त्तिकतात्पर्य्यटीका

स्ववचनविरोधमाह—स्वयमिति। अनभ्युपगतेति। अनभ्युपगतोऽर्थान्तरं विपक्षो यस्य हेतोरनित्यत्वे साध्ये कृतकत्वादेः स तथोक्तः। यदभ्युपगतं भदन्तेन तस्मात् पञ्चम्यस्त्विवति तद्दूषयति—यदपीति। विवक्षातः कारकशब्दप्रयोगादिति। कारकत्वेन संबन्धित्वमुपलक्षितं क्रियाकारकगर्भत्वात् संबन्धित्वस्य, न तु पञ्चमी वा षष्ठी वा कारकविभक्तिरिति। अत्र भाष्यकारेण शुद्धं हेतुवचनमुदाहृतम्—उत्पत्तिधर्मकत्वादिति। तस्य चोदाहरणसाधर्म्यसमुत्थत्वज्ञापनायोदाहरणमपि दर्शितमुत्पत्तिधर्मकमनित्यं दृष्टमिति।

अत्र भाष्यकारेण शुद्धं हेतुवचनमुदाहृतं तत्प्रतिज्ञापदेन पूरयित्वा वार्तिककार आह—उदाहरणमिति। अत्र पृच्छति—किं पुनरिति। सतो विनाशोऽनित्यत्वम्, तद्योगो वा, तच्चोभयमयुक्तम्, न हि सदसतोः कश्चिदस्ति संबन्धः, असमानकालत्वात्, ततश्चानित्यः शब्द इति सामानाधिकरण्यं न स्यादिति। अपि च शब्दस्य भूत्वा यदभवनम्, न तदेव पिठरस्य, न चाभवनत्वं नामास्ति सामान्यम्, येन दृष्टान्तो न साध्यविकलः स्यात्। न च सामान्यातिरिक्तं सादृश्यं वस्त्वन्तरं दृष्टमिष्टं वा, तस्मान्मृषाशेषमनित्यत्वं साध्यमिति भावः। गूढधिय उत्तरम्—यस्याऽनित्यत्वमस्ति तदनित्यम्। स्वाभिप्रायेण पृच्छति—अथेति। उत्तरवाद्यभिप्रायमुद्घाटयति—उभयान्तेति। अपरान्तेति वक्तव्ये उभयान्तग्रहणेन पूर्वान्तनिवेशनं हेतोरुत्पत्तिमत्त्वस्यात्यन्तिकीं प्रत्यासत्तिमविनाभावोपयोगिनीं दर्शयितुमिति। अवच्छेदकत्वं चोपलक्षणत्वम्

## न्यायवार्त्तिकम्

वस्तुसत्तासम्बन्धः सत्ता वा तद्विशेषगा। अथोत्पत्तिधर्मकं किम्? उत्पत्तिर्धर्मो यस्य स उत्पत्तिधर्मा, उत्पत्तिधर्मैवोत्पत्तिधर्मकः। का पुनरियमुत्पत्तिः? असद्विशेषणस्य सतोऽत्यन्तमभावभावप्रतिषेधः,—यदसद्विशेषणं सद्भवति तत्पूर्वं नासीत् पश्चाद्भवतीति गम्यते, तस्यात्यन्तमभावोऽत्यन्तञ्च भाव इति प्रतिषेधो यः स उत्पत्तिशब्दार्थः, सत्ता वैवंविशेषणा। वाक्यार्थाभ्यनुज्ञानाच्च पदार्थोऽभ्यनुज्ञातो भवति, यो वाक्यस्यार्थोऽभूत्वा भवतीति स पदस्यार्थ उत्पद्यत इति। सा उत्पत्तिर्धर्मो यस्य स भवत्युत्पत्तिधर्मक इति ॥ ३४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

न विशेषणत्वम्, तच्चापरान्तस्य भिन्नकालस्य सम्बन्धस्यापि विरोधितया बुद्धिस्थस्य सम्भवति। तथा च सैवापरान्तावच्छिन्नस्य सत्ता पिठरस्य, सैवापरान्तावच्छिन्नशब्दस्यापि। एवं सत्तासमवायोऽपि तद्विधयोः पिठरशब्दयोः समानः। विरोधिभावः पश्चाद्भावश्चाभावमात्रात् प्रध्वंसस्य विशेषः। पृच्छति—अथोत्पत्तीति। न तावदुत्पन्नस्योत्पत्तिर्धर्मः, तदाऽप्युत्पद्यत इति प्रत्ययप्रसङ्गात्। नाप्यनुत्पन्नस्य, असतो धर्मित्वायोगादिति भावः। गूढधिय उत्तरम्—उत्पत्तिरिति। उक्ताभिप्रायवान् पृच्छति—का पुनरिति। उत्तरम्—असद्विशेषणस्य सतोऽत्यन्तमभावभावप्रतिषेधः। असदिति प्रागभावमाह, विशेषणत्वं च प्रागभावस्य उपलक्षणत्वम्, तच्च भिन्नकालस्यापि बुद्धिस्थतामात्रेणोक्तम्, तेनासद्विशेषणस्य सत इत्येतावतैव पूर्वान्तपरिच्छिन्नस्य सत्तासम्बन्धः सत्ता वा तद्विशेषणोत्पत्तिर्दर्शिता। यश्चेदृशस्तस्य गगनवन्नात्यन्तमसंभवः, गगनकुसुमवद्वा नात्यन्ताभाव इति स्वरूपमुक्तमुत्पत्तिमुपलक्षयितुम्, उपलक्षणोपलक्ष्ययोश्चाभेदविवक्षया सामानाधिकरण्यम्। न चैवं लब्धोत्पत्तिनि वस्तुन्युत्पद्यत इति प्रसङ्गः, लभ्यमानोत्पत्तितदवयवेषु तदुत्पादनानुकूलव्यापारावेशलब्धपूर्वापरीभावेषु तत्प्रयोगस्य लोके दर्शनात्। तस्मात् पूर्वान्तावच्छिन्नवस्तुसत्तया तत्सम्बन्धेन वा तस्यैव वस्तुनोऽपरान्तावच्छिन्नता तत्संबन्धो वा ज्ञाप्यत इति सर्वं रमणीयम्। ननु भाष्यकृदभूत्वा भावित्वमित्यस्य वाक्यस्यार्थमुत्पत्तिं वक्ष्यति, त्वं पुनरसद्विशेषणस्य सतोऽत्यन्तमभावप्रतिषेध इत्यस्य वाक्यस्यार्थमुत्पत्तिम्, तत् कुतो न विरोध इत्यत आह—वाक्यार्थेति। य एवार्थो भाष्यकारेणोत्पत्तिशब्दार्थतयाऽभ्यनुज्ञातोऽङ्गीकृतः स एवास्माभिरपि, नात्यन्तमभावप्रतिषेधस्योत्पत्तिः, अपि त्वसद्विशेषस्य सतः सत्ता वा तत्संबन्धो वेत्युक्त(१)मित्यर्थः ॥ ३४ ॥

## वृत्तिः

क्रमप्राप्तं हेतुं लक्षयति विभजते च सूत्राभ्याम्—(उदाहरणेति, तथेति च)।

(१) अनतिपूर्वमेव वार्त्तिके "उभयान्तावच्छिन्न" इत्यादिना उक्तम्।

## न्यायभाष्यम्

किमेतावद्धेतुलक्षणमिति ? नेत्युच्यते। किं तर्हि ?

### (सू)—तथा वैधर्म्यात् ॥ ३५ ॥

उदाहरणवैधर्म्याच्च साध्यसाधनं हेतुः। कथम् ? अनित्यः शब्दः उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकं नित्यं यथा आत्मादिद्रव्यमिति ॥ ३५ ॥

## न्यायवार्त्तिकम्

किमेतावद्धेतुलक्षणमिति ? नेत्युच्यते। किं तर्हि ? तथा वैधर्म्यात्। अत्रापि उदाहरणवैधर्म्यादित्युदाहरणेनैव वैधर्म्यं नानुदाहरणेनेति, वैधर्म्यमेवोदाहरणेन, न (१)साधर्म्यमपीति। उदाहरणमनित्यः शब्दः उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यं दृष्टम् (२) आत्मादिद्रव्यमिति भाष्यम्। एतत्तु (३) न समञ्जसमिति पश्यामः प्रयोगमात्रभेदात्, प्रयोगमात्रं हि भिद्यते नार्थ इति। न च प्रयोगमात्रभेदाद्वस्त्वन्तरं भवितुमर्हतीति। उदाहरणमात्रभेदाच्च—उदाहरणमात्रं केवलं भिद्यते आत्मा घट इति। यदि चोदाहरणभेदाद्भेदो भवति "तथा वैधर्म्यादि"ति न पठितव्यम्। किं कारणम् ? उदाहरणभेदादेव भेदो गम्यते। उदाहरणसूत्रं च भेदकमस्ति "तद्विपर्ययाद्वा विपरीतमि"ति। तस्मान्नेदमुदाहरणं न्याय्यमिति।

## न्यायवार्त्तिकतात्पर्यटीका

सूत्रान्तरमवतारयति—किमेतावदिति।

तथा—त् ( सू० ३५ ) ॥ अत्र यदि वैधर्म्यादित्युच्यते ततः सकलकेसरादिमत्पदार्थपक्षीकरणेनाश्वत्वं यदा विषाणित्वेन साध्यते तस्यास्ति पक्षवैधर्म्यमिति हेतुः स्यादित्यत आह—उदाहरणेन वैधर्म्यमिति, विपक्षेणेत्यर्थः। तथाऽपि यदा शरीरमात्रं पक्षीकृत्य सात्मकत्वं साध्यते प्राणादिमत्त्वेन, तदाऽस्ति तस्योदाहरणेन वैधर्म्यमिति सोऽपि हेतुः स्यादित्यत आह—एवेति। न चैतावता सपक्षत्वप्रसङ्गः, सपक्षस्याभावात्। अवधारणस्य व्याप्त्या पक्षसत्त्वेनोपपत्तेरिति। तथाऽपि अन्वयव्यतिरेकिणो हेतोरनैकान्तिकस्य च विपक्षैकदेशव्यापिनः संग्रहः स्यात्, यथा अनित्यः शब्दः उत्पत्तिधर्मकत्वाद् अनित्यो मूर्त्तत्वादित्यत आह—वैधर्म्यमेवोदाहरणेनेति, विपक्षोदाहरणेनेत्यर्थः। भाष्यकारीयमुदाहरणं निगदेनोपन्यस्यति—अनित्यः शब्द इति। नित्यमनुत्पत्तिधर्मकं दृष्टमिति योजना। तदेतद्दूषयति—एतच्चेति। मा भूत्प्रयोगमात्रभेदाद् भेदः, उदाहरणभेदाद् भेदो भविष्यतीत्यत आह—उदाहरणमात्रभेदाच्चेति।

## वृत्तिः

अत्र साध्यसाधनं हेतुरिति सामान्यलक्षणम्। साध्यसाधनं—साध्यसिद्ध्यनुकूल-

(१) ख-पु० "न" नास्ति। (२) "दृष्टम्" इत्यत्र "यथा" इति भाष्ये। (३) "एतच्च" इति तात्पर्ये।

## न्यायवार्त्तिकम्

उदाहरणं तु नेदं निरात्मकं जीवच्छरीरं अप्राणादिमत्त्वप्रसङ्गादिति। यदुभयपक्षसम्प्रतिपन्नमप्राणादिमत् तत्सर्वं निरात्मकं दृष्टम्। न चेदमप्राणादिमद्भवति, तस्मान्नेदं निरात्मकमिति। सोऽयमवीतः परपक्षप्रतिषेधार्थं एव भवति। तावेतौ वीतावीतहेतू लक्षणाभ्यां पृथगभिहिताविति। तत्र स्वरूपेणार्थपरिच्छेदकत्वं वीतधर्मः, अवीतः पुनः परपक्षप्रतिषेधेनैव प्रवर्त्तत इति। एकस्य विधीयमानोऽर्थ इतरस्य प्रतिषिध्यमानः। कथं पुनरयमवीतोऽर्थपरिच्छेदक इति? अथ योऽभ्यनुज्ञातोऽर्थपरिच्छेदकः स कथम्? वीतो(१)ऽन्वयादिति चेत्? वीतो हेतुरन्वयेन प्रतिपादयति। अथ प्रमेयत्वं कस्मान्न हेतुः यद्यन्वयस्यैतत् सामर्थ्यम्? व्यभिचारात् प्रमेयत्वं न हेतुः? न तर्ह्यन्वयः प्रतिपादकः, अपि त्वव्यभिचारः। यदि चाव्यभिचाराद्धेतुरर्थं प्रतिपादयति तदा अदेश्यमेतत् कथमवीतः प्रतिपादक इति, अवीतस्यापि व्यतिरेकाव्यभिचारित्वात् प्रतिपादकत्वमिति। कथम्? यावदप्राणादिमत् तत् सर्वं निरात्मकं दृष्टमिति, अप्राणादिमत्त्वं च

## न्यायवार्त्तिकतात्पर्यटीका

तदेतद्भाष्यकारीयमुदाहरणं दूषयित्वा स्वकीयमुदाहरणमाह—उदाहरणं त्विति। प्राणादिना च स्वकारणं प्रयत्नाद्युपलक्षयति—यदुभयपक्षसंप्रतिपन्नं निरात्मकं तत् सर्वमप्राणादिमद् दृष्टमिति विपर्ययेण योजना। प्राणादिकारणेच्छारहितं यदित्यर्थः। तस्मान्नेदमिति। नेच्छादिसमवायिकारणरहितम्। यश्चासौ इच्छादिसमवायिकारणं पृथिव्यादिविलक्षणो द्रव्याणां नवमः, स आत्मेत्युच्यत इत्यर्थः। अन्वयिव्यतिरेकिणोस्तद्व्यतिरेकिणश्च तन्त्रान्तरसिद्धेन नाम्ना तन्त्रान्तरसिद्धान्तं दर्शयति—सोऽयमवीत इति। विविधेन प्रकारेण इतः प्राप्तो वीतः, पक्षव्यापकत्वे सति सपक्षव्याप्त्याऽव्याप्त्या च; तस्मादन्योऽवीत इति। गूढाभिसंधिः पृच्छति—कथं पुनरिति। गूढाभिसंधेरुत्तरम्—अथ योऽभ्यनुज्ञात इति। यथा वीतस्यार्थपरिच्छेदकत्वं तथैवावीतस्येत्यर्थः। प्रष्टा स्वाभिप्रायमुद्घाटयति—वीतोऽन्वयादिति। गृहीताविनाभावो हि हेतुः साध्येन तस्य परिच्छेदकः, स च दृष्टान्तधर्मिणि हेतुसाध्यधर्मयोर्दर्शने सत्यविनाभावो दृष्टो भवति। न च सात्मकत्वं क्वचिद् दृष्टं तत् कथं तेनाविनाभावदर्शनं प्राणादिमत्त्वस्य, दर्शने च नावीतः किन्तु वीत एवेत्यर्थः। उत्तरवादी प्रष्टारं पृच्छति—अथ प्रमेयत्वमिति। प्रष्टा आह—व्यभिचारादिति। उत्तरवाद्याह—न तर्ह्यन्वय इति।

## वृत्तिः

ज्ञापकत्वबोधक इत्यर्थः। तथा च साध्यतावच्छेदकावच्छिन्नसाध्यान्वितज्ञापकत्वबोधकः साध्यान्वितस्वार्थबोधकोऽवयव इति फलितार्थः।

(१) ख-पु॰ "वीत" इति नास्ति।

## न्यायवार्त्तिकम्

जीवच्छरीरान्निवर्तते, तस्मात्तदव्यभिचारि निरात्मकत्वमपि निवर्त्स्यतीति। अथ पुनरप्राणादिमत्त्वनिवृत्तिरेव प्रतिपाद्यते न पुनर्निरात्मकत्वस्य? न युक्तमेवं भवितुम्। किं कारणम्? पक्ष एवं सति व्यभिचारो दर्शितः स्यात् पक्षव्यभिचारोपदर्शने सति शक्यं वक्तुम्। अन्वयिनि तु हेतौ शब्दे नित्यत्वमस्तु सति कृतकत्व इति। तस्माद्यथान्वयिनोऽन्वयसम्बन्धाव्यभिचारः प्रतिपादकः तथा व्यतिरेकिणोऽपि व्यतिरेकाव्यभिचार इति। एतेन यथा वीत(१)हेतोरव्यभिचारिणि एकस्य धर्मस्य दर्शनादितरधर्मानुमानमेवमवीत(२)हेतावपि एकधर्मनिवृत्तिदर्शनादितरधर्मनिवृत्त्यनुमानमिति। सर्वात्मकत्वप्रसङ्ग इति चेत् न, विकल्पानुपपत्तेः।

यद्येकधर्मनिवृत्तिदर्शनादितरधर्मनिवृत्तिरनुमीयते, तन्निवृत्त्या च सात्मकत्वं सिध्यतीति मन्यसे, एवं च सर्वात्मकं शरीरं प्राप्नोति। किं कारणम्? अप्राणादिनिवृत्तेरडित्थादिनिवृत्तिप्रतिपादकत्वात्,

## न्यायवार्त्तिकतात्पर्यटीका

स एवैकग्रन्थेनाह—यदि चेति। तदेवमुत्तरवादिना स्वाभिप्राय उद्घाटिते(३) पृच्छति—कथमव्यभिचारित्वं व्यतिरेकिण इति। अव्यभिचारमाह—यावदिति। अत्रापि यावन्निरात्मकं तत्सर्वम् अप्राणादिमद्(४)दृष्टमिति व्यत्यासेन योजना, साध्यविपर्ययस्य व्याप्यत्वाद्, व्यापकनिवृत्तौ च व्याप्यं निवर्त्तते, यथा वृक्षत्वनिवृत्तौ शिंशपात्वमारादुपलभ्यमानादेकशिलामयाद्वलप्रदेशादित्यर्थः। यदि पुनरेवमुच्यते निवर्त्ततामप्राणादिमत्त्वं जीवच्छरीरात्, प्राणादिमत्त्वस्य प्रमाणत उपलब्धेः, मा निवर्त्तिष्ट नैरात्म्यम्, तस्माद्व्यभिचारादहेतुत्वमित्याशङ्कते—अथ पुनरिति। निराकरोति—न युक्तमिति। किं जीवच्छरीरे साध्ये नैरात्म्यनिश्चयाद् व्यभिचार उत तत्सन्देहात्? यदि निश्चयात्, कृतं व्यभिचारेण, बाधितविषयत्वेनैव हेतोरपाकरणात्। अथ सन्देहात्, तथा सत्यन्वयिनोऽप्यहेतुत्वे सर्वानुमानोच्छेदप्रसङ्ग इत्यर्थः। शङ्कते—सर्वात्मकत्वप्रसङ्ग इति चेत्। निराकरोति—न, विकल्पानुपपत्तेः।

शङ्कावाक्यं विभजते—यदीति। न तावदयमात्मा नाम प्रमाणेन क्वचिदुपलब्धः, यस्य प्रतिषेधो नैरात्म्यमवगम्येत, तदुपलम्भे वा कृतमनया कुसृष्ट्या। तस्मात् कल्पयित्वाऽऽत्मानमप्रामाणिकं तत्प्रतिषेधस्य घटादावप्राणादिमत्त्वेन व्याप्तिं गृहीत्वा जीवच्छरीरे व्यापकस्याप्राणादिमत्त्वस्य निवृत्त्या नैरात्म्यस्य व्याप्यस्य निवृत्तेरात्माऽवगन्तव्यः। एवं च सति कल्पनाकोपस्यापरिमेयत्वाद् यद् यदेव कल्प्यते तत्तदभावस्य घटादौ सुलभत्वाद् अप्राणादिमत्त्वेन व्याप्तिर्जीवच्छरीरेऽप्राणादिमत्त्वस्य व्यापकस्य निवृत्तेरात्मसद्भाववत् सकलकाल्पनिकडित्थादिमत्त्वप्रसङ्ग इत्यर्थः। निरा-

(१) "अवीत" इति ख०। (२) "अवीत" इत्यत्र "वीत" इति ख०। (३) क-पु० "स्वाभिप्रायमुद्घाटितः" इति पाठः। (४) "अप्रमाणादिमद्" इति क०।

## न्यायवार्त्तिकम्

नेदमडित्थवच्छरीरमप्राणादि(१)मत्त्वप्रसङ्गादेवमडित्थादिप्रतिषेधोऽपि वक्तव्य इति। तच्च नैवम्, विकल्पानुपपत्तेः। इदं तावत् भवान् पृष्टो व्याचष्टाम्—किमवधारितकार्यस्वभावः पदार्थो डित्थ-शब्दवाच्य आहो नेति। यद्यवधारितकार्यस्वभावः, संज्ञाभेदमात्रमात्मा स इति। अथानव-धारितकार्यस्वभावः, तस्य व्यावृत्तिरशक्या प्रतिपादयितुम्। व्यावृत्तिप्रधानं चेदं वाक्यम्। तस्माद्वीतहेतोरर्थमबुद्ध्वा सर्वात्मकता देश्यत इति।

## न्यायवार्त्तिकतात्पर्यटीका

करणवाक्यं विभजते—तच्च नैवम्, कस्माद् ? विकल्पानुपपत्तेः। विकल्पयति—किमिति। अयमर्थः प्राणादयो हीच्छान्वयव्यतिरेकानुविधायिभावाभावतया इच्छादिकार्याः, अक्षणिकत्वे च व्यवस्थिते कार्यं समवायिकारणापेक्षमितीच्छादीनां समवायिकारणेन भाव्यमिति कार्यत्वाद् घटादि-वत्, शरीरेन्द्रियादीनां च समवायिकारणत्वनिषेधे सति यदिच्छादीनां समवायिकारणं परिशिष्यते तद् द्रव्यमात्मेति क्षेत्रज्ञ इति चाऽऽख्यायते, तदस्य विशेषतोऽनवगतस्यापीच्छादिसमवायिकारणतया सामान्यरूपेणावधारितस्य शक्यः प्राणादिरहितेषु घटादिष्वभावः प्रतिपत्तुम्, निरात्मकशब्देनापि चायमेवार्थ उच्यते, अनेन प्राणादिलक्षणकार्याभावेन घटादौ नैरात्म्यलक्षणकारणाभावस्य व्याप्तिरव-धारिता, सोऽयं जीवच्छरीरे कार्यस्य अभावो व्यापको निवर्तमानः स्वव्याप्यं तत्कारणाभावमादाय निवर्तत इति सिद्धं जीवच्छरीरे प्राणकारणम्, स चात्मेति। यदि च डित्थादयोऽपि तथा, तदात्मनो नामान्तराणि नार्थान्तराणि नामानि च लोकतन्त्राणि। अवधारितं कार्यं प्राणादुप-लक्षितमिच्छादि यस्य सोऽवधारितकार्यः स एव स्वभावो यस्य तथोक्तः। एतदुक्तं भवति सामान्यतस्तावदिच्छादीनां कार्यत्वेनान्वयव्यतिरेकिणा हेतुना समवायिकारणवत्त्वमनुमितम्, उभयसिद्धश्च घटादाविच्छादिकारणाभावः। येऽपि हि नैरात्म्यवादिनो बुद्धिं वा भूतपरिणाम-भेदं वा इच्छादिकारणमाचक्षते, तेऽपि घटादौ न तदातिष्ठन्ते। तस्मादुभयसिद्धनैरात्म्या घटादयः, तेषु चेच्छादिकार्याभावेन नैरात्म्यं व्याप्तम्, सोऽयं जीवच्छरीरे कार्याभावो व्यावर्त्तमानः कारणाभावं व्यावर्तयति। न च कार्येणैव कारणमनुमीयतां जीवच्छरीरे, किं व्यतिरेकिणा, ऋजुमार्गेण सिध्यन्तं को नु वक्रेण साधयेदिति वाच्यम्, कारणमात्रस्य ततः सिद्धेरित्युक्तम्। परिशेषाद्विशेषसिद्धिरिति चेत् स एव व्यतिरेकीत्युक्तम्। यदि हि पृथिव्यादिसमवायिकारणा इच्छादयो भवेयुः घटादिष्वपि प्रसज्येरन्। तस्माद् घटादिष्विच्छादिकार्यनिवृत्त्या द्रव्याष्टकातिरिक्तकारणनिवृत्तिर्व्याप्ता

## वृत्तिः

तस्य द्वैविध्यमाह—उदाहरणसाधर्म्यात् तथा वैधर्म्याददिति। साधर्म्यमन्वयः वैधर्म्यं व्यतिरेकः तादृशव्याप्तिरिति फलितार्थः। उदाहरणसाधर्म्यमुदाहरणबोध्यान्वय-

(१) "शरीरमप्राणादि" इत्यत्र "शरीरं प्राणादि" इति ख०।

## न्यायवार्त्तिकम्

यदि तर्ह्यसाधारणो धर्मो हेतुर्नित्या पृथिवी गन्धवत्त्वादित्यादयो हेतवः प्राप्नुवन्ति, न, हेत्वर्थापरिज्ञानात्,—सत्यमसाधारणो वैधर्म्यं हेतुः न पुनर्वैधर्म्यं व्यभिचारि गन्धवत्त्वं च नित्यानित्यव्यभिचारि, तस्मादन्वयिनो व्यतिरेकिणश्च नान्वयव्यतिरेकौ हेतुभावनिमित्तम् किन्त्वन्वयव्यतिरेकयोरव्यभिचार इति। यः पुनरसाधारणो धर्मः पक्ष एव केवलं यस्य तत्तुल्यविपक्षौ न स्तः स कस्मान्न हेतुः यथा सर्वं नित्यं सत्त्वात्। सत्यमयमसाधारणो न तु व्यावृत्तः, अव्यावृत्तेरहेतुरिति। एतेन यः पक्षैकदेशवृत्तिरविद्यमानसपक्षविपक्षः स न हेतुरित्युक्तं भवति यथा सर्वं

## न्यायवार्त्तिकतात्पर्यटीका

इष्टेतीच्छादयः शरीरे दृश्यमाना व्यापिकां स्वनिवृत्तिं निवर्त्तयन्तो व्याप्यद्रव्याष्टकातिरिक्तकारणाभावनिवृत्तिमुखेन नवमं द्रव्यं साधयन्ति। न चैषां बुद्धिरेव समवायिकारणम्, द्रव्यस्यैव समवायिकारणत्वनियमाद् बुद्धेश्चाद्रव्यत्वात्। यथा च भूतानां परिणतिभेदो न कारणं तथा तृतीय उपपादयिष्यते (१)। व्यतिरेकमुखेणापि प्राणादेः सात्मकत्वेनान्वयसिद्धौ न केवलव्यतिरेकीति चेद्, न स्वाभाविकं साध्येन प्रतिबन्धमन्वयव्यतिरेकिणं व्यासेधामः, किन्तु सपक्षाभावेन विधिमुखेनास्य प्रतिबन्धं निराकुर्मः। एतावतैव चान्वयिनो भिद्यते। न च पक्ष एव सपक्षः, जिज्ञासितविशेषस्य ज्ञातविशेषादन्यत्वात्। शरीरादिषु च सत्सु नैरात्म्यनिषेध एवात्मसद्भावः असन्निषेधस्य सद्भावलक्षणत्वात्। सपक्षाभावस्तु नैरात्म्येनाप्यव्यपदेश्य इति कथं नैरात्म्यनिषेधेन व्यपदिश्यतामसतोऽधिकरणत्वायोगादित्युक्तम्। एतेन परैर्यदुक्तम्—

सपक्षाव्यतिरेकी चेद् भवेद्धेतुरतोऽन्वयी।
नान्वयव्यतिरेकी चेदनैरात्म्यं न सात्मकम्॥

तदनेन निराकृतम्। एतच्चास्माभिरन्वयिहेतुसमर्थनेन स्फुटीकृतम् (२)। तस्मात् सर्वमवदातम्।

विपक्षव्यतिरेकिमात्रेण व्यतिरेकिणो गमकत्वं मत्वा चोदयति—यदि तर्हीति। परिहरति—न हेत्वर्थापरिज्ञानादिति। न वैधर्म्यमात्रेण गमकत्वम्, अपि त्वव्यभिचारिणा, स चात्राव्यभिचारो नास्तीत्यर्थः। ननु मा भूद् गन्धवत्त्वं हेतुर्व्यतिरेकव्यभिचाराद् अनित्यादिवन्नित्यादप्यस्य व्यभिचारात्। यस्य पक्ष एव केवलं न तु सपक्षविपक्षौ, न तस्य व्यतिरेकव्यभिचारोऽस्तीति स कस्मान्न हेतुरिति चोदयति—यः पुनरिति। परिहरति—सत्यमिति। व्यतिरेक-

## वृत्तिः

व्याप्तिस्ततोऽन्वयी हेतुर्ज्ञातव्यः। उदाहरणेति स्पष्टार्थम्। तथा च ज्ञातान्वयव्याप्तिक-

(१) ३।२।३८ सूत्रस्य भाष्यवार्त्तिकतात्पर्यटीका द्रष्टव्याः। (२) १।१।५ सूत्रव्याख्यानावसरे।

## न्यायवार्त्तिकम्

नित्यममूर्त्तत्वादिति। यः पक्षैकदेशे वर्तते अविद्यमानसपक्षो विपक्षाच्च निवर्तते यथाऽनभ्युपगतनित्यपक्षस्य नित्ये वाङ्मनसे श्रावणत्वादिति स कस्मान्न हेतुः ? अयमपि न हेतुः, सूत्रार्थेनापोदितत्वात्, सूत्रार्थस्तथा वैधर्म्यादिति। अत्र च वैधर्म्यमुदाहरणेनैव, वैधर्म्यमेव चोदाहरणेन, न पुनरिदं वैधर्म्यमेव, तस्मान्न प्रसङ्गः। एवमनयोर्वीतावीतहेत्वोः पृथगर्थप्रतिपादकत्वस्याऽऽकुमारं (१) प्रसिद्धेः, यदुक्तं वीतावीतौ न पृथक् प्रतिपत्तिहेतू इति तत्संमूढेनोक्तम्।

हेतुर्विपक्षाद्विशेष इत्यन्ये,—अन्ये त्वन्यथा लक्षणं व्याचक्षते—हेतुर्विपक्षाद्विशेष इति। यदि पुनरेतावन्मात्रमुच्यते हेतुर्विशेष इति ? किं स्यात्, विशेषमात्रं हेतुः स्यात् साधर्म्यमात्रनिराकरणं च स्यात् साधर्म्यमात्रनिराकरणे विशेषमात्रपरिग्रहे च इष्टानिष्टसङ्ग्रह इति। अतोऽनिष्टहेतुनिराक्रियायै विपक्षग्रहणम्,विपक्षाद्‌ यो विशेषः स हेतुः। विपक्षाद्विशेषो हेतुरित्येतावति चोच्यमाने विपक्षाद्विशेषमात्रस्य हेतुत्वं स चानेकभेदः, तन्निवृत्त्यर्थं विपक्षादेवेत्यवधार्यते। अवधारणे चैतस्मिन्

## न्यायवार्त्तिकतात्पर्यटीका

धर्मोऽव्यभिचारो नासति व्यतिरेके सम्भवति, असतोऽधिकरणत्वायोगादित्युक्तत्वादिति। प्रत्युदाहरणान्तरं दर्शयति—एतेनेति। एतेन विपक्षाभावात् ततो व्यावृत्त्यभावेनेत्यर्थः। चोदयति—यः पक्षैकदेश इति। यदि हि पक्षैकदेशवृत्तिरपि विपक्षाभावाद्‌ न व्यतिरेकी हेतुः तर्हि यस्य पक्षैकदेशवृत्तेरपि सतो विपक्षान्निवृत्तिरस्ति स हेतुः प्रसज्येत, अस्ति खल्वस्योदाहरणवैधर्म्यमेवेति व्यतिरेकिहेतुलक्षणमित्यभिप्रायः। परिहरति—अयमपि न हेतुः, कस्मात् ? सूत्रार्थेनापोदितत्वात्। तं सूत्रपाठपूर्वकं दर्शयति—सूत्रार्थ इति। अत्र च येन पक्षैकदेशवृत्तेर्व्यतिरेक्याभासनिराकरणं तदवधारणं प्रथमं दर्शितम्। उदाहरणेनैव वैधर्म्यं नानुदाहरणेन पक्षेणापि, अस्य तु पक्षेणापि इति व्यतिरेक्यपि न हेतुः, न पुनर्वैधर्म्यमेवेति सूत्रार्थः। तथा सति सव्यभिचारमात्रस्य निवृत्तिः स्याद्‌ न तु पक्षैकदेशवृत्तेरित्यर्थः।

सम्प्रति हेतुलक्षणमुपन्यस्य दूषयति—हेतुर्विपक्षाद्विशेष इत्यन्ये। एतद्‌व्याचष्टे—अन्ये त्विति। साधर्म्यमात्रनिराकरण इति। यस्य कस्यचित् साधर्म्यस्य निराकरणे, विपक्षसाधर्म्यनिराकरणे तावदिष्टसंग्रहः। यदा तु सपक्षादिसाधर्म्यनिराकरणम्, तदाऽनिष्टस्य विरुद्धत्वादेः संग्रहः। उपलक्षणं चैतद्‌—इष्टानिष्टसंग्रह इति, इष्टपरित्याग इत्यादि द्रष्टव्यम्।

## वृत्तिः

हेतुबोधको हेत्ववयवः अज्ञातव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयव इति फलितार्थः। एवमप्रतीतान्वयव्याप्तिक( २ )हेतुबोधको हेत्ववयवो व्यतिरेकी हेतुरिति।

---

(१) "प्रतिपादकत्वमाकुमारम्" इति ख०। (२) "अप्रतीतान्वयव्यतिरेकव्याप्तिक" इति आ०।

## न्यायवार्त्तिकम्

विपक्षैकदेशवृत्तिरेकोऽनुपज्यते गौर्विषाणित्वात्, स हि विपक्षादेव विशेष इति नायमनेनावधारणेन निराक्रियत इति तन्निराक्रियायै (१) द्वितीयमवधारणं (२) विशेष एव च विपक्षान्न त्वयं विशेष एव, विपक्षैकदेशवृत्तित्वात् सामान्यमपि। तदेवमाभ्यामवधारणाभ्यामन्वयव्यतिरेकी त्रिलक्षणो हेतुर्लभ्यत इति।

सत्यमेकस्त्रिलक्षणो हेतुर्लभ्यते समानपक्षैकदेशवृत्तिश्च एकस्त्रिलक्षण एव निराक्रियत इति। कथमिति ? आद्येनावधारणेन विपक्षादेव यो विशेषः स हेतुरिति ब्रुवता यस्तुल्यैकदेशवृत्तिः स विवर्तितो भवति। न ह्ययं विपक्षादेव विशेषः किन्तु सपक्षैकदेशादपीति। विपक्षैकदेशवृत्ति-प्रतिषेधात् समानपक्षाद् यो विशेष एव स न (३) हेतुरित्युक्तम्भवति, यथाऽश्वोऽयं विषाणित्वात् न पुनरयम्। *प्रयत्नानन्तरीयकत्वादिर्विशेष एव न भवति, अपि तु पक्षैकदेशवृत्तित्वात् सामान्यमपीति। यद्येवं विपक्षादेव यो विशेषः स हेतुरित्येतदवधारणं बाधितं भवति। न चायं *(४) प्रयत्नानन्त-रीयकत्वादिर्विपक्षादेव विशेषः, किन्तु तत्तुल्यैकदेशादपि। अथाश्रूयमाणेनार्थेनावधारणेऽर्थवती।

## न्यायवार्त्तिकतात्पर्यटीका

स चानेकभेद इति। सपक्षादपि विशेषे सति विपक्षाद्विशेषः पक्षादपि विशेषे सति विपक्षा-द्विशेषः विपक्षमात्राद्विशेष इति प्रकाराः। अत्र पूर्वयोः प्रकारयोर्यथाक्रममसाधारणस्यासिद्धस्य च हेतुत्वप्रसङ्ग इति तन्निवृत्त्यर्थं विपक्षादेवेत्यवधार्यते। द्वितीयमवधारणमवतारयितुमाह—अवधारणे चेति। विपक्षादेवेत्यनेनावधारणेन विशेषोऽवधारितः, न विपक्षः, स चायं विशेषे चाविशेषे च प्रसृत इति विपक्षैकदेशवृत्तेरपि पक्षसपक्षसाधारणस्य हेतुत्वप्रसङ्ग इति तन्निवृत्त्यर्थं द्वितीयमवधारणं विशेष एवेति। उपसंहरति—तदेवमिति।

तदेतदव्यापकत्वेन दूषयति—सत्यमेक इति। अत्र चोदयति—विपक्षैकदेशवृत्ति-प्रतिषेधादिति। विशेष एवेत्यवधारणे विपक्षैकदेशवृत्तिः गौरियं विषाणित्वादिति हेतुत्वेन प्रतिषिद्धः। तस्मादेतस्मिन्नवधारणे सत्येव विपक्षादेवेत्यवधारणीयम्, तथा च विपक्षादेव यो विशेष एव स हेतुः, सपक्षात्तु यो विशेष एव स न हेतुरित्युक्तं भवति। तथा च अश्वोऽयं विषाणित्वादिति सपक्षाद्विशेष एवेति हेतुत्वेन प्रतिषिद्धो भवति। यस्तु सपक्षैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिः स सपक्षाद्विशेष एव न भवति, अपि तु सामान्यमपीति। तस्य हेतुत्वमवधारितमिति हेतुरेवासावित्यर्थः। परिहरति—यद्येवमिति। यदि सपक्षादपि यो विशेषः सपक्षैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिर्हेतुः एवं विपक्षादेवेत्यवधारणं बाधितं भवति।

(१) "तन्निवृत्त्यै" इति ख०। (२) "द्वितीयमसाधारणम्" इति ख०। (३) ख-पु० "न" नास्ति। (४) तारकाचिह्नद्वयमध्यवर्ती पाठः ख-पु० नास्ति।

## न्यायवार्त्तिकम्

एवञ्च सति तुल्यैकदेशवृत्तिवत् साध्यैकदेशवृत्तेरपि हेतुत्वप्रसङ्गः, येनैव सामर्थ्येन तत्तुल्यैकदेशवृत्तिर्लभ्यते तेनैव सामर्थ्येनानुमेयैकदेशवृत्तिरपि हेतुः प्राप्तः, यथाऽनित्याः (१) परमाणवो गन्धवत्त्वादिति। ते एतेऽवधारणे यदि तावद्यथाश्रुते भवतस्तत इष्टः प्रयत्नानन्तरीयकत्वादिर्न हेतुः। अथान्यथा श्रूयते अन्यथा प्रकल्प्यते अभिप्रेतार्थसिद्ध्यर्थम्, तथाप्यभिप्रेतप्राप्तिवदनिष्टोऽपि गन्धवत्त्वादिर्लभ्यते इति उभयं च लक्षणदोषः अभिप्रेतहानिरनिष्टप्रसङ्गश्च। नैष दोषः, वृत्तौ विशेषितत्वात्—अनिष्टस्य गन्धवत्त्वादेः प्राप्तिरित्यदोषः (२) यस्माद् वृत्तावाह यो धर्मः पक्षस्येति अनेन चाक्षुषत्वादिः पक्षासम्भवी निराक्रियते, पक्षैकदेशवृत्तिस्तु कथम्? न ह्यसौ पक्षधर्मो न भवति, तथा विपक्षैकदेशवृत्तिर्न विपक्षस्य न धर्म (३) इति, तस्मादन्यथा निराकरणे यत्नः कर्त्तव्य इति। न कर्त्तव्योऽवधारणान्निवृत्तेः—अवधारणादेकदेशवृत्तिर्निवर्त्तिष्यते। किं पुनरवधार्यते, किं धर्म एव पक्षस्य उत पक्षस्यैव धर्म इति? अस्तु तावद्धर्म एव पक्षस्येति, किं पुनरस्यावधारणस्य सामर्थ्यम्? किमनेन सम्भवो ज्ञाप्यते, उतासम्भवो व्यावर्त्यते?

## न्यायवार्त्तिकतात्पर्य्यटीका

शङ्कते—अथेति। न विपक्षादेवेत्येतन्मात्रमवधार्यते येन सपक्षैकदेशवृत्तिः प्रयत्नानन्तरीयकत्वादिर्न हेतुः स्यादपि तु यो विशेष एव स हेतुरिति प्राप्ते विपक्षादेवेति नियम्यते, तेन साधारणस्य विशेषस्य विपक्षवृत्तेर्हेतुत्वं प्रतिषिद्धं भवति, यथाऽश्वोऽयं विषाणित्वादिति। यः पुनर्विशेषश्चाविशेषश्च सपक्षे हेतुः तस्य हेतुत्वेऽपि न विपक्षादेवेति बाधितं भवति। यद्यपि चैवं सति सपक्षैकदेशवृत्तेर्हेतुत्वं न श्रुतम्, तथाऽपि विपक्षादेवेत्यनेनावधारणेनानिषिद्धमनुमतमेव। तेन चाश्रुतेनार्थेनार्थवती अवधारणे इत्यर्थः। निराकरोति—एवं चेति। यथा तत्तुल्यैकदेशवृत्तेरविहितमपि हेतुत्वमनिषेधादनुमतमेवं पक्षैकदेशवृत्तेरपीति सोऽपि हेतुः स्यादित्यर्थः। पुनः प्रत्यवतिष्ठते नैष दोष इति। पक्षधर्मत्वे सति विशेष एवेति नियमे कुतः पक्षैकदेशवृत्तेः प्राप्तिः अपक्षधर्मत्वात्तस्येत्यर्थः। परिहरति—यो धर्मः पक्षस्येत्यनेनेति। पर आह—न कर्त्तव्य इति। दूषयितुमवधारणं विकल्पयति—किं पुनरिति। प्रथमकल्पं गृह्णाति—अस्तु तावदिति। एतमपि दूषयितुं विकल्पयति—किं पुनरस्येति। सामर्थ्यं प्रयोजनाभिसम्बन्धः, सम्भवज्ञापनपक्षेऽज्ञापन-

## वृत्तिः

इत्थमेव (४) प्रतीतान्वयव्यतिरेकव्याप्तिकहेतुबोधको हेत्ववयवोऽन्वयव्यतिरेकीत्यपि सूचितमिति वदन्ति ३४-३५ ॥

---

(१) "यथा नित्याः" इति ख०। (२) "प्राप्तिरित्यतो दोषः" इति ख०। (३) "विपक्षस्य न धर्म्म" इत्यत्र "पक्षस्य धर्म्म" इति ख०। (४) "अयमेव" इति ख०।

## न्यायवार्त्तिकम्

उभयथापि नावधारणस्य सामर्थ्यमस्ति, सम्भवज्ञप्तेरसम्भवनिवृत्तेश्चावधारणमन्तरेणाप्यवगतेः। न चैकदेशवृत्तिर्निराक्रियत इति व्यर्थमवधारणम्। अथ पुनर्व्याप्तिरस्यावधारणस्यार्थः धर्म एव पक्षस्येति, न पुनरधर्मोऽपि, यः पुनः पक्षैकदेशवृत्तिरसावधर्मोऽपि। सत्यमनेनैकदेशवृत्तिर्निराक्रियत इति। एतस्मिन्नप्येकं सन्धित्सत इदमन्यत् प्रच्यवते। भवत्येकदेशवृत्तिर्निराकरणं सपक्षे सिद्धे एतत्पदं किमर्थमारभ्यत इति। कथं पुनरिदमनारभ्यं यस्माद् व्याप्त्यर्थेनावधारणेन चरितार्थत्वात्। धर्म एव पक्षस्येति पक्षो नियतो, धर्मोऽनियतः तस्यानियतस्य व्याप्त्यति-व्याप्तिभ्यां (१) तत्तुल्यविपक्षगतिः तत्र विपक्षे नास्तीति प्रसक्तस्य प्रतिषेधो भवतु (२) सपक्षे सिद्ध इत्येतत्पदं मा भूत्। अथ पुनरिदमवधारणमन्यथा क्रियते पक्षस्यैवेति, एवमप्यनन्तरे द्वे अपि पदे 'सपक्षे सिद्धो विपक्षे नास्तीति' च बाधिते भवतः। कथम्? सपक्षे सिद्ध इत्येतदव-धारणार्थबाधितं पक्षस्यैव धर्मः सपक्षे सिद्ध इति। न हि लोक एवंप्रकाराणि वाक्यानि प्रवर्तन्ते देवदत्तमेव भोजय यज्ञदत्तं च। उत्तरं तु पदं विपक्षे नास्तीति गम्यमानत्वादकार्यम्। केन गम्यमानत्वादिति? अवधारणेन, पक्षस्यैव धर्मः सामान्यस्येति गम्यत एव इति विपक्षे नास्तीत्येतन्न कर्तव्यमिति। न च पक्षैकदेशवृत्तिर्निराक्रियत इति यदर्थमवधारणं स एवार्थो हीयत इति। अथ पुनः सपक्षे सिद्ध इत्येतदपि पदमवधारणार्थमेवारभ्यते सपक्ष एव सिद्धः सिद्ध एव सपक्ष इति। किं पुनरस्मिन् पदेऽवधारणेन (३) लभ्यते? यदि सम्भवः सोऽनवधारितोऽपि गम्यते सपक्षे सिद्धः। अथ व्याप्तिः तज्जातीयस्यैकदेशवृत्तिरहेतुरिति प्राप्तम्। अथ सपक्ष एव सिद्ध इति तथापि पूर्वोत्तरे पदे व्याहते भवतः, पक्षस्य धर्मो विपक्षे नास्तीति अवधारणार्थ(४)बाधित-त्वात् पूर्वमनारभ्यं गम्यमानत्वादुत्तरमपि। अथ विपक्षे नास्तीत्येतदप्यवधारणार्थमेवेति। अत्रापि किमवधार्यते विपक्ष एव नास्तीति नास्त्येव विपक्ष इति। यदि विपक्ष एव नास्ति तदा गौर्विषाणित्वादिति हेतुः प्राप्तः स हि विपक्ष एव नास्तीति। अथ विपक्षे नास्त्येवेति न

## न्यायवार्त्तिकतात्पर्य्यटीका

निवृत्तिः प्रयोजनम्। असम्भवनिवृत्तिपक्षे त्वत्यन्तायोगव्यावृत्तिः फलम्। यथा नीलं सरोजं भवत्येवेति। विकल्प्य दूषयति—उभयथाऽपीति। युक्त्यन्तरमाह—न चेति। अत्यन्तायोगो निषिद्धो भवति न त्वयोग इत्यर्थः। शङ्कते—अथेति। विशेषणसंगतो ह्येवकारोऽयोगं व्यव-च्छिनत्ति यथा चैत्रो धनुर्द्धर एवेति, हेतुविशेषणं चेद्पक्षधर्म एवेति। तस्मात् सिद्धं पक्षैकदेशे वृत्तेर्निराकरणमित्यर्थः। निराकरोति—सत्यमिति। शेषमनुमानसूत्रे व्याख्यातप्रायमिति नेह व्याख्यातम्।

---

(१) "व्याप्त्यव्याप्तिभ्याम्" इति ख०। (२) "प्रसक्तस्य प्रतिषेधो भवतु" इत्यंशः ख-पु० नास्ति। (३) "पदेनावधारणेन" इति ख०। (४) "अधारणार्थ-" इति क०।

## न्यायवार्त्तिकम्

पुनर्मध्यमस्य पदस्यानारम्भः (१) तत्र पूर्वपदं व्याप्त्यर्थमुत्तरपदं विपक्षैकदेशवृत्तिप्रतिषेधार्थम्। अथ सपक्षे सिद्ध इत्येतत्पदं किमर्थमारभ्यत इति। यदि सम्भवार्थं व्याप्त्यर्थेनाद्यावधारणेन सम्भवो लभ्यत इति व्यर्थम्। तदेतस्मिन् लक्षणे सद्वृत्त्या विचार्यमाणेऽनिष्टहेतूपनिपातो वा इष्टहेतुपरित्यागो वाऽभिप्रेतग्रस्तहानिर्वेति दोषाः।

हेतुर्विपक्षाद्विशेष इति च यदा सौत्रान्तिकपक्षमाश्रित्य लक्षणं विचार्यते, तदा विपक्षासम्भवाद्धेतुर्विपक्षाद्विशेष इति विपक्षार्थो वक्तव्यः, न ह्यसति (२) विपक्षार्थं पश्याम इति। न चासति पञ्चम्याः प्रयोगः सम्भवति (३) इति विपक्षे नास्तीति सप्तम्यर्थो वक्तव्यः, विपक्षासम्भवे सति पक्षतज्जातीयव्यापकत्वात् कृतकत्वादेर्विशेषोऽर्थश्चिन्त्यः। कृतकत्वादिति साधारणत्वात् सामान्यं (४) न विशेष इति। तदेतल्लक्षणं स्वसिद्धान्तेनासङ्गतत्वादलक्षणमिति। यदपि हेतुवार्त्तिकं ब्रुवाणेनोक्तम्(५) सप्तिकासम्भवे पट्प्रतिषेधादेकद्विपदपर्युदासेन त्रिलक्षणो हेतुरिति। एतदप्ययुक्तम्, द्विपदलक्षणयुक्तयोर्हेतुत्वात् तत्र किल सप्तिका सम्भवति, पक्षस्यैव धर्मः समान एव सिद्धः विपक्ष एव नास्ति। पक्षस्य धर्मः समाने च सिद्धः पक्षस्य धर्मो विपक्षे नास्ति। समान एव च सिद्धः विपक्षे नास्ति, पक्षस्य धर्मः समाने च सिद्धो विपक्षे च नास्तीति। तदेवं सप्तिका-

## न्यायवार्त्तिकतात्पर्य्यटीका

हेतुर्विपक्षाद्विशेष इति च सौत्रान्तिकपक्षमिति। यदा त्वनित्यत्वहेतौ लक्ष्ये लक्षणं विचार्यत इति विपक्षशब्दार्थो वाच्यः। ननु नित्यो विपक्ष इत्यत आह—न ह्यसतीति। न हि निरुपाख्यमाख्यायत इत्यर्थः। न चास्यापादानत्वं नाप्यधिकरणत्वं येन पञ्चमी वा सप्तमी वा प्रसज्येतेत्याह—न चासतीति। न चासतो विपक्षाद्व्यावृत्त्यभावेन विशेषोऽपीत्याह—विपक्षासम्भवे सतीति। पक्षस्यैवेति। अत्र चैवकारास्त्रयः पदान्तरानपेक्षत्वं सूचयन्ति। पक्षस्यैव धर्म इति हेतुलक्षणेऽसाधारण एव हेतुः स्यात्। समान एव सिद्ध इति। हेतुलक्षणे अश्वस्य विषाणित्वे साध्ये गोत्वादिर्हेतुः स्यात्। विपक्ष एव नास्तीत्युच्यमाने अनित्यः शब्दः प्रमेयत्वादित्यपि हेतुः स्यात्, तस्मात् त्रयः पक्षा हेयाः। तथा च पक्षस्य धर्मः समाने च सिद्ध इत्यत्र सव्यभिचारो हेतुः स्यात्। पक्षस्य धर्मो विपक्षे च नास्तीत्युच्यमानेऽसाधारणो हेतुः स्यात्। समाने च सिद्धो विपक्षे नास्तीत्युच्यमाने अनित्यः परमाणुः कृत-

---

(१) "पदस्यानारम्भः" इति क०। (२) "न चासति" इति क०। (३) अत्र ख-पु०—"विपक्षादिति पञ्चमीविषयो वाच्यः, असति विपक्षे नाधिकरणार्थः सम्भवति" इत्यधिकः पाठः। (४) "तदा साधारणत्वमसामान्यम्" इति ख०। (५) महाभाष्ये "गोनर्दीयस्त्वाह" इत्यत्र यथा महाभाष्यकारः पतञ्जलिः स्वस्यैव नामान्तरेण "गोनर्दीय" इत्यनेन स्वमेव बोधयामास, अत्रापि तथा "हेतुवार्त्तिकं ब्रुवाणेन" इत्युक्त्या वार्त्तिककारः स्वमेव बोधयति।

## न्यायवार्त्तिकम्

सम्भवे सति षट्प्रतिषेधमुक्त्वा यदयं त्रिपदपरिग्रहेण त्रिलक्षणस्य हेतुतां शास्ति तेनैकद्विपदपर्युदासं ज्ञापयतीति। तच्च नैवम्। द्विलक्षणयुक्तयोर्हेतुत्वादिति, अनभ्युपगताऽनित्यपक्षस्य(१) कृतकत्वादित्ययं द्वाभ्यां लक्षणाभ्यां युज्यते प्रयत्नानन्तरीयकत्वादिति चानयोर्हेतुभावो न स्यात्। यश्चायं व्यतिरेकी हेतुः नेदं निरात्मकं जीवच्छरीरम् अप्राणादिमत्त्वप्रसङ्गादित्येवमादिः स न हेतुः स्यात् द्विपदयोगादिति। तस्माद्धेतुर्विपक्षाद्विशेष इत्येतल्लक्षणं विचार्यमाणमनभिमतं वा हेतुमापादयति इष्टं वा बाधते ग्रन्थं वा निराकरोति शास्त्रं बाधत इति।

"तत्र यः सन् सजातीये द्वेधा चासंस्तदत्यये" इत्यन्ये। अनेन(२)—सन् सजातीये द्वेधा चासंस्तदत्यय इत्यसपक्षे नास्ति। एतावता च किल लक्षणेन त्रिलक्षणो हेतुर्लभ्यत इति

## न्यायवार्त्तिकतात्पर्य्यटीका

कत्वादिति हेतुः स्यादिति त्रयः। सप्तममभिमतं पक्षमाह—पक्षस्येति। शेषं सुबोधम्।

अत्र दिङ्नागेन—

सपक्षे सन्नसन् द्वेधा पक्षधर्मः पुनस्त्रिधा।
प्रत्येकमसपक्षे च सदसद्द्विविधत्वतः॥

इति। न च पक्षधर्मान् हेतुतदाभासान् दर्शयित्वा—

तत्र यः सन् सजातीये द्वेधा चासंस्तदत्यये।
स हेतुर्विपरीतोऽस्माद्विरुद्धोऽन्यस्त्वनिश्चितः॥

इति हेतुतदाभासविवेको दर्शितः। तस्यार्थः—यः पक्षधर्मः स सपक्षे सन्नसन् द्वेधा इति, स पुनरसपक्षे सदसद्द्विविधत्वतः प्रत्येकं त्रिधा भवतीति। पक्षधर्मः सपक्षे सन् विपक्षे सदसद्द्विविधत्वतस्त्रिधा। पक्षधर्मः सपक्षे द्वेधा विपक्षे सदसद्द्विविधत्वतस्त्रिधेति। अत्रोदाहरणम्—

प्रमेयकृतकानित्यकृतश्रावणयत्नजाः।
अनित्ययत्नजास्पर्शानित्यत्वादिषु ते नव॥

नित्यत्वादिषु साध्येषु प्रमेयत्वादयो नव हेतुतदाभासाः, तेषां यथासंख्यं नित्यत्वादीति साध्यान्युदाहरन्ति—

नित्यानित्यप्रयत्नोत्थमध्यमत्रिकशाश्वताः।
अयत्नानित्यनित्याश्च प्रमेयत्वादिसाधनाः॥

तदेतेषु हेतुतदाभासेषु हेतुर्निर्द्धारितो येन तदुपन्यस्य वार्त्तिककारो व्याचष्टे—तत्र य इति।

---

(१) "नित्यपक्षस्य" इति ख०। (२) "इत्यन्ये। अनेन" इत्यत्र "इति। अन्यनेन" इत्येवं क-पु० पाठः। खपुस्तके तु—"अनेन" इति नास्ति।

## न्यायवार्त्तिकम्

यथाश्रुति न लभ्यते। यदि तावदेतल्लक्षणं यथाश्रुति भवति पक्षे(१) विद्यत इति केनैतल्लभ्यत इति। ननु चोक्तं, हेतुः तदाभासो वा प्रायः पक्षधर्म एव भवति। उक्तमेतन्न पुनरनेन पक्षधर्मो हेतुरिति लभ्यते, किं त्वपक्षधर्मो न हेतुः न हेत्वाभास इति। अथाप्यर्थतो लभ्येतापक्षधर्मो हेतुर्न हेतुर्न हेत्वाभास इत्ययं यदि वाक्यार्थो भवति अर्थाद् गम्यते हेतुर्हेत्वाभासश्च पक्षधर्म इति। सत्यमर्थात् पक्षधर्मो गम्यते न तु व्यापको(२)नियतो लभ्यत इति। अपक्षधर्मनिवृत्तिमात्रत्वेन च सम्भवमात्रं लभ्यत इति। तच्च द्वेधा व्यापकमव्यापकं च। तत्राव्यापकोऽनिष्टो हेतुः प्राप्तः। न प्राप्तः, पक्षधर्म एवेत्यभिधानाद् यः पक्षस्य धर्म एव स हेतुः प्राप्तः, न त्वयं पक्षधर्म एव एकदेशवृत्तित्वादिति। न, अवधारणस्यान्यार्थत्वात्—अन्यार्थमवधारणं भवन्तः कल्पयन्ति। किमर्थम्? हेतुहेत्वाभासनियमज्ञापनार्थम्। तदवधारणमन्यार्थं सत् कथमव्यापकं निवर्तयिष्यति।

अथोभयकारि भवत्यव्यापकनिवृत्त्यर्थं हेतुहेत्वाभासनियमज्ञापनार्थं च, तथापि सन् सजातीये द्वेधा चेत्यकरणीयम्। कथम्, व्याप्त्यर्थेनावधारणेन पक्षोऽपि नियतो धर्मश्च नियत इति। अनियतस्य व्याप्त्यव्याप्तिभ्यां धर्मस्य द्वौ राशी शिष्यमाणौ सजातीयस्तदत्ययश्च तत्रातिप्रसक्तेरसंस्तदत्यय इति युक्तम्(३)। सन् सजातीय इति किमर्थम्। यदि सम्भवार्थं तन्न, अनियमात्—व्याप्त्यव्याप्त्योः सम्भवो गम्यत इति किमनेन सन् सजातीय इति। द्वेधा चेति सर्वथा न वक्तव्यम्। इदं तावद् गम्यमानत्वात् सन् सजातीय इति न कर्तव्यम्। सच्छब्देन

## न्यायवार्त्तिकतात्पर्य्यटीका

तदेतद्दूषयति—यथाश्रुतीति। "तत्र यः सन् सजातीये द्वेधा वा संस्तदत्ययः" इत्येतावन्मात्रान्न लभ्यत इत्यर्थः। चोदयति—ननु चोक्तमिति। उक्तं दिङ्नागेन—

साध्यधर्मो यतो हेतुस्तदाभासश्च भूयसा॥ इति।

तदेतत् परिहरति—उक्तमेतदिति। न पुनः पक्षधर्म एवेत्यर्थः। अवधारणमबुद्धा शङ्कते—अथापीति। अवधारणार्थालाभेनोत्तरमाह—सत्यमर्थादिति। ननु पक्षधर्मत्वनिवृत्त्यैव पक्षाव्यापकत्वं गम्यते, न ह्यव्यापको भवत्यपक्षधर्मनिवृत्तिमान् इत्यत आह—अपक्षधर्मनिवृत्तिमात्रत्वेन चेति। अत्यन्तनिवृत्तिनिषेधेन वृत्तिमात्रं स्यात् नैकान्तिकी वृत्तिरित्यर्थः। चोदयति—न प्राप्त इति। परिहरति—न, अवधारणस्येति। हेतुहेत्वाभासावेव पक्षधर्मो नान्य इति नियमज्ञापनार्थमवधारणमिष्टं भवद्भिरित्यर्थः।

शङ्कते—अथोभयेति। निराकरोति—तथाऽपि सन् सजातीय इति। तदेतत् पूर्वमेव

(१) "विपक्षे" इति ख०। (२) "व्यापके" इति ख०। (३) "युक्तम्" इति ख-पु० नास्ति।

## न्यायवार्त्तिकम्

व्याप्त्यव्याप्त्योः सामान्येनाभिधानाद्द्वेधा चेति प्रमत्तवाक्यम्। अथ मन्येत सन् सजातीय इत्यवधारणार्थमारभ्यत इति? अवधारणाऽर्थो युक्त आरम्भः अवधारणं न युक्तम्। कथमिति? यदि तावदेवमवधार्यते सन्नेव सजातीय इति, प्रयत्नानन्तरीयकत्वादिस्ते न हेतुः, यस्मात् प्रयत्नानन्तरीयकत्वादिः सन्नसन्नपि द्विधा चेति एतदवधारणार्थबाधितम्। न हि भवति ब्राह्मणमेव भोजय क्षत्रियं चेति। अथ सजातीय एव सन्नित्यवधार्यते तथापि पूर्वोत्तरे बाधिते भवतः। कथम्? एकमवधारणार्थबाधितम् एकं गम्यमानत्वात्। अथ पुनर्द्वेधा चेत्यवधारणार्थम्? अत्रापि किमवधार्यते किं सजातीय एव द्विधा द्विधैव सजातीय इति। यदि तावत् सजातीय एव द्विधा नान्यत्र पक्षे(१) तदत्यये तद्द्विधेत्युक्तं भवति। यद्येवं सन् सजातीय इति न कर्तव्यम्, प्राप्त्यर्थंनावधारणेनाऽऽद्यपदे(२) सजातीये सम्भवस्योक्तत्वात्। द्विधा चेत्यन्यपदे(३) द्विधा निवृत्तिपरत्वात्, द्विधा चेत्यभिधानात् सम्भवो गम्यत इति सन् सजातीय इति सर्वथा न वक्तव्यम्। सजातीय एव द्विधा चेत्यनेनैवावधारणेन पक्षवृत्ति(४)र्लभ्यत इति धर्म एव पक्षस्येति व्याप्त्यर्थमवधारणमयुक्तम्। अथ माभूत् सर्वपदावधारणव्याघात इति नावधारणम्, तथापि मध्यमे द्वे पदे अपि न कर्तव्ये। सोऽयं गृह(५)प्रवेशाक्षितारकानिर्गमन्याय इति। अथ पुनर्द्विधैव सजातीय इति। तथापि कृतकत्वादिर्न हेतुः, न ह्यसौ सजातीये द्विधैव। त्रिलक्षणं च हेतुं ब्रुवाणेन

## न्यायवार्त्तिकतात्पर्य्यटीका

व्याख्यातप्रायम्। द्वेधा चेति सर्वथा न वक्तव्यमिति। सन् सजातीय इत्यस्योपादानेऽनुपादाने चेत्यर्थः। सन् सजातीय इति नोपादातव्यमिति यदुक्तं तत्र शङ्कते—अथ मन्येतेति, निराकरोति—अवधारणेति, यद्यवधारणं युज्येत अवधारणार्थो युक्त आरम्भः, तदेव त्वयुक्तमित्यर्थः। आद्ये पद इति, पक्षस्य धर्म इत्यस्मिन् पद इत्यर्थः। अन्यपदे इति। अन्ये पदे ययोः पक्षधर्मत्वविपक्षासत्त्वयोस्ते तथोक्ते। तत्र द्वैविध्यं निराक्रियत इति। सन् सजातीय इति सर्वथेति? सजातीये द्वेधा चेति पदोपादानेऽनुपादाने चेत्यर्थः। सजातीय एव द्वेधेत्यनेनैवेति। हेतुतदाभासयोरौत्सर्गिके पक्षधर्मत्वे स्थित इति भावः। शङ्कते—अथ माभूदिति सजातीय एव द्वेधेति नावधारणमित्यर्थः। निराकरोति—तथाऽपीति। सन् सजातीये द्वेधेति मध्यमपदे इत्यर्थः। तदेवं सजातीये एव द्वेधेत्यवधारणं दूषितम्, संप्रति द्वितीयमवधारणं शङ्कते—अथ पुनरिति। निराकरोति—तथाऽपीति। तथापि पक्षैकदेशवृत्तिरपि हेतुः प्रसक्तः, यदि च तदत्यय एवेति नावधार्येत ततोऽनैकान्तिकोऽपि हेतुः स्यादिति दोषः।

---

(१) ख-पु० "न" इत्यधिकम्। (२) "आद्ये पदे" इति तात्पर्यं। (३) ख-पु०—एकारो नास्ति। क-पुस्तके तु—"अन्यपदं" इत्येवं पाठो दृश्यते। (४) "पक्षव्याप्ति-" इति ख०। (५) "गड्डु" इति ख०।

## न्यायवार्त्तिकम्

स्वसिद्धान्तोपात्तयोर्द्विपद्युक्तयोरहेतुत्वमिति प्राप्तम्। व्यतिरेकी च न हेतुरिति प्राप्तम्। नैव हेतुरिति चेत् कुत(१)स्तस्य हेतुत्वे यत्न इत्यनुत्तरम्। अथ पुनरवधारणानि न क्रियन्ते तथापि पक्षैकदेशवृत्तिरनैकान्तिकश्चानुपक्त इति।

एतेन "ग्राह्यधर्मस्तदंशेन व्याप्तो हेतुरि"ति प्रत्युक्तम्। अनेनाव्यापकादिर्लभ्यत इति उक्तोत्तरमेतदपीति। असंस्तदत्यय इत्येतदपि विपक्षे नास्तीत्यनेन समानमिति।

तादृगविनाभाविधर्मोपदर्शनं हेतुरित्यपरे, तादृशा विना न भवतीत्यनेन किल द्वयं लभ्यते—विपक्षासत्त्वं तादृशसत्त्वं च, उपदर्शनग्रहणेन किल पक्षे सत्त्वं लभ्यत इत्येवं त्रिलक्षणप्रविभावितात्मा पक्षो लभ्यत इति। यत्तावत्तादृगविनाभाविग्रहणाद्विपक्षेऽसत्त्वं तादृक्सत्त्वं च लभ्यत इति तत् न युक्तम्। तादृशा विना न भवतीति एतस्माद्विपक्षेऽसत्त्वं गम्यते तादृशे तु सम्भव इत्येतदेव कुतः? न ह्ययं नियमो यो विपक्षे नास्ति सोऽवश्यं तज्जातीयेऽस्तीति। एवं च श्रावणत्वाद्यपि हेतुः प्राप्तः, श्रावणत्वाद्यपि तादृशा विना न भवतीति। भवतु तावत्तादृगविनाभाविग्रहणे तत्तज्जातीये सम्भवः स पुनः पक्षे सम्भवतीत्येतत् कुतः। ननूपदर्शनग्रहणादेतल्लभ्यते? न तल्लभ्यते, उपदर्शनग्रहणस्याभिधानार्थत्वाद् उपदर्शनग्रहणमभिधानार्थम्। उपदर्श्यतेऽनेनेति न पुनरस्यैतत् सामर्थ्यमस्ति पक्षेऽन्यत्र चेति। क्व पुनरन्यत्र स्यात्? यत्र सम्भवः, क्व चास्य सम्भवः? तज्जातीये। तस्मादेतदुक्तम्भवति तज्जातीयाविनाभाविनः तज्जातीय एवाभिधानं हेतुरिति। एवं च ते चाक्षुपत्वं हेतु-

## न्यायवार्त्तिकतात्पर्य्यटीका

दिङ्नागस्यैव प्रदेशान्तरहेतुलक्षणम्—ग्राह्यधर्मः पक्षधर्मः, तदंशेन तस्यैव पक्षस्यांशेन साध्यधर्मसामान्येन, व्याप्तो हेतुरिति। तदेव तद्धेतुलक्षणमुपन्यस्यास्मिन् पूर्वोक्तं दोषमतिदिशति—एतेनेति। अतिदेशमेव स्फुटयति—अव्यापकादिरिति। यथाश्रुतलक्षणे पक्षाव्यापकस्य हेतुत्वं तदंशेऽतिव्याप्तम् इत्यस्य विवरणालोचनेन सपक्षसत्त्वं विपक्षाच्च व्यावृत्तिरित्यर्थः। तथा च पूर्वोक्तदोषप्रसङ्ग इत्यर्थः। सिंहावलोकितन्यायेन दूषयति—असंस्तदत्यय इतीति।

अन्येषां हेतुलक्षणं दूषयितुमुपन्यस्यति—तादृगिति। तदेतद् व्याचष्टे—तादृशेति। किलकारोऽरुचौ। पक्षधर्म इति च हेतोरभिधानम्, तेन त्रिलक्षणप्रविभागात्मा(२)हेतुरित्यर्थः। दूषयति—यत्तावदिति। श्रावणत्वाद्यपीति, तदुक्ताऽसाधारण इत्यर्थः। यस्तु तादृशा विनाभावीति विपक्षे सत्ताप्रतिषेधात् पक्षे सत्त्वं गम्यते विशेषनिषेधस्य शेषाभ्यनुज्ञाविषयत्वादिति मन्येत तं प्रत्याह—भवतु तावदिति। एकदेशाभ्यनुज्ञानेऽपि विशेषनिषेधस्योपपत्तेर्न समस्ताभ्यनुज्ञाने प्रमाणमस्तीति भावः। चोदयति—ननूपदर्शनग्रहणादिति। परिहरति—न तल्लभ्यत इति।

---

(१) "कृत" इति ख०। (२) वार्त्तिके "त्रिलक्षणप्रविभावितात्मा" इति पाठः।

## न्यायवार्त्तिकम्

भवति। न हि चाक्षुषत्वमनित्यत्वेन विनाभावि। उपेत्य वा भवतु तादृगविनाभाविनो धर्मस्य पक्ष उपदर्शनमिति। तथापि पक्षैकदेशवृत्तिं केन निराकरोषि ? उपदर्शनग्रहणेनेति चेत्, न, तस्य सम्भवमात्रज्ञापनार्थत्वात्—अथ मन्येत उपदर्शनग्रहणेन व्याप्तिर्लभ्यत इति न युक्तम्, उपदर्शनग्रहणस्य सम्भवमात्रज्ञापनार्थत्वात्। उपदर्शनग्रहणेन सम्भवमात्रं ज्ञाप्यते, पक्षे स पुनर्व्यापक इति न युक्तम्। अथात्रापि केनचिन्न्यायेनावधारणानि क्रियेरन् तान्यव्यापकहेतु-निराकरणेऽसमर्थानीति पूर्ववत् प्रसङ्गः।

यत्त्विदमुदाहरणमेतस्मिन् प्रयत्नानन्तरीयकत्वादिरनित्यत्वस्याग्नेर्धूम इति। तत्र धूम-स्तावदग्नेरप्रतिपादक इत्युक्तम्। प्रयत्नानन्तरीयकत्वमप्यहेतुः, कुतः ? प्रयत्नानन्तरीयकत्वस्य पक्षावृत्तित्वात्, न हि प्रयत्नानन्तरीयकत्वं शब्दधर्मः, न हि कश्चिच्छब्दः प्रयत्नानन्तरीयकोऽस्ति, संयोगविभागयोनित्वाच्छब्दस्य। अथ पारम्पर्यक्रमेण प्रयत्नः शब्दकारणम्, पारम्पर्येण सर्वेऽर्थाः शब्दकारणमिति विशेषणमयुक्तं प्रयत्नानन्तरीयकत्वादिति, अनित्यः शब्दो यतस्तदुत्पत्तेरिति वक्तव्यम्। यच्चेदं प्रयत्नानन्तरीयकत्वं शब्दस्यानित्यत्वे कारणं भावाभिधानेनोच्यते किं पुनस्तत् ? किं जन्म उतोपलब्धिरिति ? यदि तावज्जन्म, तन्नैव समर्थमिति प्रयत्नानन्तरीयकत्व-ग्रहणं व्यर्थम्, न हि भवत्यनित्यः शब्दो देवदत्तकृतकत्वादिति। अत एवं वक्तव्यं जन्म-वत्त्वादिति। यदि चेदं जन्म व्यभिचारि भवेत्, ततः प्रयत्नानन्तरीयकत्वग्रहणमर्थवत्। किं कारणम् ? व्यभिचारिणि विशेषणान्यर्थवन्ति भवन्ति। अथोपलब्धिः प्रयत्नानन्तरीयक-त्वादित्यनेन भावाभिधानेनोच्यते एवमप्युपलब्धेरेव सामर्थ्यमस्तीति व्यर्थं विशेषणम्। न ह्युप-लभ्यमानं द्वेधा भवति नित्यमनित्यं प्रयत्नानन्तरीयकमन्यथा चेति(१)। अथ ब्रूपे प्रयत्नानन्तर-

## न्यायवार्त्तिकतात्पर्यटीका

न हि चाक्षुषत्वमिति। बौद्धानां रूपत्वादिजातेर्नित्याया अभावाद् न चाक्षुषत्वमनित्यत्वेन विना भवतीत्यर्थः। यस्तु मन्येत विशेषनिषेधस्य शेषमात्राभ्यनुज्ञाहेतुत्वेनागृह्यमाणविशेषत्वात् पक्षसत्ताभ्यनुज्ञानं तथा चोपदर्शनपदेन पक्षे हेतोः सत्तोपदर्शनं भवतीति तं प्रत्याह—उपेत्य वेति। सुबोधम्।

तदेवं लक्षणं दूषयित्वा तदुदाहरणं दूषयति—यत्त्विदमिति। एतस्मिन् हेतुलक्षण इत्यर्थः। प्रयत्नानन्तरीयकत्वं प्रयत्नकारणकत्वम्, तत् साक्षात्पारंपर्येण वा, तत्र प्रथमे कल्पे दूषणमाह—प्रयत्नानन्तरीयकत्वस्येति। द्वितीयकल्पमाशङ्क्य दूषयति—अथेति। प्रयत्नग्रहणमपार्थकमित्यर्थः; भावप्रत्ययवाच्यं विकल्प्य दूषयति—यच्चेदमिति। एवमप्युपलब्धेरेवेति। न हि बौद्धराद्धान्ते

(१) तात्पर्ये "प्रयत्नानन्तरमन्यथा चेति" इति पाठः।

## न्यायवार्त्तिकम्

मुपलभ्यमानं घटत्वं नित्यमिति, त्वयैवैतद्व्यभिचारितमिति शब्दानित्यत्वानुमितौ प्रयत्नानन्तरीयकत्वं न हेतुः, अव्यापकं च प्रयत्नानन्तरीयकत्वम्, शब्दराशेः पक्षीकृतत्वात्। अथ शब्दविशेषं पक्षीकृत्योच्यते, तत्राप्याद्य एव प्रयत्नानन्तरीयकत्वं सम्भवति, न द्वितीयादिष्विति अव्यापकत्वमनिवृत्तम्। अथ यः प्रयत्नानन्तरीयकः सोऽनित्य इति तथाप्यन्यो हेतुर्वक्तव्यः। हेतोः पक्षविशेषणत्वेनोपात्तत्वात्। यदप्युक्तमप्रयत्नानन्तरीयकस्य त्रयी गतिरिति किञ्चिन्नित्यमाकाशाद्येकेषाम्, किञ्चिदनित्यं विद्युदादि, किञ्चिदसदेवाकाशकुसुमादि। इदं महानैयायिकत्वं महावादित्वं च यत्तावदसदप्रयत्नानन्तरीयकं च किञ्चिच्चेति चित्रम्। नित्यं तु किञ्चिद्भवति न पुनरप्रयत्नानन्तरीयकत्वम्। न ह्याकाशं न प्रयत्नानन्तरीयकमिति शक्यं वक्तुम्, अप्रयत्नानन्तरीयकस्य जन्मविशेषितत्वात्, न चाकाशस्य जन्मास्ति, तस्मान्न प्रयत्नानन्तरीयकं नाप्यप्रयत्नानन्तरीयकमाकाशमिति। एतेनाभावो व्याख्यातः—अभावेऽप्येवमेवेति। तदेवमेतानि न हेतुलक्षणानि सम्भवन्तीदमेवार्षं हेतुलक्षणं न्याय्यमिति ॥ ३९ ॥

## न्यायवार्त्तिकतात्पर्य्यटीका

किञ्चिदुपलभ्यमानं नित्यमस्ति येनोपलब्धिर्विशेष्येत इत्यर्थः। प्रयत्नानन्तरमन्यथा चेति। यद्यावदुपलब्धिकर्म तत्सर्वं प्रयत्नादेव पुरुषव्यापारादेवोपलभ्यते नान्यथेत्यर्थः। शङ्कते—अथेति। अस्माकं नैयायिकानामिति भावः। उत्तरम्—त्वयैवेति(१)। अस्मद्दर्शनं चेदास्थाय त्वया बौद्धेनोच्यते ततः प्रयत्नग्रहणेनाप्यनैकान्तिकत्वं तदवस्थमेवेत्यर्थः। अव्यापकं चेति। न हि दवदहनाभिघातप्रस्फुटद्वेणुदलविभागजन्मा ठात्कारोऽस्मदादिप्रयत्नसाध्य इत्यर्थः। शङ्कते—अथेति। वर्णात्मकमित्यर्थः। निराकरोति—तत्रापीति। पारम्पर्य्येणापि प्रथम एव वर्णः प्रयत्नानन्तरीयकः, न द्वितीयादयः। अतिपारम्पर्याश्रयणे त्वतिप्रसङ्गः, प्रायेण तस्य तत्र तत्र सुलभत्वादिति। शङ्कते—अथ य इति। विशेषः प्रयत्नानन्तरीयकत्वं धर्मिविशेषणम्, प्रयत्नानन्तरीयकत्वं सामान्यं च हेतुरित्यर्थः। निराकरोति—तथाऽप्यन्य इति। न हि भवतामस्माकमिव विशेषातिरिक्तमस्ति वस्तु, सामान्यं सद् यो हेतुः स्यात्। न च कल्पनारोपितं हेतुः सम्यग्ज्ञानस्य भवितुमर्हति, न चात्यन्तासतः कल्पनाऽपि संभवतीति भावः। तदेवमुदाहरणं दूषयित्वा प्रसङ्गेन परेषामुदाहरणविचारं दूषयति—यदप्युक्तमिति। यत् खलु सर्वसामर्थ्यरहितं तदाश्रितानाश्रितभावाभावधर्मवन्न भवतीत्यर्थः। नित्यं तु किंचिद्भवतीति। तस्य धर्मयोगः संभवत्येव, न त्वस्याप्यप्रयत्नानन्तरीयकत्वं त्वप्रत्ययाभिधेयं हि जन्म प्रयत्नेन प्रयत्नादन्येन वा विशेषणीयम्। यस्य तु जन्मैव नास्ति तस्य तद्विशेषणं दूरोत्सारितमित्यर्थः। एतेनाभाव

---

(१) आदर्श "यैवेति" इति पाठः, स तु न सङ्गच्छते, वार्त्तिके ताहक्पाठाभावात्।

**( सू० )—साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम् ॥३६॥**

### न्यायभाष्यम्

साध्येन साधर्म्यं समानधर्मता। साध्यसाधर्म्यात् कारणात्तद्धर्मभावी

### न्यायवार्त्तिकम्

साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणमिति सूत्रम्। अस्योदाहरणोपलक्षणमर्थः। साध्यस्य साधर्म्यं साध्येन समानधर्मता। अत्रापि साध्येनैव साधर्म्यं न पुनरसाध्येनापि,

### न्यायवार्त्तिकतात्पर्य्यटीका

इति। नैयायिकाभिमतोऽप्यभावो व्याख्यातः, तस्यापि हि प्रागसतः स्वकारणे न समवाय इति जन्म नास्तीति न तद्विशेषणयोग इत्यर्थः। प्रकृतमुपसंहरति—तदेवमिति। ३९॥

हेतावुक्ते नाव्याप्तोऽसौ साध्यधर्मेण हेतुभावे व्यवतिष्ठते(१), न च व्याप्तिप्रदर्शनमुदाहरण-मन्तरेणेति हेतुलक्षणानन्तरं क्रमप्राप्तमुदाहरणलक्षणमाह—

साध्य—रणम् (सू०३६)॥ सूत्रमित्युदाहरणसामान्यलक्षणमप्यनेन सूचितमिति दर्शितम्। अस्य तात्पर्यमाह—अस्येति। दृष्टान्तोऽर्थरूपो(२) नोदाहरणस्य वचनात्मकस्य स्वरूपतो लक्षणं सम्भवति, तस्मात् स्वाभिधायकवचनोपलक्षकत्वेन लक्षणत्वं सामानाधिकरण्यं च भजत इत्यभि-सन्धिनोक्तमुदाहरणोपलक्षणमिति। अनेन च समानजातीयेभ्यः प्रतिज्ञादिभ्योऽसमानजातीये-भ्यश्च प्रमाणादिभ्य उदाहरणं व्यवच्छिन्नं भवति। साध्येन साधर्म्यमित्यादि भाष्यम्, तस्यार्थः 'साध्येन' धर्मिणा शब्देन, 'साधर्म्यं' दृष्टान्तस्य स्थाल्यादेः कृतकत्वम्, तद्धि नित्य-त्वेन साध्ये च शब्दे दृष्टान्ते च स्थाल्यादौ समानम्, तस्मात् कारणात् प्रयोजकात्, तद्धर्म-भावी तस्यैव साध्यस्य शब्दस्य, धर्मो धर्मान्तरम्, येन विशिष्टः शब्दः सिषाधयिषितोऽनित्य-त्वेन, तदनित्यत्वं तद्धर्मः, स एव भावस्तद्भावः, सोऽस्यास्तीति तद्धर्मभावी स्थाल्यादि-रनित्यत्वधर्मवानिति यावत्। तेन तादृशा दृष्टान्तेनोपलक्षितं तद्विषयं वचनमुदाहरणमिति। तत्र वार्तिककारः सूत्रपदं व्याचक्षाण एव फलतो भाष्यं व्याचष्टे—साध्येति। उदाहरणसाधर्म्या-दित्यस्य व्याख्यानं साध्यसाधर्म्यादित्यत्रापि योजयति—अत्रापीति। साध्यशब्देनैव कृतकत्वं

### वृत्तिः

क्रमप्राप्तमुदाहरणं लक्षयति—( साध्यसाधर्म्येति )।

दृष्टान्त उदाहरणमिति लक्षणम्। दृष्टान्तो दृष्टान्तवचनं दृष्टान्तकथनयोग्यावयव

---

(१) हेतावित्यादि। अत्र भावे सप्तमी, तथा च हेतौ उक्ते सति उदाहरणलक्षणमाह इत्यन्वयः। "असौ" हेतुः "साध्यधर्मेण" वह्न्यादिना "अव्याप्तः" तन्निरूपितव्याप्तिरहितः सन् "हेतुभावे न व्यवतिष्ठते" इति समुदितान्वयपर्यवसितार्थः। (२) "दृष्टान्तानुरूपो" इति क०।

## न्यायवार्त्तिकम्

साधर्म्यमेव साध्येन न(१) पुनर्वैधर्म्यमपि, यस्मात् साध्यसाधर्म्यात् तद्धर्मभावी भवति। किं कुतश्चित् साध्यसाधर्म्यात् तद्धर्मभावी न भवति? न भवत्यपि, यथा अमूर्त्तत्वादेः कर्मणः, तस्मात् साध्यसाधर्म्याद्यत्र तद्धर्मो भवति स भवति तद्धर्मभावी, सोऽयं दृष्टान्तः साध्यसाधर्म्यात् तद्धर्मभावित्वेन विशेषणेन युज्यमान उदाहरणं भवति, उदाह्रियतेऽनेन धर्मयोः साध्यसाधनभावः इत्युदाहरणम्।

## न्यायवार्त्तिकतात्पर्य्यटीका

साधर्म्यं दृष्टान्तस्य, नासाध्येन विपक्षेणाकाशादिना नित्येन, ततो हि कृतकत्वं व्यावृत्तमिति, तथा च सव्यभिचारो व्यवच्छिन्नो भवति। साधर्म्यमेवेति भागासिद्धो व्यवच्छिन्नः। यस्मात् साध्यसाधर्म्यात्(२) तद्धर्मभावी भवतीत्येतत् सोऽयं दृष्टान्त उदाहरणमिति यावद्वाक्यं न समाप्यते तावदर्द्धोक्त एव पृच्छति—किं कुतश्चिदिति। अवधारणद्वययोगिनः साध्यसाधर्म्याद्दृष्टान्तोऽवश्यमेव तद्धर्मभावी भवतीति गतार्थं तद्धर्मभावीत्येतदिति भावः। उत्तरम्—न भवत्यपीति। यथा नित्ये शब्दे साध्ये, अमूर्त्तत्वादेः साध्येन शब्देन कर्मणः साधर्म्यात् कर्म न तद्धर्मभावि भवति नित्यं न भवतीत्यर्थः। साध्येनैवेत्यवधारणेनैवैतदुदाहरणं प्रत्युक्तमिति। शिष्योपाध्यायश्यामत्वमैत्रतनयत्वादयोऽत्रोपाधिकसम्बन्धा उदाहार्याः। हेतुलक्षणे तु सामान्यलक्षणापेक्षं विशेषलक्षणमिति नातिव्याप्तिः। अत्र साध्यसाधर्म्यग्रहणेन साधनविकलमनुदाहरणं भवतीत्युक्तं भवति। यथा नित्यः शब्दोऽमूर्त्तत्वात् परमाणुवदिति तद्धर्मभावीत्यनेन साध्यविकलं परास्तम्, यथा नित्यः शब्दो मूर्त्तत्वात् कर्मवदिति। एतेनोभयविकलमपि परिहृतम्, यथा नित्यः शब्दोऽमूर्त्तत्वात् घटवत्। पञ्चम्युपादानेन च साध्यसाधर्म्यप्रयुक्तं तद्धर्मभावित्वं यत्र वचने प्रदर्श्यते तदेवोदाहरणं नान्यदिति दर्शितं भवति। प्रयोजकत्वं च साध्यसाधर्म्यस्य हेतोः स्वाभाविकः सम्बन्धो व्याप्यत्वमिति यावत्। प्रयोज्यत्वं च साध्यसाधर्म्यस्य व्यापकत्वमिति यावत्। तेनाप्रदर्शितान्वयविपरीतप्रदर्शितान्वययोरनुदाहरणत्वमुक्तं भवतीति, तद्यथा अनित्यः शब्दः उत्पत्तिमत्त्वात् पटवदिति। यो योऽनित्यः स स उत्पत्तिमान् यथा घट इति। समाख्यानिर्वचनसामर्थ्यात् सामान्यलक्षणमप्यनेन सूचितमित्याशयवता भाष्यकृता समाख्यानिरुक्तिः कृता(३) तां वार्त्तिककारो दर्शयति—उदाह्रियतेऽनेनेति।

## वृत्तिः

इत्यर्थः, तेन दृष्टान्तस्य सामयिकत्वेनासार्वत्रिकत्वेऽपि न क्षतिः। योग्यतावच्छेदकन्व-

(१) ख-पु॰ "न" इति नास्ति। (२) क-पु॰ "साध्यसाधर्म्यम्" इति पाठः। (३) एतत्-सूत्रभाष्यस्यैव शेषांशे "उदाह्रियते ऽनेन" इत्यादिना।

## न्यायभाष्यम्

दृष्टान्त इति। तस्य धर्मस्तद्धर्मः, तस्य—साध्यस्य। साध्यं च द्विविधं धर्मिविशिष्टो वा धर्मः शब्दस्यानित्यत्वम्, धर्मविशिष्टो वा धर्मी अनित्यः शब्द इति। इहोत्तरं तद्ग्रहणेन गृह्यत इति। कस्मात्? पृथग्धर्मवचनात्। तस्य धर्मस्तद्धर्मस्तस्य भावस्तद्धर्मभावः स यस्मिन् दृष्टान्ते वर्तते स दृष्टान्तः साध्यसाधर्म्यादुत्पत्तिधर्मकत्वा(१)त्तद्धर्मभावी भवति, स चोदाहरणमिष्यते। तत्र यदुत्पद्यते तदुत्पत्तिधर्मकम्। तच्च भूत्वा न भवति आत्मानं जहाति निरुध्यत इत्यनित्यम्। एवमुत्पत्तिधर्मकत्वं साधनमनित्यत्वं साध्यम्।

## न्यायवार्त्तिकम्

ननु च करणकारकपरिग्रहाद्वचनमुदाहरणं दृष्टान्तश्चार्थो न चानयोः सामानाधिकरण्यं युज्यते, न हि विषाणादिमदित्यभिधानं गवा समानाधिकरणं भवति। नैष दोषः वचनविशेषणत्वेन दृष्टान्तस्योपादानान्न स्वतन्त्रो दृष्टान्त उदाहरणम्। किन्तु साध्यसाधर्म्यात् तद्धर्मभावित्वे सति अभिधीयमान इति। तद्धर्मभावी—तस्य धर्मः तद्धर्मः, तस्येति साध्यस्य। साध्यञ्च द्वेधा भवति धर्मो धर्मी च। एकदा धर्मो विशेषणत्वेनान्यदा धर्मी विशेषणत्वेनेति तस्येति धर्मिग्रहणं युक्तम्, न, पृथग् धर्मस्य ग्रहणात्, यस्माद्धर्मिणो धर्मा उत्पत्तिधर्मकत्वादयः न धर्मस्य, धर्मे च साध्ये उदाहरण(२)साधर्म्यादिति व्याघातः, न हि धर्मस्योदाहरणेन किञ्चित् साधर्म्यं किन्तु धर्मिणः,

## न्यायवार्त्तिकतात्पर्य्यटीका

चोदयति—ननु चेति। परिहरति—नैष दोष इति। वचनस्य विशेषणत्वेनोपलक्षणत्वेनेत्यर्थः। अभिधीयमान इति चाभिधानोपलक्षणपरं नाभिधेयपरम्, असामानाधिकरण्यदोषस्य तादवस्थ्यात्। तद्धर्मभावीति सूत्रावयवव्याख्यानपरं भाष्यम्—तस्य धर्म इत्यादि। अत्र चोत्तरमिति पाठाभिप्रायं (३) तदेतद्भाष्यमनुभाष्य व्याचष्टे—तस्य धर्म इति। तस्य धर्मस्तद्धर्म इति हि धर्मस्य संबन्धित्वेन पृथग्वचनम्। न च धर्म एव धर्मस्य, नापि धर्मान्तरं धर्मस्य, किं तु धर्मिण इत्यर्थः। भाष्यकारीयामनुपपत्तिमुक्त्वा वार्त्तिककारः स्वकीयामप्याह—धर्मे च

## वृत्तिः

वयवार्थानन्वितार्थकावयवत्वम्। तच्च द्विविधम् अन्वयिव्यतिरेकिभेदात्। तत्रान्वय्युदाहरणं लक्षयति साध्यसाधर्म्यात्तद्धर्मभावीति। अन्वय्युदाहरणमिति शेषः।

---

(१) "-दुत्पत्तिधर्मकत्वा-" इत्यंशः ख, भा, ग, ज, आ० पुस्तकेषु नास्ति। (२) "धर्मे च साध्यमुदाहरणे" इति क-पु० पाठः। (३) पाठाभिप्रायमिति—भाष्ये "धर्मिविशिष्टो वा धर्मः धर्मविशिष्टो वा धर्मी" इत्येवं यः साध्यस्य द्विधा पाठः कृतः, तदनुसारेण यदुत्तरं धर्मविशिष्टधर्मिरूपम्, तदभिप्रायकमितत्यर्थः।

## न्यायभाष्यम्

साऽयमेकस्मिन् द्वयोर्धर्मयोः साध्यसाधनभावः साधर्म्याद्व्यवस्थित उपलभ्यते, तं दृष्टान्त उपलभमानः शब्देऽप्यनुमिनोति—शब्दोऽप्युत्पत्तिधर्मकत्वादनित्यः स्थाल्यादिवदिति, उदाह्रियतेऽनेन(१) धर्मयोः साध्यसाधनभाव इत्युदाहरणम् ॥ ३६ ॥

## ( सू॰ )—तद्विपर्ययाद्वा विपरीतम् ॥ ३७ ॥

दृष्टान्त उदाहरणमिति प्रकृतम्। साध्यवैधर्म्यादतद्धर्मभावी(२) दृष्टान्त उदाहरणमिति। अनित्यः शब्द उत्पत्तिधर्मकत्वात् अनुत्पत्तिधर्मकं नित्यमात्मादि, सोऽयमात्मादिर्दृष्टान्तः साध्यवैधर्म्यादनुत्पत्तिधर्मकत्वादतद्धर्मभावी—योऽसौ साध्यस्य

## न्यायवार्त्तिकम्

साध्यसाधर्म्यं चोदाहरणस्य धर्म्यंश एव, साध्ये चोपसंहारो धर्मिण्येव, तस्माद्धर्मी साध्य इति। तस्य धर्मिणः साध्यस्य यो धर्मः साध्यः, स यस्मिन् दृष्टान्ते भवति विद्यते, स दृष्टान्त उदाहरणम्। उदाहरणं स्थाल्यादिद्रव्यमिति तदुत्पत्तिधर्मकं चानित्यं दृष्टमिति ॥ ३६ ॥

तद्विपर्ययाद्वा विपरीतम्। साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति। उदाहरणमवीतहेतौ द्रष्टव्यमिति।

## न्यायवार्त्तिकतात्पर्यटीका

साध्य इति। अनेन हेतूदाहरणोपनयलक्षणैर्व्याघात उक्तः। भाष्यं साध्यसाधर्म्यादुत्पत्तिधर्मकत्वादिति, तद्व्याचष्टे—तस्य धर्मिण इति। तद्धर्मभावी भवतीति, तदनुपपन्नम्, न हि कृतकत्वात् स्थाल्यादेरनित्यत्वं भवति जायते बीजादिवाङ्कुर इत्यत उक्तं—भवति विद्यते ॥३६॥

वैधर्म्योदाहरणस्य लक्षणम्—तद्वि—तम् ( सू , ३७ ) ॥ अनुवृत्तेन पूरयित्वा सव्याख्यानसूत्रं पठति—साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणमिति। सात्मकतया साध्येन जीवच्छरीरेण वैधर्म्याद् घटादेर्दृष्टान्तस्य सात्मकत्वसाधर्म्यविरहादिति यावत्। तस्य साध्यस्य जीवच्छरीरस्य धर्मः प्राणादिमत्त्वं तद्धर्मः, स एव भावस्तद्धर्मभावः, सोऽस्यास्तीति तद्धर्मभावी,

## वृत्तिः

परे तु सम्पूर्णं सूत्रमन्वय्युदाहरणलक्षणमेव, सामान्यलक्षणन्तूह्यमित्याहुः।

साध्यसाधर्म्यात् साध्यसहचरितधर्मात् प्रकृतसाधनादित्यर्थः। तं साध्यरूपं धर्मं भावयति,तथा च साधनवत्ताप्रयुक्तसाध्यवत्तानुभावकोऽवयवः साध्यसाधनव्याप्त्युपदर्शकोदाहरणमिति यावत् ॥३६॥

(१) "तेन" इति क, ज, ञ, ग॰। (२) "साध्यवैधर्म्यात्तद्धर्मभावी" इति ञ॰।

## न्यायभाष्यम्

धर्मोऽनित्यत्वं स तस्मिन् न भवतीति। अत्रात्मादौ दृष्टान्त उत्पत्तिधर्मकत्वस्याऽभावादनित्यत्वं न भवतीति उपलभमानः शब्दे विपर्ययमनुमिनोति उत्पत्तिधर्मकत्वस्य भावादनित्यः शब्द इति। साधर्म्योक्तस्य हेतोः साध्यसाधर्म्यात्तद्धर्मभावी दृष्टान्त उदाहरणम्। वैधर्म्योक्तस्य हेतोः साध्यवैधर्म्यादतद्धर्मभावी दृष्टान्त उदाहरणम्।

## न्यायवार्त्तिकम्

अन्ये तु साध्यसाधर्म्यात् तद्धर्मभावित्वं दृष्टान्तस्येति सूत्रं पठन्ति। तेषां त्वयमभिप्रायः—दृष्टान्तोदाहरणयोर्मा भूदैक्यमिति। किं पुनस्तद्धर्मभावित्वं साध्यसाधनाभ्यां योगः, साध्यसाधनयोगे च तद्धर्मभावी भवति, अतो भावाभिधानेन साध्यसाधनाभ्यां योगोऽभिधीयत इति। एतच्च सूत्रमपरे दूषयन्ति। अस्माकन्तु नायं सूत्रपाठः, तस्मान्नायं दोष इति। एतस्मिन्नपि पाठे

## न्यायवार्त्तिकतात्पर्य्यटीका

न तद्धर्मभावी अतद्धर्मभावी प्राणादिरहितो घटादिरिति यावत्। एतदुक्तं भवति यत्र घटादौ साध्यधर्माभावप्रयुक्तः साधनधर्माभावः स घटादिर्वैधर्म्यदृष्टान्तः तद्विषयः शब्द उदाहरणमिति। सूत्रस्थश्च वाशब्दः समुच्चये वेदितव्यः। व्यतिरेकविषयत्वाद्वैधर्म्योदाहरणस्येति। अत्र भाष्यकारेणान्वयव्यतिरेकी पूर्वसूत्रोदाहृतोऽत्राप्युदाहृतः, साधनधर्माभावप्रयुक्तत्वं च साध्यधर्माभावस्योक्तं तच्चायुक्तम्, अन्वयव्यतिरेकिणि हेतौ सत्यपि वैधर्म्ये साधर्म्योदाहरणमेवोचितम्, तत्र तत्पूर्वकत्वाद् वैधर्म्यप्रतीतेः। ऋजुमार्गेण सिध्यतोऽर्थस्य वक्रेण साधनायोगात्। व्याप्यव्यापकभावश्च यादृशो भावयोस्तदभावयोस्तद्विपरीतो बोद्धव्यः, अन्यथा सपक्षैकदेशवर्त्ती न हेतुः स्यादिति मन्यमानो वार्त्तिककार आह—उदाहरणमवीतहेताविति। तच्चास्माभिः सूत्रं योजयद्भिरुक्तमिति।

अत्राचार्यदेशीयानामनार्षसूत्रपाठदूषणं नास्माकमार्षसूत्रपाठेऽस्तीति प्रतिपिपादयिषुराचार्यदेशीयानां पाठमभिप्रायं चाह—अन्ये त्विति। आर्षे हि पाठे सामानाधिकरण्याद्दृष्टान्तस्यार्थरूपस्य शब्दरूपेणोदाहरणेनैक्यं स्यात्। यदा तु दृष्टान्तस्योदाहरणमिति पाठः, तदा नायं दोषः, दूषणं चापरेषाम्, यथा न दृष्टान्तस्योदाहरणेन सामानाधिकरण्यम्, एवं भावित्वस्याप्यर्थरूपस्य स्वविषयवचनोपलक्षणत्वेन तु सामानाधिकरण्यं दृष्टान्तेऽपि तुल्यम्, तस्मादार्षमेवास्त्विति।

## वृत्तिः

व्यतिरेक्युदाहरणं लक्षयति—( तद्विपर्ययाद्वेति )।

(१) तद्विपर्ययात्, साध्यसाधनव्यतिरेकव्याप्तिप्रदर्शनात्। तथा च साध्य-

(१) ल-पु०—"तद्विपर्ययात्" इत्यतः प्राक् "व्यतिरेक्युदाहरणम्" इत्यधिकम्

### न्यायभाष्यम्

पूर्वस्मिन् दृष्टान्ते यौ तौ धर्मौ साध्यसाधनभूतौ पश्यति साध्येऽपि तयोः साध्यसाधनभावमनुमिनोति। उत्तरस्मिन् दृष्टान्ते तयो(१)र्धर्मयोरेकस्याभावादितरस्याभावं पश्यति तयोरेकस्य भावादितरस्य भावं (२)साध्येऽनुमिनोतीति। तदेतद्धेत्वाभासेषु

### न्यायवार्त्तिकम्

किल भाविग्रहणमनर्थकम्। कस्मात्? सर्वावयवानां साध्यधर्मभावित्वात्। यस्मात् किल सर्वावयवाः साध्यधर्मभाविनो भवन्ति भावयन्ति गमयन्तीति नायं सूत्रार्थ इति।

अन्ये तु तद्धर्मभावीत्येतत्पदमन्यथा निराकुर्वन्ति—तद्धर्मभावी भवन्नुष्णभोजिन्यायेन वा भवेत्? दण्डिन्यायेन वा भवेत्? तद्यदि तावदुष्णभोजिन्यायेन उष्णं भोक्तुं शीलमस्येत्युष्णभोजी तद्धर्मं वा भावयितुं शीलमस्येति तद्धर्मभावी। अत्रापि भावयितुं गमयितुं यावदुक्तं स्यादिति नायं सूत्रार्थ इति न किञ्चिदेतत्। दण्डिन्यायस्तु दण्डो यस्यास्तीति स दण्डी तद्धर्मभावो यस्यास्ति स भवति तद्धर्मभावी। अत्र भाविग्रहणमनर्थकं तद्धर्मभावीति। कथमिति? तद्धर्मश्चासौ भावश्चेति तद्धर्मभावः स यस्यास्ति स भवति तद्धर्मभावी। एवं सति विशेष्यविशेषणभावानुपपत्तेः तद्धर्मभावीति युक्तम्। न हि तद्धर्मश्च स्यादभावश्च स्याद् यतो विशेषणविशेष्यभावः समर्थितः स्यादिति। अतस्तद्धर्मीति किल वक्तव्यम्। न वक्तव्यम्। तद्धर्माणामुभयथा भावात्, उभयथा भवन्ति धर्मा विधीयमानाः प्रतिषिध्यमानाश्च। तत्रान्वयिनि विधीयमानधर्मवान् दृष्टान्त उदाहरणम्, यथा स्थाल्यामुत्पत्तिधर्मकत्वमनित्यत्वं च विद्यमानौ धर्माविति। तस्मात्तद्धर्मश्चासौ भावश्चेति युक्तं सामानाधिकरण्यम्। यत् पुनरेतत्तद्धर्मीति वक्तव्यम्, एतदपि न

### न्यायवार्त्तिकतात्पर्य्यटीका

आर्षेऽपि पाठे परोक्तं दूषणमुपन्यस्यति—एतस्मिन्नपीति। उपहासे किलकारः। ण्यन्ताद्भवतेस्ताच्छील्ये णिनिना भावीति व्युत्पन्नः, तथा च तद्धर्मकारित्वमर्थः। न च ज्ञापनाद् अन्या क्रिया संभवतीति गमकत्वम्, तच्च सर्वेषामवयवानामभिन्नमिति साधारणत्वान्न वक्तव्यमित्यर्थः। तदेतदभ्युपगमेनैव परिहरति—नायमिति।

अन्ये तु तद्धर्मभावीत्येतद्विकल्प्य दूषयन्तीत्याह—अन्ये त्विति। तत्र प्रथमकल्पे दूषणमाहुः—तद् यदीति। नायं सूत्रार्थः सर्वावयवसाधारण्यादिति तस्मान्न किञ्चिदेतत् तद्धर्मं भावयितुं शीलमस्येति। द्वितीयकल्पे दूषणमाहुः—दण्डिन्याय इति। संभवे व्यभिचारे च विशेषणमर्थवद् न संभवमात्र इत्यर्थः। तदेतत् परेषां दूषणं दण्डिन्यायमालम्ब्य परिहरति—न वक्तव्यमिति।

### वृत्तिः

साधनव्यतिरेकव्याप्त्युपदर्शकोदाहरणं(३) व्यतिरेक्युदाहरणं यथा जीवच्छरीरं सात्मकं

---

(१) "ययो"रिति ज, फ, आ, ग०। (२) "तयोरेकतरस्याभावादितरस्याभावम्" इति ख, ज, ग, आ, झा०। (३) "व्याप्त्या प्रदर्शकोदाहरणम्" इति व०।

## न्यायभाष्यम्

न सम्भवतीत्यहेतवो हेत्वाभासाः। तदिदं हेतूदाहरणयोः सामर्थ्यं (१) परमसूक्ष्मं दुःखबोधं पण्डितरूपवेदनीय(२)मिति ॥ ३७ ॥

## न्यायवार्त्तिकम्

परिज्ञातम्। न हि बहुव्रीहौ पुनर्मत्वर्थीयो लभ्यत इति। अथावश्यं वयं शिक्षयितव्याः, तत एव च तद्धर्मेति वक्तव्यमिति। सन्ति चैवंवादिनो येषां कृतकत्वानित्यत्वेऽभाव इति। तन्निराकरणार्थं चेदं वक्तव्यं तद्धर्मश्चासौ भावश्चेति।

तदेतस्मिन्नवयवत्रये एवं लक्षणेनोपपादिते तेषां त्रयो दुर्विहिता(३) इति। अनेन वाक्येन महानैयायिकत्वमात्मनः ख्यापितं भवति।

तथा सिद्धो दृष्टान्त इत्यन्ये। कः पुनरस्यार्थः? यथा साध्यः साधयितुमिष्टस्तथाऽयमसिद्धोऽनित्यत्वेन यथा च स एव साध्यो(४) विशिष्टः प्रत्ययभेदभेदित्वेन, तथा यः सिद्धः स दृष्टान्तः साध्यसाधनवानिति। अत्र विस्फूर्जतापि स्वसिद्धान्तमत्यजता कृतकत्वानित्यत्वयोर्न शक्यः सम्बन्धो दर्शयितुम्, कृतकत्वानित्यत्वयोः कालभेदाद्वस्तुव्यवधानाच्च (५)। अन्यदा कृतकत्वमन्यदा चानित्यत्वमिति। यदा च वस्तु न तदा प्राक्प्रध्वंसाभावौ स्त इति। एतेन तयोः सम्बन्धिनिदर्शनं दृष्टान्त इति प्रत्युक्तम्।

"साध्येनानुगमो हेतोः साध्याभावे च नास्तिता" इति च ॥ ३७ ॥

## न्यायवार्त्तिकतात्पर्य्यटीका

सम्भवव्यभिचाराभ्यां समर्थं विशेषणमित्यर्थः। न बहुव्रीहाविति। अन्यपदार्थविवक्षयैवेनिराश्रीयते, सा च बहुव्रीहिणैव लभ्यत इति कृतमत्रेनिनेत्यर्थः। सुहृद्भावेन चेद् अत एवाह—अथावश्यमिति। प्रयोजनान्तरं भाविग्रहणस्यान्वाचिनोति—स तीति।

अत्र सुबन्धुना(६) प्रतिज्ञादयस्त्रयोऽवयवा दुर्विहिता अक्षपादलक्षणेत्युक्तम्, तद्दूषयति—तदेतस्मिन्निति। तदेवमुदाहरणलक्षणमुपपाद्य परेषां लक्षणं दूषयितुमुपन्यस्य व्याचष्टे—तथा सिद्ध इति। यथा च स एव साध्यो विशिष्टः प्रत्ययभेदभेदित्वेनेति, प्रत्ययः कारणम्, तदेतत् साध्यसाधनवत्त्वं दृष्टान्तस्य बौद्धराद्धान्तेऽव्यापकम्, स्थाल्यादौ दृष्टान्ते कृतकत्वानित्यत्वरूपसाध्यसाधनवत्त्ववैकल्यात्, प्रागभावो हि स्थाल्याः कृतकत्वं प्रध्वंसाभावश्चानित्यता राद्धान्ते बौद्धानाम्, न चैवमुभयं स्थाल्यामस्ति, तस्याः स्वाभावविरोधित्वादिति दूषयति—अत्र विस्फूर्जताऽपीति। एतेनेति, अव्यापकत्वेन। निदर्श्यतेऽस्मिन्ननेन चेति निदर्शनम्, साध्येनानुगमो हेतोः साध्याभावे च नास्तितेति च प्रत्युक्तम्, कृतकत्वानित्यत्वयोः स्थाल्यामसंभवदर्शनादव्यापकत्वेन।

## वृत्तिः

प्राणादिमत्त्वाद्, यन्नैवं तन्नैवं यथा घट इति। वाकारः प्रयोगमपेक्ष्य। तथा चान्व्युदाहरणं व्यतिरेक्युदाहरणं वा प्रयोक्तव्यमित्यर्थः॥ ३७ ॥

(१) "साधर्म्यम्" इति झा०। (२) पण्डितरूपवेदनीय' इति ज०। (३) "दुर्विभावा" इति ख०। (४) "स एव साध्यो" इत्यंशः ख-पुस्तके नास्ति। (५) "व्यवधानाच्च"त्यत्र "बाधनाच्च" इति ख०। (६) "वसुबन्धुना" इति ख०।

## ( सू० )—उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः ॥ ३८ ॥

### न्यायभाष्यम्

उदाहरणापेक्षः उदाहरणतन्त्र उदाहरणवशः। वशः सामर्थ्यम्। साध्यसाधर्म्ययुक्ते उदाहरणे स्थाल्यादि द्रव्यमुत्पत्तिधर्मकमनित्यं दृष्टम्, तथा शब्द

### न्यायवार्त्तिकम्

उदाहरणापेक्षस्तथेत्युपसंहारो न तथेति वा साध्यस्योपनयः। एवञ्चायं कृतक इति। यथा तथेति प्रतिबिम्बनार्थम्। किं पुनरत्र प्रतिबिम्बनम्? दृष्टान्तगतस्य धर्मस्या-

### न्यायवार्त्तिकतात्पर्य्यटीका

अस्मद्दृष्टान्ते यथा तयोः स्थाल्यादौ संभवः तथोक्तं हेतुलक्षणसूत्र इति। भाष्ये पण्डितरूपवेदनीयमिति, प्रशस्तपण्डितवेदनीयमित्यर्थः ॥ ३७ ॥

स्वप्रतिपत्तौ व्याप्तिस्मरणानन्तरं तथा चायं न तथेति वा परामर्शे ज्ञानोत्पादाद् उदाहरणवचनस्य च व्याप्तिप्रतिपादकत्वात् परामर्शज्ञाने हेतोरुपनयस्योदाहरणपूर्वकत्वनियमाद् उदाहरणानन्तरमुपनयं लक्षयति—

उदा—यः (सू० ३८)॥ अपेक्षापदं भाष्यकृद् व्याचष्टे—उदाहरणतन्त्र इति उदाहरणवशः, वश्यत(१)इति वशः वशिन उदाहरणस्य वश्य इत्यर्थः। एतदेव कर्मणो भावं निष्कृष्य विवृणोति वशः सामर्थ्यं वश्येन उदाहरणस्य फलेन उपनयेनाभिसंबन्ध इत्यर्थः। तथात्वातथात्वयोर्विषयं विभजते—साध्यसाधर्म्ययुक्त इति। ननु हेतोरुपसंहार उपनयो न साध्यस्य, तथा चानुपपन्नः साध्यस्योपसंहार इत्यत उक्तम्—साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमिति उदाहरणसिद्धव्याप्तिहेतुमत्तया साध्यमुपसंह्रियते न स्वरूपेणेत्यर्थः। अत्राप्युदाहरणापेक्ष उपसंहार उपनय इति सामान्यलक्षणम्। तथा न तथेति चेति (२), सामान्यलक्षणापेक्षे विशेषलक्षणे इति बोद्धव्यम्। अत्र केचिदाहुः हेतुवचनादेव सोदाहरणात् साध्यसिद्धेरसाधनाङ्गमुपनय इति तन्निराकर्त्तुमाह वार्त्तिककारः—यथा तथेति प्रतिबिम्बनार्थम्। तदेतत् प्रश्नपूर्वकं विभजते—किं पुनरिति।

### वृत्तिः

क्रमप्राप्तमुपनयं लक्षयति—(उदाहरणापेक्षेति)।

साध्यस्य पक्षस्योदाहरणापेक्ष–उदाहरणानुसारी य उपसंहार उपन्यासः प्रकृतोदा-

---

(१) वश्धातोः कर्मणि "वश्यते" इत्येवंरूपस्य भवितुमशक्यत्वात् अत्र "उश्यते" इत्येवं पाठ एव सङ्गतः। (२) वार्त्तिके—"तथेत्युपसंहारो न तथेति वा" इति पाठः।

## न्यायभाष्यम्

उत्पत्तिधर्मक इति साध्यस्य शब्दस्योत्पत्तिधर्मकत्वमुपसंह्रियते। साध्यवैधर्म्ययुक्ते पुनरुदाहरणे आत्मादि द्रव्यमनुत्पत्तिधर्मकं नित्यं दृष्टम्, न च तथा शब्द इति, अनुत्पत्तिधर्मकत्वस्योपसंहारप्रतिषेधेनोत्पत्तिधर्मकत्वमुपसंह्रियते। तदिदमुपसंहार-द्वैतमुदाहरणद्वैताद्भवति। उपसंह्रियतेऽनेनेति चोपसंहारो वेदितव्य इति ॥ ३८ ॥

## न्यायवार्त्तिकम्

व्यभिचारित्वे सिद्धे तेन साध्यगतस्य तुल्यधर्मता, एवञ्चायं कृतक इति। साध्ये वा सम्भव उपनयार्थः। ननु च कृतकत्वादित्यनेन सम्भव उक्तः? नोक्तः(१) साध्यसाधनभाव-निर्देशात्—साध्यसाधनभावमात्रनिर्देशः कृतः(२) कृतकत्वादनित्यः शब्दो भवति। तत् पुनः शब्दे कृतकत्वमस्ति नास्तीत्युपनयेन सम्भवो गम्यते अस्ति च शब्दे कृतकत्वमिति। स यदा साधर्म्येणोदाहरणं तदा तथेति, यदा वैधर्म्येण तदा न तथेति ॥ ३८ ॥

## न्यायवार्त्तिकतात्पर्य्यटीका

तदनेन व्युत्पन्नाव्युत्पन्नतया परेषामनियतप्रतिसाधनत्वात् स्वप्रतिपत्त्यनुसारेण परो बोधयितव्यः, व्याप्तिस्मरणानन्तरोत्पन्नलिङ्गपरामर्शपूर्वकश्च स्वयमनुमेयार्थप्रत्यय इति तथैव परे बोध्यन्ते, तथा च परामर्शज्ञानहेतोरुपनयस्य सिद्धमर्थवत्त्वम्। न च यथा लिङ्गपरामर्शज्ञानान्वयव्यतिरेकानुविधान-मनुमेयज्ञानस्य, तथा दधिभक्षणाद्यनुविधानमपि, येनातिप्रसङ्गश्चोद्येतेति। प्रयोजनान्तरमुपनयस्याह—साध्ये वा संभव इति। चोदयति—ननु चेति। यद्यपि साधनतया कृतकत्वमुक्तं प्रति-ज्ञानन्तरं प्रतिपत्त्रा साधनस्यैवापेक्षितत्वात्, तथापि तन्नासिद्धं तत्र साधनत्वेन व्यवतिष्ठत इति स्वसिद्धिमाक्षिपति सामर्थ्यादिति भावः। परिहरति—नोक्त इति। यत्परः शब्दः स शब्दार्थ इति शाब्दाः। साधनत्वपरश्च कृतकत्वादिति सामर्थ्यात्, आक्षेपे तूदाहरणमपि न प्रयोक्तव्यम्। अत्रापि साधनत्वसामर्थ्यादाक्षेपाद् अव्याप्तस्य साधनत्वायोगात् तद्विधस्यापि प्रमेयत्वादेः शब्द-नित्यत्वादौ साधनत्वभ्रमेण प्रयोगोऽसिद्धोऽपि तुल्य इति व्याप्तिप्रदर्शनार्थोदाहरणप्रयोगवद्धेतोः सिद्धत्वप्रतिपादनाय उपनयस्यापि प्रयोग इति रमणीयम् ॥ ३८ ॥

## वृत्तिः

हरणोपदर्शितव्याप्तिविशिष्टहेतुविशिष्टपक्षविषयक(३)-बोधजनको न्यायावयव इत्यर्थः। निगम-नन्तु हेतुविशिष्टत्वेन न पक्षबोधकम्, किन्तु पक्षवृत्तिहेतुबोधकमिति तद्व्युदासः।

अत्र चान्वयव्यतिरेकव्याप्त्योरन्यतरत्वादिनाऽनुगमः कार्यः, उदाहरणोपदर्शितेति तु परिचायकमात्रमिति तु न वाच्यम्, उदाहरणविपरीतव्याप्त्युपदर्शकोपनयवारकत्वात्। वस्तुतोऽवयवपदेनैव तद्व्युदासः।

(१) "नोक्तः" इति ख-पु० नास्ति। (२) "कृतकः" इति ख०। (३) "हेतुविशिष्टपक्षविषयक" इत्यंशः ल-पु० नास्ति।

## न्यायभाष्यम्

द्विविधस्य पुनर्हेतोर्द्विविधस्य चोदाहरणस्योपसंहारद्वैते च समानम्—

**( सू )—हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् ॥३९॥**

साधर्म्योक्ते वा वैधर्म्योक्ते वा यथोदाहरणमुपसंह्रियते, तस्मादुत्पत्तिधर्मकत्वाद् अनित्यः शब्द इति निगमनम्—निगम्यन्ते अनेनेति प्रतिज्ञाहेतूदाहरणोपनया एकत्रेति निगमनम्। निगम्यन्ते—समर्थ्यन्ते—सम्बध्यन्ते। तत्र साधर्म्योक्ते तावद्धेतौ वाक्यमनित्यः शब्द इति प्रतिज्ञा। उत्पत्तिधर्मकत्वादिति हेतुः। उत्पत्तिधर्मकं स्थाल्यादि द्रव्यमनित्यमित्युदाहरणम्। तथा चोत्पत्तिधर्मकः शब्द इत्युपनयः। तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति निगमनम्। वैधर्म्योक्तेऽपि अनित्यः शब्द

## न्यायवार्त्तिकतात्पर्य्यटीका

निगमनलक्षणावतारपरं भाष्यं द्विविधस्य पुनरिति। साधर्म्येण वैधर्म्येण द्विविधानामपि हेतूदाहरणोपनयानां समानं निगमनलक्षणमित्यर्थः।

हेत्व—नम् ( सू० ३९ )॥ तस्मादिति। हेत्वपदेशात्तद्धेतुकमनित्यः शब्द इति प्रतिज्ञायाः पुनर्वचनम्। (१) यद्यपि च सिद्धनिर्देशो निगमनं साध्यनिर्देशश्च प्रतिज्ञा तथाऽपि यस्यैव प्रतिज्ञायां साध्यत्वमासीत् तस्यैव निगमने सिद्धत्वमित्यवस्थावन्तमेकमाश्रित्य समानविषयतया निगमनं प्रतिज्ञेत्युपचर्यते, तथा च पुनर्वचनमप्युपपन्नम्। तदेतद्भाष्यकारो व्याचष्टे—साधर्म्योक्त इति। व्युत्पादयति—निगम्यन्त इति। साधर्म्यवैधर्म्ययोः प्रतिज्ञातः प्रभृति निगमनान्तं प्रयोगमाह—तत्रेति। तच्च प्रथमसूत्रवदेव यथास्वमवयवेषु प्रमाणानां परम-

## वृत्तिः

स चोपनयो द्विविधोऽन्वयिव्यतिरेकिभेदात्। तथेति साध्यस्योपसंहारोऽन्वय्युपनयः, न तथेति साध्यस्योपसंहारो व्यतिरेक्युपनयः।

अत्र च तथाशब्दप्रयोगावश्यकत्वे न तात्पर्यम्, किन्तु व्याप्तिविशिष्टवत्त्वबोधे (२), तथा च वह्निव्याप्यधूमवांश्चायमिति वा तथाचायमिति वोपन्यासः, एवं व्यतिरेकिण्यपि वह्न्यभावव्यापकीभूताभावप्रतियोगिधूमवांश्चायमिति वा न तथेति वोपन्यासः ॥ ३८ ॥

---

(१) ननु निगमनान्तर्गते पक्षधर्मिकसाध्यवत्त्वबोधोपयोगिवाक्यभागे प्रतिज्ञात्वाभावात् निगमनलक्षणे "प्रतिज्ञायाः पुनर्वचनम्" इति कथं सङ्गच्छते ? सत्यम्, तत्र मुख्यतः प्रतिज्ञात्वाभावेऽपि प्रतिपाद्यार्थसाजात्यादिना औपचारिकं प्रतिज्ञात्वमभ्युपेत्य तथाकथनसङ्गतिरिति स्फुटीकरोति यद्यपीत्यादिना। (२) "व्याप्तिविशिष्टबोधे" इति ल०।

## न्यायभाष्यम्

उत्पत्तिधर्मकत्वात्, अनुत्पत्तिधर्मकमात्मादि द्रव्यं नित्यं दृष्टम्, न च तथाऽनुत्पत्तिधर्मकः शब्दः तस्मादुत्पत्तिधर्मकत्वादनित्यः शब्द इति।

अवयवसमुदाये च वाक्ये सम्भूयेतरेतराभिसम्बन्धात् प्रमाणान्यर्थान् साधयन्तीति। सम्भवस्तावत् शब्दविषया प्रतिज्ञा, आप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसन्धानादनृषेश्च स्वातन्त्र्यानुपपत्तेः। अनुमानं हेतुः, उदाहरणे सादृश्य(१)प्रतिपत्तेः। तच्चोदाहरण(२)भाष्ये व्याख्यातम्। प्रत्यक्षविषयमुदाहरणं दृष्टेनादृष्टसिद्धेः। उपमानमुपनयः तथेत्युपसंहारात्, न च तथेति चोपमानधर्मप्रतिषेधे विपरीतधर्मोपसंहारसिद्धेः। सर्वेषामेकार्थप्रतिपत्तौ सामर्थ्यप्रदर्शनं निगमनमिति।

इतरेतराभिसम्बन्धोऽपि—असत्यां प्रतिज्ञायामनाश्रया हेत्वादयो न प्रवर्त्तेरन्।

## न्यायवार्त्तिकतात्पर्य्यटीका

न्यायं स्तोतुं संभवमाह—अवयवसमुदाये चेति। आप्तोपदेशस्येति, "सदेव सौम्येदमग्र आसीदि"त्यादेराप्तोपदेशस्य प्रत्यक्षानुमानाभ्यां प्रतिसंधानात्। ननु कस्मात् प्रतिज्ञैवाप्तोपदेशो न भवति, कृतमस्या आगमान्तरविषयत्वेनेत्यत आह—अनृषेश्चेति। अनुमानं हेतुः। स्यादेतद् द्वितीयं लिङ्गदर्शनं हेतुः, न च तदनुमानम्, तृतीयस्योपनयविषयस्य लिङ्गदर्शनस्य तथाभावादित्यत आह—उदाहरण इति। उदाहरणे दृष्टान्तधर्मिणि, साध्यसाधनयोः प्रतिबन्धं(३) सादृश्यं सम्यग् दृष्ट्वा लिङ्गस्य प्रतीतेः। एतदुक्तं भवति—यद्यपि त्रयाणामपि लिङ्गदर्शनानां सस्मृतीनामनुमानत्वम्, तथाऽपि तदेकदेशे मध्यमेऽपि लिङ्गदर्शने समुदायोपचारादनुमानव्यपदेश इति। प्रत्यक्षविषयमुदाहरणम्, कस्मात्? दृष्टेनोदाहरणे प्रतिबन्धेन अदृष्टे साध्यधर्मिण्यनुमेयस्य सिद्धेः। यदि पुनर्न मूलं प्रत्यक्षमास्थीयेत, अव्यवस्थाया नादृष्टं सिध्येदिति भावः। निगमनप्रयोजनं प्रतिपादयति—सर्वेषामिति। प्रतिज्ञादीनामुपनयान्तानामेकोऽर्थः स्वभावप्रतिबद्धं लिङ्गं वा अनुमेयं वा, तस्य प्रतिपत्तिः, तस्यां सामर्थ्यप्रदर्शनं निगमनमिति, तदनेनैकार्थत्वं दर्शितम्। द्विविधं हि प्रयोजनम्, तत्रावान्तरं स्वभावप्रतिबद्धं लिङ्गप्रतीतिः, परमं च साध्यप्रतीतिरिति।

संप्रति विभागे साकाङ्क्षत्वं दर्शयति—इतरेतराभिसंबन्ध इति। अभिसंबन्धेन फलेना-

## वृत्तिः

निगमनं लक्षयति—( हेत्वपदेशादिति )। हेतोः व्याप्तिविशिष्टपक्षधर्मस्य

(१) "संदृश्य" इति ज, फ, च्च०। (२) "तत्रोदाहरणम्" इति ज, ञ्च, ग०। (३) "प्रतिसम्बन्धम्" इति ख०।

## न्यायभाष्यम्

असति हेतौ कस्य साधनभावः प्रदर्श्येत। उदाहरणे साध्ये च कस्योपसंहारः स्यात् कस्य चापदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनं स्यादिति। असत्युदाहरणे केन साधर्म्यं वैधर्म्यं वा साध्यसाधनमुपादीयेत, कस्य वा साधर्म्यवशादुपसंहारः प्रवर्त्तेत। उपनयं चान्तरेण साध्येऽनुपसंहृतः साधको धर्मो नार्थं साधयेत्। निगमनाभावे चानभिव्यक्त(१)सम्बन्धानां प्रतिज्ञादीनामेकार्थेन प्रवर्तनं तथेति प्रतिपादनं कस्येति।

**अथावयवार्थः**—साध्यस्य धर्मस्य धर्मिणा सम्बन्धोपादानं प्रतिज्ञार्थः। उदाहरणेन समानस्य विपरीतस्य वा साध्यस्य(२) धर्मस्य साधकभाववचनं हेत्वर्थः। धर्मयोः साध्यसाधनभावप्रदर्शनमेकत्रोदाहरणार्थः। साधनभूतस्य धर्मस्य साध्येन धर्मेण सामानाधिकरण्योपपादनमुपनयार्थः। उदाहरणस्थयोर्द्धर्मयोः साध्यसाधनभावोपपत्तौ साध्ये विपरीतप्रसङ्गप्रतिषेधार्थं निगमनम्। न चैतस्यां हेतूदाहरणपरिशुद्धौ सत्यां साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिनिग्रहस्थानबहुत्वं प्रक्रमते। अव्यवस्थाप्य(३) खलु धर्मयोः(४) साध्यसाधनभावमुदाहरणे जातिवादी प्रत्यवतिष्ठते। व्यवस्थिते तु खलु धर्मयोः साध्यसाधनभावे दृष्टान्तस्थे गृह्यमाणे

## न्यायवार्त्तिकतात्पर्य्यटीका

काङ्क्षामुपलक्षयति—असत्यामिति। प्रधानं हि प्रतिज्ञापदं तदुत्तरकालं हि साधनाकाङ्क्षायां प्रतिज्ञामाश्रित्य हेतुपदं प्रवर्तते, न पुनः प्रथममेव हेत्वपेक्षेति हेतुलक्षणेऽस्माभिः प्रतिपादितमिति। हेतुपदविरहे आकाङ्क्षां दर्शयति—असति हेताविति। उदाहरणाभावेऽप्यपेक्षामाह—असत्युदाहरण इति। उपनयाभावेऽप्यपेक्षामाह—उपनयं चान्तरेणेति। निगमनाभावेऽप्यपेक्षामाह—निगमनाभावे चेति। अवयवानां प्रातिस्विकं प्रयोजनमुक्तमपि शिष्यहिततया भाष्यकारः प्रतिपादयति—अथेति। पञ्चावयवप्रतिपादनप्रयत्नस्य प्रयोजनं दर्शयति—न चैतस्यामिति। कथं पुनः प्रक्रमत इत्यत आह—अव्यवस्थाप्येति। व्यवस्थापिते न जातेरवसर इत्याह—व्यवस्थिते हीति(५)।

## वृत्तिः

अपदेशः कथनम्, प्रतिज्ञायाः प्रतिज्ञातार्थस्य साध्यविशिष्टपक्षस्य वचनं निगमनम्। तथा च व्याप्तपक्षधर्महेतुकथनपूर्वकसाध्यविशिष्टपक्षप्रदर्शकः व्याप्तपक्षधर्महेतुज्ञाप्यसाध्य-

---

(१) "निगमनाभावेनानभिव्यक्त" इति ग०। (२) 'साध्यस्य' इति टि नास्ति। (३) "अव्यवस्थाप्य" इति वि०। (४) "धर्मयोः" इति ज-पु० नास्ति। (५) "व्यवस्थिते तु" इति भाष्ये।

## न्यायभाष्यम्

साधनभूतस्य धर्मस्य हेतुत्वेनोपादानं न साधर्म्यमात्रस्य न (१) वैधर्म्यमात्रस्य वेति ॥ ३९ ॥

## न्यायवार्त्तिकम्

हेत्वपदेशात् प्रतिज्ञायाः पुनर्वचनं निगमनम् । प्रतिज्ञायाः पुनर्वचनमिति, प्रतिज्ञाविषयस्यार्थस्याशेषप्रमाणोपपत्तौ साध्यविपरीतप्रसङ्गप्रतिषेधार्थं यत् पुनरभिधानं तत् निगमनमिति । एतस्मिन् सूत्रार्थे परस्यावकाशो नास्तीति । अभ्युपेत्य तद्दोषनिराचिकीर्षया वाक्यमुपक्षिप्यते—

"उपनयनिगमने (२) नावयवान्तरे अर्थाविशेषात्" । इति

इदं तावद्वाक्यं यथाश्रुति न केनचिदर्थेन सम्बध्यते । अथ हेतूपनयावेकत्वेन पक्षीकृत्यार्थाविशेषादिति हेतुः ? स विपक्षवृत्तित्वाद्विपर्ययहेतुरर्थाविशेषस्यैकत्वेऽदर्शनादिति नानात्वे च

## न्यायवार्त्तिकतात्पर्य्यटीका

अत्र केचिदाहुः निगमनमसाधनाङ्गम्, कथं ? प्रतिज्ञया गतार्थत्वादिति, तन्मतमपाकर्तुं वार्त्तिककारः सप्रयोजनं निगमनं दर्शयति—प्रतिज्ञाविषयस्यार्थस्येति । चतुर्भिः खल्ववयवैर्हेतोस्त्रीणि रूपाणि द्वे वा प्रतिपादिते, न त्वबाधितविषयत्वासत्प्रतिपक्षितत्वे । पञ्चसु वा चतुर्षु वा रूपेषु हेतोरविनाभावः परिसमाप्यते, तस्मादबाधितत्वासत्प्रतिपक्षितत्वरूपद्वयसंसूचनाय निगमनम्, तदिदमुक्तम्—विपरीतप्रसङ्गप्रतिषेधार्थमिति। बाधने प्रतिपक्षे वा साध्यविपरीतप्रसङ्गः स्यादिति । सोऽयं प्रतिज्ञाविषयार्थस्य अशेषप्रमाणमूलावयवोपपत्तौ सत्यां प्रतिज्ञेयस्यार्थस्य सिद्धतया पुनर्वचनेन निगमनेन प्रतिषिध्यते, न च प्रतिज्ञावचनादेव तत्सिद्धिः, तस्य साध्यपरत्वात् । न चान्यपरादप्याक्षेपात् सिद्धिः, हेत्वादिप्रयोगवैयर्थ्यप्रसङ्गात्, प्रतिज्ञात एव सर्वाक्षेपसंभवात् । तस्माद् रूपद्वयप्रतिपादनार्थं निगमनम्, यथा च त्रैरूप्यातिरिक्तमेतद्रूपद्वयं तथोपपादितमस्माभिः प्रथमसूत्रे । हेत्वाभासेषु च शेषं दर्शयिष्यत इति । एतस्मिन् सूत्रार्थे परस्य प्रतिज्ञायां निगमनं गतार्थं मन्यमानस्यावकाशो नास्ति । यस्तु मन्येत न हेतोरविनाभावसिद्धिमन्तरेण सिद्धनिर्देशो निगमनं भवति, न च पाञ्चरूप्यं विनाऽविनाभावसिद्धिः, निगमनात्तु तत्सिद्धौ न सिद्धनिर्देशो निगमनम्, अपि तु तदपि साध्यनिर्देश एवेति तं प्रत्युपेत्य तद्दोषनिराचिकीर्षया परेषां वाक्यमुपक्षिप्यते । परेषां वाक्यं पठति—उपनयनिगमने त्विति । दूषयति—इदं तावदिति । यथाश्रुति निगमनोपनययोरभेदं साधयति, अर्थगतं चाविशेषं हेतुमाह—तच्चैतदालोकतमसोरैक्यं काकस्य कार्ष्ण्यादिवदापतितम् । शङ्कते—अथ हेतूपनयाविति, उपलक्षणं चैतत्, प्रतिज्ञानिगमने इत्यपि द्रष्टव्यम् । अर्थाविशेषादिति अविशिष्टार्थत्वादित्युन्नेतव्यम्, तथा च संबन्ध इति शङ्कितुरभिप्रायः ।

(१) "न" इति आ-पु० नास्ति । (२) अत्र तात्पर्ये "तु" शब्दः अधिकः ।

## न्यायवार्त्तिकम्

दर्शनादिति। यथा बहूनां घटानामेकोऽर्थो जलाहरणादि(१)र्न चैकत्वमिति। अथैकप्रयोजनकत्वेन पक्षीकृत्य ब्रूयादेकत्वमेकप्रयोजनत्वमिति ? तथापि हेतुर्नास्ति, प्रतिज्ञार्थेनाक्षिप्तत्वात् हेतूपनययोरेकार्थत्वमिति प्रतिज्ञार्थः। अर्थाविशेषादिति हेत्वर्थोऽपि स एव। अन्यश्च हेत्वर्थः, अन्यश्चोपनयार्थ इत्यसिद्धोऽप्ययं हेतुः, तद्वर्णितम्।

"पक्षधर्मत्वसम्बन्धसाध्योक्तेरन्यवर्जनम्"।

इत्येतदनेनैव प्रत्युक्तम्। यदपि 'यथा तथेत्युपसंहारे कृते तथेत्यनेन शब्देन सर्वसामान्यं वा कृतकत्वसामान्यं वाऽभिधीयते ? कृतकत्वविशेषो वा ? सर्वसामान्यं तावन्न युक्तम्, तथेति व्यपदेशाशक्यत्वादिति। कृतकत्वविशेषोऽपि न युक्तः, अन्यथा शब्दस्य कृतकत्वात्। परिशेषात् कृतकत्वसामान्यम्, तच्च हेतुनैवोक्तमिति', तदप्ययुक्तम्, उपनयस्योपमानार्थत्वात्— उपमानार्थ उपनय इति, तच्चोपमानं न सर्वथा साध्यसाधनभावमाश्रित्य प्रवर्तत इति

## न्यायवार्त्तिकतात्पर्य्यटीका

अत्रापि दोषमाह—स विपद्येति। पुनः शङ्कते—अथैकप्रयोजनत्वेनेति। निराकरोति—तथापीति। सिध्यत्येकप्रयोजनत्वे साध्ये हेतोरविरोधो, हेतुस्तु न प्रतिज्ञार्थादतिरिच्यत इत्यर्थः। तद्वर्णितमिति। अन्यश्च हेत्वर्थोऽन्यश्चोपनयार्थ इत्येतद्वर्णितमित्यर्थः। एतेनोपनयनिगमनप्रयोजनाभिधानेन ये त्र्यवयवं वाक्यमाहुस्तन्मतमपास्तमित्याह—पक्षधर्मत्वेति। यच्च परैरुपनये दूषणं विकल्प्याभ्यधायि तत्तावदुपन्यस्यति—यदपि यथा तथेति। सर्वसामान्ययोगे हि तदेव स्यान्न तु तथेति। अन्यथा शब्दस्य कृतकत्वादिति, न हि यथा घटः कृतकः तथा शब्दोऽपि कृतकः, घटशब्दयोरभेदप्रसङ्गादित्यर्थः। तस्मात् सामान्यप्रतिषेधे विशेषप्रतिषेधे च कृतकत्वसामान्यं परिशिष्यते, तस्य च यथातथाभावयोरभावात् कृतकत्वादित्येव स्यात्, तथा च न हेतोर्व्यतिरेक उपनयः स्यादित्याह—परिशेषादिति। तदेतत् परेषां दूषणं निराकरोति—तदप्ययुक्तमिति। यथा तथेति वाक्यमुपमानैकदेशमुपमानमुपचारात्, उपमानमर्थो यस्य सोऽयमुपमानार्थ उपनयः, तस्य भावस्तत्त्वं तस्मात्, तच्चोपमानं न सर्वथा साध्यसाधनभावमाश्रित्य प्रवर्तते, साध्ये शब्दे साधनस्य कृतकत्वस्य स्थालीगतस्य यः सर्वथाभावः स्थालीत्वाद्येकार्थसमवायः,

## वृत्तिः

विशिष्टपक्षबोधकस्तादृशसाध्यबोधको वा न्यायावयवो निगमनमिति। अस्य त्वन्वयव्यतिरेकिभेदान्न भेद इत्याशयः।

व्यतिरेकिणि तु तस्मान्न तथेत्येवाकार इत्यपरे ॥ ३९ ॥

(१) "-ऽर्थो जलाहरणादि" इत्यत्र "-ऽर्थोद्धारणादि" इति खपु० पाठः।

## न्यायभाष्यम्

अत (१) ऊर्ध्वं तर्को लक्षणीय इति अथेदमुच्यते—

### ( सू )—अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्कः ॥ ४० ॥

अविज्ञायमानतत्त्वेऽर्थे जिज्ञासा तावज्जायते जानीयेममर्थमिति। अथ

## न्यायवार्त्तिकम्

यत्किञ्चिदेतत्। कृतकत्वसामान्यं तु शब्दसन्निधावभिधीयत इति चित्रमिदम्। कृतकत्वं खलु शब्द(२)सन्निधावभिधीयत इति शब्देन च विशिष्यमाणं कथं सामान्यं भविष्यति। तस्मात् सामान्यविशेषवान् हेतुरिति गतार्थत्वान्नोपनय इत्यनेन प्रत्युक्तम्। यदप्युक्तं यथा तथेत्युपमानमेतत्, उपमानं चोपनयो न दृष्टान्त इति एतेन निगमनं प्रत्युक्तम्। ते एते वीतावीतवाक्ये स्वतन्त्रे पञ्चावयवे न पुनरेकमन्वयि व्यतिरेकि चेति ॥ ३९ ॥

## न्यायवार्त्तिकतात्पर्य्यटीका

तमाश्रित्य न प्रवर्तते, तथा च शब्दस्थाल्योरभेदप्रसङ्गाद्यथा तथेत्येव न स्यात्। तस्मात् स्थालीस्थप्रकारान्तरव्युदासेन कृतकत्वसामान्यमात्रसाधारण्येन यथा तथेत्युपमानोपपत्तिरित्यर्थः। नन्वेवमपि कृतकत्वसामान्यमात्रं शब्दे स्यान्न तु यथातथाभावः, तथा च न हेतोरतिरेक इत्युक्तमत आह—कृतकत्वसामान्यं त्विति। न हि जातु शाबलेयसन्निधौ गोत्वसामान्यमात्रं भवति, अपि तु विशेषसहितम्, तथा च यथाभाव उपपन्न इत्यर्थः। एतेन यत्परैरुपनयस्य दृष्टान्तादभिन्नत्वं वर्णितम्, तदपि परास्तमित्याह—गतार्थत्वादिति। अनेनोपमानसमानत्ववर्णनेन एतदेव विभजते—यदप्युक्तमिति। व्याप्तिप्रदर्शनविषयो दृष्टान्तः दृष्टव्याप्तिकस्य हेतोः साध्यधर्मिण्युपसंहार उपनय इति महान् भेद इत्यर्थः। एतेन निगमनं प्रतिज्ञायाः समानाभिधेयत्वेऽपि प्रतिज्ञार्थत्वेन प्रत्युक्तम्(३), प्रतिज्ञायाः साध्यपरत्वाद् निगमनस्य विपरीतशङ्कानिवृत्तिपरत्वादिति प्रयोजनभेदसामान्यमात्रविवक्षया एतेनेत्युक्तम्। अत्र भाष्यकारेणैकस्मिन्नन्वयव्यतिरेकिण्येव वीतावीतवाक्ये पञ्चावयवे उदाहृते, तत्र कदाचिद् भ्रान्तिः स्यादेकोदाहरणतया द्वे अपि वाक्ये परस्परापेक्षे एवेति, तन्निराकरणायाह—ते एते इति। न पुनरन्वयि व्यतिरेकि चेत्येकं वाक्यमित्यर्थः ॥ ३९ ॥

अत्र भाष्यं तर्कलक्षणावतारपरम् अत ऊर्ध्वमिति। उद्देशक्रमानुसारेण।

अवि—तर्कः ( सू० ४० ) ॥ तर्कप्रवृत्तिक्रममाह—अविज्ञायमानतत्त्वेऽर्थ इति। यद्यपि

---

(१) "इत" इति ख०। (२) "खलु शब्द" इत्यत्र "खलशब्द" इति ख०। (३) आदर्शे "प्रयुक्तम्" इति पाठः।

## न्यायभाष्यम्

जिज्ञासितस्य वस्तुनो व्याहतौ (१) धर्मौ विभागेन विमृशति—किंस्विदित्थम् आहोस्विन्नेत्थमिति(२)। विमृश्यमानयोर्धर्मयोरेकं कारणोपपत्त्याऽनुजानाति, सम्भवत्यस्मिन् कारणं प्रमाणं हेतुरिति कारणोपपत्त्या स्यादेवमेतन्नेतरदिति।

तत्र निदर्शनम्—योऽयं ज्ञाता ज्ञातव्यमर्थं जानीते तं तत्त्वतो(३) जानीयेति जिज्ञासा (४)। स किमुत्पत्तिधर्मकः (५) अथानुत्पत्तिधर्मक इति विमर्शः। विमृश्यमानेऽविज्ञाततत्त्वेऽर्थे यस्य धर्मस्याभ्यनुज्ञाकारणमुपपद्यते तमनुजानाति। यद्ययमनुत्पत्तिधर्मकः, ततः स्वकृतस्य कर्मणः फलमनुभवति ज्ञाता, दुःख-जन्म-प्रवृत्ति-दोष-मिथ्याज्ञानानामुत्तरमुत्तरं पूर्वस्य पूर्वस्य कारणम्, उत्तरोत्तरापाये तदनन्तरापायादपवर्ग(६) इति स्यातां संसारा-

## न्यायवार्त्तिकतात्पर्यटीका

संशयस्य पश्चादेव जिज्ञासा भवति तथाऽपि जिज्ञासायाः परस्तादपि संशयो भवति, स चात्र विवक्षितस्तर्कप्रवृत्त्यङ्गत्वात्; तर्केण हि प्रसङ्गापरनाम्ना द्वयोः पक्षयोरेकतरनिषेधेनैकतरः प्रमाणविषयतयाऽभ्यनुज्ञातव्य इति विषयप्रत्यासत्त्या तर्कप्रवृत्तिं प्रत्यङ्गता संशयस्येति। कारणोपपत्त्येति व्याचष्टे—संभवत्यस्मिन् कारणं प्रमाणमिति। अत्र च कारणव्याख्यानं प्रमाणमिति, उपपत्तिव्याख्यानं संभवतीति, अनुज्ञाव्याख्यानम् एवमेतन्नेतरदिति। एतदुक्तं भवति—यस्मिन् विषये प्रमाणं प्रवर्तितुमुद्यतं तद्विपर्ययाशङ्कायां न तावत् प्रवर्त्तते, न यावदनिष्टापत्त्या विपर्ययाशङ्काऽपनीयते, तदपनय एव च स्वविषये प्रमाणसंभव इति चोपपत्तिरिति व्याख्यायते। तथा प्रमाणस्योपपत्त्या इतिकर्त्तव्यतया प्रमाणस्याभ्यनुज्ञातस्य विशोधिते विषये प्रमाणमप्रत्यूहं प्रवर्त्तते। न चोपपत्तिरेवास्तु निश्चयहेतुः कृतं प्रमाणेनेति वक्तव्यम्, उपपत्तेः स्वतन्त्राया आश्रयासिद्धतया स्वतो निश्चयायोगात्। तदुपपादितं प्रथमसूत्र( ७ )इति। उदाहरणमाह—निदर्शनमिति। स्वकृतस्य कर्मण इत्यादिना पूर्वस्य कारणमित्यन्तेन संसारो दर्शितः, उत्तरेत्यादिनाऽपवर्ग

## वृत्तिः

क्रमप्राप्तं तर्कं लक्षयति—( अविज्ञातेति )।

तर्क इति लक्ष्यनिर्देशः। कारणोपपत्तित ऊह इति लक्षणम्। अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति प्रयोजनकथनम्। 'कारणं' व्याप्यम्, तस्योपपत्तिरारोपः, तस्माद् य ऊह

---

(१) "व्याहृतौ" इति आ०। (२) "किंस्विदित्येवमाहोस्विन्नैवमिति" इति फ०। (३) "तं च भो" इति ज-आ-ग०। (४) "जिज्ञासते" इति ल-भा०। (५) "अथे"ति क्वचिन्न दृश्यते। (६) "भावादपवर्ग" इति ल-भा-ग-आ-ज०। (७) ५४ पृष्ठ तात्पर्यटीका द्रष्टव्या।

## न्यायभाष्यम्

पवर्गौ। उत्पत्तिधर्मके ज्ञातरि पुनर्न स्याताम्। उत्पन्नः खलु ज्ञाता देहेन्द्रिय-बुद्धि-वेदनाभिः सम्बध्यत इति नास्येदं स्वकृतस्य कर्मणः फलमुत्पन्नश्च भूत्वा न भवतीति तस्याविद्यमानस्य निरुद्धस्य वा स्वकृतकर्मणः फलोपभोगो नास्ति। तदेवमेकस्यानेक-शरीरयोगः शरीर(१)वियोगश्चात्यन्तं न स्यादिति यत्र कारणमनुपपद्यमानं पश्यति तन्नानुजानाति (२)। सोऽयमेवंलक्षण ऊहस्तर्क इत्युच्यते।

कथं पुनरयं तत्त्वज्ञानार्थो न तत्त्वज्ञानमेवेति ? अनवधारणात्। अनुजानात्ययमेक-तरं धर्मं कारणोपपत्त्या, न त्ववधारयति न व्यवस्यति न निश्चिनोति एवमेवेदमिति। कथं तत्त्वज्ञानार्थ इति ? तत्त्वज्ञानविषयाभ्यनुज्ञालक्षणानुग्रह(३)भावितात् प्रसन्ना(४)-दनन्तरप्रमाणसामर्थ्यात् तत्त्वज्ञानमुत्पद्यत इत्येवं तत्त्वज्ञानार्थ इति।

सोऽयं तर्कः प्रमाणानि प्रतिसन्दधानः प्रमाणाभ्यनुज्ञानात् प्रमाणसहितो

## न्यायवार्त्तिकतात्पर्यटीका

इत्यन्तेनापवर्गः। तेन संसारापवर्गाविच्छन्तौ वादिप्रतिवादिनौ प्रति आत्मनित्यत्वविषयं प्रमाणं वर्त्तमानमनेन तर्केणानुगृह्यत इति प्रमाणविषयविपर्ययानुज्ञैव प्रमाणविषयाभ्यनुज्ञा, अनिष्ट-प्रसज्यविपर्ययस्यैव(५) साक्षान्निवर्त्तनात्। अत एव भाष्ये उपसंहारः—यत्र कारणमनुप-पद्यमानं पश्यति तन्नानुजानातीति।

ननु यदि तर्क एवमेतन्नेतरदित्येवमाकारः, कथं पुनरयं तत्त्वज्ञानार्थो न तु तत्त्वज्ञानमेवेति देशयति—कथं पुनरिति। परिहरति—अनवधारणादिति। पर्यायैर्निश्चयादत्यन्तभेद उक्तः। भावितात् चिन्तितात्, अत एव प्रसन्नात् निर्मलादिति। प्रमाणस्य सामर्थ्यादिति तर्कस्य स्वातन्त्र्यमपाकरोति। स्यादेतत्—यदि न तर्कस्तत्त्वनिश्चयसाधनमपि तु प्रमाणमेव, हन्त भोः किमर्थं तर्हि वादे प्रमाणतर्कसाधनेत्युक्तमित्यत आह—सोऽयं तर्क इति। व्यक्त्यभिप्रायेण प्रमाणानीति। प्रमाणविषयविपर्ययाशङ्काविघटितानि प्रमाणानि प्रतिसंदधान इत्यर्थः।

## वृत्तिः

आरोपः अर्थाद्व्यापकस्य। तथा च व्यापकाभाववत्त्वेन निर्णीते व्याप्यस्याहार्यारोपाद् यो व्यापकस्याऽऽहार्यारोपः स तर्कः। यथा निर्वह्नित्वारोपान्निर्धूमत्वारोपः—निर्वह्निः स्यात् निर्धूमः स्यादिति। ह्रदो निर्वह्निः स्यात् निर्धूमः स्यादित्यादिवारणाय व्यापकाभाववत्त्वेन निर्णीत

---

(१) "शरीरादि-" इति ज०। (२) "तन्नानुजानाति" इति ज०। (३) "लक्षणादूहाद्" इति वि-टि-फ०। "-लक्षणानुग्रहोद्-" इति ग-ज-श्रा०। (४) "अप्रसन्ना-" इति टि०। (५) आदर्शे—"अनिष्टप्रसक्ता-विपर्ययस्यैव" इति।

## न्यायभाष्यम्

वादेऽपदिष्ट (१) इति अविज्ञाततत्त्वमनुजानाति। यथा सोऽर्थो भवति तस्य तथाभावः(२)तत्त्वम्, अविपर्ययो याथातथ्यम् ॥ ४० ॥

## न्यायवार्त्तिकम्

अविज्ञाततत्त्वेऽर्थे कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इति सूत्रम्। अस्यार्थः पूर्ववत्। अविज्ञाततत्त्वेऽर्थे इति। यथा सोऽर्थो भवति सोऽस्य तथाभावस्तत्त्वम्, एतस्मिन् 'अविज्ञाते' सामान्यतो ज्ञाते। कुतः पुनरेतत् सामान्यतोऽवगतमिति ? अविज्ञाततत्त्वेऽर्थे इत्यभिज्ञानात्; यस्मादयमाह—अविज्ञाततत्त्व इति, तेन ज्ञापयति—सामान्यमवगतमिति। यदि पुनः सामान्यमपि नाधिगतं स्यात् न ब्रूयादविज्ञाततत्त्व इति, अविज्ञात इत्येवं ब्रूयादिति।

अविज्ञाततत्त्व इति समासोऽयम्, न चार्थो गम्यते किमविज्ञातं तत्त्वं येन उताविज्ञातं तत्त्वं यस्येति। कश्चात्र विशेषः ? यद्यविज्ञातं तत्त्वं येन सोऽयमविज्ञाततत्त्वः परिच्छेत्ता, तस्मिन्नविज्ञाततत्त्वे परिच्छेत्तरि तदवगमार्थमूहस्तर्क इति प्राप्नोति। अथाविज्ञातं तत्त्वं यस्य तदविज्ञाततत्त्वं तस्मिन्नविज्ञाततत्त्व इति; षष्ठीविग्रहेण युक्तमेतत्। विशेषहेत्वभावान्नार्थाधिगमः, नात्र विशेषहेतुरिति किमयं तृतीयाविग्रहेण समास उत षष्ठीविग्रहेणेति। युक्तम्, अर्थग्रहणसामर्थ्यात्,

## न्यायवार्त्तिकतात्पर्यटीका

वार्तिककारः सूत्रतात्पर्यमाह—अस्येति। समानजातीयात् संशयादेरसमानजातीयाच्चेच्छादेर्व्यवच्छिद्यते। यद्यपि संशयजिज्ञासे अप्यविज्ञाततत्त्वेऽर्थे प्रवर्तेते, तथाऽपि न कारणोपपत्तित इति तयोर्व्यवच्छेदः। तत्त्वं व्याचष्टे—यथेति। समानासमानजातीयव्यवच्छिन्नमविपरीतं रूपं तत्त्वमित्यर्थः। चोदयति—कुतः पुनरिति, न हि सामान्यज्ञानविधायकं पदमत्रास्तीत्यर्थः। परिहरति—अविज्ञातेति। विशेषनिषेधः शेषाभ्यनुज्ञाहेतुरित्यर्थः। विमृशति—अविज्ञाततत्त्व इति समासोऽयमिति। अवधारयति—षष्ठीविग्रहेणेति। युक्तम् उपपन्नम्, तृतीयाविग्रहेण त्वनुपपन्नमित्यर्थः। संशयबाधाह—विशेषहेत्वभावादिति। युक्तमिति प्रतिज्ञामात्रेणोच्यते न त्वत्र

## वृत्तिः

इति। निर्वह्निः स्यात् अद्रव्यं स्यादित्यादिवारणाय व्याप्यस्येति। तद्व्याप्यारोपाधीनस्तदारोप इत्यर्थलाभाय व्यापकेति। न चानुमानादितोऽर्थसिद्धेस्तर्को व्यर्थ इति वाच्यम्, अप्रयोजकत्वादिशङ्काकलङ्कितेन हेतुनाऽर्थस्य साधयितुमशक्यत्वात्। तदेतदुक्तम्—अविज्ञाततत्त्वेऽर्थे तत्त्वज्ञानार्थमिति, तत्त्वनिर्णयार्थमित्यर्थः। यत्र नाप्रयोजकत्वाद्याशङ्का तत्र तर्को नापेक्ष्यत एवेति भावः।

---

(१) "उपदिष्ट" इति ज-चा०। (२) "यथाभाव" इति ल-ज-वा-ग०।

## न्यायवार्त्तिकम्

यस्मादविज्ञाततत्त्वेऽर्थ इति, अर्थश्चार्यमाणत्वात् कर्म, तेन ज्ञापयति—षष्ठीसमासोऽयं न तृतीयाविग्रह इति। अर्थग्रहणमन्तरेणापि सामान्यतोऽवगतेरविज्ञातं तत्त्वं यस्येत्युक्तेऽप्यर्थे गम्यत एवैतदर्थ इति। एवमपि समासे सन्देहतादवस्थ्यम्। मा भूत् समासो वाक्यमेवास्तु अविज्ञातं तत्त्वमस्येति। भवत्येवाभीष्टार्थप्राप्तिः, लाघवार्थं तु समासकरणम्। अनुक्तेऽप्यर्थे सामर्थ्याद् गम्यते अविज्ञातं तत्त्वमस्येति। अत्रोक्तं सन्देह एवं स्यादिति समस्तानभिधानप्रसङ्गाच्च। यदि च सामर्थ्यमाश्रित्यार्थग्रहणं प्रतिषिध्यते तदैवं युक्तमूहस्तर्क इति, सामर्थ्यतः शेषं गम्यत इति, तस्मादर्थग्रहणं ज्ञातृनिराकरणार्थमिति।

अविज्ञाततत्त्व इति (१)न वक्तव्यम्, गम्यमानत्वात्, कारणोपपत्तितस्तत्त्वज्ञानार्थमूहस्तर्क इत्युक्ते गम्यते एतत् अविज्ञातं तत्त्वमस्येति। अत्र तावदुक्तं समस्तानभिधानप्रसङ्गादिति। मा भूत् समस्ताभिधानम्, किं नो बाध्यते ? न, बुद्धिधर्मनिराकरणार्थत्वात्; उभयथा खल्वयमूहो

## न्यायवार्त्तिकतात्पर्यटीका

हेतुरभिधीयत इत्यर्थः। युक्तत्वे हेतुमाह—युक्तम्(२) अर्थग्रहणसामर्थ्यादिति। अन्यश्चोदयति—अर्थग्रहणमन्तरेणापीति। ज्ञेयेन हि ज्ञानं निरूप्यते, न ज्ञात्रा, तस्य साधारण्यादिति सामर्थ्यमित्यर्थः। गूढाभिसन्धिः परिहरति—एवमपीति। तस्याभिसन्धिभेदमुररीकृत्य चोदयति—मा भूत् समास इति। उत्तरवाद्याह—भवत्येवेति। नाद्याप्यनेन स्वाभिप्रायो दर्शित इति मत्वा पुनश्चोदयति—अनुक्तेऽपीति। उक्तपरिहारपूर्वं स्वाभिप्रायमुद्घाटयति—अत्रोक्तमिति। समस्तानभिधानप्रसङ्गाच्चेति स्वाभिप्रायोद्घाटनम्। एतदुक्तं भवति—सामर्थ्यप्राप्तस्यानभिधानेऽतिप्रसङ्ग इति न सामर्थ्यमाश्रित्य लक्षणे संशयो निराकरणीय इति तन्निराकरणार्थमर्थग्रहणं कर्त्तव्यमिति।

अत्र चोदयति—अविज्ञाततत्त्व इति न वक्तव्यमिति। न हि तत्त्वे ज्ञाते तत्त्वज्ञानार्थिता भवति तस्माद्गम्यते अविज्ञाततत्त्व इति भावः। गूढाभिसन्धिरुक्तं परिहारं स्मारयति—अत्र तावदुक्तमिति। अविदिताभिप्रायश्चोदक आह—मा भूदिति, अस्तूहस्तर्क इत्येतावदेवेत्यर्थः। उत्तरवादी स्वाभिप्रायमुद्घाटयति—न बुद्धिधर्मेति। यद्यपि नास्माकं राद्धान्ते शुश्रूषादयो

## वृत्तिः

परे तु ऊह इत्येव लक्षणम्। ऊहत्वं च मानसत्वव्याप्यो जातिविशेषः, तर्कयामीत्यनुभवसिद्धः। तर्कः किं स्वत एव निर्णायकः परम्परया वेत्यत आह—कारणेति। कारणस्य व्याप्तिज्ञानादेरुपपादनद्वारेत्यर्थः। तथा च धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न

(१) अत "न वक्तव्यम्" इत्यारभ्य "समस्तानभिधानप्रसङ्गादिति" इत्यन्तः पाठः ख-पु० नास्ति।
(२) इतो वक्तव्ये युक्तमिति प्रतिज्ञावाक्यमत्र लेखकप्रमादात् सम्पातादा आयातमिति प्रतिभाति।

## न्यायवार्त्तिकम्

भवति विज्ञाततत्त्वेऽविज्ञाततत्त्वे च, तत्र तावद्विज्ञाततत्त्व ऊहः शुश्रूषा-श्रवण-धारण-विज्ञानो-हापोहतत्त्वाभिनिवेशा बुद्धिधर्मा इति तत्त्वमवधृतं विजानाति विज्ञातमूहत इति। किमुक्तम्भवति? योऽसावर्थः पूर्वमनेन विज्ञातस्तमेवोहत इति पूर्वानुभूतपरिच्छेदक ऊह इत्युच्यते न त्वयं तर्कः। यः पुनरविज्ञाततत्त्वेऽर्थे ऊहः स तर्कः।

षष्ठ्यभिधानमधिकरणार्थासम्भवादविज्ञाततत्त्वस्यार्थस्येति वक्तव्यम्, अविज्ञाततत्त्वोऽर्थो ज्ञायमानः कर्म भवति कर्मणि च षष्ठ्येव ज्यायसी यथा घटस्य विज्ञानमिति। न, विभक्ति-व्यत्ययात्। षष्ठीस्थल एवैषा सप्तमी द्रष्टव्या, यथाऽन्यत्र—

"इषावयुगपत् संयोगविशेषाः कर्मान्यत्वे हेतवः"(१)

इति। व्यत्ययः कस्मात्? यदि व्यत्ययेन कश्चिदर्थो लभ्यते युक्तो व्यत्ययः, यथा तस्मिन्नेव

## न्यायवार्त्तिकतात्पर्यटीका

बुद्धिगुणा बुद्धितत्त्वस्यैवाभावात्, तथाऽप्यात्मगुणा अपि सांख्याभिप्रायेण बुद्धिगुणा उक्ताः। एतदुक्तं भवति—यद्यूहस्तर्क इत्येतावदुच्येत, यदि वा तत्त्वज्ञानार्थमूहस्तर्क इत्येतावन्मात्रम्, ततो विज्ञाततत्त्वेऽपि यदूहः पूर्वानुभूतपरिच्छेदात्मा जायते पुनस्तत्त्वज्ञानार्थं सोऽपि तर्कः स्यात्, तस्मादविज्ञाततत्त्व इति वक्तव्यमित्यर्थः। यद्यपि कारणोपपत्तित इत्येतस्मादप्ययमर्थो गम्यत एव, तथाऽपि कारणोपपत्तेरेवंरूपत्वं नाविज्ञाततत्त्वग्रहणमन्तरेण भवति। तथा हि अधिगतपरिच्छेदात्मा-ऽप्यूहः कारणस्योपपत्त्या संभवेन ज्ञायते, कारणासंभवे कार्यस्यासत्त्वात्; न त्वसावविज्ञाततत्त्व इति ततो व्यवच्छेदः। तथा च सति प्रमाणमपि तर्कः स्यादत उक्तं कारणोपपत्तित इति। उक्ते सति प्रयोजनानुसरणम्, न त्विह लाघवादरः सूत्रकारस्येति मन्तव्यम्।

चोदयति—षष्ठ्यभिधानमिति। परिहरति—न विभक्तिव्यत्ययादिति। यथाऽन्यत्र कणभुजः सूत्रे। विप्रतिपन्नः पृच्छति—कस्मात्। प्रष्टैवैकग्रन्थेनाह—यदि व्यत्ययेनेति।

## वृत्तिः

स्यादित्यनेन व्यभिचारशङ्कानिरासे निरङ्कुशेन व्याप्तिज्ञानेनानुमितिरिति परम्परयैवास्योपयोग इत्याहुः।

स चायं पञ्चविधः, आत्माश्रयान्योन्याश्रय-चक्रकानवस्था-तदन्यत्राधितार्थप्रसङ्गभेदात्। स्वस्य स्वापेक्षित्वेऽनिष्टप्रसङ्ग आत्माश्रयः, स चोत्पत्ति-स्थिति-ज्ञप्तिद्वारा त्रेधा। यथा—यद्ययं घट एतद्घटजन्यः स्यात् तदा एतद्घटानधिकरणक्षणोत्तरवर्त्ती न स्यात्; यद्ययं घट एतद्घट-

(१) वैशेषिकदर्शने ५।१।१६ सूत्रम्।

## न्यायवार्त्तिकम्

"इषावयुगपत् संयोगविशेषा" इति अधिकरणार्थः, इषोरपि येऽवयवास्तेषामपि संयोगविशेषास्तेऽपि कर्मान्यत्वे हेतव इति। न पुनरिह व्यत्ययेन फलं पश्यामः, तस्माद्युक्तो विभक्तिव्यत्यय इति। न, युक्तः(१), सामान्याधिगतस्य विशेषज्ञापनार्थम्, यस्यैव सामान्यमधिगतं तद्वर्त्तिनो विशेषा अप्यवगन्तव्या इति। ते च विशेषाः संयोगिनः समवायिनश्च भवन्तीति।

कारणोपपत्तितः प्रमाणोपपत्तितः(२)। उपपत्तिः सम्भवः। सम्भवति अस्मिन् अर्थे प्रमाणमिति (३)भवेदयमर्थ इति। उदाहरणम्—योऽयं ज्ञाता ज्ञातव्यमर्थं जानाति(४) तं तत्त्वतो जानीयेति(५) किमुत्पत्तिधर्मकोऽथानुत्पत्तिधर्मक इति। एकतरमनुजानातीति(६) भाष्यम्। अनुत्पत्तिधर्मकेणानेन भवितव्यमिति य ऊहः स तर्क इति। नन्वेतत् तत्त्वज्ञानमेव, किमुच्यते तत्त्वज्ञानार्थमिति। नेदं तत्त्वज्ञानमनवधारणात् न ह्ययमवधारयति एवमेवेति, किं त्वनुत्पत्तिधर्मकेण ज्ञात्रा भवितव्यमिति प्रमाणविषयमनुजानाति। कथं पुनरयं तत्त्वज्ञानार्थं भवति ? प्रमाणविषयविवेचनात्(७)। प्रमाणविषयमनेन विविनक्ति अयमर्थो युक्त इति। प्रमाणानि पुनः प्रवर्त्तमानानि तर्कविविक्तमर्थं तथाभूतमवगमयन्तीति(८)।

ऊहः संशयनिर्णयाभ्यां न भिद्यत इति केचित्। अयं किलोहः संशयो वा स्यान्निर्णयो वा(९) ? यदि संशय(१०)स्तदा तेन सङ्गृहीतत्वात् पृथक् न पठितव्यः। अथ निर्णयस्तदा तेन सङ्गृहीत इति। अपरे त्वनुमानं तर्क इत्याहुः। हेतुस्तर्को न्यायोऽन्वीक्षा इत्यनुमानमाख्यायत इति। अपरे त्वनुमानमेव तर्कं युक्त्यपेक्षं वर्णयन्ति।

## न्यायवार्त्तिकतात्पर्यटीका

परिहरति—न, युक्त (११) इति, सामान्येनाधिगतस्य विशेषेण ज्ञापनार्थम्। नित्यत्वादयो विशेषाः समवायिनः, वह्न्यादयश्च धूमादिसंयोगिन इति। शेषं सुगमम्।

देशयति—ऊहः संशयनिर्णयाभ्यामिति। केचित् सिद्धान्तैकदेशिनः, अनुमानं तर्क इत्याहुः।

## वृत्तिः

वृत्तिः स्याद् एतद्घटव्याप्यो न स्यात्; यद्ययं घट एतद्घटज्ञानाभिन्नः स्याज् ज्ञानसामग्रीजन्यः स्यात्, एतद्घटभिन्नः स्यादिति वा सर्वत्रापाद्यम्। तदपेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गोऽन्योन्याश्रयः। सोऽपि पूर्ववत् त्रेधा। तदपेक्षापेक्षापेक्षित्वनिबन्धनोऽनिष्टप्रसङ्गश्चक्रकम्। चतुःकक्षादावपि स्वस्य स्वापेक्षापेक्षापेक्षित्वसत्त्वात् नाधिक्यम्। अस्यापि पूर्ववत् त्रैविध्यम्।

---

(१) "न न युक्तः" इति ख। (२) अत्र ख-पु० "च"कारः अधिकः। (३) स्यादेवमित्यादिभाष्यव्याख्यानमिदम्। (४) भाष्ये "जानीते" इति बहुपुस्तकसंवादी पाठो गृहीतः। (५) "जानीयेयमिति" इति ख। (६) 'अनुजानात्ययमेकतरमि'ति पाठस्तु मुद्रितबहुपुस्तकानुसारितया मूले गृहीतः। "एक उभयं जानातीति" इति ख। (७) "प्रमाणविषयाविवेचनात्" इति ख। (८) "अवगमयन्ति" इत्यत्र "अवगच्छन्ति" इति ख। (९) "स्यान्निर्णयो वा" इति ख-पु० नास्ति। (१०) "संग्रह-" इति ख। (११) ख-तात्पर्ये "न न युक्तः" इति पाठः।

## न्यायवार्त्तिकम्

यत्तावन्निर्णयसंशयाभ्यां नोहो भिद्यत इति, तन्न, प्रत्ययस्वरूपानवबोधात्। अविज्ञाततत्त्वेऽर्थे भवतीति सामान्येनाक्षिप्तो भवान्। सत्यमविज्ञाततत्त्वे भवतीति, न पुनः प्रत्ययस्वरूपं व्यज्ञायि भवता। अनवधारणात्मकः प्रत्ययः संशयः किंस्विदिति, अवधारणात्मकः प्रत्यय एवमिदमिति निर्णयः। अयन्तु संशयात्(१) प्रच्युतः कारणोपपत्तिसामर्थ्यात्, संशये(२) कारणोपपत्तिरस्ति। निर्णयं चाप्राप्तो विशेषादर्शनात्; विशेषदर्शनान्निर्णयो भवति न चास्मिन् विशेषदर्शनमस्ति। एतेनानुमानं तर्क इत्येतदपि प्रत्युक्तम्, विशेषादर्शनादिति। किं पुनरस्य स्वरूपम्? भवेदित्येष प्रत्यय इत्येतस्य स्वरूपमिति। यैरप्यनुमानं युक्त्यपेक्षं तर्क इत्युच्यते तैरप्यनुमानात् तर्कभेदः स्वयमुक्तः। युक्तिः प्रमाणोपपत्तिः, प्रमाणोपपत्तिमपेक्षमाणो यः प्रत्ययः स तर्क इति केवलं संज्ञाभेदमात्रम्। अथ न प्रमाणोपपत्तिर्युक्तिः, अनुमानं युक्त्यपेक्षमित्यपेक्षासामर्थ्यं वक्तव्यम्। स्वविषयाधिगमे चानुमानं किमपेक्षते।

## न्यायवार्त्तिकतात्पर्यटीका

अन्ये त्वनुमानमेव युक्त्यपेक्षं विपर्ययेऽनिष्टप्रसङ्गापेक्षं तर्क इति वर्णयन्ति।

तत्र प्रथमचोदकं प्रत्याह—यत्तावदिति। आक्षिप्त आक्षिप्तहृदयः, न तु तर्कप्रत्ययस्वरूपं चेतयत इत्यर्थः। विशेषदर्शनादिति, विशेषदर्शनान्निश्चयः प्रमाणेन भवति, न तर्केण, तदनुज्ञानमात्रत्वात् तर्कस्येत्यर्थः। चोदकं निराकृत्य सिद्धान्तैकदेशिनं निराकरोति—एतेनेति। यदि संशयात् प्रच्युतो निर्णयं चाप्राप्तस्तर्हि तस्य स्वरूपं वक्तव्यमिति पृच्छति—किं पुनरिति। उत्तरम्—भवेदिति, प्रमाणविषयाभ्यनुज्ञेत्यर्थः। द्वितीयमेकदेशिनं निराकरोति—यैरपीति। युक्तिर्हि प्रमाणोपपत्तिस्तज्जन्मा च प्रत्ययस्तर्क एव, स चानुमानमिति त्वयोच्यते, अस्माभिस्तु तर्क इति संज्ञाभेदमात्रमित्यर्थः। शङ्कते—अथेति। निराकरोति—अनुमानमिति। प्रमाणोपपत्त्यतिरिक्ताया युक्तेरनिरूपणाद् युक्त्यर्थो वक्तव्यः, न ह्यपेक्षणीयमन्तरेणापेक्षा शक्या निरूपयितुमिति भावः। ननु

## वृत्तिः

अव्यवस्थितपरम्परारोपाधीनानिष्टप्रसङ्गोऽनवस्था। यथा—यदि घटत्वं घटजन्यत्वव्याप्यं स्यात् कपालसमवेतत्वव्याप्यं न स्यात्। तदन्यबाधितार्थप्रसङ्गस्तु—धूमो यदि वह्निव्यभिचारी स्याद् वह्निजन्यो न स्यादित्यादिः। प्रथमोपस्थितत्वोत्सर्ग-विनिगमनाविरह-लाघव-गौरवादिकं तु प्रसञ्जनात्मकत्वान्न तर्कः, किन्तु प्रमाणसहकारित्वरूपसाधर्म्यात्तथा व्यवहार इति सङ्क्षेपः॥ ४०॥

---

(१) अत्र क-पु० "निर्णयात्" इत्यधिकः पाठः। (२) ख-पु०—"कारणोपपत्तिसामर्थ्यात् संशये" इत्यंशो नास्ति।

## न्यायवार्त्तिकम्

अथेतरप्रमाणापेक्षा युक्तिरित्युच्यते, एवमप्यनुग्रहार्थो (१) वक्तव्यः—कथं प्रत्यक्षागमाभ्यामनुमानमनुगृह्यत इति। अथानुमानस्य प्रत्यक्षागमैकविषयत्वम्, तत्रापि कः (२)तर्कः ? त्रीण्येतानि प्रमाणविषयतया प्रतिसंहितानीति। भवेत्, अवधारणप्रत्ययौ भिन्ननिमित्तौ विशेषवत्त्वात् प्रत्यक्षानुमानप्रत्ययवत्। अनुमानं तर्कः लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षत्वात् अनुमानवत्। न, तर्कस्वरूपानवबोधात्; नैव लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षस्तर्कः। कथमिति ? द्वयस्यानधिगतेः। यत्र द्वयमधिगम्यते धर्मी साधनधर्मश्च तत्रानुमानं प्रवर्तते, यत्र पुनर्धर्मिमात्राधिगतिर्न लिङ्गाधिगतिरस्ति स तर्कविषयः (३) इति। तस्मात् लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षत्वमनुपपन्नम्। अनुमानं धर्मिगतधर्मोपलब्धौ प्रवर्तते न पुनस्तर्कः, तर्कस्त्वन्यगतधर्मदर्शनेनापि प्रवर्तते यथा भवितव्यमत्र (४) पुरुषेणेति, यथाऽस्मिन् देशेऽश्वा वाह्यन्त इति अश्ववाहनं न(५) पुरुषधर्मः, सोऽयमन्यगतधर्मोपपत्त्या स्थाणुव्यवच्छेदमात्रमूह इति। सोऽयं तर्कः प्रमाणानि सन्धत्त इति प्रमाणसहितो वादेऽपदिष्टः, न पुनरयं प्रमाणमपरिच्छेदकत्वादिति (६) ॥४०॥

## न्यायवार्त्तिकतात्पर्यटीका

यदेव किञ्चित् स्वविषयाधिगमेऽनुमानमपेक्षते सैवापेक्षणीया युक्तिरनुमानस्य भविष्यतीत्यत आह—स्वविषयाधिगमे चेति।

शङ्कते—अथेति। निराकरोति—एवमिति। यद्युत्पत्तौ प्रत्यक्षागमापेक्षमनुमानम्, न वक्तव्यं युक्त्यपेक्षमिति, सर्वस्यानुमानस्य तथाभावेऽव्यभिचारेण विशेषणायोगादिति भावः। पुनः शङ्कते—अथानुमानस्येति। निराकरोति—तत्रापीति। एवमपि तर्को नार्थान्तरं स्यादनुमानभेदस्य चेद्दशस्य प्रमाण एवान्तर्भाव इति भावः। उक्तमर्थं प्रमाणयति—भवेदिति। प्रत्ययोऽवधारणप्रत्ययश्चेत्यर्थः। चोदयति—अनुमानमिति। विपर्ययोऽनिष्टप्रसङ्गो व्यतिरेकि लिङ्गं तच्चागृहीतसंबन्धं लिङ्गिनि न प्रवर्त्तत इति लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षत्वादप्राणादिमत्त्वप्रसङ्गादितिवदनुमानमेवेत्यर्थः। परिहरति—न तर्केति। युक्तं व्यतिरेकिणि जीवच्छरीरे धर्मिणि प्राणादिमत्त्वस्य साधनधर्मस्य दर्शनात्, ननु 'यद्युत्पत्तिमान् आत्माऽभविष्यत् न संसारापवर्गावुपपत्स्येताम्' इत्यत्राऽऽत्मनि धर्मिणि साधनधर्म उत्पत्तिरस्ति यद्दर्शनतः संस्कारोद्बोधे सति लिङ्गलिङ्गिसंबन्धस्मृतिर्भवेदित्यर्थः। न केवलं प्रसङ्गसाधनं साध्यधर्मिण्यसिद्धम्, अपि त्वन्यगत एव प्रसङ्गहेतुः, न त्वनुमानमन्यगताद्धर्मात् प्रवर्त्तते, तस्मादनुमानादस्य स्फुटो भेद इत्याह—अनुमानं चेति (७)। भाष्यव्याख्यानं सोऽयमिति ॥ ४० ॥

---

(१) "एवमप्यर्थग्रहार्थो" इति ख। (२) ख-पु० "कः" इति नास्ति। (३) "सतर्कामविषये" इति, ख। (४) "भवितव्यमत्र" इत्यत्र "भवितव्यमनेन" इति ख। (५) ख-पु० "न" नास्ति। (६) "प्रमाणपरिच्छेदकत्वादिति" इति ख। (७) वार्त्तिके "च" नास्ति। क-तात्पर्य—"अनुमानं चेत्" इति पाठः।

## न्यायभाष्यम्

एतस्मिंश्च तर्कविषये—

### (सू०) विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः ॥४१॥

स्थापना साधनम्, प्रतिषेध उपालम्भः। तौ साधनोपालम्भौ पक्षप्रतिपक्षाश्रयौ व्यतिषक्तावनुबन्धेन प्रवर्त्तमानौ पक्षप्रतिपक्षावित्युच्येते। तयोरन्यतरस्य निवृत्तिरेकतरस्यावस्थानमवश्यम्भावि, यस्यावस्थानं तस्यार्थावधारणं(१) निर्णयः।

नेदं पक्षप्रतिपक्षाभ्यामर्थावधारणं सम्भवतीति—एको हि प्रतिज्ञातमर्थं (२)हेतुतः स्थापयति प्रतिषिद्धं चोद्धरति द्वितीयस्य। द्वितीयेन स्थापनाहेतुः प्रतिषिध्यते

## न्यायवार्त्तिकतात्पर्यटीका

नैतन्निर्णयमात्रस्य लक्षणमपि तु परीक्षाप्रयोजनस्य, स च निर्णयो विमर्शानन्तरोत्पन्नतर्कसहायप्रमाणनिबन्धनस्तर्कविषय एवेति निर्णयभेदलक्षणमिति नाव्यापकं तल्लक्षणमिति दर्शयितुं भाष्यकारो निर्णयलक्षणमवतारयति—एतस्मिन् [च] तर्कविषये।

अत्र पक्षप्रतिपक्षयोः कर्मतया (३) न निर्णयसाधनत्वमित्यनुपपत्त्या साधनोपालम्भौ वादसूत्रगतौ लक्षणीयाविति तावेव तावद्भाष्यकृद् विभजते—स्थापना साधनम्, प्रतिषेधः साधनस्य उपालम्भः। लक्षणानिबन्धनं संबन्धमाह—तौ साधनोपालम्भाविति। यद्यप्युपालम्भो न प्रतिपक्षाश्रितः तथाऽपि तदुद्देशेन प्रवृत्तस्तदाश्रित इत्युच्यते। मुख्यपदोपादानोल्लङ्घनेन लाक्षणिकपदोपादानलभ्यं प्रयोजनमाह—व्यतिषक्ताविति। अर्थग्रहणसामर्थ्यलभ्यमेकतरनिर्णयावसानत्वमाह—अनुबन्धेन प्रवर्त्तमानाविति। एतच्च वार्त्तिके स्फुटीभविष्यति(४) तमेव साधनोपालम्भयोः परस्परानुबन्धं दर्शयति—तयोरन्यतरस्येति। यस्य साधनस्य वा उपालम्भस्य वाऽवस्थानं तस्य साधनस्य वा उपालम्भस्य वा योऽर्थः पक्षः प्रतिपक्षो वा तस्यावधारणमित्यर्थः। अत्र पक्षप्रतिपक्षप्रयोगाद् वादे संशयोऽस्तीति भ्रान्त्या चोदयति—नेदमिति। एक इति वादी, प्रतिज्ञातमर्थं हेतुतः स्थापयति। द्वितीयस्य प्रतिवादिनः, प्रतिषिद्धं प्रतिषेधं वाद्युक्तस्य हेतोर्दूषणमिति यावत्; उद्धरति दूषणाभासीकरोति। द्वितीयेन तु

## वृत्तिः

क्रमप्राप्तं निर्णयं लक्षयति—( विमृश्येति )। विमृश्य सन्दिह्य।

---

(१) अत्र क-पुस्तकपाठो गृहीतः। 'तस्यावधारण'मिति पाठान्तरम्। (२) ग-पुस्तके—अत्र "तम्" इत्यधिकम्। (३) ३३२-पृष्ठे वार्त्तिके इदं स्फुटीभविष्यति। (४) ३३३-पृष्ठस्थवार्त्तिकस्य २य-पंक्तौ "युक्तिसामर्थ्यादन्यतर" इत्यादिना वाक्येन।

## न्यायभाष्यम्

तस्यैव प्रतिषेधहेतुश्चोद्ध्रियते स निवर्त्तते। तस्य निवृत्तौ योऽवतिष्ठते तेनार्थावधारणं निर्णयः।

उभाभ्यामेवार्थावधारणमित्याह। कया युक्त्या? एकस्य सम्भवो द्वितीयस्यासम्भवः। तावेतौ सम्भवासम्भवौ विमर्शं सह निवर्त्तयतः—(१) उभयसम्भवे उभयासम्भवे (२) वाऽनिवृत्तो विमर्श इति। विमृश्येति विमर्शं कृत्वा। सोऽयं विमर्शः पक्षप्रतिपक्षाववद्योत्य न्यायं प्रवर्तयतीत्युपादीयत इति। एतच्च विरुद्धयोरेकधर्मिस्थयोर्बोद्धव्यम्। यत्र तु धर्मिसामान्यगतौ विरुद्धौ धर्मौ हेतुतः सम्भवतः तत्र समुच्चयः, हेतुतोऽर्थस्य तथाभावोपपत्तेः। यथा—क्रियावद् द्रव्यमिति लक्षणवचने यस्य द्रव्यस्य क्रियायोगो हेतुतः सम्भवति तत् क्रियावत्, यस्य न सम्भवति तदक्रियमिति। एकधर्मिस्थयोश्च विरुद्धयोर्धर्मयोरयुगपद्भाविनोः कालविकल्पः। यथा—तदेव द्रव्यं क्रियायुक्तं क्रियावत्, अनुत्पन्नोपरतक्रियं पुनरक्रियमिति।

न चायं निर्णये नियमो विमृश्यैव पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय इति, किं त्विन्द्रियार्थसन्निकर्षोत्पन्न(३)प्रत्यक्षेऽर्थावधारणं निर्णय इति, परीक्षाविषये तु विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः। वादे शास्त्रे (४)च विमर्शवर्जम्॥ ४१॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य प्रथमाह्निकम्।

## न्यायवार्त्तिकतात्पर्यटीका

प्रतिवादिना वाद्युक्तस्य हेतोः स्थापनाहेतुत्वं प्रतिषिध्यते। तस्यैव वादिनः प्रतिवाद्युक्तदूषणप्रतिषेधहेतुश्च प्रतिवादिनैवोद्ध्रियते। स वादिनो वा प्रतिवादिनो वा हेतुश्चोपालम्भश्च निवर्त्तते, तस्मिन्निवृत्ते योऽवतिष्ठते एकः, तेनार्थनिर्णयः, न द्वाभ्याम्। तस्मादयुक्तं पक्षप्रतिपक्षाभ्यामिति। न तावत् संशयविषये निर्णये वादिप्रतिवादिनौ स्तः तयोर्निश्चितयोरेव प्रवृत्तेः।

अभ्युपेत्य परिहरति—उभाभ्यामिति। वादिनः साधनस्य संभवः प्रतिवादिन उपालम्भस्यासंभवः, एवं प्रतिवादिनः साधनस्य संभवो वादिन उपालम्भस्यासंभव इति। विमृश्येति विमर्शं कृत्वेति। अनुपादेयोऽपि विमर्शः कार्यत्वात्कृतिव्याप्य उक्तः। विमृश्येतिपदोपादानस्य प्रयोजनमाह—सोऽयमिति। अवद्योत्य नियमेन विषयीकृत्येत्यर्थः। एकधर्मिस्थयोरित्यस्य व्यतिरेकमाह—यथा क्रियेति। विरुद्धयोरित्यस्य कालभेदेन व्यतिरेकमाह—एकधर्मिस्थयोश्चेति। न निर्णयमात्रस्येदं लक्षणमपि तु परीक्षाविषयस्येत्याह—न चायं निर्णय इति।

(१) उभयसम्भव इति, उभयोः वादिप्रतिवादिसम्बन्धिनोः साधनयोरुपालम्भयोर्वा सम्भव इत्यर्थः। एवमसम्भव इत्यत्रापि बोध्यम्। (२) "त्वनिवृत्तो" ग०। (३) "-कर्षोत्पन्न" इत्यत्र "कर्षेत्यत्र" इति ग०। (४) "शास्त्रे वादे" इति ख-ग-घ-झ०।

## न्यायवार्त्तिकम्

एतस्मिन् तर्कविषये। "विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णय" इति सूत्रम्। सम्बन्धोऽर्थश्च पूर्ववदिति। विमृश्येति विमर्शं कृत्वा। पक्षाच्च प्रतिपक्षाच्च (१) पक्षप्रतिपक्षाभ्याम्, पक्षशब्देन पक्षविषयं साधनमुच्यते प्रतिपक्षशब्देन पक्षविषयस्य साधनस्योपालम्भः, ताभ्यां साधनोपालम्भाभ्यां यदर्थावधारणं स निर्णय इति।

क्व पुनरयं नियमः? किं तावन्निर्णये? आहोस्वित् पक्षप्रतिपक्षाभ्याम्? अथ विमृश्यैवेति? यदि विमृश्य पक्षप्रतिपक्षाभ्यामेव निर्णय इति निर्णये नियमः, इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्यस्य व्याघातः। एतेन विमृश्यैवेति प्रत्युक्तम्। अथ पक्षप्रतिपक्षाभ्यां निर्णय एव, उभयाश्रयो

## न्यायवार्त्तिकतात्पर्यटीका

अर्थावधारणं निर्णय इति एतावन्मात्रं लक्षणम् इन्द्रियार्थसन्निकर्षोत्पन्नप्रत्यक्षे भवतीति योजना। हृदि व्यवस्थितमभ्युपगममुद्घाटयति—वादे शास्त्रे चेति। न हि ज्योतिष्टोमादीनां स्वर्गादिसंबन्धनिर्णये आगमेन कर्त्तव्ये विमर्शोऽस्ति, नापि वादजल्पवितण्डासु विमर्शः, निश्चितयोरेव वादिनोस्तत्र प्रवृत्तेरित्यर्थः।

वार्त्तिकम्—सम्बन्धोऽर्थश्च पूर्ववत्। सम्बन्ध उद्देशक्रमेण तर्कानन्तर्यलक्षणः, अर्थश्च प्रयोजनम्, समानासमानजातीयव्यावृत्तिरित्यर्थः। शेषं भाष्यव्याख्यानेन गतम्। ननु भवतु पक्षशब्दलक्षितस्य साधनस्य निर्णयं प्रति कारणत्वम्, प्रतिपक्षलक्षितस्य तु तद्दूषणस्य न साक्षात्साधकत्वमित्यत आह—पक्षाच्चेति, हेतुत्वं पारम्पर्येणेत्यर्थः। पक्षप्रतिपक्षाभ्यामिति, साधनदूषणाभ्यामित्यर्थः।

लक्षणमाचिक्षिप्सुर्विकल्पयति—क्व पुनरयमिति। अत्र पक्षप्रतिपक्षाभ्यामेवेति प्रथमः कल्पः, तदा हि यत एवकारकरणं ततोऽन्यत्रावधारणमिति निर्णये नियमो भवेत्। निर्णय एवेति द्वितीयः कल्पः, तदा हि पक्षप्रतिपक्षाभ्यामित्यत्र नियमः। विमृश्यैवेति तृतीयः, तदाऽपि निर्णये नियमः। तत्र प्रथमं कल्पमाक्षिपति—यदि विमृश्येति। एतस्मिन् किल कल्पे निर्णयः पक्षप्रतिपक्षविमर्शातिलङ्घनेनान्यत्र न प्रवर्त्तेत इति प्रत्यक्षं प्रमाणं निर्णयफलं न स्यात्; न हि तत्र पक्षप्रतिपक्षौ नापि विमर्श इति प्रत्यक्षलक्षणं बाध्यते इत्यर्थः। तृतीयकल्पमाक्षिपति—एतेनेति, व्याघातेनेत्यर्थः। द्वितीयकल्पे दूषणमाह—अथ पक्षेति। तदा निर्णयस्यानियमात् पक्षप्रतिपक्षौ

## वृत्तिः

पक्षप्रतिपक्षाभ्यां साधनोपालम्भाभ्याम्। उपालम्भः परपक्षदूषणम्। अर्थस्यावधारणं

(१) "पक्षाच्च प्रतिपक्षाच्च" इत्यंशः क-पु० नास्ति, ख-पुस्तके तु "पक्षान्यप्रतिपक्षाच्च" इत्येवं पाठः, तात्पर्ये पुनः—"पक्षाच्चेति" इत्येवं पाठधारणं दृश्यते, अतः सर्वथा सङ्गत्यनुरोधेनास्माभिरेवं पाठः परिगृहीतः।

## न्यायवार्त्तिकम्

निर्णयः प्राप्नोति। (१) तर्कविषये नियमो नान्यत्र,—योऽयं तर्कस्य विषय एतस्मिन् तर्कविषये विमृश्य पक्षप्रतिपक्षाभ्यामेव निर्णयो भवति, न (२) पक्षप्रतिपक्षाभ्यामेव निर्णयो विमृश्यैवेति सामान्यनिर्णयलक्षणमेतत्। कुतोऽयं नियमस्तर्कविषय इति? तर्कस्यानन्तरोद्देशात् तर्कविषय इति नियमः। अन्यथाऽपि निर्णयस्य भावान्न निर्णय इति। अथ निर्णयस्य किं लक्षणम्? अर्थपरिच्छेदः अवधारणं निर्णय इति। सोऽयं निर्णयः प्रमाणविषये भवन्नेकशः प्रमाणैः क्रियते संहृत्य च, तर्कविषये संहृत्य, अन्यत्रैकश इति। वादे शास्त्रे च विमर्शवर्जं—वादे पक्षप्रतिपक्षाभ्यामेव, न शास्त्रे वादे [वादे शास्त्रे ?] वा विमर्शोऽस्ति उभयोर्निश्चितत्वात् शास्त्राभ्युपगतपदार्थस्य निश्चितत्वाच्च।

पक्षप्रतिपक्षशब्देन साधनोपालम्भयोर्ग्रहणमित्ययुक्तं प्रमाणाभावात्—पक्षप्रतिपक्षशब्देन साधनोपालम्भावुच्येते इति किं प्रमाणम्? कस्मात् पुनर्यथाश्रुतं(३) न भवति? पक्षप्रतिपक्षयोः कर्मत्वात्; न च कर्मार्थपरिच्छेदकं परिच्छेद्यत्वात्। तस्मात् पक्षप्रतिपक्षशब्देन परिच्छेदकयोः साधनोपालम्भयोर्ग्रहणम्, तयोरकर्मकत्वात् [र्मत्वात् ?]। तयोरेव कस्मान्न ग्रहणम्? एवं च वक्तव्यम् (४) विमृश्य साधनोपालम्भाभ्यामर्थावधारणं निर्णय इति। एवं सति विस्पष्टोऽर्थो(५) भवति। न च लाघवकृतः कश्चिद्विशेष इति, न; एकविषयज्ञापनार्थत्वात्—यद्विषयौ साधनोपालम्भौ तद्विषयो निर्णयः, अन्यथा हि साधनोपालम्भाभ्यां निर्णय इत्युक्ते न ज्ञायते क्व पुनर्निर्णय इति। पक्षप्रतिपक्षशब्दाभ्यां च साधनोपालम्भयोर्ग्रहणं तद्विषयस्य चेति। अर्थग्रहणं तर्हि न कर्तव्यम्, गम्य-

## न्यायवार्त्तिकतात्पर्यटीका

तदभावश्चेति तदुभयम्, तदाश्रयः निर्णयः प्राप्नोति, तथा चाव्यापकं लक्षणमित्यर्थः। प्रथमं कल्पमालम्ब्य समाधत्ते—तर्कविषय इति। न निर्णयमात्रस्येदं लक्षणमपि तु निर्णयविशेषस्येत्यर्थः। निर्णय इति निर्णयमात्रमित्यर्थः। अथ निर्णयस्य किमिति, निर्णयसामान्यस्येत्यर्थः। एकशः प्रमाणैरिति, प्रत्यक्षादिभिः। संहृत्य च प्रमाणैरिति, साधनदूषणसमाधानैरित्यर्थः। पक्षप्रतिपक्षाभ्यामेव वादे निर्णयो न तु विमर्शः, शास्त्रे तु निर्णय एव न तु शास्त्रातिरिक्तं साधनान्तरमाश्रीयत इत्यर्थः।

## वृत्तिः

तदभावाप्रकारकं तत्प्रकारकं (६) ज्ञानम्। यद्यप्येतावदेव निर्णयसामान्यलक्षणं

(१) इतःपूर्वं क-पुस्तके "तर्कविषय एव नियमो नान्यत्र योऽयं तर्कस्य विषय एतस्मिन्" इत्यधिकम्। (२) ख-पु० "न" नास्ति। (३) "-र्यथाश्रुति" ख। (४) "उक्तम्" इति क। (५) "स्वविशिष्टोऽर्थो" इति ख। (६) "तत्प्रकारकम्" इति नास्ति ल-श्रा-पु०।

## न्यायवार्त्तिकम्

मानत्वात्। केन? (१), विमृश्य पक्षप्रतिपक्षाभ्यामेवावधारणमित्युक्ते गम्यतेऽर्थस्येति, तस्मादर्थग्रहणं न कर्त्तव्यम्। (२) न न कर्तव्यम्, श्रुतिसामर्थ्यादन्यतरनिर्णयज्ञापनार्थं गम्यमानार्थग्रहणं यत् करोति तेन ज्ञापयत्यन्यतरस्मिन् पक्षे निर्णय इति। पक्षप्रतिपक्षाभ्यामर्थावधारणमित्ययुक्तम्; एकस्मादधिगतेः (३)। नेदं पक्षप्रतिपक्षाभ्यां सहिताभ्यामवधारणम्, किं तर्हि? एकस्माद् योऽवतिष्ठत इति। उभाभ्यामेवेत्याह। कथमिति? उभयनिवृत्तावनिवृत्तो हि विमर्शः उभयावस्थाने चानिवृत्त इति; यदा त्वेकोऽवतिष्ठत एको निवर्तत इति तदा निर्णय इति। अतः संहत्य पक्षप्रतिपक्षौ निर्णयहेतू इति। एतस्मिन् विषये कदा निर्णयो भवति? किं प्रथमे, उत द्वितीये, उत तृतीये इति। सर्वत्र भवति अर्थस्य तथाभावात्। अथवा तृतीय इति युक्तम्। कथमिति? एकस्तावत् साधनेन पक्षमवस्थापयति, द्वितीयः साधनं दृष्ट्वा निवर्त्तते, साधनाभासं वा बुद्ध्वा साधनदोषोद्भिभावयिषया प्रवर्त्तते, तस्मिन् [तं ?]निवर्त्य साधनं ब्रूते। प्रथम इदानीं निश्चितं साधनमिति यदि मन्यते, न प्रवर्तते। अथ दूषणाभासमिति बुध्यते, तदुद्भावनार्थं प्रवर्त्तते। तन्निवृत्तौ द्वितीयपक्षसाधनमपि निवर्त्तते। किं कारणम्? प्रथमपक्षसाधनस्य निर्दोषत्वात्, निर्दोषे च प्रथमपक्षसाधने न द्वितीयस्यावकाश इति निवर्तते(४) द्वितीयः पक्ष इति, यत्रावतिष्ठते (५) तस्मिन्निर्णयः। सोऽयं निर्णयः सम्भवासम्भवाभ्यां पक्षप्रतिपक्षयोः संहत्य क्रियते।

निर्णयोऽनुमानमेवेति केचित्—केचिद्वर्णयन्ति निर्णयोऽनुमानमेव न पदार्थान्तरमिति,

## न्यायवार्त्तिकतात्पर्यटीका

पक्षप्रतिपक्षशब्दाभ्यामिति, लक्षणायां हि येन लक्ष्यते तदवच्छेदकतया तदपि बुद्धौ सन्निधीयते, ततश्च तेन नियमो भवति लक्ष्यमाणस्य, यथा गङ्गायां घोष इति गङ्गासंबन्ध्येव तीरं घोषेणान्वीयते, न त्वकूपारतीरमपीति। चोदयति—अर्थेति। परिहरति—न नेति। अर्थग्रहणे क्रियमाणे काल्पनिकत्वं प्रतिषिध्यते, न चाकल्पितं विरुद्धधर्मवदित्येकतरनिर्णयः। नेदं पक्षप्रतिपक्षाभ्यामित्यादि चोद्यभाष्यं व्याचष्टे—पक्षप्रतिपक्षाभ्यामिति। उभाभ्यामिति परिहारभाष्यं व्याचष्टे—उभाभ्यामेवेत्याहेति। पृच्छति—एतस्मिन्निति। प्रथमं साधनं, द्वितीयं दूषणं, तृतीयं समाधानम्। उत्तरम्—सर्वत्र, कदाचित्प्रथमे कदाचिद् द्वितीये कदाचित्तृतीय इत्यर्थः। अवश्यं तु तृतीय इत्याह—अथ वेति। उभयत्र कल्पे प्रश्नः—कथमिति। उत्तरम्—एकस्तावदिति।

निर्णयोऽनुमानमेवेति केचित्। तथा हि तृतीयलिङ्गदर्शनं प्रत्यक्षफलं निर्णयः, तदेव

(१) अतः परं ख-पुस्तके 'गम्यमानत्वात्' इत्यधिकम्। (२) "न न कर्त्तव्यम्" इति ख-पु० नास्ति। (३) "कस्मात्? अधिगतेः" इति क। (४) ख-पु० "न" इत्यधिकम्। (५) "योऽत्रावतिष्ठते" क।

## न्यायवार्त्तिकम्

न ; लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षत्वा(१)दनुमानस्य, निर्णये च तदभावः प्रमाणफलत्वात्, प्रमाणमनुमानं प्रमाणफलं तु निर्णयः। निर्णयः स्वविषय एव, अनुमानं तु स्वविषयेऽन्यत्र च। यथा धूमदर्शनं धूमपरिच्छेदे नानुमानम् अपि तु निर्णय इति। यदा च परिच्छिनत्ति धूमेन तदाऽनुमीयतेऽनेनेत्यनुमानम् अग्निपरिच्छेदः फलम्। यदा च भावसाधनमाश्रित्योच्यतेऽनुमानं निर्णय इति तदाऽभ्यनुज्ञया वर्तितव्यम्। यदा तु करणसाधनमाश्रित्योच्यतेऽनुमानं निर्णय इति, तदा प्रतिषेधो वक्तव्यः कार्यकारणयोर्भेदात्—कारणमनुमानं कार्यं निर्णयः, तस्मान्नानुमानं निर्णय इति ॥ ४१ ॥

इति—औद्द्योतकरे न्यायवार्त्तिके प्रथमस्याध्यायस्याऽऽद्यमाह्निकम्।

## न्यायवार्त्तिकतात्पर्यटीका

चानुमानमतो निर्णयो नानुमानादतिरिच्यत इत्यर्थः। परिहरति—न लिङ्गलिङ्गीति। यदि निर्णयमात्रमनुमानमुच्येत, तदा न तस्य सर्वस्य लिङ्गलिङ्गिसंबन्धस्मृत्यपेक्षत्वमिति। यदि तु लिङ्गपरामर्शो निर्णयस्तस्य चास्ति लिङ्गलिङ्गिसंबन्धापेक्षित्वमिति तत्राह—प्रमाणफलत्वात्। सामान्यव्याप्तो विशेषः सामान्यनिवृत्तौ(२) निवर्त्तते, शिंशपात्वमिव वृक्षत्वनिवृत्तौ। न च [तत्]फले प्रमितिरूपे निर्णये, प्रमाकरणत्वं (३) फले नास्तीति नानुमानत्वं तद्विशेष इत्यर्थः। इतश्चानुमानान्निर्णयो भिद्यत इत्याह—निर्णयः स्वविषय एवेति। न हि निर्णयो निर्णयत्वेन प्रतिपत्त्यनुबन्धिभूताद्विषयादन्यत्र, अनुमानं तु तत्र चान्यत्र च, यथाऽनुमेयोऽग्निरेव हेयत्वादिभिः (४) परिच्छिद्यते अग्निज्ञानेनानुमानेन, यदा तु धूमज्ञानेनाग्निरनुमीयते तदाऽन्यत्रेति गमयितव्यम्। शेषमतिरोहितम् ॥ ४१ ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां
प्रथमस्याध्यायस्य प्रथमाह्निकम्।

## वृत्तिः

तथापि विमृश्येत्यादिकं जल्पवितण्डास्थलीयनिर्णयमधिकृत्य। तदुक्तं भाष्ये 'शास्त्रे वादे च विमर्शवर्जम्' इति। एवं प्रत्यक्षतः शब्दाच्च निर्णये न विमर्श-पक्ष-प्रतिपक्षापेक्षेति ॥ ४१ ॥

न्यायोत्तराङ्गप्रकरणं समाप्तम् ॥ ० ॥

इति श्रीविश्वनाथभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ प्रथमाध्यायस्य प्रथममाह्निकम् ॥

---

(१) "सम्बन्धापेक्षत्वा-" इति ख। (२) "सामान्यवृत्तौ" इति क-तात्पर्ये। (३) "प्रमाणकरणत्वं" इत्यादर्शपुस्तकपाठः, हस्तलिखितपाठस्तु गृहीतः। (४) "हेत्वादिभिः" इत्यादर्शे पाठः।

# द्वितीयाह्निकम्

## न्यायभाष्यम्

तिस्रः कथा भवन्ति—वादो जल्पो वितण्डा चेति। तासाम्—

**(सू०) प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहो वादः ॥ १ ॥**

एकाधिकरणस्थौ विरुद्धौ धर्मौ पक्षप्रतिपक्षौ प्रत्यनीकभावात्, अस्त्यात्मा नास्त्या-

## न्यायवार्त्तिकम्

तिस्रः कथा भवन्ति—वादो जल्पो वितण्डेति। नायं कथानियमः। किं तर्हि ? विचारवस्तुनियमः, यद्वस्तु विचार्यते तत् त्रेधा विचार्यते। तत्र विचारः—वादो जल्पो वितण्डेति। तत्र गुर्वादिभिः सह वादः। विजिगीषुणा सह जल्पवितण्डे। तत्र यथोद्देशं लक्षणापदेश इति वादस्य लक्षणमुच्यते। तत्र—प्रमाणतर्कसाधनोपालम्भो वाद इति सूत्रम्।

## न्यायवार्त्तिकतात्पर्यटीका

नितान्तदक्षिणश्लक्ष्णधियो गृह्णन्त्वमत्सराः।<br>वाचस्पतिगिरामत्र तत्त्वानि विबुधा इव ॥

उद्देशक्रमप्राप्तं वादलक्षणसूत्रमवतारयितुं भाष्यम्—तिस्रः कथा भवन्तीति। तदयुक्तम्, बृहत्कथादीनां तिसृषु कथास्वनन्तर्भावात्। न च सामान्यलक्षणाभिधानमन्तरेण विशेषलक्षणावतारोऽस्ति, वादादयश्च कथाविशेषा इत्यत आह वार्त्तिककारः—तिस्रः कथा भवन्तीति। नायं कथामात्रनियमो येन बृहत्कथादीनामकथात्वं स्यात्, अपि तु यन्नानाप्रवक्तृके विचारे वसति तद्विचारवस्तु, विचार[वस्तु]विषया वाक्यसंदृब्धिः कथेति यावत्। तस्यां कथायामेष नियमः—तिस्र एवेति। तथा च नानाप्रवक्तृकविचारविषया वाक्यसंदृब्धिः कथेति सामान्यलक्षणं पक्षप्रतिपक्षपरिग्रह इति सूत्रावयवेन सूचितमित्येतदप्यर्थादुक्तं भवतीति द्रष्टव्यम्। यद्वस्तु विचार्यत इत्यर्थाभिधानमात्रं न तु विचारवस्त्वित्यस्य विवरणम्। वादादिष्वधिकारिणः पुरुषानाह—तत्र गुर्वादिभिरिति। वादलक्षणस्याऽऽनन्तर्ये हेतुमाह—तत्र यथोद्देशमिति। सूत्रमिति, सामान्यलक्षणमप्यनेन सूच्यत इत्युक्तं भवति। एकाधिकरणस्थावित्यादिभाष्यं प्रश्न-

## वृत्तिः

प्रथमाह्निकेन सपरिकरे न्याये लक्षिते वादादिलक्षणाय द्वितीयाह्निकारम्भः।

## न्यायभाष्यम्

त्मेति। नानाधिकरणस्थौ(१) विरुद्धौ न पक्षप्रतिपक्षौ, यथा—नित्य आत्मा अनित्या बुद्धिरिति। परिग्रहोऽभ्युपगमव्यवस्था। सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः। तस्य विशेषणं प्रमाणतर्कसाधनोपालम्भः(२), प्रमाणैस्तर्केण च साधनमुपालम्भश्चास्मिन् क्रियत इति। साधनं स्थापना। उपालम्भः प्रतिषेधः। तौ साधनोपालम्भौ

## न्यायवार्त्तिकम्

तत्र वादः—पक्षप्रतिपक्षपरिग्रहः। कौ पुनरेतौ पक्षप्रतिपक्षौ? वस्तुधर्मावेकाधिकरणौ—विरुद्धावेककालावनवसितौ। वस्तुधर्माविति वस्तुविशेषौ—वस्तुनः सामान्येनाधिगतत्वात् विशेषतोऽनधिगतत्वाच्च विशेषावगमनिमित्तो विचारः,तस्माद्वस्तुधर्मौ विशेषौ; एकाधिकरणौ(३), नानाधिकरणौ विचारं न प्रयोजयतः(४) उभयोः प्रमाणोपपत्तेः। तद् यथा—अनित्या बुद्धिर्नित्य आत्मेति। अविरुद्धावप्येवम्। यौ विरुद्धौ तौ विचारं प्रयोजयतो नाविरुद्धाविति, तद् यथा क्रियावद् द्रव्यं गुणवच्चेति। एककालाविति(५) भिन्नकालयोर्न विचारप्रयोजकत्वं प्रमाणोपपत्तेः, यथा क्रियावद् द्रव्यं निष्क्रियं चेति कालभेदे सति। अनवसिताविति—अनिश्चितौ विचारं प्रयोजयतो नावसिताविति, निर्णयोत्तरकालं विचाराभावात्। तावेतौ विरुद्धावेवंविशेषणौ धर्मौ पक्षप्रतिपक्षौ, तयोः परिग्रह इत्थम्भावनियमः, एवंधर्माऽयं धर्मी नैवंधर्मेति। सोऽयं पक्षप्रतिपक्षपरिग्रहो वादः। अस्य च कथामार्गत्रयेऽपि समानत्वात् विशेषणार्थं—प्रमाणतर्कसाधनोपालम्भ इति। प्रमाणैस्तर्केण च साधनमुपालम्भश्च 'अस्मिन् क्रियत इति'—अस्मिन् भवतीति।

## न्यायवार्त्तिकतात्पर्यटीका

पूर्वकं व्याचष्टे—काविति। वस्तुधर्माविति विभजते—वस्तुधर्माविताति। धर्मशब्दो विशेषे, तदनवसायाद्वस्तुनः सामान्यतोऽवसाय उक्तो भवति। तदिदमाह—वस्तुनः सामान्येनेति। अविरुद्धावप्येवं न विचारं प्रयोजयत इत्यर्थः। प्रमाणतर्कसाधनोपालम्भपदस्य तात्पर्यमाह—अस्येति। अनेन तस्य विशेषणमित्यादिभाष्यं व्याख्यातम्। यद्यपि वितण्डायामपि पक्षप्रतिपक्षपरिग्रहोऽस्ति, तथाऽपि प्रतिपक्षसाधनं नास्ति तस्याः साधनहीनत्वात्। यद्यपि च जल्पेऽपि पक्षप्रतिपक्षसाधनमस्ति, तथाऽपि न प्रमाणमूलैरवयवैस्तर्केण च साधनोपालम्भाविति जल्पवितण्डाभ्यां प्रमाणतर्कसाधनोपालम्भग्रहणेन व्यवच्छेदः, यथा चैतत् तथोपरिष्टा-

---

(१) "नानाधिकरणौ" इति आ-ग०। (२) "प्रमाणतर्कसाधनः प्रमाणतर्कोपालम्भः" इत्यधिकं आ०। (३) "वस्तुधर्मावविशेषावेकाधिकरणौ" इति ख। (४) "विचारमप्रयोजयतः" इति ख। (५) "एककालाविति" इत्यत्र "तत्र कालाविति" ख. अतःपरं "भिन्नकालयो"रित्यारभ्य "नावसिताविति" इत्यन्तः पाठः ख-पुस्तके नास्ति।

## न्यायवार्त्तिकम्

अस्मिन्निति सप्तमीनिर्देशो विषयज्ञापनार्थः। 'अस्मिन्' विचारे।

कथं पुनस्तर्केण साधनमुपालम्भश्च अप्रमाणत्वात्, प्रमाणानुग्राहकत्वात् न प्रमाणसंगृहीतस्तर्को न प्रमाणान्तरमित्युक्तम्(क)। सोऽयमप्रमाणात्मकः सन् कथं सिद्ध्युपालम्भयोः कारणं भविष्यति? न ब्रूमस्तर्कः सिद्ध्युपालम्भयोः कारणम् अपि तु (१)प्रमाणविषयविवेचनात् तर्कः प्रमाणान्यनुगृह्णातीति तर्कविविक्तं विषयं प्रमाणानि प्रवर्तमानानि परिच्छिन्दन्ति। सोऽयं प्रमाणानामनुग्राहकत्वात् प्रमाणसहितो वादेऽपदिष्ट इति। साधनमुपालम्भश्चास्मिन् भवतीति, किं तावत् सिद्धिः साधनमुपालम्भनमुपालम्भः, अथ साध्यतेऽनेनेति साधनम् उपालभ्यते अनेनेत्युपालम्भः? यदि तावद्भावसाधनौ साधनोपालम्भशब्दौ, तदा प्रमाणैस्तर्केण च न युक्तौ, प्रमाणानां तर्कस्य च पराप्रतिपादकत्वात् प्रमाणान्यात्मप्रतिपत्तिसाधनानि, परप्रतिपादनार्थश्चायं विचारः, तस्मान्न प्रमाणैस्तर्केण च सिद्ध्युपालम्भौ भवतः। अथ करणसाधनौ, तथाऽपि पञ्चावयवोपपन्न इति पृथग् न पठितव्यम्। किं कारणम्? प्रमाणतर्कसाधनोपालम्भ इति करणसाधनेन पदेनावयवार्थस्योक्तत्वात्। न; अन्यार्थत्वात्- पञ्चावयवोपपन्न इत्यस्यान्योऽर्थः, तथा च वक्ष्यामः। अथैतौ साधनोपालम्भशब्दौ भावसाधनौ किंविषयौ प्रमाणैस्तर्केण च क्रियेते? ननूक्तं (२)पक्षप्रतिपक्षविषयाविति—पक्षविषयं साधनम्, प्रतिपक्षविषय उपालम्भः। सत्यमुक्तम्, न पुनर्युक्तमुक्तम्। का पुनर्युक्तिहानिरत्र? उपालम्भस्य प्रतिपक्षाविषयत्वात्, प्रमाणतर्कसाधना सिद्धिः पक्षस्य भवतु, न पुनरुपालम्भस्य प्रतिपक्षो विषयः। न ब्रूमः प्रतिपक्षविषय उपालम्भ इति, किन्तु साधनविषयः, प्रतिपक्षस्य यत् साधनं तद्विषय उपालम्भ इति। कथं पुनः प्रतिपक्षसन्निधावुपदिश्यमान उपालम्भशब्दः प्रतिपक्षव्यतिरेकेण साधनेन सम्बध्यते, सामर्थ्याद

## न्यायवार्त्तिकतात्पर्यटीका

दुपपादयिष्यते। आक्षिपति—कथं पुनस्तर्केणेति। समाधत्ते—न ब्रूम इति। तर्कस्येतिकर्तव्यतारूपस्य प्रमाणानुग्राहकतया प्रमाणमूला अवयवास्तर्कमूला अपि भवन्ति, तथा च तर्कस्यापि साधनोपालम्भहेतुभावः सिद्धो भवतीत्यर्थः। विकल्प्याऽऽक्षिपति—साधनमुपालम्भश्चास्मिन्निति। परं प्रति हि सिद्ध्युपालम्भौ विवक्षिते, न च ते प्रमाणतर्काभ्याम्, तयोः स्वप्रतिपत्तिहेतुत्वात्। अवयवार्थस्य अवयवशब्दार्थस्येत्यर्थः। उभयथाऽभिमतत्वेऽपि करणसाधनपक्षं कुक्षीकृत्य तावत् समाधत्ते—न अन्यार्थत्वादिति, अन्यप्रयोजनत्वादित्यर्थः। यदा तु भावसाधनौ तदा पृच्छति—अथैताविति। विप्रतिपन्नस्य प्रश्नः—न प्रतिपक्षविषय उपालम्भो नापि तत्साधनविषयः, तयो-

---

(१) "प्रमाविषय-" इति ख। (२) "पचविषयाविति" इति ख।

(क) "तर्को न प्रमाणसंगृहीतः" इति भाष्यम् ( पृ० ५३ पं० ३ )।

## न्यायवार्त्तिकम्

असामर्थ्याच्च, यदुपालम्भयोग्यं तदुपालभ्यते, न च प्रतिपक्ष उपालम्भयोग्यः। कथमिति? उपालभ्यमानस्य चानुपालभ्यमानस्य च वस्तुनस्तथाभावात्; तथाभूतमेव वस्तूपालभ्यमानं तथाभूतमेवानुपालभ्यमानम्। साधनेऽपि तर्हि तुल्यम्, साधनमपि करणं तदपि स्वरूपं न कदाचिज्जहाति, तस्मात् साधनस्याप्युपालम्भो न युक्त इति। (१)एवमेतत् नोपालम्भः करणे, न कर्मणि, कर्मणः स्वविषये सामर्थ्यात्—सर्वं कर्म स्वविषये समर्थम्, करणमप्येवं तस्य तु विषयान्तरे न सामर्थ्यमस्ति। यच्च विषयान्तरेऽसमर्थं न तेन कर्मणः करणस्य वा वैगुण्यम्। कस्य तर्ह्ययमुपालम्भः? यो निगृह्यते। कश्च निगृह्यते? पुरुषः। अप्रतिपत्तिविप्रतिपत्ती पुरुषस्य, न कर्मणो न करणस्य। सोऽयं प्रतिपादयिताऽसमर्थयोः कर्मकरणयोरुपादानान्निगृह्यते, प्रतिपत्ताऽपि यथाभिहितपदार्थाप्रतिपत्त्या। सोऽयं पुरुषधर्मो वचनद्वारेणोद्भाव्यत इति वचन उपचर्यं पुरुषधर्मं वचनमुपालभ्यत इति। कथं पुनरयमर्थः सूत्रपदेन लभ्यते? लभ्यत इत्याह। कथम्? प्रमाणतर्कसाधनः प्रमाणैस्तर्केण च साधनस्योपालम्भः (क)प्रमाणतर्कसाधनश्च प्रमाणतर्कसाधनोपालम्भश्च प्रमाणतर्कसाधनोपालम्भः, एकस्य साधनशब्दस्य गम्यमानार्थत्वाल्लोपः, यथोष्ट्रमुखीति।

## न्यायवार्त्तिकतात्पर्यटीका

वस्तुनोः स्वकारणादुत्पन्नयोः सदा तद्रूपत्वेन पुरुषधर्मोपालम्भानास्पदत्वादित्याक्षेपार्थः। समाधत्ते—एवमेतदिति। धर्मी धर्मविशिष्टः पक्षः प्रतिपक्षो वा कर्म, तस्य विषयः—तस्य धर्मिणो वास्तवं तादृशत्वमतादृशत्वं वा, करणस्य तु कर्मैव विषयः। तत्र कर्मकरणे समर्थे एव, नासमर्थे। अन्यविषये तु पुरुषस्ते नियुञ्जानोऽसमर्थीकरोति। सोऽयं पुरुषस्यापराधो न कर्मकरणयोः। यथाकाशे निशातमसिं व्यापारयतः पुरुषस्यापराधो नाऽऽकाशस्य शब्दे समर्थस्य, असेर्वा निशातस्य दारुणि समर्थस्य। तस्मादौपचारिकः साधनस्योपालम्भो न मुख्यः, मुख्यस्तु पुरुषस्यैव, वचनद्वारेण तूद्भाव्यते पुरुषस्येति। वचन उपचर्यते न तु पक्षे पक्षद्वारेणानुद्भावनादिति सिद्धम्। यथाऽयमर्थः सूत्रपदेभ्यो लभ्यते तथा प्रश्नपूर्वकं दर्शयति—कथं पुनरिति।

यदुक्तं प्रमाणतर्कसाधनोपालम्भग्रहणं वादस्य जल्पवितण्डाभ्यां विशेषणार्थमिति, तत्र

---

(१) "एवमनुपालम्भः करणे" ख।

(क) इदमिहावधेयम्—प्रमाणतर्कसाधनश्च प्रमाणतर्कसाधनोपालम्भश्चेति अर्थकथनमात्रम्, विग्रहवाक्यं तु साधनं च उपालम्भश्चेति साधनोपालम्भौ, अत्रोपालम्भपदं साधनोपालम्भपरम्, अत एवोक्तम्—गम्यमानार्थत्वात् लोप इति। ततः प्रमाणतर्कैः साधनोपालम्भौ यत्रेति बहुव्रीहिणा द्वन्द्वात् परं पूर्व वा यः श्रूयते स प्रत्येकमभिसम्बध्यते इति न्यायादुक्तार्थलाभ इति।

## न्यायभाष्यम्

उभयोरपि पक्षयोर्व्यतिषक्तावनुबद्धौ (१)च यावदेको निवृत्त एकतरो व्यवस्थित इति निवृत्तस्योपालम्भो व्यवस्थितस्य साधनमिति।

जल्पे निग्रहस्थानविनियोगाद्द वादे तत्प्रतिषेधः। प्रतिषेधे कस्यचिदभ्यनुज्ञानार्थं

## न्यायवार्त्तिकम्

अथ प्रमाणतर्कसाधनोपालम्भ इत्यनेन पदेन जल्पवितण्डाभ्यां कथं वादो विशिष्यते? नन्विदं पक्षप्रतिपक्षपरिग्रहवत् त्रयाणामपि समानं भवति। न समानम् (२)—वादे प्रमाणतर्कसाधनोपालम्भस्य नियतत्वात् प्रमाणतर्कसाधनोपालम्भ एव वादः, छलादिसाधनोपालम्भे (३)जल्पवितण्डे। यथा विषाणित्वं गवि गवये च समानमपि (४)संवृत्तकण्ठतया सास्नादिमत्तया च विशिष्यमाणमुभौ गो-गवयौ विशिनष्टि तथा प्रमाणतर्कसाधनोपालम्भ इति।

छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इत्यभिधानाद्वादे निग्रहस्थानप्रतिषेधो विशेषविधानात्। ततश्चानुपालम्भो वाद इति? प्रमाणतर्कसाधनोपालम्भ इत्यभिधानाद्द वादेऽपि निग्रहस्थानानीत्यदोषः। उपालम्भग्रहणात् समस्तनिग्रहस्थानप्रसक्तौ संज्ञाभेदमात्रम्—यद्युपालम्भग्रहणाद्द वादे निग्रहस्थानानि विद्यन्ते इति मन्यसे ननु संज्ञाभेदमात्रं जल्पाद्वादस्य न विशेषः,

## न्यायवार्त्तिकतात्पर्यटीका

प्रकारं पृच्छति—अथेति। प्रष्टैवाऽऽह नन्विदमपीति। उत्तरम्—न समानमिति। नियममाह—प्रमाणतर्कसाधनोपालम्भ एव वादः। एवकारेण च्छलादिसाधनोपालम्भत्वं वादस्य व्यवच्छिद्यते, तथा च जल्पवितण्डाभ्यां व्यवच्छेदः। एतदुक्तं भवति—तर्कानुगृहीतप्रमाणमूला अवयवाः परमार्थतो भवन्तु मा भूवन् वादिप्रतिवादिनोस्त्वभिप्रायो भवति प्रमाणमूला अवयवा इति। एतावतैव प्रमाणतर्कसाधनोपालम्भता वादस्य, वीतरागकथात्वेन तत्त्वनिर्णयावसानत्वात्। जल्पवितण्डयोस्त्वप्रमाणमूलत्वं विदुषाऽपि प्रतिवादिना छलादिभिः प्रत्यवस्थेयमेकान्तपराजयाद्द वरं संशयोऽस्त्वितीच्छता जिगीषुणा। यथा चास्य शास्त्रे व्युत्पादनं नासदर्शं यथा चैवमाचारस्तथा जल्पलक्षणे वक्ष्यामः।

जल्पे निग्रहस्थानविनियोगादिति भाष्यम्। तदनुपपन्नम्, उपालम्भग्रहणादेव वादेऽपि निग्रहस्थानस्य लब्धत्वादित्यत आह वार्त्तिककारः—छलजातीति। असत्युपालम्भग्रहण इत्यर्थः। चोदयति—समस्तेति। यद्युपालम्भग्रहणस्य निग्रहस्थानविधानं प्रयोजनम्, हन्त भो न

(१) "च" नास्ति ग। (२) अतः परम् "वादे प्रमाणम्" इत्यधिकम्, ख। (३) "जल्पवितण्डे व" इति ख। (४) "संवृत-" इति क।

## न्यायभाष्यम्

सिद्धान्ताविरुद्ध इति वचनम्। 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध' (अ० १ आ० २ सू० ४७) इति हेत्वाभासस्य निग्रहस्थानस्याभ्यनुज्ञा वादे। पञ्चावयवोपपन्न इति

## न्यायवार्त्तिकम्

तत्रापि निग्रहस्थानानीष्टापीति? न, उत्तरयोर्नियमार्थत्वात्—यस्मादेवोपालम्भशब्देन समस्तानि निग्रहस्थानानि लभ्यन्ते (१) अत एव नियमार्थे उत्तरे पदे आरभ्येते सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नश्चेति। सिद्धान्ताविरुद्ध इत्यनेन किल पदेन विरुद्धो हेत्वाभासो लभ्यते, तन्न, अन्यतोऽधिगतेः—(२)अन्यत एवायं लभ्यते। पञ्चावयवोपपन्न इति पञ्चग्रहणात् न्यूनाधिके लभ्येते, अवयवग्रहणात् तदाभासा लभ्यन्त इति लभ्यमानस्यार्थस्य पुनरभिधाने पिष्टं पिष्टं स्यात् तस्मान्नायमर्थः। अथ किमिदं पदं सिद्धान्ताविरुद्ध इत्यनर्थकमेव? नानर्थकम् अपसिद्धान्तावरोधात्,—

"सिद्धान्तमभ्युपेत्यानियमात् कथाप्रसङ्गोऽपसिद्धान्तः"

इति, सोऽनेनावरुध्यते, तस्मान्नानर्थकम्। कस्मात् पुनरयं नियमो वादे अवयवाभासोऽपसिद्धान्तश्च निग्रहस्थानमिति; गुर्वादिभिः सह वादोपदेशान्नियमः—यस्मादयं तत्त्वबुभुत्सुः गुर्वादिभिः सह त्रिविधं फलमाकाङ्क्षन् वादं करोति ततोऽस्य (३)तत्त्वबुभुत्सावतस्तावत्साधनं

## न्यायवार्त्तिकतात्पर्यटीका

जल्पाद्व वादस्य विशेषः, कृतं चोत्तराभ्यां पदाभ्यामित्यर्थः। परिहरति—नोत्तरयोरिति। नियमः परिसंख्या, तदनेन कस्यचिदनुज्ञानार्थमिति भाष्यं व्याख्यातम्। सिद्धान्ताविरुद्ध इत्यत्र भाष्यव्याख्यामुपन्यस्य दूषयति—सिद्धान्ताविरुद्ध इत्यनेन किलेति। भाष्यमते दूषिते पृष्ट्वा स्वमतेन व्याचष्टे—अथ किमिदं पदमिति। पृच्छति—कस्मात् पुनरिति। उत्तरम्—गुर्वादिभिरिति। न खल्वप्रतिभाद्युद्भावनं तत्त्वप्रतिपत्तावुपयुज्यते, अधिकं तु न यद्यपि तत्त्वप्रतिपत्तिं साक्षाद्व्याहन्ति तथाऽपि तत्प्रयोजनानुसरणे परः प्रतिपत्ता समाकुलितबुद्धिर्न तत्त्वं प्रतिपत्तुमर्हतीत्यधिकस्यापि तत्त्वप्रतिपत्तिविघातहेतुत्वमिति। तत्त्वबुभुत्सुरिति जिगीषुतां निराकरोति, न हि गुर्वादिभिर्जिगीषासम्भवः। त्रिविधं फलमिति।

## वृत्तिः

छलपरीक्षा च प्रसङ्गाद्भविष्यति। तथा च छलपरीक्षासहितवादादिलक्षणं द्वितीयाह्निकार्थः। तत्र चत्वारि प्रकरणानि। आदौ कथाप्रकरणम्, ततो हेत्वाभासप्रकरणम्,

---

(१) "अत एवानियमार्थे" ख। (२) "अन्य एवायं" इति ख। (३) 'ततोऽस्य बुभुत्सावता' इति ख।

## न्यायभाष्यम्

'हीनमन्यतमेनाप्यवयवेन न्यूनम्' 'हेतूदाहरणाधिकमधिकम्' (अ० ५ आ० २ सू० १२।१३ ) इति चैतयोरभ्यनुज्ञानार्थमिति। (क)अवयवेषु प्रमाणतर्कान्तर्भावे पृथक् प्रमाणतर्कग्रहणं साधनोपालम्भव्यतिषङ्गज्ञापनार्थम्। अन्यथोभावपि पक्षौ (१)स्थापना-

## न्यायवार्त्तिकम्

वक्तव्यं यावदनेन ज्ञातव्यमप्रतिद्वन्द्वित्वात्। प्रतिद्वन्द्विना सह न वादः, किन्तु जल्पः; तत्र समस्तनिग्रहस्थानप्रयोग इति युक्तम्। प्रमाणतर्कसाधनोपालम्भ इत्यभिधानात् उभयोः सिद्ध्यसिद्धिप्रसङ्गः—यदि प्रमाणतर्कसाधनोपालम्भो वाद उभयोर्वादिप्रतिवादिनोः प्रमाणतर्क-साधनोपालम्भाभिधानेऽधिकार (२) इत्युभयपक्षसिद्ध्यसिद्धिप्रसङ्गः। नैष दोषः, अप्रतिज्ञानात्—नेदं प्रतिज्ञायते उभयोर्वादिनोः प्रमाणानि सन्तीति, अपि तूभाभ्यां साधनं वक्तव्यमेतन्नियम्यते न पुनः साधनमेवैतद्भवतीति, दूषणमप्येवम्।

## न्यायवार्त्तिकतात्पर्यटीका

अनधिगततत्त्वावबोधः संशयनिवृत्तिरध्यवसिताभ्यनुज्ञानमिति फलानि त्रीणि। प्रतिद्वन्द्विनि तु न वादः, अपि तु जल्पवितण्डे। चोदयति—प्रमाणतर्केति। पारमार्थिकात् तर्कसहितात् प्रमाणा-देकस्मिन् विषये साधनोपालम्भयोः सम्भवे विरुद्धधर्मालिङ्गितमेकदा वस्तु प्रसज्यत इत्यर्थः। परिहरति—नैष दोष इति। वादेऽभिप्रायो नियम्यते वादिप्रतिवादिनोः, प्रामाणिकधिया साधनोपालम्भौ ताभ्यां प्रयोक्तव्यौ, नाप्रामाणिकधिया जल्पवितण्डयोरिव; न पुनर्वस्तु नियम्यत इति। तथा च वादे बुद्धिपूर्वं छलादिप्रयोगे तदुद्भावनमपि सम्भवति, तावदेव चोद्भाव्यं यावत्यनुद्भाविते तत्त्वप्रतिपत्तिव्याघातः, यस्मिंस्त्वनुद्भावितेऽपि न तत्त्वप्रतिपत्तेर्व्याघातः, तत्र प्रयुक्तमपि नोद्भावनीयम्। एतच्च पञ्चमेऽध्याये निपुणतरमुप-पादयिष्यते। साधनोक्तं प्रकारं दूषणेऽप्यतिदिशति—दूषणमप्येवम्। पूर्वस्मिन् प्रयोजने स्थिते भाष्यकारः प्रयोजनान्तरमन्वाचिनोति—अवयवेष्विति। न हि पञ्चावयवोपपन्नं प्रमाणं तदनु-ग्राहकं च तर्कमन्तरेण भवतीति पञ्चावयवोपपन्नत्वादेव प्रमाणतर्कप्रतिलम्भे साधनोपालम्भयो-र्व्यतिषङ्गज्ञापनायावश्यं साधनोपालम्भग्रहणं तावत् कर्तव्यम्, अन्यथैकः छस्थानस्थित एव शब्दस्यानित्यत्वं प्रति पञ्चावयवोपपन्नं वाक्यं प्रयुङ्क्ते, अपरोऽपि तादृशः शब्दनित्यतां प्रति तादृशमेव वाक्यं प्रयुङ्क्त इति सोऽपि वादः प्रसज्येत। साधनोपालम्भविशेषणाय च प्रमाण-

(१) "स्थापनहेतुना प्रवृत्तौ" इति ग-फ। (२) "नाधिकार" इति ख।

(क) "अवयवसमुदाये च वाक्ये सम्भूयेतरेतराभिसम्बन्धात् प्रमाणान्यर्थं साधयन्तीति" भाष्यम् (पृ० ३१९ पं० ३)।

## न्यायभाष्यम्

प्रवृत्तौ वाद इति स्यात्। अन्तरेणापि चावयवसम्बन्धं प्रमाणान्यर्थं साधयन्तीति दृष्टम्, तेनापि कल्पेन साधनोपालम्भौ वादे भवत इति ज्ञापयति। 'छलजातिनिग्रहस्थान-साधनोपालम्भो जल्प इति वचनाद्विनिग्रहो जल्प इति मा विज्ञायि, छलजातिनिग्रह-स्थानसाधनोपालम्भ एव जल्पः प्रमाणतर्कसाधनोपालम्भो वाद एवेति मा विज्ञायी-त्येवमर्थं पृथक् प्रमाणतर्कग्रहणमिति ॥ १ ॥

## न्यायवार्त्तिकम्

अपरे तु स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति वादलक्षणं वर्णयन्ति। अत्र च पक्ष-विशेषणार्थमुपात्तयोः (१)स्वपरशब्दयोरनुपपत्तिर्विकल्पानुपपत्तेः समासासम्भवाच्च। एतौ खलु स्वपरशब्दौ परिग्रहवर्जनार्थौ वा स्याताम्? साधनीयदूषणीयार्थौ वा? पूर्वोत्तरपक्षार्थ-व्यवस्थापकौ वा? पक्षप्रतिपक्षावद्योतकौ वा? प्रथमद्वितीयपक्षाभिधायकौ वा? एकस्य

## न्यायवार्त्तिकतात्पर्यटीका

तर्कग्रहणं कर्तव्यमिति भावः। प्रयोजनान्तरमन्वाचिनोति—अन्तरेणापि चेति। वादः पञ्चा-वयवोपपन्न इत्येकः कल्पः, (२)प्रमाणतर्कसाधनोपालम्भ इति द्वितीय इत्यर्थः। प्रयोजना-न्तरमन्वाचिनोति—छलजातीति। विनिग्रहो जल्पो मा विज्ञायि, वादगतनिग्रहस्थानरहितो मा विज्ञायीत्यर्थः। तद्विज्ञाने कीदृशोऽर्थो भवतीत्यत आह—छलजातिनिग्रहस्थानेति। वादगतो निग्रहो न जल्पे जल्पगतश्च निग्रहो न वाद इति मा विज्ञायि, इष्यते हि वादगतो निग्रहो जल्पे, सोऽयमिष्टोऽर्थो ग्रन्थाधिक्यात् प्रमाणतर्कग्रहणाल्लभ्यत इत्यर्थः।

तदेवं स्वाभिमतं वादलक्षणं व्याख्याय (३)वासुबन्धवं लक्षणं दूषयितुमुपन्यस्यति—अपरे त्विति। स्वपक्षस्य सिद्धिः परपक्षस्य चासिद्धिः तदर्थं वचनं वाद इत्यर्थः। दूषयति—अत्र चेति। प्रथमं हेतुं विभजते—एताविति। पूर्वः पक्षोऽयुक्तः, पक्ष उत्तरस्तु युक्त इत्यर्थः। एकस्य वा शब्दस्य

## वृत्तिः

छलप्रकरणम्, दोषलक्षणप्रकरणं चेति। अत्र च कथासामान्यस्यायं विशेषो वादादिः। तथा च त्रिभिः सूत्रैरेकं प्रकरणम्, अन्यथैकसूत्रस्य प्रकरणत्वाभावादसङ्गतिः स्यादित्याशये-नोक्तं भाष्यकृता 'तिस्रः खलु कथा भवन्ति वादो जल्पो वितण्डा च' इति।

---

(१) "स्वपरपक्षयो-" इति ख। (२) "प्रमाणतर्कोपसाधनोपलम्भ" इति क। (३) 'सौबन्धवं' क।

## न्यायवार्त्तिकम्

वाऽनेकविशेषणाभिसम्बन्धिनोऽनेकशब्दाभिधानमिति ? तत्र परिग्रहपरिवर्जनार्थता तावदनुपपन्ना, किमोऽर्थासम्भवात्। न परिग्रहार्थतायां किमोऽर्थः सम्भवति, 'कस्यायं स्वो भविष्यति कश्च स्वार्थ' इति स्वीकरणं परिग्रहार्थः, यस्य स्वीकारो भवति तस्य स्व इति। तदेव चिन्त्यते किं तत् स्वीकरणमिति। ममेति प्रत्ययोत्पत्तिकारणभावाभावौ स्वपरशब्दार्थः। निर्दिष्टः स्वार्थो(१) न पुनरस्य स्वार्थः(१*), न हि शास्त्रकारस्य स्वः परो वा सम्भवति यदर्थमिदं स्यादिति। यच्च यस्य स्वं भवति(२) तत्तस्य सिद्धार्थं कश्चिदुपकारं करोति(२*), न पुनः स्वामिनः पक्षेण कश्चिदुपकारः क्रियते ; तस्मात् परिग्रहवर्जनार्थौ तावत् स्वपरशब्दौ न भवतः। साधनीयदूषणीयार्थौ स्वपरशब्दाविति चेत् ; अथापीदं स्यात् साधनीयः स्वपक्षो दूषणीयः परपक्ष इति। अहो शब्दार्थकौशलम्, साधनीयः साध्यः स्यात्, साधनीयः स्वपक्ष इति कुत एतत् ? लक्षणं चैतत् पक्षस्य साधयितुमिष्टः पक्ष इति साधनीयशब्देनापि तदेवोच्यते, व्यवच्छेदार्थं चेदमुच्यते स्वपक्षः परपक्ष इति। परपक्षाच्चायं स्वशब्देन (३)व्यवच्छेद्यमानो न समानार्थं शक्नोति वक्तुम्, व्यर्थं वा वशेषणम्। सामान्यशब्दा अपि विशेषे वर्तन्त

## न्यायवार्त्तिकतात्पर्यटीका

धर्मिणोऽनेकनित्यानित्यविशेषणाभिसम्बन्धिनः पुरुषाभिसन्धिभेदाद् अनेकशब्दाभिधानम्, स्वपरशब्दाभिधानमित्यर्थः। तदेव चिन्त्यते किं तत्स्वीकरणमिति न तावद्गोधनादिष्विव स्वोचितार्थक्रियासु यथेष्टविनियोगयोग्यत्वं स्वत्वमर्जनापादितमनित्यत्वादिना प्रतिज्ञाते शब्दादौ सम्भवतीत्यर्थः। चोदयति—ममेति, (ममेति)प्रत्ययोत्पत्तिकारणत्वं स्वत्वमकारणत्वमस्वत्वमिति। दूषयति—निर्दिष्ट इति। यथेष्टविनियोगयोग्यमेव ममेति प्रत्ययकारणं नान्यत्। न चैतन्नित्यत्वादिना प्रतिज्ञाते शब्देऽस्ति शास्त्रकारस्येत्यर्थः। अपि चोपकारकत्वेन व्याप्तं स्वत्वं गोघटादिषु तथा दर्शनात्, पक्षान्निवर्तमानमुपकारकत्वं स्वत्वमपि स्वव्याप्यं निवर्तयति वृक्षत्वमिव शिंशपात्वमित्याह—यच्च यस्येति। द्वितीयं कल्पमाशङ्कते—साधनीयेति। निराकरोति—अहो शब्दार्थेति। विशेष्यपदादनतिरिक्तार्थं विशेषणपदमित्यर्थः। अपि चेदं विशेषणपदं सामान्यतः प्रवृत्तं विशेषेऽवस्थापयति न वा ? अवस्थापयति चेत् न साधनीयमात्रार्थता स्वशब्दस्य, न चेत् विशेषणं व्यर्थमित्याह—व्यवच्छेद्यार्थमिति। ननु च विशेष्यशब्दो विशेषणयोगाद्विशेषे वर्तमानोऽपि सामान्यशब्द एव, ततश्च शक्नोति समानमर्थं वक्तुमिति देशयति—सामान्यशब्दा

## वृत्तिः

तत्र तत्त्वनिर्णयविजयान्यतरस्वरूपयोग्यन्यायानुगतवचनसन्दर्भः कथा। लौकिक-

---

(१) "नरस्व स्वम्" ख। (२) "तत्तस्यासिद्धार्थं किञ्चिदुपकरोति" इति ख। (३) "व्यवच्छेद्यमानेन समानमर्थ" इति ख।

## न्यायवार्त्तिकम्

इति दृष्टमेतत्(१)। न ते सामान्यशब्दा ये विशेषेषु वर्तन्त इति। किन्तु प्रकरणादिभेदानुविधायिनो विशेषशब्दा एव। अपि च साधनीयः पक्षः स्वपक्षः, दूषणीयः पक्षः परपक्षः। तदेतदपि न बुध्यामहे साधनीयशब्दस्य पक्षविषयत्वात् साधनीयः पक्षः स्वो भवतु, दूषणं तु न कदाचित् परपक्षेण सम्बध्यते, परपक्षस्य तादवस्थ्यात्। अथ दूषणस्य को विषयः? कस्यचित् स्थापना विषय इति किञ्चिद् दूषणं स्वपरपक्षाभ्यामसम्बद्धमेव। कतमद् दूषणं स्थापनया सम्बध्यते? का चेयं स्थापनेति? स्थापना नाम पञ्चावयवं पक्षसाधकं वाक्यम्, वाक्यदोषो दूषणम्, तद्वाक्यं न्यूनमधिकं च भवति अवयवाभासोपपन्नञ्च, तदुद्भावनं दूषणम् एतत् स्थापनया सम्बध्यते, तद्विषयत्वात्। शेषं तु दूषणं न स्थापनया न स्वपरपक्षाभ्यां सम्बद्धम् उत्तरदोष आक्षेपभावाश्चेति। सत्यं न साक्षात् पक्षस्य दूषणेनाभिसम्बन्धः स्थापनानिवृत्तिद्वारेण तु प्रवर्तमानं दूषणं न पक्षं निवर्तयति स्थापनानिवृत्तेः परपक्षं दूषयतीत्युच्यते? उपचरितशब्दप्रयोगो लक्षणेऽनुपपन्नः, लक्षणस्य तत्त्वविषयत्वात्, तत्त्वव्यवच्छेदकं लक्षणम्, न पुनरुपचरितशब्दप्रयोगेण व्यवस्थाऽस्ति। यदि च पारम्पर्येण प्रवृत्त्या प्रवर्तमानं दूषणं परपक्षं निवर्तयति (२)तदैवं युक्तं कर्त्तुं परपक्षसिद्ध्यर्थं वचनं वाद इति। एवमभिधीयमाने किं भविष्यतीति? लघु च सूत्रं भवतीत्युभयोश्च साधनदूषणयोः पारम्पर्येण परपक्षासिद्ध्यर्थतेति। अथ मा भूदुभयत्र

## न्यायवार्त्तिकतात्पर्यटीका

अपीति। परिहरति—न ते सामान्यशब्दा इति। अपि च साधनीयः पक्ष इति, विरुद्धोपदर्शनेन स्फुटा प्रतीतिर्भवतीति अयुक्तप्रतिपादनार्थं युक्तस्याप्युपन्यास इति। यदि न पक्षेण दूषणं संबध्यते कस्तर्हि तस्य विषय इति शङ्कते—अथ दूषणस्येति। उत्तरम्—कस्यचिदिति। उत्तरदोषः जात्युद्भावनम्। आक्षिप्यन्त इत्याक्षेपाः। के ते भावाः? अप्रतिभाविक्षेपादयः। नैते स्वपरपक्षाभ्यां संबध्यन्ते नापि स्थापनयेति। चोदयति—सत्यमिति। परिहरति—उपचरितेति। "नर्ते प्रयोजनादिष्टं मुख्यशब्दार्थलङ्घनम्" इति गाथा भवतामित्यर्थः। अपि चोपचारश्चेल्लक्षणे वरमेवं क्रियतां लक्षणं लाघवायेत्याह—यदि चेति। शङ्कते—अथेति। निराकरोति—

## वृत्तिः

विवादवारणाय न्यायेत्यादि। यत्रैकेन न्यायः प्रयुक्तोऽपरेण तु मतपरिग्रहोऽपि न कृतस्तद्वारणायाऽऽद्यं विशेषणमिति।

कथाऽधिकारिणस्तु तत्त्वनिर्णयविजयान्यतराभिलाषिणः सर्वजनसिद्धानुभवानपलापिनः श्रवणादिपटवोऽकलहकारिणः कथौपयिकव्यापारसमर्था इति।

तत्र वादं लक्षयति सूत्रकारः—( प्रमाणतर्केति )। ॐ

(१) 'इताद्दृष्टमेतत्' इति ख। (२) 'तदैवं वक्तुं कर्त्तुं' इति ख।

## न्यायवार्त्तिकम्

पारम्पर्यमिति स्वरूपत एवं वक्तव्यम्—पक्षस्थापनयोः सिद्धासिद्धार्थं वचनं वाद इति। एवं हि विस्पष्टता लक्षणस्य यथाविषयं चाभिसम्बन्ध इति। (१) स्थापनयाऽपि न सर्वं दूषणं सम्बध्यत इति दोषतादवस्थ्यम्; (२) न दोषतादवस्थ्यं कस्यचित् सम्भवात्—किञ्चिद् दूषणं स्थापनया सम्बध्यत इति सामान्याभिधानेऽपि सामर्थ्यान्नियमः। तस्मादिदमनुपपन्नं साधनीयदूषणीयार्थौ स्वपरशब्दाविति। स्वपरशब्दौ पूर्वोत्तरपक्षार्थौ भविष्यत इति—यदुक्तं भवति पूर्वोत्तरपक्षाविति (३) तदुक्तं भवति स्वपरपक्षाविति। न युक्तमेतदपीति, साधनदूषणयोर्नियमाभ्युपगमात्—"ते साधनदूषणै"रित्येतस्मिन् सूत्रे साधनदूषणयोर्नियमाभिधानं स्वपक्षसाधनं परपक्षे दूषणमिति। एतस्मिंश्च नियमे (४) उत्तरपक्षविषयं दूषणं प्राप्नोति तेनोत्तरपक्षवादी स्वमेव पक्षं दूषयतीति प्राप्तम्। स्वपक्षश्चोत्तर(क)पक्षवादिनः पूर्वपक्षादन्य इति स्वपरशब्दाभ्यां पूर्वोत्तरपक्षयोरभिधानमिति न पदार्थो न परिभाषा न च रूढिः (५)। एतेन पक्षप्रतिपक्षार्थता प्रथमद्वितीयपक्षार्थता च व्याख्याता। एक एवायं पक्ष इति विशेषणद्वययोगात् साध्यतया दूष्यतया च विशेष्यमाणः स्वपरशब्दवाच्य इति? युक्तमेतत्, द्विवचनं तु न युक्तम्—एकस्यानेकविशेषण-

## न्यायवार्त्तिकतात्पर्यटीका

(६) स्वरूपत इति, मुख्यत इत्यर्थः। चोदयति—स्थापनयाऽपीति। परिहरति—न दोषेति। ननु न दूषणमात्रं संबध्यते असिद्धार्थमिति च दूषणमात्राभिधानम्, तत् कुतो विशेषप्रतिलम्भ इत्यत आह—सामान्याभिधानेऽपीति। तृतीयं कल्पं दूषयितुमुपन्यस्यति—स्वपरशब्दाविति। एतदपि (७) सूत्रान्तरेण दूषयति—न युक्तमेतदपीति। ते साधनदूषणैः स्वपरशब्दाः संबध्यन्त इति सूत्रे हि नियमेन स्वपक्षे साधनं परपक्षे दूषणमुक्तम्, तथा चोत्तरपक्षो दूषणीय एवेति उत्तरपक्षवादिनाऽपि दूषणीयम्। एवं पूर्वपक्षोऽपि साधनीय एवेति उत्तरपक्षवादिनाऽपि साधनीयो न दूषणीयः स्यादित्यर्थः। अपि चायुक्तस्य पूर्वस्य पक्षस्य साधनं युक्तस्य चोत्तरपक्षस्य दूषणमिति विपरीतप्रसङ्ग इत्याह—स्वपक्षश्चोत्तरपक्षवादिनः पूर्वपक्षात् अयुक्तपक्षात् अन्यः युक्त इत्यर्थः। न पदार्थः नावयवार्थ इत्यर्थः। एतेन सूत्रान्तरनियमाभिधानव्याघातेनेत्यर्थः। व्याख्याता निराकार्यत्वेन। षष्ठं कल्पं दूषयितुमुपन्यस्यति—एक एवायमिति। दूषयति—युक्तमेतत्। एकस्यानेकं विशेषणम्।

---

(१) "स्थापनाऽपि न पूर्वम्" इति ख। (२) "न दोषतादवस्थम्" इत्यंशः ख-पु० नास्ति। (३) "तदुक्तं भवति स्वपरपक्षाविति" इत्यंशः ख-पु० नास्ति। (४) "उत्तरविषयम्" इति ख। (५) "न परिभाषा न च रूढिः" इत्यत्र "न परिभावने रूढिः" इति ख। (६) आदर्शयोः "स्वरूप" इति। (७) "तन्त्रान्तरविरोधेन" इति ख।

(क) मुद्रितवार्त्तिकपुस्तकयोस्त्यक्तमपि 'पक्ष'पदं तात्पर्यानुसारेण निवेशितम्।

## न्यायवार्त्तिकम्

योगो न प्रतिषिध्यते द्विवचनं तु न भवतीति ब्रूमः। न ह्येकस्यानेकविशेषणाभिसम्बन्धे सति द्विवचनबहुवचने भवतः। न हि देवदत्तं छत्रदण्डाभ्यां सम्बद्धं समुपलभ्य वक्तारो भवन्ति छत्रिदण्डिनावागताविति। तदेवं विकल्पानुपपत्तेः स्वपरशब्दानुपपत्तिः।

समासासम्भवाच्च—स्वपरपक्ष इति समासपदमेतत्, तत्र तावद्विशेषणविशेष्यस्वरूपानवगतेर्न षष्ठीसमासः। यत्र पुनः षष्ठी समस्यते तत्र विशेषणं विशेष्यात् पृथगवधार्यते, यथा राजपुरुष इति। भेदाच्च—यत्र च विशेषणविशेष्यभावो भवति तत्र भेदो दृष्टो राजपुरुषवदेव। असत्यपि भेदे दृष्ट इति चेत्—असत्यपि भेदे दृष्टः षष्ठीसमासः, तद्‌ यथा सेनापतिः पानकाङ्गमिति। तच्च न, अनभ्युपगमात्। को हि ह्यस्थात्मा पानकशब्दार्थमङ्गेभ्यो नार्थान्तरं प्रतिपद्यते, सेनां च सैनिकेभ्य इति। यथा च सेनादीन्यर्थान्तरभूतानि तथोक्तं गुणगुणिवाद इति। अथ मन्यसे स्वार्थः स्वशब्दस्यार्थः साधनीयोऽर्थश्च पक्षशब्दस्येति, तन्न, अपोदितत्वात्। यथा स्वार्थवाचकः शब्दो न भवति तथोक्तम्, तस्मान्न षष्ठीसमासः। एतेन कर्मधारयः प्रत्युक्तः स्वश्चासौ पक्षश्चेति, विशेषणस्वरूपासिद्धेर्भेदाभावाच्च। एतेन बहुव्रीहिरपि प्रत्युक्तः, साधयितृविषयं च साधनं प्राप्नोति अतो न बहुव्रीहिः।

ननु च (१)साधनीयार्थता स्वार्थः पक्षविशेषणत्वेन सम्भवति ? न सम्भवति पर्यायत्वात्। साधनीयः पक्ष इति पर्याय एव, न च पर्यायशब्दैः समानाधिकरणो बहुव्रीहिः सम्भवति।

## न्यायवार्त्तिकतात्पर्यटीका

द्वितीयं हेतुमुपन्यस्तं व्याख्यातुं स्मारयति—समासेति। न केवलं विशेष्यात् पृथक् स्वार्थो विशेषणं नावधार्यते, अपि त्वन्यस्मादपि न भिद्यत इत्याशयवानाह—भेदाच्चेति। चोदयति—असत्यपि भेद इति। न केवलं पत्युर्विशेष्यात् सेना न भिद्यतेऽपि तु ततोऽन्येभ्योऽपि हास्तिकाश्वीयरथपदातिभ्य इति। एवं पानकमपि न केवलं तदङ्गेभ्यो जीरकादिभ्यः अपि त्वन्येभ्योऽपि फलसलिलादिभ्य इति। परिहरति—तच्च नेति। उक्तं प्रस्मृत्य शङ्कते—अथ मन्यसे स्वार्थ इति। उक्तस्मारणेन निराकरोति—तन्नेति। एतेन कर्मधारयबहुव्रीही अपीत्याह—एतेनेति। अपि च स्वः पक्षो यस्य साधयितुः स तथोक्तः, तथा च साधयितृविषयं स्यादित्याह—साधयितृविषयं चेति।

ननु मा भूद् यथेष्टविनियोगयोग्यार्थता स्वशब्दस्य, साधनीयार्थता तु भविष्यति, तथा च समासोपपत्तिरिति चोदयति—ननु चेति। षष्ठीसमासपक्षोक्तं दोषं स्मारयति—न सम्भवतीति।

(१) "साधनीयता" इति ख।

## न्यायवार्त्तिकम्

न हि भवति (१) वृक्षतरुं छिनत्तीति। विरोधाच्च—यदि तावदयं पक्षशब्दः स्वपक्षाद्भिद्यते परपक्षवचनं प्रतिज्ञेति व्याघातः। किं कारणम्? प्रतिज्ञायाः स्वपक्षविषयत्वात्। अथाभिन्नः, तथाऽपीदं न प्राप्नोति स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वाद इति। न चान्यः समासः सम्भवति, न चेदं वाक्यम्। तस्मात् स्वपरपक्षयोरित्यसारम्।

आस्तां तावत् स्वपरशब्दार्थौ विशेषणविशेष्यभावश्च स्वपरशब्दयोः। अथ समासः कस्मान्न क्रियते स्वपरपक्षसिद्ध्यसिद्ध्यर्थं वचनं वाद इति। किमेवं कृते भवति? स एवार्थो लाघवं च।

अत्र केचित् परिहारं ब्रुवते—यदि किल समासः क्रियते उभयाश्रिते सिद्ध्यसिद्धी भवतः। न, दोषतादवस्थ्यात्—नायं (२) दोषोऽसमासकरणेन परिह्रियते। कथमिति? (३)(क) स्वपक्षसिद्ध्यसिद्ध्यर्थं वचनं परपक्षसिद्ध्यसिद्ध्यर्थं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थमिति। न असामर्थ्यात्—न ह्ययं समासः समर्थः स्वपक्षसिद्ध्यसिद्ध्यर्थमिति। कस्मात्? व्याहतत्वात्—यदि सिद्ध्यर्थं यतते असिद्ध्यर्थमिति व्याघातः, यद्यसिद्ध्यर्थं यतते सिद्ध्यर्थमिति व्याघातः। यद्यसामर्थ्यान्न समासः, (४)समासेऽपि तर्ह्यसामर्थ्यात् नोभयपक्षसिद्ध्यसिद्धिप्रसङ्गः।

एकवचनबहुवचनप्रसङ्ग इत्यन्ये—यदि किल समासः क्रियेत समासोऽनभिव्यक्तवचनभेदः, तस्माद्वचनभेद(५)व्यक्तिनिमित्तोऽसमासः। कथं नाम? स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं

## न्यायवार्त्तिकतात्पर्यटीका

अपि च साक्षात्स्वपक्षस्य भेदे सूत्रान्तरव्याघातोऽभेदे वा एतस्य व्याघात इत्याह—विरोधाच्चेति।

अपि च वाक्यसमासयोः समासो ज्यायान् लाघवादित्याह—आस्तां तावदिति। न ह्ययं (ख) समर्थः समास इति, सिद्ध्यसिद्ध्यर्थमित्ययं समासः स्वपक्षपरपक्षयोः प्रत्येकं न सम्बन्धार्थ इत्यर्थात् कस्यचित् सिद्धिः कस्यचिदसिद्धिरित्यर्थः। परिहरति—यद्यसामर्थ्यान्न समासः सिद्ध्यसिद्ध्यर्थमिति। समासेऽपि तर्हीति, स्वपक्षपरपक्षसिद्ध्यसिद्ध्यर्थमिति समासेऽपीत्यर्थः।

एकवचनबहुवचनप्रसङ्गोऽपि नास्त्यसामर्थ्यादिति चोद्यसमाधानाभ्यां दर्शयति—एकवचनेति। अनित्यत्वेऽपि समासविधेः समास एव विग्रहाज् ज्यायानिति चोद्यसमाधानाभ्यां दर्शयति—

---

(१) "वृक्षतरु" इति ख। (२) "दोषः समासकरणेन" इति ख। (३) "स्वपक्षसिद्ध्यसिद्ध्यर्थपरपक्षसिद्ध्यर्थं स्वपरपक्षयोः सिद्ध्यर्थमिति" ख। (४) "समासोऽपि" इति ख। (५) "व्यक्तनिमित्तासमासः" इति ख।

(क) समासासमासपक्षयोस्तुल्यतां दर्शयति—स्वपक्षेति। तत्र स्वपरपक्षयोरित्यादि असमासपक्षस्वरूपप्रदर्शनपरमिति बोध्यम्। (ख) वार्त्तिकपाठो व्युत्क्रमेण गृहीतः।

## न्यायवार्त्तिकम्

वादः स्यात्, न स्वपरपक्षाणां न स्वपरपक्षस्येति। न, असम्भवात्—एकस्य तावत् सिद्ध्यसिद्ध्यर्थं वचनं नैवास्ति, स्वपरपक्षाणां साधनमनुमानमेकमिति कथाऽप्येषा नास्त्यतोऽस्थाने आशङ्का।

अनित्यः समासविधिरित्यपरे—अपरे समासविधेरनित्यतां वर्णयन्त एवमाहुः नायमवश्यं विधिः सर्वत्र समास इति। क्वचित् समासः क्वचिच्च वाक्यम्, यथा च राज्ञः पुरुषः राजपुरुष इति च समासः। यदि उभयप्राप्तिरसमासः कस्मात्—अनित्यः समासविधिरित्येवं ब्रुवतोक्तं भवति प्राप्तमुभयम्, अथोभयप्राप्तौ कस्मादसमास इति। समासः कस्मादित्यनिवृत्तोऽनुयोगः? नानिवृत्तो लाघवार्थत्वात्—समासे लाघवमसमासे गौरवम्। अनुगत्यर्थं च शब्दानामुपादानमिति गुर्वभिधाने प्रयोजनं वाच्यम्। वर्णे गुरुलाघवानभ्युपगम इति चेत् नायं परिहारोऽनुयोगस्यानिवृत्तेः—वर्णे गुरुलाघवानुयोगं न प्रतिपद्यामह इति चेत् न निवर्ततेऽनुयोगः कस्मादिति। शास्त्रत्वेन च (१)वादविधानमभ्युपगम्यते, न च वर्णे गुरुलाघवमाश्रीयत इति न युक्तम्।

सिद्ध्यसिद्ध्यर्थमित्येतदपि न युक्तम्। कस्मात्? द्वेधाऽनुपपत्तेः—अयं (२)खलु सिद्धिशब्दः कल्प्यमानो द्वेधा कल्प्येत व्यक्तावुत्पत्तौ वा। तत्र तावदुत्पत्तौ युज्यते प्रतिज्ञादिकस्य साधनस्य (३)साधनभावहानिप्रसङ्गात्—नहि प्रतिज्ञादिसाधनेन वस्तूत्पाद्यते, किं तु विद्यमानप्रकाशकत्वं साधनार्थः, स हीयते सिद्धावुत्पत्तौ कल्पितायामिति। व्यक्ताविति चेत्? न; अधिकरणाधारत्वात्,—अथ मन्यसे (४)सिद्धिर्व्यक्तिः नोत्पत्तिः, युक्तमेतत्; उत्तरं तु व्याहतं भवति अधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति। ये चैते अधिकरणप्रत्यायनलक्षणे सिद्ध्यसिद्धी ते अधिकरणे वर्तमाने

## न्यायवार्त्तिकतात्पर्यटीका

अनित्य इति। भवतु गौरवमपि को दोष इत्यत आह—अनुगत्यर्थं चेति। लघुनोपायेनाऽऽशु सिद्धौ गुर्वभिधानमनर्थकम्। यथाहुः—

अर्के चेन्मधु विन्देत किमर्थं पर्वतं व्रजेत्।
इष्टस्यार्थस्य संसिद्धौ को विद्वान् यत्नमाचरेत्॥ इति।

अनर्थकप्रयोगश्चानपेक्षितः शिष्यैरिति तेषामशासनान्न शास्त्रं स्यात्, तदिदमुक्तम्—शास्त्रत्वेनेति।

सिद्ध्यसिद्ध्यर्थमित्येतदपि दूषयति—सिद्ध्यसिद्ध्यर्थमित्येतदपि न युक्तमिति। तत्र तावदिति, तदिति तयोर्मध्य इत्यर्थः। अधिकरणप्रत्यायनमिति, प्राश्निकप्रत्यायनमित्यर्थः। कुतो व्याहतमित्यत आह—ये चैते इति, चो यस्मादर्थे, अधिकरणे वर्त्तेते पक्षस्येति

(१) "वादाभिधानम्" इति ख। (२) "खल्वसिद्धिशब्दः" इति ख। (३) "साधनहानि-" इति ख। (४) "सिद्ध्यसिद्धि-" इति ख।

## न्यायवार्त्तिकम्

कथं (१)पक्षस्य भवत इति षष्ठ्यर्थो वाच्यः। नायं दुर्वचस्तद्विषयत्वात्—तयोः सिद्ध्यसिद्ध्योः पक्षो विषयः, अतस्तद्विषयत्वात्तस्येति। न युक्तमेतत्। ये ते सिद्ध्यसिद्धी पक्षविषये, ते किं तावत् पक्षे सिद्धे उतासिद्धे? यदि तावत् सिद्धे, नाधिकरणप्रत्यायनं सिद्धिः। किं तर्हि? यतस्तत्प्रत्यायनं सा सिद्धिः। कुतश्च तद्भवति? अर्थस्य तथाभावात्—यस्मात् सोऽर्थस्तथा भवति। कथं तथा भवति? यथा प्रमाणैरभिसम्बद्ध इति,—यत् प्रमाणैरविसंवादित्वं स तथाभावः। अथासिद्धे पक्षेऽधिकरणप्रत्यायनं भवति? साधनप्रयोगात् प्रागधिकरणप्रत्यायनमस्तीति वादवैयर्थ्यं स्यात्। पक्षस्य सिद्धिरधिकरणप्रत्यायनम् असिद्धिस्तु कथम्? नहि परपक्षासिद्धिर्दूषणेन क्रियत इत्युक्तम्। स्थापनानिवृत्तेरुपचार इति चेत्—स्यान्मतिः दूषणं प्रयुज्यमानं साक्षात् स्थापनां निवर्तयति, स्थापनानिवृत्तेस्तु परपक्षनिवृत्तिरुपचर्यत इति। न, प्रयोजनाभावात्,—नहि (२)प्रयोजनमन्तरेण मुख्यार्थव्यतिक्रमो लभ्यते, अपि तु प्रमाणासम्भवेनोपचारो मञ्चाः क्रोशन्तीति

## न्यायवार्त्तिकतात्पर्यटीका

व्याहतमित्यर्थः। चोदयति—नायमिति। सिद्धिर्ज्ञानं तस्य पक्षो विषयः, आश्रयास्तु प्राश्निका इत्यर्थः। विकल्प्य दूषयति—न युक्तमेतदिति। न तावज् ज्ञानं पक्षविषयं प्राश्निकाधिकरणं चेति बौद्धराद्धान्ते सम्भवति, ज्ञानस्यानाधारत्वात् विषयिविषयभावस्यातात्त्विकत्वात्। तस्मादन्या सिद्धिः, तत्रेदमुपतिष्ठते—किं तर्हीति। सिद्धियोगात् सिद्धः पक्षो भवति, प्रमाणयोगश्च सिद्धिः, सैवार्थस्य तथा, तस्यास्तु प्राश्निकानां प्रतीतिर्भवति, तस्मान्न प्राश्निकप्रतीतिः पक्षस्यासिद्धिरिति विरोधः। यस्मात् सोऽर्थस्तथा भवति तस्मात्तथाभावादधिकरणप्रत्यायनं भवतीति द्वितीयं कल्पमाशङ्कते—अथासिद्ध इति। यावत् पक्षविषयं साधनं न प्रयुज्यते तावदधिकरणप्रत्यायनं ततः साधनप्रयोगात् प्रागधिकरणप्रत्यायनमस्तीति वादवैयर्थ्यं साधनदूषणप्रयोगोऽनर्थकः। दूषणान्तरमाह—पक्षस्येति। न प्रयोजनमन्तरेणेदानीन्तनानामस्मदादीनां मुख्यार्थशब्दस्यातिक्रमोऽवाचकपदप्रयोगेण लभ्यते इत्यर्थः। यथाहुः "अस्मदायत्ते शब्दप्रयोगे किमित्यवाचकं प्रयोक्ष्यामहे" इति। स्यादेतत्, मञ्चस्थाः क्रोशन्तीति वक्तव्ये विनाऽपि प्रयोजनं मञ्चाः क्रोशन्तीत्युपचारो दृष्ट इत्यत आह—अपि तु प्रमाणासम्भवेनेति, प्रमाणसंभवेनापि त्विति योजना। नन्विहापि विनाऽपि प्रयोजनं

---

(१) "सपक्षस्य" इति ख। (२) "प्रयोजनव्यतिक्रमेण" इति क।

## न्यायवार्त्तिकम्

यथा। (क)लोकप्रयुक्तशब्दार्थवत् उपचारः लोकगत्या शब्दार्थः, न चेदं लौकिकं वाक्यं स्वपरपक्षयोः सिद्ध्यसिद्ध्यर्थं वचनं वादः।

अपरे तु प्रतिज्ञातार्थाज्ञापनं पक्षस्यासिद्धिं वर्णयन्ति। (१)तद् यद्यधिकरणविषयम्, न निवर्तते प्रसङ्गः। कथम्? पक्षस्यासिद्धिरिति सिद्धिवत्प्रसङ्गः। तस्मात् सिद्ध्यसिद्धी पक्षधर्मावेव यत एतद् भवति सिद्धः पक्षोऽसिद्धश्चेति। एवं सति द्रष्टृस्थे (२)सिद्ध्यसिद्धी इति व्याघातः—यदि सिद्ध्यसिद्धी पक्षधर्मौ द्रष्टृस्थे सिद्ध्यसिद्धी इति व्याहतं भवति। अथ मा भूद्व्याघात इति द्रष्टृस्थे एव ते? तथाऽपि पक्षस्य व्यक्त्यव्यक्ती सिद्ध-सिद्धी इति व्याहतं भवति। अथ तथाऽतथाते पदार्थस्य सिद्ध-सिद्धी? तथाऽप्यधिकरणप्रत्यायनं सिद्ध्यसिद्धी इति व्याहतं भवति। के पुनरेते

## न्यायवार्त्तिकतात्पर्यटीका

प्रमाणासम्भवमात्रेणोपचारो मञ्चाः क्रोशन्तीतिवद्भविष्यतीत्यत आह—लोकप्रयुक्तशब्दार्थवत् उपचारोऽपि लौकिको न प्रयोजनाभावेन शक्योऽपवदितुं न लोकः पर्यनुयोज्यो यतः, इदानीं तु न अस्मदादिप्रयोगः प्रयोजनाभावेन शक्यः पर्यनुयोक्तुमित्याशयेनाऽऽह—न चेदं लौकिकमिति।

अपरे त्विति। न दूषणविषयत्वमसिद्धिर्येन न पक्षेण संबध्येत, अपि त्वज्ञानम्, तच्च पक्षविषयमेवेति न मुख्यार्थलङ्घनमित्यर्थः। अत्रापि पूर्वोक्तं प्रसङ्गमाह—तद् यदीति। तस्मात्पक्षस्येतीच्छता सिद्ध्यसिद्धिज्ञानाज्ञाने पक्षधर्मावेवाभ्युपगन्तव्ये। यतः तयोः पक्षधर्मत्वात् एतद्भवति सिद्धः पक्षोऽसिद्धः पक्ष इति। अस्तु तर्ह्येवमित्यत आह—एवं सतीति। न द्रष्ट्राधारता ज्ञानस्य विषयता च बौद्धराद्धान्ते सम्भवतीति भावः। शङ्कते—अथ मा भूदिति। अस्ति खल्वालयज्ञानं यदुपाश्रित्य (३) षडपि प्रवृत्तिज्ञानानि जायन्ते। तस्मादालयप्रत्ययो द्रष्टा तत्स्थे एव सिद्ध-सिद्धी। ननु पक्षस्य तद्विषयत्वात् तस्यापीति चेत् कः पुनरयं विषयभावः। तत्कारणत्वमिति चेत् चक्षुरादीनामपि ज्ञानकारणानां विषयत्वप्रसङ्गः, असतश्चाकारणस्याविषयत्वप्रसङ्गः। ज्ञानप्रकाश्यत्वं विषयत्वमिति चेत्, न; ज्ञानेनार्थे प्रकाशाजननात्। तस्माज्ज्ञानस्य तदसमवायिनः तदविषयस्य द्रष्टृस्थतैवेति सिद्धम्। निराकरोति—तथाऽपीति। पुनः शङ्कते—अथ तथाऽतथाते इति, (ख) प्रमाणयोग इत्यर्थः। निराकरोति—तथाऽपीति।

---

(१) 'तद्यधिकरणविषयम्' इति ख। (२) 'सिद्ध्यसिद्धी इति" इति ख-पु० नास्ति। (३) "षड्" इति क-तात्पर्यपुस्तके नास्ति।

(क) अवादर्शपुस्तकयोः "लोकप्रयुक्तशब्दविषयश्चोपचारः" इति पाठः। तात्पर्यानुसारी पाठस्तु गृहीतः। (ख) अत्र "प्रमाणयोगायोगौ" इति पाठः समीचीनतया प्रतिभाति।

## न्यायवार्त्तिकम्

व्यक्त्यव्यक्ती ? वस्तुधर्मावभिधानप्रत्ययहेतू, यत एव तावभिधानप्रत्ययौ व्यक्तोऽव्यक्तश्चेति भवतः, ते व्यक्त्यव्यक्ती इति। अर्थशब्दानुपपत्तिर्विकल्पानुपपत्तेः—अर्थशब्दः खलु प्रवर्तमानस्त्रेधा प्रवर्तते उद्देशप्रयोजनाभिधेयविषयत्वेन। उद्देशे तावदर्थशब्दो यथा ब्राह्मणार्थं भक्तमिति। एवं चतुर्विध(१)वाक्यासङ्ग्रहः। प्रयोजनेऽर्थशब्दः किमर्थमागतोऽसीति। अभिधेयेऽर्थशब्दो यथा गौरित्यभिधानस्य कोऽर्थ इति। तत्र तावदुद्देशे सम्भवति, युक्तायुक्तत्वेनेति विशेषितत्वात् स्वपक्षस्य युक्तत्वेन परपक्षस्यायुक्तत्वेनेत्येवं विशेषिते (२) कुत उद्देशशब्दार्थः। न ह्ययं युक्तायुक्तशब्दो दूषणाभासे साधनाभासे वा सम्भवति साधनयोगो युक्तता दूषणयोगोऽयुक्ततेति। अथ पुनः पदार्थस्य तथात्वातथात्वे युक्तायुक्तत्वे—युक्तत्वं तथाभावोऽयुक्तत्वमतथाभाव इति, तथाऽपि उभयोः कर्मतयोपादानाद् युक्तत्वेनाधिकरणप्रत्यायनमयुक्तत्वेन वेति व्याघातः, नहि प्रत्याय्यं प्रत्यायनं भवतीति। अथ प्रयोजनेऽर्थशब्दः, तथाऽपि साधनदूषणाभासवादिनोऽवादिता स्यात्। किं कारणम् ? साधनदूषणाभासयोः सिद्ध्यसिद्धिप्रयोजनत्वात्—नहि साधनदूषणाभासयोः सिद्ध्यसिद्धी प्रयोजनम्। एवं च तद्वादी अवादी स्यात् तथा चावादी निगृह्यत इति दोषः।

## न्यायवार्त्तिकतात्पर्यटीका

तत्त्वं जिज्ञासुः पृच्छति—के पुनरेते इति। सुहृद्भावेनोत्तरमाह—वस्तुधर्माविति। यद्यपि प्रमाणयोगायोगौ प्रमेयस्य प्रमातुश्च, साधनासंबन्धे कर्तृत्वानुपपत्तेः; तथाऽपि प्रमेयस्य प्राधान्यात् तत्रैवाभिधानप्रत्ययाविति प्रमेयधर्मावुच्येते व्यक्त्यव्यक्ती, न तु प्रमातृधर्माविति। सिद्धार्थमित्यर्थशब्दानुपपत्तिः। कस्मात् ? विकल्पानुपपत्तेः। विकल्पमाह—अर्थशब्दः खल्विति। इह सूत्रे धननिमित्तादिवचनताऽर्थशब्दस्य न सम्भवतीति त्रयमवशिष्यत इति त्रेधा प्रवर्त्तत इत्युक्तम्। साधनं साधनाभासो दूषणं दूषणाभास इति चतुर्विधं वाक्यम्। प्रथमकल्पमपाकरोति—तत्र तावदिति, तदिति तेषु मध्य इत्यर्थः। ग्रन्थान्तरेण युक्तायुक्तत्वेन विशेषणाच्चतुर्विधवाक्यसङ्ग्रहार्थो ह्युद्देशे अर्थशब्दो व्याख्यातः। न च युक्तायुक्तविशेषणे चतुर्विधवाक्यसंग्रहो भवति साधनाभाससम्बन्धिनः पक्षस्य युक्तत्वाभावाद् दूषणाभाससंबन्धिनश्च प्रतिपक्षस्यायुक्तत्वाभावादित्यर्थः। अथ न साधनादियोगोऽपि तु साध्यधर्म एव साधनानपेक्षो युक्तायुक्तत्वमिति शङ्कते—अथ पुनरिति। निराकरोति—तथाऽपीति। कुतो व्याघात इत्यत आह—नहीति। यदि प्रत्यायनं सिद्धिः प्रतीतिः, तथाऽपि सा प्रत्याय्यं न सम्भवति; अथ करणम्, तथाऽपि कर्म करणं न सम्भवतीति व्याघात इत्यर्थः। द्वितीयं कल्पमाशङ्क्य निराकरोति—अथ प्रयोजन इति। प्रयोजनं कार्यम्, तच्च कारणाभासाद्भवितुमर्हति। न हि वह्निरिति गृहीतः खद्योतो

(१) "-वाक्यं संग्रहः" इति ख। (२) "कुत" इति ख-पु० नास्ति।

## न्यायवार्त्तिकम्

अथाभिधेयेऽर्थशब्दप्रयोगः, अभिधानस्वभावानवधृतेरिति—अयुक्तमेतदपि, नहि ग्रन्थकारभाष्यकाराभ्यां विशेषितमेवंप्रकारमभिधानं सिद्ध्यसिद्ध्योर्वाचकमिति। ननु विशेषितम्, येन सिद्ध्यसिद्धी अभिधीयेते तत्तयोर्वाचकमिति। सत्यमुक्तम्, एवं तु सिद्ध्यसिद्धी इत्येतेऽभिधाने वादः प्राप्तः। न चान्योऽर्थशब्दस्यार्थ इति, तस्मादर्थशब्दोऽप्ययुक्त इति। सिद्ध्यसिद्ध्यर्थं (क) च वचनं वाद इति ब्रुवाणेन पूर्वमुत्तरं वा नाऽऽलोचितम्। नैयायिकहेतुप्रतिषेधेन विशेष्यं वचनमित्यभ्युपगमसिद्धम् इदं (१)पुनः सूत्रं समस्तं वचनविशेषणार्थमिति व्याघातः। तदेवमेतानि सूत्रपदानि विचार्यमाणानि स्वतन्त्रव्याघातकानीति लोकं च बाधन्त इति। एवं तावत् सौत्राणि पदानि स्वेन (२) न्यायेनासम्बद्धानि। यथा च वृत्तिपदानि असम्बद्धानि तथेदमुच्यते। स्वस्य पक्षस्येति स्वार्थासिद्धेरयुक्तम्—स्वार्थश्च प्रतिषिद्धः, (३) अतोऽयुक्तं स्वस्य पक्षस्येति। यदपि षष्ठीसप्तमीद्विवचनयोस्तुल्यरूपत्वात् षष्ठीत्वज्ञापनार्थं स्वस्य पक्षस्येति तदप्ययुक्तम्, अधिकरणार्थासम्भवात्—नहि पक्षव्यतिरेकेण पक्षे किञ्चित् साध्यं सम्भवति। तस्मादप्रसक्तः सप्तम्यर्थः, तदप्रसक्तौ विशेषणानर्थक्यमिति।

(४)युक्तायुक्तत्वाऽनुपपत्तिश्च विकल्पानुपपत्तेः—युक्तायुक्तत्वे खलु साधनदूषणे वा स्याताम्, साधनदूषणाभ्यां वा योगः, पदार्थस्य वा (५) तथाताऽतथाते इति। तत्र तावत् साधनदूषणे

## न्यायवार्त्तिकतात्पर्यटीका

वहति पचति वेत्यर्थः। तृतीयं कल्पमाशङ्क्य निराकरोति—अथाभिधेय इति। ग्रन्थकारः सूत्रकारः। एवं त्विति, एवं सति सिद्धिशब्दोऽसिद्धिशब्दश्च वादः स्यात्। ननु धननिमित्तादयोऽप्यर्थशब्दवाच्याः सन्ति ते कस्मादिह न गृह्यन्त इत्यत आह—(ख) तत्र, सूत्रे। न चान्योऽर्थशब्दस्य विषयः सम्भवति, न हि सिद्धिर्धनं वा स्वपरपक्षयोः साधनं वा निवृत्तिर्वा सम्भवतीत्यर्थः। अपि च वचनविशेषपक्षे स्वशास्त्रव्याघात इत्याह—सिद्ध्यसिद्ध्यर्थं च वचनं वाद इति ब्रुवाणेनेति। नैयायिकहेतुदूषणं पूर्वमिदं सूत्रमुत्तरम्। उपसंहरति—तदेवमिति। "तन्त्र" शास्त्रम्। लोकं च बाधन्त इति, अवाचकपदप्रयोगात् साधनदूषणाभासवादिनश्च वादित्वेन लोकसिद्धस्यावादित्वापादनात् सिद्ध्यसिद्धिशब्दयोश्च वादत्वापादनादित्यर्थः। सूत्रं दूषयित्वा वृत्तिं दूषयति—यथा चेति। स्वस्य पक्षस्येति, स्वस्याऽऽत्मीयपक्षस्य। न हि पक्षव्यतिरेकेण पक्षाधारं साध्यं ज्ञानमन्यद्वा सिद्धिशब्दाभिधेयं सम्भवति, ज्ञानस्य पुरुषाधारतयाऽनाधार-

---

(१) 'पुनः सूत्रमिति समस्तवचन-' इति ख। (२) "न्यायेनासमर्थानि" इति ख। (३) "अतोऽर्थम्" इति ख। (४) "युक्तायुक्तत्वे" इति ख। (५) "तथातथा चेति" इति ख।

(क) आदर्शयोः 'च'कारो नास्ति तात्पर्यानुसारेण तु गृहीतः। (ख) वार्त्तिके "तत्र" इति पाठो न दृश्यते।

## न्यायवार्त्तिकम्

युक्तायुक्तत्वे। कस्मात्? साधनदूषणयोः पृथगभिधानात्—'ते साधनदूषणै'रिति पृथगुक्ते साधनदूषणे, युक्तायुक्तशब्दाभ्यां च साधनदूषणयोरभिधानमिति 'ते साधनदूषणै'रिति (१)सूत्रमनुच्चार्यं चरितार्थत्वादिति। अथ मन्यसे तयोरेव युक्तायुक्तयोर्विशेषणार्थं 'ते साधनदूषणै'रिति, न; प्रथमाभिधानप्रसङ्गात्—यदि युक्तायुक्तत्वविशेषणार्थं 'ते साधनदूषणै'रिति सूत्रम्, प्रथमैव व्याख्या—ते साधनदूषणानीति। न हि विशेषणविशेष्यभावे भवति नीलमुत्पलैरिति। योग इति चेत्—अथ साधनदूषणाभ्यां योगो युक्तत्वायुक्तत्वे इत्येवं चेन्मन्यसे, तन्न; अनिर्देशात्—(२)न साधनदूषणाभ्यां योगो निर्दिष्ट एवंविध इति, अनिर्देशादयुक्तमेतत्। साधनेन योग इति च कदा भवति, यदाऽसौ निर्णीतः पदार्थः, तदा च न साधनार्थः कश्चिदस्तीति न युक्तायुक्तत्वेनाधिकरणप्रत्यायनमिति व्याघातात्, अतो न युक्तो योगः। (३)अथ पदार्थस्य तथातातथाते युक्तायुक्तत्वे? तदपि न, करणार्थस्यासम्भवात्—ये तथात्वातथात्वक्षलणे युक्तायुक्तत्वे ते व्यवच्छेद्ये न तु व्यवच्छेदस्य साधने। तस्मात् करणार्थो नास्त्यतो युक्तायुक्तत्वस्येति युक्तं वक्तुमिति।

## न्यायवार्त्तिकतात्पर्यटीका

तया वा पक्षाधारत्वानुपपत्तेः, पक्षस्य तु भवेत् केनचित् संबन्धेन यादृशतादृशेनेत्यर्थः। 'ते साधनदूषणै'रित्यत्र पृथगुक्ते साधनदूषणे। (४)(क)युक्तायुक्तार्थाभ्यां ते युक्तायुक्तत्वे। साधनदूषणैरिति, न हि कर्म करणं भवतीत्यर्थः। अपि च युक्तायुक्तार्थाभ्यामभेदे साधनदूषणपदमनर्थकं ते इत्यनेनैव युक्तायुक्तत्वावमर्षिणा गतार्थत्वादित्याह—युक्तायुक्तशब्दाभ्यां चेति। अथ न पर्यायता, अपि तु सामान्यविशेषभावः युक्तायुक्तत्वे सामान्यम्, साधनदूषणे च विशेष इति शङ्कते—अथ मन्यस इति। निराकरोति—न प्रथमेति। उभयव्यभिचारे विशेषणविशेष्यभावे कामचारादुत्पलैरित्युक्तम्। द्वितीयं कल्पमाशङ्क्य दूषयति—योग इति चेदिति। न खलु योगो नाम बौद्धानां साध्यसाधनवृत्तिर्दूष्यदूषणवृत्तिर्वा कश्चिदस्तीत्यर्थः। अपि च सांवृतोऽपि योगः साध्यसाधनज्ञानाधीननिरूपणतया नानिरूपिते साध्ये निरूपितो भवति, निरूपणं च निर्णय इति योगनिरूपणात् प्राक् साध्यनिर्णयात्कृतं योगनिरूपणेन साध्यनिर्णयार्थेनेति। युक्तायुक्तत्वेन करणेनाधिकरणप्रत्यायनमिति व्याघात इत्याह—साधनेनेति। भवति ज्ञायते। तृतीयं कल्पमाशङ्क्य निराकरोति—अथ पदार्थस्येति। युक्तायुक्तत्वेनाधिकरणप्रत्यायनमिति युक्तायुक्तत्वयोः करणत्वं दर्शितम्, तत् तथात्वातथात्वपक्षे न संभवति, कर्मत्वात्। तदिदमुक्तं—ते व्यवच्छेद्ये परिच्छेद्ये न तु व्यवच्छेदस्य परिच्छेदस्य साधने इति।

---

(१) 'सूत्रमुच्चार्यम्' इति ख। (२) 'न' इति ख-पु० नास्ति। (३) 'अथ पदार्थस्य' इत्यत्र 'अपदार्थस्य' इति ख। (४) 'युक्तायुक्तताभ्यां' इति ख-तात्पर्यपाठः।

(क) युक्तायुक्तशब्दाभ्यामिति वार्त्तिकस्य अभिप्रायप्रकाशकविशेषणं युक्तायुक्तार्थाभ्यामिति। इदं तात्पर्यं 'युक्तायुक्तशब्दाभ्यां च' इत्यतः परं पठितम्, प्रमादादत्र मुद्रितमिति सम्भाव्यते। सैवस्य 'ते' इत्यस्य विवरणं युक्तायुक्तत्वे इति।

## न्यायवार्त्तिकम्

अधिकरणप्रत्यायनमिति च न युक्तम्, शास्त्रसम्बन्धासङ्गतत्वात्—(१)शास्त्रसम्बन्धं कुर्वाणेनोक्तं सन्देहविपर्ययप्रतिषेधार्थः शास्त्रस्याऽऽरम्भ इति, एतन्निरपेक्षेणेदमुच्यते अधिकरणप्रत्यायनं सिद्धासिद्धी इति। न च प्राश्निकेषु संशयविपर्ययौ स्तः परिच्छेदकत्वात्। तस्मान्न प्राश्निकाः प्रत्याय्या इति। यच्चोक्तं प्राश्निकप्रत्यायनादेव वादिप्रत्यायनं कृतं भविष्यतीति। (२)तत्प्रत्यायनाद्वादिप्रत्यायनं भविष्यतीति किं कारणम्? प्रतिवादी किल स्वपक्षरागात् सन्तमप्यर्थं न प्रतिपद्यते। सन्तमप्यर्थं न प्रतिपद्यते इति व्याहतमुच्यते, कथं चान्यथा प्रतिपन्नः सन्नित्यभिधीयते? अथ प्रतिपद्यमानोऽपि परस्य न कामकारं ददाति, तथाऽपि न प्रतिपद्यत इति व्याहतमुच्यते। यच्च प्राश्निकप्रत्यायनात् तत्प्रत्यायनमिति, तदपि न, प्रतीतेः कारणभेदात्—प्राश्निकप्रतीतेरन्यानि कारणानि, अन्यानि प्रतिवादिप्रतीतेरिति। न चान्यविषयस्य करणस्यान्यत्र (३) क्रियेति। नियमाभावाच्च—न चायं नियमः प्राश्निकप्रत्यायनार्थ एव वादः, प्राश्निकानन्तरेणापि गुर्वादिभिः सह वादो दृष्ट इति। यदा तु नायं तत्त्वबुभुत्सुर्लाभपूजाख्यातिकामो वादमारभते तदा प्राश्निकैः प्रयोजनमस्तीति, सत्यमस्ति प्रयोजनम्, वादस्तु न भवतीति। न, त्रैविध्यानभ्युपगमात्—एक एवायं कथामार्गः, तस्य प्रयोजनं तत्त्वावबोधो लाभादयश्च। न, प्रतिषेधात्—(४) प्रतिषिद्धः स्तुतिमानलाभलिप्सोर्वादः। यदपीदमुच्यते न त्रैविध्यानभ्युपगमादिति, नानभ्युपगमायत्तः

## न्यायवार्त्तिकतात्पर्यटीका

अधिकरणप्रत्यायनमिति दूषयति—अधिकरणेति। शास्त्रसंबन्धः प्रयोजनेनेति। चोदयति—प्राश्निकप्रत्यायनादिति। कश्चिच्चोदकः पृच्छति—तत्प्रत्यायनादिति। चोदकस्योत्तरम्—प्रतिवादी किलेति। सिद्धान्त्याह—सन्तमप्यर्थं न प्रतिपद्यत इति। न खल्वाध्यात्मिकशक्तिसम्पन्नः समाहितः समग्रसाधनप्रयोगे सति सन्तमर्थं न प्रतिपद्यत इति संभवतीत्यर्थः। तथाविधेनापि चेत् प्रतिपत्त्रा सोऽर्थोऽन्यथा प्रतिपन्नः कथमसौ तथा सन्नित्यभिधीयत इत्याह—कथं चेति। शङ्कते—अथ जिगीषुतया प्रतिपद्यमानोऽपीति। कामकारोऽनुज्ञा। निराकरोति—तथाऽपीति। न प्रतिपद्यते प्रतिपद्यमान इति व्याहतम्। न चायमनुज्ञानिषेधो न प्रतिपद्यत इति वादे वीतरागकथात्वाज्जिगीषाया अभावादिति भावः। यच्च प्राश्निकप्रत्यायनादिति। अन्यदीयेन करणेनान्यः प्रतिपद्यत इति दुर्भाषितम्। अन्यविषयस्येति अन्याश्रितस्येत्यर्थः। न चायं नियम इति, न वादे प्राश्निकानामुपादानं दैवागतानां तु न वर्जनमित्यर्थः। वादस्य जल्पवितण्डाभ्यामभेदमभिप्रेत्य चोदयति—यदा तु नायमिति। आशयस्थितमर्थमनभ्युपगच्छन् परिहरति—सत्यमिति। अभिप्रायं दर्शयति—न त्रैविध्येति।

---

(१) 'शास्त्रं सम्बन्धम्' इति ख। (२) 'तत्प्रत्यायनाद्वादिप्रत्यायनं भविष्यतीति' इति ख-पु० नास्ति। (३) 'अन्यत्र' इति ख पुस्तके नास्ति। (४) 'प्रसिद्ध' इति ख।

## न्यायवार्त्तिकम्

पदार्थसद्भावः, अपि तु सद्भावे सत्यभ्युपगम इति। यथा च त्रैविध्यं कथामार्गस्य तथा लक्षणभेदात्(१)। वादात् जल्पवितण्डयोर्भेदमुपपादयिष्यामः(क)। तस्मादज्ञात्वा विशेषमुच्यते त्रैविध्यानभ्युपगमादिति। यच्चोक्तं पक्षासिद्धिविषयं प्रत्यायनं पक्षसिद्धिशब्देनोपचरितम्, यथा शून्यताविषयः समाधिः शून्यतेति। न कामत उपचारो लभ्यते अपि तु प्रमाणासम्भवेन, लोकप्रयुक्तशब्दान्वाख्यानमुपचारः, उक्तं च नोपचरितशब्दप्रयोगो लक्षणे उपपन्न इति। तदर्थं वचनमित्येतदपि किल चतुर्विधवाक्यज्ञापनार्थमुक्तम्, साधनं साधनाभासो दूषणं दूषणाभासश्च सम्पत्स्यत इति, तदयुक्तम्, युक्तायुक्तत्वेनेति विशेषितत्वात्—एवं विशेषिते एतस्मिन् कुतश्चतुर्विधवाक्यसंग्रह इति। अधिकरणं पुनर्यो वादिप्रतिवादिभ्यामधिकृत इत्यधिकरणार्थो वक्तव्यः, न हि वादे (२)प्राश्निकाधारं किञ्चिदस्तीति। प्रत्यायनाधारत्वादधिकरणमिति चेत् नोक्तोत्तरत्वात्—(३)उक्तोत्तरमेतत्, पक्षविषयं प्रत्यायनं न प्राश्निकविषयमिति। तस्मिन् सति भावादिति चेत्, न; अन्यथाऽपि दर्शनात्—अन्यथाऽपि गुर्वादिभिः सह दृष्टो वाद इति। तद्वादे परीक्षा का कस्य क्वेति वक्तव्यम्, साधनदूषणप्रयोगः पक्षस्थापनाविषयो वाद इति, तस्य परीक्षा साधनदूषणतदाभासपरिज्ञानम्, तदर्थमधिकार (४)उभयोः, तस्मिन्निति सप्तम्यर्थो

## न्यायवार्त्तिकतात्पर्यटीका

दूषयति—न (ख) भवद्भिरेव प्रतिषेधादिति। त्रैविध्यानभ्युपगमादिति दूषयति—यदपीति। यच्चोक्तं वृत्तौ पक्षसिद्धिविषयम् एतदपि दूषयितुमुपन्यस्यति—यच्चोक्तमिति। न कामतः विना प्रयोजनमिति। विनाऽपि प्रयोजनं प्रमाणासंभवेनापीति योजना। सूत्रोक्तं दूषणं वृत्तावाह—तदर्थं वचनं सिद्ध्यसिद्ध्यर्थमित्यर्थः। अधिकरणं दूषयति—अधिकरणमिति। न हि प्राश्निकाधारमिति। प्राश्निका एव तावद्वादे न सन्ति, अभ्युपेत्य उक्तमिति। शङ्कते—प्रत्यायनाधारत्वादिति। सिद्धिः प्रत्यायनं तदाधाराः प्राश्निका इत्यर्थः। निराकरोति—नेति। शङ्कते—तस्मिन्निति। दैवमिलिते प्राश्निके सतीत्यर्थः। निराकरोति—नेति। न हि दैवमिलितं कारणम्, मा भूद्गर्दभोऽपि धूमस्य कारणमिति भावः। चोदयति (ग)यदि प्राश्निका न सन्ति तद्वाद इति। तयोर्वादिप्रतिवादिनोर्वादस्य (५)परीक्षा का कस्य च तयोः वादस्य क्व चासौ परीक्षा, प्राश्निकाभावे हि वादतत्परीक्षातदधिकरणानामज्ञानमित्यर्थः। परिहरति—साधनेति। वीतरागौ हि वादिप्रतिवादि-

---

(१) 'लक्षणभेदाद् वा' इति ख। (२) 'प्राश्निकार्थम्' इति ख। (३) 'उक्तोत्तरमेतत्' इति ख पु० नास्ति। (४) 'उभयोः' इति ख-पु० नास्ति। (५) 'परीक्षका' इति क।

(क) उपपादितोऽयमर्थो जल्पलक्षणसूत्रीयवार्त्तिके 'सोऽयं पक्षप्रतिपक्षपरिग्रह' इत्यादिना। (ख) भवद्भिरिति प्रतिषेधकर्त्तुः पूरणं कृतम्। (ग) तद्वादे इति वार्त्तिके तदित्यस्य आकाङ्क्षानिवृत्तये यदि प्राश्निका न सन्ति इति तात्पर्यकृता पूरितम्। क-चिह्नितवार्त्तिकग्रन्थसम्पादकास्तु वार्त्तिके अधिकमपेक्षितमिति मन्यन्ते।

## ( सू० )—यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः ॥ २ ॥

### न्यायभाष्यम्

( भा० ) यथोक्तोपपन्न इति, प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः। छलजातिनिग्रहस्थानसाधनोपालम्भ इति, छलजातिनिग्रहस्थानैः साधनमुपालम्भश्चास्मिन् क्रियत इति एवंविशेषणो जल्पः।

### न्यायवार्त्तिकम्

नास्ति। यदपि प्राश्निकप्रतिवादिनोः प्रियाप्रियवचसि वादप्रसङ्ग इति चोद्यं कृत्वा (१)प्रतिसमाधानमुक्तम्, तत्सिद्ध्यसिद्धिभ्यां साक्षात् पारम्पर्येणासम्बन्धाद् युक्तायुक्तविशेषणाच्चासम्बद्धमुत्तरेण त्वसङ्गतपदार्थाभिधायिनो दत्तः स्वहस्तः पूर्वापरयोरसम्बन्धादिति। यदि त्वसङ्गतस्याप्युत्तरं वाच्यं तत एवं वक्तव्यं न सूत्रार्थापरिज्ञानादिति। तदेतत्सूत्रं विचार्यमाणं सह वार्तिकं न युक्त्या सङ्गच्छत इति यथान्यायमेवास्तु ॥ १ ॥

यथोक्तोपपन्नश्छलजातिनिग्रहस्थानसाधनोपालम्भो जल्पः। समस्तं वादलक्षणं

### न्यायवार्त्तिकतात्पर्यटीका

नात्रेव वादस्वरूपज्ञानं तत्परीक्षां च कर्तुं शक्नुतः, तत्किमत्र प्राश्निकैः। साधनप्रयोगः पक्षविषयः, दूषणप्रयोगः स्थापनाविषयः इति वादस्वरूपम्, साधनदूषणतदाभासानां परितो ज्ञानं परीक्षा, तदर्थं तस्मिन् वादेऽधिकारो वीतरागयोरेव वादिनोः, तदिदं क्वेति विप्रश्नस्योत्तरमिति। तस्मात् सप्तम्यर्थोऽधिकरणार्थः पराभिमतः प्राश्निक इति यावत्, स नास्ति वादिप्रतिवादिनोरेव वीतरागयोः कथासमाप्तेरित्यर्थः। यदपि वृत्तौ चोदितं यदि सिद्ध्यसिद्ध्यर्थं वचनं वादस्तदा प्राश्निकप्रतिवादिनोः प्रियाप्रियवचसि रथ्यावादे प्रसङ्ग इति तदप्यतिनिर्बीजमित्याह—यदपीति। न हि प्रियाप्रियवचसः साक्षात्पारम्पर्येण वा सिद्ध्यसिद्ध्यर्थता, नापि साधनदूषणयुक्तायुक्तत्वविशेषणसंबन्धः, तस्मादेवंवादी नोत्तरार्हः, न ह्युन्मत्ताय कश्चिदनुन्मत्त उत्तरमाह, ब्रुवाणो वा सोऽप्युन्मत्तः स्यात्, तदिदमुक्तम्—दत्तः स्वहस्त इति। पूर्वं सिद्ध्यसिद्ध्यर्थमिति, अपरं युक्तायुक्तत्वमिति, उभयोरप्यनेन चोद्येनासंबन्धात्। यदि त्ववश्यमुत्तरं वाच्यम्, ततो वरमेवं वक्तव्यमित्याह—यदि त्विति। सेयं सूक्ष्मेक्षिका परैरिह कृतेति तन्निर्बन्धेन वार्त्तिककृताऽपि कृतेति ॥१॥

उद्देशक्रमानुरोधेन वादलक्षणानन्तरं जल्पं लक्षयति—

यथो—ल्पः ( सू० २ ) ॥ अत्रापि समानजातीयाभ्यां वादवितण्डाभ्यामसमानजातीयेभ्यः प्रमाणादिभ्यो व्यवच्छेदः सूत्रार्थः।

---

(१) 'प्रतिसाधनमुक्तम्' इति ख।

## न्यायवार्त्तिकम्

छलजातिनिग्रहस्थानसाधनोपालम्भश्च जल्प इति। यथोक्तोपपन्न इति न युक्तम्, जल्पे निग्रहस्थाननियमस्यानभ्युपगमात्, यद्येवमुच्येत (१)प्रमाणतर्कसाधनोपालम्भः सिद्धान्ताविरुद्धः पञ्चावयवोपपन्नः पक्षप्रतिपक्षपरिग्रहः (२)छलजातिनिग्रहस्थानसाधनोपालम्भो जल्प इति, न युक्तमेवं भवितुम्। सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति च पदयोरुपालम्भश्रवणात् समस्तनिग्रहस्थानप्रसक्तौ नियमार्थत्वात्—नियमार्थे एते पदे सिद्धान्ताविरुद्धः पञ्चावयवोपपन्न इति, जल्पे च नियन्तव्यं न किञ्चिदस्ति। तस्मान्नियमार्थे एते पदे नातिदेष्टव्ये इत्यतो न वक्तव्यं यथोक्तोपपन्न इति। नैष दोषः, (३)सम्भवादतिदेशात्—(४)यदत्र सम्बध्यते तदतिदिश्यते। किञ्च सम्बध्यते? प्रमाणतर्कसाधनोपालम्भ इत्येतत्।

## न्यायवार्त्तिकतात्पर्यटीका

यथोक्तोपपन्नपदार्थं व्याचष्टे—समस्तमिति। चोदयति—यथोक्तोपपन्न इति न युक्तमिति। निग्रहस्थाननियमस्य प्रमाणतर्कसाधनोपालम्भाभिप्रायनियमस्य च जल्पेऽभावाद् भावे वा वादजल्पयोरभेदप्रसङ्गाद् वादलक्षणस्य जल्पव्यापकत्वेन (क)व्यभिचारप्रसङ्गाद् यथोक्तोपपन्न इत्ययुक्तमित्यर्थः। परिहरति—नैष दोष इति। उक्तमात्रमिह संभवाद् योग्यतासंभवाद् गृह्यते न त्वनुक्तोऽर्थलभ्यो नियमः। न ह्यसौ सूत्रपदश्रवणमात्रात् प्रतीयते, अपि तु तदर्थे प्रतीते तस्यान्यतः सिद्धौ सत्यां नियम्यत इति प्रमाणतर्कसाधनोपालम्भ इत्येतदतिदिश्यत इति उक्तमात्रोपलक्षणपरम्। तेन प्रमाणतर्कसाधनोपालम्भः पञ्चावयवोपपन्नः सिद्धान्ताविरुद्धः पक्षप्रतिपक्षपरिग्रह इत्येतस्य वादपदलक्ष्यवर्जं समस्तस्य लक्षणस्यातिदेशः,

## वृत्तिः

( वृ० ). जल्पं लक्षयति—( यथोक्तोपपन्नेत्यादि )।

यथोक्तेषु यदुपपन्नं तेनोपपन्न इत्यर्थः। मध्यमपदलोपी समासः। तथा च प्रमाणतर्कसाधनोपालम्भः पक्षप्रतिपक्षपरिग्रह इत्यस्य योग्यतया परामर्शः, अन्यथा जल्पस्य वादविशेषत्वापत्तिः। प्रमाणतर्काभ्यां तद्रूपेण ज्ञाताभ्याम्, न तु ज्ञानेऽनाहार्यत्वं विवक्षितम् (५)आरोपितप्रमाणभावेनापि जल्पस्य निर्वाहात्। यद्यपि छलादिभिरुपालम्भ एव न तु साधनम्, तथाऽपि साधनस्य परकीयानुमानस्योपालम्भो यत्रेत्यर्थान्न दोषः। परपक्षदूषणे सति स्वपक्षसिद्धिरित्यतः साधने तदुपयोग इत्यन्ये।

---

(१) 'स न तर्कसाधनोपालम्भः' इति ख। (२) 'छलजातिनिग्रहस्थानोपालम्भो' इति ख। (३) 'सम्भवतोऽतिदेशात्' इत्यादर्शपुस्तकयोः पाठः। (४) 'यच' इति ख। (५) 'आरोपितप्रमाणाभावेनाऽऽभासेऽपि' इति आ-व०।

(क) जल्पे वादलक्षणात्मकहेतुसत्त्वे न तत्र जल्पेतरभेदात्मकसाध्यासत्त्वाद व्यभिचार इत्यर्थः।

## न्यायभाष्यम्

न खलु वै छलजातिनिग्रहस्थानैः साधनं कस्यचिदर्थस्य सम्भवति, प्रतिषेधार्थतैवैषां सामान्यलक्षणे विशेषलक्षणे च श्रूयते—'वचनविघातोऽर्थविकल्पोपपत्त्या छलम्' इति 'साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः' 'विप्रतिपत्तिरप्रतिपत्तिश्च निग्रह-

## न्यायवार्त्तिकम्

तस्माद् यथोक्तोपपन्न इति लक्षणमात्रस्यातिदेशः—यथाऽन्यत्र 'अनेकद्रव्यसमवायाद्रूपविशेषाच्च रूपोपलब्धि'रिति 'अनेन रसगन्धस्पर्शेषु ज्ञानं व्याख्यात'मिति(क) न स्वरूपविशेषोऽतिदिश्यत इति, अपि त्वनेकद्रव्यसमवायमात्रं स्वगतो विशेषः सामर्थ्यात्; तथेहापि यत् समर्थं तदतिदिश्यते, समर्थं च लक्षणम्, तस्मात् तदतिदिश्यते। न नियमार्थे पदे, नियन्तव्यस्याभावात्।

अथवा यथोक्तोपपन्नेनोपपन्नो यथोक्तोपपन्नोपपन्न इति प्राप्ते गम्यमानत्वादेकस्योपपन्नशब्दस्य लोपः यथा गोरथ इति। केन पुनरयं गम्यत इति? उक्तं सामर्थ्येनेति। न हि नियमार्थयोः पदयोर्जल्पे सम्भवः, तस्मान्न ते अतिदिश्येते इति। भाष्यमिदानीं कथम्? न, सूत्रपाठानुक्रमज्ञापनार्थत्वाद्भाष्यस्य, एतस्मिन् सूत्रे यदुपपन्नं लक्षणत्वेन तदतिदिश्यत इति। छलजातिनिग्रहस्थानैर्न कस्यचित् साधनमुपालम्भो वा युक्तः, अयुक्तोत्तरत्वात्—छलं तावत् न

## न्यायवार्त्तिकतात्पर्यटीका

नियमस्त्वार्थो न संबध्यत इति सिद्धम्। लक्षणमात्रस्येति उक्तमात्रस्य, नार्थस्य नापि लक्ष्यपदस्येत्यर्थः। अत्रैव दृष्टान्तमाह—यथाऽन्यत्र वैशेषिकतन्त्रे इति। न नियमार्थे पदे इत्युपलक्षणम्, न प्रमाणतर्कसाधनोपालम्भपदलभ्येऽभिप्रायनियम इत्यपि द्रष्टव्यम्।

पक्षान्तरमाह—अथवेति। यथा गोभिर्युक्तो रथो गोरथ इति युक्तपदलोप इति। न नियमार्थयोरिति एतदप्युपलक्षणं पूर्ववदेव। इह वादलक्षणं पठता भाष्यकारेण नियमोऽप्यतिदिष्ट इति मन्वानश्चोदयति—भाष्यमिदानीमिति। परिहरति—न सूत्रेति। जल्पलक्षणानुकूलो यः पाठक्रमस्ततोऽर्थस्वरूपमात्रं प्रतीयते न त्वार्थोऽर्थ इत्यर्थः। यदुपपन्नम् उक्तमात्रमित्यर्थः। तत्र भाष्यकारेण छलादीनां निषेधार्थतया साधनाङ्गभावमाक्षिप्य परपक्षविघातेन स्वपक्षरक्षणादङ्गभाव इति दर्शितम्, तदेतद्वार्त्तिककार आक्षिपति—छलजातिनिग्रहस्थानैरिति। तत् किं निग्रहस्थानान्यप्ययुक्तानि न चैतच्छक्यमित्यत आह—छलं तावदिति। छलजात्यो-

## वृत्तिः

उभयपक्षस्थापनावत्त्वेन च विशेषणीयमतो वितण्डायां नातिव्याप्तिः। स प्रतिपक्षस्थापनाहीन इत्युत्तरसूत्रात् प्रकृते उभयपक्षस्थापनावत्त्वलाभः। स्थापनावत्त्वादेव च पञ्चावयवनियमोऽपि लभ्यते इति वदन्ति।

---

(क) वैशेषिकदर्शने चतुर्थेऽध्याये प्रथमाह्निकस्याष्टमनवमसूत्रे एते। अत्र द्वितीयसूत्रे 'अनेने'त्यत्र 'तेने'ति पाठभेदः।

## न्यायभाष्यम्

स्थानम्' ( अ० १ आ० २ सू० १०।१८।१९ ) इति। विशेषलक्षणेष्वपि यथास्वमिति। न चैतद्विजानीयात् प्रतिषेधार्थतयैवार्थं साधयन्तीति, छलजातिनिग्रहस्थानोपालम्भो जल्प इत्येवमप्युच्यमाने विज्ञायत एतदिति।

प्रमाणैः साधनोपालम्भयो(१)श्छलजातिनिग्रहस्थानानामङ्गभावः (२)स्वपक्षरक्षणार्थत्वात्। (३)न स्वतन्त्राणां साधनभावः—यत्तत्प्रमाणैरर्थस्य साधनं तत्र छलजातिनिग्रहस्थानानामङ्गभावो (४)रक्षणार्थत्वात्। तानि हि प्रयुज्यमानानि परपक्ष-

## न्यायवार्त्तिकम्

साधनोपालम्भायालम्, कस्मात्? अयुक्तोत्तरत्वात्, अयुक्तमुत्तरं छलम्, तन्न साधनोपालम्भायेति, एवं जातिः। अङ्गभाव इति चेत्,—अथापीदं स्यात् यत्तत् प्रमाणतर्कैः साधनं यो वा उपालम्भः तस्यैतानि प्रयुज्यमानानि छलजातिनिग्रहस्थानानि रक्षणार्थत्वादङ्गं भवन्तीति, एतदप्युक्तोत्तरत्वादनुपपन्नम्। किमर्थं तर्हि प्रयोगः—यद्येतानि छलजातिनिग्रहस्थानानि साधनोपालम्भयोर्न साधनमङ्गं वा किमर्थमेतेषामुपपादनमिति? साधनविघातार्थम्—साधनं

## न्यायवार्त्तिकतात्पर्यटीका

राक्षिप्तयोः सम्पातायातानि निग्रहस्थानानीत्यभिप्रायः। भाष्योक्तं समाधिमाशङ्कते—अङ्गभाव इति। निराकरोति—एतदपीति। न हि सहस्रेणाप्यन्धैः पाटच्चरेभ्यो गृहं रक्ष्यत इत्यर्थः। एवमाक्षिप्ते पार्श्वस्थः पृच्छति किमर्थं तर्हीति। सिद्धान्तिन उत्तरं साधनेति। वादे तावद्

## वृत्तिः

अत्र च छलादिभिः सर्वैरुपालम्भो न (५)विशेषणमव्याप्तेः अपि तु तद्योग्यतैव। योग्यतावच्छेदकं तु वादभिन्नकथात्वमेव। तत्र चोक्तवादत्वावच्छिन्नभेदस्तत्तद्वादभेदो वा विशेषणमिति।

छलेत्यादिना विजिगीषुकथात्वं बोध्यते। विजिगीषुर्हि छलादिकं करोति तथा चोभयपक्षस्थापनावती विजिगीषुकथा जल्प इत्यर्थ इत्यपि वदन्ति।

अत्र चायं क्रमः—वादिना स्वपक्षसाधनं प्रयुज्य नायं हेत्वाभासस्तल्लक्षणायोगादिति सामान्यतः, नायमसिद्ध इत्यादिविशेषतो वा (६)स्वपक्षदूषण उद्धृते प्रतिवादिना स्वस्याज्ञानादिनिरासाय परोक्तमनूद्य अनुक्तग्राह्याणामज्ञानाननुभाषणाप्रतिभानामसम्भवा-

(१) 'श्छलजातीनामङ्गभाव' इति आ ग०। 'छलादीनामङ्ग-' इति टि। (२) 'स्वपक्ष' इति नास्ति आ-पु०। (३) 'न स्वतन्त्राणाम्' इत्यारभ्य—'रक्षणार्थत्वात्' इत्यन्तः पाठो नास्ति वि-टि०। (४) 'स्वपक्षम्' इत्यधिकः पाठः आ-पु०। (५) 'विशेषणाय व्याप्ति' इति आ-व-पु०। (६) 'स्वपक्षदूषण उद्धृते' इति नास्ति आ-व-पु०।

## न्यायभाष्यम्

विघातेन स्वपक्षं रक्षन्ति। तथा चोक्तं 'तत्त्वाध्यवसायसंरक्षणार्थं जल्पवितण्डे बीजप्ररोहसंरक्षणार्थं कण्टकशाखावरणवत्' ( अ० ४ आ० २ सू० ५ ) इति। यश्चासौ प्रमाणैः प्रतिपक्षस्योपालम्भस्तस्य चैतानि प्रयुज्यमानानि प्रतिषेधविघातात् सहकारीणि भवन्ति। तदेवमङ्गीभूतानां छलादीनामुपादानं जल्पे, न स्वतन्त्राणां साधनभावः। उपालम्भे तु स्वातन्त्र्यमप्यस्तीति ॥ २ ॥

## न्यायवार्त्तिकम्

विहनिष्यामीति अनया धियाऽपहृतः प्रवर्तते। यत्र चैतानि छलजातिनिग्रहस्थानानि प्रयुज्यन्ते न स वादः—न पुनरेतदभिधीयते छलजातिनिग्रहस्थानानि साधनमङ्गानि वेति, साधुसाधनोपादाने च परेणाऽऽकुलितबुद्धिः (१)छलादीनि प्रयुङ्क्ते कदाचिच्छलादिभिराकुलीकृतस्य पराजयोऽपि स्यात्, न पुनरेतानि तत्त्वबुभुत्सुना वक्तव्यानि, किं तु विजिगीषुणेति। सोऽयं पक्षप्रतिपक्षपरिग्रहश्छलजातिनिग्रहस्थानप्रयोगाप्रयोगाभ्यां भिद्यमानो वादो जल्पो वितण्डा च भवति।

## न्यायवार्त्तिकतात्पर्यटीका

यद्यपि न साधनविघातसमर्थानि, तथाऽपि तेषां तत्त्वमविद्वान् एभिरस्य साधनं विहनिष्यामीत्यनया बुद्ध्या अपहृतः व्यामोहितः। तस्माद्वादे क्रमेणोपादानमेषामित्यर्थः। यत्र त्वेषां तत्त्वं विद्वान् प्रवर्तते न स वादः, किं तु जल्पो वितण्डा वेत्याह—यत्र चैतानीति। ननु जल्पवितण्डयोः प्रयोगात् साधनमङ्गं वा स्यादत आह—न पुनरिति। ननु न यदि साधनमङ्गं वा, कस्मात्तर्हि जल्पवितण्डयोरेषां प्रयोग इत्यत आह—साधुसाधनोपादाने वेति। साधुसाधनो-

## वृत्तिः

देवालाभे उच्यमानग्राह्याणामप्राप्तकालार्थान्तरनिरर्थकापार्थकानामलाभे, उक्तग्राह्याणां प्रतिज्ञाहानि-प्रतिज्ञान्तर-प्रतिज्ञाविरोध-प्रतिज्ञासन्न्यास-हेत्वन्तराविज्ञातार्थ-विक्षेप-मतानुज्ञान्यूनाधिक-पुनरुक्त-निरनुयोज्यानुयोगापसिद्धान्तानामलाभे, पर्यनुयोज्योपेक्षणस्य मध्यस्थोद्भाव्यत्वादेवानुपन्यासार्हतया यथासम्भवं हेत्वाभासैः (क)परोक्तं दूषयित्वा स्वपक्ष उपन्यसनीयः, ततो वादिना तृतीयकक्षाश्रितेन परोक्तमनूद्य स्वपक्षदूषणमुद्धृत्यानुक्तग्राह्योच्यमानग्राह्यहेत्वाभासातिरिक्तोक्तग्राह्याणामलाभे हेत्वाभासेन यथासम्भवं प्रतिवादिनः स्थापना दूषणीया, अन्यथा क्रमविपर्यासेऽप्राप्तकालम्, अनवसरे दूषणोद्भावने च निरनुयोज्यानुयोगः—यथा त्यक्ष्यसि चेत् प्रतिज्ञाहानिः विशेषयसि चेत् हेत्वन्तरमित्यादि प्रतिज्ञाहान्यादिवद् हेत्वाभासानामुक्तग्राह्यत्वाविशेषेऽपि अर्थदोषत्वेनाप्रधानत्वाच्चरममनुसन्धानमिति ॥ २ ॥

---

(१) 'छलादीनि नियुङ्क्ते' इति ख।

(क) 'परोक्तम्' इत्यारभ्य '-सम्भवादेवालाभे' इत्यन्तं पाठं परित्यज्य तत्स्थाने 'परोक्त- सम्भवादेव लाभे' इत्येवं पाठः परिगृहीतः घ-पुस्तके।

## ( सू० )—स प्रतिपक्षस्थापनाहीनो वितण्डा ॥ ३ ॥

### न्यायभाष्यम्

( भा० ) स जल्पो वितण्डा भवति। किंविशेषणः? प्रतिपक्षस्थापनया हीनः। यौ तौ समानाधिकरणौ विरुद्धौ धर्मौ (१) पक्षावित्युक्तं तयोरेकतरं वैतण्डिको न स्थापयतीति परपक्षप्रतिषेधेनैव प्रवर्त्तत इति।

### न्यायवार्त्तिकम्

अत्रापि विरुद्धौ धर्मावेकाधिकरणस्थाविति समानम्। विरुद्धयोर्धर्मयोरेकाधिकरणत्वानुपपत्तिरुभयस्वभावासम्भवात्—यदि विरुद्धावेकाधिकरणौ धर्मौ भवतः तदैकं वस्तूभयस्वभावं प्राप्तम्, न चैतदस्ति, तस्मान्न विरुद्धौ धर्मावेकाधिकरणाविति। न, अध्यारोपितस्वरूपधर्मप्रतिपत्त्या तदुपपत्तेः—एकस्तत्र धर्मः स्वरूपतः, एकस्तत्राध्यारोपितस्वरूपप्रवृत्तिः, तस्मादुभयधर्मा धर्मीति युक्तम्। एकधर्मिस्थौ विरुद्धार्थावित्येतदपि न बुध्यामहे, को विरुद्धार्थ इति। न, स्वरूपविपर्ययोपपत्तेः—स्वरूपमात्रविपर्ययो विरोधः, न पुनर्बाधा वध्यघातकभावो नेति ॥२॥

स प्रतिपक्षस्थापनाहीनो वितण्डा। प्रतिपक्षस्थापनाहीन इति यावदुक्तम्भवति द्वितीयपक्षवादी वैतण्डिको न कञ्चित् पक्षं स्थापयतीति।

### न्यायवार्त्तिकतात्पर्यटीका

पादाने वादिना कृते परेण प्रतिवादिना जिगीषुणाकुलितबुद्धिर्द्राक् पारमार्थिकमुत्तरमप्रतिपद्यमानश्छलादीनि प्रयुङ्क्ते। किमर्थमित्यत आह—कदाचिदिति, यथाकथंचित् प्रयोगेण। तदनेन प्रकारेण तत्त्वसंरक्षणार्थत्वात् सदाचारः, न च शास्त्रकाराणां छलादिव्युत्पादनमसदृशम्, न च घटपटाद्यभिधानप्रसङ्गः, वाग्युद्धे तेषामप्रसङ्गादिति। (क) न बाधेति नैकेनापरं तदैवापोद्यत इत्यर्थः। शेषं सुगमम् ॥ २ ॥

उद्देशक्रमानुरोधेन जल्पानन्तरं वितण्डालक्षणमाह—

स० ण्डा (सू० ३)। पूर्ववादिपक्षापेक्षया प्रतिवादिन आत्मीय एव पक्षः प्रतिपक्षः, तस्य स्थापना साधनं (२) तया हीनः, तदनेन जल्पाद् व्यवच्छिनत्ति। तदेतदाह भाष्यकारः—स जल्प इति। तयोरेकतरं प्रतिवादी आत्मीयं पक्षं न स्थापयतीति। परपक्षप्रतिषेधेनेति तत्स्थापनाप्रतिषेधेनेत्यर्थः। स्यादेतद्—यथा प्रतिवादिनः पक्षो वादिपक्षापेक्षया प्रतिपक्षः एवं वादिपक्षोऽपि प्रतिवादिपक्षापेक्षया प्रतिपक्ष इत्युभयपक्षस्थापनाहीना वितण्डेति स्यादत आह वार्तिककारः—प्रतिपक्षस्थापनाहीन इति। प्रथमपक्षवादिनो हि स्थापनाया अभावे किं वैतण्डिक

(१) "पक्षावित्युक्तौ" इति टि। (२) 'यत्तया' इत्यादर्शपुस्तकयो: पाठः।

(क) "न पुनर्बाधा" इति वार्त्तिके पाठः।

## न्यायभाष्यम्

अस्तु तर्हि स प्रतिपक्षहीनो वितण्डा ? यद्वै खलु तत्परप्रतिषेधलक्षणं वाक्यं स वैतण्डिकस्य पक्षः, (१) न त्वसौ साध्यं कञ्चिदर्थं प्रतिज्ञाय स्थापयतीति। तस्माद् यथान्यासमेवास्त्विति ॥ ३ ॥

## न्यायवार्त्तिकम्

अपरे तु ब्रुवते—दूषणमात्रं वितण्डेति, दूषणमात्रमिति मात्रशब्दप्रयोगाद् वैतण्डिकस्य पक्षोऽपि नास्तीति। (२) अयुक्तं चैतत् चतुर्वर्गस्याभ्युपगमात्—दूषणमभ्युपगच्छन् दूष्यमभ्युपैति अयथार्थावबोधं प्रतिपद्यते प्रतिपादयितारं प्रतिपत्तारं च; दूषणमात्राभ्युपगमे सति सर्वमेतन्न स्यात्। दूषणमात्राभ्युपगमाच्छेषमर्थतोऽवगम्यत इति ? वितण्डा वितण्डेत्येव वक्तव्यम्, यया वितण्ड्यते सा

## न्यायवार्त्तिकतात्पर्यटीका

(३) आहन्ति ? न च पक्षः शक्य आहन्तुम्। तस्मात् प्रथमपक्षवादिनोऽस्ति स्थापनेति द्वितीय एव पक्षः स्थापनाहीन इति सामर्थ्याद् युक्तमिति। अत्र चोद्यभाष्यम् अस्तु तर्हीति। स्थापनाया अभावे स्थाप्यः पक्षो नास्ति, न ह्यन्यथा पक्षस्य पक्षत्वमिति भावः। परिहरति—यद्वै खलु तदिति। वैतण्डिकोऽपि हि वादी पारिशेष्यात् मत्पक्षः सेत्स्यतीति बुद्ध्या स्वपक्षमस्थापयन् परपक्षस्थापनामाहन्ति, तस्मात् परपक्षप्रतिषेधलक्षणं वाक्यम् अस्य पक्षः परपक्षनिषेधेन पारिशेष्यात् पक्षसिद्धिहेतुत्वादुपचारतः। तस्मादस्ति वैतण्डिकस्य पक्षः, न तु परपक्षप्रतिषेधादन्या स्थापना; तेनास्य पक्षोऽस्ति नास्ति तु पक्षस्थापना। तदिदमुक्तम्—न कञ्चिदर्थं प्रतिज्ञाय स्थापयतीति। पक्षत्वं तु तद्योग्यतामात्रेण न तु स्थाप्यमानतयेति।

अस्तु तर्हीति भाष्यार्थमाह वार्त्तिककारः अपरे त्विति। तस्मात् प्रतिपक्षहीनो वितण्डेति वक्तव्यमित्यर्थः। परिहरति—अयुक्तं चैतदिति। न तावदस्थाप्यमानस्यापि स्थापनार्हतालक्षणा पक्षता न युज्यते, तस्मान्न वैतण्डिको दूषणादन्यत् किञ्चिदभ्युपगच्छतीति, (क) अनभ्युपगमात् पक्षोऽस्य नास्तीति वक्तव्यम्। तथा च चतुर्वर्गाभ्युपगमे विरोधोऽनभ्युपगमे वा नायं लौकिको न परीक्षक इति प्रसङ्ग इति भावः। (ख) प्रतिपादयितुरयथार्थावबोधं प्रतिपत्तारं

## वृत्तिः

( वृ० ) वितण्डां क्रमप्राप्तां लक्षयति—( स प्रतिपक्षेति )।

---

(१) "न" इत्यत्र "तन्" इति वि। (२) 'युक्तञ्चैतत् चतुर्थस्याभ्युपगमात्' इति ख। (३) अत्र "आहेति" इति क-पुस्तके पाठः।

(क) अनभ्युपगमादिति पञ्चम्यापीत्यध्याहृतेनान्वयः। वक्तव्यमित्यत्र न वक्तव्यमिति वा पाठः। (ख) अत्र 'प्रतिपादयितु'रिति दर्शनेन वार्त्तिके 'प्रतिपादयितार'मित्यत्र 'प्रतिपादयितु'रिति पाठः टीकाकृत्सम्मत इति प्रतीयते। तथा च चतुर्वर्गः स्पष्टः। वार्त्तिके प्रतिपादयितारमित्यस्य सम्यक्त्वे दूषणं विहाय प्रकारान्तरेण वा चतुर्वर्ग उपपादनीयः।

न्यायभाष्यम्

(भा०) हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः। त इमे—

## (सू०)—सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसम-कालातीता हेत्वाभासाः ॥ ४ ॥

न्यायवार्त्तिकम्

वितण्डेत्यनुगतार्थया सञ्ज्ञयैव परप्रतिपत्तिविघातः क्रियत इति। तस्मात् यथान्यासमेवास्तु न्याय्यम् ॥३॥

हेतुलक्षणाभावादहेतवो हेतुसामान्याद्धेतुवदाभासमानाः, त इमे—

सव्यभिचार-विरुद्ध-प्रकरणसम-साध्यसमातीतकाला(क) हेत्वाभासाः। किं पुनर्हेतुभिरहेतूनां सामान्यं येन हेतुवदाभासन्त इति? प्रतिज्ञानन्तरं प्रयोगः सामान्यम्—यथैव हेतवः प्रतिज्ञानन्तरं प्रयुज्यन्ते एवं हेत्वाभासा अपीत्येव सामान्यम्। अन्यतमलिङ्गधर्मानु-

न्यायवार्त्तिकतात्पर्यटीका

चाऽऽत्मानमित्यर्थः। यस्तु मन्यते चतुर्वर्गाभ्युपगमेऽपि दूषणमात्रं वितण्डेत्येव वक्तव्यं लाघवायेति, तन्मतमुपन्यस्यातिप्रसङ्गापादनेन दूषयति—दूषणमात्रेति। समाख्यानिर्वचनसामर्थ्यादेव गम्यत इत्यर्थः। उपसंहरति—तस्मादिति। तदनेनार्थतो यद्वै खल्वित्यादि भाष्यं व्याख्यातम् ॥ ३ ॥

उद्देशक्रमानुरोधेन वितण्डानन्तरं हेत्वाभासेषु लक्षयितव्येष्वर्थाक्षिप्तसामान्यलक्षणमेषां विभागोद्देशपरं सूत्रम्—

सव्य० साः (सू० ४)। तद्व्याख्यानपरं भाष्यं समाख्यानिरुक्तिवशेन सामान्यलक्षण-प्रतिपादकं वार्त्तिककारः पठति—हेतुलक्षणाभावादिति। पृच्छति—किं पुनरिति। न ह्यन्यस्यान्यत्वमात्रेण साधर्म्यम्, मा भूत्सर्वस्य सर्वसाधर्म्यमिति भावः। उत्तरं—प्रतिज्ञेति।

वृत्तिः

यद्यपि तच्छब्देन जल्पो न परामष्टुं शक्यते, जल्पस्य स्थापनाद्वयवतः प्रतिपक्ष-स्थापनाहीनत्वस्य विरुद्धत्वात्, तथाऽपि स्थापनाद्वयवत्त्वं विहाय जल्पैकदेशः परामृश्यते। प्रतिपक्षः द्वितीयपक्षः तथा च प्रतिपक्षस्थापनाहीना विजिगीषुकथा वितण्डेति। न च स्वस्य स्थापनीयाभावात् कथमियं कथा प्रवर्ततामिति वाच्यम्, परपक्षखण्डनेन जयस्यैवोद्देश्यत्वात्।

परे तु परपक्षखण्डनेनैव स्वपक्षस्यार्थादेव सिद्धेस्तत्साधनाभावेऽपि न प्रवृत्त्यनुपपत्तिरिति वदन्ति ॥ ३ ॥

समाप्तं कथाप्रकरणम्।

(क) "अतीतकाला" इत्यत्र 'कालातीता' इति सूत्रपाठः।

## न्यायवार्त्तिकम्

विधानं वा—यद्वा यत्साधनस्य लिङ्गस्य त्रैविध्यं तदेकतमधर्मानुविधानम्, द्विलक्षणस्यान्यतरधर्मानुविधानं वा विवक्षितम्। साधकासाधकत्वे तु विशेषः, हेतोः साधकत्वं धर्मः, असाधकत्वं हेत्वाभासस्य। किं पुनस्तत्? समस्तलक्षणोपपत्तिरसमस्तलक्षणोपपत्तिश्च। कः पुनरस्य सूत्रस्यार्थः? विभागोद्देशो नियमार्थ इत्युक्तम् (क)। किं पुनर्विभागोद्देशेन नियन्तव्यम्? अनेकधा प्रसृतस्य हेतुहेत्वाभासस्य विस्तरः सङ्क्षेप्तव्य इति।

कियता पुनर्भेदेनायं हेतुहेत्वाभासः प्रसृत इति? काल-पुरुष-वस्तुभेदानुविधानेनापरिसंख्येयः, सामान्यतः साध्यवस्तूपग्रहेण हेतुहेत्वाभासभेदः प्रपञ्च्यमानः षट्सप्ततिशतम्। तत्र साध्यव्यापकधर्मभेदः षोडशधा। साध्यैकदेशवृत्तिधर्मोऽप्येवम्। एवं साध्यावृत्तिधर्मभेद इति। विशेषणविशेष्यासिद्धिभेदाच्चतुःषष्टिः। एवं समर्थासमर्थविशेषणविशेष्यभेदादिति।

तत्र साध्यव्यापकधर्मभेदानां षोडशानामुदाहरणानि। तत्र—

१। साध्यतज्जातीयान्यव्यापकः—प्रमेयत्वान्नित्योऽनित्यो वेति।

२। साध्यतज्जातीयव्यापको विपक्षैकदेशवृत्तिः—गौरयं विषाणित्वात्।

३। साध्यतज्जातीयव्यापको विपक्षावृत्तिः—अनित्यः शब्द उत्पत्तिधर्मकत्वात्।

४। साध्यव्यापकस्तज्जातीयावृत्तिर्विपक्षव्यापकः—नित्यः शब्द उत्पत्तिधर्मकत्वात्।

५। साध्यव्यापकस्तज्जातीयावृत्तिर्विपक्षैकदेशवृत्तिः—नित्यः शब्दः सामान्यविशेषवत्त्वे सत्यस्मदादिबाह्यकरणप्रत्यक्षत्वाद् द्व्यणुकवत्।

## न्यायवार्त्तिकतात्पर्यटीका

प्रयोगगतं सामान्यमुक्त्वा प्रयोज्यगतमाह—अन्यतमेति। अबाधितविषयत्वासत्प्रतिपक्षितत्वे सती अप्यविवक्षित्वा त्रैलक्षण्यद्वैलक्षण्याभिधानं द्रष्टव्यम्। शेषमतिरोहितम्।

षट्सप्ततं शतं गणयति—तत्र साध्यव्यापकेति। एतस्यां त्रिषोडश्यां साध्यव्यापकसाध्यैकदेशवृत्तिधर्मभेदात् षोडशीद्वयं विशेषणविशेष्यासिद्धिभेदाच्चतुःषष्टिः। एवं समर्थासमर्थविशेषणभेदाच्चतुःषष्टिः। तदेतच्चतुःषष्टिद्वयमष्टाविंशतिकं शतं पूर्वया त्रिषोडश्या सह षट्सप्ततं शतम्। साध्यव्यापकानां धर्मविशेषाणामुदाहरणान्याह—तत्रेति। विपक्षव्याप्त्यव्याप्तिभ्यां प्रथमद्वितीयौ साधारणौ, तृतीयोऽन्वयव्यतिरेकी साध्यतज्जातीयव्यापको हेतुरेव। विपक्षव्याप्त्यव्याप्तिभ्यां

## वृत्तिः

(वृ०)— क्रमप्राप्तान् हेत्वाभासान् लक्षयति विभजते च—(सव्यभिचारेति)। न चात्र लक्षणं न प्रतीयत इति वाच्यम्, हेत्वाभासशब्दस्य हेतुवदाभास-

(क) उक्तमिदं ८६ पृष्ठस्थवार्त्तिकस्य द्वितीयपंक्तौ।

## न्यायवार्त्तिकम्

६। साध्यव्यापकस्तज्जातीयविपक्षावृत्ति (क) यथा—नित्यः शब्दः सामान्यविशेषवत्त्वे सति श्रावणत्वात् घटादिवत्।

७। साध्यव्यापकस्तज्जातीयैकदेशवृत्तिर्विपक्षव्यापकश्च—अगौरयं विपाणित्वात्।

८। साध्यव्यापकस्तज्जातीयविपक्षैकदेशवृत्तिः—नित्यः शब्दोऽस्पर्शवत्त्वात्।

९। साध्यव्यापकस्तज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः—अनित्यः शब्दः सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात्। सामान्यविशेषवत इति सामान्यविशेषसमवायानां निराकरणम्, अस्मदादिप्रत्यक्षत्वादिति परमाणूनाम्, बाह्यकरणप्रत्यक्षत्वादित्यात्मनः।

१०। साध्यतज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदेनैकान्तवादिनः—अनित्यः शब्द उत्पत्तिधर्मकत्वात्।

११। साध्यव्यापकस्तज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः—अनित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वात्।

१२। साध्यव्यापकस्तज्जातीयावृत्तिरविद्यमानविपक्षः—अनित्यः शब्दः श्रावणत्वात्।

१३। साध्यव्यापकोऽविद्यमानसजातीयो विपक्षव्यापकः—नित्यः शब्द उत्पत्तिधर्मकत्वात्।

१४। साध्यव्यापकोऽविद्यमानसजातीयो विपक्षैकदेशवृत्तिः—नित्यः शब्दो बाह्येन्द्रियप्रत्यक्षत्वात्।

१५। साध्यव्यापकोऽविद्यमानसजातीयो विपक्षावृत्तिः—नेदं निरात्मकं जीवच्छरीरम् (१) अनिन्द्रियाधिष्ठानत्वप्रसङ्गात्।

१६। पक्षव्यापकोऽविद्यमानसपक्षविपक्षः—सर्वं नित्यं प्रमेयत्वात्।

त एते पक्षव्यापकाः षोडश। एषां पञ्च हेतवः, शेषा हेत्वाभासाः, तत्रान्वयव्यतिरेकिणौ द्वौ विपक्षावृत्ती तृतीयनवमौ, एकान्तवादिनोऽन्वयिनावेव दशमैकादशौ, व्यतिरेकी पञ्चदश इति।

## न्यायवार्त्तिकतात्पर्यटीका

चतुर्थपञ्चमौ विरुद्धौ हेत्वाभासौ। यत्र विपक्षे न वृत्तिस्तं दर्शयति—द्व्यणुकवदिति। (ख) षष्ठोऽविद्यमानसपक्षविपक्षोऽसाधारणः, अत एव घटादिवदिति। सप्तमाष्टमावसपक्षव्याप्त्यव्याप्तिभ्यां साधारणौ। नवमः सपक्षैकदेशवृत्तिरन्वयव्यतिरेकी हेतुरेव। दशमैकादशौ सपक्षव्याप्त्यव्याप्तिभ्यामन्वयिनौ हेतू। द्वादशस्तु अविद्यमानविपक्षोऽसाधारणः। त्रयोदशचतुर्दशौ त्वविद्यमानसपक्षौ विपक्षव्याप्त्यव्याप्तिभ्यां विरुद्धौ। पञ्चदशोऽपि व्यतिरेकी हेतुरेव। षोडशस्तु अविद्यमानविपक्षोऽसाधारणः।

---

(१) 'अनिन्द्रियाधिष्ठानकत्वप्रसङ्गात्' क।

(क) तज्जातीयश्च विपक्षश्चेति द्वन्द्वः, तत्रावृत्तिरित्यर्थः। (ख) अत्र "षष्ठोऽविद्यमानः सपक्षविपक्षयोरसाधारणः" इति युक्तः पाठः।

## न्यायवार्त्तिकम्

अथ साध्यैकदेशवृत्तयः—

१। साध्यैकदेशवृत्तिस्तज्जातीयविपक्षव्यापकः——पृथिव्यप्तेजोवाय्वाकाशानि अनित्यानि अगन्धवत्त्वादिति।

२। साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षैकदेशवृत्तिश्च—सामान्यविशेषवदस्मदादि-बाह्यकरणप्रत्यक्षे वाङ्मनसे अनित्यत्वात्।

३। साध्यैकदेशवृत्तिस्तज्जातीयव्यापको विपक्षावृत्तिः—अनित्ये वाङ्मनसे उत्पत्तिधर्म-कत्वात्।

४। साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिर्विपक्षव्यापकः—नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्।

५। साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिर्विपक्षैकदेशवृत्तिः—सामान्यविशेषवदस्मदादिबाह्यकरण-प्रत्यक्षे वाङ्मनसे नित्यत्वात्।

६। साध्यैकदेशवृत्तिस्तज्जातीयविपक्षावृत्तिः—अनित्यः शब्दो विभागजविभागासमवायि-कारणकत्वात्।

७। साध्यतज्जातीयैकदेशवृत्तिर्विपक्षव्यापकः—अनित्याः परमाणवोऽगन्धवत्त्वात्।

८। साध्यतज्जातीयविपक्षैकदेशवृत्तिः—अनित्ये वाङ्मनसे मूर्त्तत्वात्।

९। साध्यतज्जातीयैकदेशवृत्तिर्विपक्षावृत्तिः—अनित्ये वाङ्मनसे सामान्यवतोऽस्मदादि-बाह्यकरणप्रत्यक्षत्वात्।

१०। साध्यैकदेशवृत्तिस्तज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदाश्रयेण—अनित्ये रूपविज्ञाने अमूर्त्तत्वात् वेदनादिवत् (१)।

११। (२) साध्यतज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः—अनित्ये चक्षुर्विज्ञाने (३) अमूर्त्त-त्वात् रूपादिवदिति।

## न्यायवार्त्तिकतात्पर्यटीका

यदि बाह्यकरणप्रत्यक्षे वाङ्मनसे इति साध्येत तदा नानित्यत्वं सपक्षव्यापकं स्यात्, सामान्ये बाह्यकरणप्रत्यक्षेऽभावात्, अतः साध्यधर्मं विशिनष्टि सामान्यविशेषवदिति। अनित्ये रूप-विज्ञाने अमूर्त्तत्वादिति, रूपविज्ञानस्कन्धातिरिक्तानां वेदनासंज्ञासंस्कारस्कन्धानामनित्यतया सपक्षाणां व्यापकममूर्त्तत्वमिति। तज्जातीयैकदेशवृत्तित्वममूर्त्तत्वस्य दर्शयितुं यत्र न वर्त्तते तत्पुरःसरमुदाहरणं रूपादिवदिति।

## वृत्तिः

मानार्थकत्वेनैव तत्सूचनात्। सूचनाद्धि सूत्रम्, तथा हि पक्षसत्त्व-सपक्षसत्त्व-विपक्षासत्त्वा-बाधितत्वासत्प्रतिपक्षितत्वोपपन्नो हेतुर्गमकः, तद्वदाभासत इत्यत्र वत्यर्थः (४) तद्भिन्नत्वम्,

(१) अतःपरं क-पुस्तके (साध्यतज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः—अनित्ये शब्दमनसी श्रावणत्वात् १०।) इत्येवम् अधिकं मुद्रितम्। (२) 'साध्यैकदेशवृत्तिरविद्यमानसजातिः' इति प्रामादिकः पाठः। (३) 'मूर्त्तत्वात्' इति क। (४) 'तद्भिन्नत्वे सति तद्धर्मवत्त्वम्' इति आ-व०।

## न्यायवार्त्तिकम्

१२। साध्यैकदेशवृत्तिस्तज्जातीयावृत्तिरविद्यमानविपक्षः—अनित्ये (१)शब्दनभसी श्रावणत्वात्।

१३। साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षव्यापकः—(२)नित्ये वाङ्मनसे उत्पत्तिधर्मकत्वात्।

१४। साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षैकदेशवृत्तिश्च—(३)नित्ये चक्षुर्विज्ञाने मूर्तत्वात्।

१५। साध्यैकदेशवृत्तिरविद्यमानसजातिर्विपक्षावृत्तिश्च—नेदं निरात्मकं शरीरमनिन्द्रियाधिष्ठानत्वप्रसङ्गात्।

१६। साध्यैकदेशवृत्तिरविद्यमानसपक्षविपक्षः—सर्वमनित्यं मूर्तत्वादिति।

एते च साध्यैकदेशवृत्तयः षोडश यथोक्ताः सर्वे हेत्वाभासाः।

अथ साध्यावृत्तयः—

१। साध्यावृत्तिस्तज्जातीयविपक्षव्यापकः—अनित्या पृथिवी अगन्धवत्त्वात्।

२। साध्यावृत्तिस्त[ज्जा]तीयव्यापको विपक्षैकदेशवृत्तिश्च—अनित्यः शब्दोऽश्रावणत्वात्।

३। साध्यावृत्तिस्तज्जात[ीय]व्यापको विपक्षावृत्तिः—अर्थः शब्दः अश्रोत्रग्राह्यसामान्यवत्त्वात्।

४। साध्यतज्जातीयावृत्ति विपक्षव्यापकः—अर्थः शब्दः असामान्यवत्त्वात्।

५। साध्यतज्जातीयावृत्ति(४)र्विपक्षवृत्तिश्च—कारणवान् शब्दोऽनर्थत्वात्।

६। साध्यतज्जातीयविपक्षावृत्तिः—नित्यः शब्दोऽसत्त्वात्।

७। साध्यावृत्तिस्तज्जातीयैकदेशवृत्ति विपक्षव्यापकः—अस्पर्शः शब्दो द्रव्यत्वात्।

८। साध्यावृत्तिस्तज्जातीयविपक्षैकदेशवृत्तिः—कारणवान् शब्दो मूर्तत्वात्।

९। साध्यावृत्तिस्तज्जातीयैकदेशवृत्ति विपक्षावृत्तिः—आश्रयवान् शब्दश्चाक्षुषत्वात्, औलूक्यपक्षे।

## न्यायवार्त्तिकतात्पर्यटीका

अनित्यः शब्दोऽश्रावणत्वादिति नित्ये शब्दत्वे न वर्तते। अर्थः शब्द इति, शब्दो धर्मी, अर्थ इति साध्यो धर्मः, द्रव्यगुणकर्मणामन्यतम इत्यर्थः। यद्यश्रोत्रग्राह्यत्वादित्युच्येत ततः सामान्यादिष्वनर्थेषु विपक्षेष्वपि वर्तेत, अत उक्तम् अश्रोत्रग्राह्यसामान्यवत्त्वादिति, अश्रोत्रग्राह्यं च तत् सामान्यवच्चेति विग्रहः। ननु चाक्षुषत्वं न [वि]पक्षावृत्ति समवायस्यानाश्रितस्य चाक्षुषत्वादत

## वृत्तिः

तथा च पञ्चरूपोपपन्नत्वाभावे सति तद्रूपेण भासमान इति फलितार्थः। तत्र च लक्षणं

(१) 'शब्दमनसी' इति ख। (२) 'अनित्ये' इति ख। (३) 'नित्ये' इत्यत्र 'अनित्ये' इति क। (४) 'विपक्षावृत्तिश्च' इति ख।

## न्यायवार्त्तिकम्

१०। साध्यावृत्तिस्तज्जातीयव्यापकोऽविद्यमानविपक्षः सिद्धान्तभेदाश्रयेण—अनित्यः शब्दोऽश्रावणत्वात्।

११। साध्यावृत्तिस्तज्जातीयैकदेशवृत्तिरविद्यमानविपक्षः—अनित्यः शब्दो मूर्त्तत्वात्।

१२। साध्यतज्जातीयावृत्तिरविद्यमानविपक्षः—अनित्यः शब्दोऽसत्त्वात्।

१३। साध्यावृत्तिरविद्यमानसजातिर्विपक्षव्यापकः—नित्यः शब्दोऽश्रावणत्वात्।

१४। साध्यावृत्तिरविद्यमानसजातिर्विपक्षैकदेशवृत्तिः—नित्यः शब्दो मूर्त्तत्वात्।

१५। साध्यावृत्तिरविद्यमानसजातिर्विपक्षावृत्तिः—नित्यः शब्दोऽसत्त्वात्।

१६। (१) साध्यावृत्तिरविद्यमानसजातिविपक्षः—अनित्यं सर्वमसत्त्वात्।

त एते षोडश साध्यावृत्तयो हेत्वाभासाः। विशेषणविशेष्यासिद्धिभेदाच्चतुःषष्टिर्भवन्तीत्युक्तम्, तत्कथम्? व्यापकाव्यापकविशेषणयोगात्—य एव साध्यव्यापकाः षोडश ये च पक्षैकदेशवृत्तयस्ते विशेषणविशेष्यासिद्धिभेदेन चतुःषष्टिर्भवन्तीति।

तत्र व्यापकानां तावदुदाहरणानि—अनित्यः शब्दोऽनभिधेयत्वे सति प्रमेयत्वात्, विशेषणासिद्धः। प्रमेयत्वे सत्यनभिधेयत्वादिति विशेष्यासिद्धः। एवं सर्वेषु साध्यव्यापकेषु विशेषणविशेष्यासिद्धभेदो द्रष्टव्यः, तान्येव चोदाहरणानि। साध्यैकदेशवृत्तीनां तूदाहरणम्—पृथिव्यप्तेजोवाय्वाकाशान्यनित्यानि अनभिधेयत्वे सति अगन्धवत्त्वात्, विशेषणासिद्धः। अगन्धवत्त्वे सत्यनभिधेयत्वादिति विशेष्यासिद्धः। एवं सर्वेषु साध्यैकदेशवृत्तिषु। एवमसमर्थविशेषणासमर्थविशेष्याश्चतुःषष्टिरेव द्रष्टव्याः। यथा—अनित्यः शब्दः कृतकत्वे सति प्रमेयत्वात् प्रमेयत्वे सति कृतकत्वादिति। एवं शेषेषूदाहरणेषु। एवं सन्दिग्धविशेषणविशेष्यभेदा अपि द्रष्टव्याः। यथा

## न्यायवार्त्तिकतात्पर्यटीका

उक्तम् औलूक्यपक्षे इति। सिद्धान्तभेद इति, सौत्रान्तिकानामित्यर्थः। असमर्थविशेष्यस्योदाहरणं—कृतकत्वे सति प्रमेयत्वादिति। असमर्थविशेषणस्योदाहरणं—प्रमेयत्वे सति कृतकत्वादिति। निरपेक्षं खलु कृतकत्वमनित्यत्वे साध्ये समर्थम्, प्रमेयत्वं त्वन्यापेक्षमसमर्थमित्यर्थः। तदेवं त्रिषोडश्या प्रकृत्याऽष्टचत्वारिंशद्भवन्ति हेत्वाभासाः, व्यापकाव्यापकभेदेन तु

## वृत्तिः

सत्यन्तम्, तस्यैव दूषकतायामुपयोगात्। न चासाधकतायां पक्षसत्त्वाद्येकैकाभावस्यैव गमकत्वसम्भवेऽधिकवैयर्थ्यम्, एतेन (२) पञ्चान्यतमत्वं लक्षणमित्यपि प्रत्युक्तमिति वाच्यम्, (३) पञ्चान्यतमत्वावच्छिन्नाभावस्य पक्षसत्त्वाभावाद्यघटितत्वेन वैयर्थ्याभावात्।

---

(१) 'साध्यावृत्तिरविद्यमानसमानविपक्षः' इत्यादर्शपुस्तकयोः पाठः। (२) 'पञ्चान्यत्वम्' इति आ०व०। (३) 'पञ्चत्वावच्छिन्नाभावस्य' इति आ-व०।

## न्यायवार्त्तिकम्

मयूरशब्दोऽयं षड्जादिमत्त्वे सति अवर्णात्मकत्वात्, अवर्णात्मकत्वे सति षड्जादिमत्त्वात्। त एते उभयपक्षसम्प्रतिपन्ना विद्यमानसाध्यधर्मा उदाहृता इति। एवमन्यतरासिद्धा इति व्यापकाव्यापकभेदेन द्वात्रिंशकं शतम्। ते च पुनर्व्यधिकरणसन्दिग्धासमर्थविशेषणविशेष्यभेदेन द्वानवतं शतम्। एवमप्रसिद्धाश्रयोभयान्यतरपक्षाप्रसिद्ध्या द्वात्रिंशकं शतम्, ते च पुनः पूर्ववदेव द्वानवतं शतम्, यथाऽग्निमान् देशो धूमवत्त्वात्, अस्ति चाऽऽत्मा इच्छादिगुणत्वात्। असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम्—अनित्यः शब्दः प्रयत्नानन्तरीयकत्वे सति कृतकत्वात्।

## न्यायवार्त्तिकतात्पर्यटीका

द्विषोडशी यदा विशेषणविशेष्यासिद्ध्या चोभयसम्प्रतिपन्नयाऽसमर्थविशेषणविशेष्यतया च उभयसम्प्रतिपन्नया संदिग्धविशेषणविशेष्यतया च उभयसम्प्रतिपन्नया विक्रियते तदा चतुःषष्टित्रयेण द्वानवतं शतं भवति। वाद्यसिद्धप्रतिवाद्यसिद्धतया उभयान्यतरसंदिग्धतया च चतुःषष्टिद्वयेनाष्टाविंशकं शतमपरम्। तदिदम् अन्यतरासिद्धा इत्यनेन वार्तिककृता सूचितम्, द्वाभ्यामूना त्रिंशद् द्वात्रिंशदिति कथंचिद्व्युत्पत्त्या। ते पुन(१)र्व्यापकाव्यापका व्यधिकरण-विशेषणविशेष्य-व्यधिकरणसंदिग्धविशेषणविशेष्य-व्यधिकरणासमर्थविशेषणविशेष्यभेदेन चतुःषष्टि-त्रयेण द्वानवतं शतमपरम्। एवमप्रसिद्धाश्रयविशेषण(२)विशेष्या उभयान्यतरपक्षाप्रसिद्ध्याऽष्टा-विंशकं शतम्। अत्रापि द्वात्रिंशकमिति पूर्ववद् व्याख्येयम्। अन्यतरमात्रमत्र विवक्षितं न तु वादि-प्रतिवादिभेदः। ते पुनरसिद्धाश्रयाः पूर्ववद्भेदेन व्यधिकरणविशेषणविशेष्य-संदिग्धविशेषणविशेष्या-समर्थविशेषणविशेष्यभेदेन चतुःषष्टित्रये सति द्वानवतं शतम्। तदेवमनन्तराभ्यां द्वानवतशताभ्यां शतत्रयं चतुरशीतं यत्तदेवाष्टाचत्वारिंशकशताभ्यां द्वानवतेन शतेन संपिण्डितं द्वात्रिंशदुत्तराष्टशती विकारभूता भवति, अष्टाचत्वारिंशत् प्रकृतयः पश्चान्निवेशनीया इति। उभयाप्रसिद्धाश्रयविशेष्य-मुदाहरति—यथाऽग्निमान् देशो धूमवत्त्वात्। उक्तं हि प्राग् यथा न देशोऽग्निमत्तया साध्योऽपि तु धूमविशेष एवेति। अन्यतरप्रसिद्धाश्रयोदाहरणमाह—अस्ति चाऽऽत्मा इच्छादिगुणत्वादिति। आश्रयासिद्धविशेषणादयोऽप्यूहनीयाः। असमर्थाव्यापकासिद्धविशेषणानामुदाहरणम्। असमर्थाश्च तेऽव्यापकाश्च व्यधिकरणतयाऽसिद्धाश्चेति विग्रहः। अनित्यः शब्दः प्रयत्ना-नन्तरीयकत्वे सति कृतकत्वादिति, कृतकत्वस्यैव विशेष्यस्य सामर्थ्यादसमर्थमनित्यत्वे प्रयत्नानन्तरीयकत्वम्, अव्यापकं च स्तनयित्नुशब्दानामव्यापकत्वाद्, व्यधिकरणतयाऽसिद्धं

## वृत्तिः

वस्तुतस्तु पृथिवीतरेभ्यो भिद्यते स्पर्शवत्त्वात्प्रमेयमाकाशादित्यादौ सपक्षाद्यप्रसिद्धेर्न तस्य लक्षणत्वे तात्पर्यम्। परन्तु विपक्षासत्त्वसपक्षसत्त्वाभ्यामव्यभिचरितसामानाधिकरण्यं

(१) '-व्यापकव्यधि-' क। (२) '-विशेष्यते। उभया-' क।

## न्यायवार्त्तिकम्

अव्यापकासमर्थविशेष्याणामुदाहरणम्—अनित्यः शब्दः (१) प्रत्ययभेदभेदित्वेनोपलभ्यमानत्वात्। व्यधिकरणविशेष्याणामुदाहरणम्—अस्ति प्रधानं भेदानामन्वयदर्शनात्। व्यधिकरणविशेषणानामुदाहरणम्—रूपादिशब्दाश्चन्दनशब्दादत्यन्ताभिन्नार्थाः समुदायसमुदाय्यसम्भवे सति तेन व्यपदेशात्। एतदेव व्यधिकरणविशेषणविशेष्यस्योदाहरणं विपर्ययेण।

(२) अन्यथासिद्धोदाहरणम्—अन्येषामभ्यासान्नित्यः शब्दः। सन्दिग्धाप्रसिद्धविशेषणाना-

## न्यायवार्त्तिकतात्पर्यटीका

च कोष्ठवायुताल्वादिक्रियाया एव प्रयत्नानन्तरीयकत्वं न त्वाद्यस्यापि शब्दस्य प्रागेव तु श्रोत्रसमवायिन इति। कृतकत्वे सति प्रयत्नानन्तरीयकत्वादिति चासमर्थाव्यापकासिद्धविशेष्याणामुदाहरणं द्रष्टव्यम्। वैभवेन त्वसिद्धतावर्जमुदाहरति— अव्यापकासमर्थविशेष्याणामुदाहरणम् अनित्यः शब्दः प्रत्ययभेदभेदित्वेनोपलभ्यमानत्वाद्। उपलभ्यमानत्वं नित्येऽप्यस्तीति व्यभिचारादसमर्थम्। कारणभेदभेदित्वमेव तु विशेषणं समर्थमव्यभिचारादिति। केवलव्यधिकरणविशेष्याणामुदाहरणम् अस्ति प्रधानं (क)भेदानां गोघटादीनां सुखदुःखमोहात्मकत्वेनान्वयदर्शनादिति। अन्वयदर्शनं भेदाधिकरणतया न प्रधानाधिकरणमिति, व्यधिकरणमिति व्यधिकरणं विशेष्यम्। केवल-व्यधिकरणविशेषणानामुदाहरणम्—रूपरसगन्धस्पर्शशब्दाश्चन्दनशब्दादत्यन्तं भिन्नार्थाः, समुदाय(३)समुदाय्यसम्भवे सति रूपादीनामर्थानां रूपादिशब्दानां च तेन चन्दनशब्देन व्यपदिश्यमानत्वात्। चन्दनस्य रूपादय इति समुदायसमुदाय्यसंभवो रूपादिषु व्यपदेशश्च रूपादिशब्देष्विति व्यधिकरणं विशेषणमित्यर्थः। तदनेन प्रपञ्चेन द्वात्रिंशदुत्तराऽष्टशती दर्शिता।

संप्रति द्वानवतशतयुग्मान्तरं दर्शयितुमुदाहरणमाह—अन्यथासिद्धोदाहरणं (ख) नित्यः शब्दोऽभ्यासात्। सेयं क्रियाऽभ्यावृत्तिर्यथा शब्दानित्यत्वेऽप्युपपद्यते तथा द्वितीये दर्शयिष्यते। सिंहावलोकितन्यायेन व्यधिकरणविशेष्यं संदिग्धविषेषणमुदाहरति—संदिग्धाप्रसिद्धेति। विशेषणशब्दः तन्त्रेण विशेषणे विशेष्ये च कर्मकरणसाधनतया प्रयुक्तो वर्तते

## वृत्तिः

फलितार्थः। (४)पक्षसत्त्वसहितस्य चैतस्य विरोधित्वं त्रिभिर्लब्धम्, तेन व्याप्तिविशिष्टपक्षधर्मताविरोधित्वम्, चरमयोस्त्वनुमितिविरोधिरूपानवच्छिन्नत्वार्थकयोरभावादनुमितिविरोधित्वम्, तेनानुमितितत्कारणज्ञानान्यतरविरोधित्वं पर्यवस्यति ॥ ४ ॥

---

(१) "प्रत्ययभेदभेदित्वे सत्युपलभ्यमानत्वात्" इत्यादर्शपुस्तकपाठः। (२) 'अन्यथाविरुद्धोदाहरणम्' इति ख। (३) '-समुदाय्यसद्भावे' इत्यादर्शपुस्तकपाठः। (४) "पक्षसहितस्य" इति ख।

(क) आदर्शपुस्तकयोः भेदादीनामिति पाठः। (ख) वार्त्तिके तु—"अन्येषामभ्यासान्नित्यः शब्दः" इत्येवं पाठः।

## न्यायवार्त्तिकम्

मुदाहरणम् यथा सन्दिह्यमान(१)धूमादिभावेऽग्निमान् देशो धूमवत्त्वे सति प्रकाशकत्वात्। विपर्ययेण सन्दिग्धविशेष्या वक्तव्याः। एवं सन्दिग्धाप्रसिद्धाप्रसिद्धा उभयान्यतरासिद्धा व्यापका-व्यापकभेदेन चतुःषष्टिर्भवन्तीति। ते च पुनः पूर्ववद्भेदेन शतत्रयं चतुरशीतम्। एवमन्यथा-सिद्धभेदो द्रष्टव्यः। एवं विरुद्धविशेषणविरुद्धविशेष्याश्च सर्वत्र द्रष्टव्या इति। एषां तूदाहरणानि हेत्वाभासवार्त्तिके द्रष्टव्यानि स्वयं चाभ्यूह्यानि। (२)त एते हेतवो हेत्वाभासाश्चासङ्कीर्णविशेषण-विशेष्यभेदेन द्वे सहस्रे द्वात्रिंशके। असिद्धादिसमुच्चयेनानन्तो भेद इति। साध्यावृत्तयस्त्वसत्त्वान्न

## न्यायवार्त्तिकतात्पर्यटीका

तेन संदिग्धं विशेषणम् अप्रसिद्धं व्यधिकरणतया विशेष्यं येषां तेषामुदाहरणमित्यर्थः। यथा संदिह्यमानधूमादिभावेऽग्निमान् देशो धूमवत्त्वे सति प्रकाशकत्वात्, धूमवत्त्वं विशेषणं संदिग्धम्, प्रकाशकत्वं च विशेष्यं व्यधिकरणम्, तत् खलु वह्नेर्धर्मो न देशस्येति। अप्रसिद्धविशेषण-संदिग्धविशेष्याणामुदाहरणं दर्शयति—विपर्ययेणेति। अप्रसिद्धेत्यपि द्रष्टव्यम्, अग्निमान् देशः प्रकाशकत्वे सति धूमवत्त्वादिति। संप्रति द्वानवतशतयुग्मान्तरं दर्शयितुं भूमिरचनां करोति एवमिति। ये (क)संदिग्धासिद्धा (३)व्यापकाव्यापकभेदेन द्वात्रिंशत् त एवोभयान्यतरासिद्धा चतुःषष्टिर्भवन्ति। ततः किमित्यत आह—ते चतुःषष्टितामापन्नाः। पूर्ववद्भेदेन व्यधिकरणविशेषण-विशेष्य-संदिग्धविशेषणविशेष्यासमर्थविशेषणविशेष्यभेदेन तावच्चतुःषष्टित्रयमित्येकं द्वानवतं शतम्, अपरं चाश्रयासिद्धव्यधिकरणविशेषणविशेष्य-संदिग्धासमर्थविशेषणविशेष्यभेदेन द्वानवतं शतम्, तदिदं चतुरशीतं शतत्रयं संदिग्धासिद्धमाश्रित्य। अपरमपि द्वानवतशतयुग्मान्तरमन्यथासिद्ध-माश्रित्याऽऽह—एवमन्यथासिद्धभेदो द्रष्टव्यः। अन्यथासिद्धभेदोऽपि हि व्यधिकरणविशेषण-विशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदाच्चतुःषष्टित्रयमिति। पुनश्च स एवान्यथासिद्ध आश्रयासिद्ध-व्यधिकरणविशेषणविशेष्य-संदिग्धासमर्थविशेषणविशेष्यभेदाच्चतुःषष्टित्रयमिति द्वानवतशतयुग्मेन शतत्रयं चतुरशीतम्। अपरमपि द्वानवतशतयुग्ममाह—एवं विरुद्धविशेषणविरुद्धविशेष्याश्चेति। विरुद्धविशेष्या अपि हि व्यधिकरणविशेषणविशेष्यसंदिग्धासमर्थविशेषणविशेष्यभेदाच्चाऽऽश्रया-सिद्धव्यधिकरणविशेषणविशेष्य-संदिग्धासमर्थविशेषणविशेष्यभेदाच्च शतत्रयं चतुरशीतम्। तदेव-मेभिस्त्रिभिश्चतुरशीतैः शतत्रयैर्द्विपञ्चाशच्छतोत्तरं सहस्रमेकम्, द्वात्रिंशदुत्तरयाऽष्टशत्या सहस्रमेकं चतुरशीतिसहिता च नवशती, तदेवं प्रकृतिभूताष्टचत्वारिंशत्प्रक्षेपेण संपिण्डितं (४)द्वात्रिंशे द्वे सहस्रे भवत इति।

---

(१) "धूमादिभावो' इति आदर्शपुस्तकपाठः। (२) "त एतेऽहेतवो" इति ख। (३) "व्यापक-भेदेन" इति क। (४) "द्वे सहस्रे द्वात्रिंशके" इति वार्त्तिके पाठः।

(क) एतेन वार्त्तिके सन्दिग्धाप्रसिद्धाप्रसिद्धा इति पाठः प्रामादिकः सम्भाव्यते।

## न्यायभाष्यम्

तेषाम्—

## न्यायवार्त्तिकम्

विशेषणयोगिन इत्यतो नाभिधीयन्ते। त एते विद्यमानसाध्यव्यापकाव्यापकधर्माः (१)प्रपञ्चत उक्ताः। तत्र मुख्यासिद्धभेदाः षोडश, (क)त एते पक्षावृत्तयः। अनैकान्तिकास्त्वसङ्कीर्णा मुख्यतः षडेव। साध्यव्यापकवर्गे विरुद्धाश्चत्वार एव। तस्मिन् अन्तिमस्तु पक्षमात्रधर्मत्वादनुपसंहार्यैव, शेषा हेत्वाभासाः। (२)तेऽसिद्धानैकान्तिकविरुद्धा अव्यापकासिद्धभेदेन सङ्कीर्णा उदाहरणेषु स्वयमूह्या इति।

केचित्तु विरुद्धाव्यभिचारिणमनैकान्तिकं वर्णयन्ति। तन्न असत्त्वात्—नायमस्तीत्युक्तम्। उपेत्य तस्य पञ्चविंशतिधा भेदं पञ्चानां हेतूनां (३)सरूपासरूपप्रतिबन्धात् पञ्च पञ्चका भवन्तीति। तेषां तु सर्वेषां नोदाहरणानि सन्तीति नोदाह्रियन्ते। त एते हेत्वाभासाः सङ्क्षेपेणैतावता भेदेन भेदवन्तः तेषां संग्रहार्थं हेत्वाभासानां विभागोद्देशार्थं सूत्रम्। लक्षणत एव पञ्चत्वं गम्यत इति चेत्—यान्येतानि पञ्च हेत्वाभासानां लक्षणसूत्राणि तैरेव पञ्चत्वं गम्यत इति नियमार्थं सूत्रमनर्थकम्। नानर्थकं लक्षणस्येतरेतरव्यवच्छेदकत्वात्—व्यवच्छेदकं लक्षणं न पुनर्नियमार्थम्, न हि नियमो लक्षणेन गम्यत इति ॥ ४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तन्न असत्त्वादिति। पञ्चानां चतुर्णां वा रूपाणां संपत्तिरव्यभिचारः स चैकस्मिन् विषये विरुद्धयोर्न सम्भवति, अन्ततोऽसत्प्रतिपक्षस्यैव रूपस्याभावादित्यर्थः। पञ्चानां हेतूनामिति। सपक्षव्याप्त्यव्याप्तिभ्यामन्वयी द्वेधा, व्यतिरेक्येकः, अन्वयव्यतिरेक्यपि सपक्षव्याप्त्यव्याप्तिभ्यां द्वेधेति पञ्च हेतवः, पञ्चानां हेतूनां सरूपासरूपप्रतिबन्धात् पञ्च पञ्चका भवन्ति। सरूपः अन्वयिनोऽन्वयी, व्यतिरेकिणो व्यतिरेकी, अन्वयव्यतिरेकिणोऽन्वयव्यतिरेकी। असरूपश्चान्वय्यादेर्व्यतिरेक्यादिः, तेन प्रतिबन्धः। एतदुक्तं भवति अन्वय्यादावेकैकस्मिन् सरूपासरूपाः पञ्च हेतवः प्रतिबन्धका इति पञ्चभिः पञ्चकैः पञ्चविंशतिर्विरुद्धाव्यभिचारिण इति। चोदयति—लक्षणत एवेति। परिहरति—नानर्थकमिति। यत्परो हि शब्दस्तत्रासौ प्रमाणम्, समानासमानजातीयव्यवच्छेदकं च लक्षणसूत्रमिति तत्रैव प्रमाणम्, न त्वियत्तायाम् अतत्परत्वात्; न चासावार्थी सतोऽप्यनुपयोगाद् अलक्ष्यमाणत्वोपपत्तेः प्रमेयान्तरवदिति ॥ ४ ॥

तदेवमर्थाक्षिप्तसामान्यलक्षणं विभागं दर्शयित्वा विशेषलक्षणमवतारयति भाष्यकारः—तेषां हेत्वाभासानां मध्ये—

---

(१) "प्रपंच उक्ताः" इति ख। (२) "तेऽसिद्धानैकान्तिका विरुद्धाव्यापकंप्रसिद्धाव्यापकमिदेन" इति ख। (३) आदर्शपुस्तकद्वये—"सरूपासरूपप्रतिसन्धानात्" इति पाठः।

(क) क-वार्त्तिके 'ये ( ते )' इत्येवं मुद्रितम्।

## ( सू० )—अनैकान्तिकः सव्यभिचारः ॥ ५ ॥

### न्यायभाष्यम्

व्यभिचार एकत्राव्यवस्थितिः। सह व्यभिचारेण वर्त्तते इति सव्यभि-

### न्यायवार्त्तिकम्

तेषाम् अनैकान्तिकः सव्यभिचारः। एकस्मिन्नन्ते नियत ऐकान्तिकः विपर्ययादनै-कान्तिकः। कः पुनरयं व्यभिचारः ? साध्यतज्जातीयान्यवृत्तित्वम्—यत् खलु साध्यतज्जातीय-वृत्तित्वे सति अन्यत्र वर्तते तद्व्यभिचारि, तद्वृत्तित्वं व्यभिचारः। सर्वोऽयं पदार्थभेदोऽन्तद्वयेऽव-तिष्ठते अन्यत्र प्रमेयात्, नित्यश्चानित्यश्च व्यापकश्चाव्यापकश्च इत्येवमादिः। तत्र यो हेतुरुपात्त उभावन्तावाश्रित्य प्रवर्तते सोऽनैकान्तिकः।

### न्यायवार्त्तिकतात्पर्यटीका

अनै—रः (सू० ५)। अत्र चानैकान्तिकसव्यभिचारशब्दौ पर्यायौ पुरुषभेदापेक्षया लक्ष्य-लक्षणत्वेनावस्थितौ। यस्यानैकान्तिकपदार्थोऽप्रसिद्धः प्रसिद्धश्च सव्यभिचारपदार्थः तं प्रत्यनैकान्त इति लक्ष्यनिर्देशः सव्यभिचार इति लक्षणम्, यस्य तु सव्यभिचारपदार्थोऽप्रसिद्धः प्रसिद्धश्चानैका-न्तिकपदार्थस्तं प्रति सव्यभिचार इति लक्ष्यनिर्देशः, अनैकान्तिक इति लक्षणम्। तत्र सव्यभिचार इति लक्षणपदं कक्षीकृत्याऽऽह भाष्यकारः—व्यभिचार एकत्राव्यवस्थितिः। एतदुक्तं भवति सव्यभिचारपदं निर्वचनसामर्थ्याल्लक्षणपदमिति। अनैकान्तिकपदलक्षणपक्षे भाष्यकारोक्तम्(क) अनित्यत्वमेकोऽन्त इत्यादि। तद्वार्त्तिककारः पर्युदासाभिप्रायेण व्याचष्टे—एकस्मिन्नन्ते नियत ऐकान्तिक इति। न हेतुरैकान्तिको येन तदन्यत्वेन हेत्वाभाससंग्रहादेकजातीयत्वेन हेत्वा-भासानां विभागसूत्रविरोधः स्यात्, किन्त्वेकस्मिन्नन्ते यो नियतः स ऐकान्तिकस्तद्विपर्यया-दनैकान्तिकोऽनियतः, (१)अनित्यत्वे नित्यत्वे चान्वयेन व्यतिरेकेण वोभयपक्षगामीति यावत्। न चैवंभूता विरुद्धादयो हेत्वाभासा इत्यभिप्रायः। तदेवमनैकान्तिकः सव्यभिचार इति स्थिते पृच्छति—कः पुनरिति। उत्तरम्—साध्यतज्जातीयेति। अवगतम् एष व्यभिचार इति, अनैकान्तिकपदवाच्यत्वमस्य कथमित्यत आह—सर्वोऽयमिति। प्रमेयपदार्थस्य तु सर्वव्यापिनो नान्तो व्यतिरेकोऽस्तीत्यत उक्तम् अन्यत्र प्रमेयादिति।

### वृत्तिः

सव्यभिचारं लक्षयति—( अनैकान्तिकेति )।

एकस्य साध्यस्य तदभावस्य (२)वा योऽन्तः सहचारः अव्यभिचरितसहचार(३)

---

(१) 'अनित्यत्वे' इति क-पुस्तके नास्ति। (२) "च" इति ल०। (३) अत्र "सोऽन्तःसहचारो-ऽव्यभिचरितसहचार" इति आ-व-पुस्तकयोरधिकः पाठः।

(क) भाष्ये तु—"अनित्यत्वमप्येकोऽन्तः" इति पाठः।

## न्यायभाष्यम्

चारः। निदर्शनम्—नित्यः शब्दोऽस्पर्शत्वात्, स्पर्शवान् कुम्भोऽनित्यो दृष्टः न च

## न्यायवार्त्तिकम्

अनैकान्तिक इति, किं पुनरयं पर्युदास उत प्रसज्यप्रतिषेध इति? किं चातः? यदि पर्युदासः सर्वानैकान्तिकता—ऐकान्तिकादन्योऽनैकान्तिक इति ब्रुवतां भवतां सर्वोऽनैकान्तिकः प्राप्तः, एवं चैको हेत्वाभास इति प्राप्तम्। अथ प्रसज्यप्रतिषेधः? तथाप्यैकान्तिकाभावोऽनैकान्तिक इति प्राप्तम्—तस्य व्यभिचारोऽर्थो नास्तीति अयुक्तोऽनैकान्तिको हेत्वाभासः। नायं पर्युदासपक्षः किन्तु प्रसज्यप्रतिषेधः। प्रसज्यप्रतिषेधोऽभाव इति चेत् नाभावो धर्मविशेषकत्वात्—धर्मोऽयं विशिष्यते (१)य एकान्ते सन्नियतो धर्म इति न भवति, न पुनरभावः—अभावे विशेषणविशेष्यासम्भवान्नाभाव (२)एकान्तसन्नियतो नानैकान्तिकः सन्नियतः। कथम्? अब्राह्मणवदिति—यथा अब्राह्मणशब्दः प्रसज्यप्रतिषेधविषयत्वेन प्रवर्तमानो यदुत्तरपदं तत्प्रतिषेधतीति न पुनरभावं प्रतिपादयति तथेहापीत्यदोषः।

उदाहरणम्—नित्यः शब्दः अस्पर्शत्वात्, शब्दस्यास्पर्शत्वमिति पञ्चम्या भेदः प्रदर्श्यते।

## न्यायवार्त्तिकतात्पर्यटीका

अत्र बौद्धैर्यद्विकल्प्य दूषणमुक्तं तदुपन्यस्यति—अनैकान्तिक इति। किं पुनरयमिति। ऐकान्तिको हेतुस्ततोऽन्यः सर्व एव हेत्वाभास इत्यर्थः। द्वितीयं पक्षं दूषयति—अथ प्रसज्येति। तथाऽपि हेतोरभावोऽनैकान्तिको न चासौ सव्यभिचारः भावधर्मौ हि व्यभिचाराव्यभिचारौ नाभावे सर्वोपाख्याविरहिणि युज्येते इत्यर्थः। तदेतच्छाक्यदूषणं निराकरोति—नायं पर्युदासपक्ष इति। पर्युदासपक्षस्तावदस्माकमभिमत उपपन्नतरश्च, केवलमयं प्रसज्यप्रतिषेधवल्लभस्तमादाय सर्वं दूषयतीति तमेवाङ्गीकृत्य सर्वत्र ब्रूम इत्याशयवतः समाधानम्, न पुनरब्राह्मणादावपि वार्त्तिककारस्य प्रसज्यप्रतिषेधोऽभिमतः, किन्तु पर्युदास एवेति। अभ्युपेत्य तु तत्रापि प्रसज्यप्रतिषेधाभिधानम्, न हि प्रसज्यप्रतिषेधस्तुच्छोऽपि तु कस्यचिद्वस्तुनोऽभावेन विशिष्टं किञ्चिदेव वस्त्वित्यर्थः।

अत्र भाष्यं—निदर्शनं नित्यः शब्दोऽस्पर्शत्वादिति। वैधर्म्ये दृष्टान्तमाह—स्पर्शवानिति।

## वृत्तिः

इत्याशयः, स चात्र व्याप्तिग्राहकः तथाचैकमात्रव्याप्तिग्राहकसहचारवानैकान्तिकस्तदन्योऽनैकान्तिकः।

---

(१) "य एते" इति ख। (२) "एकान्तः सन्नियतो" इति ख।

## न्यायभाष्यम्

तथा स्पर्शवान् शब्दस्तस्मादस्पर्शत्वान्नित्यः शब्द इति। दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ (१)गृह्येते स्पर्शवांश्चाणुर्नित्यश्चेति। आत्मादौ च

## न्यायवार्त्तिकम्

किं पुनस्तत्? स्पर्शानाश्रयस्य स्वात्मसत्तानुभवोऽस्पर्शत्वम् स्पर्शानाधारस्य सत्तासम्बन्धो वा, उभयं च शब्दव्यतिरिक्तमित्यर्थवती षष्ठी। कुतः पुनरेतत्? तद्भावे भावात् तदभावेऽभावादिति—यत् खलु स्पर्शवत् सत्तामनुभवति न तत्रास्पर्शशब्दः (२)प्रयुज्यत इति यच्चासत् तत्रापि न प्रयुज्यते यदस्पर्शं सत्तानुभावि तत्र प्रयुज्यत इति। वाक्यार्थाभ्यनुज्ञानाच्च पदार्थाभ्यनुज्ञा-स्पर्शानाधारस्य वस्तुनः सत्तासम्बन्ध इति यो वाक्यार्थः स एव(३) अस्पर्शत्वशब्दस्यार्थः। अतिदेशानुपपत्तिरनुक्तत्वादिति चेत्—अनैकान्तिकः सव्यभिचार इति न क्वचिदनैकान्तिक उक्तः इहानैकान्तिकग्रहणात् सव्यभिचारो गम्येत, अतो न युक्तमनैकान्तिकः सव्यभिचार इति। नेद-मयुक्तम्, लोकतस्तदधिगतेः—यत् पुनर्लोकतो न गम्यते तत्र शास्त्रमर्थवत्, यत् पुनर्लोकत एव गम्यते तत्रोपदेशोऽनर्थकः, लोकतश्चैतद्गम्यते उभयान्तसन्नियतोऽनैकान्तिक इति। यदि च यल्लोकतो गम्यते तदनुक्तमिति मन्यसे दुःखादीन्यपि देशयितव्यानि किमिदं दुःखमिति, तस्मात्

## न्यायवार्त्तिकतात्पर्यटीका

अनित्यः कुम्भः स्पर्शवान् दृष्ट इति योजना। वैधर्म्ये व्याप्यव्यापकवैपरीत्यादिति वैधर्म्यव्यभि-चारमाह—दृष्टान्ते स्पर्शवत्त्वमनित्यत्वं च धर्मौ न साध्यसाधनभूतौ गृह्येते। न हि यदनित्यं तत्सर्वं स्पर्शवद् बुद्ध्यादिभिर्व्यभिचारात्। साधर्म्येऽप्येष व्यभिचारो वक्ष्यत इतीह नोक्तम्। ननु च मा भून्नित्यत्वं साध्यम् अस्पर्शत्वमेवास्तु नित्यत्वस्य साध्यमित्यत आह—स्पर्शवांश्चाणुर्नित्यश्चेति। तथाऽपि यदस्पर्शवन्न भवति तन्नित्यमपि न भवतीति वैधर्म्यं व्यभिचरति, स्पर्शवतोऽप्यणोर्नित्यत्वादित्यर्थः। साधर्म्यव्यभिचारमाह—आत्मादौ चेति।

अत्र वार्तिककारोऽस्पर्शवत्त्वस्य हेतोः प्रश्नपूर्वकं स्वरूपं निष्कर्षति—किं पुनस्तत् अस्पर्शत्वं शब्दाद्भिन्नमित्यर्थः। सत्ताविशेषणो वा समवायः, समवायविशेषणा वा सत्ता, अन्वयव्यतिरेकाभ्या-मित्यर्थः। वाक्यार्थे च पदप्रयोगोऽस्पर्श इति (क)श्रोत्रियपदवदित्याह—वाक्यार्थ इति। अनैकान्तिक इति लक्षणपक्षे चोदयति—अतिदेशेति। यदि हि क्वचिच्छास्त्रप्रदेशे अनैकान्तिकः कथितस्तद्देशातिलङ्घनेनात्रातिदिश्यमानो विदितरूप इह सव्यभिचारं लक्षयेत्, न त्वस्य शास्त्र-प्रदेशे क्वचिदपि कीर्त्तनमस्तीत्यर्थः। परिहरति—नेदमिति, लोकप्रसिद्धत्वेनोक्तप्रायमित्यर्थः।

---

(१) "दृश्येते" इति ख०। (२) "प्रसज्यत" इति ख। (३) "अस्पर्शवत्त्वशब्दस्यार्थः" इत्यादर्शपुस्तकयोः पाठः।

(क) एकां शाखां सकल्पां वा षड्भिरङ्गैरधीत्य च।
षट्कर्मनिरतो विप्रः श्रोत्रियो नाम धर्मवित्॥ इति।

## न्यायभाष्यम्

दृष्टान्ते 'उदाहरणसाधर्म्यात् साध्यसाधनं हेतुः' (अ० १ आ० १ सू० ३४) इति अस्पर्शत्वादिति हेतुर्नित्यत्वं व्यभिचरति, अस्पर्शा बुद्धिरनित्या चेति। एवं द्विविधेऽपि दृष्टान्ते व्यभिचारात् साध्यसाधनभावो नास्तीति लक्षणाभावादहेतुरिति।

(१)नित्यत्वमप्येकोऽन्तः अनित्यत्वमप्येकोऽन्तः एकस्मिन्नन्ते विद्यत इति ऐकान्तिकः (२)विपर्ययादनैकान्तिकः (३)उभयान्तव्यापकत्वादिति ॥ ५ ॥

## न्यायवार्त्तिकम्

पेलवमेतदिति। अव्यापकत्वादलक्षणमेतदिति चेत्—अथापीदं स्यादनैकान्तिकलक्षणेन न सर्वोऽनैकान्तिको व्याप्यते यथा असाधारणमिति। न अनेनैव संग्रहात्। कथमिति? व्यावृत्तिद्वारेणाभिधीयमानोऽयमुभयान्तव्यावृत्तेरनैकान्तिक इति।

अपरे पुनः प्रकरणसममनैकान्तिक एवान्तर्भावयन्ति। कथमिति? अनित्य आत्मा शरीरादन्यत्वादिति शरीरादप्यन्यन्नित्यमनित्यं च दृष्टमतोऽनैकान्तिक इति। तैस्तु न लक्षणव्यभिचारोऽवगतो नोदाहरणव्यभिचार इति--अनैकान्तिकः सव्यभिचार इत्येतल्लक्षणं व्यभिचारिणः, यदि चानेन प्रकरणसमसंग्रहो भवति प्राप्तस्तर्हि लक्षणस्य व्यभिचारः, न पुनरुदाहरणव्यभिचारोऽनैकान्तिकलक्षणव्यभिचार इति। (क) लक्षणस्य तूभयं दोषः लक्ष्याव्याप्तिरलक्ष्यव्याप्तिश्चेति (ख) वक्ष्यमाणकं च प्रकरणसमस्य लक्षणमीक्षितव्यम् ॥ ९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

(४)अन्वयेनैवोभयान्तसन्नियतोऽनैकान्तिक इति मन्वानः शङ्कते—अव्यापकत्वादिति। परिहरति—व्यावृत्तीति। क्वचिदन्वयस्योभयान्तसंनियतता क्वचिद् व्यतिरेकस्येत्यर्थः। एकेषां मतमुपन्यस्यति—अपरे त्विति। दूषयति—तैस्त्विति। नोदाहरणे व्यभिचाराल्लक्षणव्यभिचारो भवति अन्यत्वात्। नो खलूदाहरणमाद्रियन्ते परीक्षकाः, किन्तु लक्षणमित्यर्थः ॥ ९ ॥

## वृत्तिः

स च साधारणोऽसाधारणोऽनुपसंहारी चेति त्रिविधः। साधारणः (५)साध्यवदन्यवृत्तिः यथा शब्दो नित्यः निःस्पर्शत्वात्। न च विरुद्धसाङ्कर्यदोषः, उपधेयसङ्करेऽप्युपाधेरसङ्करात्। असाधारणः सपक्षविपक्षव्यावृत्तः, सपक्षः साध्यवत्त्वनिश्चयविषयः,

---

(१) "नित्यत्वमप्येक" इत्यारभ्य "व्यापकत्वात्" इत्यन्तभागः टि-पु० नास्ति। (२) "विपर्ययादनैकान्तिक" इति ग-पु० नास्ति। (३) "उभयत्र" इति आ०। (४) "अन्वयेनैवोभयान्तान्नियतो-" इति व।
(५) "साध्यवत्तदन्यवृत्तिः" इति आ-व।

(क) अत्र "न"कारस्यार्थसङ्गतिर्नास्ति इत्यादश दृष्टः 'न लक्षणस्य तूभयम्' इत्याकारः परित्यक्तः।
(ख) 'वक्ष्यमाणक'मित्यत्र ककारः किमर्थक इत्यनुसन्धेयम्।

## ( सू० )—सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः ॥ ६ ॥

### न्यायभाष्यम्

तं विरुणद्धीति तद्विरोधी अभ्युपेतं सिद्धान्तं व्याहन्तीति। यथा सोऽयं विकारो

### न्यायवार्त्तिकम्

सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध इति। कोऽस्य सूत्रस्यार्थः ? अभ्युपगतार्थविरोधी विरुद्धः। एवं च सर्वानुक्तविरुद्धसंग्रहः—यावान् कश्चन विरुद्धभेदः सर्वोऽसावनेन संगृहीत इति, यस्मादभ्युपगतं बाधते अभ्युपगतेन बाध्यते। नन्वेवमेको हेत्वाभासो विरुद्धः प्राप्नोति ? सत्यमेक एव हेत्वाभासो विरुद्धस्तस्य तु सामान्येन विरुद्धत्वेन संगृहीतस्य पञ्चधोपदेशः यथा प्रमेयमित्यनेन षोडश पदार्था इति। पृथगभिधानं तर्हि विरुद्धस्य न कर्तव्यम् ?

### न्यायवार्त्तिकतात्पर्यटीका

सिद्धा—द्धः (सू० ६)। पृच्छति—कोऽस्य सूत्रस्येति। न खलु हेतुरचेतनः सिद्धान्तमभ्युपगच्छति, यश्चाभ्युपगच्छति चेतनो नासावन्यतमेन हेतुलक्षणेन युज्यते इति न हेत्वाभासः, न च पक्षः सिद्धान्त इति तद्विरोधी न विरुद्धः स्यादिति भावः। उत्तरम्—अभ्युपगतार्थविरोधी विरुद्धः। हेतुद्वारेण पुरुषस्याभ्युपगमो हेतावुपचरितः, अभ्युपगममात्रविवक्षया सिद्धान्तशब्दः प्रयुक्तो न पुनः सिद्धान्त एवेह विवक्षितः, तेन पक्षोऽभ्युपगमविषय इति तद्विरोधी हेत्वाभासः संगृहीतो भवति। विशेषविरुद्धस्य च न हेत्वाभासतेत्युक्तं भवति। न हि विशेषोऽभ्युपगमस्य विषयः, न खल्वयं प्रतिज्ञापदगोचरः, किन्तु प्रतिज्ञार्थस्य सिद्धावनुषङ्गीति नाभ्युपगमगोचर इति भावः। ईदृशस्य सूत्रव्याख्यानस्य फलमाह—एवं चेति। ईदृशं व्याख्यानमन्तरेणानुक्तस्य विरुद्धस्येत्यर्थः। अभ्युपगतेन बाध्यत इति, स्वरूपेण हेतुत्वेन वेत्यर्थः। तदनेन तं विरुणद्धीत्यादिभाष्यं व्याख्यातम्। चोदयति—नन्वेवमिति। यदि हेतुत्वबाधाद्विरुद्धो हेतुः सव्यभिचारादयोऽपि विरुद्धाः, तेषामपि हेतुत्वं बाधितम्, अबाधे वा न हेत्वाभासा इति भावः। परिहरति—सत्यमेक एवेति। तादृशाविरुद्धत्वेन तुल्यत्वेऽप्यवान्तरभेदविवक्षया पञ्चत्वम्, यथा प्रमाणादीनां प्रमेयत्वेन तुल्यत्वेऽपि प्रमाणप्रमेयादीनामवान्तरभेदविवक्षया षोडशत्वम्,

### वृत्तिः

यथा शब्दो नित्यः शब्दत्वादित्यादौ। अनुपसंहारी च केवलान्वयिधर्मावच्छिन्नपक्षकः, यथा सर्वं नित्यं मेयत्वादित्यादि। अत्र च साध्यसन्देहाद् व्याप्तिग्रहो न भवतीत्याशयः।

नव्यास्तु असाधारणः साध्यवदवृत्तिः, एतस्य साध्यसहचारग्रहप्रतिबन्धेन व्याप्तिग्रहप्रतिबन्धो दूषकताबीजम्। अनुपसंहारी च केवलान्वयिसाध्यकः, तस्य चात्यन्ताभावाप्रतियोगिसाध्यकत्वरूपस्य ज्ञानाद्व्यतिरेकव्याप्तिग्रहप्रतिबन्धो दूषकताबीजमित्याहुः ॥ ५ ॥

## न्यायभाष्यम्

व्यक्तेरपैति नित्यत्वप्रतिषेधात्—(१)न नित्यो विकार उपपद्यते अपेतोऽपि विकारोऽस्ति विनाशप्रतिषेधात्। सोऽयं नित्यत्वप्रतिषेधादिति।(१)* हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते। कथम्? व्यक्तिरात्मलाभः। अपायः प्रच्युतिः। यद्यात्मलाभात् प्रच्युतो विकारोऽस्ति नित्यत्वप्रतिषेधो नोपपद्यते। यद् व्यक्तेरपेतस्यापि विकारस्यास्तित्वं तत् खलु नित्यत्वमिति। नित्यत्वप्रतिषेधो

## न्यायवार्त्तिकम्

न न कर्तव्यम्, सामान्यतोऽधिगतस्य विशेषज्ञापनार्थम्, यथा प्रमेयस्यैव। तत्रानैकान्तिकादिर्हेत्वाभासो द्विरूपोऽनैकान्तिकादिर्विरुद्धश्च। एतस्मिंस्तु विरुद्धतैवेत्यसाधारणतया तृणोलपादिन्यायेन निष्कृष्याभिधीयते। तस्मादनैकान्तिकादिषु निमित्तद्वयसमावेशात् संज्ञाद्वयसमावेशः विवक्षिततज्जातीयान्यवृत्तित्वेनानैकान्तिकत्वं हेतुविषयस्वरूपबाधारूपेण तु विरुद्धः। एवं सर्वत्र। उदाहरणम् (क)"तदेतत् त्रैलोक्यं व्यक्तेरपैति नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति

## न्यायवार्त्तिकतात्पर्यटीका

यथा वा तृणविशेष एव "असाधारणतया" तृणोलपतया व्याख्यायते एवं विरुद्धविशेष एवासावनैकान्तिकादिर्विरुद्धानैकान्तिकादिपदवाच्य इत्यर्थः। अत्रोदाहरणभाष्यम्—यथा सोऽयं विकार इति। महदहङ्कार-पञ्चतन्मात्रैकादशेन्द्रिय(ख)भूतसूक्ष्म-महाभूतानि विकारः, तस्य व्यक्तिः धर्म-लक्षणावस्थापरिणामः, तस्मादपाय इति। अत्र हेतुः नित्यत्वप्रतिषेधादिति। तस्य व्याख्यानम्—न नित्यो विकार उपपद्यत इति। अपेतोऽपि विकारोऽस्ति विनाशप्रतिषेधात्। सोऽयं नित्यत्वप्रतिषेधादिति हेतुर्व्यक्तेरपेतोऽपि विकारोऽस्तीत्यनेन स्वसिद्धान्तेन विरुध्यते। एतदेव प्रश्नपूर्वकं विभजते—कथमित्यादिना। विरोधस्य द्व्याश्रयत्वात् सिद्धान्तेन विरुध्यत इत्यभिसंधाय सिद्धान्तं व्याहन्तीत्युक्तमित्यर्थः। तदेतद्भाष्यं व्याचष्टे—उदाहरणमिति। ननु नित्यत्वप्रतिषेधादिति हेतुर्विनाशप्रतिषेधेन सिद्धान्तेन विरुध्यत इत्येवं ब्रुवाणः शास्त्रविरोधमापादयति, तथा च कालात्ययापदिष्टो हेत्वाभासो न विरुद्ध इत्यत आह—

## वृत्तिः

क्रमप्राप्तं विरुद्धं लक्षयति—( सिद्धान्तेति )।

अत्र च सिद्धान्तं साध्यम्, प्रतिज्ञायां हि(२) सिद्धस्यान्ते साध्यमभिधीयते। तथा च

---

(१) "अपेतोऽप्यस्ति विनाशप्रतिषेधात्। न नित्यो विकार उपपद्यते इत्येवम्" इति ल-भा-ग-श्रा-पुस्तकेषु पाठः। (२) 'पञ्चस्य' इत्यधिकम्—श्रा।

(क) "तदेतत् त्रैलोक्यं व्यक्तेरपैति, कस्मात्? नित्यत्वप्रतिषेधात्, अपेतमप्यस्ति विनाशप्रतिषेधात्" इति योगसूत्रभाष्यम् ( विभूतिपादे, १३श सूत्रे ) न्यायभाष्ये तु अक्षरगतो विशेष इति।

(ख) अत्र भूतसूक्ष्मपदं पञ्चतन्मात्रपदस्य व्याख्यानरूपं प्रमादाद् ग्रन्थमध्येऽन्तर्भूतमिति प्रतिभाति।

## न्यायभाष्यम्

नाम विकारस्याऽऽत्मलाभात् प्रच्युतेरुपपत्तिः। यदात्मलाभात् प्रच्यवते तदनित्यं दृष्टम्, यदस्ति न तदात्मलाभात् प्रच्यवते। अस्तित्वं चाऽऽत्मलाभात् प्रच्युतिरिति च विरुद्धावेतौ धर्मौ न सह सम्भवत इति। सोऽयं हेतुर्यं सिद्धान्तमाश्रित्य प्रवर्त्तते तमेव व्याहन्तीति ॥ ६ ॥

## न्यायवार्त्तिकम्

विनाशप्रतिषेधाद्"। विनाशप्रतिषेधादित्यनेन नित्यमभ्यनुज्ञातं नित्यत्वप्रतिषेधादित्यनेन प्रतिषिद्धम्। एते ते वाक्ये परस्परार्थबाधिते तयोश्च परस्परार्थबाधा विरोधः।

प्रतिज्ञाहेत्वोर्वा विरोधः—यो वा प्रतिज्ञाहेत्वोर्विरोधः स विरुद्धो हेत्वाभासः। ननु प्रतिज्ञाविरोधः पृथगुपदिष्टो निग्रहस्थाने, पृथक् क्व हेत्वाभासः, तस्मान्न प्रतिज्ञाहेत्वोर्विरोधो वक्तव्य इति; नैष दोषः उभयाश्रितत्वाद्विरोधस्य विवक्षातोऽन्यतरनिर्देशः—प्रतिज्ञाहेत्वोर्विरोध इति प्रतिज्ञाहेतू आश्रित्य उभयाश्रितो भवति, तत्र यदा प्रतिज्ञया विरोधो विवक्षितस्तदा प्रतिज्ञाविरोध

## न्यायवार्त्तिकतात्पर्यटीका

एते ते वाक्ये परस्परार्थबाधिते इति। दृढतरप्रमाणबाधितो हि हेतुः कालात्ययापदिष्टो भवति, यथा ब्राह्मणेन सुरा पेया द्रवद्रव्यत्वात् क्षीरवदिति हेतुः

गौडी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्वा न पेया ब्रह्मवादिभिः॥

इत्यादिभिरागमैरतिदृढैर्बाधितः कालात्ययापदिष्टतया हेत्वाभासो भवति। प्रकृते वाक्ये परस्परविरुद्धार्थतया न प्रतिष्ठां लभेते, न पुनरन्यतरदन्यतरेण शक्यं बाधितुं द्वयोस्तुल्यबलत्वात्। तस्मान्नायं कालात्ययापदिष्ट इत्यर्थः।

व्याख्यान्तरमाह—प्रतिज्ञाहेत्वोर्वा विरोध इति। सोऽयं विकारो व्यक्तेरपैतीति प्रतिज्ञा नित्यत्वप्रतिषेधादिति हेतुना विरुध्यते। व्यक्तिमात्रादपैति न तु विनश्यतीति हि प्रतिज्ञार्थः अपेतोऽप्यस्ति विनाशप्रतिषेधादित्यनेन व्याख्यातः। तथा च व्यक्तेरपैतीत्यनेन विकारस्य नित्यत्वं प्रतिज्ञातं नित्यत्वप्रतिषेधादित्यनेन हेतुना विरुद्धं भवति। स्वसिद्धान्तेनेति स्वपक्षेणेत्यर्थः। अत्र चार्थे सुगमं भाष्यम्। अत्र वार्त्तिककारश्चोदयति—ननु प्रतिज्ञाविरोध इति। प्रतिज्ञाहेत्वोर्विरोध इत्यर्थः। परिहरति—नैष दोष इति। प्रतिज्ञाश्रितत्वं विरोधस्य विवक्षित्वा

## वृत्तिः

साध्यमभ्युपेत्य उद्दिश्य प्रयुक्तस्तद्विरोधी साध्याभावव्याप्त इति फलितार्थः, यथा वह्निमान् ह्रदत्वादिति। एतस्य साध्याभावानुमितिसामग्रीत्वेन साध्यानुमितिप्रतिबन्धो

## (सू०)—यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः ॥ ७ ॥

### न्यायभाष्यम्

विमर्शाधिष्ठानौ पक्षप्रतिपक्षावुभावनवसितौ प्रकरणम्, तस्य चिन्ता विमर्शात्प्रभृति

### न्यायवार्त्तिकम्

इत्युच्यते, यदा प्रतिज्ञाया हेतुविरोधो हेतोर्वा प्रतिज्ञाविरोधकत्वं तदा विरुद्धो हेतुरिति, अतः प्रतिज्ञाविरोधो हेतुविरोधो वेत्यदोषः। हेतुविरोधोदाहरणम्—नित्यः शब्द उत्पत्तिधर्मकत्वात्, प्रतिज्ञाविरोधस्योदाहरणम्—नास्त्यात्मेति। प्रतिज्ञाहेतुविरोधोदाहरणम्–(क) गुणव्यतिरिक्तं द्रव्यम् अर्थान्तरस्यानुपलब्धेः। हेतुविरोधोदाहरणम्—नास्त्येको भावः समूहे भावशब्दप्रयोगादिति, समूह इति ब्रुवाणेनैकोऽभ्युपगतो भावो भवति, एकसमुच्चयो हि समूह इति ॥ ६ ॥

यस्मात् प्रकरणचिन्ता स निर्णयार्थमपदिष्टः प्रकरणसमः। कस्मात् प्रकरणचिन्ता ?

### न्यायवार्त्तिकतात्पर्यटीका

निग्रहस्थानेषु प्रतिज्ञाविरोधस्योपादानम्, हेत्वाश्रितत्वं तु तस्यैव विरोधस्य विवक्षित्वा हेत्वाभासेऽन्तर्भाव इति। यदा प्रतिज्ञाया हेतुविरोध इति हेतोरप्यन्यतरासिद्धतया प्रतिज्ञातुल्यत्वाभिप्रायम्। यदि हेतुरुभयसिद्धो भवति तदा हेतोर्वा प्रतिज्ञाविरोधकत्वमिति। उपसंहरति—अत इति। (ख)हेतोर्विरोधोदाहरणम्, विरोधकत्वं विरोधः। शब्दस्योत्पत्तिधर्मकत्वं प्रमाणविनिश्चितं नित्यत्वप्रतिज्ञां बाधत इत्यर्थः। प्रसङ्गाद्धेत्वाभासातिरिक्तस्य प्रतिज्ञापदयोर्विरोधस्य निग्रहस्थानस्योदाहरणमाह—प्रतिज्ञाविरोधस्येति। तृतीयेऽध्याये (ग)चैष विरोध उपपादयिष्यते। हेतोरन्यतरासिद्धतया समानबलयोः प्रतिज्ञाहेत्वोर्विरोधोदाहरणं गुणेति। हेतुविरोधोदाहरणं नास्त्येको भाव इति। उत्पत्तिमत्त्वं ह्यन्यतरासिद्धमपि शक्यसाधनमिति प्रतिज्ञार्थं व्याहन्ति, समूहे भावशब्दप्रयोगादिति उभयसिद्धमेव प्रतिज्ञार्थं व्याहन्तीत्येतावता भेद इत्यर्थः ॥ ६ ॥

यस्मा—मः ( सू० ७ )। प्रकरणशब्दार्थमाह भाष्यकारः—विमर्शाधिष्ठानाविति।

### वृत्तिः

दूषकताबीजम्। न च सत्प्रतिपक्षाविशेषः, तत्र हेत्वन्तरं साध्याभावसाधकमिह तु हेतुरेव साध्याभावसाधकः साध्यसाधकत्वेन त्वयोपन्यस्त इत्यशक्तिविशेषोन्नायकत्वेन विशेषात् ॥६॥

---

(क) प्रयोगोऽयं पञ्चमाध्यायस्य द्वितीयाह्निके चतुर्थसूत्रभाष्ये द्रष्टव्यः।

(ख) "हेतुविरोधोदाहरणम्" इति वार्तिके।

(ग) एष इति नास्त्यात्मेति प्रतिज्ञासम्बन्धीय इत्यर्थः। उपपादितोऽयं 'दर्शनस्पर्शनाभ्यामेकार्थग्रहणा'दिति प्रथमाह्निकप्रथमसूत्रोत्थापकवार्त्तिके।

## न्यायभाष्यम्

प्राङ् निर्णयाद् यत्समीक्षणम्, सा जिज्ञासा यत्कृता स निर्णयार्थं प्रयुक्त उभयपक्ष-साम्यात् प्रकरणमनतिवर्तमानः प्रकरणसमो निर्णयाय न प्रकल्पते।

प्रज्ञापनं तु अनित्यः शब्दो नित्यधर्मानुपलब्धेरिति, अनुपलभ्यमाननित्यधर्मकमनित्यं दृष्टं स्थाल्यादि। (१)नित्यः शब्दो वाऽनित्यधर्मानुपलब्धेः अनुपलभ्यमानानित्यधर्मकं नित्यं दृष्टमाकाशादि।

यत्र समानो धर्मः संशयकारणं हेतुत्वेनोपादीयते स संशयसमः सव्यभिचार एव।

## न्यायवार्त्तिकम्

तत्त्वानुपलब्धेः,—यस्मादुपलब्धतत्त्वेऽर्थे निवर्तते चिन्ता तस्मात् सामान्येनाधिगतस्य या विशेषतोऽनुपलब्धिः सा प्रकरणचिन्तां प्रयोजयति। उदाहरणम्—नित्यः शब्दोऽनित्यधर्मानुप-

## न्यायवार्त्तिकतात्पर्यटीका

विमर्शः संशयः, तस्य विषयौ। अनवसितौ अनिर्णीतौ, तादृशयोरेव पक्षप्रतिपक्षशब्दवाच्यत्वात्, प्रक्रियते साध्यत्वेनाधिक्रियते इति व्युत्पत्त्या प्रकरणम्। चिन्तापदं व्याचष्टे—तस्य प्रकरणस्य चिन्ता विमर्शात्प्रभृति प्राग् निर्णयात् समीक्षणम् आलोचनं जिज्ञासा। सा खलु तत्त्वानुप-लब्ध्या कृता; नैव खल्वयं नित्यधर्मान्नित्यत्वाविनाभाविनोऽनित्यधर्मान् वा अनित्यत्वाविना-भाविन उपलभमानस्तत्र संदिग्धे (क)तच्च जिज्ञासते। सैव नित्यधर्मानुपलब्धिरनित्यधर्मानुप-लब्धिर्वा विचित्राभिसन्धितया वादिनां निर्णयायापदिश्यमाना प्रकरणसमो हेत्वाभासः। कुतः? उभयपक्षसाम्यात्, यथा नित्यत्वपक्षेऽनित्यधर्मानुपलब्धिरेवमनित्यपक्षेऽपि नित्यधर्मानुपलब्धिः। सेयं तत्त्वानुपलब्धिमात्रविवक्षयोभयपक्षसमा, प्रकरणसमा (ख) तु यथा प्रकरणमनिश्चायकमेवमिय-मपीत्यर्थः। व्युत्पत्तिमात्रं चैतत् प्रकरणसमपदस्य, प्रवृत्तिनिमित्तन्तु सत्प्रतिपक्षत्वम्, अन्यथाऽनैकान्तिकस्यापि प्रकरणसमत्वप्रसङ्गादिति। प्रज्ञापनं प्रज्ञाप्यतेऽनेनेति व्युत्पत्त्या निदर्शनमुक्तम्।

अनैकान्तिकत्वशङ्कां सत्प्रतिपक्षस्य व्यवच्छिनत्ति। यत्र समान इति, संशयेन समः

## वृत्तिः

क्रमप्राप्तं प्रकरणसमं लक्षयति—( यस्मादिति )।

स हेतुः स्वसाध्यस्य परसाध्याभावस्य वा निर्णयार्थमपदिष्टः ( २ ) प्रकरणसम उच्यते। स च क इत्याकाङ्क्षायामाह—यस्मात्प्रकरणचिन्तेति। 'प्रकरणं पक्षप्रतिपक्षौ'

---

(१) "नित्यः शब्दो" इत्यारभ्य "आकाशादि" इत्यन्तः पाठः भा-फ-ग-आ-पुस्तकेषु नास्ति। (२) अत्र "प्रयुक्त" इत्यधिकम् आ-व०।

(क) तदिति सन्दिग्धमित्यर्थः 'तदा' इति क-तात्पर्यपाठः। (ख) अत्र 'तु'कारो निरर्थक इति तच्छून्य एव पाठो युक्तः।

## न्यायभाष्यम्

या तु विमर्शस्य विशेषापेक्षिता उभयपक्षविशेषानुपलब्धिश्च सा प्रकरणं प्रवर्त्तयति। (१)यथा शब्दे नित्यधर्मो नोपलभ्यते एवमनित्यधर्मोऽपि। सेयमुभयपक्षविशेषानुपलब्धिः

## न्यायवार्त्तिकम्

लब्धेः, अत एव प्रकरणमित्यतो न हेतुः। नन्वयं साध्याविशिष्ट एव यथा शब्दस्य नित्यत्वं साध्यं तथाऽनित्यधर्मानुपलब्धिरपीति ; नाविशिष्टः तस्यैव प्रकरणप्रवृत्तिहेतोर्धर्मस्य हेतुत्वेनोपादानात्—यत्र साध्येन समानो धर्मो हेतुत्वेनोपादीयते स साध्याविशिष्टः, यत्र पुनः प्रकरणप्रवृत्तिहेतुरेव स प्रकरणसमः।

ये तु संशयहेतुत्वात् प्रकरणसमानैकान्तिकयोरभेदं वर्णयन्ति तेषां प्रत्यक्षानैकान्तिकप्रकरणसमानामभेदः प्राप्नोति प्रत्यक्षमपि संशयकारणमिति। समूहः संशयस्य कारणमित्यतो

## न्यायवार्त्तिकतात्पर्यटीका

अनिश्चायकत्वादिति। एतदुक्तं भवति न हि नित्यधर्मानुपलब्धिरुभयसिद्धे नित्येऽस्ति येन सव्यभिचारो भवेत्, नाप्यनित्यधर्मानुपलब्धिरुभयसम्मतेऽनित्येऽस्ति येन सव्यभिचारो भवेत्, अपि तु परस्परमनयोः सत्प्रतिपक्षतयैव हेत्वाभासत्वमिति। यस्मात्प्रकरणचिन्तेत्युक्तं सूत्रकृता, अत्र यस्मादर्थं प्रश्नपूर्वकं दर्शयति वार्त्तिककारः—कस्मादिति। कारणत्वं तत्त्वानुपलब्धेर्व्यतिरेकेण दर्शयति—यस्मादिति। अत एवेति तत्त्वानुपलब्धेरित्यर्थः। चोदयति—नन्वयमिति। पक्षप्रतिपक्षौ हि प्रकरणं तौ च साध्यौ ताभ्यां च समः साध्यसमः। तथा च साध्यसमाद्ध हेत्वाभासान्न पृथग् निर्देशः प्रकरणसमस्येत्यर्थः। परिहरति—नाविशिष्ट इति। यद्यपि प्रकरणसमशब्दो व्युत्पत्त्या साध्याविशिष्टेन समानार्थः, तथाऽपि प्रवृत्तिनिमित्तमस्य सत्प्रतिपक्षत्वम्। न च तत्त्वानुपलब्धिः स्वयमसिद्धा सा ह्युपलम्भाभावेन सुलभेति भावः।

परमतमनुभाष्यातिप्रसङ्गापादनेन दूषयति—ये तु संशयहेतुत्वादिति। चोदयति—समूह इति। यस्मिन् सति भवत्येव तत् कारणम्, समूहे सति च भवत्येवेति नैकैकस्मिन्, तस्मान्नैकैकं कारणमिति भावः। परिहरति—समूहः कारणमिति। न ह्यकारणानां समूहः

## वृत्तिः

इति भाष्यम्। साध्यतदभाववन्ताविति तदर्थः। तथा च निर्णयार्थे प्रयुक्तो हेतुर्यत्र निर्णयं जनयितुमशक्तस्तुल्यबलेन परेण प्रतिबन्धात्, किन्तु धर्मिणः साध्यवत्त्वं तदभाववत्त्वं वेति 'चिन्तां' जिज्ञासां प्रवर्तयति, स प्रकरणसमः। यद्वा प्रकृष्टं करणं लिङ्गं परामर्शो वा, को हेतुरनयोः साधकः एतयोः कः परामर्शः प्रमेति वा यत्र जिज्ञासा भवतीत्यर्थः। यस्मादित्यादि तु वस्तुस्थितिमात्रम्।

(१) "यथा शब्दे" इत्यत आरभ्य "प्रवर्त्तयति" इत्यन्तभागो वि-पु० नास्ति।

## न्यायभाष्यम्

प्रकरणचिन्तां प्रवर्त्तयति। कथम्? विपर्यये हि प्रकरणनिवृत्तेः—यदि नित्यधर्मः शब्दे गृह्येत न स्यात् प्रकरणम्, यदि वा अनित्यधर्मो गृह्येत एवमपि निवर्त्तेत प्रकरणम्। सोऽयं हेतुरुभौ पक्षौ प्रवर्त्तयन्नन्यतरस्य निर्णयाय न प्रकल्पते ॥ ७ ॥

## न्यायवार्त्तिकम्

न प्रत्यक्षे प्रसङ्गः—सामान्यदर्शनं विशेषाव्यवस्था विशेषस्मृतिश्च (क)समूह इति संशयस्य कारणम्, नैकं प्रत्यक्षमतो न (१)प्रत्यक्षे प्रसङ्गः। समूहः कारणमित्यभिधानादप्रतिषेधः—समूहः कारणमित्येवं ब्रुवता न प्रत्यक्षस्य संशयकारणत्वं प्रतिषिद्धं भवति, तस्मात् प्रसङ्गस्तदवस्थ एवेति।

उभयधर्मानुपलब्धावन्यतरधर्मोपादानं प्रकरणसमार्थः—यत्र खलूभयविशेषानुपलब्धिस्तत्रान्यतरविशेषस्योपादानं यत्प्रकरणापनोदाय स प्रकरणसमो हेत्वाभासः, उभयविशेषानुपलब्धेरभिधानाशक्यत्वात्—न ह्युभयविशेषाऽनुपलब्धिः शक्या दर्शयितुम्। शरीरादन्यत्वं तु न सूत्रार्थः—

## न्यायवार्त्तिकतात्पर्यटीका

कारणं भवितुमर्हति अतिप्रसङ्गात्। न च समूहिवैलक्षण्यमन्तरेणाजानतः समूहस्य वैलक्षण्यम्, तस्मात्समूहिन एवान्योन्यसमवधानवन्तः कारणम्, तथा च प्रत्यक्षस्योपपन्नं संशयकारणत्वम्। न च यस्मिन् सति भवत्येव तत् कारणम् अपि तु यस्मिन् सत्येव न त्वसतीति क्षणभङ्गभङ्गे वक्ष्याम इति।

ननूभयधर्मानुपलब्धिरुभयपक्षसाधारणीति सव्यभिचार एवेत्यत आह—उभयधर्मानुपलब्धाविति। नोभयधर्मानुपलब्धिर्हेतुः, अपि तु एकधर्मानुपलब्धिः, न चासौ साधारणी, किं तु सत्प्रतिपक्षेत्यर्थः। उभयविशेषानुपलब्धेः प्रकरणसमत्वेन अभिधानाशक्यत्वात् प्रकरणसमस्योदाहरणान्तरं दूषयति—शरीरादन्यत्वं त्विति। परेषां किलोदाहरणं नित्य आत्मा शरीरादन्यत्वाद् आकाशवदिति। अत्र शरीरादन्यत्वमुपलभमानो यदा 'तत्त्वं' नित्यत्वमात्मनः प्रत्येति न हि तदा जिज्ञासितुं नित्यत्वं प्रवर्तते। यदा तु 'तत्त्वं' नित्यत्वं नोपलभते शरीरादन्यत्वमुपलभमानोऽपि तदा प्रवर्तते। तस्मादन्वयव्यतिरेकाभ्यां तत्त्वानुपलब्धिरेव प्रकरणचिन्ताप्रवर्त्तिका न शरीरादन्यत्वम्, तस्मान्नैतत् प्रकरणसमस्योदाहरणम्, अपि तु तत्त्वानुपलब्धि-

## वृत्तिः

लक्षणं तु तुल्यबलविरोधिपरामर्शकालीनपरामर्शविषयत्वम्, स्वसाध्यपरामर्शकालीनतुल्यबलविरोधिपरामर्शो वा। विरोधिपरामर्शस्य स्वहेतुनिष्ठत्वमेकज्ञानविषयत्वसम्बन्धेन, अन्यथा हेतोर्दुष्टत्वं न स्यात्। अयं च दशाविशेषे दोष इत्यतः सद्धेतोरपि विरोधिपरामर्शकाले दुष्टत्वमिष्टमेवेत्यवधेयम् ॥ ७ ॥

---

(१) आदर्शपुस्तके 'प्रत्यचप्रसङ्ग' इति पाठः।

(क) 'समूह इति' इत्यत्र 'इति समूहः' इति पाठो मौलिकतया प्रतिभाति।

## (सू०)—साध्याविशिष्टः साध्यत्वात् साध्यसमः ॥ ८॥

### न्यायभाष्यम्

द्रव्यं छायेति साध्यम्, गतिमत्त्वादिति हेतुः साध्येनाविशिष्टः साधनीयत्वात्

### न्यायवार्त्तिकम्

न ह्ययं शरीरादन्यत्वमुपलभमानोऽपि यदा तत्त्वमुपलभते तदा प्रवर्तत इति, यदा तत्त्वं नोपलभते शरीरादन्यत्वमुपलभमानोऽपि तदा प्रवर्तत इति। शरीरादन्यत्वं चानैकान्तिकम्, अतश्च न सूत्रार्थः ॥ ७ ॥

साध्याविशिष्टः साध्यत्वात् साध्यसमः। साध्येनाविशिष्टो यः साधनधर्मः साध्यवत्

### न्यायवार्त्तिकतात्पर्यटीका

रेव। इतश्चैतन्न प्रकरणसमस्योदाहरणमित्याह—शरीरादन्यत्वं चानैकान्तिकम्। उपसंहरति—अतो न सूत्रार्थः न सूत्रविषयः। एवमन्यान्यपि सत्प्रतिपक्षोदाहरणान्यूहनीयानि ॥ ७ ॥

साध्या—मः (सू० ८)। अत्र साध्यसम इति लक्ष्यनिर्देशः, साध्याविशिष्ट इति लक्षणम्। तदनेन स्वरूपासिद्धैकदेशासिद्धाश्रयासिद्धान्यथासिद्धानां संग्रहः, तेपामसिद्धत्वेन साध्याविशिष्टत्वात्। अत्र चासिद्धः साध्यसम इति वक्तव्ये साध्याविशिष्टग्रहणमन्यतरासिद्धस्यापि सिद्धेः प्रागहेतुत्वज्ञापनार्थम्, अन्यथाऽत्यन्तासिद्ध एव साध्यसमो नान्यतरासिद्धः तस्य कदाचित् सिद्धेरिति भ्रान्तिः स्यात्, साध्याविशिष्टेन तु सोऽपि गृह्यत इति। नन्वेवं साध्याविशिष्टत्वेनान्यतरासिद्ध एव स्यान्नेतरे, तेषामसिद्धत्वेन साध्याविशेपाभावादित्यत उक्तम्—साध्यत्वादिति। यदि हि साध्यं नासिद्धं भवेत् साध्यत्वादेव च्यवेत, न खलु सिद्धं साध्यते। तस्मात् साध्यत्वादसिद्धता, सा च कस्यचित् सर्वदा, (क)कादाचित्की कस्यचिदिति सर्वेपामविशिष्टत्वमिति नाव्याप्तिः। नापि साध्यत्वस्यातिप्रसक्त्याऽतिव्याप्तिः हेत्वाभाससामान्यलक्षणापेक्षित्वात्तद्विशेषलक्षणस्येति सूत्रार्थः।

साधनीयत्वादिति च भाष्यगतं न साध्यत्वादित्यस्य व्याख्यानम्, अपि तु गतिमत्त्वस्यासिद्धत्वपरम्।

### वृत्तिः

क्रमप्राप्तं साध्यसमं लक्षयति—(साध्येति)।

साध्येन वह्न्यादिनाऽविशिष्टः, कुत इत्यत आह—साध्यत्वादिति, साधनीयत्वादित्यर्थः। यथा हि साध्यं साधनीयं तथा हेतुरपि चेत् साध्यसम इत्युच्यते। अत एवासिद्ध इति व्यवह्रियते।

---

(क) "कादाचित्की न कस्यचि" दित्यादर्शपुस्तकपाठः प्रामादिकः।

## न्यायभाष्यम्

साध्यसमः। (१) अयमप्यसिद्धत्वात् साध्यवत्प्रज्ञापयितव्यः। साध्यं तावदेतत् किं पुरुषवच्छायाऽपि गच्छति आहो स्विद् आवरकद्रव्ये संसर्पति आवरणसन्तानाद्-

## न्यायवार्त्तिकम्

प्रज्ञापयितव्यः स साध्यसमो हेत्वाभासः। तस्योदाहरणम्—द्रव्यं छाया गतिमत्त्वादिति। यथैव द्रव्यत्वं छायायाः साध्यं तथा गतिमत्त्वमपीति। गतिमत्त्वं देशान्तरदर्शनादिति चेत्—अथापीदं स्यात् गतिमतीयं छाया देशान्तरे दर्शनादिति, यत् खलु देशान्तरेषूपलभ्यते तद् गतिमत् यथा कुम्भः, तथा छाया, तस्माद् गतिमतीति। नाश्रयासिद्धत्वात्,—एवमप्याश्रयासिद्धो हेतुः, सति द्रव्यभावे छायाया देशान्तरे दर्शनं समर्थं स्यात् द्रव्यभावस्त्वसिद्धः, तस्मादाश्रयासिद्धो हेतुः।

## न्यायवार्त्तिकतात्पर्यटीका

अत्र वार्तिककारः सूत्रार्थं व्याचष्टे—साध्येनाविशिष्टो य इति। साध्येन व्यभिचारो मा भूदित्यत आह—साधनधर्म इति। हेत्वाभाससामान्यलक्षणयोगे सति एतल्लक्षणमिति न व्यभिचार इति भावः। अत्र भाष्यकारेण स्वरूपासिद्धाश्रयासिद्धान्यथासिद्धानां साधारणमुदाहरणमुक्तं—द्रव्यं छाया गतिमत्त्वादिति। तद्विभजते वार्तिककारः—द्रव्यं छायेति। अत्र स्वरूपासिद्धतां तावदाह—यथैवेति। आश्रयासिद्धतामवतारयितुं गतिमत्त्वं छायायाः पञ्चावयवेन वाक्येन साधयति—गतिमत्त्वमिति। आश्रयासिद्धमाह—नाश्रयासिद्धत्वादिति। सत्या एव च्छायाया देशान्तरे दर्शनाद् योऽस्या गतिमत्त्वमनुमिनोति तं प्रत्याश्रयासिद्धं देशान्तरे दर्शनम्, तदाश्रयासिद्धत्वात्। तदिदमुक्तं—सति द्रव्यभाव इति, सति सत्त्व इत्यर्थः। न तावच्छाया सामान्यविशेषसमवायान्तर्भूता अनित्यत्वात्तस्याः। नापि कर्म, संयोगविभागासमवायिकारणत्वाभावात्। न गुणो द्रव्यासमवायात्। न मनोदिक्कालगुणः, तद्गुणानामप्रत्यक्षत्वात्। नाप्यात्मगुणो बाह्येन्द्रियप्रत्यक्षत्वात्। नापि नभोनभस्वतोः, तद्गुणानामचाक्षुषत्वात्। नापि तैजसः, तद्विरोधित्वात् तत्सहचरितगुणान्तरानुपलब्धेश्च। अत एव न पृथिवीपाथसोरपि। अपि च तद्गुणश्चाक्षुषो नालोकमन्तरेण शक्यग्रहः, छाया तु तमन्तरेण गृह्यते, तस्मिंस्तु सति न गृह्यते, इति दुर्घटम्। नापि द्रव्यम्, तद्धि पृथिव्यादीनामन्यतममेव भवेदन्यद्वा दशमम्। न तावदन्यतमम्,

## वृत्तिः

अयं चाश्रयासिद्धि-स्वरूपासिद्धि-व्याप्यत्वासिद्धिभेदात् त्रिविधः। आश्रयासिद्धिश्च पक्षे पक्षतावच्छेदकाभावः, यथा काञ्चनमयः पर्वतो वह्निमानित्यादौ। स्वरूपासिद्धिश्च पक्षे हेतुतावच्छेदकावच्छिन्नस्याभावः, यथा ह्रदो द्रव्यं धूमादित्यादौ। व्याप्यत्वासिद्धि

(१) अत्र टि-भा-पु० "कथम्" इत्यधिकम्।

## न्यायभाष्यम्

सन्निधिसन्तानोऽयं तेजसो गृह्यत इति। सर्पता खलु द्रव्येण(१) यो यस्तेजोभाग आव्रियते तस्य (२) तस्यासन्निधिरेवाविच्छिन्नो गृह्यत इति। आवरणं तु प्राप्ति-प्रतिषेधः ॥ ८ ॥

## न्यायवार्त्तिकम्

(क) अभ्युपेत्य देशान्तरे दर्शनं तस्यान्यथासिद्धेरसिद्धेः—यत्तु देशान्तरे दर्शनं छायाया-स्तदन्यथा भवति, अन्यथा भवन् नार्थं साधयति। कथमन्यथा ? आवरणसन्तानादसन्निधि-सन्तानस्तेजस इति। आवरके द्रव्ये सर्पति तेजसोऽसन्निधिविशिष्टं द्रव्यं यदुपलभ्यते तत्तु छायेत्युच्यते। सोऽयमसिद्धस्त्रेधा भवति—प्रज्ञापनीयधर्मसमान आश्रयासिद्धः अन्यथासिद्धश्चेति।

## न्यायवार्त्तिकतात्पर्यटीका

तद्गुणानामनुपलब्धेः, नाप्यन्यद् रूपवदिति युज्यते तस्याद्रव्यस्य प्रत्यक्षत्वानुपपत्तेः, अस्पर्श-वत्त्वादनारम्भकत्वेनानेकद्रव्यत्वाभावात्। तस्माद्भाऽभाव एव छाया न तु सतीति सिद्धम्।

यस्तु मन्यते मा भूच्छाया सती भवतु भाऽभावः तथाऽपि नाऽऽश्रयासिद्धता देशान्तरदर्शनस्य भाऽभावाश्रयत्वादेवेति तं प्रत्यभ्युपेत्यान्यथासिद्धतया साध्यसमत्वमापादयति—अभ्युपेत्येति। स्वाभाविको हि सम्बन्धो हेतोः साध्येन सहानुमानाङ्गं नौपाधिक इति विवेचितमनुमान-लक्षणे (ख)। तदयमन्यथासिद्ध औपाधिकसम्बन्धो भवति हेत्वाभासः। सेयं हेतोरसिद्धि-र्द्विधा स्वरूपतो हेतुत्वेन च। स्वरूपतोऽपि द्वेधा, स्वत आश्रयासिद्धा च। न चैतावता सव्यभिचारादीनामपि हेतुत्वासिद्धेरसिद्ध एवान्तर्भावः सव्यभिचारत्वादिविशेषणेन तेषामतो भेदात्, अन्यथासिद्धस्य तु तद्विशेषणत्वायोगिनो हेतुत्वासिद्धिमात्रेण साध्यसमेऽन्तर्भाव इति सर्वमवदातम्। संकलयति—सोऽयमिति। त एतेऽसिद्धभेदा उदाहरणभेदेष्वपि द्रष्टव्याः,

## वृत्तिः

श्चाव्यभिचरितसामानाधिकरण्यस्याभावः। न च स्वरूपासिद्धेरेव सूत्राल्लक्ष्यत्वप्रतीते-रितरयोर्न लक्ष्यत्वमिति वाच्यम्, हेतुरितिपदं ह्यत्र पूरणीयम्, हेतुपदं च गमकहेतोर्व्याप्ति-विशिष्टपक्षधर्मस्य वाचकम्। व्याप्तिविशिष्टपक्षधर्म इत्येव वा पूर्यताम्। तथा च तस्य किञ्चिदंशसाध्यत्वेनैव साध्यसमत्वम्।

---

(१) ल-चा-पुस्तकयोरत्र "स्थानात्" इत्यधिकम्। (२) "तस्यासन्निधिरविच्छिन्नो" इति वि-टि०।

(क) क-ख-वार्त्तिकपुस्तकयोः 'उपेत्य' इति पाठः।

(ख) १३९ पत्रे विवेचितमिदम्।

## न्यायवार्त्तिकम्

नित्यः शब्दोऽस्पर्शवत्त्वादित्येतत् नोदाहरणम्, न ह्यस्पर्शत्वं शब्दस्य ज्ञापनीयं नाश्रयासिद्धं नान्यथासिद्धमिति। (१)यथा त्वस्माभिः सूत्रं वर्णितं (क) यथा चोदाहृतं तथाऽयमसम्बद्धो दोषः, न सूत्रार्थो विज्ञातो नाक्षरार्थो न हेत्वाभासो न दृष्टान्ताभास इति॥ ८॥

## न्यायवार्त्तिकतात्पर्यटीका

यथा नित्यः शब्दः चाक्षुषत्वादिति अयमसिद्धः। तनुभुवनादीनामकर्तेश्वरोऽशरीरत्वादित्याश्रयासिद्धः। स श्यामो मैत्रतनयत्वात् परिदृश्यमानमैत्रतनयस्तोमवदित्यन्यथासिद्धः, अन्नपानपरिणतिभेदनिबन्धनत्वाद्रूपभेदस्यान्यथासिद्धत्वमिति। अयमप्यसिद्धत्वादिति भाष्ये अपिशब्देनाऽऽश्रयस्य च्छायायाः सत्त्वेनासिद्धिः सूचिता।

अत्र भदन्तेनेदं साध्यसमलक्षणमुदाहरणान्तरं कल्पयित्वा दूषितम्। इदं किलास्योदाहरणं नित्यः शब्दोऽस्पर्शत्वाद् बुद्धिवत्। तदेतत् त्रिधाऽप्यसिद्धं न भवतीति दूषयित्वा भदन्तेन शङ्कितम् "अथ साध्येनाविशिष्टो दृष्टान्तो यस्मिन् स साध्याविशिष्टो हेत्वाभास इति बुद्धेर्दृष्टान्तस्य नित्यत्वेनासिद्धत्वा"दित्याशङ्क्य (ख) बहुव्रीह्यभावेन दूषितम्। तदेतत् सर्वमनभ्युपगमेन वार्त्तिककारो दूषयति—नित्यः शब्द इति। यद्येतत् नोदाहरणं किमुदाहरणं को वा सूत्रार्थ इत्यत आह—यथा त्वस्माभिरिति। "अयं" भदन्तोक्तः दोष (ग) इत्यर्थः। कस्मादित्यत आह—भदन्तेन सूत्रार्थो न विज्ञातः, न हि सव्यभिचारोऽनेन लक्ष्यते येन सव्यभिचारमस्पर्शवत्त्वमस्योदाहरणं स्यात्, किं तु साध्यसमः; नापि व्यधिकरणबहुव्रीहिदूषणेनाक्षरार्थो ज्ञातः। नापि बुद्धिवदिति दृष्टान्ताभासमेव हेत्वाभासं कुर्वता हेत्वाभासदृष्टान्ताभासौ ज्ञातौ भदन्तेनेत्यर्थः॥ ८॥

## वृत्तिः

अत एव साध्ये साध्यतावच्छेदकाभावः साधने साधनतावच्छेदकाभावश्च व्याप्यत्वासिद्धिः। यथा पक्षतावच्छेदकाभावपक्षतावच्छेदकवद्भेदादेरन्यतमत्वेनाश्रयासिद्धित्वम्, यथा च पक्षे हेत्वभावहेतुमद्भेदादेरन्यतमत्वेन स्वरूपासिद्धित्वम्, तथा साध्यतावच्छेदकाभावादेरन्यतमत्वेन व्याप्यत्वासिद्धित्वम्। त्रितयान्यतमत्वं चाऽसिद्धिसामान्यलक्षणम्।

नीलधूमत्वादेरपि व्याप्यत्वासिद्धावन्तर्भावं वदन्ति, तेषामयमाशयः—व्याप्तिर्हि साध्यसम्बन्धितावच्छेदकरूपा, गुरुधर्मश्च साध्यसम्बन्धितानवच्छेदकः, अतो नीलधूमत्वादेः साध्यसम्बन्धितानवच्छेदकत्वान्न व्याप्तिस्वरूपत्वम्। तथा च साध्यतावच्छेदकाभावादिरिव साधनतावच्छेदके व्याप्यतानवच्छेदकत्वमपि भवति व्याप्यत्वासिद्धिरिति॥ ८॥

---

(१) "यथा चास्माभिः" इत्यादर्शयोः पाठः।

(क) 'तथा' इत्यादर्शपुस्तकपाठः। (ख) बहुव्रीह्यभावेनेति बहुव्रीहिपक्षेऽपि लक्षणासम्भवेनेत्यर्थः। अत्र भदन्तेनेत्यतः दूषितमित्यन्तग्रन्थे दूषि-शङ्कधात्वोरसकृत् प्रयोगात् लिपिकरप्रमादः सम्भाव्यते। (ग) 'इत्यन्वयः' इति सम्भाव्यते।

## (सू०)—कालात्ययापदिष्टः कालातीतः ॥ ९ ॥

### न्यायभाष्यम्

कालात्ययेन युक्तो यस्यार्थै(१)कदेशोऽपदिश्यमानस्य स कालात्ययापदिष्टः कालातीत इत्युच्यते। निदर्शनम्—नित्यः शब्दः संयोगव्यङ्ग्यत्वाद्रूपवत्।

### न्यायवार्त्तिकम्

कालात्ययापदिष्टः कालातीतः। यस्यापदिश्यमानस्य कालात्ययेनैकदेशो युज्यते स एकदेशात्ययात् कालात्ययापदिष्टः कालातीत इत्युच्यते। उदाहरणम्—नित्यः शब्दः संयोग-

### न्यायवार्त्तिकतात्पर्यटीका

काला—तः (सू० ९)॥ अत्र कालातीत इति लक्ष्यनिर्देशः कालात्ययापदिष्ट इति लक्षणम्। हेतोरपदेशस्य हि साध्यसन्देहविशिष्टः कालः। यथाहुः—"नानुपलब्धे न निर्णीते न्यायः प्रवर्त्तते, अपि तु संदिग्धे" इति। परेऽप्याहुः—"संदिग्धे हेतुवचना"दिति। यत्र च प्रत्यक्षानुमानागमविरोधः—अनुष्णोऽग्निर्द्रव्यत्वादिति, अश्रावणः शब्दो गुणत्वादिति (क) च, शुचि नरशिरःकपालं प्राण्यङ्गत्वादिति च, स सर्वः प्रमाणतो विपरीतनिर्णयेन सन्देहविशिष्टं कालमतिपततीति सोऽयं कालस्यात्ययेनापदिश्यमानः कालातीत इति। तथा चोदाहृतं "यत्तु प्रत्यक्षागमविरुद्धं न्यायाभासः सः" इत्यत्र वार्त्तिककृता। बाधाविनाभावयोः सहासंभव इति चात्र बौद्धानामाक्षेपोऽस्माभिः समाहितः(ख)। एवं व्यवस्थिते भाष्यकारः सूत्रं स्वपरमतश्लिष्टं व्याचष्टे—कालात्ययेन संशयकालात्ययेन युक्तो यस्यार्थैकदेशः, धर्मविशिष्टो हि [धर्मी हेतोरपदिश्यमानस्यार्थः, स ह्यर्थ्यते हेतुना, तस्यैकदेशः साध्यधर्मः, स हि धर्मिणि बलवता प्रमाणेन] तद्विपरीतधर्मनिर्णयं कुर्वता संशयकालमतिपातितः, स तादृशो हेतुः कालात्ययापदिष्टः कालातीत इति स्वमतेनास्यार्थः। अत्र च पूर्वमेवोदाहृतमिति पौनरुक्त्यान्नोदाहृतम्। परमते तु कालात्ययेन युक्तो यस्य हेतोरनुरूप (ग) एकदेशो हेतुविशेषणमिति यावत् स कालात्ययापदिष्ट इति योजना। परमतेनैव निदर्शनमाह—निदर्शनमिति। नित्यत्वं चात्रावस्थानमात्रमभिमत-

### वृत्तिः

क्रमप्राप्तमतीतकालं लक्षयति—( कालात्ययेति )

अतीतकालस्य समानार्थकत्वात् कालातीत(२)शब्देनोक्तः। कालस्य साधनकालस्य अत्ययेऽभावेऽपदिष्टः प्रयुक्तो हेतुः। एतेन साध्याभाव(३)प्रमा लक्षणार्थ इति सूचितम्,

---

(१) "यदर्थस्यै-" इति भा०, "यस्यार्थस्यै-" इति ग०। (२) "शब्देनोक्तम्" इति ल०। (३) "-प्रमाण-" इति व०।

(क) 'च'कारोऽयं निष्प्रयोजनः। (ख) ३९ पृ० भाष्यवार्त्तिकतात्पर्यटीका द्रष्टव्या:। (ग) अनुरूप इत्यत्र अपदिष्ट इति पाठः सम्भाव्यते।

### न्यायभाष्यम्

प्रागूर्ध्वं च व्यक्तेरवस्थितं रूपं प्रदीपघटसंयोगेन व्यज्यते, तथा च शब्दोऽप्यवस्थितो भेरीदण्डसंयोगेन व्यज्यते दारुपरशुसंयोगेन वा, तस्मात् संयोगव्यङ्ग्यत्वान्नित्यः शब्द इति ; अयमहेतुः कालात्ययापदेशात्। व्यञ्जकस्य संयोगस्य (१)कालं न व्यङ्ग्यस्य रूपस्य व्यक्तिरत्येति। सति (२)प्रदीपसंयोगे रूपस्य ग्रहणं भवति, (३)न निवृत्ते संयोगे रूपं गृह्यते। निवृत्ते दारुपरशुसंयोगे दूरस्थेन शब्दः श्रूयते विभागकाले। सेयं शब्दस्य व्यक्तिः संयोगकालमत्येतीति न (४)संयोगनिर्मिता भवति। कस्मात्? कारणाभावाद्धि कार्याभाव इति। एवमुदाहरणसाधर्म्यस्याभावादसाधनमयं हेतुर्हेत्वाभास इति।

### न्यायवार्त्तिकम्

व्यङ्ग्यत्वाद् इति। उपलब्धिकाले संयोगो नास्ति, सोऽयं संयोगो हेतुविशेषणत्वेनोपात्त उपलब्धि-कालमत्येति यदोपलभ्यते तदा संयोगो नास्ति दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ शब्दोपलब्धिरिति। नन्वयमनैकान्तिक एव संयोगव्यङ्ग्यत्वादिति—अनित्यमपि संयोगेन व्यज्यमानं दृष्टम्, यथा घट इति। (५)न, संयोग(६)व्यङ्ग्यत्वेनावस्थानस्य साध्यत्वात्—न ब्रूमो नित्यः शब्द इति, अपि त्ववतिष्ठते शब्द इति प्रतिज्ञार्थः, तथा च संयोगव्यङ्ग्यत्वादित्ययं हेतुर्नानैकान्तिकः। न ह्यनव-स्थितं किञ्चित् संयोगेन व्यज्यमानं दृष्टमिति।

### न्यायवार्त्तिकतात्पर्यटीका

मिति, अन्यथा घटादिभिरालोकसंयोगव्यङ्ग्यैर्व्यभिचारः। तदेतत् पञ्चावयवं वाक्यमुपन्यस्य संयोगव्यङ्ग्यत्वस्य हेतोरेकदेशस्य विशेषणस्य संयोगस्य व्यक्तिकालात्ययेन हेत्वाभासतामाह—अयमहेतुरिति। स पुनरयमसिद्धविशेषणतया हेत्वाभासः साध्यसम एवेति न पृथग्वाच्य इति स्थूलतया एष दोषो भाष्यकारेण नोद्भावितः। यत्पुनर्भदन्तेन कालातीतस्य व्याख्यानं कृतं—प्रतिज्ञानन्तरं हि हेतोः कालः, तमतीत्य हेतुः पश्चादपदिश्यमानः कालातीतो भवति, तद् यथा—अनित्यः शब्दो घटादिवदित्युक्ते कस्मादित्यनुयुक्तो ब्रूते कृतकत्वादिति स कालातीत इति। तेन चैवं दूषितं—किं निराकाङ्क्षे वादिन्येष प्रतिवादिनः प्रश्नः, आहो साकाङ्क्षे? यदि निराकाङ्क्षे, तदा न्यूनमेवास्य निग्रहस्थानम्, न हेत्वाभासस्तस्याप्रयोगात्। प्रयुक्तो हि हेतुस्तदाभासो वा स्यात् नाप्रयुक्तः। अथ साकाङ्क्ष एव वादिनि प्रतिवादिनः प्रश्नस्तथाऽपि पश्चादप्यसौ हेतुः प्रयुक्तो हेतुरेव, न ह्यसौ तदा न स्वसाध्याविनाभूतोऽपक्षधर्मो वेति ; तस्मान्न कालातीतो

(१) "कालम्" इति ट-पु० नास्ति। (२) "प्रदीपघटसंयोगे" इति भा०। (३) "न" इति नास्ति ग०। (४) "संयोगनिमित्ता" इति टि०। (५) ख-पु०—"न" नास्ति। (६) "-व्यङ्ग्यत्वेनानवस्थानस्य" इति ख०।

## न्यायभाष्यम्

अवयवविपर्यासवचनं तु न सूत्रार्थः। कस्मात्?

'यस्य येनार्थसम्बन्धो दूरस्थस्यापि तस्य सः।
अर्थतो ह्यसमर्थानामानन्तर्यमकारणम्' ॥

इत्येतद्वचनाद् विपर्यासेनोक्तो हेतुरुदाहरणसाधर्म्यात्तथा वैधर्म्यात् (१)साध्यसाधनं हेतुलक्षणं न जहाति। (क)अजहद्धेतुलक्षणं न हेत्वाभासो भवतीति।

'अवयवविपर्यासवचनमप्राप्तकालम्' ( अ० ५, आ० २, सू० ११ ) इति निग्रहस्थानमुक्तम्, तदेवेदं पुनरुच्यत इति, अतस्तन्न सूत्रार्थः ॥ ९ ॥

## न्यायवार्त्तिकम्

अवयवविपर्यासवचनमपि(२) न सूत्रार्थः सामर्थ्यात्—न हि पश्चादभिधीयमानो हेतुरुदाहरणसाधर्म्यादित्येतद्धेतुलक्षणं जहाति, अजहद्धेतुलक्षणं न हेत्वाभासो भवितुमर्हतीति। अवयवविपर्यासवचनमप्राप्तकालमिति निग्रहस्थानमुक्तम्, तदेव पुनरुच्यत इति।

समीकृतेऽभिधानान्निग्रहस्थानमिति चेत्—अथ मन्यसे यस्मात् समीकृते (३)पक्षे पश्चादभिधीयते ततो न निग्रहस्थानमिति; केन समीकृत इति वक्तव्यम्। यदि हेत्वनभिधानेन समीकृतः

## न्यायवार्त्तिकतात्पर्यटीका

नास्ति हेत्वाभास इति। तदेतद्भदन्तदूषणमेतद्व्याख्यानानभ्युपगमेन परिहरति—अवयवविपर्यासवचनं त्विति। अनभ्युपगमहेतुं पृच्छति—कस्मादिति। उत्तरम्—यस्येति। अर्थेन सामर्थ्येन संबन्धः अर्थसंबन्धः। अपि च पौनरुक्त्यादपि नाभ्युपगम्यत इत्याह—अवयवेति।

यस्य पदिश्यमानस्येत्यादि—पुनरुच्यते इत्यन्तं वार्त्तिकं भाष्यव्याख्यानेनैव व्याख्यातम्। शङ्कते—समीकृतेऽभिधानादिति। अयमर्थः नैतदप्राप्तकालेन निग्रहस्थानेन पुनरुक्तम् अपि तु हेत्वाभास एव। स ह्यवयवविपर्यास उच्यते यत्रैकग्रन्थेनैव वादी प्रतिज्ञोदाहरणादि प्रयुज्य पश्चाद्धेतुं प्रयुङ्क्ते, एष तु प्रतिज्ञोदाहरणे प्रयुज्य विरतः प्रतिवादिनाऽनुयुक्तः पश्चाद् हेतुं प्रयुङ्क्ते। तस्माद् न्यूनतादूषणेन पक्षे समीकृते पक्षमात्रतां नीते सिद्धावस्थातः प्रच्याविते पश्चादभिधानाद्धेतोरेष कालातीतो हेत्वाभासः, न पुनरप्राप्तकालम्। निग्रहस्थानमिति

## वृत्तिः

साध्याभावनिर्णये सति साधनासम्भवात्। अयमेव बाधितसाध्यक इति गीयते, यथा वह्निरनुष्णः कृतकत्वादित्यादौ। न च बाधे आवश्यकस्य व्यभिचारस्वरूपासिद्ध्यन्यतरस्यैव

(१) "तत्साधनम्" इति ग०, "साधनम्" इति च्या०। (२) "वचनन्तु" इति भाष्ये। (३) क-पुस्तके 'पक्षे' इति नास्ति।

(क) हेतुलक्षणमजहदित्यन्वयः।

## न्यायभाष्यम्

(१)अथ छलम्—

### ( सू० )—वचनविघातोऽर्थविकल्पोपपत्त्या छलम् ॥ १० ॥

( भा० ) न सामान्यलक्षणे छलं शक्यमुदाहर्तुम्, विभागे तूदाहरणानि ॥ १० ॥

## न्यायवार्त्तिकम्

किमत्र हेतोरसामर्थ्यम्? एतदस्यासामर्थ्यं यदयं पश्चादभिधीयत इति। नैतद्धेतोरसामर्थ्यं यदयं पश्चादभिधीयत इति, अपि तु वक्तुरिति। न हि स्वतन्त्रो हेतुः साधनमपि तु (क) साधयितृतन्त्रः, तस्माद्य हेतुदोषः सामर्थ्याचेत्युक्तम्। तस्मादवयवविपर्यासवचनं न सूत्रार्थो न समीकृताभिधानमिति ॥ ९ ॥

वचनविघातोऽर्थविकल्पोपपत्त्या छलम्। वचनविघातो यः क्रियते सामान्यशब्दस्य विशेषानेकसम्बन्धित्वे सति अविवक्षिताध्यारोपेण, छलं तद्वेदितव्यम् ॥ १० ॥

## न्यायवार्त्तिकतात्पर्यटीका

चेदिति निराकरोति—यदीति। हेत्वनभिधानेन न्यूनतया समीकृतः पक्षः किमत्र हेतोरसामर्थ्यम्? न ह्यन्यदोषेणान्यो युज्यत इत्यर्थः। शङ्किता ब्रूते—एतदस्येति। निराकरोति—नैतदिति। न्यूनतया निगृहीतो यदि पश्चादभिधानेन निग्रहीतव्यः ततो वाग्मेव निगृह्यतां न त्वयं पश्चादभिहित इति समर्थः शक्यो हेतुर्निग्रहीतुमिति नायं समीकृताभिहितत्वेनापि हेत्वाभास इत्यर्थः। उभयनिराकरणमुपसंहरति—तस्मादिति ॥ ९ ॥

उद्देशक्रमानुरोधेन लक्षणक्रमस्य हेत्वाभासानन्तरं (२) छलस्योद्देशाच्छललक्षणस्यापि हेत्वाभासलक्षणानन्तर्यमाह भाष्यकारः—अथ छलम्।

वच—लम् (सू० १०)। यथा वक्तुरभिमतोऽर्थः ततो विरुद्धः अर्थः तस्य विकल्पः कल्पना, सैवोपपत्तिः, तया। अथ लक्षणान्तरवच्छलस्य सामान्यलक्षणे कस्मादुदाहरणं न दीयत इत्यत आह—न सामान्यलक्षणे इति। सामान्यविशेषवत् सर्वमुदाहरणम्, निर्विशेषस्य सामान्यस्यासत्त्वेन केवलस्य सामान्यस्योदाहरणमशक्यमित्यर्थः। विभागे त्विति, विभज्यत इति विभागो विशेषलक्षणं तस्मिन् उदाहरणानि ॥ १० ॥

## वृत्तिः

दोषत्वमुचितमिति वाच्यम्, तदप्रतिसन्धानेन बाधस्य दोषत्वावश्यकत्वात्, उपधेयसङ्करेऽप्युपाधेरसङ्करात्, उत्पत्तिकालावच्छिन्नो घटो गन्धवान् शिखरावच्छिन्नः पर्वतो वह्निमानित्यादावसङ्कराच साध्याभाववत्पक्षतावच्छेदकावच्छिन्नत्वस्य तत्र सत्त्वात्।

---

(१) भा-पु०—"अथ छलम्" इत्यंशो नास्ति। (२) 'छलस्योद्देशा-' क०।

(क) आदर्शपुस्तकयोः "साधयितृतन्त्रत्वात्" इति पाठः प्रामादिकः।

न्यायभाष्यम्

विभागश्च—

**( सू० )—तत् त्रिविधं वाक्छलं सामान्यच्छलमुपचारच्छलं चेति ॥ ११ ॥**

( भा० ) तेषाम्—

**( सू० )—अविशेषाभिहितेऽर्थे वक्तुरभिप्रायादर्थान्तर-कल्पना वाक्छलम् ॥ १२ ॥**

( भा० ) नवकम्बलोऽयं माणवक इति प्रयोगः। अत्र नवः कम्बलोऽस्येति वक्तुरभिप्रायः। विग्रहे तु विशेषः, न समासे। तत्रायं छलवादी वक्तुरभिप्रायादविवक्षितमन्यमर्थं

न्यायवार्त्तिकम्

तत्त्रिविधमिति नियमार्थं पूर्ववत् अनेकधा भिन्नं छलं संगृह्यत इति ॥ ११ ॥

न्यायवार्त्तिकतात्पर्यटीका

छलसामान्यलक्षणमभिधाय तद्विशेषलक्षणान्यभिधातुं प्रथमं तावन्न्यूनाधिकसंख्याव्यवच्छेदार्थं विभागमवतारयति—विभागश्चेति। विभज्यतेऽनेनेति विभागः सूत्रमुच्यते ॥ ११ ॥

तत्र च विशेषलक्षणमवतारयति—तेषाम् छलानां मध्ये वाक्छलं लक्ष्यते—

अवि—लम् ( सू० १२ )। नवः कम्बलो यस्येति एकत्र विग्रहः नव कम्बला अस्येति अपरत्रेति विग्रहे विशेषः। वाक्छलशब्दार्थं व्युत्पादयति—

वृत्तिः

परे तु घटः सकर्तृकः कार्यत्वादित्यादौ यत्र लाघवोपनीतमेकमात्रकर्तृकत्वं भासत इत्युच्यते तत्र तदभावोऽसङ्कीर्णमुदाहरणमिति वदन्ति ॥ ९ ॥

हेत्वाभासप्रकरणं समाप्तम् ॥

क्रमप्राप्तं छलं लक्षयति—( वचनेति )।

अर्थस्य वाद्यभिमतस्य यो विकल्पो विरुद्धः कल्पोऽर्थान्तरकल्पनेति यावत्, तदुपपत्त्या युक्तिविशेषेण यो वचनस्य वाद्युक्तस्य विघातो दूषणम्, तच्छलमित्यर्थः। वक्तृतात्पर्याविषयार्थकल्पनेन दूषणाभिधानमिति फलितम्।

तात्पर्याविषयत्वं विशेष्ये विशेषणे संसर्गे वा। यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्यत्र नवसङ्ख्यापरत्वकल्पनयाऽसिद्ध्यभिधानम्। सर्वं प्रमेयं धर्मत्वादित्यत्र पुण्यत्वार्थकल्पनया भागासिद्ध्यभिधानम्। वह्निमान् धूमादित्यत्र धूमावयवे व्यभिचाराभिधानम् ॥ १० ॥

लक्षितं छलं विभजते—( तत्त्रिविधमिति ) ॥ ११ ॥

## न्यायभाष्यम्

नव कम्बला अस्येति तावदभिहितं भवतेति कल्पयति, कल्पयित्वा चासम्भवेन प्रतिषेधति एकोऽस्य कम्बलः कुतो नव कम्बला इति। तदिदं सामान्यशब्दे वाचि छलं वाक्छलमिति।

अस्य प्रत्यवस्थानम् – सामान्यशब्दस्यानेकार्थत्वेऽन्यतराभिधानकल्पनायां विशेषवचनम्। नवकम्बल इत्यनेकार्थाभिधानम्, नवः कम्बलोऽस्येति नव कम्बला अस्येति ; एतस्मिन् प्रयुक्ते येयं कल्पना नव कम्बला अस्येत्येतद्भवताऽभिहितं तच्च न सम्भवतीति, एतस्यामन्यतराभिधानकल्पनायां विशेषो वक्तव्यः। यस्माद्विशेषो(१)ऽर्थविशेषेषु विज्ञायतेऽयमर्थोऽनेनाभिहित इति। स च विशेषो नास्ति। तस्मान्मिथ्याभियोगमात्रमेतदिति।

प्रसिद्धश्च लोके शब्दार्थसम्बन्धोऽभिधानाभिधेयनियमनियोगः। अस्याभिधानस्यायमर्थोऽभिधेय इति समानः सामान्यशब्दस्य, विशेषो विशिष्टशब्दस्य। प्रयुक्तपूर्वाश्चेमे शब्दा अर्थे प्रयुज्यन्ते नाप्रयुक्तपूर्वाः। प्रयोगश्चार्थसम्प्रत्ययार्थः। अर्थप्रत्ययाच्च व्यवहार

## न्यायवार्तिकतात्पर्यटीका

वाचि निमित्ते छलं वाक्छलमिति। नवकम्बल इति उभयत्रापि समानायां वाचि निमित्तभूतायामित्यर्थः। तदेतच्छलं पराजयावस्थायां जल्पे प्रयोक्तव्यमित्युक्तम्। परवाक्ये पर्यनुयोगोऽस्येति चोक्तम्। तदत्र यथा पर्यनुयोगस्तथा दर्शयति शिष्यहिततया भाष्यकारः—अस्य प्रत्यवस्थानमिति, उभयार्थभानेऽसंभवदर्थकल्पनमयुक्तमित्यर्थः।

अथ प्रयोक्ताऽपि कथं साधारणेन शब्देनार्थविशेषं बोधयति ? अबोधयंश्च कथं प्रतिपादको नाम ? इत्यत आह—प्रसिद्धश्चेति। सम्बन्धस्वरूपमाह—अभिधानाभिधेययोर्यो नियमः (क)अयमेव शब्दोऽस्यैवार्थस्येति, तत्र यः पुरुषस्य नियोगः अस्मादयमेव बोद्धव्य इत्येवमाकारः। किमतो यद्येवमत आह—प्रयुक्तपूर्वाश्चेति। तथाऽपि किमित्यत आह—प्रयोगश्चेति। तामिमां भूमिरचनां प्रकृते योजयति—तत्रैवमर्थगत्यर्थ इति। एतदुक्तं भवति—

## वृत्तिः

तत्र वाक्छलं लक्षयति—( अविशेषेति )।

यत्र शक्यार्थद्वये सम्भवति एकार्थनिर्णायकविशेषाभावादनभिप्रेतशक्यार्थकल्पनेन

---

(१) भा पु०—"अर्थविशेषेषु" इति नास्ति।

(क) "अयमेवार्थोऽस्य शब्दस्य, अयं शब्दोऽस्यैवार्थस्य" इति पाठे स्पष्टोऽर्थः। क-तात्पर्यं तु "अयमेवार्थोऽस्य शब्दोऽस्यैवार्थस्ये"ति पाठो गृहीतः।

## न्यायभाष्यम्

इति। तत्रैवमर्थगत्यर्थे शब्दप्रयोगे सामर्थ्यात् सामान्यशब्दस्य प्रयोगनियमः। अजां ग्रामं नय सर्पिराहर ब्राह्मणं भोजयेति सामान्यशब्दाः सन्तोऽर्थावयवेषु प्रयुज्यन्ते सामर्थ्यात्, यत्रार्थक्रिया(१)चोदना सम्भवति तत्र प्रवर्त्तन्ते नार्थसामान्ये, क्रियादेशना(२)सम्भवात्। एवमयं सामान्यशब्दो नवकम्बल इति योऽर्थः सम्भवति नवः कम्बलोऽस्येति तत्र प्रवर्तते, यस्तु न सम्भवति नव कम्बला अस्येति तत्र न प्रवर्त्तते। सोऽयमनुपपद्यमानार्थकल्पनया (३) परवाक्योपालम्भो न कल्पत इति ॥ १२ ॥

## न्यायवार्त्तिकम्

अविशेषाभिहितेऽर्थे इति सूत्रम्। अविशेषाभिहितम् सामान्यश्रुति वाक्यं पदं वा अविशेषाभिहितमित्युच्यते। वाक्यं सामान्यश्रुति यथा नवकम्बलोऽयमिति। पदं सामान्यश्रुति यथा अश्वोऽश्व इति। अविशेषशब्दानभिधानं प्रयोगाभावात्—न ह्यविशेषशब्देन कस्यचिदभिधानं सम्भवति, न चास्य प्रयोगो युक्त इति, वाक्यं च सर्वमुच्चरद्विशेषमेव प्रत्याययतीति सामान्य-

## न्यायवार्त्तिकतात्पर्यटीका

न संकेतकरणावस्थायां वृद्धव्यवहारे वा कश्चिच्छब्दः कञ्चिदर्थं शृङ्गग्राहिकया बोधयति, अपि तु सामान्यद्वारेणार्थप्रकरणादिसहकारी विशेषे वर्त्तते। तस्मान्नैव प्रतिपादयितुरपराधो यदेष विशेषशब्दैर्विशेषान्न प्रतिपादयति, किन्तु संकेतस्यापराधो यो विशेषमपहाय सामान्ये शब्दानां वर्त्तते। तस्माद् यथासंकेतं बोधयन्नापराध्यः प्रयोक्तेति सिद्धम्। सामर्थ्यमेव दर्शयति—यत्रार्थक्रियाचोदनेति।

स्यादेतत्—अविशेषाभिहितेऽर्थ इति न युक्तम्, न हि नवकम्बल इति पदं प्रकरणादिनिरपेक्षं कञ्चिदर्थमविशेषेणाभिधत्ते गवादिशब्दवत्। न हि संख्याविशेषे च नवीनत्वे चास्ति कश्चित् सामान्यविशेषो बाहुलेयादिष्विव गोत्वं यमभिदधीतेत्यत आह वार्त्तिककारः—सामान्यश्रुतीति। अभिहितिः अभिहितम् उच्चारणमिति यावत्। समानः शब्दो नार्थं सामान्यमित्यर्थः। अश्व इति नामपदमश्वत्वस्य वाचकम्, आख्यातपदं यदा कस्यचिदभिमुखं प्रयुज्यते अश्व इति, तदा वृद्धिं गतोऽसीति प्रतीयते। चोदयति—अविशेषेति। समानो हि शब्दोऽभिधेये संशयमाधत्ते न

## वृत्तिः

दूषणाभिधानं तद् वाक्छलम्। (४) लक्षणन्तु शक्त्या एकार्थशाब्दबोधतात्पर्यकशब्दस्य

---

(१) "देशना" इति ख०। (२) "क्रियादेशना सम्भवेत्" इति भा०। (३) "परवाक्योपालम्भो" इति ख-ग-भा०। (४) अत्र "लक्षणन्तु" इति ख-पु० नास्ति।

## (सू०)—सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम् ॥ १३ ॥

### न्यायभाष्यम्

अहो खल्वसौ ब्राह्मणो विद्याचरणसम्पन्न इत्युक्ते कश्चिदाह सम्भवति ब्राह्मणे

### न्यायवार्त्तिकम्

प्रत्यायनमयुक्तम् ; न, प्रकरणादीनन्तरेण श्रुतिमात्रात्तदुपपत्तेः—यदा प्रकरणादिनिरपेक्षं वाक्यमुच्चार्यते श्वेतो धावतीति, तदा (१)वाक्यश्रुतिसामान्यात् श्रोतुः सम्मोहः, सम्मोहे सत्यविवक्षितमर्थमध्यारोप्य प्रतिषेधति। एवं पदेऽपीति। अर्थग्रहणं शब्दनिराकरणाय, अर्थविषयं छलं न शब्दविषयमिति ; न ह्ययं प्रतिषेद्धुं शक्नोति नायं नवकम्बलशब्द इति। तस्य प्रत्यवस्थानम्—ज्ञात्वाऽज्ञात्वा वा प्रयोगात् प्रतिषेधानुपपत्तिः—यदि तावन्नवकम्बलस्यार्थं बुद्ध्वा नायं नवकम्बल इति प्रत्यवतिष्ठते तदाऽर्थान्तरमाह अन्यद् बुध्यतेऽन्यत् प्रतिषिध्यत इति। अथ पुनर्नैव नवकम्बलस्यार्थं बुध्यते तथाऽप्यज्ञानमिति ॥ १२ ॥

### न्यायवार्त्तिकतात्पर्यटीका

स्वर्थमभिधत्त इत्यर्थः। परिहरति—न प्रकरणादीति। श्वेतो धावतीति, सारमेयो द्रुततरं याति, श्वित्री निर्णेनेक्तीत्यर्थः। अर्थ इत्यस्य प्रयोजनमाह—अर्थग्रहणमिति। अविशेषश्रुतौ शब्दे सति अर्थे अर्थान्तरकल्पना न शब्द इत्यर्थः। अस्य प्रत्यवस्थानमित्यादि भाष्यं व्याचष्टे—तस्येति। सुगमम् ॥ १२ ॥

संभव—लम् ( सू० १३ )। संभवतोऽर्थस्य ब्राह्मणविशेषस्य (क)विद्याचरणसंपदा, (२) विद्याचरणसंपदमत्येति यत्सामान्यं ब्राह्मणत्वं व्रात्ये ब्राह्मणे, तस्य ब्राह्मणत्वस्यातिसामान्यस्य योगादसंभूतार्थकल्पनया यः प्रतिषेधः तत् सामान्यच्छलम्। अहो (ख)खल्वयं

### वृत्तिः

(३)शक्त्याऽर्थान्तरतात्पर्यकत्वकल्पनया दूषणाभिधानम्। यथा नेपालादागतोऽयं नवकम्बलवत्त्वादित्युक्ते कुतोऽस्य नवसङ्ख्याकाः कम्बला इति। गौर्विषाणीत्युक्ते (४)कुतो वाणस्य विषाणम्। गजो विषाणीत्युक्ते कुतो गजस्य शृङ्गम्। श्वेतो धावतीति (५)श्वेतरूपवदभिप्रायेणोक्ते श्वा इतो न धावतीत्य(६)भिधानमित्यादिकमूह्यम् ॥१२॥

---

(१) "वाक्यं श्रुति-" इति क। (२) "विद्याचरणं सम्पदन्वेति" इति क-तात्पर्यपाठः। (३) "शक्त्यार्थान्तर" इति व। (४) आ-व पुस्तकयोः—"कुतो वाणस्य विषाणम्, गजो विषाणीत्युक्ते" इत्यंशो नास्ति। (५) "श्वेतरूपवदभिप्रायेणोक्तश्वेतो" इति व। (६) "अभिधान"मित्यत्र "अधावन"मिति आ०।

(क) "विद्याचरणसम्पदे"ति विशेषणे तृतीया। (ख) "खल्वसौ" इति भाष्ये।

## न्यायभाष्यम्

विद्याचरणसम्पदिति। अस्य वचनस्य विघातोऽर्थविकल्पोपपत्त्याऽसम्भूतार्थकल्पनया क्रियते—यदि ब्राह्मणे विद्याचरणसम्पत् सम्भवति व्रात्येऽपि सम्भवेत्, व्रात्योऽपि ब्राह्मणः, सोऽप्यस्तु विद्याचरणसम्पन्न इति। यद्विवक्षितमर्थमाप्नोति चात्येति च तदतिसामान्यम्। यथा ब्राह्मणत्वं विद्याचरणसम्पदं क्वचिदाप्नोति क्वचिदत्येति। सामान्यनिमित्तं छलं सामान्यच्छलमिति।

अस्य च प्रत्यवस्थानम्—अविवक्षितहेतुकस्य विषयानुवादः प्रशंसार्थत्वाद् वाक्यस्य; तदत्रासम्भूतार्थकल्पनानुपपत्तिः। यथा सम्भवन्त्यस्मिन् क्षेत्रे शालय इति अनिराकृतमविवक्षितं च बीजजन्म, प्रवृत्तिविषयस्तु क्षेत्रं प्रशस्यते; सोऽयं क्षेत्रानुवादः नास्मिन् शालयो विधीयन्त इति; बीजात्तु शालिनिर्वृत्तिः सती न विवक्षिता। एवं सम्भवति ब्राह्मणे विद्याचरणसम्पदिति सम्पद्विषयो ब्राह्मणत्वं न सम्पद्धेतुः। न चात्र हेतुर्विवक्षितः। विषयानुवादस्त्वयं प्रशंसार्थत्वाद् वाक्यस्य, सति ब्राह्मणत्वे सम्पद्धेतुः समर्थ इति। विषयं च प्रशंसता वाक्येन यथाहेतुतः फलनिर्वृत्तिर्न प्रत्याख्यायते। तदेवं सति वचनविघातोऽसम्भूतार्थकल्पनया नोपपद्यत इति॥ १३॥

## न्यायवार्त्तिकम्

सम्भवतोऽर्थस्यातिसामान्ययोगादसम्भूतार्थकल्पना सामान्यच्छलम्। सामान्यस्य विवक्षितार्थातिक्रमः अतिसामान्यम्। उदाहरणम्—विद्याचरणसम्पन्नो ब्राह्मण इति। (क)परन्तु ब्राह्मण्यं विद्याचरणसम्पन्नत्वे हेतुरिति कृत्वा प्रत्यवतिष्ठते, स्तुत्यर्थे वाक्येऽन्यथाकारं प्रत्यवस्थानम्। उभयथा दोषो बुद्ध्वाऽबुद्ध्वा वेति॥ १३॥

## न्यायवार्त्तिकतात्पर्यटीका

ब्राह्मणो विद्याचरणसंपन्न इति हि स्तुत्यर्थं वाक्यमभ्यनुजानतोक्तं संभवति ब्राह्मणे विद्याचरणसंपदिति, तदपि वाक्यं स्तुत्यर्थमेव, न त्वस्य ब्राह्मणत्वाद्धेतोर्विद्याचरणसंपद्विवक्षितेति। तत्र परो हेतुत्वमस्याविवक्षितमारोप्य वचनं विहन्तीति तदिदं सामान्यच्छलमिति। विषयानुवाद इति, संपद्विषयस्य ब्राह्मणत्वस्यानुवाद इत्यर्थः। कस्य? अविवक्षितहेतुकस्य पुंसः। तदेतद् वार्त्तिककारो व्याचष्टे—सामान्यस्येति, विवक्षितार्थमतिगतं सामान्यमित्यर्थः॥ १३॥

## वृत्तिः

सामान्यच्छलं लक्षयति—( सम्भवत इति )।

सामान्यविशिष्टसम्भवदर्थाभिप्रायेणोक्तस्य 'अतिसामान्ययोगादसम्भव(१)दर्थकल्पनया'

(१) "-दर्थकल-" इति व०।

(क) "परस्तु" इति पाठो युक्तः।

## (सू०)—धर्मविकल्पनिर्देशेऽर्थसद्भावप्रतिषेध उपचारच्छलम् ॥ १४ ॥

### न्यायभाष्यम्

अभिधानस्य धर्मो यथार्थप्रयोगः, धर्मविकल्पोऽन्यत्र दृष्टस्यान्यत्र प्रयोगः, तस्य निर्देशे धर्मविकल्पनिर्देशे। यथा मञ्चाः क्रोशन्तीति अर्थसद्भावेन प्रतिषेधः,

### न्यायवार्त्तिकतात्पर्यटीका

धर्म—लम् ( सू० १४ )॥ (क)शब्दस्य धर्मः प्रयोगः, तस्य विकल्पो द्वैविध्यम्। (१)द्विविधः प्रयोगः प्रधानो भाक्तश्च। तत्रापि प्रधान औत्सर्गिकः, तस्य तु क्वचिदपवादाद्ध भाक्तो भवति। तदेतदाह भाष्यकारः—अभिधानस्य शब्दस्य (२)यथार्थप्रयोगो धर्मः औत्सर्गिकः, तत्किमयमेव ? नेत्याह—(३)तस्य च विकल्पो द्वैविध्यम्, कोऽसौ द्वितीय इत्यत आह—(४) उत्सर्गस्य तु कुतश्चिदपवादाद्ध अन्यत्र दृष्टस्यान्यत्र प्रयोगः। तदेवं व्यवस्थिते धर्मविकल्पेन निर्देशे वाक्ये निर्दिश्यतेऽनेनेति व्युत्पत्त्या। तत्र भाक्तविवक्षायां मञ्चाः क्रोशन्तीति,

### वृत्तिः

दूषणाभिधानं सामान्यच्छलम्। यथा ब्राह्मणोऽयं विद्याचरणसम्पन्न इत्युक्ते ब्राह्मणत्वेन विद्याचरणसम्पदं साधयतीति कल्पयित्वा परो वदति कुतो ब्राह्मणत्वेन विद्याचरणसम्पत्, (५) व्रात्ये व्यभिचारात् ॥ १३ ॥

---

(१) आदर्शपुस्तकयोः इतःपूर्वं 'तस्य च' इति पठितम्। (२) 'यथार्थं प्रयोगं' इत्यादर्शपुस्तकयोः पाठः। (३) आदर्शपुस्तकयोः 'तस्य च' इति नास्ति। (४) "उत्सर्गस्य क्वचित्" इति ख-तात्पर्यपाठः। (५) "वात्ये" इति व०।

(क) उपचारच्छलं व्याख्यातुं सूत्रस्थधर्मपदस्य सम्बन्धिपदं पूरयित्वाऽऽह—शब्दस्येति। उक्तं द्वैविध्यमुपपादयति—द्विविधः प्रयोग इति। प्राधान्यभाक्तत्वयोर्विषयं विभजते—तत्रापि प्रधान इति। यथार्थप्रयोगो धर्म इति भाष्यगते पदे व्युत्क्रम्य गृह्णीते। यथार्थं प्रयोगो यद्यौत्सर्गिक एक एव तदा उपचारच्छलमेव न सम्भवतीति तदुपपादनार्थं पृच्छति—तत् किमिति। औत्सर्गिक एक एव प्रयोगः किमिति प्रश्नः। समाधत्ते—नेत्याहेति। भाष्यगतं धर्मविकल्प इति व्याचष्टे—तस्य चेति। धर्मपदस्य पूर्वं व्याख्याततात् तदपहायैव तच्छब्देन धर्मस्य परामर्शः। उक्ते द्वैविध्ये औत्सर्गिकः प्रथम इत्युक्तप्रायमितरतः पारिशेष्याद् भाक्तं मनसिकृत्य पृच्छति—कोऽसाविति। अत्र तात्पर्यटीकायां 'द्विविध' इत्यतः पूर्वम् आदर्शपुस्तकयोर्मुद्रितोऽपि 'तस्य च' इत्यंशः 'नेत्याह' इत्यतः परं पठितुमुचित इति मुद्राकृत्प्रमादबुद्ध्या स्थानान्तरे गृहीतः।

## न्यायभाष्यम्

मञ्चस्थाः पुरुषाः क्रोशन्ति (१)न तु मञ्चाः क्रोशन्ति ।

का पुनरत्रार्थविकल्पोपपत्तिः ? अन्यथा प्रयुक्तस्यान्यथाऽर्थकल्पनम्, भक्त्या प्रयोगे प्राधान्येन कल्पनम् उपचारविषयं छलमुपचारच्छलम्। उपचारो नीतार्थः सहचरणादिनिमित्तेन, अतद्भावे तद्वदभिधानमुपचार इति ।

अत्र समाधिः—(२)प्रसिद्धे प्रयोगे वक्तुर्यथाभिप्रायं शब्दार्थयोरभ्यनुज्ञा प्रतिषेधो वा न च्छन्दतः। प्रधानभूतस्य शब्दस्य भाक्तस्य च गुणभूतस्य प्रयोग उभयोर्लोकसिद्धः। सिद्धे प्रयोगे यथा वक्तुरभिप्रायस्तथा शब्दार्थावनुज्ञेयौ प्रतिषेध्यौ वा न च्छन्दतः। यदि वक्ता प्रधानशब्दं प्रयुङ्क्ते यथाभूतस्याभ्यनुज्ञा प्रतिषेधो वा, न च्छन्दतः। अथ गुणभूतम्, तदा गुणभूतस्य। यत्र तु वक्ता गुणभूतं शब्दं प्रयुङ्क्ते प्रधानभूतमभिप्रेत्य परः प्रतिषेधति, स्वमनीषया प्रतिषेधोऽसौ भवति न परोपालम्भ इति ॥ १४ ॥

## न्यायवार्त्तिकम्

धर्मविकल्पनिर्देश इति सूत्रम्। धर्मविकल्पनिर्देशशब्देनाभिधानधर्मो द्वेधाऽभिधीयते

## न्यायवार्त्तिकतात्पर्यटीका

अत्रार्थसद्भावेन प्रतिषेधः। तमेवार्थसद्भावमाह—मञ्चस्थाः पुरुषाः क्रोशन्ति न तु मञ्चाः क्रोशन्तीति। वार्त्तिकमते त्वर्थसद्भावस्यैव प्रतिषेध इति व्याख्येयम्। ननु यद्यन्यत्र दृष्टस्यान्यत्र प्रयोगः, हन्त सर्वं सर्वत्र प्रयुज्येतेत्यत आह—उपचारो नीतार्थः, प्रापितार्थः। सहचरणादिना निमित्तेनेति, अन्यत्र दृष्टस्याप्यन्यत्र प्रयोगः संबन्धादेव भवतीति नातिप्रसङ्ग इत्यर्थः। न च्छन्दतः न छद्मनेत्यर्थः। ननु यदि भाक्ततयाऽप्युपपत्तिर्न किंचिज्जल्पाकभाषितं दुष्टं स्यात्, सर्वस्यैव यथाकथंचिद्भाक्तत्वेनोपपत्तेरित्यत आह—प्रधानभूतस्येति। भाक्तस्येत्येतावति वक्तव्ये प्रधानग्रहणं सिद्धतया दृष्टान्तलाभाय। लोकसिद्ध एवोपचारः कर्त्तव्यो नापूर्वो विना प्रयोजनम्, लोकसिद्धश्चायमुपचारो मञ्चाः क्रोशन्तीत्यर्थः।

सूत्रव्याख्यानपरं वार्त्तिकं धर्मविकल्पनिर्देशशब्देन सूत्रस्थेन। अभिधानं प्रयोगः शब्दस्य

## वृत्तिः

उपचारच्छलं लक्षयति—( धर्मविकल्पेति )।

(३) 'धर्मः' शब्दस्यार्थेन सम्बन्धः। तस्य विकल्पः विविधः कल्पः शक्तिलक्षणान्यतररूपः। तथा च शक्तिलक्षणयोरेकतरवृत्त्या प्रयुक्ते शब्दे तदपरवृत्त्या यः प्रति-

(१) "न तु मञ्चाः क्रोशन्ति" इत्यंशः फ-पु० नास्ति। (२) 'सिद्धे' इति आ-वि-टि। (३) "धर्मशब्दस्यार्थेन" इति व०।

# (सू०)—वाक्छलमेवोपचारच्छलं तदविशेषात् ॥ १५ ॥

## न्यायभाष्यम्

न वाक्छलादुपचारच्छलं भिद्यते तस्याप्यर्थान्तरकल्पनाया अविशेषात्। इहापि स्थान्यर्थो गुणशब्दः प्रधानशब्दः स्थानार्थ इति कल्पयित्वा प्रतिषिध्यत इति ॥ १५ ॥

## न्यायवार्त्तिकम्

प्रधानं भाक्तश्च। मञ्चा इति काष्ठसंघातेषु प्रधानं मञ्चशब्दः, क्रोशनक्रियाया असम्भवमीक्षित्वा स्थानिषु पुरुषेषु भाक्तः। सोऽयमभिधानाभिधेय(१)व्यवहार एवं व्यवतिष्ठते। य एतस्मिन्नन्यथाकारप्रतिषेधः तदुपचारच्छलमिति। अस्यापि पूर्ववत् प्रतिषेधो ज्ञात्वाऽज्ञात्वा वेति ॥१४॥

वाक्छलमेवोपचारच्छलमिति सूत्रम्। एकत्वम् अविशेषात्। कोऽविशेषः? इहाप्यर्थान्तरकल्पना तत्रापीति ॥ १५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

धर्मो भवन् द्विधाऽभिधीयते। द्वैविध्यमाह—प्रधानमिति। सोऽयमभिधानाभिधेयव्यवहार इति, अभिधानं शब्दः अभिधेयो गम्यः, स च क्वचिद्वाच्यः क्वचिद्भाक्त इति सुबोधम् ॥ १४ ॥

परीक्षापर्वणः सन्निधानात्तदर्थं लक्षणपर्वण्यपि (क) योग्यायै सूत्रकारश्छललक्षणं परीक्षते—

वाक्छ—त् ( सू० १५ ) ॥ स्थान्यर्थो गुणशब्दो यो वस्तुतः (२)स एव प्रधानशब्दः स्थानार्थ इति कल्पयित्वेति योजना। यथा वाक्छले नवीनार्थो नवशब्दः संख्याभेदे कल्पितस्तथेहापीति पूर्वपक्षः ॥ १५ ॥

## वृत्तिः

षेधः, स उपचारच्छलम्। यथा मञ्चाः क्रोशन्ति नीलो घट इत्यादौ मञ्चस्था एव क्रोशन्ति न तु मञ्चाः, एवं घटस्य कथं नीलरूपाभेदः। एवमहं नित्य इति शक्त्या प्रयुक्तेऽमुकस्मादुत्पन्नस्त्वं कथं नित्य इति प्रतिषेधोऽप्युचारच्छलम्।

वाद्यभिप्रेतार्थस्यादूषणेन छलस्यासदुत्तरत्वम्। न च श्लिष्टलाक्षणिकप्रयोगाद्वादिन एवापराधः स्यादिति वाच्यम् तत्तदर्थबोधकतया प्रसिद्धस्य शब्दस्य प्रयोगे वादिनोऽनपराधात्, अन्यथा पर्वतो वह्निमानित्युक्तेऽपर्वतोऽयं कथं वह्निमानित्यादिदूषणेनानुमानाद्युच्छेदः स्यात् ॥ १४ ॥

---

(१) "प्रकार" इति ख०। (२) "स स्थानार्थः प्रधानशब्द एव इति" क-पु०।

(क) योग्या अभ्यासः प्रयोगपरिचेति यावत्।

# (सू०)—न तदर्थान्तरभावात् ॥ १६ ॥

## न्यायभाष्यम्

न वाक्छलमेवोपचारच्छलम्, तस्यार्थसद्भावप्रतिषेधस्यार्थान्तरभावात्। कुतः? अर्थान्तरकल्पनातः। अन्या ह्यर्थान्तरकल्पना, अन्योऽर्थसद्भावप्रतिषेध इति ॥ १६ ॥

## न्यायवार्त्तिकम्

न तदर्थान्तरभावात्। अविशेषादित्यस्य हेतोरनेन सूत्रेणासिद्धतामुद्भावयति। कथमसिद्धिः? एकत्र वस्तुसद्भावः प्रतिषिध्यते—नैव क्रोष्टारो मञ्चा इति, एकत्र वस्त्वभ्यनुज्ञाय—कम्बलयोगमभ्युपगम्य कम्बलस्यानेकता धर्मः प्रतिषिध्यत इति। यत्र धर्मः प्रतिषिध्यते (क)यत्र धर्मी। सोऽयमतिमहान् विशेषः ॥ १६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

-सिद्धान्तसूत्रम्—

न त—त् (सू० १६) ॥ तस्य उपचारच्छले अर्थसद्भावप्रतिषेधस्य अर्थान्तरकल्पनातः वाक्छलादित्यर्थः। सूत्रतात्पर्यमाह वार्तिककारः—अविशेषादित्यस्येति, विधेयं वस्तु, मञ्चाः क्रोशन्तीत्यत्र क्रोशनं विधीयते, मञ्चा इति त्वनूद्यते। अत एव "गुणे त्वन्याय्यकल्पने"ति मञ्चा इत्येतदप्रधानमनूद्यतया भाक्तम्, न तु क्रोशन्तीति "न विधौ परः शब्दार्थ" इति न्यायात्। तदिह विधीयमानं क्रोशनमेव वस्तु प्रतिषिध्यते, नैव मञ्चाः क्रोशन्तीति च्छलवाक्येन। नवकम्बलो देवदत्त इति वाक्ये तु देवदत्तमनूद्य नवत्वविशिष्टः कम्बलो विधीयते। तत्र न विधेयस्य वस्तुनः कम्बलस्य सद्भावः प्रतिषिध्यते, किं तु तदेकदेशस्यानेकताया इति महान् भेद इति सिद्धान्तः ॥ १६ ॥

## वृत्तिः

प्रसङ्गाच्छलं परीक्षितुं पूर्वपक्षयति—( वाक्छलमिति )।

(१) शब्दस्यार्थान्तरकल्पनाऽविशेषाद् वाक्छलमेवोपचारच्छलं स्यादिति छलस्य द्वित्वमेव, न तु त्रित्वमिति शङ्कार्थः ॥ १५ ॥

समाधत्ते—( न तदर्थेति )।

उपचारच्छलस्य वाक्छलाभेदो न, तयोरर्थान्तरभावाद् भिन्नत्वाद् भिन्नतया प्रमाणसिद्धत्वादिति फलितार्थः। पूर्वोक्तभेदकधर्मेण भेदसम्भवेऽपि यत्किञ्चिद्धर्मेणाभेदे सामान्यधर्मेणाभेदस्य सर्वत्र सम्भवाद्विभागः कुत्रापि न स्यादिति ॥ १६ ॥

(१) चव ख-पु०—"वाक्छलमेवोपचारच्छलं तदविशेषाच्छब्दस्यार्थान्तरकल्पनाऽविशेषात्" इत्यधिकः पाठः।

(क) 'यत्र' इत्यत्र तत्रेति पाठो युक्तः। तथाच यत्र कम्बलस्य धर्मिणः धर्मः नवत्वसंख्या प्रतिषिध्यते तत्र धर्मी कम्बलम् अनुज्ञायते इत्यर्थः।

## (सू०)—अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः ॥१७॥

### न्यायभाष्यम्

छलस्य द्वित्वमभ्यनुज्ञाय त्रित्वं प्रतिषिध्यते किञ्चित्साधर्म्यात्। यथा चायं हेतुस्त्रित्वं प्रतिषेधति तथा द्वित्वमप्यभ्यनुज्ञातं प्रतिषेधति, विद्यते हि किञ्चित्साधर्म्यं द्वयोरपीति। अथ द्वित्वं किञ्चित्साधर्म्यान्न निवर्त्तते, त्रित्वमपि न निवर्त्स्यति ॥१७॥

(भा०) (१)छललक्षणादूर्ध्वम्—

## (सू०)—साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः ॥ १८ ॥

प्रयुक्ते हि हेतौ यः प्रसङ्गो जायते स जातिः। स च प्रसङ्गः

### न्यायवार्त्तिकम्

(२) अथ मन्यते किं नोऽनेन विशेषेण, इहाप्यर्थान्तरकल्पना तत्रापीति—

अविशेषे वा किञ्चित्साधर्म्यादेकच्छलप्रसङ्गः। कोऽस्य सूत्रस्यार्थः? विरोधः—द्वित्वमभ्यनुज्ञायमानं निवर्तयति। कतमेन पुनर्न्यायेन द्वित्वमभ्यनुज्ञायमानम्? 'वाक्छलमेवोपचारच्छलम्' तयोरेकत्वं ब्रुवता सामान्यच्छलमन्यदित्यभ्यनुज्ञातं भवति। विशेषणानर्थक्यं वा—यदि सर्वं (३) छलमेकमेवेत्यभ्युपगमः 'वाक्छलमेवोपचारच्छलं तदविशेषा'दिति व्यर्थं विशेषणम्। कथमेकत्वप्रसङ्गः? किञ्चित्साधर्म्याद् यद्यनर्थान्तरकल्पना, अविशेषादेकत्वम्—सर्वच्छलमेकं प्राप्नोति किञ्चित्साधर्म्यादिति। किं पुनस्तत्? वचनविघातः अर्थविकल्पोपपत्तिश्च, तत् (४) सर्वस्मिंश्छल इति ॥ १७ ॥

### न्यायवार्त्तिकतात्पर्यटीका

अवि—ङ्गः ( सू० १७ )॥ किंचित्साधर्म्यात् त्रित्वाभावे द्वित्वस्याप्यभ्युपगतस्याभावप्रसङ्गः। ओमिति ब्रुवतो वस्तुत्वेन समस्तभेदोच्छेदप्रसङ्गः। भाष्यवार्त्तिके अतिरोहितार्थे ॥१७॥

उद्देशक्रमानुरोधेन जातिलक्षणक्रममाह भाष्यकारः—छललक्षणादूर्ध्वम्—

साध—तिः ( सू० १८ )॥ प्रतीपमवस्थानं प्रत्यवस्थानम्, तथा सति छलस्य सम्यग्दूषणस्य च जातित्वप्रसङ्गोऽत उक्तं साधर्म्यवैधर्म्याभ्यामिति। न च च्छले साधर्म्यवैधर्म्ये स्तः, न च सम्यग्दूषणं साधर्म्यवैधर्म्यमात्रात् अपि तु (क) प्रयोगादिति प्रयुक्ते हेतौ तदा-

### वृत्तिः

विपक्षे बाधकमभिप्रेत्याऽऽह—( अविशेष इति )।

(१) "अत ऊर्ध्वम्" इति ल-भा-बा-ग०। (२) "कथं मन्यसे किं तेऽनेन" इति ख। (३) "छलमेवेत्यभ्युपगमः" इति ख। (४) "तस्मिंश्छल" इति ख।

(क) अत्र 'प्रयोजकात्' इत्यादर्शपुस्तकपाठः प्रमादकृत इति परित्यक्तः।

## न्यायभाष्यम्

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानमुपालम्भः प्रतिषेध इति। 'उदाहरणसाधर्म्यात् साध्यसाधनं हेतु'रित्यस्योदाहरणवैधर्म्येण प्रत्यवस्थानम्, 'उदाहरणवैधर्म्यात् साध्यसाधनं हेतु'रित्यस्योदाहरणसाधर्म्येण प्रत्यवस्थानम्, प्रत्यनीकभावात्। ज्ञायमानोऽर्थो जातिरिति ॥ १८ ॥

## न्यायवार्त्तिकम्

साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानं जातिः। साधर्म्येण प्रत्यवस्थानं वैधर्म्येण प्रत्यवस्थानं जातिरिति। प्रथमपक्षानुयोगं दर्शयति स्थापनायां सत्यां प्रतीपमवस्थानं प्रत्यवस्थानं प्रतिपक्षवदिति। सूत्रार्थस्तु यथाश्रुति, न पुनरुदाहरणसाधर्म्येण उदाहरणवैधर्म्येण वेति। किमर्थमिदमुच्यते? व्यापकार्थम्—यदि यथाश्रुति सूत्रार्थो भवति तदा सर्वजातयो व्याप्यन्ते येन केनचित् साधर्म्यं येन केनचिद्वैधर्म्यमिति। लक्षणे जातीनामव्यापकत्वं तु दोषः। भाष्ये उदाहरणसाधर्म्यमुदाहरणवैधर्म्यं चोदाहरणार्थमिति, यथा चोदाहरणेन एवमनुदाहरणेनापीति ॥१८॥

## न्यायवार्त्तिकतात्पर्यटीका

भासे वा यः प्रसङ्गो जायते स जातिरिति। जल्पे हि वेदप्रामाण्यं विद्वांसं प्रति कुहेतुना यदा नास्तिकैरधिक्षिप्यते सदुत्तरं चास्य यदा सहसा न प्रतिभाति तदेश्वराणां (क) जनाधाराणां मा भूद्वेदाप्रामाण्यबुद्धिरिति जात्याऽपि प्रत्यवस्थेयम्, अन्यथेश्वरचरितानुवर्त्तिनीनां प्रजानां विप्लवो भवेदिति। क्वचित् पुनरबुद्धिपूर्वमेव हेतौ हेत्वाभासे वा जातिप्रयोगः संभवति। जायमानोऽर्थ इति जातिपदव्युत्पत्तिनिमित्तं दर्शितम्। तदेतद्वार्त्तिककारो व्याचष्टे—साधर्म्येणेति। यथा पक्षे सति प्रतिपक्ष एवं स्थापनायां सत्यां प्रत्यवस्थानमिति। सूत्रार्थस्तु यथाश्रुति, न पुनरुदाहरण-साधर्म्येण यथाभाष्यं बोद्धव्यः। यद्येवम्, भाष्यं तर्हि कथमित्यत आह—उदाहरणार्थमिति। एवं वैधर्म्येण वेत्येतदपि। 'यथाश्रुति' न पुनर्यथाभाष्यमुदाहरणार्थं तदित्यर्थः। अस्य व्याख्यानस्य गुणाभिधानेन प्रश्नपूर्वकं प्रपञ्चमाह—किमर्थमिदमिति ॥ १८ ॥

## वृत्तिः

यत्किञ्चिद्धर्मादविशेषे किञ्चित्साधर्म्यात् छलत्वादिरूपात् छलस्यैक्यं स्यान्न तु त्वदभिमतं द्वित्वमपीति भावः ॥ १७ ॥

समाप्तं छलप्रकरणम् ॥

क्रमप्राप्तां जातिं लक्षयति—( साधर्म्येति )।

साधर्म्यवैधर्म्याभ्यामिति सावधारणो निर्देशः, तेन व्याप्तिनिरपेक्षाभ्यां साधर्म्य-वैधर्म्याभ्यां प्रत्यवस्थानं दूषणाभिधानं जातिरित्यर्थः।

---

(क) इदं ख-पुस्तके नास्ति, किन्तु चतुर्थाध्याय-द्वितीयाह्निकान्तिमसूत्रे 'ईश्वराणां जनाधाराणा'मिति दृश्यते।

# (सू०)—विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम् ॥ १९ ॥

## न्यायभाष्यम्

विपरीता वा कुत्सिता वा प्रतिपत्तिर्विप्रतिपत्तिः। विप्रतिपद्यमानः पराजयं प्राप्नोति। निग्रहस्थानं खलु पराजयप्राप्तिः। अप्रतिपत्तिस्त्वारम्भविषये (१)अनारम्भः। परेण स्थापितं वा न प्रतिषेधति प्रतिषेधं वा नोद्धरति। असमासाच्च नैते एव निग्रहस्थाने इति ॥ १९ ॥

## न्यायवार्त्तिकम्

विप्रतिपत्तिरप्रतिपत्तिश्च निग्रहस्थानम्। अन्यथा स्थितस्यान्यथाऽभिहितस्य अप्रतिपत्तिर्विप्रतिपत्तिश्च स्वपरार्थोत्तरा(२)संवित्तिरप्रतिपत्तिः। समर्थे साधने निग्रहस्थानप्राप्तौ कथमप्रतिपत्तिः विप्रतिपत्तिः—यदाऽयं साधयिता समर्थेन साधनेनोपात्तेन परेण जात्यादिभिराकुलीकृतः

## न्यायवार्त्तिकतात्पर्यटीका

विप्र—नम् ( सू० १९ )॥ सूक्ष्मविषया प्रतिपत्तिर्विपरीता। स्थूलविषया च कुत्सिता, कथमसौ निग्रहस्थानमित्यत आह—विप्रतिपद्यमान इति। अप्रतिपत्तिमाह—आरम्भविषय इति। लाघवाय विप्रतिपत्त्यप्रतिपत्ती इति वक्तव्ये कस्मादसमासकरणमित्यत आह—असमासाच्चेति। विप्रतिपत्त्यप्रतिपत्तिभ्यामन्यदपि हेतूदाहरणाधिकं नाम जल्पे निग्रहस्थानमस्ति तदपि ग्रन्थाधिक्येनावरुध्यत इत्यर्थः। आरम्भविषये अनारम्भ इत्यादि भाष्यम्, तद् व्याचष्टे—स्वपरार्थोत्तरासंवित्तिरिति। द्वेधा खल्वारम्भविषयेऽनारम्भो भवति—दूष्यं वा परोक्तं साधनं प्रतिषेधहेतुं वा न प्रतिपद्यते, सेयं परार्थोत्तरासंप्रतिपत्तिः उत्तरग्रहणं साधनमप्युपलक्षयति। स्वार्थोत्तराप्रतिपत्तिस्तु साधनप्रतिषेधहेतू परकीयौ प्रतिपद्य तत् प्रतिषेद्धुं स्वकीयमुत्तरं न प्रतिपद्यत इत्यर्थः। चोदयति—स्वयं प्रयुक्ते वस्तुतः समर्थे साधने कथम् अप्रति-

## वृत्तिः

थद्यप्युभाभ्यां प्रत्यवस्थानस्य प्रत्येकप्रत्यवस्थानेऽव्याप्तिः, एकप्रत्यवस्थानस्य लक्षणत्वेऽपरप्रत्यवस्थानेऽव्याप्तिः, नवाऽन्यतरप्रत्यवस्थानं नियतं सर्वत्र जातावभावात्, तथाऽपि व्याप्तिनिरपेक्षतया दूषणाभिधानमित्येव वाच्यम्। तेन सन्दर्भेण दूषणासमर्थत्वं स्वव्याघातकत्वं वा दर्शितम्। तथाच छलादिभिन्नदूषणासमर्थमुत्तरं स्वव्याघातकमुत्तरं वा जातिरिति सूचितम्।

साधर्म्यसमादिचतुर्विंशत्यन्यान्यत्वं तदर्थं इत्यपि वदन्ति ॥ १८ ॥

---

(१) "ऽप्यप्रारम्भ" इति ख-भा-आ-ग०। (२) "संप्रतिपत्तिरप्रतिपत्तिः" इति ख।

किं पुनर्दृष्टान्तवज्जातिनिग्रहस्थानयोरभेदोऽथ सिद्धान्तवद्भेद इत्यत आह—

## (सू०)—तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् ॥ २० ॥

### न्यायभाष्यम्

तस्य साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पाज्जातिबहुत्वम्, तयोश्च (१)विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पान्निग्रहस्थानबहुत्वम्। नाना कल्पो विकल्पः, विविधो वा कल्पो विकल्पः। तत्र अननुभाषणम् अज्ञानम् अप्रतिभा विक्षेपो मतानुज्ञा पर्यनुयोज्योपेक्षणमित्यप्रतिपत्तिर्निग्रहस्थानम्। शेषस्तु विप्रतिपत्तिरिति।

### न्यायवार्त्तिकम्

(२) उत्तरं न प्रतिपद्यते तदा कथमप्रतिपत्तिः कथं वा विप्रतिपत्तिरिति ? तदाऽपि साधनस्यैव सामर्थ्यापरिज्ञानादसमर्थमेतत् साधनमित्यप्रतिपत्तिर्विप्रतिपत्तिरिति ॥ १९ ॥

ता एता जातयः कियत्यो भवन्ति कियन्ति वा निग्रहस्थानानि इत्यवधारणार्थमाह—

तद्विकल्पाज्जातिनिग्रहस्थानबहुत्वम् इति। साधर्म्यवैधर्म्याभ्यां प्रत्यवस्थानस्य विकल्पात् तयोश्च विप्रतिपत्त्यप्रतिपत्त्योर्विकल्पाद्व बह्व्यो जातयो बहूनि निग्रहस्थानानि भवन्ति। कतमा

### न्यायवार्त्तिकतात्पर्यटीका

पत्तिर्विप्रतिपत्तिः, वेति द्रष्टव्यम्। परिहरति—तदाऽपीति। समर्थसाधनज्ञानं साधनप्रतिपत्तिर्न साधनमात्रज्ञानमित्यर्थः ॥ १९ ॥

सूत्रान्तरमवतारयितुं भाष्यकार आह—किं पुनरिति। यद्यपि साधर्म्यवैधर्म्याभ्यां दृष्टान्तस्यापि भेदस्तथाऽपि लक्षणाभेदाभिप्रायेणाभेद उक्तः।

तद्वि—त्वम् ( सू० २० )॥ नाना कल्प इति स्वरूपतः, विविध इति प्रकारतः।

### वृत्तिः

क्रमप्राप्तं निग्रहस्थानं लक्षयति—( विप्रतिपत्तिरिति )।

निग्रहस्य खलीकारस्य स्थानं (३) ज्ञापकं निग्रहस्थानम्। तच्च विप्रतिपत्तिरप्रतिपत्तिश्च। विप्रतिपत्तिर्विरुद्धा प्रतिपत्तिः। अप्रतिपत्तिः प्रकृताज्ञानम्। यद्यप्येतदन्यतरत् परनिष्ठं नोद्भावयितुमर्हं प्रतिज्ञाहान्यादेर्निग्रहस्थानत्वानुपपत्तिश्च तथाऽपि विप्रतिपत्त्यप्रतिपत्त्यन्यतरोन्नायकधर्मवत्त्वं तदर्थः।

उद्देश्यानुगुणसम्यग्ज्ञानाभावलिङ्गत्वं प्रतिज्ञाहान्याद्यन्यतमत्वं वा लक्षणमित्यपि वदन्ति ॥ १९ ॥

---

(१) "विप्रतिपत्त्यो" इति ग०। (२) "ज्ञानं प्रतिपद्यते" इति ख। (३) "ज्ञापकं निग्रहस्थानम्" इति पा-पु० नास्ति।

## न्यायभाष्यम्

इमे प्रमाणादयः पदार्था उद्दिष्टाः, (१)यथोद्देशं लक्षिताः, यथालक्षणं परीक्षिष्यन्त इति त्रिविधा चाऽस्य शास्त्रस्य प्रवृत्तिर्वेदितव्येति ॥ २० ॥

इति वात्स्यायनीये न्यायभाष्ये प्रथमाध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं प्रथमोऽध्यायः ॥ १ ॥

## न्यायवार्त्तिकम्

जातयः साधर्म्यप्रत्यवस्थानात् कतमाश्च वैधर्म्यप्रत्यवस्थानात् कतमानि निग्रहस्थानानि विप्रतिपत्तिविकल्पात् कतमानि वाऽप्रतिपत्तिविकल्पाद् भवन्तीति प्रतियोगं विशेषलक्षणेषूत्प्रेक्षणीयानीति । एते प्रमाणादयः पदार्था उद्दिष्टा लक्षिताश्च । यथोद्देशं च यथालक्षणं च परीक्षा वर्त्तिष्यत इति ॥

तन्त्रप्रतिज्ञा संसारस्तन्निवृत्तिश्च संविदा ।

उद्देशो लक्षणं चैव तत्त्वानामिह कीर्तितम् ॥ २० ॥

इति—औद्द्योतकरे न्यायसूत्रवार्त्तिके प्रथमाध्याये द्वितीयमाह्निकम् ।

समाप्तश्चायं प्रथमोऽध्यायः ॥ १ ॥

## न्यायवार्त्तिकतात्पर्यटीका

यथालक्षणमिति यथास्वरूपमित्यर्थः । अध्यायार्थं संक्षिप्याह वार्त्तिककारः—

तन्त्रप्रतिज्ञेति । तन्त्रस्य शास्त्रस्य प्रतिज्ञा प्रमाणादितत्त्वज्ञानान्निःश्रेयसाधिगम इति सूत्रम्, शास्त्रमेव हि तत्त्वज्ञानमिति । संसारः दुःखजन्मप्रवृत्तिदोषमिथ्याज्ञानानामिति, 'तन्निवृत्तिश्च संविदा' उत्तरोत्तरापाये तदनन्तराभावादपवर्ग इति । तस्माद् यः प्रमाणादिसूत्रेणोद्देशः, तत्परिकरो द्वितीयं सूत्रम्, द्वाभ्यामुद्देशः । शेषं सुबोधमिति ॥ २० ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्तिकतात्पर्यटीकायां प्रथमस्याध्यायस्य द्वितीयमाह्निकम् ।

समाप्तश्चायं प्रथमोऽध्यायः ॥ १ ॥

## वृत्तिः

जातिनिग्रहस्थानयोर्विभागो नास्तीति भ्रमो मा भूदित्यत आह—(तद्विकल्पादित्यादि) । तद्विकल्पात् साधर्म्यादिना प्रत्यवस्थानस्य विप्रतिपत्त्याद्युन्नायकव्यापारस्य च विकल्पाद्

(१) "यथोद्देशम्" इति लं-भा-पुस्तकयोर्नास्ति ।

वृत्तिः

भेदात् नानाप्रकारत्वादिति यावत् । इत्थं च तयोर्बहुत्वेऽपि प्रमाणादिपरीक्षाविषयकशिष्य-जिज्ञासया प्रतिबन्धान्नेदानीं तद्विभागः क्रियते इति भावः ॥ २० ॥

समाप्तं पुरुषाशक्तिलिङ्गदोषसामान्यलक्षणप्रकरणम्
प्रथमाध्यायस्य द्वितीयमाह्निकं च ।

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यकृतन्यायसूत्रवृत्तौ
प्रथमाध्यायवृत्तिः समाप्ता ॥ १ ॥

प्रथमाध्याये १ आह्निके सूत्राणि ४१ । २ आह्निके सूत्राणि २० ।
मिलित्वा सूत्राणि ६१ ।

—:o:—

# न्यायदर्शनम्

## द्वितीयोऽध्यायः

### प्रथमाह्निकम्

—:o:—

### न्यायवार्त्तिकम्

त्रिविधा चास्य शास्त्रस्य प्रवृत्तिः उद्देशो लक्षणं परीक्षा चेत्युक्तम्(क)। तत्रोद्देशलक्षणे पूर्वाध्याय एव व्याख्याते, परीक्षा वर्त्तिष्यत इति। तत्र यथोद्देशस्तथा लक्षणं तथा परीक्षेति स्थानवतां परीक्षावचनमिति पूर्वं प्रमाणमुद्दिष्टं लक्षितं च, पूर्वमेव तत्परीक्ष्यत इत्यवसरप्राप्तानि तानि विलङ्घ्य संशयः परीक्ष्यते। किमर्थं क्रमभेदः? परीक्षाङ्गत्वात् पूर्वं संशयः परीक्ष्यते। तथा चोक्तम्—"विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः।" ननु चोक्तम्(ख)नायं निर्णये नियमो विमृश्य पक्षप्रतिपक्षाभ्यां सर्वत्र निर्णय इति, वादे पक्षप्रतिपक्षाभ्यामेव, शास्त्रे च विमर्शवर्जमिति। शास्त्रे चायं विचारः, तस्मान्न संशयपूर्वक इति ; संशयपूर्वको हि विचारस्तर्कविषय एव, नायं तर्कविषय इति। सत्यम्, न निर्णये नियमः ; विचारे हि नियमः,निर्णय एवं चान्यथा च, विचारः संशयपूर्वक

### न्यायवार्त्तिकतात्पर्यटीका

अत ऊर्ध्वं प्रमाणादिपरीक्षेत्यादिभाष्यनिराकरणीयामाशङ्कामाह वार्त्तिककारः—त्रिविधा चास्येति। 'स्थानवतां' क्रमवताम्,' परीक्षावचनमिति, प्रमाणमेव परीक्ष्यत इति युक्तमिति। किमत्राऽऽदौ प्रमाणं न परीक्षितं किं तु संशय एव परीक्ष्यत इत्याह—तानि विलङ्घ्येति। सोऽयं क्रमभेदः कुत इति (ग)भाष्यार्थमाह—परीक्षाङ्गत्वादिति। उद्देशक्रमानुरोधेन हि प्रमाणं पूर्वं लक्षितं न तु लक्षणे संशयस्यास्ति कश्चिदुपयोगः, परीक्षा तु सर्वा विमर्शकरणिकेति परीक्षापर्वणि सर्वथाऽऽर्थक्रमेण संशयस्य पूर्वभावः, यथा अग्निहोत्रं जुहोति यवागूं पचतीत्यत्राग्निहोत्रात्प्राग्भावो यवागूपाकस्य, तस्याग्निहोत्रसाधनत्वात्। संशयलक्षणं चात्र परीक्ष्यते न संशय इति नानवस्थाऽपि। देशयति—ननु चोक्तमिति। शास्त्रगता त्वियं परीक्षा, सा च न विमर्शपूर्वेत्यार्थक्रमाभावान्नोद्देशक्रमो बाधनीय इत्यर्थः। परिहरति—सत्यम्, न निर्णये नियम इति। न निर्णयः सर्वः

---

(क) ८३पृष्ठे भाष्यस्य तृतीयपङ्क्तिर्द्रष्टव्या।

(ख) १।१।४१ सूत्रभाष्ये एतादृशार्थकं वाक्यं द्रष्टव्यम्।

(ग) अत ऊर्ध्वमित्यादिभाष्यप्रतिपाद्यसंशयपरीक्षाप्राथम्ये बीजमिति भावः।

### न्यायभाष्यम्

अत ऊर्ध्वं प्रमाणादिपरीक्षा। सा च 'विमृश्य पक्षप्रतिपक्षाभ्यामर्थावधारणं निर्णयः' ( १ अ० १ आ० ४१ सू० ) इत्यग्रे विमर्श एव परीक्ष्यते—

## ( सू० )—समानानेकधर्माध्यवसायादन्यतरधर्माध्यवसायाद्वा न संशयः ॥ १ ॥

समानस्य धर्मस्याध्यवसायात्संशयो न धर्ममात्रात्। अथ वा समानमनयोर्धर्म-

### न्यायवार्त्तिकम्

एव। यदप्युक्तं वादे शास्त्रे च विमर्शवर्जमिति, वादिप्रतिवादिनावधिकृत्य तदुक्तम्। शास्त्राभ्युपगमे च वादिप्रतिवादिनोर्न संशयः, उभयोर्निश्चितत्वात्। शास्त्रे च न संशयः, निश्चितस्य वस्तुनः शास्त्राभ्युपगमेनाभ्युपगमात्। तत्र वादिप्रतिवादिनौ तावद्विचारयतः—किं नित्यसाधनं बलीयः आहोऽनित्यसाधनमिति। शास्त्रेऽपि च विचारः साधनसामर्थ्यासामर्थ्यपरिज्ञानार्थम्, तत्र संशय इति। तस्मात् संशयपूर्वक एव विचारः तन्मूलकत्वात् परीक्षाविधेः संशयः पूर्वं परीक्ष्यत(क) इति। तत्र संशयो वस्तुस्वरूपानवधारणात्मकः प्रत्ययः। निरुक्तिव्याघात इति चेत्—अनवधारणात्मकश्च प्रत्ययश्चेति व्याहतम्; न, प्रत्ययस्य स्वरूपानवधारणात्—अव्यवच्छेदात्मकत्वं स्वरूपमस्य परिच्छिद्यते, न पुनरनेन विषयस्वरूपमवधार्यत इति। सोऽयं संशयः समानधर्मोपपत्ते-(१)रित्येवमादिभ्यः, तस्याक्षेपः—

समानानेकधर्माध्यवसायादित्येवमादि सूत्रम्। तस्य यथाश्रुत्युत्थानमिति। समानस्य

### न्यायवार्त्तिकतात्पर्यटीका

संशयपूर्वः, विचारः सर्व एव संशयपूर्वः, शास्त्रवादयोश्चास्ति विचार इति तेनापि संशयपूर्वेण भवितव्यम्। शिष्योश्च वादिप्रतिवादिनोः शास्त्रे विमर्शाभावो न शिष्यमाणयोः, तस्मादस्ति शास्त्रेऽपि विमर्शपूर्वो विचार इति सिद्धम्। संशीतिरिति संशयस्य निरुक्तम्, नावधारयतीत्यर्थः।

( समाना—यः) ननु यथा लक्षणार्थः पूर्वनिरूपितस्तथा निर्बीजः पूर्वपक्ष इत्यत आह—तस्य यथाश्रुतीति, परीक्षासाध्यो ह्यर्थस्तत्र व्याख्यानेन लक्षणपदेभ्यः साक्षादेव गम्यत इत्यर्थः।

### वृत्तिः

प्रमाणैः प्रथितैर्दोर्भिर्विवादेषु परीक्षितैः।
हरिं द्वितीयमध्यायं भासमानमहं भजे ॥ १ ॥

अथ प्रमाणादिषु लक्षितेषु परीक्षणीयेषु संशयं विना परीक्षाया असम्भवादादौ संशय

---

(क) 'अथ विमर्श एव परीक्ष्यते' इति भाष्यमर्थतोऽत्र धृतम्।
(१) "-रित्येवमादिर्यः" इति ख।

## न्यायभाष्यम्

मुपलभ इति धर्मधर्मिग्रहणे संशयाभाव इति। अथवा समानधर्माध्यवसायादर्थान्तरभूते धर्मिणि संशयोऽनुपपन्नः, न जातु रूपस्यार्थान्तरभूतस्याध्यवसायादर्थान्तरभूते स्पर्शे संशय इति। अथ वा न अध्यवसायाद् अर्थावधारणाद् अनवधारणज्ञानं संशय उपपद्यते कार्यकारणयोः सारूप्याभावादिति। एतेनानेकधर्माध्यवसायादिति व्याख्यातम्। अन्यतरधर्माध्यवसायाच्च संशयो न भवति, ततो ह्यन्यतरावधारणमेवेति ॥ १ ॥

## न्यायवार्त्तिकम्

धर्मस्य (क)अध्यवसायात् संशयो न समानधर्ममात्रादुपलभ्यमानो धर्मः संशयहेतुरिति (ख)धर्म-(१) धर्मिग्रहणे वा संशयाभाव इति। (ग)समानमनयोर्धर्म(२)मुपलभ इति धर्मधर्मिग्रहणे न संशय इति। (घ)धर्मिणो(३)ऽर्थान्तरभावाद्वा न संशयः, न ह्यन्यस्मिन्नुपलब्धेऽन्यत्र संशय इति। (ङ)अथवा न समानधर्माध्यवसायः संशयस्य कारणं व्यवच्छेदात्मकत्वात् संशये च तदभावादिति। एतेनानेकधर्माध्यवसायादिति व्याख्यातम्। अधिगतानधिगतयोर्न संशयः, अधिगते

## न्यायवार्त्तिकतात्पर्यटीका

समानमनयोरिति साक्षात्कारं दर्शयति। न हि साक्षात् स्थाणुपुरुषावुपलभमानः समानं चानयोर्धर्मं कश्चित्संदिग्ध इत्यर्थः। व्यवच्छेदात्मकत्वादिति, न निश्चयोऽनिश्चयस्य जनकः कारणानु-

## वृत्तिः

एव परीक्षणीयः शिष्यजिज्ञासानुरोधात् सूचीकटाहन्यायाच्च। अतः संशयपरीक्षायाः प्रमाणादिपरीक्षोपयोगित्वात् प्रमाणपरीक्षैवाध्यायार्थ इति वदन्ति।

वस्तुतस्तु छलस्य परीक्षितत्वात् तृतीयचतुर्थयोः प्रमेयस्य पञ्चमे च जातेः परीक्षिष्यमाणत्वात् तददतिरिक्तयावत्पदार्थपरीक्षैवाध्यायार्थः प्रयोजनादिपरीक्षाया अप्यत्रैवाति-

---

(१) '-धर्मिग्रहणेन वा' इति ख। (२) '-मुपलभते' इति ख। (३) 'मर्थान्तरभावत्वात्' इति ख।

(क) अध्यवसायात् संशय इति। पूर्वपक्षिभिरपि समानादिधर्माध्यवसायस्य संशयं प्रति हेतुत्वाभ्युपगमात् संशये तज्जन्यत्वाभावकथनासम्भवेन अध्यवसायात् संशयः इति सूत्रं पूरयित्वा पूर्वपक्षमाह न समानधर्मेति, संशयः समानधर्ममात्रजन्यो नेत्यर्थः।

(ख) द्वितीयविकल्पगतः 'धर्मधर्मिग्रहणे वे'त्यंशोऽत्र प्रमादादापतित इति सम्भाव्यते भाष्ये तथाऽदर्शनात्।

(ग) अध्याहारमन्तरेणैव व्याचष्टे समानमिति। समानधर्माध्यवसायो यदि समानमनयोर्धर्ममुपलभ इत्याकारकस्तदा धर्मिणोर्विवेकेन ज्ञानान्न संशय इत्यर्थः।

(घ) अध्यवसायस्याकारविशेषमुपेक्ष्यैव संशयाभावमुपपादयति धर्मिण इति। यस्योपलब्धिस्तद्धर्मिक एव संशयो युक्त इत्याशङ्कितुरभिप्रायः।

(ङ) तृतीयविकल्पेऽपि अध्याहारापेक्षणादाह अथवा न समानेति। उपादानोपादेययोरिव निमित्तकारणतत्कार्ययोरपि सारूप्यमस्तीति निश्चयसंशययोर्वलक्षण्येन न कार्यकारणभाव इत्याशङ्कार्थः।

## न्यायवार्त्तिकम्

वस्तुनि संशयो न युक्तः, निर्णीतत्वात्; नानधिगते, अदृष्टत्वात्। न समानधर्माध्यवसायात् एव संशयः, सत्यप्यभावात्—सत्यपि समानधर्माध्यवसाये न दृष्टः संशयः, यथा कृतकत्वाच्छब्दे। (क)न समानधर्माध्यवसायादेव संशयोऽन्यथाऽपि भावात्—अन्यथाऽपि दृष्टः संशयः यथा विरुद्धाव्यभिचारिधर्मद्वयसन्निपाते। तत्त्वानुपलब्धेश्च संशयः यथा प्रकरणसमे। एकवृत्तित्वाच्च न समानः—एकवृत्तिरयं धर्मो न चैकवृत्तिः समानो भवितुमर्हतीति ॥ १ ॥

## न्यायवार्त्तिकतात्पर्यटीका

रूपत्वात् कार्यस्येत्यर्थः। न समानधर्माध्यवसायादेवेति संशयलक्षणोक्तकारणमात्रोपलक्षणपरम्। एकवृत्तित्वाच्चेति। न हि यावेवारोहपरिणाहौ स्थाणोस्तावेव पुरुषस्येत्यर्थः ॥ १ ॥

## वृत्तिः

देशेन करिष्यमाणत्वात्। तत्र विभागसापेक्षप्रमाणपरीक्षातिरिक्तोक्तयावत्पदार्थपरीक्षा प्रथमाह्निकार्थः। तत्र च नव प्रकरणानि। तत्रादौ संशयपरीक्षाप्रकरणम्। अन्यानि (१) यथासम्भवं वक्ष्यन्ते।

तत्र संशयपरीक्षणाय पूर्वपक्षसूत्रम्—(समानानेकेति)।

अत्र सूत्रकृता संशयस्याप्रदर्शनात् संशयपरीक्षायां संशयो नाङ्गमनवस्थाभयादित्याशयं सूत्रकृतो वर्णयन्ति, तदसत्; न ह्यत्र संशयस्वरूपं परीक्ष्यते येनानवस्था स्यात्, अपि तु लक्षणसूत्रोक्तं संशयकारणम्। तथा च संशयः समानधर्मदर्शनादिजन्यो न वेति संशयः सम्भवत्येव। परन्तु सूत्रकृतो निर्णयसत्त्वात् पूर्वपक्षनिरासमात्रस्यापेक्षणात् संशयो न दर्शितः। एवमेव प्रमाणादिपरीक्षायामपि। अत एवाऽभिहितं भाष्ये 'शास्त्रे वादे च विमर्शवर्जम्' इति।

तत्र समानादिधर्मदर्शनात् न संशयः प्रत्येकं व्यभिचारात्। अन्यतरत्वेनानुगतीकृततद्दर्शनादपि न संशयः, न हि स्थाणुधर्मसमानधर्माऽयं पुरुषधर्मसमानधर्माऽयमिति वा जानन् स्थाणुर्न वेति सन्दिग्धे, समानत्वस्य भेदगर्भत्वाद् भिन्नधर्मत्वेन ज्ञाते तद्भेदग्रहस्यैव सम्भवात्।

यद्वा समानानेकधर्मोपपत्तेरिति लक्षणसूत्रे उपपत्तिपदं स्वरूपपरमिति भ्रान्तस्येयं शङ्का। तथा चायमर्थः, न संशयः समानधर्मादितः; स्वरूपसत इति शेषः; यतः समानधर्मादेरध्यवसायादन्यतरत्वेनानुगतीकृततदध्यवसायाद्वा संशयः, अन्यथा संशयस्य सार्वत्रिकत्वापत्तेः ॥ १ ॥

---

(१) "यथायथम्" इति पा०।

(क) चतुर्थविकल्पे सूत्र धर्मान्तस्य वैयर्थ्यमाशङ्क्य वार्त्तिककारः समानानेकधर्मोपपत्तेरित्यादिसूत्रस्य सावधारणे तात्पर्यमिति भ्रमात् पूर्वपक्ष इत्याह न समानधर्माध्यवसायादेवेत्यादि।

## ( सू० )—विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ २ ॥

### न्यायभाष्यम्

न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा संशयः। किं तर्हि? विप्रतिपत्तिमुपलभमानस्य संशयः। एवमव्यवस्थायामपीति। अथवाऽस्त्यात्मेत्येके नास्त्यात्मेत्यपरे मन्यन्त इत्युपलब्धेः कथं संशयः स्यादिति। तथोपलब्धिरव्यवस्थिता अनुपलब्धिश्चाव्यवस्थितेति विभागेनाध्यवसिते संशयो नोपपद्यते इति ॥ २ ॥

## ( सू० )—विप्रतिपत्तौ च सम्प्रतिपत्तेः ॥ ३ ॥

### न्यायभाष्यम्

यां च विप्रतिपत्तिं भवान् संशयहेतुं मन्यते सा सम्प्रतिपत्तिः, सा हि द्वयोः प्रत्यनीकधर्मविषया। तत्र यदि विप्रतिपत्तेः संशयः, सम्प्रतिपत्तेरेव संशय इति ॥ ३॥

### न्यायवार्त्तिकम्

विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च ॥ (१) विप्रतिपत्त्यव्यवस्थाध्यवसायात् संशयो न विप्रतिपत्तिमात्रादव्यवस्थामात्राद्वा ॥ २ ॥

विप्रतिपत्तौ च सम्प्रतिपत्तेः। न विप्रतिपत्तिरस्तीति सूत्रार्थः। (क) एतेन विप्रतिपत्त्यव्यवस्थाध्यवसायादिति प्रत्युक्तम् ॥ ३ ॥

### न्यायवार्त्तिकतात्पर्यटीका

विप्र—च्च ( सू० २ ) ॥ (ख)

विप्र—त्तेः ( सू० ३ ) ॥ विप्रतिपत्तौ च संप्रतिपत्तेरिति, (ग) न स्वरूपविरोधाद्विप्रतिपत्तिरस्तीत्यर्थः ॥ ३ ॥

### वृत्तिः

विप्रतिपत्त्यादिजन्यसंशयत्रयं प्रतिक्षिपति—(विप्रतिपत्तीति)।

न संशय इत्यनुवर्तते। विप्रतिपत्तेः उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च न संशयजनकत्वम्, प्रत्येकं व्यभिचारादित्यर्थः।

यद्वा स्वरूपसद्विप्रतिपत्त्यादितो न संशयः किन्तु तदध्यवसायादित्यर्थः ॥ २ ॥

विप्रतिपत्तिजसंशयमात्रप्रतिक्षेपाय सूत्रान्तरम्—( विप्रतिपत्ताविति )।

विप्रतिपत्तौ न संशयहेतुत्वम्, सम्प्रतिपत्तेः निश्चयात्; वादिनोर्मध्यस्थस्य च निश्चयसत्त्वात्, सति च निश्चये संशयायोगादिति भावः ॥ ३ ॥

---

(१) 'विप्रतिपत्ति व्यवस्था-' इति ख।

(क) 'एतेन विप्रतिपत्त्यव्यवस्थाध्यवसायादिति प्रत्युक्तम्' इत्यंशः क-वार्त्तिकपुस्तके 'विप्रतिपत्तौ' त्यादिद्वितीयसूत्रवार्त्तिकस्य प्रारम्भे मुद्रितः।(ख) द्वितीयसूत्रे तात्पर्यटीका नास्ति। (ग) क-तात्पर्ये स्वरूपविरोधादिति मञ्जयन्यः पाठः।

## (सू०)—अव्यवस्थात्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः ॥४॥

### न्यायभाष्यम्

न संशयः । यदि तावदियमव्यवस्था आत्मनि एव व्यवस्थिता, व्यवस्थानाद्-व्यवस्था न भवतीत्यनुपपन्नः संशयः । (१) अथ अव्यवस्थाऽऽत्मनि न व्यवस्थिता, एवमतादात्म्यादव्यवस्था न भवतीति संशयाभाव इति ॥ ४ ॥

## (सू०)—तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः ॥ ५ ॥

( भा० ) येन कल्पेन भवान् समानधर्मोपपत्तेः संशय इति मन्यते, तेन खल्वत्यन्त-संशयः प्रसज्यते । समानधर्मोपपत्तेरनुच्छेदात् संशयानुच्छेदः । न ह्ययमतद्धर्मा धर्मी विमृश्यमाणो गृह्यते, सततं तु तद्धर्मा भवतीति ॥ ५ ॥

### न्यायवार्त्तिकम्

अव्यवस्थाऽऽत्मनि व्यवस्थितत्वाच्चाव्यवस्थायाः । नाव्यवस्था विद्यत इति सूत्रार्थः ॥४॥

तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः । समानधर्मादीनां सातत्यान्नित्यः संशय इति सूत्रार्थः ॥ ५ ॥

### न्यायवार्त्तिकतात्पर्यटीका

अव्य—याः ( सू० ४ ) ॥ (क)

तथा—त्तेः ( सू० ५ ) ॥ तथाऽत्यन्तसंशय (ख) इति तत्पदान्तरेण समानधर्मोप-पत्त्यादेर्विशेषणमपश्यतः पूर्वपक्षः ॥ ५ ॥

### वृत्तिः

उपलब्ध्यनुपलब्ध्यव्यवस्थातः संशयद्वयनिरासाय सूत्रम्—(अव्यवस्थाऽऽत्मनीति) ।

उपलब्ध्यव्यवस्थाया अनुपलब्ध्यव्यवस्थायाश्च संशयजनकत्वं तदा स्यात् यदि स्वस्मिन्नप्यव्यवस्थितत्वं स्यात्, न त्वेवम् । तथा च स्वात्मनि व्यवस्थितायास्तस्याः कथ-मन्यत्राव्यवस्थात्वमित्यर्थः ॥ ४ ॥

ननु अव्यवस्था प्रामाण्यसंशयस्तस्य च न स्वसंशयरूपत्वम्, संशयस्य विषय-विशेषघटितत्वात् तस्य चान्यसंशयजनकत्वं न विरुद्धम्, अतो दूषणान्तरमाह— ( तथाऽत्यन्तेति ) ।

"तथा" तथा सति अव्यवस्थाया हेतुत्वे सति । तथाशब्दोऽयं न सूत्रान्तर्गतोऽपि तु भाष्यस्थ इत्यन्ये । 'अत्यन्तसंशयः' संशयानुच्छेदः स्यात् 'तद्धर्मस्य' तज्जनकस्य ज्ञानत्वादि-साधारणधर्मदर्शनस्य 'सातत्योपपत्तेः' सर्वदा सम्भवात् । अथ ज्ञानत्वादिसाधारणधर्मदर्शनेऽपि

---

(१) "अथ व्यवस्था" इति ग० ।

(क) चतुर्थसूत्रे तात्पर्यटीका नोपलभ्यते । (ख) अत्र इत्येतत् पदान्तरेण इत्येव पाठो न वेति विचार-णीयम् । तदर्थं च २३६ पत्रे वार्त्तिकतात्पर्यटीके द्रष्टव्ये ।

न्यायभाष्यम्

अस्य प्रतिषेधप्रपञ्चस्य सङ्क्षेपेणोद्धारः—

**(सू०)—यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा ॥ ६ ॥**

(१) न संशयानुत्पत्तिः संशयानुच्छेदश्च प्रसज्यते । कथम्? यत्तावत् समानधर्माध्यवसायः संशयहेतुः न समानधर्ममात्रमिति, एवमेतत् । कस्मादेवं नोच्यते इति? विशेषापेक्ष इति वचनात् तत्सिद्धेः—विशेषस्यापेक्षा आकाङ्क्षा, सा चानुपलभ्यमाने विशेषे समर्था, न चोक्तं समानधर्मापेक्ष इति । समाने च धर्मे कथमाकाङ्क्षा न भवेद् यद्ययं प्रत्यक्षः स्यात् । एतेन सामर्थ्येन विज्ञायते समानधर्माध्यवसायादिति ।

उपपत्तिवचनाद्वा—समानधर्मोपपत्तेरित्युच्यते न चान्या सद्भावसंवेदनादृते समानधर्मोपपत्तिरस्ति । अनुपलभ्यमानसद्भावो हि समानो धर्मोऽविद्यमानवद् भवतीति ।

विषयशब्देन वा विषयिणः प्रत्ययस्याभिधानम्—यथा लोके धूमेनाग्निरनुमीयत इत्युक्ते धूमदर्शनेनाग्निरनुमीयत इति ज्ञायते । कथम्? दृष्ट्वा हि धूममथाग्निमनुमिनोति (२)नादृष्ट्वेति ; न च वाक्ये दर्शनशब्दः श्रूयते, अनुजानाति च वाक्यस्यार्थप्रत्यायकत्वम् ; तेन मन्यामहे विषयशब्देन विषयिणः प्रत्ययस्याभिधानं बोद्धाऽनुजानाति । एवमिहापि समानधर्मशब्देन समानधर्माध्यवसायमाहेति ।

न्यायवार्त्तिकम्

अस्योत्तरम्—

यथोक्ताध्यवसायादेव तद्विशेषापेक्षात् संशये नासंशयो नात्यन्तसंशयो वा । न, सूत्रार्थापरिज्ञानादिति सूत्रार्थः । यत्पुनरेतद्धर्मधर्मिग्रहणे संशयाभाव इति, तन्न ;

न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तमाह—अस्योत्तरमिति ।

यथो—वा ( सू० ६ )॥ यदि निर्विशेषणं समानधर्मोपपत्त्यादि संशयकारणमुच्येत ततः

वृत्तिः

कारणान्तरविलम्बान्न सर्वत्र प्रामाण्यसंशय इति यदि ब्रूयात् तदा तस्यैव विषयसंशयेऽपि हेतुत्वमस्त्विति किं प्रामाण्यसंशयस्य साधारणधर्मदर्शनादेर्वा संशयहेतुत्वेनेति भावः ॥ ५ ॥

---

(१) 'संशयानुत्पत्तिः संशयानुच्छेदश्च न प्रसज्यते' इति ख०, "न संशयानुपपत्तिः"—इति भा० "संशयानुच्छेद एव प्रसज्यते" इति ग० । (२) "नादृष्ट" इति ख०, "नादृष्ट्वा" इति भा० ।

## न्यायभाष्यम्

यथोहित्वा समानमनयोर्धर्ममुपलभ (१) इति धर्मधर्मिग्रहणे संशयाभाव इति, पूर्वदृष्टविषयमेतत्। यावहमर्थौ पूर्वमद्राक्षं तयोः समानं धर्ममुपलभे विशेषं नोपलभ इति, कथं नु विशेषं पश्येयं येनान्यतरमवधारयेयमिति। न चैतत् समानधर्मोपलब्धौ धर्मधर्मिग्रहणमात्रेण निवर्तत इति।

यच्चोक्तं नार्थान्तराध्यवसायादन्यत्र संशय इति, यो ह्यर्थान्तराध्यवसायमात्रं संशयहेतुमुपाददीत स एवं वाच्य इति।

यत्पुनरेतत् कार्यकारणयोः सारूप्याभावादिति, कारणस्य भावाभावयोः कार्यस्य

## न्यायवार्त्तिकम्

अपरिज्ञानात्—न ब्रूमो योऽसौ धर्म्युपलभ्यते तस्य धर्ममुपलभ इति अपि तु यौ मया पूर्वं स्थाणुपुरुषावुपलब्धौ तयोरयं समानो धर्म उपलभ्यत इति। एतेनैकवृत्तित्वादिति परिहृतम्।

यत्पुनरेतत् नार्थान्तराध्यवसायादन्यत्र संशय इति, न, अनभ्युपगमात्। अपरे न अर्थान्तरभावमात्रं मया संशयहेतुत्वेनोपादीयते (२) किं त्वर्थान्तरविशेषः। कः पुनरयं विशेषः? धर्मधर्मिभावः—धर्मे उपलब्धे धर्मिणि संशय इति परिहारं मन्यन्ते। न पुना रूपस्पर्शयोर्धर्मधर्मिभाव इति। अयं च न परिहार इति(क) पश्यामः। किं कारणम्? अर्थान्तरभावस्यानिवृत्तेः—यथैव रूपस्पर्शयोरर्थान्तरभावस्तथा धर्मधर्मिणोरपीति न युक्तोऽर्थान्तरदर्शनादर्थान्तरे संशयः। अत्रापि तदेवोत्तरम्—नानभ्युपगमादिति। न ब्रूमोऽर्थान्तरदर्शनादर्थान्तरे धर्मिणि सन्देहः, अपि तु समानधर्मादिविशिष्टधर्मिदर्शना(३)दविशेषवति धर्मिण्येव संशय इति।

यदप्येतत् सारूप्याभावादिति, विशेषानवधारणमुभयोः सारूप्यम्—यथैव समानधर्मदर्शनेन

## न्यायवार्त्तिकतात्पर्यटीका

पश्चादकरणात्पूर्वमपि न कुर्यादित्यसंशयः, पूर्वं वा करणात्पश्चादपि कुर्यादित्यत्यन्तसंशयः; न त्वसौ निर्विशेषणः संशयकारणमिति नासंशयो नात्यन्तसंशय इत्यर्थः। (ख) यथोहित्वेति भाष्ये यदप्युक्तमित्यर्थः।

एतेनेति, समानपदप्रयोगेण। सदृशार्थो हि समानशब्द इति पूर्वं व्याख्यातम् (ग)। यदप्येतत् सारूप्याभावात् अध्यवसायसंशययोः कार्यकारणयोरिति। विशेषानवधारणमुभयोः समानमित्यर्थः। भाष्यकारेण तु यत्सारूप्यमुक्तं तत्तथा न बोद्धव्यम्। यदि हि कार्यकारणयो-

## वृत्तिः

सिद्धान्तमाह—( यथोक्तेति )।

यथोक्ताध्यवसायात् साधारणादिधर्मदर्शनात् तस्य पुरुषत्वादेः यो विशेषः इतर-

---

(१) "उपलभते" इति ग-भा०।

(२) "किं त्वर्थान्तरं विशेषः" इति क। (३) 'दर्शनात् विशेषवति' इति क-पुस्तके पाठः।

(क) अतः परमादर्शे ( तच्च न ) इत्येवं मुद्रितोऽंशः 'अयं च न'त्यत्र आशङ्कितः पाठ इत्यनुमीयते।

(ख) यथोहित्वेत्यादिग्रन्थः सप्तमसूत्रीयतात्पर्ये "समाधेय" इत्यनन्तरमादर्शे मुद्रितोऽपि षष्ठसूत्रीयभाष्यग्रन्थस्य तत्र व्याख्यानमयुक्तं लेखकप्रमाद एव च तत्र हेतुरित्यवधार्य अस्माभिरिह गृहीतः।

(ग) २२५ पृ: वार्त्तिकतात्पर्यटीकी द्रष्टव्ये।

### न्यायभाष्यम्

भावाभावौ कार्यकारणयोः सारूप्यम्। यस्योत्पादाद्‌ यदुत्पद्यते यस्य चानुत्पादाद्‌ यन्नोत्पद्यते तत्कारणं कार्यमितरदित्येतत्सारूप्यम्, अस्ति च संशयकारणे संशये चैतदिति। एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृत इति।

यत्पुनरेतदुक्तं 'विप्रतिपत्त्यव्यवस्थाध्यवसायाच्च न संशय' इति, पृथक्प्रवादयो-

### न्यायवार्त्तिकम्

विशेषो नावधार्यत इति तथा संशयेनापीति। कारणसद्भावात् कार्यसद्भाव इति न सारूप्य-निर्देशोऽयम्, अपि तु कार्यकारणधर्मनिर्देशः। तथा च कार्यान्तरेऽप्यप्येतदस्तीति। न हि किञ्चित् कार्यं कारणसद्भावमन्तरेण सम्भवतीति। एतेनानेकधर्माध्यवसायादिति प्रतिषेधः परिहृतः। य एव समानधर्माध्यवसाये परिहारः स एवानेकधर्माध्यवसायेऽपीति।

(क)यत् पुनरेतदधिगतानधिगतयोरभावादिति, तन्न, अपरिज्ञानादिति—न ब्रूमोऽन्यस्मिन्नधि-गतेऽन्यत्र संशय इति, अपि तु सामान्यतोऽधिगते धर्मिणि विशेषानवधारणात्मकः प्रत्ययः संशय इति। यत् पुनरेतत् सत्यप्यभावादिति, न समानार्थापरिज्ञानात्—न हि कृतकत्वं समानो धर्मः, अन्यथा समानधर्मस्याभिधानात्—समानो धर्म इति विवक्षिततज्जातीयान्यवृत्तिर्यः स समानो न पुनः कृतकत्वमेवम्। यत् पुनरेतत् न समानधर्माध्यवसायादेवान्यथाऽपि दर्शनादिति, तन्न; प्रतिषेधादनवधारणाच्च—विरुद्धाव्यभिचारिधर्माध्यवसायात् संशय इति प्रतिषिद्धमेतत् अनवधारणे-नैव तत्त्वानुपलब्धेरिति प्रत्युक्तम्। न चैतदवधार्यते समानधर्मदर्शनादेव नान्यस्मादिति अन्यस्मा-दपि संशयोऽनेकधर्माध्यवसायादित्युक्तम्।

विप्रतिपत्त्यव्यवस्थाध्यवसायादेवेत्यनेनैव प्रत्युक्तम्। नैवं ब्रूमो विप्रतिपत्तिमात्रादव्यव-

### न्यायवार्त्तिकतात्पर्यटीका

रुत्पत्तिः सारूप्यं तदतिव्यापकं चाव्यापकं च नित्यानामपि कारणत्वात्। तस्मात् सारूप्यशब्दो न सारूप्यस्य निर्देशः, अपि तु कार्यकारणधर्मान्वयव्यतिरेकपर इत्याह—कारणसद्भावादिति। अनवधारणेनैव तत्त्वानुपलब्धेरिति प्रत्युक्तम्। सत्प्रतिपक्षयोरपि मिलितयोरन्यत्रादर्शनेनासाधारण एवान्तर्भावात्, एकैकविवक्षया तु हेत्वाभासान्तरत्वमिति

### वृत्तिः

व्यावर्तको धर्मः तस्य (१)अपगता ईक्षा ईक्षणं ततः विशेषादर्शनादित्यर्थः। तथा च विशेषादर्शनसहितसाधारणधर्मदर्शनादितः संशये स्वीकृते न कारणाभावादसंशयो न वा यत्किञ्चित्कारणसत्त्वादत्यन्तसंशय इत्यर्थः। साधारणधर्मदर्शनादेश्च संशयविशेषे जनक-

---

(१) "अपगत ईच" इति पा।

(क) प्रथमसूत्रे स्वीया आशङ्काः परिहरति यत् पुनरित्यादिना।

## न्यायभाष्यम्

व्याहतमर्थमुपलभे विशेषं च न जानामि नोपलभे येनान्यतरमवधारयेयम्, तत्कोऽत्र विशेषः स्याद् येनैकतरमवधारयेयमिति संशयो विप्रतिपत्ति(१)जनितोऽयं न शक्यो (२)विप्रतिपत्तिसम्प्रतिपत्तिमात्रेण निवर्त्तयितुमिति। एवमुपलब्ध्यनुपलब्ध्यव्यवस्थाकृते संशये वेदितव्यमिति।

यत्पुनरेतत् विप्रतिपत्तौ च सम्प्रतिपत्तेरिति, (३)विप्रतिपत्तिशब्दस्य योऽर्थः तदध्यवसायो विशेषापेक्षः संशयहेतुस्तस्य च समाख्यान्तरेण न निवृत्तिः। समानेऽधिकरणे व्याहतार्थौ प्रवादौ विप्रतिपत्तिशब्दस्यार्थः तदध्यवसायश्च विशेषापेक्षः संशयहेतुः। न चास्य (४)सम्प्रतिपत्तिशब्दे समाख्यान्तरे योज्यमाने संशयहेतुत्वं निवर्त्तते। तदिदमकृतबुद्धिसम्मोहनमिति।

यत्पुनः 'अव्यवस्थात्मनि (५)व्यवस्थितत्वाच्चाव्यवस्थाया' इति, संशयहेतोरर्थस्याप्रतिषेधादव्यवस्थाभ्यनुज्ञानाच्च निमित्तान्तरेण शब्दान्तरकल्पना व्यर्था। शब्दान्तर-

## न्यायवार्त्तिकम्

स्थामात्रात् वा संशय इति। न चाव्यवस्थातः संशय उपलब्ध्यनुपलब्ध्यव्यवस्थायाः पूर्वपदविशेषणत्वात्—पूर्वपदविशेषणमुपलब्ध्यनुपलब्धी न स्वतन्त्रे संशयकारणम्, तच्च सूत्र एवोक्तमिति।

यत्पुनरेतत् विप्रतिपत्तौ च सम्प्रतिपत्तेरिति, न संज्ञान्यथात्वादर्थस्यान्यथात्वम्—यस्माद्विप्रतिपत्तिशब्दार्थस्य निमित्तान्तरसन्निपाते सम्प्रतिपत्तिरिति नाम कृतं न तावता विप्रतिपत्तिर्नास्ति, विप्रतिपत्तेस्तु तथाभावात् संशयहेतुत्वमिति।

यत्पुनरेतत् "अव्यवस्थाऽऽत्मनि व्यवस्थितत्वाच्चाव्यवस्थाया" नाव्यवस्थास्तीति तदपि

## न्यायवार्त्तिकतात्पर्यटीका

भावः। न चाव्यवस्थातः संशय इति। नासौ पृथक्कारणमपि तु समानधर्मोपपत्त्यादिपरिकरतयेत्यर्थः। यत्पुनरेतद्विप्रतिपत्ताविति। विषयापेक्षया विप्रतिपत्तिः स्वरूपापेक्षया संप्रतिपत्तिरिति। एवमव्यवस्थायामपि द्रष्टव्यम् ॥ ६ ॥

## वृत्तिः

त्वात् संशयत्वावच्छिन्नं प्रति व्यभिचारेऽपि न क्षतिः, विप्रतिपत्तौ च वादिवाक्याभ्यां मध्यस्थस्यैव संशयोपगमात्।

---

(१) "-जनितोऽर्थो" वि-टि-भा०। (२) "विप्रतिपत्तिसंशयमात्रेण" इति ग०। (३) "शब्दस्यार्थे" इति ख०। (४) "सम्प्रतिपत्तिशब्दे" इति ख-ग-पु० नास्ति। (५) "व्यवस्थितत्वाद् व्यवस्थाया" इति ग०।

## न्यायभाष्यम्

कल्पना(१)व्यवस्था खलु अव्यवस्था न भवत्यव्यवस्थात्मनि व्यवस्थितत्वादिति। नानयोरुपलब्ध्यनुपलब्ध्योः सदसद्विषयत्वं (२)विशेषापेक्षं संशयहेतुर्न भवतीति प्रतिषिध्यते यावता चाव्यवस्थात्मनि व्यवस्थिता न तावताऽऽत्मानं जहाति, तावता ह्यनुज्ञाताऽव्यवस्था। एवमियं क्रियमाणाऽपि शब्दान्तरकल्पना नार्थान्तरं साधयतीति।

यत्पुनरेतत् 'तथाऽत्यन्तसंशयस्तद्धर्मसातत्योपपत्तेः' इति, नायं समानधर्मादिभ्य एव संशयः। किं तर्हि? तद्विषयाध्यवसायाद् विशेषस्मृतिसहितादित्यतो नात्यन्तसंशय इति।

अन्यतरधर्माध्यवसायाद्वा न संशय इति, तन्न युक्तम्; विशेषापेक्षो विमर्शः संशय इति वचनात्। विशेषश्चान्यतरधर्मो न तस्मिन्नध्यवसीयमाने विशेषापेक्षा सम्भवतीति ॥ ६ ॥

## न्यायवार्त्तिकम्

न; व्याघातात्—अव्यवस्था नास्त्यव्यवस्थात्मनि च (३) व्यवस्थितेति व्याघातः। न च निमित्तान्तरसन्निपातेनार्थस्य संज्ञान्तरकरणमर्थतथाभावं बाधते, यथाभूत एवार्थः संज्ञान्तरकरणे तथाभूत एवाकरणेऽपीति।

यत्पुनरेतत् "तथात्यन्तसंशयस्तद्धर्मसातत्योपपत्तेरिति, तदपि न, सूत्रार्थापरिज्ञानादित्युक्तम्। नायं समानधर्मादिभ्य एव संशयः, किं तु तद्विषयाध्यवसायादुपलब्ध्यनुपलब्ध्य(४)व्यवस्थाने च सति विशेषस्मृतिसहितात्, एवं च सति (५) नासंशयोऽपि नात्यन्तसंशयः।

अन्यतरधर्माध्यवसायादिति न युक्तम्; नैतस्मात् संशय इति—न हि कदाचिदन्यतरधर्माध्यवसाये सति संशयः अन्यतरधर्माध्यवसायस्य निर्णयहेतुत्वादिति ॥ ६ ॥

## वृत्तिः

यच्चोक्तं समानधर्मदर्शनात् कथं संशयः समानत्वस्य भेदगर्भत्वादिति, तदपि न, नहि समानधर्मत्वेन तज्ज्ञानं हेतुः, अपि तु उभयसहचरितधर्मवत्त्वज्ञानं तथेत्युक्तदोषाभावात् ॥ ६ ॥

---

(१) "अव्यवस्था खलु अव्यवस्था" इति ल० "व्यवस्था खलु व्यवस्था" इति ग० "अव्यवस्था खलु व्यवस्था' इति ज-भा०। (२) "विशेषापेक्षः" इति ग, भा। (३) "व्यवस्थितत्वाच्च" ख। (४) "व्यवस्थापने" क। (५) ख-पुस्तके 'नासंशयः' इत्य'पि'कारशून्यः पाठः।

## ( सू० )—यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः ॥ ७ ॥

### न्यायभाष्यम्

यत्र यत्र संशयपूर्विका परीक्षा शास्त्रे कथायां वा, तत्र तत्रैवं संशये परेण प्रतिषिद्धे समाधिर्वाच्य इति। अतः सर्वपरीक्षाव्यापित्वात् प्रथमं संशयः परीक्षित इति ॥ ७ ॥

### न्यायवार्त्तिकम्

यत्र संशयस्तत्रैवमुत्तरोत्तरप्रसङ्गः। कोऽस्य सूत्रस्यार्थः? स्वयं न संशयः प्रतिषेद्धव्यः, परेण तु संशये प्रतिषिद्धे परमुत्तरं वाच्यमिति शिष्यं शिक्षयति ॥ ७ ॥

( इति संशयपरीक्षा )

### न्यायवार्त्तिकतात्पर्यटीका

यत्र—ङ्गः ( सू० ७ )॥ कोऽस्य सूत्रस्येति तात्पर्यप्रश्नः। उत्तरम्—स्वयमिति। संशयपूर्वकत्वात् सर्वपरीक्षाणां परिचिक्षिपमाणेन संशयाक्षेपहेतुभिर्न प्रतिषेद्धव्योऽपि तु परैरेवमाक्षिप्तः संशय उक्तैः समाधानहेतुभिः समाधेयः (क)। शास्त्रे कथायां वा (१) वादलक्षणायामित्यर्थः ॥ ७ ॥

### वृत्तिः

सम्प्रति संशयपरीक्षयैव परेषां पदार्थानां परीक्षामतिदिशन्नाह—( यत्रेति )।

एवम् उक्तरीत्या (२) उत्तरोत्तरेषु प्रयोजनादिषु प्रसङ्गः प्रकृष्टः सङ्गः परीक्षायाः सम्बन्धो बोद्धव्यः। तत् किं प्रयोजनमपि परीक्षणीयम्? नेत्याह—यत्र संशय इति। यदि तल्लक्षणार्थसंशयस्तदा तदपि परीक्षणीयम्।

अथवा उत्तरोत्तरम् उक्तिप्रत्युक्तिरूपं तत्प्रसङ्गः तद्रूपा परीक्षा संशयितेऽर्थे कर्तव्येत्यर्थः ॥ ७ ॥

॥ समाप्तं संशयपरीक्षाप्रकरणम् ॥

---

(१) आदर्शपुस्तकयोः "शास्त्रकथायाम्" इति पाठः। (२) "उत्तरोत्तरेषां प्रयोजनादिप्रसङ्गः" इति आ०।

(क) अतःपरमादर्शपुस्तकयोः 'यथोद्दिष्टेति भाष्ये, यदप्युक्तमित्यर्थः'। इति मुद्रितोंऽशः मुद्राप्रमादादस्थानपतित इति ४१४-पृष्ठे सन्निवेशितः।

## न्यायभाष्यम्

अथ प्रमाणपरीक्षा—

### ( सू० )—प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः ॥ ८ ॥

( भा० ) प्रत्यक्षादीनां प्रमाणत्वं नास्ति त्रैकाल्यासिद्धेः पूर्वापरसहभावानुपपत्तेरित्यर्थः(१) ॥ ८ ॥

## न्यायवार्त्तिकम्

अथेदानीमवसरप्राप्तानि प्रमाणानि परीक्ष्यन्ते इति। किं पुनरेषां परीक्ष्यम्? आदौ तावत् सम्भवः—किं प्रमाणानि सन्त्युत न सन्तीति, सदसतोः सामान्यात् प्रमेयत्वाद्विशेषादर्शनाच्च संशयः।

व्युदस्य संशयं परः पक्षपरिग्रहेण प्रत्यवतिष्ठते—

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति। अस्यार्थः त्रिष्वपि कालेषु प्रमाणानि नार्थं साधयन्तीति ॥ ८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अथ प्रमाणपरीक्षेत्यादि भाष्यम्।

प्रत्य—द्धेः (सू० ८)॥ आर्थेन हि क्रमेण संशयपरीक्षायामुक्तेनोद्देशक्रमो बाधितः, प्रमाणादिषु तु तद्बाधकारणाभावादुद्देशक्रमानुरोधेन प्रमेयादिभ्यः प्राक् प्रमाणान्येव (२) परीक्षितव्यानि। तत्रापि प्रथमं प्रमाणसामान्यलक्षणपरीक्षा, तत्पूर्वकत्वाद्विशेषलक्षणानाम्, तत्र सामान्यलक्षणम् उपलब्धिसाधनं प्रमाणमिति, तच्चोपलब्धिसाधनत्वं प्रत्यक्षादीनामेवेति प्रत्यक्षादीनामिति उक्तम्।

तदेतदाह वार्तिककारः—अथेदानीमिति। परीक्षणीयं पृच्छति—किं पुनरेषामिति। सर्वैरेव वादिभिः स्वसिद्धान्तव्यवस्थापनाय प्रमाणान्यभ्युपगन्तव्यानि, तदभावे तद्व्यवस्थानुपपत्तेः। यस्य तु स्वपक्ष एव नास्ति नासौ लौकिको न परीक्षक इत्युन्मत्तवदुपेक्षणीयः। तस्मात् सर्वप्राणभृत्सिद्धेर्न प्रमाणसामान्यं परीक्षणीयमिति भावः। उत्तरम्—आदौ तावत्संभव इति। न परीक्षा संशयमन्तरेणेति संशयबीजमाह—सदसतोरिति। पूर्वपक्षमाह—व्युदस्य संशयमिति। अयमत्र पूर्वपक्षिणो माध्यमिकस्याभिसन्धिः—यद्यपि मम विश्वविचारासहत्ववादिनः प्रमाणं नाम न किञ्चिदस्ति विचारसहम्, तथाऽपि लोकसिद्धान्येव प्रमाणानि तैरेव प्रमाणैः पर्यालोच्यमानानि विचारं न सहन्ते। सोऽयं प्रमाणानामपराधो यानि स्वविरोधेन विलीयन्ते न ममापराध इति ॥ ८ ॥

## वृत्तिः

इदानीमवसरतः प्रमाणसामान्यपरीक्षणाय पूर्वपक्षयति—(प्रत्यक्षेति)।

कालत्रयेऽपि प्रमाणात् प्रमायाः सिद्धेर्वक्तुमशक्यत्वात् प्रत्यक्षादीनां न प्रामाण्यमित्यर्थः ॥ ८ ॥

(१) "अर्थः" इति फ-ज-ग-पु० नास्ति। (२) "परीक्षितानि" इति क।

## न्यायभाष्यम्

अस्य सामान्यवचनस्यार्थविभागः—

**( सू० )—पूर्वं हि प्रमाणसिद्धौ नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षोत्पत्तिः ॥ ९ ॥**

( भा० ) गन्धादिविषयं ज्ञानं प्रत्यक्षम्, तद् यदि पूर्वम्, पश्चाद्गन्धादीनां सिद्धिः, नेदं गन्धादिसन्निकर्षादुत्पद्यत इति ॥ ९ ॥

**( सू० )—पश्चात्सिद्धौ न प्रमाणेभ्यः प्रमेयसिद्धिः ॥ १० ॥**

( भा० ) असति प्रमाणे केन प्रमीयमाणोऽर्थः प्रमेयः स्यात् प्रमाणेन खलु प्रमीयमाणोऽर्थः प्रमेयमित्येतत्सिध्यति ॥ १० ॥

## न्यायवार्त्तिकम्

पूर्वं हि प्रमाणसिद्धाविति सूत्रम् । नेन्द्रियार्थसन्निकर्षात् प्रत्यक्षं ज्ञानमुत्पद्यत इति सूत्रार्थे व्याघातो दोषः, यदि पूर्वं ज्ञानं नेन्द्रियार्थसन्निकर्षस्तस्य कारणमिति यदुक्तमिन्द्रियार्थसन्निकर्षोत्पन्नमिति तद्व्याहन्यते ॥ ९ ॥

पश्चात् सिद्धाविति सूत्रम् । न प्रमाणनिमित्ता प्रमेयसंज्ञेति व्याघातः, न प्रमाणमन्तरेण प्रमेयमात्मानं लभत इति न प्रमाणायत्ता प्रमेयसिद्धिः ॥ १० ॥

## न्यायवार्त्तिकतात्पर्यटीका

पूर्वं—त्तिः (सू० ९) ॥ ज्ञानं हि प्रमाणं तद्योगात्प्रमेयमिति चार्थं इति च भवति । तद् यदि प्रमाणं पूर्वं प्रमेयादर्थादुत्पद्यते ततः प्रमाणात् पूर्वं नासावर्थं इति इन्द्रियार्थेत्यादिसूत्रव्याघातः ॥९॥

अथ पूर्वं प्रमेयं पश्चात् प्रमाणं तत्राऽऽह—पश्चादिति । यद्यपि स्वरूपं न प्रमाणाधीनं तथाऽपि तस्य प्रमेयत्वं तदधीनं तदपि चेत्प्रमाणात्पूर्वं न प्रमाणयोगनिबन्धनं स्यादित्यर्थः । तदिदमुक्तम्—प्रमेयसंज्ञेति ॥ १० ॥

## वृत्तिः

त्रिसूत्र्या त्रैकाल्यासिद्धत्वं व्युत्पादयति—( पूर्वं हीति ) ।

प्रमाणस्य पूर्वत्वं तावन्न सम्भवति, 'हि' यतः प्रमायाः पूर्वं प्रमाणसिद्धौ प्रमाणसत्त्वे इन्द्रियार्थसन्निकर्षात् प्रत्यक्षं सिध्यतीति न स्यात् प्रत्यक्षप्रमाणतः पूर्वमेव प्रमायाः सत्त्वात्, प्रमाणत्वं हि प्रमाकरणत्वम्, पूर्वं प्रमाया अभावे प्रमाकरणत्वमपि कथं स्यात् अतः पूर्वमेव प्रमायाः सिद्धिरुपेयेति कथम् इन्द्रियार्थसन्निकर्षात् इन्द्रियार्थसन्निकर्षादितः प्रत्यक्षोत्पत्तिः प्रत्यक्षाद्युत्पत्तिः ।

परे तु प्रत्यक्षं प्रति करणत्वे खण्डिते तद्रीत्या करणान्तरमपि खण्डनीयमित्याशयं सूत्रकृतो वर्णयन्ति ।

(सू०)—युगपत्सिद्धौ प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावो बुद्धीनाम् ॥ ११ ॥

न्यायभाष्यम्

यदि प्रमाणं प्रमेयं च युगपद्भवतः, एवमपि गन्धादिष्विन्द्रियार्थेषु ज्ञानानि प्रत्यर्थनियतानि युगपत्सम्भवन्तीति ज्ञानानां प्रत्यर्थनियतत्वात् क्रमवृत्तित्वाभावः। या इमा बुद्धयः क्रमेणार्थेषु वर्त्तन्ते तासां क्रमवृत्तित्वं न सम्भवतीति। व्याघातश्च 'युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' (१ अ० १ आ० १६ सू०) इति। एतावांश्च प्रमाणप्रमेययोः सद्भावविषयः स चानुपपन्न इति। तस्मात् प्रत्यक्षादीनां प्रमाणत्वं न सम्भवतीति।

अस्य समाधिः—उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद्

न्यायवार्त्तिकम्

युगपत्सिद्धाविति सूत्रम्। इन्द्रियार्थानां बुद्धीनां च सन्निपाते सति युगपद्भाव इति क्रमवृत्तित्वं दृष्टं न स्यादिति व्याघातो दोषः युगपज् ज्ञानानुत्पत्तिरिति च उक्तं तद् व्याहन्यते।

अत्र समाधिः। उपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमादिति (१)वाक्यस्यासिद्धतोद्भावनमर्थः।

प्रत्यक्षादीनामप्रामाण्यमिति च प्रतिज्ञापदयोर्व्याघातः—प्रत्यक्षादीनि नार्थं साधयन्ती-

न्यायवार्त्तिकतात्पर्यटीका

युग—नाम् (सू० ११) ॥ यौगपद्ये दृष्टव्याघातः सूत्रव्याघातश्च। प्रयोगस्तु—प्रत्यक्षादयो न प्रमाणत्वेन व्यवहर्तव्याः, कालत्रयेऽप्यर्थाप्रतिपादकत्वात्, यदेवं न तत्प्रमाणत्वेन व्यवह्रियते यथा शशविषाणम्, तथा चैतत् तस्मात्तथेति। एवं पूर्वपक्षिते सिद्धान्तमाह—अत्र समाधिरिति। उपलब्धिहेतोरित्यादिभाष्यस्य कालत्रयेऽप्यर्थाप्रतिपादकत्वादिति हेतोरसिद्धतोद्भावनमर्थः।

स्वयं वार्तिककारोऽस्यानुमानस्य दूषणमाह—प्रत्यक्षादीनामप्रामाण्यमिति चेति।

वृत्तिः

प्रमाणस्य प्रमावैशिष्ट्याभावे प्रमाणमिति ज्ञातेऽपि प्रमावैशिष्ट्यसंशयः स्यादिति भावः ॥ ९ ॥

(पश्चादिति)।

प्रमाणस्य प्रमातः पश्चात् सिद्धौ विषयस्य प्रमेयत्वं प्रमाणात् पूर्वमेव सिद्धमिति न प्रमाणतः प्रमाया उत्पत्तिः प्रमेयस्य च ज्ञप्तिरिति ॥ १० ॥

---

(१) 'वाक्यस्यासिद्धार्थतोद्भावनम्' क।

## न्यायवार्त्तिकम्

त्ययमर्थः, अयं च (१)व्याहतः। कथमिति? प्रत्यक्षादीनि च नार्थं साधयन्ति इति च यथेदं वस्तु नोपलभ्यत इति। इदं च नोपलभ्यते च इति व्याघातः, एवं प्रत्यक्षादीनि च नार्थं साधयन्तीति च। कथं चान्यथा प्रत्यक्षादीनि। न (२)ह्येते प्रत्यक्षादिशब्दा (३)अर्थासाधकत्वेन कृतार्था भवन्तीति।

धर्मप्रतिषेधाच्च प्रत्यक्षाद्यभ्युपगमः—प्रत्यक्षादीनामप्रामाण्यमित्येवं ब्रुवता न प्रत्यक्षादीनि प्रतिषिद्धानि, अपि तु प्रमाणत्वं धर्म इति। अथ भावस्यास्वतन्त्रत्वात् तान्यपि प्रतिषिद्धानि— प्रत्यक्षादीनामप्रामाण्यमिति भावाभिधानमेतत्, अस्वतन्त्रश्च भाव इति भावप्रतिषेधात् तद्वतां प्रतिषेध इति; एवमप्यनिवृत्तो व्याघातः—प्रत्यक्षादीनामभावः प्रतिपाद्यः प्रत्यक्षादीनि च न सन्तीति केनाभावं प्रतिपादयसि? न च प्रत्यक्षाद्यभावेऽन्यः प्रतिपादनोपायः कश्चिदस्ति।

विशेषप्रतिषेधाच्च प्रमाणान्तराभ्यनुज्ञा—प्रत्यक्षादीनामप्रामाण्यमित्येवं ब्रुवता प्रत्यक्षादि-व्यतिरेकि प्रमाणमभ्यनुज्ञातं भवति, व्यर्थं वा विशेषणं प्रत्यक्षादीनामप्रामाण्यमिति। अथ न प्रमाणान्तरमभ्यनुज्ञायते, किमस्य विशेषणस्य सामर्थ्यं प्रत्यक्षादीनि न प्रमाणानीति, नैव प्रमाणानि सन्तीत्येवं वक्तव्यमिति। एतदपि व्याहतं प्रमाणानि नैव सन्ति प्रतिपादयसि चेति।

## न्यायवार्त्तिकतात्पर्यटीका

लब्धात्मकं खल्वनुमानं प्रत्यक्षादीनां प्रमाणानामप्रामाण्यमापादयेत्, न च लब्धात्मकम्, तस्य तु प्रतिज्ञाविरोधेनाऽऽत्मलाभ एव नास्तीति कथं तेषामप्रामाण्यमापादयितुमर्हतीति भावः। यदि प्रमाणानि नार्थं साधयन्ति प्रत्यक्षादीनीत्येव न स्यात्, न खलु तानि प्रमाणतोऽसिद्धानि प्रत्यक्षादीनीत्येव भवन्तीत्यर्थः। न चैतेषामर्थसाधनत्वं सामान्यविशेषाभिधायिप्रत्यक्षादि पदगोचरताऽपीत्याह—कथं चान्यथेति।

अपि च प्रामाण्यनिषेधे न प्रमाणानां प्रत्यक्षादीनामसत्त्वम्, न ह्यकमण्डलुर्माणवक इत्यनेन माणवकः प्रतिषिध्यते, किं तर्हि? तस्य कमण्डलुयोगो धर्मः; ततश्च प्रमाणानामसत्त्वं पूर्वपक्षिणो-ऽभिमतं न स्यादित्याह—धर्मप्रतिषेधाच्चेति। शङ्कते—अथ भावस्यास्वतन्त्रत्वादिति। निराकरोति—एवमपीति।

## वृत्तिः

( युगपदिति )।

इदं च सूत्रद्वयमनुमानाद्यभिप्रायेण चक्षुःश्रोत्रादेः प्रमानन्तरं प्रमासमकालं वा सत्त्वस्येष्टत्वादुत्पत्तेः शङ्कितुमप्यशक्यत्वात्। तदयमर्थः—प्रमाणप्रमेययोर्युगपत्सत्त्वे युगप-दुत्पत्तौ बुद्धीनामर्थविशेषनियतत्वाद् यत् क्रमवृत्तित्वं तन्न स्यात्, पदज्ञानं हि शब्दविषयकं श्रावणप्रत्यक्षरूपम्, शाब्दबोधश्च पदार्थविषयकः परोक्षरूपो विजातीय इत्यनयोर्न यौगपद्यं

(१) 'व्याघातः' क। (२) "ह्येते" इति ख-पु० नास्ति। (३) "अर्थसाधकमन्तरेण" इति ख।

## न्यायभाष्यम्

यथादर्शनं विभागवचनम्। क्वचिदुपलब्धिहेतुः पूर्वम्, पश्चादुपलब्धिविषयः, यथाऽऽदित्यस्य प्रकाश उत्पद्यमानानाम्। क्वचित्पूर्वमुपलब्धिविषयः पश्चादुपलब्धिहेतुः, यथाऽवस्थितानां प्रदीपः। क्वचिदुपलब्धिहेतुरुपलब्धिविषयश्च सह भवतः, यथा धूमेनाग्नेर्ग्रहणमिति। उपलब्धिहेतुश्च प्रमाणं प्रमेयं तूपलब्धिविषयः। एवं प्रमाणप्रमेययोः पूर्वापरसहभावेऽनियते यथाऽर्थो दृश्यते तथा विभज्य वचनीय इति तत्रैकान्तेन प्रतिषेधानुपपत्तिः, सामान्येन खलु विभज्य प्रतिषेध उक्त इति।

समाख्याहेतोस्त्रैकाल्ययोगात्तथाभूता समाख्या। यत्पुनरिदं (१)पश्चात् सिद्धावसति प्रमाणे प्रमेयं न सिध्यति, प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमिति विज्ञायत इति। प्रमाण-

## न्यायवार्त्तिकम्

यदपि तत्प्रमाणान्तरमभ्यनुज्ञायते तत्रापि त्रैकाल्यासिद्धेरित्ययमनुषक्तो हेतुः। यच्च त्रिष्वपि कालेषु न प्रतिपादयति कथं तस्य प्रमाणत्वमित्यनिवृत्तो व्याघातः। अथ धर्मप्रतिषेध एवायम्? तथाऽपि यानि प्रामाण्यव्यतिरिक्तानि प्रत्यक्षादीन्यभ्यनुज्ञायन्ते राजपुरुषप्रतिषेधन्यायेन कस्तेषां स्वभाव इत्यनिवृत्तोऽनुयोगो व्याघातश्च। अर्थान्तरानभ्युपगमे षष्ठ्यास्तद्धितस्य चार्थो वक्तव्यः—यदि प्रत्यक्षादिव्यतिरिक्तं न प्रामाण्यमस्ति प्रत्यक्षादीनामिति षष्ठ्यर्थः कः? ततोऽवश्यं विधीयमानः प्रतिषिध्यमानो वा धर्मोऽभ्युपेयः, तदभ्युपगमे च प्रत्यक्षादीनां पृथक् स्वरूपं वक्तव्यमित्यनिवृत्तो व्याघातः। एतेन तद्धितार्थो व्याख्यातः। यश्चायं हेतुस्त्रैकाल्यासिद्धेरिति अयमपि व्यधिकरणस्त्रैकाल्यविषयत्वात्—त्रिकालस्य भावस्त्रैकाल्यं तस्यासिद्धिरिति न प्रमाणधर्मः। अथायमर्थस्त्रिष्वपि कालेषु न प्रमाणान्यर्थं साधयन्तीति, तथाऽपि हेत्वर्थो नास्ति प्रतिज्ञार्थेनाक्षिप्तत्वात्—य एव प्रतिज्ञार्थो न प्रमाणान्यर्थं साधयन्तीति स एव हेत्वर्थस्त्रिषु कालेषु नार्थं साधयन्तीति(क)।

यत्पुनरेतत् प्रमाणेन प्रमीयमाणोऽर्थः प्रमेयमिदमिति भवतीति समाख्याहेतोस्त्रैकाल्य-

## न्यायवार्त्तिकतात्पर्यटीका

प्रतिषिध्यमान इतिमात्रे वक्तव्ये विधीयमान इति दृष्टान्तार्थम्। एतेन तद्धितार्थ इति, प्रामाण्यपदार्थ इत्यर्थः। यथाश्रुतश्च हेतुर्व्यधिकरण इत्याह—यश्चायं हेतुरिति।

यत्पुनरित्यादिभाष्यं व्याचष्टे—यत्पुनरेतत् प्रमाणेनेति।

---

(१) 'पश्चात् सिद्धे सति च प्रमाणे' इति ज-ग०।

(क) तथा च सिद्धसाधनं स्फुटमिति भावः।

### न्यायभाष्यम्

मित्येतस्याः समाख्याया उपलब्धिहेतुत्वं निमित्तम्, तस्य त्रैकाल्ययोगः। उपलब्धिमकार्षीत्, उपलब्धिं करोति, उपलब्धिं करिष्यतीति समाख्याहेतोस्त्रैकाल्ययोगात् समाख्या तथाभूता प्रमितोऽनेनार्थः प्रमीयते प्रमास्यत इति प्रमाणम्; प्रमितम्, प्रमीयते, प्रमास्यते इति च प्रमेयम्। एवं सति भविष्यत्यस्मिन् हेतुत उपलब्धिः, प्रमास्यतेऽयमर्थः प्रमेयमिदमित्येतत् सर्वं भवतीति। त्रैकाल्यानभ्यनुज्ञाने च व्यवहारानुपपत्तिः। यश्चैवं नाभ्यनुजानीयात् तस्य पाचकमानय पक्ष्यति लावकमानय लविष्यतीति व्यवहारो नोपपद्यत इति।

'प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे'रित्येवमादि वाक्यं प्रमाणप्रतिषेधः। तत्रायं प्रष्टव्यः, अथानेन प्रतिषेधेन भवता किं क्रियत इति? किं सम्भवो निवर्त्यते अथा-

### न्यायवार्त्तिकम्

योगादप्रतिषेधः, प्रमाणं प्रमेयमिति चास्याः समाख्याया निमित्तं त्रिकाल्योगि, प्रमास्यते प्रमीयते प्रामायि वाऽनेन इति प्रमाणम्, प्रमास्यते प्रमीयते प्रामायि वेति प्रमेयम्। (क)एवं च सति प्रमास्यते अयमर्थः भविष्यत्यस्मिन् हेतुरुपलब्धेरिति प्रमेयमिदमिति सिध्यति। अनभ्यनुज्ञाने व्यवहारानुपपत्तिरिति विरोधो दोषः। यस्तु त्रैकालिकं प्रमाणप्रमेयव्यवहारं न प्रतिपद्यते तस्य पाचकमानयेत्यादिव्यवहारो विरुध्यत इति।

"प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे"रित्येवमादि वाक्यं प्रमाणप्रतिषेधः। अथानेन प्रत्यक्षादीनां किं क्रियते, किं सम्भवो निवर्त्यते अथासम्भवो ज्ञाप्यते। किञ्चातः? यदि

### न्यायवार्त्तिकतात्पर्यटीका

संभवः प्रत्यक्षादीनां निवर्त्यत इति, प्रत्यक्षादीनामभावे (१) कारकं हेतुवचनमित्यर्थः।

### वृत्तिः

सम्भवति, कार्यकारण(२)भावबलात् क्रमिकत्वेनैव सिद्धेः। अत एवैकमेव ज्ञानमुभयविषयकमित्यपि नाऽऽशङ्कनीयम्, सङ्करप्रसङ्गाच्च। एवं व्याप्तिज्ञानानुमित्यादावपि द्रष्टव्यम्।

परे तु प्रमाणप्रमेययोर्न युगपत्सिद्धिः न युगपज्ज्ञानम्, बुद्धीनामर्थविशेषनियतत्वात् क्रमवृत्तित्वं तथा सति न स्यात्। तथाहि चक्षुषो ज्ञानमनुमित्यादिरूपं घटादेश्च प्रत्यक्षादिरूपम्, न चानयोर्यौगपद्यं सम्भवतीत्यर्थ इत्याहुः॥ ११॥

---

(१) 'कारकहेतुवचनम्' इति ख। (२) "-भाववत्त्वात्" इति श्या०।

(क) भाष्ये पूर्ववाक्ययोर्व्युत्क्रमेण पाठः हेतुतः उपलब्धिरिति विशेषश्च द्रष्टव्यौ।

### न्यायभाष्यम्

सम्भवो ज्ञाप्यते इति। तद् यदि सम्भवो निवर्त्यते सति सम्भवे प्रत्यक्षादीनां प्रतिषेधानुपपत्तिः। अथासम्भवो ज्ञाप्यते, (१)प्रमाणलक्षणं प्राप्तस्तर्हि प्रतिषेधः प्रमाणासम्भवस्योपलब्धिहेतुत्वादिति॥ ११॥

किं चातः ?

## ( सू० )—त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिः॥ १२॥

अस्य तु विभागः। पूर्वं हि प्रतिषेधसिद्धावसति प्रतिषेध्ये (२)किमनेन प्रतिषिध्यते पश्चात्सिद्धौ (क)प्रतिषेध्यासिद्धिः प्रतिषेधाभावादिति। युगपत्सिद्धौ प्रतिषेध्यसिद्ध्यभ्यनु-

### न्यायवार्त्तिकम्

तावत् सम्भवो निवर्त्यते, तन्न युक्तं व्याघातात् प्रतिषेधार्थापरिज्ञानाच्च—सम्भवो निवर्त्यत इत्येवं ब्रुवाणेन प्रमाणान्यभ्युपगतानि भवन्ति (ख)न ह्यसतो निवृत्तिर्भवतीति। न च प्रतिषेधस्यैतत्सामर्थ्यं यद्विद्यमानं पदार्थमन्यथा कुर्यात्। ज्ञापकत्वाच्च न सम्भवनिवृत्तिः—ज्ञापकोऽयं प्रतिषेधो न सम्भवनिवर्त्तक इति। अथासम्भवो ज्ञाप्यत इति, प्रमाणलक्षणप्राप्तस्तर्हि प्रतिषेधः (ग)अतो व्याघात इति—प्रमाणानि नार्थं साधयन्तीति प्रतिषेधस्य प्रमाणलक्षणाभ्यनुज्ञानादिति॥ ११॥

एवं च

त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरिति। अयमपि प्रतिषेधस्त्रिष्वपि कालेषु नोपपन्न इत्ययं सूत्रार्थः। 'त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्ति'रित्येवमभिदधानेनाभ्युपगतं भवति प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति; नैष दोषः, तस्य स्ववचनव्याघातदेशनात्—

### न्यायवार्त्तिकतात्पर्यटीका

(घ) न ह्यसतो निवृत्तिरिति। नासन् घटो मुद्गरप्रहारेण निवर्त्यत इत्यर्थः। असंभवं प्रत्यक्षादीनां सिद्धमेव ज्ञापयतीत्याह—असम्भवो ज्ञाप्यते॥ ११॥

त्रैका—त्तिः ( सू० १२ )॥ देशयति—त्रैकाल्यासिद्धेः प्रतिषेधानुपपत्तिरित्येवमभिदधानेनेति। परिहरति—नैष दोष इति। त्वद्वचनं त्वदभ्युपगमविरुद्धम् अस्माकं तु

---

(१) 'प्रमाणलक्षणप्राप्तः' इति ग-ल०। (२) 'किं प्रतिषिध्यते' ग-ख-भा०।

(क) प्रतिषेध्यासिद्धिरिति भावप्रधानो निर्देशः, तथाच प्रतिषेधवाक्याभावात् प्रतिषेध्यत्वेनाभिमतस्य प्रत्यक्षादीनां प्रामाण्यस्य प्रतिषेध्यत्वासिद्धिरित्यर्थः। प्रतिषेध्यसिद्धिरिति पाठश्चेत् 'पूर्वं प्रतिषेधाभावात् प्रत्यक्षादीनां प्रामाण्यस्य सिद्धिरेव निरुद्धेति उत्तरवर्त्ती प्रतिषेधोऽनर्थक इति स्फुटोऽर्थो भवतीति बोध्यम्।

(ख) 'न ह्यसता'मिति बहुवचनान्तः पाठः क-ख-पुस्तकयोः, एकवचनान्तस्तु तात्पर्यानुसारितया गृहीतः।

(ग) 'अतो व्याघातः' इत्यादिः 'अभ्यनुज्ञानादिति' इत्यन्तो ग्रन्थः १२श-सूत्रवार्त्तिकस्य 'सूत्रार्थः' इत्यतः परं मुद्रितोऽपि अर्थसङ्गत्यनुरोधादिह गृहीतः। तथाच भवदुक्तं प्रतिषेधवाक्यमेव अर्थोपलब्धिहेतुत्वात् प्रमाणीभूतमिति दूरापेता प्रामाण्यानभ्युपगमकथेति भावः।

(घ) 'न'त्यादि'रित्यर्थ' इत्यन्तो ग्रन्थः 'अथासम्भवो ज्ञाप्यते' इत्यतः परम् आदर्शपुस्तकयोर्मुद्रितः।

## न्यायभाष्यम्

ज्ञानादनर्थकः प्रतिषेध इति। प्रतिषेधलक्षणे च वाक्येऽनुपपद्यमाने सिद्धं प्रत्यक्षादीनां प्रमाणत्वमिति ॥ १२ ॥

## न्यायवार्त्तिकम्

स्ववचनव्याघातो मया देश्यते नाभ्युपगम्यते। कथमिति? यत् खलु त्रिष्वपि कालेषु न साधकं तदसाधनमिति ब्रुवता प्रतिषेधस्यासाधकत्वं स्ववाचैवाभ्युपगतं भवति, यथा कश्चित् स्वाङ्गुलिज्वालया परं दिधक्षुः, स च परं दहेद्वा न वा, स्वाङ्गुलिदाहं तावदनुभवति।

यश्चायं प्रतिषेधः प्रत्यक्षादीनि नार्थं साधयन्तीति किमयं प्रत्यक्षादीनां सामर्थ्यप्रतिषेध उत सत्ताप्रतिषेध इति। यदि सामर्थ्यप्रतिषेधः, न प्रत्यक्षादीनि प्रतिषिद्धानि, तेषां च सामर्थ्यप्रतिषेधात् प्रत्यक्षादीनां स्वरूपं वक्तव्यमिति पूर्ववत्प्रसङ्गः। अथ सत्ताप्रतिषेधः, तत्रापि कथं न सन्तीति। किं सामान्यतोऽथ विशेषत इति। यदि सामान्यतः, प्रत्यक्षादिग्रहणं व्यर्थम्, एवं वक्तव्यम्—न प्रमाणानि सन्तीति। न च धर्मिणां प्रतिषेधे कश्चिन्न्याय इति। अथ विशेषप्रतिषेधः, तथाऽपि प्रमाणान्तराभ्युपगमः। न ह्यनभ्युपगतसामान्यस्य विशेषप्रतिषेधोऽवकाशं लभत इति।

प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेः प्रत्यक्षादीनां प्रामाण्यं त्रैकाल्यसिद्धेरिति च वाक्ययोरेकार्थता वा स्यात् भिन्नार्थता वा? यद्येकार्थता, प्रत्यक्षादीनां प्रामाण्यं त्रैकाल्यासिद्धेरित्येवमेव वक्तव्यम्। अभिन्नार्थे च एते वाक्ये इति कुतः प्रतिपत्तिरिति, यदि प्रमाणतः, अनिवृत्तो व्याघातः; अथान्यतः, तत् प्रमाणमिति संज्ञाभेदमात्रम्। अथ भिन्नार्थे, तत् केनावगतं त्रैकाल्यासिद्धेः त्रैकाल्यसिद्धेरिति चानयोर्वाक्ययोर्भिन्नोऽर्थ इति। प्रत्यक्षादीनि न सन्तीति(१)

## न्यायवार्त्तिकतात्पर्यटीका

नैतद्वचनं नाभ्युपगमविरुद्धमित्यर्थः। न च धर्मिणां प्रतिषेधे कश्चिन्न्याय इति। नानुमानं धर्मिप्रतिषेधे प्रभवति आश्रयासिद्धत्वाद्धेतोरित्यर्थः।

अपि च प्रमाणमात्रमधिक्षिपतः प्रत्यक्षादीनामप्रामाण्यमिति प्रत्यक्षादीनां प्रामाण्यमिति च वाक्ययोरर्थभेदाभेदौ विचारं न सहेते इत्याह—प्रत्यक्षादीनामप्रामाण्यमिति। एवमेव

## वृत्तिः

सिद्धान्तसूत्रम्—( त्रैकाल्येति )।

यदि त्रैकाल्यासिद्धया प्रमाणात् प्रमेयसिद्धिर्नोपेयते तदा तद्रीत्या त्वदीयः प्रतिषेधोऽप्यनुपपन्न इति जात्युत्तरमेतदिति भावः ॥ १२ ॥

---

(१) अतः परं क-पुस्तके 'च'कारोऽधिकः।

### न्यायभाष्यम्

कथम् ?

## (सू०)—सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः ॥ १३ ॥

त्रैकाल्यासिद्धेरित्यस्य हेतोर्यद्युदाहरणमुपादीयते हेत्वर्थस्य साधकत्वं दृष्टान्ते

### न्यायवार्त्तिकम्

नास्तिना समानाधिकरणः प्रत्यक्षादिशब्दश्च न प्रत्यक्षादीनामभावं शक्नोति वक्तुम्। न ह्ययं(क) नास्तिना समानाधिकरणो घटादिशब्दो घटाभावं प्रतिपादयति, अपि तु गेहघटसंयोगं वा कालविशेषं वा घटस्य सामर्थ्यं वा प्रतिषेधति। एवमनेनापि प्रमाणसमानाधिकरणेन नास्तिना प्रमाणानां नाभावः शक्यः प्रतिपादयितुम्, अपि त्वनेनापि तन्त्रान्तराभ्युपगतानां प्रतिषेधः स्यात् सामर्थ्यप्रतिषेधो वा कालविशेषप्रतिषेधो वेति सर्वथा प्रमाणानि अभ्युपगतानि भवन्ति। तानि चाभ्युपगतान्यनेन प्रतिषेधेन प्रतिषिध्यन्त इति व्याघातः। प्रमाणानां वाऽसत्त्वं प्रतिपाद्यमानं कथं कस्य प्रतिपाद्यते ? कश्च प्रतिपादयिता ? अप्रतिपन्नः प्रतिपाद्यत इति, प्रतिपन्नश्च प्रतिपादयतीति। केन प्रतिपन्नः ? यदि प्रमाणेन, व्याघातः, प्रमाणानभ्युपगमात्। अथान्यथा, न दृष्टान्तोऽस्ति। प्रतिपाद्यप्रतिपादकयोश्च भेदाभ्युपगमे व्याघातः—यदि प्रतिपाद्यं प्रतिपादयितारं च भेदेन प्रतिपद्यसे भेदप्रतिपादकप्रमाणाभ्युपगमाद्व्याघातः। अथ भेदं न प्रतिपद्यसे ? क्व किं प्रतिपाद्यत इत्यनिवृत्तो व्याघातः। प्रमाणानि न सन्तीति प्रतिजानानः पर्यनुयोज्यः कथं न सन्तीति, यदि प्रमाणं ब्रवीति, व्याहतम्। अथ न ब्रवीति, अर्थो नास्य सिध्यति। तदेवमेतद्वाक्यं यावद्यावद्विचार्यते तावत् तावत् प्रलीयत इति ॥ १२ ॥

### न्यायवार्त्तिकतात्पर्यटीका

वक्तव्यमिति, नञोरप्रयोगेण लाघवात्। (ख) घटस्य सामर्थ्यं वेति, यदा सत्येव घटे तस्यासामर्थ्यं विवक्षित्वोच्यते नास्ति घट इति, नोदकाहरणसमर्थ इति तदा गम्यते। तन्त्रान्तराभ्युपगतानां प्रतिषेध इति। तन्त्रान्तरे यादृशं प्रमाणमभ्युपेयते तादृशप्रतिषेधे अन्यादृशस्याभ्युपगमो भवति, यथा प्रधानं नास्तीति जगत्कारणस्य सुखदुःखमोहात्मकत्वं प्रधानत्वं तत्प्रतिषिध्यते, न पुनर्जगत्कारणम्; तस्यान्यादृशस्याभ्युपगमादिति। कथमिति प्रमाणाक्षेपः। कस्येति प्रतिपाद्याक्षेपः। कश्चेति प्रतिपादकाक्षेपः। प्रतिपाद्याक्षेपं विभजते—अप्रतिपन्न इति। प्रतिपादकाक्षेपं विभजते—प्रतिपन्नश्चेति। क्व प्रतिपाद्ये किं प्रतिपाद्यत इति ॥ १२ ॥

---

(क) अयमिति ईदृश इत्यर्थः।

(ख) मांदर्शपुस्तकयोः 'सोऽसाधर्म्यं वेति' इति पाठः प्रामादिकः।

## न्यायभाष्यम्

दर्शयितव्यमिति, न च तर्हि प्रत्यक्षादीनामप्रामाण्यम्। अथ प्रत्यक्षादीनामप्रामाण्यम्, उपादीयमानमप्युदाहरणं नार्थं साधयिष्यतीति सोऽयं सर्वप्रमाणव्याहतो हेतुरहेतुः; 'सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्धः' ( १ अ० २ आ० ६ सू० ) इति। वाक्यार्थो ह्यस्य सिद्धान्तः। स च वाक्यार्थः प्रत्यक्षादीनि नार्थं साधयन्तीति इदं चावयवानामुपादानमर्थस्य साधनायेति। अथ नोपादीयते (१)अप्रदर्शितं हेत्वर्थस्य (२)दृष्टान्तेन साधकत्वमिति निषेधो नोपपद्यते हेतुत्वासिद्धेरिति ॥ १३ ॥

## न्यायवार्त्तिकम्

सर्वप्रमाणप्रतिषेधाच्च प्रतिषेधानुपपत्तिः। त्रैकाल्यासिद्धेरित्यस्य हेतोरुदाहरणमुपादीयते न वा? यद्युपादीयते, व्याघातो भवति प्रत्यक्षादीनां चाप्रामाण्याभ्युपगमादुपादीयमानमपि नार्थं साधयतीति; अथ साधयति, व्याघातः। "अथ नोपादीयते, अप्रदर्शितं हेत्वर्थस्य साधकत्व"मिति—अप्रदर्शितदृष्टान्तो हेतुर्न साधक इति। सोऽयं हेतुः सर्वैः प्रमाणैर्विप्रतिषिद्धो विरुद्धो भवति, "सिद्धान्तमभ्युपेत्य तद्विरोधी विरुद्ध" इति। वाक्यार्थो ह्यस्य सिद्धान्तः, स च वाक्यार्थः प्रमाणानि नार्थं साधयन्तीति, इदं च प्रमाणानामुपादानमर्थसाधनाय "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे"रिति। बुद्धि-विवक्षा-प्रयत्न-वायूदीरण-ताल्वभिघातौष्ठप्रस्पन्दादीनि अवर्जयन् बुद्ध्वा वाक्यमुच्चारयसि, स्थाणुकण्टकसर्पादीन् परिहरन् पादविहरणादीनि करोषि, ते एते वाक्यप्रवृत्ती प्रमाणप्रतिषेधान्न सम्भवत इति ॥ १३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

सर्व—त्तिः ( सू० १३ ) ॥ यद्युपादीयते उदाहरणम्, तत् प्रमाणेनानवधारितं न शक्यमुपादातुमिति भावः। न केवलमशक्यं व्यर्थं चेत्याह—प्रत्यक्षादीनां चेति। सर्वैः प्रमाणैरिति, उदाहरणादिविषयैः प्रमाणैः विप्रतिषिद्धो विरुद्धो भवति, बाधितविषयतया प्रमाणाभासो भवतीत्यर्थः। (क)विरुद्धं चेत्याह—सिद्धान्तमभ्युपेत्येति। प्रमाणानामित्यवयवाभिप्रायम्। अवर्जयन्निति वर्जनविरुद्धमुपादानमुच्यते, उपाददान इत्यर्थः ॥ १३ ॥

## वृत्तिः

किञ्च सर्वप्रमाणप्रतिषेधे प्रतिषेधकं प्रमाणमपि नाभ्युपगन्तव्यम्। तथा च कथं प्रतिषेधसिद्धिरित्याह—( सर्वप्रमाणेति ) ॥ १३ ॥

---

( १ ) 'अप्रदर्शितहेत्वर्थस्य' ल-ग-ज-भा०। ( २ ) 'दृष्टान्ते न' ल-भा०।

(क) साधनं विरुद्धमिति तल्लक्षणमाहेत्यर्थः।

## ( सू० )—तत्प्रामाण्ये वा न सर्वप्रमाणविप्रतिषेधः ॥ १४ ॥

### न्यायभाष्यम्

प्रतिषेधलक्षणे स्ववाक्ये तेषामवयवाश्रितानां प्रत्यक्षादीनां प्रामाण्येऽभ्यनुज्ञायमाने परवाक्येऽप्यवयवाश्रितानां प्रामाण्यं प्रसज्यते अविशेषादिति। एवं च न सर्वाणि प्रमाणानि प्रतिषिध्यन्त इति। विप्रतिषेध इति वीत्ययमुपसर्गः सम्प्रतिपत्त्यर्थः न व्याघातेऽर्थाभावादिति ॥ १४ ॥

### न्यायवार्त्तिकम्

तत्प्रामाण्ये वा सर्वप्रमाणविप्रतिषेधः। अथ स्ववाक्याश्रितप्रमाणव्यतिरेकेण प्रमाणानि प्रतिषिध्यन्ते, एवं सति न सर्वं प्रमाणं प्रतिषिद्धं भवति, यश्च न्यायः स्ववाक्याश्रितप्रमाणाभ्युपगमे स एवान्याश्रितप्रमाणाभ्युपगमेऽपीति। वीत्ययमुपसर्गो विशेषप्रतिषेधे, न व्याघाते इति। किमुक्तं भवति ? कानिचित्प्रमाणानि प्रतिषिध्यन्ते कानिचिदभ्यनुज्ञायन्त इति। यानि

### न्यायवार्त्तिकतात्पर्यटीका

तत्प्रा—धः ( सू० १४ ) ॥ तत्प्रमाण्ये वेति। अस्यार्थः—यदि माध्यमिको ब्रूयात् प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धेरिति, स्ववाक्यावयवाश्रितानि प्रमाणानि यथालोकप्रतीति सिद्धानि, तैरविचारितसिद्धैरितरेषां प्रामाण्यं प्रतिषिध्यत इति; तत्रेदमुच्यते—'तत्प्रामाण्ये वा' अवयवाश्रितप्रत्यक्षादिप्रामाण्ये 'न सर्वप्रमाणविप्रतिषेधः' अवयवाश्रितानामेव प्रामाण्याभ्युपगमात्। किं पुनरिदमविचारितसिद्धत्वम् ? किं विचारासहत्वम् आहो सर्वजनसिद्धतया सन्देहानास्पदत्वम् ? तत्र पूर्वस्मिन् कल्पे विचारासहत्वेन स्वयं दुःस्थितेनान्येषां प्रामाण्यं बाध्यत इति सुभाषितम्। तस्मादुत्तरः कल्पः, तथा च न सर्वाप्रामाण्यम्, तस्यैव प्रामाण्यात्।

अत्र भाष्यम्—वीत्ययमुपसर्गः संप्रतिपत्त्यर्थं, प्रतिषेधशब्दार्थमनुजानाति (क)विशेषमभिदधत्, न तु तद्व्यतिरिक्तार्थः, न व्याघातवचन इत्यर्थः। तदिदमुक्तम्—न व्याघाते। कस्मात्? अर्थाभावात्। स्ववाक्यावयवाश्रितानां हि प्रमाणानां प्रामाण्ये सर्वप्रमाणप्रतिषेधव्याघातः पूर्वमुक्तः, तत्प्रतिषेधः पूर्वेण विरुध्यते (ख)अशक्यश्चेति अर्थाभाव इत्यर्थः।

तदेतद्वार्तिककारो व्याचष्टे—वीत्ययमुपसर्गो विशेषप्रतिषेधे। यावदुक्तं भवति विशेषेण सर्वेषु प्रमाणेषु प्रतिषेध इति तावदुक्तं भवति विप्रतिषेध इति, प्रतिषेधशब्दार्थाभ्यनुज्ञानत्वाद्विशब्दस्य। तेन 'न सर्वप्रमाणविप्रतिषेध' इत्यनेन 'वि'पदसहितेन किमुक्तं भवति ? इदमुक्तं

---

(क) आदर्शपुस्तकयोः "विशेषमभिदधातु" इति पाठः।

(ख) 'अशक्यश्चेति तत्प्रतिषेध इत्यनेन सम्बध्यते। तथाच सर्वप्रमाणप्रतिषेधव्याघातस्य प्रतिषेधः प्रमाणयितुमशक्य इति अर्थाभावादित्यनेनोक्तमिति तात्पर्यमतो भावः। आदर्शग्रन्थयोः स्थूलाक्षरैर्धृतोऽप्ययमंशो भाष्ये न दृश्यत इति सूक्ष्माक्षरैर्मुद्रितः।

## ( सू० )—त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवत् तत्सिद्धेः ॥ १५ ॥

### न्यायभाष्यम्

किमर्थं पुनरिदमुच्यते ? पूर्वोक्तनिबन्धनार्थम्। यत्तावत् पूर्वोक्तमुपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनमिति, तदितः समुत्थानं यथा विज्ञायेत। अनियमदर्शी खल्वयमृषिर्नियमेन प्रतिषेधं प्रत्याचष्टे—त्रैकाल्यस्य चायुक्तः प्रतिषेध इति। तत्रैकां विधामुदाहरति शब्दादातोद्यसिद्धिव-

### न्यायवार्त्तिकम्

स्ववाक्याश्रितानि तान्यभ्यनुज्ञायन्ते, यानि परवाक्याश्रितानि तानि प्रतिषिध्यन्त इति। यच्चेदं वाक्यं "प्रत्यक्षादीनामप्रामाण्यं त्रैकाल्यासिद्धे"रिति किमिदं प्रमाणस्वरूपमथ नेति। यदि प्रमाणस्वरूपम्, तदा व्याघातः। अथ न, तथाऽपि नानेन कश्चिदर्थः प्रतिपाद्यत इति व्यर्थम् ॥ १४ ॥

त्रैकाल्याप्रतिषेधश्च शब्दादातोद्यसिद्धिवदिति (क) सूत्रम्। यत् तत् पूर्वमुक्तमुपलब्धिहेतोरुपलब्धिविषयस्य चार्थस्य पूर्वापरसहभावानियमाद् यथादर्शनं विभागवचनमिति

### न्यायवार्त्तिकतात्पर्यटीका

भवति—कानिचिदिति। अवयवाश्रितानि प्रमाणानि विचार्य समुदायं विचारयति—यच्चेति ॥ १४ ॥

तदिदं सूत्रकारेण त्रैकाल्यासिद्धेरित्यनुयोगस्य प्रतिषेधेऽपि (ख)साम्यादप्रमाणविरोधश्चापादितः, संप्रत्यसिद्धतोद्भावनपरं सूत्रं पठति—

त्रैका—द्धेः (सू० १५)। तत्पाठमाक्षिपति—किमर्थमिति। स्वातन्त्र्येण चेदस्य सूत्रस्यार्थः पूर्वमुक्तः कृतं सूत्रपाठेनेत्यर्थः। परिहरति—पूर्वोक्तेति। न तदस्माभिरुत्सूत्रमुक्तमपि तु सूत्रार्थ एवेति ज्ञापनार्थं सूत्रपाठोऽस्माकमित्यर्थः। नियमेन यः प्रतिषेधः पूर्वमेव वा पश्चादेव वा सहैव वेति तं प्रतिषेधति—अनियमेति। खलुशब्दोऽयं यस्मादर्थे, यस्मादनियमदर्शी ऋषिः।

### वृत्तिः

यदि च प्रतिषेधकं प्रमाणमुपेयते तदा कथं सर्वप्रमाणप्रतिषेधः इत्याह—( तत्प्रामाण्ये इति ) ॥ १४ ॥

---

(क) एतेन 'तत्सिद्धेः' इत्यंश एतन्मते सूत्रानन्तर्गत इति सम्भाव्यते।

(ख) अत्र 'साम्यादप्रामाण्यं विरोधश्च' इति "साम्यं प्रमाणविरोधश्च" इति वा पाठो भवितमर्हतीति चिन्त्यम्।

### न्यायभाष्यम्

दिति। यथा पश्चात्सिद्धेन शब्देन पूर्वसिद्धमातोद्यमनुमीयते, साध्यं (क)चाऽऽतोद्यं साधनं च शब्दः, अन्तर्हिते ह्यातोद्ये स्वनतोऽनुमानं भवतीति. वीणा वाद्यते वेणुः पूर्यते इति स्वनविशेषेण आतोद्यविशेषं प्रतिपद्यते; तथा पूर्वसिद्धमुपलब्धिविषयं पश्चात्सिद्धेनोपलब्धिहेतुना प्रतिपद्यते इति। निदर्शनार्थत्वाच्चास्य शेषयोर्विधयोर्यथोक्तमुदाहरणं वेदितव्यमिति।

कस्मात् पुनरिह तन्नोच्यते? पूर्वोक्तमुपपाद्यत इति। सर्वथा तावदयमर्थः प्रकाशयितव्यः, स इह वा प्रकाश्येत तत्र वा, न कश्चिद्विशेष इति॥ १५॥

### न्यायवार्त्तिकम्

(ख)तदुत्थानज्ञापनार्थः सूत्रपाठ इति। कस्मात् पुनस्तत्रैवेदं सूत्रं नोक्तमिति? अविशेषात्—तत्र वाऽभिधीयते इह वा न कश्चिद्विशेष इति, सर्वथा तावदयमर्थः प्रकाशयितव्य इति। एकां च विधामुदाहरति—शब्दादातोद्यसिद्धिवदिति। शेषयोस्तु विधयोर्यथोक्ते उदाहरणे वेदितव्ये। (ग)"यथा पूर्वसिद्धमातोद्यं पश्चात् सिद्धेन शब्देनानुमीयते वीणा वाद्यते वेणुः पूर्यते इति", योऽसौ वीणावेणुशब्दयोरसाधारणो धर्मः वीणादिनिमित्तकत्वम्, तदुपलभमानः शब्दस्य वीणाशब्दो वेणुशब्द इति प्रतिपद्यते पूर्वसिद्धमातोद्यं पश्चात् सिद्धः शब्द इति। सहभावस्योदा-

### न्यायवार्त्तिकतात्पर्यटीका

वार्त्तिकम्,—तदुत्थानज्ञापनार्थः सूत्रपाठ इति। देशयति—पाठक्रममतिलंघ्य (घ)कस्मात् तत्रैवेदमिति। अत्रैव तद्भाष्यं कस्मान्नोक्तमिति च द्रष्टव्यम्। परिहरति—अविशेषादिति। अथ शब्दः श्रोत्रविवरं समवेतः कथमातोद्यमसंबद्धं गमयतीत्यत आह—योऽसौ वीणावेणु-

### वृत्तिः

ननु मन्मते वस्तुसिद्धिर्नापेक्षिता विश्वस्य शून्यत्वात्, प्रमाणप्रमेयभावोऽपि न वास्तविकः, त्वन्मते च त्रैकाल्यासिद्धिरुक्तैवेत्यतस्तदुद्धरति—( त्रैकाल्याप्रतिषेधश्चेति )।

त्रैकाल्यो यः प्रतिषेध उक्तः स न सम्भवति। कुत इत्यत आह—शब्दादिति। यथा शब्दात् पश्चाद्भाविनः पूर्वसिद्धस्यातोद्यस्य मुरजादेः सिद्धिः ज्ञप्तिः, यथा वा पूर्वसिद्धात्

---

(क) 'ततं वीणादिकं वाद्यमानद्धं मुरजादिकम्। वंशादिकं तु सुषिरं कांस्यतालादिकं घनम्। चतुर्विधमिदं वाद्यं वादित्रातोद्यनामकम्' इत्यमरः।

(ख) अत्र तात्पर्यसम्मतः पाठो गृहीतः। आदर्शग्रन्थयोस्तु 'तदुत्थानज्ञापनार्थमतः सूत्रान्तरस्योत्थानमिति' इति पाठभेदः।

(ग) अत्र भाष्यवार्त्तिकयोरक्षरविसंवादो द्रष्टव्यः।

(घ) वार्त्तिकगतः 'पुनः' शब्दो न गृहीत इति बोध्यम्।

## न्यायभाष्यम्

प्रमाणं प्रमेयमिति च समाख्या समावेशेन वर्त्तते समाख्यानिमित्तवशात्। समाख्यानिमित्तं तूपलब्धिसाधनं प्रमाणम् उपलब्धिविषयश्च प्रमेयमिति। यदा च उपलब्धिविषयः क्वचिदुपलब्धिसाधनं भवति तदा प्रमाणं प्रमेयमिति चैकोऽर्थोऽभिधीयते। अस्यार्थस्यावद्योतनार्थमिदमुच्यते—

## न्यायवार्त्तिकम्

हरणम्—धूमदर्शनादग्निं धूमविशेषणं प्रतिपद्यते। पूर्वसिद्ध उपलब्धिहेतुरादित्यः पश्चात् सिद्धानां प्रकाशक इति ॥१५॥

'प्रमाणं प्रमेयमिति चेयं समाख्या समावेशेन भवति, समाख्यानिमित्तवशात्' 'समावेशः' अनियमः। 'समाख्यानिमित्तवशात्' समाख्यानिमित्ततन्त्रत्वादिति। प्रमाणप्रमेयसंज्ञयो-

## न्यायवार्त्तिकतात्पर्यटीका

शब्दयोरिति। अयं शब्दो धर्मी, वीणाङ्गुलिसंयोगजशब्दपूर्व इति साध्यो धर्मः, तन्निमित्तासाधारणधर्मवत्त्वात्, पूर्वोपलब्धवीणानिमित्तध्वनिवदिति। तदिदमुक्तम्—वीणानिमित्तकत्वमिति। धूमदर्शनादिति। संयोगिना हि वह्निना विशिष्टो (क)धूमोऽनुमीयते न कारणेन, अस्तीति वर्त्तमानावभासानुपपत्तेरिति ॥ १५ ॥

यत्पुनराक्षिप्यते यदनियतं न तत्परमार्थसत्, यथा रज्ज्वामारोपितं सर्पत्वम्, तामेव हि रज्जुं तदैव कश्चित्सर्प इति कल्पयति कश्चिद्धारेति; स एव कदाचित्सर्प इति कल्पयित्वा पश्चाद्धारेति कल्पयति, तथा च प्रमाणप्रमेयभावस्तस्मान्न परमार्थसन्निति। अत्रेदमुत्तरसूत्रम्—

प्रमेया च तुला प्रामाण्यवदिति ( सू० १६) ॥ तद्योजनिकां करोति—प्रमाणं प्रमेयमिति चेयमिति। अयमभिसंधिः—क्षणभङ्गपरिणामनिरासे सति स्वकारणादुत्पन्नं स्थिरं वस्तु तत्तद्-

## वृत्तिः

सूर्यादुत्तरकालीनवस्तुप्रकाशनम्, यथा वा वह्निसमकालीनाद् धूमाद् वह्निसिद्धिस्तथाऽत्रापि। प्रमा सर्वत्र प्रमाणादुत्तरभाविन्येव, प्रमाणस्य चक्षुरादेः प्रमातः पूर्वभावित्वमस्त्येव, पूर्वं प्रमावैशिष्ट्यं तु तस्य नोपेयते, यदा कदाचित् प्रमासम्बन्धेनैव प्रमाणत्वसम्भवात्, यदा कदाचित् पाकसम्बन्धेनैव पाचकमानयेत्यादिवदिति भावः।

अत्र चकारान्तं न सूत्रान्तर्गतमिति तत्त्वालोके। वस्तुतष्टीकादिस्वरसात् सूत्रान्तर्गतमेव ॥ १५ ॥

---

(क) अयं ग्रन्थो लिपिकृत्प्रमादादस्फुटार्थः।

## ( सू० )—(१)प्रमेया च तुलाप्रामाण्यवत् ॥ १६ ॥

### न्यायभाष्यम्

गुरुत्वपरिमाणज्ञानसाधनं तुला प्रमाणम्, ज्ञानविषयो गुरु द्रव्यं (२)सुवर्णादि प्रमेयम्। यदा (२)सुवर्णादिना तुलान्तरं व्यवस्थाप्यते तदा तुलान्तरप्रतिपत्तौ सुवर्णादि प्रमाणं तुलान्तरं प्रमेयमिति। एवमनवयवेन तन्त्रार्थ उद्दिष्टो वेदितव्यः। आत्मा तावदुपलब्धिविषयत्वात् प्रमेये परिपठितः, उपलब्धौ स्वातन्त्र्यात् प्रमाता। बुद्धिरुपलब्धिसाधनत्वात् प्रमाणम्, उपलब्धिविषयत्वात् प्रमेयम्; उभयाभावात् तु प्रमितिः। एव-(३)मर्थविशेषे समाख्यासमावेशो योज्यः। तथा च कारकशब्दा निमित्तवशात्

### न्यायवार्त्तिकम्

निमित्तमुपलब्धिहेतुत्वमुपलब्धिविषयत्वं च। यदा पुनरेकं वस्त्वनेकनिमित्तसम्बन्धि भवति तदा कथम्? तदा निमित्ततन्त्रत्वात् समाख्यायास्तद्वस्तु अनेकेन निमित्तेन (क)सम्बन्धेन सति अनेकशब्दाभिलाप्यम्। अस्य चार्थस्य ज्ञापनार्थं सूत्रम्—

प्रमेयता च तुलाप्रामाण्यवदिति। किमुक्तं भवति? यथा गुरुत्वपरिमाणज्ञानसाधनं तुलाद्रव्यं समाहारगुरुत्वस्येयत्तापरिच्छेदनिमित्तत्वात् प्रमाणम्, सुवर्णादिना च परिच्छिद्यमानेयत्तैषा तुलेति परिच्छेदविषयत्वेन व्यवतिष्ठमाना प्रमेयम्। (४)उदाहरणमात्रं चैतत्। "एवमनवयवेन तन्त्रार्थो वेदितव्यः।" यथा च प्रमाणप्रमेयसमाख्ये तथा कारकशब्दाः सर्वे निमित्तसमावेश-

### न्यायवार्त्तिकतात्पर्यटीका

वस्त्वन्तरसन्निधानात्तत्तद्धर्मयोगे सति तत्तद्बुद्धिव्यपदेशमनुभवति। समावेशं दर्शयितुं पृच्छति—यदा पुनरिति। उत्तरम्—तदा निमित्तेति। अस्य चार्थस्य ज्ञापनार्थं सूत्रम्—

प्रमेया च तुलाप्रामाण्यवदिति। न केवलं प्रमाणं समाहारगुरुत्वे तुला, यदा पुनरस्यां संदेहो भवति प्रामाण्यं प्रति, तदा सिद्धप्रमाणभावेन तुलान्तरेण यत्परीक्षितं सुवर्णादि तेन प्रमेया च तुलाप्रामाण्यवत्। यथा प्रामाण्ये तुला प्रमेया च तथाऽन्यदपि सर्वं प्रमाणं प्रामाण्ये प्रमेयमित्यर्थः। तदेतद्भाष्यकृदाह—एवमनवयवेन कार्त्स्न्येन, तन्त्रार्थः शास्त्रार्थ इति। क्वचित् प्रमातृत्व-प्रमेयत्व-प्रमाणत्वादीनां समावेशः, यथात्मनि। स हि प्रमाता, प्रमीयमाणश्च प्रमेयम्, तेन तु प्रमितेन तद्गतगुणान्तरानुमाने प्रमाणम्। क्वचित्पुनः प्रमाणत्वप्रमेयत्वफलत्वानां समावेशः, यथा बुद्धौ; क्वचित्पुनः प्रमाणत्वप्रमेयत्वयोः, यथा संशयादौ। सेयं समावेशस्य तन्त्रार्थव्याप्तिरिति।

तथा च कारकशब्दा इति। अत्र पूरयित्वा व्याचष्टे वार्त्तिककारः—यथा च प्रमाणेति।

---

(१) "प्रमेयता" इति पाठो मुद्रितवार्त्तिके दृश्यते। ज-चादर्शे च स एव गृहीतः। (२) "सुवर्णादि प्रमेयम्। यदा" इत्यंशः टि-पु० नास्ति। (३) "-मर्थभेदे" इति वि, टि। (४) "उदाहरणं चैतत्" इति ख०।

(क) "सम्बन्धे सति" इति पाठो युक्तः सम्भाव्यते।

## न्यायभाष्यम्

समावेशेन वर्त्तन्त इति। वृक्षस्तिष्ठतीति (१)स्वस्थितौ स्वातन्त्र्यात् कर्त्ता। वृक्षं

## न्यायवार्त्तिकम्

नियमेन वर्तन्ते, तथा च लौकिकमुदाहरणम्। एकमनेकेन कारकशब्देनाभिधीयते 'वृक्षस्तिष्ठतीति स्वस्थितौ स्वातन्त्र्यात् कर्ता'। किं पुनर्वृक्षस्य स्वस्थितौ स्वातन्त्र्यम्? कारकान्तरानपेक्षत्वम्। न हि वृक्षस्तिष्ठन् स्वस्थितौ कारकान्तरं प्रयुङ्क्त इति। यदाऽयं स्थितिशब्दो गतिनिषेधवचनो भवति तदैवम्, यदाऽप्यस्तेरभिधायकः तदाऽप्यस्तेर्व्यक्तिनिमित्तत्वेनावतिष्ठमानोऽस्ति व्यनक्तीति कर्तेत्युच्यते। यदा तु गेहसम्बन्धाद्यभिधायको भवति (क) अस्तिशब्दः, यथा गेहे देवदत्तस्तिष्ठतीति प्रतिनिर्दिष्टोऽस्तीति गम्यते तदा न सत्तामाह न गतिप्रतिषेधम्, अपि तु

## न्यायवार्त्तिकतात्पर्यटीका

यावन्ति यत्र निमित्तानि तावतां तत्र नैमित्तिकानां प्रवृत्तेरवश्यंभावो नियमः। स्वस्थितौ वृक्षः स्वातन्त्र्यात् कर्तेति भाष्यम्। तत्र स्वातन्त्र्यं पृच्छति वार्त्तिककारः—किं पुनः स्वातन्त्र्यमिति। इतरकारकाप्रयोज्यत्वं(ख) प्रयोजकत्वं च कारकान्तराणां कर्तुः स्वातन्त्र्यमुक्तम्, इह तु कारकान्तराणामभावात्तादृशं स्वातन्त्र्यं नास्तीति भावः। उत्तरम्—कारकान्तरानपेक्षत्वम्, कारकान्तरापेक्षस्य हि प्रयोजकतया कथंचित्स्वातन्त्र्यं विवक्ष्यते, तदनपेक्षस्य नितरां स्वातन्त्र्यमित्यर्थः। यदाऽयं स्थितिशब्दो गतिप्रतिषेधवचन इति। यावदुक्तं भवति न गच्छतीति तदुक्तं भवति तिष्ठतीति। अत्र च निषेधस्य निषेध्याधीननिरूपणतया तदुपाधिः पूर्वापरीभावो न तु स्वरूपेण निषेधस्य पूर्वापरीभावसंभव इति। यदाऽप्यस्तेरभिधायक इति सत्तासामान्याभिधायक इत्यर्थः। अस्ति व्यनक्तीति वृक्षस्य हि महत्त्वे सति रूपवत्त्वे सति सत्तासमवाय एव सत्ताव्यञ्जकत्वम्, तत्र चानपेक्ष

## वृत्तिः

नन्वनियतत्वादेव प्रमाणप्रमेयव्यवहारो न पारमार्थिकः, रज्जौ सर्पादिव्यवहारवदित्याशङ्कायामाह—( प्रमेयता चेति )।

यथाहि तुलायाः सुवर्णादिगुरुत्वेयत्तापरिच्छेदकत्वात् प्रमाणव्यवहारः तुलान्तरेण च तदीयगुरुत्वेयत्ता(२)परिच्छेदेन प्रमेयव्यवहारस्तथा निमित्तद्वयसमावेशादिन्द्रियादेरपि प्रमाणप्रमेयव्यवहार इति।

---

(१) "स्वस्थितौ" इति वि-टि-पु०-नास्ति। (२) "-परिच्छेदे च" इति आ०।

(क) अत्र 'स्थितिशब्दः' इति युक्तः पाठ इति ख-वार्त्तिकसम्पादकाः।

(ख) अतः परम् क-चिह्निततात्पर्यग्रन्थे ( स: प्रयोजकोऽयं न कारकान्तराणाम् ) तत्प्रयोजकत्वं इत्येवं मुद्रितम्।

## न्यायवार्त्तिकम्

गेहसम्बन्धम्; तदाऽपि देवदत्तगेहसम्बन्धानुभवक्रिया, तस्यामपि न कारकान्तराणि प्रयुङ्क्त इति स्वतन्त्रो भवति। (क)यदा स्वयमभग्नवचनः स्थितिशब्दः, तिष्ठति वृक्षो न भग्न इति; तदाऽपि स्वस्थितौ न कारकान्तराणि प्रयुङ्क्त इति स्वतन्त्रो भवति; समुदायैकदेशं वा स्वस्थितौ (ख)प्रयुङ्क्ते—वृक्षो मूलैस्तिष्ठतीति, प्रासादः स्तम्भैर्ध्रियत इति।

पूर्वापरप्रत्ययैकविषयता वा स्थितिः—यद्वस्तु प्राक् सिद्धं पुनर्निमित्तान्तरसन्निधाने सति उपलभ्यते यत् तस्यानेकायुगपत्कालप्रत्ययविषयत्वं सा स्थितिः; तस्यां स्थितावस्य यत् सहकारि साधनं चक्षुरादि, तत् करणमिति। चक्रभ्रान्तिप्रदीपप्रत्ययवन्मिथ्याप्रत्ययः स इति चेत्, न; प्रमाणाभावात्—अथ मन्यसे नैवैकं किञ्चिद् वस्त्वयुगपत्कालानेकप्रत्ययविषयो भवति। यदि न भवति, कथं तर्हि स एवायं वृक्षस्तिष्ठतीति प्रत्ययः? न हि कदाचिदाद्येन दर्शनेन स एवायं वृक्षस्तिष्ठतीति प्रत्ययो भवति। दृष्टोऽन्यत्वेऽपि स्थितिप्रत्ययः, चक्रं भ्रमत्तिष्ठतीति प्रदीपो ज्वलंस्तिष्ठतीति। अनवस्थितेषु नानाभूतेषु चक्रभ्रान्तिप्रदीपादिषु य एते तद्भावप्रत्यया अतस्मिं-स्तदिति मिथ्याप्रत्यया एते। यथा चैते मिथ्याप्रत्यया एवं वृक्षादिस्थितिष्वपीति, न; प्रमाणा-

## न्यायवार्त्तिकतात्पर्यटीका

इत्यर्थः। गेहसंबन्धानुभवः गेहसंबन्धप्राप्तिः समवायः, तद्विषया क्रिया गतिविधारकः प्रयत्नस्तेन हि स तिष्ठति। घटो गृहेऽस्तीति त्वौपचारिकः प्रयोगः। यदाऽप्ययमभग्नवचन इति। अत्रापि निषेध्यस्य पूर्वापरीभावोपाधिरेव निषेधस्य तथाभावः। अथवा तिष्ठतीत्यत्रापि कयाचिद्विवक्षया कारकान्तरापेक्षाऽस्तु तथाऽपि तत्प्रयोजकत्वेनैव स्वातन्त्र्यमित्याह—समुदायेति। अवयवानां समूहः समुदायस्तदेकदेशोऽवयव इति। ध्रियत इति कर्त्तरि लकारः।

प्रत्यभिज्ञानविषयता वा स्थितिः, तस्यां सत्यामपि काराकान्तरापेक्षायां प्रयोजकतया स्वातन्त्र्य-मित्याह—पूर्वापरेति। अनेके पर्यायवन्तः प्रत्ययाः प्राक्, अनु तत्ताश्रयस्य धर्मिणः पुनरनुभवः, अथ स्मृतिः, अथ प्रतिसंधानमिति। वैनाशिको देशयति—चक्रेति। यदेव दण्डसंयोगेन चक्रभ्रमणं तदेवेदमुपरतेऽपि दण्डसंयोगे इत्यर्थः। परिहरति—न प्रमाणेति। नासति बलवति बाधके प्रमाणे प्रत्यभिज्ञानस्य शक्यं मिथ्यात्वम्, ज्वालादिषु तु तदस्तीत्यर्थः। (ग) न च समस्तप्रतिसन्धानप्रत्ययमिथ्यात्वे मिथ्याप्रतिसन्धानप्रत्ययो भवितुमर्हति बीजादित्याह—

---

(क) "यदाऽप्ययमभग्नवचन" इति तात्पर्यं।

(ख) 'इह सर्वत्र प्रपूर्वो युजिरपेक्षार्थः' इति स्फुटमेव।

(ग) अत्र 'नच समस्तप्रतिसन्धानप्रत्ययो मिथ्या भवितुमर्हति बीजाभावात्' इति पाठः समीचीनतया प्रतिभाति।

## न्यायवार्त्तिकम्

भावात्—नहि भवता प्रमाणं किञ्चिद् वृक्षादीनां नानात्वप्रतिपादकमभिधीयते। मिथ्याप्रत्ययाश्च सम्यक्प्रत्ययानुसारेण भवन्तीति क्वामी सम्यक्प्रत्यया भवन्तीति वक्तव्यम्। अथ भवतः कालान्तरावस्थाने किं प्रमाणम्? उक्तं प्रमाणम्—रूप-रस-स्पर्शप्रत्ययानामेकानेकप्रत्ययनिमित्तत्वं प्रतिसन्धानादिति; कार्यस्याऽऽधारत्वेन वा कारणस्य कार्यकालानुभवनमिति। यद् यस्याऽऽधारो भवति तत् तस्य सद्भावकालमनुभवति, यथा क्षीरस्य कुण्डम्, कारणं च कार्याधिकरणमतस्तेनापि कार्यकालोऽनुभवनीय इति। अनाधारमेवेति चेत्—अथ मन्यसे प्रतीत्य कारणं कार्यमुत्पद्यते इति क्व किं वर्तत इति; (क) तन्न, दृष्टान्ताभावात्—नहि कश्चिदुभयपक्षसम्प्रतिपन्नो दृष्टान्तः कार्यमनाधारमस्तीति। (ख)कार्यमाधारवदित्यत्रापि न दृष्टान्तोऽस्तीति समानम्। समानमित्यनुत्तरमभ्युपगमात्—अभ्युपगतं तावद्भवता नास्मत्पक्षे दृष्टान्तोऽस्ति, किं तु भवत्पक्षेऽपि नास्तीति। विरोध इति चेत्—अथ मन्यसे न मयाऽभ्युपगम्यते दृष्टान्ताभावः किं तु भवत्पक्षे विरोधो दृश्यते। कथमिति? योऽनुपपद्यमानदृष्टान्तः स पक्षोऽसाधीयानित्येवं ब्रुवाणः स्वसिद्धान्तं बाधते। (ग) तन्न, अपरिज्ञानात्—न भवताऽस्मत्पक्षो व्यज्ञायि न स्वपक्षः। अस्मत्पक्षे तावत् कार्यमाधारवदितिए तत्प्रसिद्धम्, भवत्पक्षेऽपि रूपादयः कार्याश्चाऽऽधारवन्तश्चेत्यभ्युपगमविरोधः, भूतभौतिकसमुदायो द्रव्यमिति। यदि रूपादीननाश्रितान् मन्यसे कोऽस्य

## न्यायवार्त्तिकतात्पर्यटीका

मिथ्याप्रत्ययाश्चेति। वैनाशिकः पृच्छति—अथ भवत इति। एवं ब्रुवाणः प्रत्यक्षमप्रमाणयन्न शक्यस्तेन बोधयितुमित्यनुमानं प्रमाणमाह—उक्तं प्रमाणम्(घ) आत्मलक्षणे रूपेति। अनुमानान्तरमाह—कार्यस्येति। कार्यकालानुभवनं कार्यकालप्राप्तिः। वैनाशिकः शङ्कते—अनाधारमिति। प्रतीत्येति पूर्वभावं विवक्षत्येत्यर्थः। दूषयति—तन्नेति। आधेयस्याधारसमानकालत्वमनुभवसिद्धम्, तेनाऽऽधारेण कारणेन कार्यकालं स्थातव्यम्। अनाधारत्वं तु कार्यस्य नानुभवगोचरः, अपि तु युक्त्या साध्यम्, सा च दृष्टान्ताभावादनुपपन्ना। न च विप्रतिपत्तिमात्रादनुभवः शक्योऽपवदितुम्, क्षणभङ्गसाधनानि च निराकरिष्यन्ते। यदि हि रूपादीनामाधारवत्त्वं निषिध्यते ततोऽस्याभ्युपगमविरोधो भवति, भूतानि पृथिव्यादीनि भौतिका रूपादय इति।

## वृत्तिः

यद्वा प्रमाणता प्रमेयता च प्रमावैशिष्ट्यादिति यत्प्रागाशङ्कितं तत्राऽऽह—प्रमेयता

---

(क) 'तन्न, दृष्टान्ताभावा'दिति 'अनाधारमेवे'ति चेदित्याक्षेपे समाधानम्।

(ख) अत्रैव पुनराक्षिपति कार्यमिति।

(ग) 'तन्नापरिज्ञाना'दिति 'विरोध इति चे'दित्यत्र समाधानम्।

(घ) १८६-पृष्ठे 'नहि रूपरसगन्धस्पर्शप्रत्ययाः प्रतिसन्धीयन्ते' इत्यादिग्रन्थो द्रष्टव्यः।

## न्यायभाष्यम्

पश्यतीति दर्शनेनाऽऽप्तुमिष्यमाणतमत्वात् कर्म। वृक्षेण चन्द्रमसं ज्ञापयतीति ज्ञापकस्य

## न्यायवार्त्तिकम्

तद्धितस्यार्थो भौतिका रूपादय इति। यच्चोक्तं 'मणिः प्रभाया आश्रयस्तद्वृत्तिस्थितिविकारानुविधानात्, कुण्डं बदराणामाश्रयस्तद्वशेनापातात्, तैलस्य तिल आश्रयस्तद्वशेनास्पन्दना'दित्येवमादि तद्व्याहन्यते। अनाश्रिताश्च रूपादयः स्वतन्त्रा एकमुपनिबन्धनं वस्त्वन्तरमन्तरेण तिलमुद्गमाषादिवद्विभज्येरन्, न तु विभज्यन्ते, तस्मात् परतन्त्रा इति। तस्माद् व्यवस्थितमेतत् स्मृत्या सह पूर्वापरप्रत्ययैकविषयता वा स्थितिरिति।

(क) दर्शनेनाप्तुमिष्यमाणत्वाद् वृक्षः कर्म। कर्मणि कः कारकार्थः? क्रियाविषयत्वम्। यत् खलु क्रियाया विषयभावेन व्यवतिष्ठते तत् कर्म। एतेन कर्मलक्षणेन (ख) "तथा युक्तं चानीप्सितम्" इति संगृहीतम्।

आनन्तर्यप्रतिपत्तिः करणस्य साधकतमत्वार्थः। वृक्षेण चन्द्रमसं ज्ञापयतीति वृक्षं गृहीत्वाऽनन्तरं चन्द्रमसं प्रतिपद्यत इति वृक्षः करणकारकशब्दवाच्यः।

## न्यायवार्त्तिकतात्पर्यटीका

अभ्युपगमान्तरविरोधमाह—यच्चोक्तं भवद्भिरिति। न केवलं रूपादीनामाश्रितत्वं भवद्भिरभ्युपगतमुपपन्नं चेत्याह—(१)अनाश्रिताश्चेति।

पृच्छति—कर्मणि कः कारकार्थः, कारकशब्दार्थः। क्रियानिमित्तं हि कारकम्, यत्पुनः क्रियाया एव व्याप्यं न तत् क्रियानिमित्तमिति न कारकम्, अकारकं च कथं कर्म, कारकाधिकारित्वात् कर्मसंज्ञाया इति भावः। उत्तरम्—क्रियाविषयत्वमिति। अनात्मसमवेतक्रियाफलशालित्वं क्रियाविषयत्वं कर्मत्वम्। देवदत्तसमवेतया हि क्रियया दर्शनलक्षणया वृक्षविषयोऽनुभवो जन्यते, इदमेव चानुभवस्यार्थविषयत्वं यदर्थाधीननिरूपणत्वमित्युक्तं प्रमाणलक्षण इति। तेन क्रियाविषयस्य क्रियातः प्राग्भावाद् युक्तं कारकत्वम्। एवं च विकार्यप्राप्ययोरुपपन्नः कर्मभावः; निर्वर्त्यस्य तु पटादेर्यद्यपि क्रियायाः प्राग्भावो नास्ति तथाऽपि तदवयवानां तन्तूनां प्राग्भावस्तेषां तादर्थ्येन पटत्वे उपचारात् पटं करोतीति युक्तः प्रयोगः। तथा हि सहचरणादिसूत्रे वक्ष्यति (ग)कटार्थेषु वीरणेष्विति। एतेन कर्मलक्षणेनाहिं लङ्घयति ग्रामं गच्छन् वृक्षमूलान्युपसर्पतीत्यादयोऽपि संगृहीता वेदितव्याः। नगरं गच्छति चैत्र इत्यत्र यथा प्राप्तिर्नगरसमवेता एवं चैत्रसमवेताऽपीति चैत्रस्यापि क्रियाजनितफलशालिनो मा भूत् कर्मत्वमित्यत उक्तमनात्मसमवेतेति।

---

(१) मुद्रितपुस्तकयोः 'अनाश्रितत्वाच्च' इति पाठो दृश्यते।

(क) भाष्ये तु "दर्शनेनाऽऽप्तुमिष्यमाणतमत्वात्" इति पाठः।

(ख) पाणिनीये २।४।५० अङ्कितं सूत्रमेतत्।

(ग) २।२।६२ सूत्रभाष्ये "कटार्थेषु" इत्यादि वक्ष्यति।

## न्यायभाष्यम्

साधकतमत्वात् करणम्। वृक्षायोदकमासिञ्चतीति आसिच्यमानेनोदकेन वृक्षमभिप्रैतीति सम्प्रदानम्। वृक्षात् पर्णं पततीति 'ध्रुवमपायेऽपादान'मित्यपादानम्। वृक्षे वयांसि सन्तीति 'आधारोऽधिकरण'मित्यधिकरणम्। एवं च सति न द्रव्यमात्रं कारकम्, न क्रियामात्रम्। किं तर्हि? क्रियासाधनं क्रियाविशेषयुक्तं कारकम्। (१)यत्क्रियासाधनं (२)स्वतन्त्रं स कर्ता, न द्रव्यमात्रं न क्रियामात्रम्। क्रियया व्याप्तु-

## न्यायवार्त्तिकम्

कर्मणाप्तुमभीष्टं सम्प्रदानम्—यद्वस्तु कर्मणा प्राप्तुमभिप्रेतं भवति तत् सम्प्रदानसंज्ञकम्। वृक्षायोदकमासिञ्चतीति आसिच्यमानमुदकं कर्म, तेन कर्मणोदकेन वृक्षं प्राप्नोतीति वृक्षः सम्प्रदानं भवतीति।

अपगच्छत्यवतिष्ठते यत् तदपादानम्, यथा वृक्षात् पर्णं पततीति वृक्षोऽपादानसंज्ञकः। यत् पतति तदपगच्छति तस्मिन्नपगच्छति अवतिष्ठते वृक्ष इति।

धृतिहेतुरधिकरणम्—यस्मिन् यदाधेयं तदाधेयस्य यद् धृतिहेतुस्तदधिकरणम्। वृक्षे वयांसीति वृक्षसम्बन्धो वयसां गुरुत्वप्रतिबन्धे कारणमिति वृक्षोऽधिकरणशब्दवाच्यः। 'एवं च सति न द्रव्यमात्रं कारकं न क्रियामात्रम्'। किमुक्तं भवति? नायं कारकशब्दः क्रियामात्रे वर्तते न द्रव्यमात्रे, नहि द्रव्यं शुद्धमुपलभमानः कारकशब्दं प्रयुङ्क्ते नापि क्रियां केवलाम्, अपि तु यदा क्रियाद्रव्यसम्बन्धमुपलभते तदा सामान्येन कारकशब्देनाभिधत्ते कारकमिति। सामान्यं च कारकाणां क्रियानिमित्तत्वम्। अविवक्षिते विशेषे क्रियानिमित्तत्वे केवले विवक्षिते कारकमिति

## न्यायवार्त्तिकतात्पर्यटीका

आत्मविषयेऽपि च मानसप्रत्यक्षे यद्यप्यात्मनो न कर्मता तथाऽपि ज्ञानक्रिया सकर्मिकैवाऽऽत्मधर्मस्याऽऽत्मव्यतिरिक्तस्य कस्यचित् कर्मणोऽवभासनादिति सर्वमवदातम्।

वृक्षः संप्रदानं भवतीति। पाणिनीयलक्षणानुरोधेन लौकिकप्रयोगानुरोधाच्च संप्रदानमिति, नेयमन्वर्थसंज्ञेति भावः। गुरुत्वप्रतिबन्धे कारणमिति प्रकृतोदाहरणाभिप्रायम्। तथा च गुणादीनामप्याधेयत्वाधिगतेर्द्रव्यादिभिराधेयभावः सिद्धो भवति। तेन न द्रव्यस्वभावः कारकमिति यदुक्तं माध्यमिकेन तदस्माकमभिमतमेव, काल्पनिकं तु कारकं न मृष्यामह इत्यनेनाभिसंधिना भाष्यकारेणोक्तम्—एवं च सतीति। न क्रियामात्रमिति, नावान्तरक्रियामात्रम्। (क) यत्प्रधानक्रियासाधनमवान्तरक्रियाविशेषयुक्तमिति। तदेतदनुभाष्य वार्तिककारो व्याचष्टे—एवं च सतीति। तदनेन कारकसामान्यमुक्तम्। विशेषलक्षणपरं भाष्यं यत् क्रियासाधनं

(१) "यः क्रियासाधनम्" इति टि०।
(२) "स्वतन्त्रः" इति ख।
(क) यत् प्रधानक्रियेत्यादि क्रियासाधनमित्यादिभाष्यग्रन्थस्य व्याख्यानम्।

## न्यायभाष्यम्

मिष्यमाणतमं कर्म, न द्रव्यमात्रं न क्रियामात्रम्। एवं साधकतमादिष्वपि। एवं च (१) कारकान्वाख्यानं यथैव उपपत्तित एवं लक्षणतः। कारकान्वाख्यानमपि (२) न द्रव्यमात्रे न क्रियायां वा (२*)। किं तर्हि? (३) क्रियासाधने क्रियाविशेषयुक्त इति। कारकशब्दश्चायं प्रमाणं प्रमेयमिति, स च कारकधर्मं न हातुमर्हति॥ १६॥

## न्यायवार्त्तिकम्

शब्दः प्रवर्तते, यदा तु विशेषो विवक्षितस्तदा स्वसाधारणेन कारकधर्मेणेतरव्यावृत्तेन स्वातन्त्र्यादिना विशेषेण विशिष्यमाणं वस्तु कर्ता कर्म करणमिति व्यपदिश्यते। सर्वस्य च कारकस्य स्वक्रियानिमित्तः कर्तृव्यपदेशः प्रधानक्रियासव्यपेक्षस्तु कारकशब्दप्रयोगः। एवं च शास्त्रं—(क) "कारके" जनके, निर्वर्तके। कस्याः? क्रियाया इति तथा व्यपदेशः। तस्मान्नेदं स्वक्रियामात्रमपेक्ष्योक्तम्, किन्तु प्रधानक्रियाम्। तस्यामेव प्रधानक्रियायां किञ्चिदाराद्उपकारकं किञ्चिदासन्नोपकारकमिति किञ्चित् कथञ्चिदुपकरोति तदपेक्षाश्च कर्त्रादिशब्दा इति तदुक्तं पुरस्तात्।

यदि क्रियासम्बन्धनिमित्तकः कारकशब्दप्रयोगः पचत्येव पाचकशब्दः प्रवर्तेत नापाक्षीत् पाचकः पक्ष्यतीति पाचक इति? न, शक्तेस्त्रिकालावस्थानात्—शक्तिस्त्रिष्वपि कालेष्ववतिष्ठते, शक्त्यपेक्षश्चातीतानागतयोः कारकशब्दव्यपदेशः पचत्यपाक्षीत् पक्ष्यतीति। (ख) शक्तेस्त्रिकालावस्थानात् त्रैकाल्यव्यक्तिरयुक्ता, यथैव द्रव्यं त्रिकालयोगि तथा शक्तिरपीति—यथा द्रव्ये त्रैकाल्यं न व्यज्यते तथा शक्तावपीति अपचत्यपि पचतीति स्यात् पक्ष्यति पाचकोऽपाक्षीत् पाचक

## न्यायवार्त्तिकतात्पर्यटीका

स्वतन्त्रमिति। तद्व्याचष्टे—यदा तु विशेष इति। स्यादेतत् क्रियासाधनमित्येतावदेवास्तु क्रियाविशेषयुक्तमिति वा, कृतमुभयोपादानेनेत्यत आह—सर्वस्य च कारकस्येति। यद्यवान्तरक्रियामात्रमुच्यते ततस्तस्मिन् सर्वस्य कर्तृत्वात् कारकवैचित्र्यं न स्यात्, प्रधानक्रियामात्रोपादाने च तत्र सर्वेषामवान्तरव्यापारमन्तरेण वैचित्र्यायोगादत उभयोपादानं प्रयोजनवदिति। एवं लक्षणत इति भाष्यं व्याचष्टे—एवं च शास्त्रमिति।

देशयति—यद्रीति। परिहरति—न, शक्तेरिति। पुनर्देशयति—शक्तेरिति। परिहरति—

---

(१) "कारकार्थान्वाख्यानम्" फ०। (२) "न द्रव्यमात्रेण न क्रियया वा" इति ख-ग-झा-भा०।
(३) "क्रियासाधने" इति टि-पु० नास्ति।

(क) 'कारके' इति पाणिनीयं सूत्रम् (१।४।२३) अत्र भाष्यम् करोति क्रियां निर्वर्तयतीति।

(ख) 'यथा द्रव्ये त्रैकाल्यं न व्यज्यते' इति ग्रन्थस्य तः स्वपदवर्णने नञ्दर्शनात् तात्पर्यटीकायां च 'पुनर्देशयति' इत्युक्तेः पूर्वपक्षग्रन्थतया परिज्ञानादत्र 'शक्तेस्त्रिकालानवस्थानात् त्रैकाल्यव्यक्तिरयुक्ता, यथैव द्रव्यं त्रिकालायोगि' इति पाठः समीचीनतया प्रतिभाति।

## न्यायभाष्यम्

अस्ति भोः कारकशब्दानां (१) निमित्तवशात् समावेशः। प्रत्यक्षादीनि च प्रमाणानि उपलब्धिहेतुत्वात्, प्रमेयं चोपलब्धिविषयत्वात्। संवेद्यानि च प्रत्यक्षादीनि प्रमाणानि, प्रत्यक्षेणोपलभे अनुमानेनोपलभे उपमानेनोपलभे आगमेनोपलभे। प्रत्यक्षं मे ज्ञानम् आनुमानिकं मे ज्ञानम् औपमानिकं मे ज्ञानम् आगमिकं मे ज्ञानमिति विशेषा गृह्यन्ते। लक्षणतश्च ज्ञाप्यमानानि ज्ञायन्ते विशेषेणेन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमित्येवमादिना।

## न्यायवार्त्तिकम्

इति च न स्यात्। नैष दोषः, क्रियासम्बन्धस्य शक्तिव्यक्तिहेतुत्वात्—क्रियेत्यनेन शब्देन धात्वर्थोऽभिधीयते तस्य यत् प्रधानसाधनं स कर्ता। सोऽयं कर्ता यदा क्रियया सम्बध्यते तदा शक्तिं व्यनक्ति। का पुनरियं शक्तिः? क्रियाकर्तृव्यतिरिक्तः कर्तृधर्मः। सामर्थ्यमुपायपरिज्ञानं च क्रियासम्बन्धेन व्यवतिष्ठते। यदोपायविज्ञानसामर्थ्यक्रियासम्बन्धास्तदा मुख्यतः कारकशब्दः प्रवर्तते पचति पाचक इति, यदा तु क्रियासम्बन्धमन्तरेणोपायपरिज्ञानसामर्थ्यमात्रोपादानेऽन्यतमवैकल्यात् पाचकशब्दः प्रवर्तते तदोपचारतः अपाक्षीत् पाचकः पक्ष्यति पाचक इति। कारकशब्दश्चायं प्रमाणं प्रमेयमिति। कुतः? क्रियाविशेषयोगात्—यथैवामी पाचकादिशब्दाः क्रियाविशेषयोगे सति प्रवर्तन्ते तथा प्रमाणप्रमेयशब्दावपीति ॥ १६ ॥

(क) "अस्ति भोः कारकशब्दानां निमित्तसमावेशान्नियमः; प्रत्यक्षादीनि प्रमाणानि, संवेद्य-मानानि च प्रमेयमुपलब्धिविषयत्वात्"। तत्रेदं चिन्त्यते—किमेतानि प्रत्यक्षादीनि

## न्यायवार्त्तिकतात्पर्यटीका

नैष दोष इति। ननु बुद्ध्यादयोऽपि शक्तिव्यक्तिहेतवः, न चैते क्रियारूपाः किं तु गुणरूपा इत्यत उक्तम्—क्रियेत्यनेनेति। सामर्थ्यं बलम्। दुर्बलो हि जानन्नप्युपायं न व्यापारयति, यथा पाणिना कुण्ठः कुठारम्, तेन शक्तिक्रियासंबन्धयोः कारकशब्दो मुख्यः शक्तिमात्रे तु गौण इति। प्रकृते योजयति—कारकशब्दश्चायमिति ॥ १६ ॥

संप्रति प्रकारान्तरेण प्रमाणान्याक्षिप्य समाधीयन्ते—अस्ति भोः कारकशब्दानामिति। अत्रैते कल्पा उपप्लवन्ते—किं प्रत्यक्षादीनामुपलब्धिः ससाधना निःसाधना वा? यदाऽपि

## वृत्तिः

चेति। यथा कदाचिद्गुरुत्वेयत्तापरिच्छेदकत्वात् तुलायाः प्रमाणत्वव्यवहारस्तथेन्द्रियघटादेरपि प्रमाणप्रमेयव्यवहार इति ॥ १६ ॥

---

(१) 'निमित्तसमावेशात्' ख०।

(क) एतत्प्रतीके भाष्यपाठापेक्षया किञ्चिदानुपूर्वीवैलक्षण्यं दृश्यते।

### न्यायभाष्यम्

सेयमुपलब्धिः प्रत्यक्षादिविषया किं प्रमाणान्तरतः (१) अथान्तरेण प्रमाणान्तरमसाधनेति ? कश्चात्र विशेषः ?

## ( सू० )—प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः ॥ १७ ॥

यदि प्रत्यक्षादीनि प्रमाणेनोपलभ्यन्ते, येन प्रमाणेनोपलभ्यन्ते तत्प्रमाणान्तर-

### न्यायवार्त्तिकम्

स्वोपलब्धौ प्रत्यक्षादिव्यतिरिक्तं प्रमाणान्तरं (२) प्रयोजयन्ति, अथ निःसाधनैव प्रमाणोपलब्धिरिति । किं चातः ?

### न्यायवार्त्तिकतात्पर्यटीका

ससाधना तदाऽपि किमेभिरेव प्रत्यक्षादिभिराहो प्रमाणान्तरेण ? यदाऽप्येभिस्तदाऽपि किं तयैव प्रत्यक्षव्यक्त्या, अथैका व्यक्तिर्व्यक्त्यन्तरेणेति । तत्र प्रमाणान्तराभ्युपगमे विभागसूत्रव्याघातः अनवस्थापातश्च । तत्र प्रत्यक्षादिभिः प्रत्यक्षाद्यन्तराणां ग्रहणे अनवस्थापातः, तयैव व्यक्त्या तु ग्रहणे आत्मनि वृत्तिविरोधः, न हि तयैवासिधारया सैवासिधारा छिद्यते ; तस्मादसाधना प्रमाणोपलब्धिः । एवं चेत् कृतं प्रमेयसाधनैः प्रमाणैः प्रमाणवदसाधनैवास्तु प्रमेयोपलब्धिरिति पूर्वः पक्षः । नासाधना प्रमाणसिद्धिर्नापि प्रत्यक्षादिव्यतिरिक्तप्रमाणाभ्युपगमो येन विभागसूत्रव्याघातः स्यात् । नापि च तयैव व्यक्त्या तस्या एव ग्रहणमुपेयते येनाऽऽत्मनि वृत्तिविरोधो भवेत्; अपि तु प्रत्यक्षादिजातीयेन प्रत्यक्षादिजातीयस्य ग्रहणमातिष्ठामहे । न चानवस्था, अस्ति किञ्चित्प्रमाणं यत्स्वज्ञानेनान्यधीहेतुः, यथा धूमादिः ; किञ्चित्पुनरज्ञातमेव बुद्धिसाधनं यथा चक्षुरादि । तत्र पूर्वं स्वज्ञाने चक्षुराद्यपेक्षम्, चक्षुरादि तु ज्ञानानपेक्षमेव ज्ञानसाधनमिति काऽनवस्था । बुभुत्सया च तदपि शक्यज्ञानम्, सा च कदाचिदेव क्वचिदिति नानवस्था । न च प्रामाण्यं प्रमाणानामप्रतीतं न (क) वृत्त्यङ्गमिति तदर्थं प्रमाणान्तरापेक्षायामनवस्थेति वाच्यम्, दृष्टार्थे संशयादपि प्रवृत्तौ सत्यां प्रवृत्तिसामर्थ्येन तस्य सुज्ञानत्वात् ; अदृष्टार्थेषु प्रवृत्तिसामर्थ्यावधृतप्रामाण्यप्रमाणसाधर्म्येण तस्य शक्यज्ञानत्वादिति दर्शितं प्रथमे सूत्रे । तस्मात् प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धिर्न चानवस्थेति सिद्धान्तः । भाष्ये भो इत्यामन्त्रणे । कुतः पुनरुपलब्धिहेतुत्वमत आह—संवेद्यानि चेति । चो हेतौ । उपलब्धिविषयत्वं कुत इत्यत आह—प्रत्यक्षं मे ज्ञानमिति ।

प्रमा—ङ्गः ( सू० १७ ) ॥

---

(१) "-ऽर्थान्तरेण" इति वि, टि । (२) अतः परमादर्शवार्त्तिकद्वये "( प्रसिद्धेर्यदि प्रमाणं साधनं प्रमाणान्तरं प्राप्नोति )" इत्येवमधिकं मुद्रितम् ।

(क) वृत्त्यङ्गमिति प्रवृत्त्यङ्गमित्यर्थः ।

## न्यायभाष्यम्

मस्तीति प्रमाणान्तरसद्भावः प्रसज्यत इति अनवस्थामाह तस्याप्यन्येन (१) तस्याप्यन्येनेति। न चानवस्था शक्याऽनुज्ञातुमनुपपत्तेरिति ॥ १७ ॥

अस्तु तर्हि प्रमाणान्तरमन्तरेण निःसाधनेति ?—

**( सू० )—तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः ॥१८॥**

यदि प्रत्यक्षाद्युपलब्धौ प्रमाणान्तरं निवर्त्तते (२) आत्माद्युपलब्धावपि प्रमाणान्तरं निवर्त्स्यत्यविशेषात् ॥ १८ ॥

## न्यायवार्त्तिकम्

प्रमाणतः सिद्धेः प्रमाणानां प्रमाणान्तरसिद्धिप्रसङ्गः । प्रमाणविपर्ययायाः सिद्धेर्यदि प्रमाणं साधनम्, प्रमाणान्तरं प्राप्नोति ; प्रत्यक्षादीनां साध्यत्वान्न साध्यं साधनं भवतीति ॥ १७ ॥

अथ प्रमाणान्तरमन्तरेण निःसाधनैव प्रमाणेपूपलब्धिः ?

तद्विनिवृत्तेर्वा प्रमाणसिद्धिवत् प्रमेयसिद्धिः । यथा प्रमाणानि स्वोपलब्धौ निवर्तन्ते एवं प्रमेयसिद्धावपि ॥ १८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तद्वि—द्धिः ( सू० १८ ) (क) ॥

## वृत्तिः

अनवस्थया प्रत्यवस्थानपरं पूर्वपक्षसूत्रम्—( प्रमाणत इति ) ।

प्रमाणानां प्रमाणतः सिद्धेः स्वीकारे प्रमाणान्तरस्वीकारः स्यात् । तथाहि—प्रमाणस्य तावन्न स्वतः सिद्धिरात्माश्रयापत्तेः, अतः प्रमाणान्तरं स्वीकार्यम्, तयोश्च परस्परसाधकत्वेऽन्योन्याश्रयापत्तिरतस्तत्रापि प्रमाणान्तरमङ्गीकार्यमित्येवमनवस्थेति भावः ॥ १७ ॥

ननु प्रमाणसिद्धिः प्रमाणं विनैव स्यादित्यत्राऽऽह—( तद्विनिवृत्तीति ) ।

यदि च (ख) प्रमाणविनिवृत्तितः प्रमाणव्यतिरेकात् प्रमाणसिद्धिः स्वीक्रियते तदा

---

(१) "अस्याप्यनेन तस्यान्येनेति" इति टि० । (२) "आत्म त्युपलब्धावपि" इति फ-ग० ।

(क) १८-श-सूत्रस्य तात्पर्यटीका पूर्वमेव गतार्थेति पृथक् नोपलभ्यते ।

(ख) वृत्तिग्रन्थदर्शनेन 'तद्विनिवृत्तितो वा प्रमाणसिद्धिवत् तत्सिद्धिः' इति विश्वनाथसम्मतः पाठः प्रतीयते।

### न्यायभाष्यम्

एवं च सर्वप्रमाणविलोप इत्यत आह—

## ( सू० )—(१)न प्रदीपप्रकाशसिद्धिवत्तत्सिद्धेः ॥ १९ ॥

यथा प्रदीपप्रकाशः प्रत्यक्षाङ्गत्वाद् दृश्यदर्शने प्रमाणम्, स च प्रत्यक्षान्तरेण चक्षुषः सन्निकर्षेण गृह्यते; (२)प्रदीपभावाभावयोर्दर्शनस्य (३)तथाभावाद्दर्शनहेतु-रनुमीयते, तमसि प्रदीपमुपाददीथा इत्याप्तोपदेशेनापि प्रतिपद्यते; एवं प्रत्यक्षादीनां यथादर्शनं प्रत्यक्षादिभिरेवोपलब्धिः। इन्द्रियाणि तावत् स्वविषयग्रहणेनैवानुमीयन्ते। अर्थाः प्रत्यक्षतो गृह्यन्ते। इन्द्रियार्थसन्निकर्षास्त्वावरणेन लिङ्गेनानुमीयन्ते।

### न्यायवार्त्तिकम्

अस्योत्तरम्—

न प्रदीपप्रकाशसिद्धिवत् तत्सिद्धेरिति। प्रदीपप्रकाशो घटाद्युपलब्धिसाधनस्याङ्गत्वात् प्रमाणम्, स च प्रत्यक्षादिभिरेवोपलभ्यते; नासावात्मोपलब्धौ प्रत्यक्षादिव्यतिरेकि प्रमाणं प्रयोजयति (क)तैरेव उपलभ्यते(ख) तथा प्रमाणान्यपि प्रत्यक्षादिभिरेवोपलप्स्यन्ते इति दृष्टान्त-मात्रमेतत्। कोऽत्र न्याय इति? अयं न्याय उच्यते प्रत्यक्षादीनि स्वोपलब्धौ प्रमाणान्तरा-प्रयोजकानि परिच्छेदसाधनत्वात् प्रदीपवत्—यथा प्रदीपः परिच्छेदसाधनं स्वोपलब्धौ न प्रमा-णान्तरं (ग)प्रयोजयतीति तथा प्रमाणानि, तस्मात् तान्यपि प्रमाणान्तराप्रयोजकानीति सिद्धम्। सामान्यविशेषवत्त्वाच्च—यत् सामान्यविशेषवत् तत् स्वोपलब्धौ न प्रत्यक्षादिव्यतिरेकि प्रमाणं

### न्यायवार्त्तिकतात्पर्यटीका

न प्र—द्धेः ( सू० १९ )॥ प्रदीपभावाभावयोर्दर्शनस्य तथाभावात्।

### वृत्तिः

तद्वदेव तत्सिद्धिः प्रमेयसिद्धिः स्वीक्रियताम्, किं प्रमाणाङ्गीकारेण। तथा च अव्यवस्थित-मेव जगत् स्यादिति शून्यतायां पर्यवसानमिति भावः ॥ १८ ॥

सिद्धान्तसूत्रम्—( न प्रदीपप्रकाशवत् तत्सिद्धेरिति )।

यथाहि प्रदीपालोकाद् घटादिप्रकाशस्तथा प्रमाणानां प्रमेयप्रकाशकत्वम्, अन्यथा प्रदीपस्य घटप्रकाशकत्वम्, प्रदीपप्रकाशकं चक्षुः, तज्ज्ञापकमन्यदित्यनवस्था(४)पातात्

---

(१) "न प्रदीपप्रकाशवत् तत्सिद्धेः" इति आ०। (२) "प्रदीप-" इति टि० पु० नास्ति। (३) "तथाभावादर्शन-" इति टि०। (४) "-पातात्" इत्यत्र "-भयात्" इति आ०।

(क) अत्र 'तैरेव उपलभ्यते' इति सम्पातायातं सम्भाव्यते।

(ख) 'तथे'ति दर्शनात् पूर्ववाक्ये यथेत्यर्थतोऽनुसन्धेयम्।

(ग) अत्र 'प्रयोजयतीति प्रमाणानि, तथा तान्यपि' इत्यानुपूर्वी सम्यक्तया प्रतिभाति।

## न्यायभाष्यम्

इन्द्रियार्थसन्निकर्षोत्पन्नं ज्ञानमात्ममनसोः संयोगविशेषादात्मसमवायाच्च सुखादिवद् गृह्यते। एवं (१)प्रमाणविशेषो विभज्य (२)वचनीयः। यथा च दृश्यः सन् प्रदीप-प्रकाशो दृश्यान्तराणां दर्शनहेतुरिति दृश्यदर्शनव्यवस्थां लभते, एवं प्रमेयं सत्किञ्चिदर्थ-जातमुपलब्धिहेतुत्वात् प्रमाणप्रमेयव्यवस्थां लभते। सेयं प्रत्यक्षादिभिरेव प्रत्यक्षादीनां यथादर्शनमुपलब्धिर्न प्रमाणान्तरतः, न च प्रमाणमन्तरेण निःसाधनेति।

तेनैव तस्याग्रहणमिति चेत्, न; अर्थभेदस्य लक्षणसामान्यात्—प्रत्यक्षादीनां प्रत्यक्षादिभिरेव ग्रहणमित्ययुक्तम्, अन्येन ह्यन्यस्य ग्रहणं दृष्टमिति। न, अर्थभेदस्य लक्षणसामान्यात्—प्रत्यक्षलक्षणेनानेकोऽर्थः संगृहीतस्तत्र केनचित् कस्यचिद् ग्रहण-मित्यदोषः। एवमनुमानादिष्वपीति। यथोद्धृतेनोदकेनाऽऽशयस्थस्य ग्रहणमिति।

## न्यायवार्त्तिकम्

प्रयोजयति यथा प्रदीप इति। संवेद्यत्वात्—यत् संवेद्यं तत् प्रत्यक्षादिव्यतिरेकिप्रमाणान्तरा-प्रयोजकं यथा प्रदीप इति। आश्रितत्वात् करणत्वाद्वेत्येवमादि प्रदीपवदिन्द्रियादयोऽपि प्रत्यक्षाङ्गत्वात् प्रत्यक्षादिव्यतिरिक्तप्रमाणान्तराप्रयोजका इति समानम्।

तेनैव तस्याग्रहणमिति चेत्—अथ मन्यसे प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धौ तेनैव तदेव गृह्यत इति प्राप्तम्, न चैतदस्ति, न हि साध्यं साधनं भवतीति। नैष दोषः, अर्थ-भेदस्य लक्षणसामान्यात् प्रमाणलक्षणेनानेकोऽर्थः संगृहीतः, तत्र केनचित्कस्यचिद् ग्रहणमित्य-दोषः। यथोद्धृतेनोदकेनाऽऽशयस्थस्य—यथोद्धृतमुदकं गृहीत्वा आशयस्थमप्येवंभूतमिति प्रतिपद्यत इति, न पुनरेवमभिधीयते तेनैव तस्य ग्रहणम् अपि तु तथाभूतेन तथाभूतस्य। न चायमेकान्तः न तेनैव तस्य ग्रहणं भवतीति, भवत्यपि कदाचिद् यथात्मनि स एव ज्ञाता ज्ञेयो भवति, यदात्मानं जानीत इति।

## वृत्तिः

प्रदीपोऽपि न घटप्रकाशकः स्यात्। यदि च घटप्रत्यक्षे (३)तत्तत्प्रकाशानां नापेक्षेति नानवस्थेत्युच्यते ? तदा प्रकृतेऽपि तुल्यम्, नहि प्रमाणात् प्रमेयसिद्धौ प्रमाणसिद्धि-रपेक्षिता। यदा च प्रमाणसिद्धिरपेक्षिता तदा तत्रापि प्रमाणमपेक्ष्यताम्, तच्चानुमानादिक-मेवेति न प्रमाणान्तरकल्पना, न वाऽनवस्था, सर्वत्र प्रमाणसिद्धेरनपेक्षितत्वात्, क्वचिद्बीजाङ्कुरवत्तदपेक्षाऽपि न क्षतिकरीति भावः।

---

(१) "प्रमाणशेष" इति वि-टि०। (२) "नयनीय" इति टि०। (३) "तत्तत्प्रकाशकानाम्" इति श्वा०।

## न्यायभाष्यम्

ज्ञातृमनसोश्च दर्शनात्—अहं सुखी अहं दुःखी चेति तेनैव ज्ञात्रा तस्यैव ग्रहणं दृश्यते। 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गम्' ( १ अ० १ आ० १६ सू० ) इति च तेनैव मनसा तस्यैवानुमानं दृश्यते, ज्ञातुर्ज्ञेयस्य चाभेदो ग्रहणस्य (१)ग्राह्यस्य चाभेद इति।

निमित्तभेदोऽत्रेति चेत् समानम्—न निमित्तान्तरेण विना ज्ञाता आत्मानं जानीते, न च निमित्तान्तरेण विना मनसा मनो गृह्यत इति समानमेतत्, प्रत्यक्षादिभिः प्रत्यक्षादीनां ग्रहणमित्यत्राप्यर्थभेदो (२)न गृह्यत इति।

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः—यदि स्यात् किंचिदर्थजातं प्रत्यक्षादीनामविषयः यत्प्रत्यक्षादिभिर्न शक्यं ग्रहीतुम्, तस्य ग्रहणाय प्रमाणान्तरमुपादीयेत, तत्तु न शक्यं केनचिदुपपादयितुमिति। प्रत्यक्षादीनां यथादर्शनमेवेदं सच्चासच्च सर्वं विषय इति ॥ १९ ॥

## न्यायवार्त्तिकम्

निमित्तभेदोऽत्रेति चेत्—अथ मन्यसे यदाऽयमात्मा ज्ञाता तदाऽन्यन्निमित्तम्, यदा ज्ञेयस्तदाऽन्यदिति समानम्, यथैव ज्ञाता सुखादिसम्बन्धापेक्षस्तद्विशेषणमात्मानं प्रतिपद्यते अहं सुखी अहं दुःखी चेति, तथा प्रमाणमपि प्रमाणविषयत्वेनावतिष्ठमानं प्रमेयमिति।

प्रत्यक्षादीनां चाविषयस्यानुपपत्तेः—यदि कश्चिद्विषयः प्रत्यक्षाद्यविषयः स्यात् प्रतिपद्येमहि प्रत्यक्षादिव्यतिरिक्तं प्रमाणम्, स च न शक्यः केनचित् प्रतिपादयितुम्। सर्वमिदं सच्चासच्च प्रत्यक्षादीनामेव विषयः, तस्मात् प्रत्यक्षादिभिरेवोपलभ्यते इति ॥ १९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

ज्ञातृमनसोश्च दर्शनादिति भाष्यम्। तद्व्याचष्टे वार्त्तिककारः—न चायमेकान्त इति। ज्ञाता ज्ञेय इति सकर्माभिप्रायम्, न (क)ह्यन्यस्य समवेता ज्ञानक्रिया येनाऽऽत्मनः कर्मता स्यात्, अपि तु ज्ञातृस्यैव; परसमवेतफलशालि हि कर्मेत्युक्तम्। तस्मात् सुखादीनामात्मधर्माणामत्र कर्मता, आत्मनस्तु प्रकाशमानता, तत्र विवक्षया ज्ञेयत्वाभिधानम्। मनस्तु यद्यपि स्वज्ञानं प्रति करणं कर्म च तथाऽपि न स्वात्मनि वृत्तिविरोधः। यदि हि (३)ज्ञातं करणं भवेत्तदात्माश्रयदोषप्रसङ्गः। स्वसत्तया च ज्ञानं प्रति करणम्; अन्यच्चास्य

(१) "ग्राहकस्य" इति ख-ग-झा०। (२) "न" इति चा-पु० नास्ति। (३) "ज्ञानं" इति क-तात्पर्यपाठः।

(क) ह्यन्यस्येति अन्यस्येत्यर्थः।

**( सू० )—(१)क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः ॥ २० ॥**

### न्यायभाष्यम्

(क)केचित्तु दृष्टान्तमपरिगृहीतं हेतुना विशेषहेतुमन्तरेण साध्यसाधनायोपाददते ; यथा प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते तथा प्रमाणानि प्रमाणान्तरमन्तरेण गृह्यन्त इति । स चायम्—

यथा चायं प्रसङ्गो निवृत्तिदर्शनात् प्रमाणसाधनायोपादीयते एवं प्रमेयसाधनायाप्युपादेयो(२)ऽविशेषहेतुत्वात्—यथा च स्थाल्यादिरूपग्रहणे प्रदीपप्रकाशः प्रमेय-

### न्यायवार्त्तिकम्

अपरे तु हेतुविशेषपरिग्रहमन्तरेण दृष्टान्तमात्रं प्रदीपप्रकाशसूत्रेणोपाददते, यथा किल प्रदीपप्रकाशः प्रदीपान्तरप्रकाशमन्तरेण गृह्यते तथा प्रमाणान्यपि प्रमाणान्तरमन्तरेण ग्रहीष्यन्त इति तान् प्रतीदमुच्यते—

### न्यायवार्त्तिकतात्पर्यटीका

ज्ञानमन्या सत्ता, न च तत्समवेता ज्ञानक्रिया, किं त्वात्मसमवेता । तस्माज् ज्ञेयत्वं ज्ञानसाधनत्वं च मनसो न दोषमर्हतीति ॥ १९ ॥

ये तु—प्रदीपप्रकाशो यथा न प्रकाशान्तरमपेक्षते एवं प्रमाणान्यपि प्रमाणान्तरमनपेक्षमाणान्यपि सन्ति भविष्यन्तीत्याचार्यदेशीया मन्यन्ते, तान् प्रत्याह—

क्वचि—न्तः (सू २०) ॥ यथाऽयं प्रसङ्गः प्रमाणानामनपेक्षत्वप्रसङ्गः, प्रदीपे प्रदीपान्तरानपेक्षया प्रकाशकत्वदर्शनात् प्रमाणान्तरानपेक्षाण्येवाऽऽलोकवत्प्रमाणानि सेत्स्यन्ति एवमर्थमुपादीयते प्रसङ्गः, प्रमेयाण्यप्यनपेक्षाण्येव सेत्स्यन्तीत्येवमर्थमप्युपादेयः, तथा च प्रमाणाभाव इत्यर्थः । तदेवं प्रदीपदृष्टान्ताश्रयणेन प्रमाणाभावप्रसङ्गमुक्त्वा स्थाल्यादिदृष्टान्तोपादाने तु प्रमाणस्यापि प्रमाणान्तरापेक्षेत्याह—यथा च स्थाल्यादिरूपग्रहण इति ।

### वृत्तिः

प्रदीपस्य (३)प्रकाशान्तरं विना प्रकाशकत्ववत् प्रमाणानामपि प्रमाणमन्तरेणैव प्रमेयप्रकाशकत्वमिति सूत्रार्थं केचन मन्यन्ते, तान् प्रत्याह भाष्यकारः—

'क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः' ।

---

(१) 'क्वचित्तु निवृत्ति-' इति न्यायसूचीनिबन्धसम्मतः पाठः । (२) "विशेषहेत्वभाववत्" इति टि० । (३) "प्रदीपान्तरम्" इति आ० ।

(क) केचित्त्विति । विंशसूत्रतया मुद्रितं 'क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनेकान्तः' इत्येतत् वृत्तिकृन्मते न सूत्रं किन्तु भाष्यमेव । तदनुसारेण 'केचित्तु' इत्यादितः (४४९ पत्रे मुद्रितः) । 'अनवस्थामुपाददीतेति' इत्यन्तो ग्रन्थः बहुषु पुस्तकेषु १९ सूत्रीयभाष्यरूपेण मुद्रितः । 'अस्माभिस्तु' न्यायसूचीनिबन्धानुसारेणैवं विभागः कृतः । तदर्थतः प्रभृति भाष्यादिगृहीतसूत्रसंख्यावृत्तीति सूत्रसंख्ययोर्विसंवाद इति बोध्यम् ।

## न्यायभाष्यम्

साधनायोपादीयते, एवं प्रमाणसाधनायाप्युपादेयो विशेषहेत्वभावात्, सोऽयं(१) विशेषहेतुपरिग्रहमन्तरेण दृष्टान्त एकस्मिन् पक्षे उपादेयो न प्रतिपक्ष इत्यनेकान्तः। एकस्मिश्च पक्षे दृष्टान्त(२) इत्यनेकान्तो विशेषहेत्वभावादिति१९।

## न्यायवार्त्तिकम्

क्वचिन्निवृत्तिदर्शनादनिवृत्तिदर्शनाच्च क्वचिदनैकान्तः। यथा प्रदीपप्रकाशस्तथा प्रमाणानि न पुनर्यथा स्थाल्यादिरूपं तथा प्रमाणानीति कोऽत्र नियमहेतुः, स्थाल्यादिरूपप्रकाशने च प्रदीपप्रकाशो न निवर्तते कस्मादेवं न प्रमाणानीति। अयं च प्रदीपप्रकाशदृष्टान्तः प्रमाणपक्षे

## न्यायवार्त्तिकतात्पर्यटीका

तदेतद्भाष्यं व्याचष्टे वार्तिककारः—यथा प्रदीपप्रकाशः सजातीयानपेक्षः तथा प्रमाणानि सजातीयानपेक्षाणि, न पुनर्यथा स्थाल्यादिरूपं प्रमाणापेक्षं तथा प्रमाणानि अपि प्रमाणापेक्षाणीति। कस्मात्पुनः स्थाल्यादिरूपं प्रमाणापेक्षमित्यत आह—स्थाल्यादिरूपप्रकाशने चेति। प्रदीपप्रकाशस्तत्र प्रमाणमिति लोकसिद्धमित्यर्थः। कस्मादेवं स्थालीरूपवत् न प्रमाणानि; तान्यपि प्रमाणान्तरेण प्रकाश्यन्तामित्यर्थः। तदनेन प्रदीपदृष्टान्तेन निरपेक्षत्वं न तु स्थाल्यादिदृष्टान्तेन सापेक्षत्वमित्यत्र नियमहेतुर्नास्तीत्युक्तम्। नियमान्तरहेत्वभावमाह—अयं च प्रदीपप्रकाशदृष्टान्त इति। यथा हि प्रमाणानि प्रदीपदृष्टान्तेन निरपेक्षाणि

## वृत्तिः

क्वचित् प्रदीपादौ प्रमाणान्तरस्य निवृत्तिदर्शनात्, क्वचिद् घटादौ प्रमाणान्तरानिवृत्तिदर्शनात् प्रमाणान्तरापेक्षादर्शनात् त्वदीयो हेतुः अनेकान्तः अनियतः। तथाच प्रदीपदृष्टान्तात् प्रमाणान्तरापेक्षानिवृत्तिः साध्यते, घटदृष्टान्तेन प्रमाणान्तरापेक्षैव किं न साध्यते? तथाच दृष्टान्तसमा जातिरियमिति भावः।

त्वद्व्याख्याने कथं नानेकान्त इत्यत्राऽऽह भाष्यकारः—

'विशेषहेतुपरिग्रहे सत्युपसंहाराभ्यनुज्ञानादप्रतिषेधः'।

मन्मते विशेषहेतोः व्याप्तिपक्षधर्मताश्रयस्य परिग्रहे सत्युपसंहारस्य साध्यसाधनस्याभ्यनुज्ञानादुक्तानेकान्तात्मकः प्रतिषेधो न भवति ॥ १९ ॥

समाप्तं प्रमाणसामान्यपरीक्षाप्रकरणम् ॥

---

(१) अयमंशः टि-पु० नास्ति। (२) अतःपरम् "उपादेयो न प्रतिपक्षे दृष्टान्तः" इति न-ज-भा-पु० अधिकम्।

## न्यायभाष्यम्

विशेषहेतुपरिग्रहे सति उपसंहाराभ्यनुज्ञानादप्रतिषेधः—विशेषहेतुपरिगृहीतस्तु दृष्टान्त एकस्मिन् पक्षे उपसंह्रियमाणो (१)न शक्योऽननुज्ञातुम्। एवं च सत्यनेकान्त इत्ययं प्रतिषेधो न भवति।

प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्थेति चेद् (२) न संविद्विषयनिमित्तानामुपलब्ध्या व्यवहारोपपत्तेः—प्रत्यक्षेणार्थमुपलभे, अनुमानेनार्थमुपलभे, उपमानेनार्थमुपलभे, आगमेनार्थमुपलभे इति, प्रत्यक्षं मे ज्ञानम्, आनुमानिकं मे ज्ञानम्, औपमानिकं मे ज्ञानम्, आगमिकं मे ज्ञानमिति संविद्विषयं संविन्निमित्तं चोपलभमानस्य धर्मार्थसुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च व्यवहार उपपद्यते, सोऽयं

## न्यायवार्त्तिकम्

भवतु मा भूत् प्रमेयपक्ष इति तत्रापि नियमहेतुर्वक्तव्यः, प्रदीपप्रकाशो दृष्टान्तो भवतु मा भूत् स्थाल्यादिदृष्टान्त इत्यत्रापि नियमहेतुर्वक्तव्यः। सोऽयमुभयथाऽनेकान्तो (क) विशेषहेतुमन्तरेण दृष्टान्तः प्रसक्तः।

विशेषहेतुपरिग्रहे सत्युपसंहाराभ्यनुज्ञानादप्रतिषेधः। यदि पुनरयं प्रदीपप्रकाशो दृष्टान्तो विशेषहेतुना(ख) प्रकाशकत्वादिना संगृहीतः, तत एकस्मिन् पक्षेऽभ्यनुज्ञायमानो न शक्यः प्रतिषेद्धुमित्यनेकान्त इत्ययं दोषो न भवति।

(ग) प्रत्यक्षादीनां प्रत्यक्षादिभिरुपलब्धावनवस्था स्यादिति चेत्—यदि प्रत्यक्षादीनि प्रत्यक्षादिभिरुपलभ्यन्ते तान्यप्यन्यैस्तान्यप्यन्यैरित्यनवस्था, अनवस्थायां चाऽऽद्यप्रमाणाधिगमो न स्यात्। अथ व्यवस्थाऽस्ति, आद्यप्रमाणाधिगतिरप्रमाणा प्रसज्येत। नैष दोषः।

## न्यायवार्त्तिकतात्पर्यटीका

एवं तेनैव दृष्टान्तेन कस्मान्न प्रमेयाण्यपि, ततश्च प्रमाणाभावप्रसङ्गः। न हि प्रमाणानामेव प्रदीपो दृष्टान्तो न प्रमेयाणामिति नियमहेतुरस्ति। तदनेन 'यथा प्रसङ्गः' इति भाष्यं व्याख्यातम्। 'प्रदीपप्रकाशो दृष्टान्तो भवतु' इत्यनेनायमेव दृष्टान्तो नायमिति नियमो निराकृतः, पूर्वेण तु प्रदीपदृष्टान्तेन निरपेक्षत्वमेव न तु स्थालीदृष्टान्तेन सापेक्षत्वमित्ययं नियमो निराकृत इति न पुनरुक्तम्। प्रकाशकत्वादिना तु हेतुना संगृहीतः (घ) प्रदीपदृष्टान्तो भवतीति नियमः शक्यो वक्तुम्, केवलं प्रकाशकत्वं सजातीयान्तरानपेक्षत्वे साध्ये विकल्पनीयम्; किमत्यन्तसजातीयमाहो सजातीयमात्रम्? यद्यत्यन्तसजातीयम्, ततः सिद्धसाधनम्; न हि चक्षुरादि प्रमाणं स्वग्रहणे चक्षुराद्यन्तरमपेक्षते। अथ कथंचित्सजातीयम्, तदपेक्षत्वमालोकस्याप्यस्ति तस्यापि चक्षुराद्यपेक्षत्वात्, ततश्च साध्यहीनो दृष्टान्तः। विरुद्धश्च हेतुः विषयज्ञान-

(१) "न शक्यो ज्ञातुम्" इति ग-ज-भा०। (२) "नासंविद्विषय-" इति टि०।

(क) हेतुमन्तरेणादृष्टान्तः प्रसक्तः ग-भाष्यसम्पादकधृतं पाठान्तरम्। (ख) 'प्रकाशत्वादिना' इति क-ख-वार्त्तिकपुस्तकयोः पाठः। (ग) प्रत्यक्षादीनामिति भाष्यं विभक्तुं खण्डशो गृह्णाति प्रत्यक्षादीनामिति। (घ) अत्र 'प्रदीपप्रकाशो दृष्टान्तो' इति सम्यक् पाठः सम्भाव्यते।

### न्यायभाष्यम्

तावत्येव निवर्त्तते। न चास्ति व्यवहारान्तर(क)मनवस्थासाधनीयं येन प्रयुक्ताऽनवस्थामुपाददीतेति ॥ २० ॥

सामान्येन प्रमाणानि परीक्ष्य विशेषेण परीक्ष्यन्ते। तत्र—

## प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात् ॥ २१ ॥

आत्ममनःसन्निकर्षो हि कारणान्तरं नोक्तमिति ॥ २१ ॥

### न्यायवार्त्तिकम्

(ख)संवित्तिविषयनिमित्तानामुपलब्ध्या व्यवहारसिद्धेः—संवित्तिविषयं संवित्तिनिमित्तं चोपलभमानस्य। संवित्तेर्विषयं प्रमेयम्, संवित्तिनिमित्तं प्रमाणम्, प्रमाणप्रमेययोरुपलब्धौ सर्वो व्यवहारः सिध्यति धर्मार्थसुखापवर्गप्रयोजनस्तत्प्रत्यनीकपरिवर्जनप्रयोजनश्च, न त्वनवस्थासाधनीयं किञ्चित् प्रयोजनमस्ति,—येनायं प्रयुक्तोऽनवस्थामुपाददीत। तस्मात् प्रत्यक्षादिभिः प्रत्यक्षादीनामुपलब्धिः, न चानवस्थेति ॥ २० ॥

( इति सामान्येन प्रमाणपरीक्षा )

एवं तावत् सामान्यतः समधिगतमेतत्—सन्ति प्रमाणानि प्रमेयसाधनानि। अथेदानीं सामान्यतोऽधिगतानां विशेषपरीक्षा। तत्र प्रत्यक्षमादावुक्तं तत्परीक्ष्यत इति।

प्रत्यक्षलक्षणानुपपत्तिरसमग्रवचनात्। यदिदं भवता प्रत्यक्षलक्षणमुच्यते इन्द्रियार्थसन्निकर्षोत्पन्नमिति, तदसमग्रम्। कस्मात्? अन्यान्यपि प्रत्यक्षस्य कारणानि सन्ति, तानि

### न्यायवार्त्तिकतात्पर्यटीका

मपि विषयज्ञानेन (ग)न गृह्यते, किन्तु ज्ञानविषयेण ज्ञानेनेति नात्यन्तसजातीयमिति। तदनेनाभिप्रायेण वार्त्तिककृतोक्तम्—अनेकान्त इत्ययं दोषो न भवति, दोषान्तरं तु भवतीत्यर्थः। इतरग्रन्थस्तु सिद्धान्तं दर्शयद्भिरस्माभिरुपपादितार्थ इति न व्याख्यातः। येनानवस्थामुपाददीतेति सोपहासम् ॥ २० ॥

प्रत्य—त् (सू० २१) ॥ प्रत्यक्षलक्षणं (घ)चानेन सूत्रेणोच्यते प्रत्यक्षस्वरूपं वा। न तावत् प्रत्यक्षकारणमित्याह—यदिदं भवता प्रत्यक्षलक्षणमुच्यत इति प्रत्यक्षकारणमित्यर्थः।

### वृत्तिः

प्रमाणसामान्यपरीक्षानन्तरं प्रमाणविशेषेषु परीक्षणीयेषु प्रथमोद्दिष्टं प्रत्यक्षं परीक्षणीयम्, तत्र च फलद्वारकमेव लक्षणं पूर्वमुक्तम्, अतः फललक्षणं यथाश्रुतमाक्षिपति—( प्रत्यक्षेति )।

---

(क) अनवस्थासाधनीयमिति करणे अनीयः, अनवस्थासाधनमित्यर्थः। (ख) भाष्यग्रन्थोऽत्र किञ्चित् परिवर्त्य गृहीतः। (ग) क-चिह्निततात्पर्ये 'न' इति नास्ति। (घ) अत्र चकारो वार्थे।

### न्यायभाष्यम्

न चासंयुक्ते द्रव्ये संयोगजन्यस्य (१) गुणस्योत्पत्तिरिति ज्ञानोत्पत्तिदर्शना-

### न्यायवार्त्तिकम्

नोक्तानि, यथात्ममनःसंयोग इत्येवमादीनि। अथेन्द्रियार्थसन्निकर्षोत्पन्नमित्येतल्लक्षण-मिति? लक्षणमप्येतन्न भवति। कस्मात्? उत्पत्तिकारणापदेशात्—इन्द्रियार्थसन्निकर्षो-त्पन्नमित्येतत् कारणमपदिश्यते, न च कारणापदेशो वस्तुनो लक्षणम्। नहि घटादेः कार्यस्य मृत्पिण्डादिक्रमोत्पत्तिस्तल्लक्षणमिति। न, उभयथाऽप्यदोषः—यदि कारणम्, तथाऽपि न दोषः; अथ लक्षणम्, तथाऽपि न दोषः। कथम्? कारणपक्षे तावदुक्तं भवति—नेदं कारणावधारणार्थं सूत्रम्, अपि तु प्रत्यक्षस्य प्रमाणस्य यदसाधारणमनुमानादिव्यवच्छेदकं तदुक्तमिति नाऽऽत्ममनः-संयोगादिषु प्रसङ्गः। इन्द्रियमनःसंयोगस्तर्ह्युपसंख्येयः—यद्यसाधारणत्वादिन्द्रियार्थसन्निकर्षस्य ग्रहणं नन्वेतस्मादेवेन्द्रियमनःसन्निकर्षोऽप्युपसंख्येय इति? उक्तमत्रापि, न यावदसाधारणं तत्सर्वं वक्तव्यम्, अपि त्वन्यतरग्रहणेनापि विशेषितमेतत्। लक्षणपक्षेऽपि न दोषः, असाधारणत्वा-दिन्द्रियार्थसन्निकर्षस्य—इन्द्रियार्थसन्निकर्षः प्रत्यक्षोत्पादकत्वात् कारणं च समानासमान-जातीयेभ्यो विशेषकत्वात् लक्षणं चेति ॥ २१ ॥

### न्यायवार्त्तिकतात्पर्यटीका

(क) कारणे सति (३) कार्यं लक्ष्यते ज्ञानमिति(३)*। द्वितीयकल्पं शङ्कते—अथेति। सिद्धान्तवाद्याह—नोभयथाऽपीति। लक्षणपक्ष एव सिद्धान्तोऽभिमतः, कारणपक्षाभ्युप-गमः प्रौढिवादेन द्रष्टव्यः। सकलप्रत्यक्षव्यापकमसाधारणं कारणमवधार्यते। न ह्रीदृशमन्यत् कारणमात्ममनःसंयोगो वा इन्द्रियमनःसंयोगो वा प्रत्यक्षस्यास्ति पूर्वस्य साधारणत्वाद् उत्तरस्य चाव्यापकत्वादिति (ख)। समाधानान्तरमाह—अर्थतो वेत्यादिना मनःसन्निकर्षोऽपि कारणमित्यन्तेन। तदेवं सिद्धान्तसारमुक्तम्। २१ ॥

नाऽऽत्ममनसोरित्यादिसूत्रमपठित्वैव भाष्यकारो व्याचष्टे—न चासंयुक्ते द्रव्य इति।

### वृत्तिः

प्रत्यक्षस्य यत् लक्षणम् इन्द्रियार्थसन्निकर्षोत्पन्नत्वं तन्नोपपद्यते असमग्रवचनात्। अयमर्थः—प्रत्यक्षस्य कारणघटितं लक्षणमभिहितम्, तत्र कारणकलापघटितायाः सामग्र्या विनिवेशनमतिव्याप्तिनिरासकम्, तच्च नाभिहितम्, असमग्रमिन्द्रियार्थसन्निकर्षजन्यत्व-मात्रमभिहितम्, आत्ममनःसंयोगेन्द्रियमनःसंयोगादिकन्तु नाभिहितम्, तथा चाऽऽत्ममनः-संयोगरूपेन्द्रियार्थसंयोगजन्यतयाऽनुमित्यादावतिव्याप्तिरित्यर्थः ॥ २० ॥

---

(१) 'गुणस्योत्पत्तिदर्शनात्' इति टि० पु० पाठः। (२) 'कार्यं ज्ञानं लक्षयति ज्ञान इति' इति क-तात्पर्यग्रन्थपाठः।

(क) ननु इन्द्रियार्थसन्निकर्षेत्यादिसूत्रं यदि कारणप्रदर्शनपरं तदा ज्ञानपदमत्र कुत इत्यत आह कारणे सतीति। (ख) इन्द्रियमनःसंयोगस्याव्यापकत्वं मानसप्रत्यक्षान्तर्भावेणेति बोध्यम्।

## न्यायभाष्यम्

दात्ममनःसन्निकर्षः कारणम्। (१) मनःसन्निकर्षानपेक्षस्य चेन्द्रियार्थसन्निकर्षस्य ज्ञानकारणत्वे युगपदुत्पद्येरन् बुद्धय इति मनःसन्निकर्षोऽपि कारणम्। तदिदं सूत्रं पुरस्तात् कृतभाष्यम्।

**( सू० )—नाऽऽत्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिः ॥२२॥**

आत्ममनसोः सन्निकर्षाभावे नोत्पद्यते प्रत्यक्षमिन्द्रियार्थसन्निकर्षाभाववदिति ॥२२॥

## न्यायवार्त्तिकम्

अर्थतो वाऽभिधानम् आत्ममनःसंयोगस्य इन्द्रियमनःसंयोगस्य च। कथमिति ? ज्ञानोत्पत्तिदर्शनात्; नासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरिति। मनःसंयोगानपेक्षं चेदिन्द्रियं प्रवर्तते (क)इति युगपदनेकोपलब्धिः स्यात्, न च भवति; अतो मनःसन्निकर्षोऽपि कारणमिति। तदिदं सूत्रमुक्तभाष्यम्।

नाऽऽत्ममनसोः सन्निकर्षाभावे प्रत्यक्षोत्पत्तिरिति।

आत्ममनसोः सन्निकर्षाभावे नोत्पद्यते (ख)बुद्धिरिन्द्रियार्थसन्निकर्षाभाववदिति। न, उक्तोत्तरत्वात्—उक्तोत्तरमेतदिति; नेदं कारणावधारणार्थं सूत्रमपि तु विशिष्टकारणवचनमिति ॥ २२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

सर्वं हि कारणजातं कार्योपजननाय परस्परसमवधानमपेक्षते, अन्यथा यत्र तत्र स्थितेभ्योऽपि कारणेभ्यः कार्यमुपजायेत; तदात्मनाऽपि मनःसंबद्धेन कार्यं जनयितव्यम्, संबन्धश्चाऽऽत्ममनसोः संयोग एव, भवतु वा संयोगजं ज्ञानम्। अथेन्द्रियात्मसंयोगजं कस्मान्न भवति, कृतं मनःसंयोगेनेत्यत आह—मनःसन्निकर्षेति। तस्मादात्ममनःसन्निकर्षोऽपि वक्तव्य इति पूर्वपक्षः। तदिदं नाऽऽत्ममनसोः सन्निकर्षेत्यादिसूत्रपाठस्य पुरस्तात्कृतभाष्यम्।

तदेतद्वार्तिककारो भाष्यमनुभाष्य पूर्वपक्षसूत्रं पठति—

नाऽऽत्मत्तिः (सू० २२)॥ सूत्रार्थमाह—आत्ममनसोरिति। पूर्वपक्षस्य क्षणमप्यवस्थानमसहमानो वार्तिककारः प्रतिषेधमस्योक्तं स्मारयति—न, उक्तेति ॥ २२ ॥

## वृत्तिः

नन्वात्ममनोयोगादेः कारणत्वमेव नास्तीत्याशङ्कायामाह—( नाऽऽत्मेति )।

शरीरावच्छिन्नस्याऽऽत्मनो मनसा यः सन्निकर्षस्तदभावे न प्रत्यक्षोत्पत्तिर्यतोऽत आत्म-

---

(१) 'मनःसन्निकर्षा' इत्यादिः 'कारणम्' इत्यन्तः टि० पुस्तके नास्ति।

(क) 'तर्हि' इत्यस्य स्थाने मुद्राप्रमादेन 'इति' पदमागतं सम्भाव्यते।

(ख) भाष्ये प्रत्यक्षमिति विशेषः।

## न्यायभाष्यम्

सति चेन्द्रियार्थसन्निकर्षे ज्ञानोत्पत्तिदर्शनात् कारणभावं ब्रुवतः (१)—

## ( सू० )—दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः ॥ २३ ॥

दिगादिषु सत्सु ज्ञानभावात्तान्यपि कारणानीति? अकारणभावेऽपि ज्ञानोत्पत्तिर्दिगादिसन्निधेरवर्जनीयत्वात्—यदाऽप्यकारणं दिगादीनि ज्ञानोत्पत्तौ, तदाऽपि सत्सु दिगा-

## न्यायवार्त्तिकम्

ये च (क) सति भावात् कारणभावं वर्णयन्ति यस्मात् किलेन्द्रियार्थसन्निकर्षे सति ज्ञानं भवति तस्मादिन्द्रियार्थसन्निकर्षः कारणमिति, तेषाम्—

दिग्देशकालाकाशेष्वप्येवं प्रसङ्गः। दिग्देशकालाकाशेषु सत्स्वपि ज्ञानं भवति, सति भावात् तान्यपि कारणमिति प्राप्तम्। कतमेन पुनर्न्यायेन दिगाद्यकारणम्? सामर्थ्यानुपलब्धेः—नहि ज्ञानोत्पत्तौ दिगादेः सामर्थ्यमुपलभ्यते, तस्मादकारणम्। सन्निधिमात्रादिति चेत्—अथ मन्यसे दिगादिः सन्निधिमात्रेण ज्ञानोत्पत्तेः कारणमिति? तदयुक्तम्, सन्निधेरवर्जनीयत्वात्—नित्यं दिगादि व्यापकं चेति नित्यत्वाद् व्यापकत्वाच्च न शक्यः सन्निधिः परिवर्जयितुमिति तत्र कारणभावे हेतुर्वक्तव्यः। नहि सन्निधिमात्रं हेतुत्वे कारणम्। कथम्? रूपोपलब्धेस्तेजःस्पर्शसद्भाववदिति—यथा रूपोपलब्धौ तेजसो रूपविशेषो हेतुः न पुनस्तेजःस्पर्शः सन्निधिमात्रेण

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं द्वाभ्यां सूत्राभ्यां पूर्वपक्षिते सति भावमात्रेण इन्द्रियार्थसन्निकर्षादीनामनेन कारणत्वमुक्तमिति मन्यमानः पार्श्वस्थः प्रत्यवतिष्ठते—सति चेन्द्रियार्थेति।

दिग्दे—ङ्गः (सू० २३)॥ न "सति" भावमात्रेण कारणत्वम्, आकाशादीनामपि कारणत्वप्रसङ्गात्; तादृशश्चाऽऽत्ममनःसंयोग इन्द्रियात्मसंयोगश्चेति न कारणं युक्तमित्यर्थः। दूषयति—अकारणभावेऽपीति। नान्वयमात्रात् कारणत्वनिश्चयोऽपि त्वन्वयव्यतिरेकाभ्याम्; न च दिगादावस्ति व्यतिरेकः। नित्यत्वविभुत्वाभ्यामवर्जनीयः सन्निधिः, सेन्द्रियशरीरवर्त्यात्ममनःसंयोगस्त्वन्वयव्यतिरेकावधृतसामर्थ्यः, छुप्तस्य ज्ञानानुत्पादात्। इन्द्रियार्थसन्निकर्षे त्वसति विप्रकृष्टे व्यवहिते च ज्ञानं न जायते। इन्द्रियमनःसन्निकर्षाभावे तु नायुगपज् ज्ञानानि भवन्ति। तस्मान्नाकाशादिभिरतिप्रसङ्ग इति।

## वृत्तिः

मनःसंयोगस्य कारणत्वमावश्यकम्। प्रत्यक्षोत्पत्तिरिति प्रकृतम् (२)ज्ञानोत्पत्तिरिति विवक्षितम् ॥ २१ ॥

नन्वेवं दिगादीनामपि कारणत्वं स्यादित्याशङ्कते—( दिग्देशेति )।

(१) 'ब्रुवते' इति ग०। (२) "ज्ञानमिति" इति नी = जी।

(क) सति भावादित्यस्य कार्योत्पत्तेः प्राक् सत्तामात्रं वेत्यर्थः।

### न्यायभाष्यम्

दिषु ज्ञानेन भवितव्यम्, न हि दिगादीनां सन्निधिः शक्यः परिवर्जयितुमिति। तत्र कारणभावे हेतुवचनम्, एतस्माद्धेतोर्दिगादीनि ज्ञानकारणानीति ॥ २३ ॥

आत्ममनःसन्निकर्षस्तर्ह्युपसङ्ख्येय इति। तत्रेदमुच्यते—

## (सू०)—ज्ञानलिङ्गत्वादात्मनो नानवरोधः(क) ॥ २४ ॥

### न्यायवार्त्तिकम्

सामर्थ्यादर्शनात्; रूपस्य पुनरिदं सामर्थ्यं तद्भावाभावानुविधानादुपलब्धेः—यस्माद् यत्र रूपं भवति तत्रोपलब्धिः, यत्र न भवति न तत्रोपलभ्यते, तस्माद्रूपमेवोपलब्धेः कारणं न स्पर्श इति। यथा चान्द्रमसं रूपं विना तेजःस्पर्शेनौष्ण्येन (ख)प्रकाशयति, (ग)अपवरकादिस्थितं (घ)चौष्ण्यं विना रूपेण न प्रकाशयति, एवमात्मेन्द्रियमनोऽर्थसन्निकर्षेभ्यो ज्ञानं भवन्न दिगादिभ्यो भवति सन्निधिमात्रत्वात्, इतरेषां च सामर्थ्यदर्शनादिति ॥ २३ ॥

यद्येवम्—'आत्ममनःसंयोगस्तर्ह्युपसंख्येयः', नोपसंख्येयो गम्यमानत्वात्। केन गम्यमानत्वात्?

### न्यायवार्त्तिकतात्पर्यटीका

तदेतद्वार्त्तिककारो व्याचष्टे—ये च सति भावात् कारणभावं वर्णयन्ति पूर्वपक्षिणश्च सिद्धान्तिनो वा, असति न भवतीति (ङ) वादागतो व्यतिरेको न तु प्रयोजकः, तान् प्रति पार्श्वस्थो ब्रूते (च) तेषां दिग्देशेति। यथा चान्द्रमसं रूपमिति। यद्यपि तत्रापि तेजस्यौष्ण्यमस्ति तथाऽप्यत्यन्ताभिभवेन स्वोचितार्थक्रियानुपयोगादसत्कल्पत्वमित्यर्थः ॥ २३ ॥

एवं पार्श्वस्थे निरस्ते पूर्वपक्षी ब्रूते—यद्येवमिति। सिद्धान्त्याह—नोपसंख्येय इति।

### वृत्तिः

यथाकथञ्चित् पौर्वापर्यस्य तत्रापि सत्त्वात्, तेषामन्यथासिद्धिश्चेत् प्रकृतेऽप्येवम् ॥२२॥

---

(क) त्रयोविंशचतुर्विंशसूत्रयोर्महर्षिकृतत्वं केचिन्नाभ्युपगच्छन्ति। अनवरोधः असंग्रहः। नावरोध इति केचित् पठन्ति।

(ख) प्रकाशयति प्रकाशते उपलब्धिविषयो भवतीत्यर्थः। काशतेः 'धातवो ह्यनिभासार्था अकितो वा चुरादयः' इत्यनेन वैकल्पिकचुरादिपाठः।

(ग) अपवरको गर्भगृहम्।

(घ) तथाभूतम् औष्ण्यं कर्तृ रूपेण विना रूपं न प्रकाशयतीत्यर्थः, प्रत्यक्षे विषयस्य हेतुत्वमनेन दर्शितम्।

(ङ) अत्राऽऽदर्शपुस्तकयोः 'वादागन्तव्यारेको' इति मुद्रितपाठः प्रामादिकः। क-पुस्तकसम्पादकास्तु "वाक्यगतव्यतिरेक इति युक्तः पाठः" इति वदन्ति। ख-पुस्तकसम्पादकास्तु 'अयं पाठोऽसंलग्नः' इत्यलिखन्। वयं तु—सति भावादिति वादात् सावधारणात् सत्येव भावदित्येवं रूपादागतः असति न भवतीत्येवंरूपो व्यतिरेकस्तु न कारणतायाः प्रयोजक इति वर्णयति इत्यर्थलाभाय एवं पाठं यथार्थं मन्यामहे।

(च) 'तेषा'मिति वार्त्तिकम् 'दिग्देशे'ति तद्गतः सूत्रांशः।

## न्यायभाष्यम्

ज्ञानमात्मलिङ्गं तद्गुणत्वात्। न चासंयुक्ते द्रव्ये संयोगजस्य गुणस्योत्पत्तिरस्तीति ॥ २४ ॥

## न्यायवार्त्तिकम्

ज्ञानलिङ्गत्वादात्मनो नानवरोधः। ज्ञानमात्मलिङ्गमित्युक्तम्। तेनाऽऽत्ममनःसंयोगोऽनुक्तोऽप्यनुमेयः। कथं पुनर्ज्ञानमात्मलिङ्गम्? तद्गुणत्वात्। गुणभावासिद्धिरिति चेत्—अथ मन्यसे गुणभाव एव ज्ञानस्यासिद्धः कुत आत्मगुणत्वं सेत्स्यतीति, न; आत्मसमवायात् सुखादिवदिति—नहि द्रव्यं कर्म वात्मनि समवैति, तस्मान्न द्रव्यं न कर्म, आत्मनि तु समवायो ज्ञानस्य सुखादिवत्; तस्मादात्मगुणः। न पृथिव्यादिगुणः स्वसंवेद्यत्वात्—यत् प्रत्यक्षं स्वसंवेद्यं न तत् पृथिव्यादिगुणः यथा सुखादि, यच्च प्रत्यक्षं स्वपरसंवेद्यं तत् पृथिव्यादिगुणः यथा रूपादि, न चैवं ज्ञानं तस्मादात्मगुण इति। उक्तं चात्र। किमुक्तम्? न यावत् प्रत्यक्षस्य कारणं तावत् सर्वं वक्तव्यमिति ॥ २४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

ज्ञान—धः ( सू० २४ )॥ अत्र ज्ञानस्याऽऽत्मलिङ्गत्वमुच्यते ज्ञानं तावत्कार्यमनित्यत्वाद्घटवत्। क्वचित् समवेतं (क)कार्यत्वाद् घटवत्। न च तत् पृथिव्याद्याश्रितं मानसप्रत्यक्षत्वात्, यत् पुनः पृथिव्याद्याश्रितं तत् प्रत्यक्षान्तरवेद्यमप्रत्यक्षमेव वा; न च तथा ज्ञानम्, (ख)तस्मात् द्रव्याष्टकातिरिक्ताश्रितम्, तदाश्रयश्च द्रव्यजातीयः समवायिकारणत्वादाकाशवत्। तस्य च विभुत्वमात्मलक्षणेऽस्माभिरुक्तम्। अतो गुणजातीयं ज्ञानं कार्यत्वे सति विभुद्रव्यसमवायात्, शब्दवत्। एवं व्यवस्थिते प्रश्नोत्तरे वार्त्तिकगते व्याख्यातव्ये। आत्मसमवायादिति, कार्यत्वे सति विभुद्रव्यसमवायादित्यर्थः। विभुद्रव्यसमवाय एवासिद्ध इति वदत आह—न पृथिव्यादिगुणः स्वसंवेद्यत्वात्, मानसप्रत्यक्षवेद्यत्वादित्यर्थः। (ग) स्वपरसंवेद्यं प्रत्यक्षान्तरवेद्यं द्रष्टव्यम्, अन्यथा पृथिव्यादिगुणेन द्वित्वादिना व्यभिचारः स्यादिति। तस्माज् ज्ञानलिङ्ग आत्मा न स्वभावसंयुक्तो ज्ञानं जनयति तस्य सदातनत्वे सदा ज्ञानोत्पादप्रसङ्गात्। तस्मात् संयोगभेदं कादाचित्कमपेक्षत इत्यर्थात् सिद्ध आत्ममनःसंयोग इति न सूत्रकृतोक्तः। प्रौढिवादितयैव समाधिरिति दर्शयितुमुक्तमेव परमसमाधिं स्मारयति—उक्तं चात्रेति ॥ २४ ॥

## वृत्तिः

अत्रोत्तरमभिधातुमाह—( ज्ञानेति )

(१)आत्मनो नानवरोधः असंग्रहः कारणत्वेनेति न। कुतः? ज्ञानलिङ्गत्वात् ज्ञानं

---

(१) "आत्मनोऽनवरोध" इति श्वा०।

(क) ध्वंसवारणाय भावत्वे सतीति द्रष्टव्यम्।

(ख) तस्मादिति पदं लिपिप्रमादादादर्शपुस्तकयोर्न मुद्रितमिति सम्भावनया पूरितम्।

(ग) आदर्शयोः 'स्वपरसंवद्य'मिति पाठः प्रामादिकः।

## ( सू० )—तदयौगपद्यलिङ्गत्वाच्च न मनसः ॥ २५ ॥

### न्यायभाष्यम्

अनवरोध (१)इति वर्त्तते। युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युच्यमाने सिध्यत्येव मनःसन्निकर्षापेक्ष इन्द्रियार्थसन्निकर्षो ज्ञानकारणमिति ॥ २५ ॥

### न्यायवार्त्तिकम्

अथेन्द्रियमनःसन्निकर्षः कस्मान्नाभिधीयते ?

तदयौगपद्यलिङ्गत्वाच्च न मनसः। युगपज् ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्युक्तम्, तेन मनसोऽप्यवरोध इति ? न ; युगपदनुत्पत्तिसूत्रस्यान्यार्थत्वात्—यदिदमुच्यते युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्गमित्यनेन ज्ञानकारणं मन इति, तदयुक्तम्; अन्यार्थत्वात्—अन्यार्थं सूत्रम्, न पुनस्तेन ज्ञानकारणत्वं मनसोऽभिधीयते (क) गम्यते। नहि ज्ञानं स्वतन्त्रम्, अन्यार्थस्यापि तदर्थप्रकाशकत्वमुपपत्तिसामर्थ्यात्—यद्यपि तस्मिन् सूत्रे मनसो ज्ञानकारणत्वं न साक्षादुक्तम्—तथाऽप्युपपत्तिसामर्थ्याज् ज्ञानकारणं मन इति गम्यते। नहि ज्ञानं स्वतन्त्रं न चक्षुरादि स्वतन्त्रमिति ॥ २९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

तद—सः (सू० २५) ॥ अन्यार्थमिति प्रमेयभूतमनःस्वरूपप्रतिपादनार्थम्। अन्यार्थस्यापि तदर्थप्रकाशकत्वम्। उपपत्तिर्लिङ्गम्। ईदृशं हि तल्लिङ्गं यदन्यार्थमपि मनसो ज्ञानकारणत्वं प्रतिपादयतीति। न हि ज्ञानं स्वतन्त्रं येन स्वकारणं मनो नापेक्षेत, नापि चक्षुरादि स्वतन्त्रं ज्ञानजनने येन मनो ज्ञानकारणं न स्यादित्याह—न चक्षुरादीति। तस्मादर्थप्राप्तत्वादात्ममनःसंयोग इन्द्रियमनःसंयोगश्च नोक्तौ सूत्रकारेण ॥ २९ ॥

### वृत्तिः

लिङ्गं यस्य तत्तथा, ज्ञानं हि भावकार्यं समवायिकारणं साधयति, तच्च परिशेषादात्मैव। दिगादीनाञ्च कारणत्वे न मानमिति भावः। इत्थञ्च समवायिकारणस्याऽऽत्मनो मनसा संयोगोऽसमवायिकारणमित्यप्यर्थात् सिद्धम् ॥ २३ ॥

आत्मशरीरादिसंयोगस्य कुतो नासमवायिकारणत्वमित्यतो मनसः प्राधान्ये युक्तिमाह—( तदयौगपद्येति )।

नानवरोध इत्यनुवर्तते। इन्द्रियमनोयोगद्वारा ज्ञानायौगपद्यनियामकत्वात् मनसोऽपि हेतुत्वमावश्यकमिति(२) शरीरात्ममनोयोगादेश्च न तन्नियामकत्वमिति भावः। इत्थं चाऽऽत्ममनःसंयोगस्यासमवायिकारणत्वं युक्तम् ॥ २४ ॥

---

(१) 'इत्यनुवर्त्तते' क०। (२) "शरीरमनोयोगादेश्च" इति पा०।

(क) 'गम्यते' इति 'अभिधीयते' इत्यस्य विवरणम्, वार्त्तिकान्तर्भावस्तस्य लिपिप्रमादकृत इति सम्भाव्यते।

**( सू० )—प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम् ॥ २६ ॥**

### न्यायभाष्यम्

प्रत्यक्षानुमानोपमानशब्दानां निमित्तमात्ममनःसन्निकर्षः, प्रत्यक्षस्यैवेन्द्रियार्थसन्निकर्ष इत्यसमानः, असमानत्वात्तस्य ग्रहणम् ॥ २६ ॥

### न्यायवार्त्तिकम्

अथ कस्मादिन्द्रियार्थसन्निकर्षोऽभिधीयते कथं च नाऽऽत्ममनःसन्निकर्षोऽभिधीयते इन्द्रियमनःसन्निकर्षो वेति ?

प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्य स्वशब्देन वचनम्। इन्द्रियार्थसन्निकर्षः प्रत्यक्षस्यैव निमित्तम्; आत्ममनःसन्निकर्षः प्रत्यक्षस्य चान्यस्य चेति। इन्द्रियार्थसन्निकर्षेण समानत्वादिन्द्रियमनःसंयोगो वक्तव्यः—यदि साधारणत्वादात्ममनःसन्निकर्षो नाभिधीयते, इन्द्रियमनःसंयोगोऽसाधारणत्वादिन्द्रियार्थसन्निकर्षवद्वक्तव्य इति ? नेदं कारणावधारणार्थमित्युक्तम्। न यावदसाधारणं सर्वं तद्वक्तव्यम्, अपि तु न साधारणं वक्तव्यमित्ययं सूत्रार्थः ॥ २६ ॥

### न्यायवार्त्तिकतात्पर्यटीका

देशयति—अथ कस्मादिति। इन्द्रियार्थसन्निकर्षेऽप्यर्थतः प्राप्तिरविशिष्टेति भावः।

प्रत्य—नम् ( सू० २६ )॥ परिहरति—प्रत्यक्षेति। सर्वानभिधाने हि प्रत्यक्षं न लक्षितं स्यादिति तल्लक्षणाय किंचिद्वक्तव्यम्। तत्रेन्द्रियार्थसन्निकर्ष एव वक्तव्यः समस्तप्रत्यक्षव्यापकत्वात् नेतरावव्यापकत्वादतिव्यापकत्वाच्चेति परमः समाधिः ॥ २६ ॥

### वृत्तिः

सिद्धान्तसूत्रम्—( प्रत्यक्षेति )

प्रत्यक्षनिमित्तत्वात् प्रत्यक्षासाधारणकारणत्वात्। अयमर्थः प्रत्यक्षसूत्रे इन्द्रियार्थसन्निकर्षाभिधानं हि न कारणाभिधित्सया, येनाऽऽत्ममनोयोगाद्यनभिधानेन न्यूनत्वम्, अपि तु लक्षणाभिप्रायेण। तत्र च सामग्रीघटितस्येवासाधारणकारणघटितस्यापि लक्षणस्य सुवचत्वादिन्द्रियार्थसन्निकर्षस्य चासाधारणत्वात् (क)पृथग्वचनम्—आत्ममनःसंयोगादिसाधारणकारणाद् व्यवच्छिद्य लक्षणघटकतया वचनं युक्तम्।

अयं भावः—इन्द्रियार्थसन्निकर्षत्वावच्छिन्नकारणताप्रतियोगिककार्यताशालित्वस्य

(क) एतेन वृत्तिकारमते सूत्रे 'स्वशब्देन' इत्यत्र 'पृथक्' इति पाठः प्रतीयते।

## ( सू० )—सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात् ॥ २७ ॥

### न्यायभाष्यम्

इन्द्रियार्थसन्निकर्षस्य ग्रहणं नाऽऽत्ममनसोः सन्निकर्षस्येति। एकदा खल्वयं प्रबोधकालं प्रणिधाय सुप्तः प्रणिधानवशात् प्रबुध्यते। यदा तु तीव्रौ ध्वनिस्पर्शौ प्रबोधकारणं भवतस्तदा प्रसुप्तस्येन्द्रियसन्निकर्षनिमित्तं प्रबोधज्ञानमुत्पद्यते। तत्र न ज्ञातुर्मनसश्च सन्निकर्षस्य प्राधान्यं भवति। किं तर्हि? इन्द्रियार्थयोः सन्निकर्षस्य। न ह्यात्मा जिज्ञासमानः प्रयत्नेन मनस्तदा प्रेरयतीति।

एकदा खल्वयं विषयान्तरासक्तमनाः सङ्कल्पवशाद्विषयान्तरं जिज्ञासमानः प्रयत्नप्रेरितेन मनसा इन्द्रियं संयोज्य तद्विषयान्तरं जानीते। यदा तु खल्वस्य निःसङ्कल्पस्य (१)निर्जिज्ञासस्य च व्यासक्तमनसो बाह्यविषयोपनिपातनाज् ज्ञानमुत्पद्यते तदेन्द्रियार्थ-

### न्यायवार्त्तिकम्

सुप्तव्यासक्तमनसां चेन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्। इन्द्रियार्थसन्निकर्षस्य प्राधान्यपरमिदं सूत्रम्। शेषं भाष्ये ॥ २७ ॥

### न्यायवार्त्तिकतात्पर्यटीका

सुप्त—त् ( सू० २७ )॥ ज्ञानोत्पत्तेरिति सूत्रशेषः। प्रणिधाय संकल्प्य प्रदोषे सुप्तोऽर्द्धरात्रे मयोत्थातव्यमिति सोऽर्धरात्र एवावबुध्यते। प्रबोधज्ञानमिति, प्रबोधे निद्राविच्छेदे सति द्रव्यस्पर्शस्य संज्ञानं (क)प्रबोधज्ञानम् इत्यर्थः। सुप्तमनसामिति व्याख्याय व्यासक्तमनसामिति व्याचष्टे—एकदा खल्वयं विषयान्तरेति ॥ २७ ॥

### वृत्तिः

इन्द्रियत्वावच्छिन्नकारणताप्रतियोगिककार्यताशालित्वस्य वा लक्षणस्य सम्यक्त्वे कृतमात्ममनोयोगाद्यनुप्रवेशेनेति। परिष्कृतं चेदमधस्तात्।

इदं न सूत्रम्, किन्तु भाष्यमिति केचित् ॥ २५ ॥

समाध्यन्तरमाह—( सुप्तेति )।

ज्ञानस्येति शेषः। सुप्तानां व्यासक्तमनसां च घनगर्जितादिना श्रोत्रसन्निकर्षात् वह्न्यादिना त्वक्सन्निकर्षाच्च प्रागेव ज्ञानोत्पत्तेरिन्द्रियार्थसन्निकर्षस्य प्राधान्यम्, (२)अतस्तद्घटितमेव लक्षणं युक्तमिति भावः ॥ २६ ॥

---

(१) 'निर्जिज्ञासमानस्य' इति टि-पु० पाठः। (२) 'अत' इत्यादिकः 'भाव' इत्यन्तो ग्रन्थः आ-पु० नास्ति।

(क) व्याख्येयं 'प्रबोधज्ञानम्' इति पदमत्र लिपिप्रमादात् पुनरागतम्।

## न्यायभाष्यम्

सन्निकर्षस्य प्राधान्यम्। न ह्यत्रासौ जिज्ञासमानः प्रयत्नेन मनः प्रेरयतीति। प्राधान्याच्चेन्द्रियार्थसन्निकर्षस्य ग्रहणं कार्यं गुणत्वाद् नाऽऽत्ममनसोः सन्निकर्षस्येति ॥ २७ ॥

(१)प्राधान्ये च हेत्वन्तरम्—

**( सू० )—तैश्चापदेशो ज्ञानविशेषाणाम् ॥ २८ ॥**

( भा० ) तैरिन्द्रियैरर्थैश्च व्यपदिश्यन्ते ज्ञानविशेषाः। कथम्? घ्राणेन जिघ्रति, चक्षुषा पश्यति, रसनया रसयतीति, घ्राणविज्ञानं चक्षुर्विज्ञानं (२)रसनाविज्ञानं गन्धविज्ञानं रूपविज्ञानं रसविज्ञानमिति च। इन्द्रियविषयविशेषाच्च पञ्चधा बुद्धिर्भवति। अतः प्राधान्यमिन्द्रियार्थसन्निकर्षस्येति ॥ २८ ॥

## न्यायवार्त्तिकम्

प्राधान्ये च हेत्वन्तरम्—

तैश्चापदेशो ज्ञानविशेषाणाम्। यस्मादिदं प्रत्यक्षज्ञानमुत्पद्यमानं विषयेण कारणेन वा व्यपदिश्यते। यच्चासाधारणं तेन व्यपदेशो दृष्टः यथा शाल्यङ्कुर इति ॥ २८ ॥

## न्यायवार्त्तिकतात्पर्यटीका

प्राधान्ये च हेत्वन्तरम्—

तैश्चा—णाम् (सू० २८) ॥ इन्द्रियैर्व्यपदेशं विग्रहसमासाभ्यां ज्ञानस्य दर्शयति—घ्राणेति। (क) इन्द्रियविषयसंख्यानुरोधात्तज्ज्ञानस्य तद्व्यपदेश इत्याह—इन्द्रियेति।

वार्त्तिकं यच्चासाधारणं तेनेति। दिगादिरप्युपाधिकल्पितेन प्राचीत्वादिना कार्यं विशेषयन्नसाधारणमेवेत्यभिप्रायः ॥ २८ ॥

## वृत्तिः

युक्त्यन्तरमाह—( तैश्चापदेश इति )।

ज्ञानविशेषाणां तैः इन्द्रियार्थसन्निकर्षैः अपदेशो विशेषणं व्यावृत्तिः। आत्ममनोयोगादिकं हि न व्यावर्त्तकम्, तज्जन्यत्वस्य ज्ञानान्तरसाधारण्यात्। एवमिन्द्रियमनोयोगजन्यत्वमपि न लक्षणम्, मानसेऽव्याप्तेः।

परे तु तैः इन्द्रियैर्ज्ञानविशेषाणां प्रत्यक्षविशेषाणामपदेशो भाषणं यतस्तेनेन्द्रियार्थसन्निकर्षस्य प्राधान्यम्, भाषन्ते हि चाक्षुषं प्रत्यक्षं रासनं प्रत्यक्षमितीत्याहुः।

---

(१) "प्राधान्ये तु" इति वि-पु० पाठः। (२) "रसनाविज्ञानम्" इति ल-ग० पुस्तकयोर्नास्ति।

(क) अत्र 'इन्द्रियविषयसमाख्यानुरोधादि'ति पाठः सम्यक्तया प्रतिभाति।

## न्यायभाष्यम्

यदुक्तमिन्द्रियार्थसन्निकर्षग्रहणं कार्यम्, नाऽऽत्ममनसोः सन्निकर्षस्येति, कस्मात्? सुप्तव्यासक्तमनसामिन्द्रियार्थयोः सन्निकर्षस्य ज्ञाननिमित्तत्वादिति। सोऽयम्—

**( सू० )—व्याहतत्वादहेतुः ॥ २९ ॥**

( भा० ) यदि तावत् क्वचिदात्ममनसोः सन्निकर्षस्य ज्ञानकारणत्वं नेष्यते, तदा 'युगपज्ज्ञानानुत्पत्तिर्मनसो लिङ्ग'मिति व्याहन्येत। (१) नेदानीं मनसः सन्निकर्षमिन्द्रि-

## न्यायवार्त्तिकम्

व्याहतत्वादहेतुः। व्याहतत्वादित्यनेन त्रिसूत्रीं प्रत्याचष्टे। "प्रत्यक्षनिमित्तत्वादिन्द्रियार्थयोः सन्निकर्षस्य, सुप्तव्यासक्तमनसां च इन्द्रियार्थयोः सन्निकर्षनिमित्तत्वात्, तैश्चापदेशो ज्ञानविशेषाणा"मिति इयं किल त्रिसूत्री आत्ममनःसन्निकर्षस्य ज्ञानकारणत्वं प्रतिषेधतीति व्याहतमिदं भवति "ज्ञानलिङ्गत्वादात्मनो नानवरोधः, तदयौगपद्यलिङ्गत्वाच्च न मनस" इति।

## न्यायवार्त्तिकतात्पर्यटीका

अनेन प्रबन्धेनेन्द्रियार्थसन्निकर्ष एव कारणं ज्ञानस्य न त्वात्ममनःसन्निकर्ष इन्द्रियमनःसन्निकर्षो वा ज्ञानकारणमनेनोक्तमिति मन्वानो देशयति—

व्याह—तुः ( सू० २९ )॥ (क)व्याहतत्वादिति पूर्वपक्षसूत्रम्। अस्य तात्पर्यमाह वार्त्तिककारः—अनेनेति। नन्वियं त्रिसूत्री इन्द्रियार्थसन्निकर्षस्य प्राधान्यमाह न पुनः संयोगान्तरस्य कारणत्वं प्रत्याचष्ट इत्यत आह—इयं किलेति। कारणत्वं प्रतिषिध्यत इत्यभिमानः पूर्वपक्षिण

## वृत्तिः

नव्यास्तु प्रत्यक्षविशेषाणाम् इन्द्रियैरपदेशो यतोऽतश्चाक्षुषादिघटितविशेषलक्षणान्यपि सम्भवन्ति। चाक्षुषवृत्त्यनुमित्यवृत्तिजातिमत्त्वादीनि लक्षणान्तराण्यपि द्रष्टव्यानीत्याशयं वर्णयन्ति ॥ २७ ॥

इन्द्रियार्थसन्निकर्षो न हेतुरन्वयव्यभिचारादित्याशयेन शङ्कते—( व्याहतत्वादिति )। गीतश्रवणादिकाले चक्षुर्घटसंयोगादौ विद्यमानेऽपि चाक्षुषादेर्व्याहतत्वादिन्द्रियार्थसंयोगो न हेतुरित्यर्थः ॥ २८ ॥

---

(१) 'तदानीं' ग०।

(क) 'व्याहतत्वादिति' इतः प्रभृति ४६० पत्रे 'व्याख्यातमिति' इत्यन्तो ग्रन्थः आदर्शपुस्तकयोः 'नार्थविशेषे'ति सूत्रीयतात्पर्यटीकायां 'भूतमूलमाणामिति' इत्यतः परं मुद्रितोऽपि सङ्गत्यनुरोधादिह गृहीतः।

### न्यायभाष्यम्

यार्थसन्निकर्षोऽपेक्षते। मनःसंयोगानपेक्षायां च युगपज्ज्ञानोत्पत्तिप्रसङ्गः। अथ मा भूद् व्याघात इति सर्वविज्ञानानामात्ममनसोः सन्निकर्षः कारणमिष्यते, तदवस्थमेवेदं भवति; ज्ञानकारणत्वादात्ममनसोः सन्निकर्षस्य ग्रहणं कार्यमिति ॥ २९ ॥

## ( सू० )—नार्थविशेषप्राबल्यात् ॥ ३० ॥

( भा० ) नास्ति व्याघातः, न ह्यात्ममनःसन्निकर्षस्य ज्ञानकारणत्वं व्यभिचरति। इन्द्रियार्थसन्निकर्षस्य प्राधान्यमुपादीयते। अर्थविशेषप्राबल्याद्धि सुप्तव्यासक्तमनसां ज्ञानोत्पत्तिरेकदा भवति। अर्थविशेषः कश्चिदेवेन्द्रियार्थः, तस्य प्राबल्यं तीव्रतापटुते। तच्चार्थविशेषप्राबल्यमिन्द्रियार्थसन्निकर्षविषयं नाऽऽत्ममनसोः सन्निकर्षविषयम्, तस्मादिन्द्रियार्थसन्निकर्षः प्रधानमिति।

### न्यायवार्त्तिकम्

'मनःसंयोगानपेक्षायां युगपज्ज्ञानोत्पत्तिप्रसङ्ग' इति दृष्टव्याघातः। 'अथ मा भूद्व्याघात' इति। ज्ञानमात्ममनःसन्निकर्षादुत्पद्यते, देश्यावस्थमेवैतत्—कस्मादात्ममनःसंयोगो नाभिधीयते। अत्रोक्तम्। किमुक्तम्? नेदं कारणावधारणार्थं सूत्रम्, अपि तु विशिष्टकारणवचनमिति ॥ २९ ॥

याऽपीयं त्रिसूत्री प्रत्यक्षनिमित्तत्वाच्चेन्द्रियार्थयोः सन्निकर्षस्येत्येवमादिः, इयमपि—

नार्थविशेषप्राबल्यात्। नानया त्रिसूत्र्या आत्ममनःसन्निकर्षस्य कारणभावः प्रतिषिध्यते, अपि तु प्राधान्यमिन्द्रियार्थसन्निकर्षस्योपपाद्यते। प्राधान्यं चोपपादयन्त्या नात्ममनःसंयोगः प्रतिषिद्धो भवति। मनसि क्रियाकारणाभिधानम्? सुप्तव्यासक्तमनसा-

### न्यायवार्त्तिकतात्पर्यटीका

इत्यर्थः। दृष्टव्याघात इति, अयौगपद्यं दृष्टं तस्य व्याघात इत्यर्थः। शेषं तु भाष्यव्याख्यया व्याख्यातमिति ॥ २९ ॥

परिहारसूत्रम्—

नार्थ—त् ( सू० ३० )॥ अनेनेन्द्रियार्थसन्निकर्षस्य प्राधान्यमात्रमुच्यते, न त्वात्ममनः-

### वृत्तिः

समाधत्ते—( नार्थेति )।

अर्थविशेषस्य गीतादेः प्राबल्याद् बुभुत्सितत्वाद् गीतादिश्रवणम्। तथा च गीतशुश्रूषादेश्चाक्षुषादिप्रतिबन्धकत्वात् प्रतिबन्धकाभावस्य च (१)कार्यजनकत्वात् तत्सहकारेण चेन्द्रियार्थसन्निकर्षस्य हेतुत्वमित्यतः पूर्वपक्षो न युक्त इति।

(१) "कार्याजनकत्वात्" इति पा०।

## न्यायभाष्यम्

असति प्रणिधाने सङ्कल्पे चासति सुप्तव्यासक्तमनसां यदिन्द्रियार्थसन्निकर्षा-दुत्पद्यते ज्ञानम्, तत्र मनःसंयोगोऽपि कारणमिति मनसि क्रियाकारणं वाच्यमिति ।

यथैव ज्ञातुः खल्वयमिच्छाजनितः (१)प्रयत्नो मनसः प्रेरक आत्मगुणः, एवमात्मनि गुणान्तरं सर्वस्य साधकं (क)प्रवृत्तिदोषजनितमस्ति, येन प्रेरितं मन इन्द्रियेण सम्बध्यते । तेन ह्यप्रेर्यमाणे मनसि संयोगाभावाज् ज्ञानानुत्पत्तौ सर्वार्थताऽस्य निवर्त्तते । एषितव्यं चास्य गुणान्तरस्य द्रव्य-गुण-कर्मकारणत्वम्, अन्यथा हि चतुर्विधानामणूनां भूतसूक्ष्माणां मनसां च ततोऽन्यस्य क्रियाहेतोरसम्भवात् शरीरेन्द्रियविषयाणामनुत्पत्ति-प्रसङ्गः ॥ ३० ॥

## न्यायवार्त्तिकम्

मिन्द्रियार्थयोः सन्निकर्षनिमित्तत्वादित्यभिधानेनाऽऽत्ममनःसंयोगोऽपि कारणमित्युक्तम् । तत्र मनसि क्रियाकारणं वाच्यमिति । अथ सुखदुःखोपभोगस्यादृष्टनिमित्तत्वाददृष्टं कारणम्—यथैवाऽऽत्मनि गुणान्तरमिच्छाजनितं प्रयत्नलक्षणं क्रियाहेतुस्तथात्मनि संस्कारो धर्माधर्म-समाख्यातो वर्तते, तेन प्रेरितं मनः संयुज्यते विभज्यते वा, तेन ह्यप्रेर्यमाणे मनसि ततोऽन्यस्य क्रियाहेतोरभावात् सर्वार्थता तस्य निवर्तेत । नहि धर्माधर्मावन्तरेण मनसि कश्चिदन्यः क्रियाहेतुरादौ सम्भवतीत्यतोऽदृष्टं कारणमिति ॥ ३० ॥

इति प्रत्यक्षलक्षणपरीक्षा ।

## न्यायवार्त्तिकतात्पर्यटीका

संयोगस्येन्द्रियमनःसंयोगस्य वाऽकारणत्वमुच्यत इति न व्याघात इत्यर्थः । पृच्छति—असति संकल्पे प्रणिधाने चेति । (२)यत्नः प्रणिधानम्, संकल्प इच्छा । उत्तरम्—यथैवेति । नन्वस्य जात्यायुर्भोगनिमित्तत्वमवगतं न तु मनःप्रेरकत्वमपीत्यत आह—तेन ह्यप्रेर्यमाणे मनसीति । भोगो ह्यदृष्टस्य प्रधानं प्रयोजनं तन्नान्तरीयकतया जन्मायुषी आक्षिपति । स्वसंबन्धिसुखदुःख-साक्षात्कारश्च भोगः तदायतनं च शरीरम् । अप्राप्तं च मनो न तत्र भोगं च भोगविषयौ सुखदुःखे च तयोः कारणं च ज्ञानं जनयितुमर्हति (ख)नूनं तत्प्राप्तिहेतोर्मनःकर्मणः कारणमदृष्टं वक्तव्यम्, अन्यथाऽस्य सर्वद्रव्यगुणकर्मकारणता न स्यात् । मा भूत्सर्वार्थतेत्यत आह—एषितव्यं चास्येति । अणूनां विशेषणं भूतसूक्ष्माणामिति ॥ ३० ॥

---

(१) 'प्रयत्नो' इति ख-ग-ज० । (२) 'प्रयुक्तम्' इति क० ।

(क) प्रवृत्तिः कर्म, दोषः रागादिः । (ख) 'इति' पदमत्रार्थतोऽवगन्तव्यम् ।

# (सू०)—प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः ॥ ३१ ॥

## न्यायभाष्यम्

यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानं वृक्ष इति, एतत् किल प्रत्यक्षम्, तत् खल्वनुमानमेव। कस्मात्? एकदेशग्रहणाद् वृक्षस्योपलब्धेः। अर्वाग्भागमयं गृहीत्वा वृक्षमुपलभते। न चैकदेशो वृक्षः। तत्र यथा धूमं गृहीत्वा वह्निमनुमिनोति तादृगेव (१)तद्भवति।

## न्यायवार्त्तिकम्

एवं तावत् प्रत्यक्षलक्षणं समाहितम्। अतः परमिदानीं प्रत्यक्षस्यानुमानेऽन्तर्भावं कुर्वाण इदमाह—

प्रत्यक्षमनुमानमेकदेशग्रहणादुपलब्धेः। यदिदमिन्द्रियार्थसन्निकर्षादुत्पद्यते ज्ञानम् अयं वृक्ष इति, एतत् किल प्रत्यक्षम्, तदनुमानमेव। कस्मात्? एकदेशग्रहणाद् वृक्षोपलब्धेः—एकदेशमयं गृहीत्वा वृक्षमुपलभते, न चैकदेशो वृक्षः। तत्र यथाऽन्यस्य दर्शनादन्यप्रतिपत्तिरनुमानम्, एवमेकदेशग्रहणाद् वृक्षप्रतिपत्तिरनुमानमिति—यथा धूमं गृहीत्वाऽग्निप्रतिपत्तिरेवमेकदेशं गृहीत्वा वृक्षप्रतिपत्तिरिति।

## न्यायवार्त्तिकतात्पर्यटीका

अतः परमिदानीमिति। न ह्यवयवी नाम कश्चिदर्थान्तरभूतोऽवयवेभ्योऽस्ति अपि त्ववयवा एव परमार्थसन्तः। तेषु च कतिपयानवयवान् गृहीत्वा तत्सहचरितानवयवाननुमाय प्रतिसंधानजेयं वृक्षबुद्धिस्तानेवावयवानालम्बमानाऽनुमानमिति प्रत्यक्षस्यानुमानेऽन्तर्भावाद्विभागसूत्रेण न्यूनाधिकसंख्याव्यवच्छेदो नोपपद्यत इत्यर्थः।

## वृत्तिः

परे तु इन्द्रियार्थसन्निकर्षस्य हेतुत्वमित्यत इन्द्रियमनोयोगादेरहेतुत्वमिति भ्रान्तः शङ्कते—व्याहतत्वाद् अहेतुः। इन्द्रियार्थसन्निकर्षस्यैव हेतुत्वमित्यत्र यो हेतुरुक्तः, स न युक्तः। कुतः? व्याहतत्वात्, इन्द्रियमनोयोगादेर्हेतुताया अभ्युपगमात् तद्व्याघातापत्तेः। भ्रमं खण्डयति—नार्थविशेषप्राबल्यात्। नास्ति व्याघातः। कुतः? अर्थविशेषस्य इन्द्रियार्थस्य प्राबल्यात् प्राधान्यात्। तथा चेन्द्रियार्थसन्निकर्षप्राधान्यार्थं हि पूर्वमुक्तम्, न तु तदितरनिषेधार्थमिति ॥ २९ ॥

ननु सति प्रत्यक्षस्य प्रमाणान्तरत्वे तल्लक्षणपरीक्षा सङ्गच्छते, तदेव तु नास्तीत्याशङ्कते—( प्रत्यक्षेति )।

(१) 'तद्' इति क-पु० नास्ति।

## न्यायभाष्यम्

किं पुनर्गृह्यमाणादेकदेशाद् अर्थान्तरमनुमेयं मन्यसे ? अवयवसमूहपक्षे अवयवान्तराणि (१)द्रव्यान्तरोत्पत्तिपक्षे तानि चावयवी चेति। अवयवसमूहपक्षे तावदेकदेशग्रहणाद् वृक्षबुद्धेरभावः, नागृह्यमाणमेकदेशान्तरं वृक्षो गृह्यमाणैकदेशवदिति।

## न्यायवार्त्तिकम्

न, यथासम्भवं विकल्पानुपपत्तेः—एकदेशग्रहणादर्थान्तरं प्रतिपद्यत इति किं तदर्थान्तरम्, यदेकदेशग्रहणात् प्रतिपद्यत इति। अवयवसमूहपक्षे तावदवयवान्तराणि, द्रव्यान्तरोत्पत्तिपक्षे तानि च (क) अवयवीति चेन्न—यदि तावदवयवसमूहमात्रं वृक्षमधिकृत्योच्यते, एतस्मिन् पक्षे गृह्यमाणावयवव्यतिरेकेण यान्यगृह्यमाणान्यवयवान्तराणि स वृक्षः। अथ द्रव्यान्तरोत्पत्तिपक्ष आश्रीयते, तथाऽप्यर्वाग्भागव्यवहितानि अवयवान्तराणि, अर्थान्तरं च स वृक्ष इति। किं पुनरत्रैकदेशग्रहणादयं प्रतिपद्यते ? किमवयवान्तराणि उत द्रव्यान्तरमिति। अवयवसमूहपक्षे तावद् वृक्षबुद्धेरभावः, परभागस्यावृक्षत्वात् अर्वाग्भागवत्—यथैवायमर्वाग्भागो न वृक्ष एवं मध्यपरभागावपि न वृक्षः। सेयमवयवसमूहपक्षे(ख) वृक्षबुद्धिरुत्पद्यमाना निर्विषया। अर्वाग्भागः परभागो मध्यभाग इत्येतच्च नास्ति। कथम् ? भाग इत्येतदवयवस्यैतन्नाम, यः पुनरर्थान्तरमवयविनं न प्रतिपद्यते तस्यावयव इति निरभिधेयं वाक्यम्, अवयवश्च परभागोऽर्वाग्भागः स चावयविप्रत्याख्याने न युक्त इति। अथैकदेशो भाग इत्युच्यते, कोऽयमेकदेशः ? एकदेशो ह्यवयविन आधारः, अवयविनं च प्रत्याचक्षाणेन एकदेशोऽपि प्रत्याख्यातः। अथाकार्यकारणभूतानां परस्परप्रत्यासत्त्युपग्रहेणैकदेशावस्थानमवयवार्थः, अहो शब्दार्थकौशलम्—अकार्यकारणभूताश्च

## न्यायवार्त्तिकतात्पर्यटीका

निराकरोति—न यथासंभवं विकल्पानुपपत्तेः। एकदेशो ह्यवयविन आधार इति, एकश्चासौ देशश्चेत्येकदेशः, देशश्चाऽऽधारो न चाऽऽधेयोऽस्त्यवयवीति कथमाधार इत्यर्थः। अहो शब्दार्थकौशलमिति, शब्देऽर्थे वा कौशलमित्यर्थः। अर्थे तावदकौशलमाह—अकार्येति। कार्यस्यैकस्य कारणानां तदेकं कार्यं कर्तुं परस्परप्रत्यासत्तिर्भवति, यथा मृद्दण्डचक्र-सूत्राणां घटे जनयितव्ये प्रत्यासत्तिः। कार्याणां चैकसामग्रीजन्मनां परस्परप्रत्यासत्तिः,

## वृत्तिः

प्रत्यक्षत्वेनाभिमतं वृक्षादिज्ञानम् अनुमानम् अनुमितिः, एकदेशस्य पुरो-

(१) 'द्रव्योत्पत्तिपक्षे' इति ग०।

(क) 'अवयवी चेति' भाष्यगतचकारो वार्त्तिके त्यक्तः।

(ख) अत्र परमादर्शपुस्तकयोः ( ऽपक्षे ) इत्याकारेण मुद्रितः पाठो दृश्यते।

## न्यायभाष्यम्

अर्थैकदेशग्रहणादेकदेशान्तरानुमाने समुदायप्रतिसन्धानात् तत्र वृक्षबुद्धिः ? न तर्हि

## न्यायवार्त्तिकम्

परस्परप्रत्यासत्त्युपग्रहेण च वर्तन्त इति। न च परस्परोपकारं कुर्वन्त्यवयवाश्चाभिधीयन्त इति चित्रम्।

अपरे त्वर्वाग्भागदर्शनेन परभागानुमानं कृत्वा प्रतिसन्धानप्रत्ययजामवृक्षे वृक्षबुद्धिमध्यवस्यन्ति। एतस्मिन् पक्षे वृक्षबुद्धेरभाव एव। कथम् ? अर्वाग्भागस्य परभागस्य चावृक्षत्वात्। न चावृक्षप्रतिसन्धानजा वृक्षबुद्धिरुत्पत्तुमर्हति। न चैतस्मिन् पक्षेऽनुमानं भवति। अर्वाग्भागमयं गृहीत्वा परभागमनुमिमीते इति नानुमानस्य विषयो ज्ञातः। कथं न ज्ञातः ? यदि तावदेवमनुमिमीते वृक्षोऽयमर्वाग्भागवत्त्वात्; कतमोऽसौ वृक्षः, यस्यार्वाग्भागवत्त्वं धर्मः, अनभ्युपगतार्थान्तरावयविनोऽर्वाग्भागमात्रं प्रत्यक्षम्। न च धर्मिण्यनुपलब्धेऽनुमानं प्रवर्त्तते। न चायं जात्वपि धर्मिणमुपलभते अविद्यमानत्वेनाभ्युपगमात्। न चानुमानम्, अनुमाने एवंविधस्य प्रतिसन्धानस्याभावात्—न ह्यनुमाने एवंविधं प्रतिसन्धानमस्ति, नायमनुमाता पूर्वमनुपलभ्याग्निं धूमविशेषणं प्रतिपद्य प्रतिसन्धत्ते अयं धूमोऽयं चाग्निरिति। न च प्रतिसन्धायानुमिमीते अग्निनाऽत्र भवितव्यमिति। किं कारणम् ? वैयर्थ्यात्—व्यर्थमनुमानमेतस्यामवस्थायामग्नेर्विशेषणभूतस्य प्रतीतत्वात्। तस्मान्नानुमाने प्रतिसन्धानमस्ति। प्रतिसन्धायापि च न समुदाये प्रतिसन्धानं न च वृक्षे—न ह्ययमेकदेशदर्शनात् समुदायं प्रतिपद्यते न वृक्षम्, किन्तु शेषं समुदायिनमेव। किं कारणम् ? समुदायिव्यतिरेकेण समुदायस्यानभ्युपगमात्—

## न्यायवार्त्तिकतात्पर्यटीका

यथा रूपरसगन्धस्पर्शानाम्; कार्यकारणयोर्वा, यथा अग्निधूमयोः; येषां तु न कार्यकारणभावो नैककार्यत्वं वा नैककारणत्वं वा तेषां कुतो नियमवती प्रत्यासत्तिरित्यर्थः। शब्दाकौशलमाह—न च परस्परेति। अवयविनं दधदवयवान्तरमवयवान्तरमपेक्षते, ततश्चावयवाः परस्परोपकारिणो भवन्ति। अवयव्यभावे तु न परस्परोपकारिणः, कथमवयवा इत्यर्थः।

न चावृक्षप्रतिसंधानजेति। स्वस्तिमतीं हि गां गृहीत्वा कालाक्ष्यां गवि गौरिति प्रतिसंधानं दृष्टं न त्वश्वं गृहीत्वाऽश्वान्तरे गौरिति प्रतिसंधानं दृष्टम्। तत्कस्य हेतोः ? तयोरगोत्वात्। एवमर्वाग्भागपरभागाणामवृक्षत्वाद् वृक्ष इति प्रतिसंधानं न भवेदित्यर्थः। यद्युच्येत मा भूद् वृक्षरूपधर्मिग्रहः पूर्वमर्वाग्भागं धर्मिणं वृक्षविशेषमनुमाय प्रतिसंधास्यतीत्यत आह—न चानुमानम्। कस्मादित्यत आह—अनुमान इति। नायमनुमाता पूर्वमनुपलभ्याग्निमनुमानेन च धूमविशेषणमग्निं प्रतिपद्य प्रतिसंधत्ते अयं धूमोऽयं चाग्निरिति। अथ पूर्वं प्रतिसंधानं पश्चादनुमानमित्यत आह—न च प्रतिसंधायेति, प्रतिसंधानसमय एवाग्नेरवगतत्वाद्भवितव्यमत्राग्निनेति व्यर्थमनुमानं स्यादित्यर्थः। अभ्युपेत्याऽऽह—प्रतिसंधायापि चेति।

## न्यायवार्त्तिकम्

न हि भवन्तः समुदायिव्यतिरिक्तं समुदायं प्रतिपद्यन्ते इति। न चासन् समुदायोऽनुमातुं शक्यः।

किं चार्वाग्भागमयं गृहीत्वा किमन्यदनुमिमीते? अयमर्वाग्भागः परभागवान् इति न युक्तमनुमातुम्, अर्वाग्भागस्य परभागवत्त्वासम्भवात्। न ह्यर्वाग्भागः परभागवान् भागस्य भागवत्त्वासम्भवात्, न हि भागस्यापरभागो विद्यत इति। अथ भागं भागवन्तं प्रतिपद्यसे, न स भागो भागवान्, भाग्येवासौ; भागिविषयं चानुमानमित्ययुक्तमुभयस्य प्रत्यक्षत्वात्—उभयं ह्यत्र प्रत्यक्षम्—अर्वाग्भागो भागी च। अत्रार्वाग्भागवत्त्वेन भागिनः परभागानुमानमस्मत्पक्षे युक्तम्, भवत्पक्षे तु भागमात्रदर्शनान्न युक्तमिति। यच्च तदर्वाग्भागदर्शनम् न तस्य लिङ्गलिङ्गिसम्बन्धस्मृत्यनुग्रहोऽस्ति, सम्बद्धयोश्चार्वाग्भागपरभागयोरदृष्टत्वात्—न ह्ययं द्रष्टा अर्वाग्भागपरभागयोः सम्बन्धं पश्यति, नार्वाग्भागपरभागौ सम्बद्धौ, न चानुभवमन्तरेण स्मृतिः, न च स्मृतिमन्तरेण लिङ्गदर्शनं केवलमनुमानम्(१)। कथं पुनरयमर्वाग्भागपरभागौ सम्बद्धौ न पश्यति? नित्यमर्वाग्भागेन परभागस्य(२) व्यवधानात्—नित्यमर्वाग्भागमेव केवलमुपलभते, परभागं तु न कथञ्चन, अर्वाग्भागव्यवहितत्वात्। सत्यं नोभयोरुपलब्धिरस्ति, उभौ च सम्बद्धौ। सत्यं सम्बद्धौ, अनुमानं त्वशक्यम् उभयोरदर्शनात्। अर्वाग्भागपरभागयोश्च धर्मधर्मिभावानुपपत्तेर्नानुमानम्—यत्र खल्वनुमानं भवति तत्र धर्मिणो धर्मप्रसिद्धौ धर्मान्तरविषयमनुमानम्, न पुनरर्वाग्भागस्य परभागो धर्मः, परभागस्य चार्वाग्भागः, ततश्च नानुमानम्।

## न्यायवार्त्तिकतात्पर्यटीका

किं चार्वाग्भागमयमिति। स भागवान् भागो न भवति किं तु भाग्येव। कस्मान्न पश्यतीत्यत आह—नार्वाग्भापरभागौ संबद्धौ। एकावयविसमवायेन हि परस्परसंबद्धौ स्याताम्, न चावयव्यस्ति, न चापि संयुक्तौ संयोगस्यावयविनिरासमार्गेण निरस्तत्वादित्यर्थः। पृच्छति—कथं पुनरिति। उत्तरम्—नित्यमर्वाग्भागेनेति। संबन्धस्तावन्नास्तीत्युक्तमेव, तमभ्युपगम्य उत्तरम्—सत्यं संबद्धौ, सत्यपि संबन्धे अशक्यग्रहोऽसावित्यर्थः। सत्यं संबद्धावित्ययमभ्युपगमवाद एव।

## वृत्तिः

भागस्य (३)ग्रहणाद् ग्रहणानन्तरम् उपलब्धेः, तथाचैकदेशग्रहणात्मकलिङ्गज्ञानजन्यत्वाद् वृक्षादिज्ञानमनुमितिरित्यर्थः ॥ ३० ॥

(१) 'अनुमानं स' इति ख-वार्त्तिके पाठः। (२) अतः परं ख-वार्त्तिके 'च'कारोऽधिकः।
(३) 'ग्रहणात्' इति आ-पु० नास्ति।

## न्यायवार्त्तिकम्

यच्चेदमुच्यते प्रतिसन्धानप्रत्ययजा वृक्षबुद्धिरिति, तदयुक्तम्; वृक्षस्यासिद्धत्वेनाभ्युपगमात् न प्रतिसन्धानम्—प्रतिसन्धानं हि नाम पूर्वप्रत्ययानुरञ्जितः प्रत्ययः पिण्डान्तरे भवति। यथा रूपं च मयोपलब्धं रसश्चेति। भवत्पक्षे पुनरर्वाग्भागं गृहीत्वा परभागमनुमायार्वाग्भागपरभागावित्येतावान् प्रतिसन्धानप्रत्ययो युक्तः, वृक्षबुद्धिस्तु कुतः? न तावदर्वाग्भागो वृक्षो न परभाग इति। अर्वाग्भागपरभागयोश्चावृक्षभूतयोर्या वृक्षबुद्धिः सा अतस्मिंस्तदिति प्रत्ययो नानुमानाद्भवितुमर्हतीति। प्रमाणस्य यथाभूतार्थपरिच्छेदकत्वात्। यश्चायमतस्मिंस्तदिति प्रत्ययः स प्रधानानुकारेण भवतीति वृक्षबुद्धिः प्रधानं वक्तव्यम्, न ह्यगृहीतसामान्यस्यानध्यारोपिततद्विपरीतधर्मस्य वा अतस्मिंस्तदिति प्रत्ययो भवति, प्रधानं च नास्ति वृक्षस्यानभ्युपगमात्। तस्मान्नानुमानप्रतिसन्धानाद् वृक्षबुद्धिः।

एतेनार्वाग्भागपरभागप्रत्यया अपि प्रत्युक्ताः। अनभ्युपगतान्त्यावयविनश्चार्वाग्भागः परभाग इत्येतदपि नास्ति। कस्मात्? महतो द्रव्यस्योपलब्धिलक्षणप्राप्तस्य परभागव्यवधायकस्यैतन्नाम अर्वाग्भाग इति, तथाभूतस्य च व्यवहितस्य परभाग इति। न च भवता किञ्चिद् द्रव्यमवयविभूतं प्रतिपद्यते यदर्वाग्भागपरभागशब्दवाच्यं स्यादिति। परमाणुषु तथासन्निविष्टेष्वर्वाग्भागपरभागवृक्षादिप्रत्यया इति चेत्—अथ मन्यसे नास्माभिरवयविद्रव्याणि कानिचित् प्रतिपद्यन्ते, किन्तु तेष्वेव परमाणुषु परस्परप्रत्यासत्त्युपसंग्रहेण संस्थानविशेषावस्थितेषु एते शब्दाः प्रवर्तन्ते अर्वाग्भाग (क)इति परभाग इति वृक्ष इति च। न, तथाशब्दस्यार्थानभिधानात्—

## न्यायवार्त्तिकतात्पर्यटीका

यच्चेदमुच्यते प्रतिसंधानप्रत्ययजेति। पूर्वं सत्यपि वृक्षे अवयवानामवृक्षत्वान्नावयवे प्रतिसंधानजा वृक्षबुद्धिरित्युक्तम्, संप्रति तु वृक्षस्यासत्त्वेन नावयवे वृक्ष इति प्रतिसंधानमित्यपौनरुक्त्यम्। रूपं च मयोपलब्धं रसश्चेति, य एवोपलब्धा रसप्रत्ययोपरञ्जितः स एव रूपप्रत्ययोपरञ्जित इत्यर्थः। प्रमाणस्य यथाभूतार्थपरिच्छेदकत्वादिति। यथा भ्रान्तमप्यनुमानमर्थसंबन्धेन प्रमाणमिति न भवति तथा प्रथमेऽध्याये दर्शितम्। प्रधानानुकारेण (ख) भ्रान्तिरिति विपरीतख्यातौ सत्याम्, सा चोपपादिता प्रथमाध्याये।

न, तथाशब्दस्यार्थानभिधानादिति। कः पुनरयं तथाशब्दार्थः। परमाणूनां रूपं वा

---

(क) अयम् 'इति'शब्द आदर्शपुस्तकयोः 'वृक्ष इति च' इत्यतः परं स्थितः, अर्थानुरोधाच्च एवं पाठः कल्पितः।

(ख) 'स प्रधानानुकारेण' इति वार्त्तिकगत-तत्पदस्यार्थो भ्रान्तिरिति।

## न्यायभाष्यम्

वृक्षबुद्धिरनुमानमेवं सति भवितुमर्हतीति। द्रव्यान्तरोत्पत्तिपक्षे नावयव्यनुमेयः, (१)अस्यैकदेशसम्बद्धस्याग्रहणात्(२) ग्रहणे चाविशेषादनुमेयत्वाभावः। तस्माद् वृक्षबुद्धिरनुमानं न भवति ॥ ३१ ॥

## न्यायवार्त्तिकम्

तथासन्निविष्टेषु तथाभिधानं प्रवर्तते पूर्वप्रसिद्धौ सत्याम्; न च परमाणुषु पूर्वापरादिशब्द-प्रवृत्तेर्बीजमस्ति (क)। यथाप्रसिद्धे गवि गवयस्तथारूप इति। एवं तावदवयवसमूहपक्षे वृक्षबुद्धेरभाव इत्युक्तम्।

'द्रव्यान्तरोत्पत्तिपक्षे तु नावयव्यनुमेयः' प्रत्यक्षत्वादर्वाग्भागवदिति। यथैवायमर्वाग्भाग-मिन्द्रियसम्बद्धं प्रत्यक्षत उपलभते तथा वृक्षमपीति नानुमेयो वृक्षः। अथेन्द्रियसम्बद्धमपि वृक्षमनुमेयमेव प्रतिपद्यते, वृक्षवदर्वाग्भागोऽप्यनुमेयः स्यात्, तथा च व्याहतं भवति अर्वाग्भाग-मयं गृहीत्वा वृक्षं प्रतिपद्यत इति। सर्वमेवानुमानमित्येतस्मिन् पक्षेऽनुमानाभावः प्रत्यक्षतो-ऽनवगतत्वाद्धर्मिणः, न धर्मिणि प्रत्यक्षतोऽनधिगतेऽनुमानं प्रवर्तते। यदप्यतीन्द्रियेष्वर्थेष्वनु-मानमुक्तम्, तन्नास्ति न ह्यतीन्द्रियार्थोऽनुमातुं शक्यः। कथमिति? धर्मिणोऽनधिगतत्वादि-त्युक्तम्। कः पुनः सामान्यतोदृष्टस्य प्रत्यक्षपूर्वकानुमानाद्विशेषः, यदि सर्वं प्रत्यक्षपूर्वकमेवानु-मानमिति। अयं विशेषः—प्रत्यक्षपूर्वकं त्रिकप्रसिद्धौ प्रवर्तते साध्यसाधनधर्म्युपलब्धौ—यत्रायं साध्यं साधनं च धर्मिणं च पूर्वं गृहीत्वा पुनर्धर्मधर्मिदर्शनेन धर्मान्तरमनुमिमीते तत् प्रत्यक्षपूर्वकम्,

## न्यायवार्त्तिकतात्पर्यटीका

नैरन्तर्यं वा संयोगभेदो वा उत्पादभेदो वा। यदि रूपमात्रम्, तद्द घटादिष्वपीति वृक्षबुद्धिः स्यात्। अथ रूपभेदः, क्षणान्तरेणावृक्षः स्यात्, न हि तत्पूर्वं रूपम्। अथ नैरन्तर्यम्, तद्द घटादिष्वप्यस्ति; न वा क्वचिदपि (ख) गन्धरसरूपस्पर्शपरमाणुव्यवधानात्। न संयोगो भवद्भि-रास्थीयत इति कुतस्तद्भेदः। उत्पादभेदोऽपि परमाणूनां रूपमेव, न हि परमाणुव्यतिरिक्तः कश्चि-दस्ति तेषामुत्पादः; रूपं च पूर्वं विकल्पितम्। यदि हि क्वचिदवयवसन्निवेशो वास्तवः पूर्वापरभागादिशब्दप्रवृत्तिहेतुरुपलब्धः स्यात् ततस्तथाशब्दार्थः प्रतीयेत; न तु भवतां क्वचिदेष वास्तवः, वस्तुसतां परमाणूनामभागत्वादित्यर्थः। सामान्यतो दृष्टे धर्मिविषयकमपि प्रत्यक्षं नास्तीति भ्रान्तः पृच्छति—सामान्यतोदृष्टस्येति। उत्तरम्—अयं विशेषः इति, द्विकस्य प्रत्यक्षेण प्रसिद्धौ सामान्यतोदृष्टं प्रवर्त्तते त्रिकस्य तु प्रत्यक्षेण प्रसिद्धौ प्रत्यक्षतोदृष्टमिति विशेषः।

---

(१) 'अस्यैकदेशसम्बन्धस्य' ग०। (२) अतः परं ख-पुस्तके 'एकदेशसम्बन्धस्य' इत्यधिकं दृश्यते।

(क) 'यथाप्रसिद्धे गवि गवयस्तथारूप इत्यंशो' 'बीजमस्ति' इत्यनन्तरमादर्शपुस्तकयोर्मुद्रितोऽपि अर्थानु-रोधादिह गृहीतः। क-चिह्नितादर्शे तु 'यथा' इत्यत्र 'तथा' इति मुद्रितम्। (ख) पूर्वपक्षिणो मते गन्धादि-परमाणूनां परस्परमत्यन्तवैलक्षण्याद् गन्धरूपरसादीनां नैकत्र समावेश इत्यभिप्रायः।

## न्यायभाष्यम्

एकदेशग्रहणमाश्रित्य प्रत्यक्षस्यानुमानत्वमुपपाद्यते। तच्च—

### ( सू० )—न, प्रत्यक्षेण यावत्तावदप्युपलम्भात् ॥ ३२ ॥

( भा० ) न प्रत्यक्षमनुमानम्, कस्मात्? प्रत्यक्षेणैवोपलम्भात्। यत् तदेकदेशग्रहणमाश्रीयते प्रत्यक्षेणासावुपलम्भः। न चोपलम्भो निर्विषयोऽस्ति। यावच्चार्थजातं तस्य विषयस्तावदभ्यनुज्ञायमानं प्रत्यक्षव्यवस्थापकं भवति।

किं पुनस्ततोऽन्यदर्थजातम्, अवयवी समुदायो वा? न चैकदेशग्रहणमनुमानं भावयितुं शक्यं हेत्वभावादिति।

## न्यायवार्त्तिकम्

यत् पुनः साधनधर्मं धर्मिणं चोपलभ्यात्यन्तपरोक्षं धर्मान्तरमनुमिमीते तत् सामान्यतोदृष्टमिति। भवत्पक्षे तु न सामान्यतोदृष्टादनुमानाद् वृक्षबुद्धिः न प्रत्यक्षपूर्वकात्, धर्मिणोऽनभ्युपगमात् प्रत्यक्षप्रतिषेधाच्चेति ॥ ३१ ॥

विरुद्धश्चायं हेतुरेकदेशग्रहणाद् वृक्षोपलब्धेरिति। कथमिति?

न प्रत्यक्षेण यावत् तावदप्युपलम्भात्। प्रत्यक्षमनुमानमित्येवं ब्रुवता प्रत्यक्षमपह्नूयते

## न्यायवार्त्तिकतात्पर्यटीका

सर्वस्याप्रत्यक्षत्वाद् वृक्षबुद्धिर्न (क) प्रत्यक्षतोदृष्टादनुमानात् नापि सामान्यतोदृष्टादित्याह—भवत्पक्षे त्विति ॥ ३१ ॥

न, प्र—त् ( सू० ३२ ) ॥ न प्रत्यक्षस्यानुमानता। कुतः? यावदेकदेशभूतस्यार्थजातस्य ग्रहणम् 'एकदेशग्रहणादुपलब्धे'रित्यत्र हेताविष्यते तावदपि प्रत्यक्षेण, अन्यथैकदेशग्रहणाभावेनानुमानानुदयात्, अनुमानान्तरेण वा तद्ग्रहणे अनवस्थापातात्; अतस्तावतोऽर्थजातस्य प्रत्यक्षेणोपलम्भात् तावत्प्रत्यक्षमनुमानमिति प्रतिज्ञा हेतुना (ख)एकदेशग्रहणादुपलब्धेरित्यनेन बाधिता, एकदेशग्रहणस्य प्रत्यक्षेणानभ्युपगमे वा प्रमाणान्तरस्य तत्रानुपपत्तेरसिद्धो हेतुः, सेयमुभयतस्पाशा रज्जुरित्यर्थः। अनुमानेनैकदेशग्रहणान्नासिद्धो हेतुरित्यत आह भाष्यकारः—न चैकदेशग्रहणमिति। अनुमितिः अनुमानम्, भावयितुं कर्तुम्। अनवस्थाप्रसङ्गेन हेत्वभावादिति।

तदेतत्सूत्रं वार्त्तिककारो व्याचष्टे—विरुद्धश्चायमिति। नन्वेकदेशप्रत्यक्षत्वेऽपि तन्मात्र

## वृत्तिः

वृक्षादिप्रत्यक्षनिषेधेऽपि न प्रत्यक्षमात्रनिषेधस्तदेकदेशप्रत्यक्षस्याभ्युपगमादिति समाधत्ते—( न प्रत्यक्षेणेति )।

---

(क) अत्राऽऽदर्शपुस्तकयोः 'प्रत्यक्षतोदृष्टादनुमानादपि सामान्यतोदृष्टा'दिति पाठो ग्रन्थलिपिशैलीरचार्थं 'न'कारयोगेण परिवर्त्तितः। (ख) 'एकदेशग्रहणानुपलब्धे'रिति आदर्शपुस्तकयोः पाठः प्रामादिकः।

## न्यायभाष्यम्

अन्यथाऽपि च प्रत्यक्षस्य नानुमानत्वप्रसङ्गस्तत्पूर्वकत्वात्—प्रत्यक्षपूर्वकमनुमानम्, सम्बद्धावग्निधूमौ प्रत्यक्षतो दृष्टवतो धूमप्रत्यक्षदर्शनादग्नावनुमानं भवति। यच्च सम्बद्धयोर्लिङ्गलिङ्गिनोः प्रत्यक्षम्, यच्च लिङ्गमात्रप्रत्यक्षग्रहणम्, नैतदन्तरेणानुमानस्य प्रवृत्तिरस्ति; न त्वेतदनुमानमिन्द्रियार्थसन्निकर्षजत्वात्। न चानुमेयस्येन्द्रियेण सन्निकर्षादनुमानं भवति। सोऽयं प्रत्यक्षानुमानयोर्लक्षणभेदो महानाश्रयितव्य इति।

## न्यायवार्त्तिकम्

प्रत्यक्षापह्नवाच्च यदेकदेशग्रहणं प्रत्यक्षं तद्व्याहतं भवति। कथमिति?। यत्तदेकदेशग्रहणं भवता आश्रीयते प्रत्यक्षं तत्, तावताऽपि च प्रत्यक्षस्य लक्षणं सिध्यति। न चैवं प्रतिज्ञायते सर्वं प्रत्यक्षस्य विषयः किन्तु यावदिन्द्रियार्थसन्निकर्षादुपलभ्यते तावत् प्रत्यक्षस्य विषय इति।

'अन्यथाऽपि' न प्रत्यक्षमनुमानमप्रकारवत्त्वात्—प्रकारवदनुमानम्, अप्रकारवत् प्रत्यक्ष-मुक्तमनुमानसूत्रं वर्णयद्भिरिति। त्रिकालविषयत्वाच्चानुमानं न प्रत्यक्षम्—त्रिकालविषयमनुमानम्, न त्वेवं प्रत्यक्षमिति। लिङ्गलिङ्गिसम्बन्धस्मृत्यनुग्रहापेक्षत्वाच्च नानुमानं प्रत्यक्षम्—लिङ्गपरामर्श-ज्ञानस्य लिङ्गलिङ्गिसम्बन्धस्मृत्यनुग्रहोऽस्ति, न चैवं प्रत्यक्षस्य, तस्मान्न प्रत्यक्षमनुमानम्। इतश्च प्रत्यक्षस्य नानुमानत्वप्रसङ्गः तत्पूर्वकत्वात्—प्रत्यक्षपूर्वकमनुमानम्, न तु प्रत्यक्षम्, अयं चानयोर्विशेष इति। इन्द्रियसम्बन्धाच्च—नेन्द्रियस्यानुमेयेनार्थेन सम्बन्धादुत्पद्यते ज्ञानं यत् तदनुमानमित्युच्यते। सोऽयं प्रमाणद्वयः प्रत्यक्षानुमानयोरेकत्वमासञ्जयता भेदः प्रत्याख्यायत इति।

## न्यायवार्त्तिकतात्पर्यटीका

प्रत्यक्षं न तु सर्वं प्रत्यक्षं स्यादित्यत आह—न चैवं प्रतिज्ञायते सर्वमिति। अप्रकारवदिति। अनुमानस्य हि त्रयः प्रकारा यादृशा न तादृशाः प्रत्यक्षस्येति। त्रिकालविषयत्वाच्चेति, अनेन परोक्षार्थत्वं सूचयत्यनुमानस्य, प्रत्यक्षं त्वपरोक्षार्थविषयम्, तस्मादपि भेद इत्यर्थः। लिङ्गपरामर्शज्ञानस्य प्रत्यक्षफलस्यापि प्रमाणस्य सतो लिङ्गलिङ्गिसंबन्धस्मृत्यनुग्रहोऽस्त्युत्पत्तौ न त्वेवं प्रत्यक्षस्य प्रमाणस्य (क) अत उत्पत्तौ वा कार्ये वा लिङ्गलिङ्गिसम्बन्धस्मृत्यपेक्षेत्यर्थः।

अन्यथाऽपि चेत्यादि भाष्यं व्याचष्टे—इतश्चेति। न त्वेतदनुमानमित्यादिभाष्यार्थमाह—इन्द्रियेति। इन्द्रियसम्बन्धाच्चार्थस्य प्रत्यक्षमुत्पद्यते न त्वनुमानमेवमित्यर्थः।

## वृत्तिः

प्रत्यक्षमनुमानमिति न, प्रत्यक्षत्वावच्छेदेनानुमितित्वं नेत्यर्थः। 'यावत्तावदप्युप-लम्भात्' यावत्तावतोऽपि यस्य कस्यचिद् भागस्य 'प्रत्यक्षेण' इन्द्रियेण 'उपलम्भात्' उप-लम्भस्य त्वयाऽप्यभ्युपगमात्। वृक्षादिप्रत्यक्षनिषेधो न प्रत्यक्षमात्रनिषेधस्तदेकदेश-

(क) 'अत' इत्यत्र 'अस्तो'ति पाठः समीचीनतया प्रतिभाति।

## न्यायभाष्यम्

(क) न चैकदेशोपलब्धिरवयविसद्भावात्। न चैकदेशोपलब्धिमात्रम्। किं तर्हि? एकदेशोपलब्धिः तत्सहचरितावयव्युपलब्धिश्च। कस्मात्? अवयविसद्भावात्। अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी तस्यावयवस्थानस्योपलब्धिकारणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्नेति।

अकृत्स्नग्रहणादिति चेत्, न कारणतोऽन्यस्यैकदेशस्याभावात्—न चावयवाः

## न्यायवार्त्तिकम्

न चैकदेशोपलब्धिरवयविसद्भावात्। यदिदं भवताऽभिधीयते एकदेशग्रहणादयं वृक्षः प्रतिपद्यत इति, तदनुपपन्नम्; यस्मादेकदेशोपलब्धिश्च तत्सहचरितावयव्युपलब्धिश्च। न हीन्द्रियेण सन्निकृष्यमाण एकदेशे तत्सहचरितोऽवयवी न सन्निकृष्टः, तेन यथैकदेशः सन्निकर्षादुपलभ्यते एवमवयव्यपि सन्निकर्षादुपलभ्यत इति। कस्मात्? अवयविसद्भावात्—अस्ति ह्ययमेकदेशव्यतिरिक्तोऽवयवी, तस्यावयवस्थानस्योपलब्धिलक्षणप्राप्तस्यैकदेशोपलब्धावनुपलब्धिरनुपपन्ना। किं कारणम्? महदनेकद्रव्य-रूपाण्युपलब्धिकारणानि, तान्येकदेशवदेकदेशिन्यपि विद्यन्ते, तस्मादेकदेश उपलभ्यते नैकदेशीत्ययुक्तम्।

## न्यायवार्त्तिकतात्पर्यटीका

अपि चावयविनोऽसत्त्वं मन्यमानेन त्वयैकदेशमात्रोपलब्ध्या वृक्षबुद्धेरनुमानत्वमुक्तम्, न त्वियमेकदेशमात्रोपलब्धिरपि तु तस्य तत्सहचरितस्य चावयविन उपलब्धिलक्षणप्राप्तस्य (ख) सिद्धेरित्याह—न चैकदेशोपलब्धिरिति। तदेतद्भाष्यमनुभाष्य वार्त्तिककारो व्याचष्टे—न चेति।

अत्र देश्यभाष्यम्—अकृत्स्नग्रहणादिति चेत्। उत्तरभाष्यम्—न कारणत इति। देश्यविवरणम्—न चावयवा इति। एकदेशग्रहणनिवृत्त्यर्थं हि त्वयाऽवयविग्रहणमास्थीयते, न चैतावता कृत्स्नग्रहणसंभवो यत एकदेशग्रहणनिवृत्तिः स्यात्। न ह्यवयविग्रहणे कृत्स्ना अप्यवयवा गृहीता भवन्ति, नाप्यवयवी, तस्यार्वाग्भागस्य ग्रहणेऽपि मध्यमपरभागस्थस्याग्रहणादिति देश्यभाष्यार्थः।

## वृत्तिः

प्रत्यक्षस्य धादिनाऽभ्युपगमादित्यर्थः। इदमुपलक्षणम्, शब्दगन्धादिप्रत्यक्षस्यावारणान्न प्रत्यक्षमात्रनिषेध इत्यपि बोध्यम् ॥ ३१ ॥

---

(क) न चैकदेशोपलब्धिरवयविसद्भावादिति सूत्रं न्यायसूचीनिबन्धे न पठितम्। तात्पर्यटीकायामपि भाष्यत्वेनैवेदं परिगृहीतम्। न्यायतत्त्वालोके तु 'अवयविसद्भावादिति सूत्रेण'तुग्रन्थ्या न चैकदेशोपलब्धि'रितंग्रशस्य सूत्रान्तर्गतत्वं प्रतीयते। वृत्तिकृन्मते तु सूत्रमेतदिति तत्र सूत्रसंख्यावृद्धिः। अस्माभिस्तु तात्पर्यटीकाकारमतमत्र परिगृहीतम्। विस्तरस्तु वङ्गीयसाहित्यपरिषदा प्रकाशितस्य न्यायदर्शनस्य द्वितीयखण्डे १५० अङ्कितपत्रे द्रष्टव्यः। (ख) अत्र 'सिद्धि'रिति प्रथमान्तपाठो युक्तः।

## न्यायभाष्यम्

कृत्स्ना गृह्यन्ते अवयवैरेवावयवान्तरव्यवधानात्, नावयवी कृत्स्नो गृह्यत इति, नायं गृह्यमाणेष्ववयवेषु परिसमाप्त इति, सेयमेकदेशोपलब्धिरनिवृत्तैवेति।

कृत्स्नमिति वै खल्वशेषतायां सत्यां भवति, अकृत्स्नमिति शेषे सति, तच्चैतदवयवेषु बहुष्वस्ति अव्यवधाने ग्रहणाद् व्यवधाने चाग्रहणादिति। अङ्ग तु

## न्यायवार्त्तिकम्

नावयविन उपलब्धिर्युक्ता, कस्मात्? विकल्पानुपपत्तेः—अयं खल्ववयवेषु वर्तमान एकस्मिन् कार्त्स्न्येन वा वर्तते एकदेशेन वा? यद्येकस्मिन् कार्त्स्न्येन वर्तते, शेषावयववैयर्थ्यम्; नहि शेषैरवयवैः किञ्चनावयविनः क्रियते। एकद्रव्यश्चासाववयवी भवन् नोपलभ्येत। किं कारणम्? महदनेकद्रव्यवत्त्वस्योपलब्धिकारणत्वात्। न चास्य विनाशः प्राप्नोति कारणद्रव्यविभागासम्भवात्—न ह्येकस्य विभागः सम्भवति। न चैकेनारभ्यमाणस्य महत्त्वं युक्तं कारणबहुत्व-महत्त्व-प्रचयासम्भवात्। तस्मान्नैकस्मिन् कार्त्स्न्येन वर्तत इति। नाप्येकदेशेन, न ह्यस्य कारणव्यतिरेकेण अन्ये एकदेशाः सम्भवन्ति। सोऽयमेकदेशोपलब्धाववयव्युपलभ्यमानो न (१)कृत्स्न उपलभ्यते, 'सेयमेकदेशोपलब्धिरनिवृत्तैवेति'। अथोपलभ्यमानोऽवयवी कथमुपलभ्येत? यदि गृह्यमाणेष्ववयवेषु, कृत्स्नः परिसमाप्तः स्यात्। न चायं गृह्यमाणेषु परिसमाप्तः शेषावयववैयर्थ्यप्रसङ्गादित्युक्तम्। अशेषावयवोपलब्धिरपि नास्ति मध्यभागपरभागयोरर्वाग्भागेन व्यवधानात्। तेनावयविनो न ग्रहणविकल्पः सम्भवति नापि वृत्तिविकल्पः।

## न्यायवार्त्तिकतात्पर्यटीका

तदेतद्भाष्यं वार्त्तिककारो व्याचष्टे—नावयविन उपलब्धिरिति। यत् खलु बहुषु वर्त्तते तत् प्रत्येकं समष्ट्या वा यथा कलविङ्ककण्ठगुणः, एकदेशेन वा यथा स्रक्सूत्रं कुसुमेषु। न च कृत्स्नैकदेशाभ्यां प्रकारान्तरमस्ति, अनयोरन्यतरनिषेधस्यान्यतरविधिनान्तरीयकत्वाद् नित्यत्वानित्यत्ववदिति। न चैकत्र कृत्स्नसमाप्तावन्यत्र तस्यैव संभव इति तथा सति कृत्स्नसमाप्तेरभावात्(क)। तस्माद् योऽवयवान्तरे दृश्यते नासाववयवी तथा चावयवा एवेति प्राप्तमित्यपि द्रष्टव्यम्। न ह्यस्य कारणव्यतिरेकेणेति। यदि ह्येकदेशान्तराण्यस्य स्युः ततस्तेष्वपि वृत्तावेकदेशान्तरकल्पनायामनवस्थाप्रसङ्ग इत्यर्थः। पूर्वपक्षवाद्येव प्रश्नपूर्वकं क्रियाप्रतिपत्तिमाह—अथोपलभ्यमान इति।

उत्तरभाष्यविवरणपरं भाष्यम्—कृत्स्नमिति वै खल्वित्यादि। तदेकग्रन्थतया अङ्ग तु भवानित्यादिसंबोधनोपक्रमं भाष्यं व्यवस्थितम्।

(१) 'कृत्स्ने' इति क-वार्त्तिकपाठः।

(क) अत्र पञ्चम्यर्थान्वयानुपपत्त्या अभाव इति प्रथमान्तपाठो युक्तः।

## न्यायभाष्यम्

भवान् पृष्टो व्याचष्टां गृह्यमाणस्यावयविनः किमगृहीतं (१)मन्यते ? येनैकदेशोपलब्धिः स्यादिति। न ह्यस्य कारणेभ्योऽन्ये एकदेशा भवन्तीति (क)तत्रावयववृत्तं

## न्यायवार्त्तिकम्

एकस्मिन् कृत्स्नैकदेशशब्दासम्भवादप्रश्नः—किमवयव्येकदेशेन वर्तते अथ कृत्स्नेनैव वर्तत इति न युक्तः प्रश्नः—नावयवी कृत्स्नो नैकदेशः। कृत्स्नमिति खल्वनेकस्याशेषस्याभिधानम्। एकदेश इति चानेकत्वे सति कस्यचिदभिधानम्। ताविमौ कृत्स्नैकदेशशब्दावेकस्मिन्ननुपपन्नौ। कथं तर्ह्यवयवेष्ववयवी वर्तत इति ? आश्रयाश्रयिभावेन—आश्रितोऽवयवी आश्रया अवयवा इति। का पुनरियं वाचोयुक्तिः नैकदेशेन (ख)वर्तते न च कार्त्स्न्येन वर्तते अथ च वर्तत इति ? यद्

## न्यायवार्त्तिकतात्पर्यटीका

तदेतद्वार्त्तिककारो व्याचष्टे—एकस्मिन्निति। अयमभिसन्धिः। यत्तावत् कुसुमेष्वेकदेशेन वर्त्तमानं दृष्टमिति तदनुपपन्नम्। यदि कुसुमेषु सूत्रावयवा वर्तन्ते किमायातमवयविनः सूत्रस्य, न ह्यन्यस्मिन् वर्तमाने अन्यद् वर्तत इत्युक्तम्। न चावयविनोऽभावे भवत्येतदपि सूत्रमवयव्यवयवैर्वर्तत इति। अथ मा भूत् सूत्रं नामावयवि एकदेशास्तु कुसुमे वर्तन्त इति ब्रूमः। तथा च सति नैकमनेकत्रैकदेशेन वर्तते किं त्वनेकमनेकत्रेति। तथा च कुसुमपरमाणावेकस्मिन् सूत्रपरमाणुरेको वर्तत इत्युक्तं भवति। न च वृत्तिरपि परमाणुभ्यामतिरिच्यते यतो भवति वर्तत इति। तस्मान्निरन्तरोत्पाद एव परमाण्वोर्वृत्तिरिति व्यवहर्तव्यो न पुनः परमाणुस्वरूपातिरिक्ता काचिद् वृत्तिरस्ति वस्तुसती। एतेन कलविङ्ककण्ठगुणवत्प्रत्येकं कृत्स्नपरिसमाप्तिर्वृत्तिरित्यपि व्याख्यातम्। तथा च वृत्तेरभावादेकदेशेन वा कार्त्स्न्येन वा वर्त्तत इति रिक्तं वचः। यथालोकप्रत्ययं तु वृत्तेरभ्युपगमे सूत्रं कुसुमेषु नैकदेशेन वर्त्तते किन्तु तदेकदेशाः सूत्रं च कुसुमेषु वर्तत इति लौकिकोऽनुभवः। तत्र सूत्रस्य वृत्तिः कुसुमेषु नैकदेशेन वा नापि कार्त्स्न्येन किं तु स्वरूपतः, एवमवयवेष्ववयविनः स्वरूपत एव। इयांस्तु विशेषो यत्सूत्रस्य कुसुमेषु वृत्तिं प्रति सन्ति भागा अपीति सूत्ररूपं च भागाश्च कुसुमेषु वर्तन्त इति, अवयविनस्तु स्वावयवेषु वृत्तिं प्रति नावयवान्तराणि सन्तीति रूपमात्रेण तत्र वर्त्ततेऽवयवीति। तस्मान्न किंचित् क्वचित् कार्त्स्न्येन एकदेशेन वा वर्त्तमानं दृष्टमिति तयोर्वृत्तिं प्रति व्यापकत्वमसिद्धम्, रूपस्यैव (२)व्यापकत्वमिति, तच्चावयविन्यप्यस्तीति व्यापकानुपलब्धेरसिद्धेर्नावयविनोऽवयवेषु वृत्तिनिवृत्तिरिति सिद्धम्। यथा च कृत्स्नैकदेशशब्दौ नावयविरूपे वर्त्तेते तथोक्तं वार्त्तिककृतेति। नैकदेशेन वर्तते न च

---

(१) 'मन्यसे' इति ख-ग भा०। (२) 'न गमकत्वम्' इति क-तात्पर्यपाठः।

(क) अवयवावृत्तमित्यत्र आधेयतापरपर्यायवृत्तिशब्दसमानार्थो वृत्तशब्द इति 'नापि वृत्तिविकल्प' इति वार्त्तिकदर्शनेनावगम्यते। वृत्तशब्दः स्वभावे प्रसिद्ध इत्यवयववृत्तमवयवस्वभाव इत्यपि केचिद् व्याचक्षते। 'तत्रावयविवृत्तम्' इति फ-पु-पाठः।

(ख) आदर्शपुस्तकयोः 'वर्त्तते इति च न कार्त्स्न्येन' इत्येवं मुद्रणं प्रामादिकम्।

## न्यायभाष्यम्

नोपपद्यत इति। इदं तस्य वृत्तम्—येषामिन्द्रियसन्निकर्षाद्ग्रहणमवयवानां तैः सह गृह्यते, येषामवयवानां व्यवधानादग्रहणं तैः सह न गृह्यते। न चैतत्कृतोऽस्ति भेद इति।

## न्यायवार्त्तिकम्

यथाभूतं तत्तथा निर्दिश्यते इत्येषैव वाचोयुक्तिः। कृत्स्नैकदेशशब्दौ नावयविनि स्तः, तस्यैकत्वादित्युक्तम्। तस्मादाश्रयाश्रितधर्मिनिर्देशमात्रमवयव्यवयवेषु वर्तत इति। का पुनरियं वृत्तिः? एकस्यानेकत्राऽऽश्रयाश्रितभावलक्षणा प्राप्तिः।

अपि चैकोऽनेकत्र वर्तत इति प्रतिजानानो नानुयोक्तव्यः। कस्मात्? उभयेन व्याघातात्—एकमनेकत्र वर्तत इति ब्रुवाणः किमेकदेशेन वर्तते उत सर्वात्मना इति नानुयोक्तव्यः। कस्मात्? उभयेन व्याघातात्, यदि एकमनेकत्र वर्तमानं प्रत्यवयवं सर्वात्मना वर्तते, नैकमनेकत्र वर्त्तते, अनेकमनेकत्र वर्तत इत्यापन्नम्। एवं चानुयोगेऽधिकरणव्याघातः। अथैकमनेकत्र वर्तमानं प्रत्यवयवमेकदेशेन वर्तते, तथाऽपि नैकमनेकत्र वर्तत इति प्राप्तम्, अनेकमनेकत्र वर्तत इत्यापन्नम्। ये च तत्र एकदेशाः प्रत्येकमवयवेषु वर्तन्ते तेऽवयविन इति प्राप्तम्। एतस्मिन् पक्षे नैकमनेकत्र वर्तते। किं तर्हि? अनेकमनेकत्रेति। अथ प्रत्येकं परिसमाप्त्या वर्तत इति अयमर्थः, अनेकमनेकत्र वर्तत इति, तथाऽप्यनुयोगाधिकरणं निवर्तत इति—य एव खल्वयमर्थोऽनेकमनेकत्र वर्तते स एवार्थः

## न्यायवार्त्तिकतात्पर्यटीका

कात्स्न्येंन वर्तते अथ च वर्त्तत इति। एषा(क)वाचोयुक्तिः यद्य यथाभूतं वस्तु तत्तथा निर्दिश्यत इहेति योजना।

उभयेन व्याघातादिति। एकस्यानेकवृत्तेः एकदेशेन कात्स्न्येंन च व्याघात इत्यर्थः। स एव हि धर्मो विकल्प्यते यो विकल्प्यमानो धर्मिणं न बाधते; यथा शब्दो नित्योऽनित्यो वेति। यो ह्यधिकरणं धर्मिणमेव बाधते नासौ धर्मविकल्पो न्याय्यः, आश्रयासिद्ध्या तस्यानुपपत्तेरिति।

यस्तु मन्यते यत् सत् तत्सर्वमनवयवम्, यथा विज्ञानम्, सच्चेदं नीलाद्यनुभवावसितमिति स्वभावहेतुः, सत्तामात्रव्यापित्वाद् (ख)अनवयवत्वस्य। (१)तथा हि एकस्य सत्त्वं विरुद्धधर्मासंसर्गेण व्याप्तम्, तद्विरुद्धश्च विरुद्धधर्मसंसर्गो नीलादीनां सावयवत्वे प्रसजन् स्वविरुद्धं विरुद्धधर्मासंसर्गं निवर्त्तयंस्तद्व्याप्तं सत्त्वमपि निवर्तयति। तथा हि पाण्यादिकम्पे तत्स्थानोऽवयव्यपि कम्पत इति तस्य जङ्घादिष्वप्यवयवेष्वविशेषावस्थानस्याप्यवयविनः कम्प उपलभ्येत

(१) 'यथा' इति क-तात्पर्यपाठः।

(क) वार्त्तिकस्थ 'एव' शब्दोऽत्र परित्यक्तः।

(ख) आदर्शपुस्तकयोः 'अनवयविलस्य' इति पाठो मुद्राप्रमादकृतः।

## न्यायवार्त्तिकम्

प्रत्येकं परिसमाप्त्या वर्तत इति सर्वथाऽनुयोगाधिकरणं निवर्तते इति, अनुयोगस्याधिकरण-बाधकत्वात्—अयं खलु अनुयोगः क्रियमाणोऽधिकरणं बाधते। अतो धर्मविकल्पभावेन न वर्तते। नायं विकल्पः क्वचिदाश्रयवान् इत्यतो नानुयोक्तव्य इति। एवं सर्वेष्वनेकद्रव्यवृत्तिषु संख्या-पृथक्त्व-संयोग-विभाग-सामान्यादिष्वनुयोगाधिकरणव्यावृत्तिदोषो वक्तव्यः।

ग्रहणाग्रहणभेदाद्भेदोऽवयववदिति चेत् ?—यथा गृह्यमाणानामगृह्यमाणानां चावयवानां भेदः तथाऽवयविनोपि गृह्यमाणागृह्यमाणावयवाश्रितस्य भेदः प्राप्तः ततश्च नैकोऽवयवी ; न भेदः एकस्मिन्नपि दर्शनात्—एकस्मिन्नपि गृह्यमाणे ग्रहणमग्रहणं च दृष्टं देवदत्तादिवदिति। यथा

## न्यायवार्त्तिकतात्पर्यटीका

न चोपलभ्यते ; तस्मात् स एव तदानीं कम्पते न कम्पत इति विरुद्धधर्मसंसर्गः। अथावयवेषु कम्पमानेष्वपि नावयवी तत्समवेतः कम्पते, ततश्चलाचलयोर्वस्त्रोदकवद् युत-सिद्धिप्रसङ्गः। एकस्यावयवस्याऽऽवरणे तत्तदवस्थानोऽवयव्यावृत इति अवयवान्तरस्थानस्याप्या-वरणप्रसङ्गः अभेदात् ; न वाऽस्य क्वचिदप्यावरणमित्यविकलो दृश्येत। अवयवस्याऽऽवरणं नावयविनस्तस्यान्यत्वात्। न, ह्यन्यस्याऽऽवरणे अन्यदावृतं भवत्यतिप्रसङ्गादिति चेत्—न, अर्धावरणेऽप्यनावृतत्वादवयविनः प्राग्वदविकलग्रहणप्रसङ्गः। अवयवदर्शनद्वारेणावयवि-दर्शनाददृष्टावयवस्यावयविनोऽप्रतिपत्तिरिति चेत्—न, विकल्पासहत्वात्। किं सर्वावयवदर्शन-द्वारेणावयविनः प्रतिपत्तिरुत कतिपयावयवदर्शनद्वारेण ? पूर्वस्मिन् कल्पे नावयवी कदाचिदपि दृश्येत। न ह्यसर्ववित्सर्वावयवोपलम्भक्षमः अर्वाग्भागेन मध्यपरभागयोर्व्यवधानात्। कति-पयावयवदर्शने तु तदभिव्यक्तावल्पावयवदर्शनेऽपि बह्ववयवदर्शनवत् स्थूलोपलम्भप्रसङ्गः। रक्ते चैकस्मिन्नवयवे तत्स्थानोऽवयव्यपि रक्त इति अवयवान्तरेऽपि तस्याभेदाद्रागोपलम्भप्रसङ्गः। अवयवमात्ररागे वा तत्स्थानस्यावयविनो रूपमरक्तं दृश्येत सोऽयं विरुद्धधर्मसंसर्ग इति। तदनेनाभिप्रायेण वार्तिककारो ग्रहणाग्रहणलक्षणेन विरुद्धधर्मसंसर्गेण सर्वानेव विरुद्धधर्मसंसर्गानुप-लक्षयति—ग्रहणाग्रहणेति। निराकरोति—न भेद इति। इदं तावदत्र वक्तव्यम्—यद्यनु-भूतावसितं नीलमनवयवत्वेन साध्यते (क) ततः सिद्धसाधनम्। नो खलु रूपविशेषो नीलादि-

## वृत्तिः

यदपि वृक्षादिज्ञानस्यानुमितित्वमिति, तदपि दूषयति—न चैकदेशोपलब्धिरवयवि-सद्भावात् (ख)।

न च न वेत्यर्थः। न वैकदेशस्यैवोपलब्धिरित्यपि युक्तम्, अवयविसद्भावात्।

---

(क) अनुमितिविधेयधर्मविशिष्टः पक्ष एवात्र साध्यमित्याशयः। नवीनमते नीलेऽनवयवत्वं साध्यते इत्यर्थः।

(ख) वृत्तिकृन्मते इदं सूत्रमिति ३२श संख्यकत्वेनास्य गणना कृता, ततश्चेतः प्रभृति भाष्यवृत्त्योः सूत्रसंख्या-संवादो बोध्यः।

## न्यायवार्त्तिकम्

देवदत्तादिः केनचित् सह गृह्यते केनचिच्च सह न गृह्यते न तावता तस्य भेदः, तथाऽवयविनोऽपीत्यदोषः। गृहीतत्वाच्च—यदिदं भवताऽभिधीयते एकदेशग्रहणादेतस्य ग्रहणमेकदेशाग्रहणाच्चाग्रहणमिति, अयमनास्पदो विकल्पः, अवयविनो गृहीतत्वात्। एकदेशसहचरितोऽवयवी गृहीतः, किमस्यागृहीतं येनास्य ग्रहणाग्रहणविकल्प आस्पदवान् भवेत्। मध्यभागपरभागौ न गृहीताविति चेत्, न; तयोरवयविनोऽन्यत्वात्—अन्योऽवयवी अन्यौ मध्यभागपरभागाविति अवयविनोऽन्यत्वादवयविनो मध्यभागपरभागौ न गृह्येते इति। किं कारणम्? ग्रहणहेत्वभावात्—

## न्यायवार्त्तिकतात्पर्यटीका

रस्माकमपि सावयवो गुणत्वात्। (क) तदाश्रयो घट इति चेत्? ननु घट इत्यपि च रूपरसगन्धस्पर्शा एवार्थक्रियाकारिणस्तथा व्यपदिश्यन्ते ते च गुणत्वेन निरवयवा एव न तु तदाश्रयोऽस्ति इत्थं नाम। अथ परसिद्धं द्रव्यं रूपाद्याश्रयं पक्षीकृत्य परसिद्धेनैव तस्य सत्त्वेनानवयवत्वं साधयति (ख)सोऽयमसिद्धं सिद्धेन साधयन् महानैयायिकत्वमात्मनो दर्शयति। न हि स्वयमप्रतीतौ (ग)साध्यधर्मिणौ परप्रत्यायनाय कल्पेते। यथाहुः—

योऽपि तावत्परासिद्धः स्वयं सिद्धोऽभिधीयते।
भवेत्तत्र प्रतीकारः स्वतोऽसिद्धे तु का क्रिया॥ इति।

न च प्रसङ्गसाधनेऽप्येतद्भवितुमर्हति। न च सावयवत्वेन (घ) विरोधाभावात्। न चैकस्य विरुद्धधर्मौ बाधकं प्रमाणम्। न तावदेकस्यावयविनो ग्रहणाग्रहणे, अवयवावरणेऽपि तस्य कतिपयावयवावस्थानस्य ग्रहणादेव। न च बह्ववयवस्थानस्य ग्रहण इव कतिपयावयवस्थानस्य ग्रहणे तादृशस्थौल्यानवभासादनवभासोऽवयविन इति सांप्रतम्; परिमाणभेदो हि स्थौल्यमवयविधर्मः, न च तस्य तादृशस्यानवभासेऽवयवी नावभासितो भवति, तस्य ततोऽन्यत्वात्। तस्मादिन्द्रियसन्निकर्षमात्रादवयविनो ग्रहणम्। इन्द्रियेणार्थस्य इन्द्रियावयवैरर्थस्य इन्द्रियेणार्थावयवानाम् इन्द्रियावयवैरर्थावयवानां सन्निकर्षात् परिमाणभेदग्रहणमिति सामग्रीभेदादवयवितत्परिमाणभेदयोर्ग्रहणाग्रहणे उपपद्येते। एतेनार्वाग्भागसहितस्य ग्रहणेऽपि न मध्यभागपरभागसहितस्याग्रहणं कथंचिद्विरोधमावहतीत्युक्तं भवति। न वाऽवयवकम्पेऽप्यवयविनः कम्पो येनावयवान्तरेऽपि कम्पप्रसङ्गः, भिन्नत्वादवयवावयविनोः। तथा सति युतसिद्धिप्रसङ्ग इति चेत्; का पुनरियं युतसिद्धिः? किं भेदोऽवयवावयविनोः, आहोस्विदसंबद्धस्य विद्यमानत्वम्।

---

(क) पुनश्चोदयति तदाश्रय इति, नीलाश्रयो घटः अनवयवत्वेन साध्यते चेत् न सिद्धसाधनमिति भावः।

(ख) 'सोऽयमसिद्धमसिद्धेन' इति पाठः सम्यक् प्रतिभाति। स्वमते असिद्धं पक्षम् असिद्धेन नैयायिकसम्मतसत्त्वेन हेतुना साधयन् साध्यधर्मविशिष्टत्वेन ज्ञापयन्नित्यर्थः।

(ग) साध्यधर्मिणाविति, साध्यं पक्षः धर्मी हेतुः धर्मोऽनुमितिविधेयभूतो ज्ञाप्यतयाऽस्यास्तीति व्युत्पत्तेरिति बोध्यम्।

(घ) विरोधाभावादित्यत्र विरोधादिति पाठः समीचीनतया प्रतिभाति।

## न्यायवार्त्तिकतात्पर्यटीका

यदि भेदः, सोऽस्माभिरिष्यत एव। अथासंबद्धस्य विद्यमानत्वम्, तत् सत्यपि पृथग्गतिमत्त्वे नावयविनोऽस्ति, जातः संबद्धश्चेत्येकः कालः। तथा हि नावयवी अवयवासंबद्धोऽस्ति। न हि जातिमान् जात्यसंबद्धोऽस्ति। न गुणकर्मणी द्रव्यासंबद्धे स्तः। न च विशेषो द्रव्यासंबद्ध इति।

ये स्वप्राप्तिसंयोगौ युतसिद्धिमाहुस्तैरवयवावयविनोरसंयोगे हेतुर्वक्तव्यः। अयुतसिद्धिरिति चेत्—न, तस्या एवासंयोगेन बुभुत्सनादिति। रक्तारक्तत्वं च नावयविन एकस्य, तस्यारक्तत्वादेव; तत्संयोगिनस्तु (क) महारजनस्य रक्तत्वात् तस्य च पटादरक्तादन्यत्वात्। पटो रक्त इति तु भ्रमः, न त्वनेन विभ्रमेण सर्वत्र भवितव्यं तस्य महारजनसंयोगनिमित्तत्वात्, तस्य च पटवृत्तित्वात्, पटस्य च सर्वत्राविशेषात्। पटस्य क्वचिदसंयोगे संयुक्तासंयुक्तभेदप्रसङ्गः। न हि स एव तदैव तत्रैव भवति न भवति चेति युज्यते। तस्मात् संयुक्तात् पटादन्योऽसंयुक्तः पट इति प्राप्तम्। अत्रोच्यते—एषा तावत् प्रमेयगतिः, भावाभावौ परस्परविरहात्मानौ; भावनिवृत्तिरेवाभावः अभावनिवृत्तिरेव भावः, न तु भावाभावाभ्यामन्या तयोर्निवृत्तिः। तेन नैतयोः कदाचिदपि परस्परात्मत्वं भवितुमर्हति अदर्शनात्। एवमनयोराश्रयैकत्वनानात्वे अपि यथादर्शनं व्यवस्थापनीये, यथा तस्यैव श्वैत्यस्य यदा प्रासादे सद्भावस्तदैवाभावः काक इति। एवं य एव कुम्भः श्यामः स एव पश्चादग्निसंयोगादश्यामः, यः पुनरस्य परिमाणभेदो न सति कुम्भे विनश्यति तत्र किमुच्यतां (१)परिमाणावस्थापत्तावपि न नश्यतीति। एवं प्रमेयवैचित्र्यं दर्शनवैचित्र्यव्यवस्थापितं यथाऽभ्युपेयते तथा तस्यैव संयोगस्य तस्मिन्नेकदा भावाभावौ व्यवस्थापनीयौ तथैव दर्शनादिति। न हि दृश्यमानस्य दृश्यमानान्तरवैधर्म्येण रूपमुपलभ्यमानं शक्यमपाकर्तुम्, मा भूद् दृश्यमानवैधर्म्येण दृश्यमानरूपान्तरापाकरणमविशेषात्। तस्माद्दर्शनानुरोधात् प्रमेयवैचित्र्यसिद्धेरुपपन्नः संयोगशब्दबुद्ध्यादीनां तत्रैव तदानीमभावो भावश्चेति। अत एवैषामव्याप्यवृत्तित्वमास्थीयते। रूपादीनां तु न दृष्टस्तत्रैव तदानीमभावो भावश्चेति तेषां व्याप्यवृत्तीनां भावाभावौ युगपदेकत्र विरुद्धाविति सिद्धं रक्तारक्तयोरेकत्राविरोधः सह दर्शनादिति।

यत्पुनर्यदनेकवृत्ति तन्नाना अनेकवृत्तिश्चावयव्यभ्युपगत इति प्रसङ्गसाधनं स्वभावहेतुः। नानात्वाभावादनेकवृत्तित्वाभाव इति प्रसङ्गविपर्ययो व्यापकानुपलब्धिरिति। तत्र ब्रूमः—एकत्वानेकवृत्तित्वयोरविरोधेन नानात्वस्य व्यापकत्वासिद्धेर्न प्रसङ्गो नापि विपर्यय इति। यथैव नीले परिच्छिद्यमाने तदभावो व्यवच्छिद्यते अन्यथा न नीलं परिच्छिन्नं स्यात्, एवं तदभावाविनाभावि पीतमपि नीलपरिच्छेदकं प्रत्यक्षं व्यवच्छिनत्ति, तथैकावयवसंसर्गं अवयविनः परिच्छिद्यमाने तदभावो व्यवच्छिद्यते तदभावाविनाभूताश्चावयवान्तरसंसर्गा इति तेऽपि व्यवच्छेत्तव्याः, तदव्यवच्छेदे तदभावो न व्यवच्छिद्येतेति स एव तदानीमेव तत्र भवेन्न भवेद्वेति दुर्घटमापद्येत।

---

(१) 'परिमाणावस्थावत्ताऽपि' क।

(क) 'स्यात् कुसुम्भं वह्निशिखं महारजनमित्यपि' इत्यमरः।

## न्यायभाष्यम्

समुदाय्यशेषता वा समुदायो वृक्षः स्यात् तत्प्राप्तिर्वा, उभयथा ग्रहणाभावः। मूल-स्कन्ध-शाखा-पलाशादीनामशेषता वा समुदायो वृक्ष इति स्यात् प्राप्तिर्वा समुदायिनामिति, उभयथा समुदायभूतस्य वृक्षस्य ग्रहणं नोपपद्यत इति। अवयवैस्तावदवयवान्तरस्य व्यवधानादशेषग्रहणं नोपपद्यते। प्राप्तिग्रहणमपि नोपपद्यते प्राप्तिमतामग्रहणात्। सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तौ कल्पते न समुदयमात्रे इति ॥ ३२ ॥

## न्यायवार्त्तिकम्

यथाऽर्वाग्भागेन सहावयविन इन्द्रियप्राप्तिरुपलब्धिनिमित्तमस्ति नैवं मध्यभागपरभागाभ्यां सह। तस्मादर्वाग्भागेन सहोपलभ्यते न मध्यभागपरभागाभ्यामिति। अवयवसमूहपक्षे तु सर्वथा वृक्षबुद्धेरभावः। कथम्? मूलस्कन्धशाखापलाशानां समूहो वा वृक्षः स्यात् प्राप्तिर्वा समुदायिनाम्, उभयथा च वृक्षबुद्धेरभावः। अवयवैरवयवान्तरव्यवधानादशेषग्रहणं नास्ति, प्राप्तिग्रहणं चायुक्तं प्राप्तिमतामग्रहणात्। न हि प्राप्तिमत्यगृह्यमाणे प्राप्तिग्रहणमस्ति, भवति हि इदमनेन संयुक्तमिति। सेयमेकदेशग्रहणसहचरिता वृक्षबुद्धिर्द्रव्यान्तरोत्पत्तिपक्षे कल्पते न समुदायमात्रे इति ॥ ३२ ॥

( इति प्रत्यक्षस्यानुमानत्वपरीक्षा )

## न्यायवार्त्तिकतात्पर्यटीका

सोऽयमेकत्वानेकवृत्तित्वयोर्विरोध इति चेत्, हन्त भावपरिच्छेदे तदभावो व्यवच्छिद्यत इति युक्तम्, भावपरिच्छेदलक्षणत्वात् तदभावव्यवच्छेदस्य। न हि भावादन्यस्तस्य भावाभावो नाम। भावान्तराणि तु कस्माद्व्यवच्छिद्यन्ते? तदभावाविनाभावादिति चेत्—कुतः पुनरयं भावान्तराणां भावाभावाविनाभावः? पीतादिभावतादात्म्येन कदाचिदपि नीलस्य भावस्यानुपलम्भादिति चेत्—यत्र तर्ह्येकावयववृत्तेरप्येकस्यावयवान्तरेषु वर्त्तमानस्य तादात्म्यं दृश्यते न तत्रैकावयवसंसृष्टाभावाविनाभावोऽवयवान्तरसंसृष्टस्य। तस्मान्नैकत्वनानावृत्तित्वयोर्विरोधः। अपि च एकं विज्ञानमनेकै रूपचक्षुरालोकमनस्कारैः कथं संबध्यते (क) संबध्यमानं वा कथमेकम्? न वास्तवः कश्चित् कार्यकारणभावो नामास्ति संबन्धः, प्रतीत्यसमुत्पादमात्रं तदिति चेत्? अथ कस्माद्रूपाद्येव प्रतीत्य रूपज्ञानं जायते न पुना रसाद्यपि? स्वभाव एव तादृशो यतस्तानेव प्रतीत्य जायते न पुना (ख)रसादीनिति चेत्—हन्त भोः स्वभावान् भिन्नान् प्रतीत्य कथमेको भावो जायते। को विरोधः, न हि कार्यकारणयोस्तादात्म्यं येन कारणस्वभावानुरोधः कार्यस्य भवेदिति चेत्—तत्किमवयवावयविनोरप्यभेदः, समवायस्य वा ताभ्याम्; येनावयवभेदेऽवयविनो वा समवायस्य वाऽभेदो भवेदिति समः समाधिः। तस्माद् यद् यदवयविनि प्रमाणं वक्ष्यामः तत्तदसति बाधकेऽप्रत्यूहमवयविनमवस्थापयिष्यतीति सिद्धम्। यः पुनर्मन्यते अवयवसमुदाय एवावयवीति, तं प्रत्याह भाष्यकारः—समुदाय्यशेषतेत्यादि। सुगमम्।

(क) अत्राऽऽदर्शपुस्तकयोर्दृश्यमानः 'सम्बध्यमानं वा न वास्तवः कश्चित् कार्यकारणभावो नामास्ति सम्बन्धः। प्रतीत्य कथमेकम्। समुत्पादमात्रं तदिति' इति पाठः प्रामादिकः, तत्र स्वबुद्ध्या एवं योजितम्।

(ख) 'रासभादीन्' इत्यादर्शपुस्तकयोः पाठः, औचित्यादेव शोधितम्।

## ( सू० )—साध्यत्वादवयविनि सन्देहः ॥ ३३ ॥

### न्यायभाष्यम्

यदुक्तमवयविसद्भावादिति, अयमहेतुः साध्यत्वात्। साध्यं तावदेतत् कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति, अनुपपादितमेतत्। एवं च सति विप्रतिपत्तिमात्रं भवति विप्रतिपत्तेश्चावयविनि संशय इति ॥ ३३ ॥

### न्यायवार्त्तिकम्

साध्यत्वादवयविनि सन्देहः। कारणेभ्यो द्रव्यान्तरमुत्पद्यत इति साध्यमेतत्। किं पुनरत्र साध्यम्? किमव्यतिरेकोऽथावयवीति। यद्यवयवी, न लिङ्गमस्ति धर्मिणि विप्रतिपत्तेः। नहि धर्मिणि विप्रतिपद्यमानः कुतश्चिदभ्यनुज्ञां लब्धुमर्हति। न च धर्मिणि विप्रतिपत्तेर्बीजमस्ति सादृश्याभावात्। नहि सादृश्यमन्तरेण विप्रतिपत्तेर्बीजमस्ति। किं कारणम्?

### न्यायवार्त्तिकतात्पर्यटीका

साध्य-हः ( सू० ३३ ) ॥ न परं प्रत्यसिद्धत्वमेवावयविनः साध्यत्वम्। स खल्वेवं मेने संविन्निष्ठा हि विषयव्यवस्थितिः। स एव संविदा व्यवस्थाप्यते यस्तस्या विषयः। स एव विषयो य आकारमस्यामर्पयति। न च निरन्तरोत्पन्नरूपादिपरमाण्वतिरिक्तमवयव्याकारं बिभ्रतीं संविदमीक्षामहे किं तु निरन्तरोत्पन्नरूपादिपरमाण्वाकाराम्। स्थौल्यं च न यद्यपि परमाणूनां प्रत्येकमस्ति तथाऽपि प्रतिभासधर्मो बहुत्वादिवन्न पुनरवयविनमेकमवस्थापयितुमर्हति। यदाहुः सोऽयममूल्यदानक्रयी स्वाकारं च ज्ञाने समर्पयति प्रत्यक्षतां च स्वीकर्तुमिच्छत्यवयवीति। तदेवं परं प्रत्यवयविनोऽसिद्धेर्विप्रतिपत्तिः। ततः साधकबाधकप्रमाणाभावे सति संशय इत्यर्थः। न साध्यत्वं स्वरूपेण संशयहेतुरिति मत्वा भाष्यकृदाह—एवं च सतीति। परासिद्धत्वे सतीत्यर्थः।

साध्यत्वादिति यथाश्रुतं सूत्रं गृहीत्वा वार्त्तिककारो विकल्प्याऽऽक्षिपति—किं पुनरत्रेति। (क)कुतश्चिद् हेतोः तस्य धर्मिणः अभ्यनुज्ञानम् अङ्गीकारम् अर्हति सर्वस्यैव हेतोराश्रयासिद्धेरिति

### वृत्तिः

यतो ह्यवयव्यस्ति अतस्तदवयवप्रत्यक्षकालेऽवयविनोऽपि प्रत्यक्षं न व्याहतम्, तेनापि सह चक्षुःसंयोगादिसत्त्वादिति भावः ॥ ३२ ॥

समाप्तं प्रत्यक्षपरीक्षाप्रकरणम् ॥ ३ ॥

अवयविसद्भावादिति हेतुसाधनायोपोद्घातसङ्गत्याऽवयविप्रकरणमारभते—(साध्यत्वादिति )

---

(क) अत्र वार्त्तिकगतं 'नही'ति 'लब्धु'मिति च न गृहीते, 'अभ्यनुज्ञा'मित्यत्र च 'अभ्यनुज्ञानम्' विशेषः।

## न्यायवार्त्तिकम्

विप्रतिपत्तिर्नाम विपरीता प्रतिपत्तिः। तस्याश्च कारणं समानधर्मोपलब्धावनवगतविशेषस्य तद्विपरीतधर्माध्यारोपः। न चानभ्युपगतावयविनोऽवयविनि सादृश्यं किञ्चिदस्ति। नापि तद्विपरीतधर्माध्यारोपः। तस्मान्न विप्रतिपत्तिः। अथाव्यतिरेकः साध्यः, तत्राव्यतिरेकप्रतिपादकं प्रमाणं वक्तव्यम्। न ह्यप्रामाणिकी काचित् प्रतिपत्तिरस्ति। इदं प्रमाणमर्थान्तरानवयवत्वम्—अर्थान्तरमर्थान्तरस्यावयवो न भवति, यथा न गौरश्वस्यावयवः, अवयवाश्च तन्तवोऽवयवी च पटः, तस्मान्नासौ तेभ्योऽर्थान्तरमिति।

इदं तावद् यथाश्रुति वाक्यं हेतुहीनम्। न ह्यत्र हेतुरस्तीति। ननु चोपनयेन व्यज्यमानो हेतुरवयवत्वमस्ति, नार्थान्तरं पटात्तन्तवः तदवयवत्वादिति; न, व्याघातात्। अनर्थान्तरभावे नावयवत्वं सिध्यति तन्तूनामिति। किं कारणम्? अवयव्यपेक्षत्वात्—अवयव्यपेक्षोऽवयवः, न चावयविप्रत्याख्यानेऽवयवत्वे किञ्चिद्बीजमस्ति। अर्थान्तरे च दर्शनाद् विरुद्धः स्यात्, दृष्टोऽवयवोऽर्थान्तरभावे नानर्थान्तरभाव इति। यथा तन्तवो(१)ऽवयवा घटादर्थान्तरमिति। षष्ठीविशेषणादप्रसङ्ग इति चेत्?—पटस्यावयवा इत्युक्ते घटादिषु कः प्रसङ्गः? नन्वत्रोक्तम्। किम्? व्याघातादिति। न ह्यनर्थान्तरभावे अवयवोऽस्ति, न च षष्ठी। न च तन्तुस्तन्तोरवयवः, नापि षष्ठ्यर्थः, तन्तोस्तन्तुरवयव इति। उत्पत्त्याऽवयवत्वं तन्तूनाम्, तस्य नान्वयो न व्यतिरेक इति असाधारणत्वादहेतुः। अनर्थान्तरं पटात् तन्तव इति च तन्तून् पक्षीकृत्य तदवयवत्वादिति ब्रुवाणस्तन्तूनां तन्त्ववयवत्वं ब्रवीति। एतच्च विरुद्धम्, न तन्तवस्तन्तूनामवयवा इति। अथ पटः पक्षीक्रियते, तथाऽपि व्यधिकरणो हेतुः अवयवत्वस्य तन्तुधर्मत्वात्—

## न्यायवार्त्तिकतात्पर्यटीका

भावः। अथाव्यतिरेक इति, सत्येव धर्मिणि तस्यावयवेभ्योऽभेदो धर्मः साध्य इत्यर्थः। अवयव्यपेक्षत्वादिति। पटमपेक्ष्य हि तन्तवोऽवयवा भवन्ति नो खलु रण्डाकरण्डावस्थितास्तन्तवोऽवयवा उच्यन्त इति। न च षष्ठीति। पटस्यावयवास्तन्तव इति न षष्ठी। तथा च पटस्येति विशेषणाभावे अवयवत्वमात्रं हेतुः स्यात स च विरुद्ध इत्यर्थः। अनर्थान्तरभावे नावयवत्वमित्यस्योदाहरणम्—न च तन्तुस्तन्तोरिति। षष्ठ्यर्थाभावे तूत्तरमुदाहरणमिति। तन्तूनां तन्त्ववयवत्वं ब्रवीतीति, तच्छब्दस्य प्रधानपरामर्शकत्वादित्यर्थः। अवयव-

## वृत्तिः

अत्र चावयविनि सन्देहः साध्यत्वादिति यथाश्रुतार्थो न सङ्गच्छते वह्न्यादौ व्यभिचारात्। तस्मादयमर्थः—अवयविनि साध्यत्वाद् असिद्धत्वात् सन्देहोऽवयविसद्भावादित्युक्तहेतोः, तथा च सन्दिग्धासिद्धो हेतुरित्यर्थः।

---

(१) 'अवयवा' इति ख-पुस्तके नास्ति।

## न्यायवार्त्तिकम्

तन्तुधर्मोऽवयवत्वम्, न पटधर्म इति। अवयवशब्दस्य च कारणविशेषवाचकत्वात् असत्य-वयविनि व्याघातः। यद्यवयविनमर्थान्तरं न प्रतिपद्यसे कस्य तन्तवः कारणम्? नहि कारणमात्मानं निर्वर्तयतीति।

नैव हि नः किञ्चिन्निर्वर्त्यमस्ति, त एव तन्तवः संस्थानविशेषावस्थिताः पटाख्यां लभन्त इति अपटाख्यास्तन्तवः पटशब्देनाभिधीयन्त इत्युक्तं भवति। एतच्च विरुद्धम्, मुख्यासम्भवात्। नहि तन्तूनामपटानां पटेन किञ्चित्सामान्यमस्ति। न चासति सामान्ये मिथ्याप्रत्ययस्य बीज-मस्तीत्युक्तम्। यच्चेदमुच्यते संस्थानविशेषावस्थानमिति, किं तदर्थान्तरभूतमाहो नेति? यद्यर्था-न्तरभूतम्, किं तदिति वक्तव्यम्। अथ नोच्यते? शून्यं तर्हि इदं वाक्यं "संस्थानविशेषाव-स्थान"मिति। अस्माकं तु संस्थानविशेषः संयोगः स चार्थान्तरम्।

नानभ्युपगमात्—न मयाऽर्थान्तरं संयोगः प्रतिपाद्यते अन्यासंयोगादिति। अन्यदन्यस्य संयोगो न भवति, यथा गौरश्वस्य न संयोगः, अङ्गुल्योस्तु संयोगस्तस्मान्नार्थान्तरमिति। न, उक्तोत्तरत्वात्—उक्तोत्तरमेतत्। किमिति? अर्थान्तरानर्थान्तरयोर्व्यावृत्तेः संयोगोऽसाधारणः,

## न्यायवार्त्तिकतात्पर्यटीका

शब्दस्य चेति। पूर्वं कारणमविवक्षित्वा अवयवशब्दस्य परापरशब्दवत् संबन्धिशब्दतामात्रं गृहीत्वोक्तम्, संप्रति कारणत्वं विवक्षित्वोच्यत इत्यपौनरुक्त्यम्।

देशयति—नैव हीति। असत् क्रियमाणं निर्वर्त्यम्, न चास्माकं सत्कार्यवादिनां तदस्तीत्यर्थः। दूषयति—एतच्चेति। न हि पटाकारप्रत्ययस्तन्तुमात्रालम्बनो रण्डाकरण्डावस्थितेष्वपि तन्तुषु प्रसङ्गात्, न च तन्तुपरिमाणभेदालम्बनः तस्य पूर्वमपि सत्त्वात्, असत्त्वे वा सत्कार्य-वादव्याहतिप्रसङ्गात् तस्यैवासत उत्पत्तेः। (क)तस्मात्तन्तुष्वपटेषु पट इत्यकामेनापि मिथ्याप्रत्यय इति वक्तव्यम्, तथा च दूषणमिति।

## वृत्तिः

तत्र च द्रव्यत्वं स्पर्शवत्त्वं वाऽणुत्वव्याप्यं न वेत्यादयो विप्रतिपत्तयः। तत्र च सकम्पत्वा-कम्पत्व-रक्तत्वारक्तत्वावृतत्वानावृतत्वादिलक्षणविरुद्धधर्माध्यासादेकोऽवयवी न सम्भवति। तथाहि—शाखावच्छेदेन कम्पः, मूलावच्छेदेन तदभाव उपलभ्यते। न चैकस्मिन्नेव द्रव्ये एकदैव विरुद्धधर्मद्वयसमावेशः सम्भवति। तस्मादवयवा एव तथाभूताः, न त्वन्यो ऽवयवी, मानाभावात्। एवं महारजनरक्तैकदेशस्यांशुकस्य दशावच्छेदेनारक्तत्वोप-लम्भात्, एवमावृतपृष्ठादेरनावृतत्वोपलम्भादवसेयमिति बौद्धानां पूर्वपक्षः।

---

(क) [illegible]भाऽऽदर्शपुस्तकयोः "तस्मात्तन्तुष्वपटेषु पट" इति पाठस्य प्रामादिकत्वबुद्ध्या एवं संशोधितम्।

## न्यायवार्त्तिकम्

प्रतिज्ञैकदेशश्च नार्थान्तरं संयोगः संयोगत्वादिति। विशेषणभावाचार्थान्तरं संयोगः—संयुक्ते द्रव्ये आहरेत्युक्ते ययोर्द्रव्ययोः संयोगं पश्यति ते इतरेभ्यो विशिष्य (क) संयुक्ते आहरति। न विशेषणस्यान्यथासिद्धत्वात्—यदिदं भवताऽभिधीयते संयुक्ते द्रव्ये आहरेति विशेषणभावादर्थान्तरं संयोग इति, तदन्यथा सम्भवति। कथम्? प्रत्यासत्तौ प्रतीघातावसानायां संयोगव्यवहारः—तावद् द्रव्याणि प्रत्यासीदन्ति यावत् प्रतिहतानि भवन्ति, तस्मिन् प्रतिघाते संयोगव्यवहारो नार्थान्तर इति। (ख) अनभ्युपगतार्थान्तरसंयोगेन प्रत्यासत्तिप्रतिघातौ वक्तव्यौ। तत्र संयुक्तसंयोगाल्पीयस्त्वं प्रत्यासत्तिः, मूर्त्तस्पर्शवद्द्रव्यसंयोगः प्रतीघातः। यः पुनः संयोगं न प्रतिपद्यते तेन प्रत्यासत्तेः प्रतिघातस्य चार्थौ वक्तव्य इति। यदि चार्थान्तरं संयोगो न स्यात् क्षेत्रोदकबीजाग्नीन्धनादीनि सर्वत्रावस्थितानि सर्वत्राङ्कुरपाकादिकार्यं कुर्युः तान्येव तानीति। तस्माद् यस्तैरपेक्ष्यते सोऽर्थोऽन्यः, तस्मिन् संयोग इति संज्ञेति। क्षेत्रोदकबीजाग्नीन्धनानि अङ्कुरपाकादिकार्योत्पत्तौ सापेक्षाणि सर्वदा तत्कार्यानारम्भाद्दण्डादिवत्—यथा दण्डाद्यनेकं कारणं संयोगादिनिमित्तान्तरापेक्षं (ग) सर्वदा न घटपटादिकार्यं करोति तथा बीजाद्यपि, तस्मात् तदपि सापेक्षमिति।

यस्त्वत्र परेणोच्यते—

"कार्योत्पत्तिर्विना तेन शब्दायस्कान्तकर्मवद्"िति। अस्यार्थः—यथा किल शब्दः शब्दान्तरमारभमाणो विना संयोगमारभते, यथाऽयस्कान्तोऽयः समाकर्षति विना संयोगेन, यथा कर्म संयोगविभागौ करोति विना संयोगेन, तथाऽन्याऽपि कार्योत्पत्तिर्विना संयोगेन भविष्यतीति।

न हेत्वर्थापरिज्ञानात्—न ब्रूमः, अस्ति संयोगः कार्योत्पत्तेः, अपि तु क्षेत्रोदकबीजाग्नीन्धनानि सापेक्षाणीति। यदि च निरपेक्षं किञ्चित्कारणं सर्वदाऽऽरम्भकं स्यात् भवेदनैकान्तिको हेतुः, तत्तु न केनचिच्छक्यं प्रतिपादयितुम्, शब्दः शब्दान्तरमारभमाणः स्वकारणपरिच्छिन्नाकाशदेशप्रत्यासत्त्यपेक्ष आरभते शब्दस्याव्यापकत्वात्। अयस्कान्तोऽप्ययः समाकर्षति स्वाश्रयप्रत्यासत्त्यपेक्ष एव। यदि च निरपेक्ष आकर्षेत् न क्वचिदयांस्यवतिष्ठेरन् तस्मान्न निरपेक्ष इति। कर्मापि स्वाश्रयप्रत्यासत्त्याभिमुख्यापेक्षं संयोगं करोति, न निरपेक्षं कर्म, न प्रतिलोममिति। यद्यनपेक्षं संयोगं कुर्यात् पाण्ड्यमथुरासम्बन्धिनि देवदत्ते उत्पन्नं कर्म तक्षशिलासम्बन्धिनि यज्ञदत्ते संयोगं कुर्यात्। न त्विदमस्ति। न चेदं प्रतिज्ञायते सर्वस्य कारणं संयोगः, अपि तु सापेक्षमारभत

## न्यायवार्त्तिकतात्पर्यटीका

प्रतिज्ञैकदेशश्चेति, संयोगमात्रपक्षीकरण इत्यर्थः। तान्येव तानीति तान्येव प्रत्यासन्नानि, क्षणभङ्गपरिणामप्रतिक्षेपादित्यर्थः। यथा दण्डाद्यनेकं कारणमिति, दण्डवेमाद्यनेकं कारणं घटपटादीनां कार्याणाम्। संयोगादिनिमित्तान्तरापेक्षमिति, संयोग आदिर्येषां निमित्तान्तराणां

---

(क) 'संयुक्ते' इत्येतदत्र मुद्राप्रमादादागतमिति सम्भाव्यते। (ख) सिद्धान्ती दूषयति अनभ्युपगतेति।
(ग) सर्वदेति संयोगाभावदशायामिति तु हृदयम्।

## न्यायवार्त्तिकम्

इति। सूत्रव्याघात इति चेत्—अथ मनुषे यदि सापेक्षं कर्म संयोगं करोति ननु पारमर्षं सूत्रं व्याहन्येत—

"एकद्रव्यमगुणं संयोगविभागयोरनपेक्षकारणं कर्मेति"(१)।

न व्याघातः, सूत्रार्थापरिज्ञानात्—न भवता सूत्रार्थो व्यज्ञायि। नायं सूत्रार्थः निरपेक्षं कर्म संयोगविभागकारणमित्याश्रयाद्यपि नापेक्षते इति, अपि तु चरमभाविनिमित्तान्तरं नापेक्षत इति सूत्रार्थः। यथा द्रव्यमुत्पन्नं चरमभाविनं संयोगमपेक्षमाणं पश्चादारभते, यथा वा संयोगो गुणकर्मस्वारब्धव्येषु पश्चाद्भाविसंस्कारप्रयत्नादृष्टाख्यं निमित्तमपेक्षते, यथा वा कारणेषु वर्तमाना रूपादयः कार्यरूपादिष्वारब्धव्येषु द्रव्योत्पत्तिमपेक्षन्ते उत्पाद्यस्याऽऽधारभावात्—यदुत्पाद्यं द्रव्यं तत्तेषामाधार इति, न तु कर्म(क) पश्चाद्भाविनिमित्तमपेक्षत इत्यनपेक्षत्वं कर्मणः शास्त्र उक्तम्; न पुनः कर्माश्रयाद्यपि नापेक्षत इति। संयोगे सापेक्षत्वप्रसङ्ग इति चेत्—यदि पश्चाद्भाविनिमित्तान्तरानपेक्षत्वं कर्मणो निरपेक्षत्वार्थः, अपि तर्हि संयोगे कर्तव्ये कर्म सापेक्षं प्राप्नोति विभागापेक्षित्वात्; न हि विभागमन्तरेण कर्म संयोगं करोति। तस्माद्विभागापेक्षित्वं कर्मणः प्रसक्तम्, ततश्च तदवस्थः सूत्रव्याघातदोषः। न सन्देहात्—किं विभागापेक्षेण कर्मणा संयोगो जन्यते, उत प्रतिबन्धकं विभागेन निवर्त्यत इति सन्दिह्यते। वयं तु ब्रूमः—विभाग उत्पन्नः पूर्वसंयोगनिवृत्तिं करोति, निवृत्ते संयोगे कर्म प्रतिबन्धकापगमात् संयोगं करोति। यथा गुरुत्वं निरपेक्षं कर्मकारणमित्युद्दिष्टं शास्त्रे, अथ च वृन्तफलविभागान्निवृत्ते वृन्तफलसंयोगे गुरुत्वं लब्धवृत्ति (तच्च) पतनकर्म करोति, तथा कर्मापीत्यदोषः। यथा वा संयोगः साधारणकार्यद्रव्यसंयोगविनाशोत्तरकालं द्रव्यान्तरारम्भे निरपेक्षः कारणमिति न विभागापेक्षो द्रव्यमारभते तथा कर्म संयोगमारभमाणं न विभागमपेक्षत इति, अतोऽपि न सूत्रव्याघातः।

## न्यायवार्त्तिकतात्पर्यटीका

कुम्भकारकुविन्दादीनां तानि निमित्तान्तराणि। अतद्गुणसंविज्ञानो बहुव्रीहिः यथा चित्रगुरिति। तेन साध्यस्यैव दृष्टान्ततेति न दोषः। विमृश्यावधारयति—वयं तु ब्रूमो विभाग उत्पन्न इति, संयोगोऽनपेक्षकर्मकारणकः कर्मकार्यत्वाद्विभागवदिति स्थिते प्रतिबन्धकापगममात्रं विभागेन क्रियत इति सिध्यति। यथा वा संयोगः साधारणकार्यद्रव्येति। यदा हि पटः पाट्यते तदा येषामवयवानामवस्थितानां संयोगानां पटाख्यं साधारणं कार्यं तस्य साधारणस्य कार्यद्रव्यस्य पटस्य च तदसमवायिकारणानां च संयोगानां केषाञ्चिद्विनाशोत्तरकालमर्द्धपटारम्भे तेषामनपेक्षाणां कारणत्वं विभागस्तु कर्मजन्यस्तत्र कतिपयसंयोगविनाशद्वारेण साधारणपटादिकार्यविनाशमात्रे व्याप्रियते न तु विभागापेक्षा। अर्द्धपटे जनयितव्ये संयोगः कारणमित्यर्थः।

---

(१) काणादसूत्रमिदम् १ अ० १ आ० १७ सू०।
(क) अत्र 'तथे'त्यर्थतो बोध्यम्।

## न्यायवार्त्तिकम्

यदप्युक्तम्—कर्म विना संयोगेन संयोगं करोति, तदपि न ; व्याघातात्—न संयोगोऽस्ति कर्म च संयोगं करोतीति व्याहतम्। न ह्यसति संयोगे वाक्यमेतदर्थवत्तायां व्यवतिष्ठत इति। अथवा (१)ऽनेन व्याघातः—गतिविभागसंयोगाश्च प्रतिषिध्यन्ते, अथ च कर्म संयोगं करोतीति व्याहतम्। अथ मनुषे—परमतव्यपेक्षयोक्तं संयोगविभागकर्मणां प्रतिषेधः नास्माभिः संयोगविभागकर्माण्यभ्युपगम्यन्ते इति, एवमप्यनिवृत्तो व्याघातः—यानि तानि परमताभ्युपगतानि संयोगविभागकर्माणि तानि भवता कथं प्रतिपद्यन्ते ? यदि प्रमाणतः, कथं पराभ्युपगतानि। अथ प्रमाणमन्तरेण, कथं प्रतिपद्यसे ? न हि प्रमाणमन्तरेण काचित् प्रतिपत्तिर्युक्तेति। अथ (२)नैव प्रतिपद्यसे, व्याहतं तर्ह्येतद्भवति परपक्षप्रसिद्धानि संयोगविभागकर्माणीति। अथ मनुषे यानि भवताऽभ्युपगम्यन्ते संयोगविभागकर्माणि, तानि न सन्ति, न पुनः संयोगविभागकर्मप्रतिषेधः। कथम् ? देशान्तरे विरलद्रव्योत्पादे गतिव्यवहारः—यः सन्तानो विरलो देशान्तरेपूत्पद्यते तत्र गतिव्यवहारः, निरन्तरोत्पादे संयोगव्यवहारः, ये वस्तुनी निरन्तरमुत्पद्येते तयोर्यो निरन्तरोत्पादः स संयोगः ; संयोगविपर्ययाद्विभागः। अत्र तावदुक्तं वृक्षस्थितिं भावयद्भिः—न प्रमाणाभावादिति, न हि क्षणिकत्वे प्रमाणमस्तीति।

सान्तरनिरन्तरबुद्ध्योश्च निमित्तं वक्तव्यम्—यदि संयोगं विभागं निमित्तान्तरं न प्रतिपद्यसे सान्तरमिति बुद्धेर्निरन्तरमिति च बुद्धेर्भेदहेतुर्वक्तव्यः। नहि निमित्तभेदमन्तरेण बुद्धीनां भेदो दृष्टो रूपादिवदिति। या चेयमचलति चलतीति बुद्धिर्या असंयुक्ते संयुक्तमिति अविभक्ते विभक्तमिति च (३)सा च प्रधानमन्तरेण न भवति। सर्वा एता मिथ्याबुद्धयः प्रधानानुकारेण भवन्तीति प्रधानं व्यक्तव्यम्। नहि निष्प्रधानं भाक्तं दृष्टं स्थाणुपुरुषवदिति—यथा स्थाणौ सति पुरुषे स्थाणुरिति बुद्धिः, पुरुषे वा सति स्थाणौ पुरुषबुद्धिरिति। यदि चार्थान्तरं संयोगो न स्यात् कुण्डलीत्यस्या बुद्धेः किञ्चिन्निमित्तमवश्यं विधीयमानं प्रतिषिध्यमानं वा निमित्तान्तरमुपादेयम्। न तावत् कुण्डलनिमित्ता नापि देवदत्तनिमित्ता, न च भवता निमित्तान्तरं प्रतिपाद्यते, निमित्तान्तरं चान्तरेण यथा कथञ्चिद्व्यवस्थिताभ्यां देवदत्तकुण्डलाभ्यां कुण्डलीति बुद्ध्या भवितव्यम्। तस्मादवश्यं विधीयमानं प्रतिषिध्यमानं वा निमित्तान्तरमभ्युपगन्तव्यम्।

## न्यायवार्त्तिकतात्पर्यटीका

न हि प्रमाणमन्तरेणेति, मिथ्याज्ञानमपि प्रमाणपूर्वकं सम्यग्ज्ञानपूर्वकत्वाद्विपरीतख्यातेरित्यर्थः। वृक्षस्थितिं भावयद्भिः पूर्वापरप्रत्ययैकविषयस्य वृक्षस्य स्थितिं स्थिरतां भावयद्भिरित्यर्थः।

---

(१) 'तेन' इति क-वार्त्तिकपाठः। (२) 'नैवं' इति ख-वार्त्तिकपाठः। (३) 'सार्वप्रधानम्' इति ख-पुस्तकपाठः।

## न्यायवार्त्तिकम्

यदि प्रतिषिध्यमानम्, यदन्यत्र भवति तदन्यत्र प्रतिषिध्यत इति प्रतिषिध्यमानस्य विषयो वक्तव्यः। तस्मान्न कथञ्चन संयोगः प्रतिषेद्धुं शक्यते। इहबुद्धिनिमित्तत्वाच्च—इयमिहबुद्धिः प्रवर्तमाना नर्ते सम्बन्धात् प्रवर्तते यथेह कुण्डे बदराणीति, नेयं बदरमात्रनिमित्ता न कुण्डमात्रनिमित्तेति यदस्या निमित्तं स संयोग इति। इहेति बुद्धिर्यदि संयोगाद्(क)अनियमो न प्राप्नोति? यदि संयोगादिहबुद्धिर्भवति असति संयोग इहबुद्धिर्न स्यात्—यथा सन्तीह वने तिलकाः, सन्तीह वने किंशुका इति। दूराच्चान्तरमपश्यतां किंकृतेहबुद्धिः? नहि तत्रास्ति संयोग इति। न, इह बुद्धेरुभयनिमित्तत्वात्—उभयमिहबुद्धेर्निमित्तं संयोगो विभागादर्शनं च। तत्रैका मुख्या, एका भाक्ती। या संयोगात् सा तत्त्वबुद्धिरिति, या विभागादर्शनात् सा भाक्तीति। या चेयं भाक्ती सा प्रधानसामान्यदर्शनादुपजायते, न प्रधानं प्रत्याचष्टे। नहि प्रधानप्रत्याख्यानेन भाक्ती बुद्धिर्भवितुमर्हतीति। भाक्त्य एव सर्वा भविष्यन्तीति न युक्तं प्रधानापेक्षित्वादित्युक्तम्। यदपीदमुच्यते विना संयोगेनेहबुद्धिर्दृष्टा यथा सन्तीह वने तिलकाः, सन्तीह वने किंशुका इति, तत्र सम्प्रधार्यं किं सम्बन्धो नास्ति उत संयोगो नास्ति। वयं तु ब्रूमः संयोगो नास्ति न तु सम्बन्धः, सम्बद्धं हि वनं तिलकादिभिरिति।

किं पुनरिदं वनं नाम? नेदं दुर्वचम्। उक्तमेतद् बहुत्वसंख्या सविशेषणेति। ऊर्ध्वावस्थिते च द्रव्ये संयुक्तबुद्धौ सत्यामिहबुद्धिः कस्मान्न भवति? तयोरेव द्रव्ययोस्तस्मिन् संयोगे सति न भवतीति। किम्भूतो नियमः? न अपरिज्ञानात्—संयोगमन्तरेण निर्निमित्ता इहबुद्धिर्न भवतीति ब्रूमः, न पुनर्भवत्येवेहबुद्धिः सति संयोग इति। न चोत्तराधरानपेक्षेण संयोगेनेहबुद्धिः न क्रियत इति तत्पूर्विका न भवति। यत्पुनरेतत् असति सम्बन्धे अस्य द्रव्यस्येह समवाय इतीहबुद्धिर्न प्राप्नोति, यथेह तन्तुषु पट इति बुद्धेः समवायो निमित्तम्; न पुनः समवायस्य समवायोऽस्ति, इह समवाय इति न स्यात्? अत्रोक्तम्। किमुक्तम्? मिथ्याप्रत्यय एवैष इति। किं पुनः समवायवद्भिर्द्रव्यैः समवायस्य सामान्यम्, यदपेक्षया स मिथ्याप्रत्ययः प्रवर्तते? भेदादर्शनम्,—यानि समवायवन्ति न तेषां भेदो दृश्यते समवाये चैतदस्तीति युक्तो मिथ्याप्रत्ययः। वाक्यधर्मभेदाच्चानियमः—न चैकस्मिन् वाक्ये यो धर्मः स वाक्यान्तरेऽपि भवतीति; यथा राज्ञः पुरुषो गच्छतीति त्रीणि पदानि, त्रीण्यपि स्वेन स्वेनार्थेनार्थवन्ति भवन्तीति उदकस्य भावो भवतीति नैतद्वाक्यसामान्याद्(ख)अस्मिन्नपि वाक्ये त्रीण्यपि पदानि

## न्यायवार्त्तिकतात्पर्यटीका

भेदादर्शनमिति आकारिभेदादर्शनम्, यथा घटपटावाकारिणौ भेदेन दृश्येते नैवमवयवा-

(क) अत्र 'अनियमः प्राप्नोति' इत्यर्थः काकाऽधिगन्तव्यः। 'अनियमः' नियमाभावः संयोगस्य व्यतिरेके व्यभिचारेण व्यापकत्वभङ्गरूपः, स एव 'असति संयोगे' इत्यनेन दर्शितः। (ख) आदर्शपुस्तकयोः— 'एकस्मिन्नपि' इति पाठो मुद्राप्रमादकृत इति बुद्ध्या परित्यज्यैवं शोधितः।

## न्यायवार्त्तिकम्

पृथगर्थवन्ति भवितुमर्हन्ति। कः पुनरस्य वाक्यस्यार्थः उदकस्य भावो भवतीति। यावदुक्तं भवति—उदकं भवति, तावदुक्तं भवति उदकस्य भावो भवतीति। (क)एवमन्यान्यपि वाक्यानि कुण्डे बदराणां वृत्तिरिति यथा वृत्तौ दर्शितायां वृत्तिमत्सु बदरेषु सम्प्रत्ययः—एतदुक्तम्भवति कुण्डे बदराणि वर्त्तन्त इति (१) तथेह द्रव्ये द्रव्यस्य समवाय इति ब्रुवाणेनोक्तं भवति अत्र द्रव्ये द्रव्यं वर्तत इति। तस्मादज्ञात्वा (२) वाक्यविभागमुच्यते अस्य द्रव्यस्येह समवायोऽस्ति निमित्त इति। तस्मादुपपन्नमर्थान्तरं संयोग इति। उपपत्तौ च न संस्थानविशेषेणावस्थितास्तन्तवः पटबुद्धेः कारणं भवन्तीति।

अपरे पुनरन्यथा अर्थान्तरानवयवत्वादित्येतद्वाक्यं वर्णयन्ति अवयवावयविभावादिति। एतत्तु तैः कुतो लभ्यते? न ह्ययमर्थोऽर्थान्तरानवयवत्वादित्येतस्मिन् वाक्ये श्रूयते। उपनयेन लभ्यत इत्याह—यस्मादयमुपनयः अवयवास्तन्तवोऽवयवी पट इति, उपनयेनावयवावयवित्वादिति हेतुर्लभ्यते। सत्यं लभ्यते, विरुद्धस्तु भवति। न हि तन्तवः स्वात्मनोऽवयवाश्चावयवी च, न पटः आत्मनोऽवयवोऽवयवी चेति। किं कारणम्? अवयवावयविशब्दयोः सम्बन्धिशब्दत्वात्—सम्बन्धिशब्दावेतौ अवयवोऽवयवी च। न चान्यतरप्रत्याख्यानेन सम्बन्धिशब्दप्रवृत्तिरस्ति। तस्मादयमपि न सूत्रार्थः।

दृष्टोऽनर्थान्तरेऽपि प्रदेशप्रदेशिव्यवहारः यथा आकाशस्य प्रदेश इति। न, उक्तोत्तरत्वात्—उक्तोत्तरमेतत्—अन्योऽवयवार्थोऽन्यश्च प्रदेशार्थ इति। कोऽवयवार्थः? कारणविशेषाभिधानमवयव इति, आधाराभिधानं प्रदेशः प्रदिश्यते अस्मिन्निति। न चाऽऽकाशं क्वचित् प्रदिश्यते न चाऽऽकाशस्य किञ्चित्कारणमस्ति। तस्मान्न कारणार्थो नाऽऽधारार्थ इति। सोऽयमाकाशे प्रदेशशब्दः प्रदेशवद्द्रव्यसामान्याद् द्रष्टव्यः। किं पुनः प्रदेशवता द्रव्येण सामान्यम्? संयोगस्याव्याप्य-

## न्यायवार्त्तिकतात्पर्यटीका

वयविनौ नापि समवायसमवायिनावित्यर्थः। यस्मादयमुपनयः अवयवाश्च तन्तवोऽवयवी च पट इति; पूर्वमवयवाश्चेत्येतावन्मात्रं हेतूकृतं संप्रति त्ववयवावयविनावित्यपौनरुक्त्यम्।

अन्योऽवयवार्थ इति, अवयविनोऽन्योऽवयवशब्दार्थ इत्यर्थः। प्रदेशिनोऽन्यः

## वृत्तिः

अत्र च बौद्धानां पूर्वपक्षसूत्राणि वार्तिककृता लिखितानि तानि च विस्तरभयान्न लिख्यन्ते ॥ ३२ ॥

---

(१) 'तथेह च' इति ख-वार्तिकपाठः। (२) 'वाक्यार्थं विभागम्' इति ख-वार्तिकपाठः।

(क) एवमन्यान्यपि वाक्यानि, यथा कुण्डे बदराणां वृत्तिरिति वृत्तौ दर्शितायाम् इति मनोरमः पाठः।

## न्यायवार्त्तिकम्

वृत्तित्वम्। एनं चार्थमुपरिष्टाद्वक्ष्याम इति। तत्प्रदेशात्मकत्वादिति चेत्—अथ मन्यसे अयमन्यो हेतुरवयविनोऽनर्थान्तरत्वसाधकः तत्प्रदेशात्मकत्वम्। कोऽस्यार्थः? अनर्थान्तरं पटात्तन्तवः तत्प्रदेशव्यपदेशविषयत्वादिति—ये यस्य प्रदेशत्वेन व्यपदिश्यन्ते ते तस्याऽऽत्मानो भवन्ति, यथा आकाशस्य प्रदेशाः, पटस्य च प्रदेशत्वेन व्यपदिश्यन्ते तन्तवस्तस्मात् पटात्मानस्तन्तव इति। इदं तावद् यथाश्रुति वाक्यं पूर्ववद्धेतुहीनम्; तत्प्रदेशात्मकत्वस्यार्थान्तरानर्थान्तरयोरदर्शनाद-साधारणः, प्रदेशशब्दस्य कारणपर्यायत्वाद्विरुद्धः, तत्प्रदेशव्यपदेशविषयत्वस्य तन्तुभिरसम्बन्धा-दसिद्धः। योऽप्ययं दृष्टान्त आकाशस्य प्रदेश इति सोऽप्यसिद्धः। कथमिति? आकाशस्य प्रदेश इति संयोगस्याव्याप्यवृत्तित्वमुच्यते। न च संयोगस्याव्याप्यवृत्तित्वमात्रमाकाशम्, तस्मादसिद्धो दृष्टान्तः।

द्रव्यान्तरेभ्यो द्रव्यान्तरानिष्पत्तेर्नान्योऽवयव्यवयवेभ्यः—न किल द्रव्यान्तरेभ्यो द्रव्यान्तर-मुत्पद्यमानं दृष्टम्, न च गो-हस्त्यश्वेभ्यः पुरुष उत्पद्यते; तन्तुभ्यस्तूत्पद्यते पटः, तस्मान्नासौ तेभ्योऽर्थान्तरमिति। अस्यापि पूर्ववद्धेतुन्यूनता। उपनयेन व्यज्यमानस्तेभ्यस्तूत्पत्तेरिति हेतुः। अयमप्यर्थान्तरानर्थान्तरयोर्व्यावृत्तेरसाधारणः। अर्थान्तराच्च तुर्यादेरर्थान्तरस्य पटस्योत्पत्ति-दर्शनाद्‌ विरुद्धः। पटपक्षीकरणे असम्बद्धार्थः न पटः पटादुत्पद्यत इति। अथ तच्छब्देन तन्तवः सम्बध्यन्ते, तन्तुभ्यः पट उत्पद्यत इति, तथाऽपि विरुद्धः न तन्तुस्तन्तुभ्यो भवति पटस्तु भवति।

नान्योऽवयव्यवयवेभ्योऽवयव्यन्तरावयवानामवयव्यन्तरार्थान्तरभावात्—इह येऽवयविनो-ऽर्थान्तरं भवन्ति तेऽवयव्यन्तरावयवा भवन्ति यथा चक्रादयो रथावयवा इति तेऽर्थान्तरं पटात्। यदि च तन्तवोऽपि पटादर्थान्तरं स्युः तेऽपि पटव्यतिरेकेणावयव्यन्तरावयवाः स्युः। न च ते तद्व्यतिरेकेणावयव्यन्तरावयवास्तस्मान्नार्थान्तरमिति। वाक्यमात्रे हेतुन्यूनता असाधारणता च दोषः। (क) हेतुस्तद्व्यतिरेकेणान्यानवयवत्वात् न तन्तवस्तन्तूनामवयवा इति विरुद्धः।

## न्यायवार्त्तिकतात्पर्यटीका

प्रदेशशब्दार्थ इत्यर्थः। (ख)तत्प्रदेशशब्दस्य व्यपदेशविषयत्वस्येति। तन्तवो हि पक्षीकृताः प्रधानमिति तदिति सर्वनाम्ना हेतुगतेन परामर्ष्टव्याः। तथा च तन्तुप्रदेशस्य व्यपदेशविषयत्वं न तन्तूनामित्यसिद्धो हेतुरित्यर्थः।

तेभ्यस्तूत्पत्तेरिति कल्पितस्य हेतोर्विवरणं तन्तुभ्यस्तूत्पद्यते पट इति।

---

(क) तद्व्यतिरेकेणान्यानवयवत्वादिति हेतुर्विरुद्ध इति योजना।

(ख) तत्प्रदेशव्यपदेशविषयत्वस्येति वार्त्तिकमत्रार्थतो धृतमिति बोध्यम्।

## न्यायवार्त्तिकम्

अर्थान्तरप्रत्याख्यानाच्चावयवोऽवयवीत्येतन्न स्यात्। यदपीदमुच्यते येऽवयवा अवयविनोऽर्थान्तरं भवन्ति ते तद्व्यतिरेकेणान्यावयवा भवन्ति यथा चक्रादय इति। न, उभयेन व्याघातात्—चक्रादयोऽवयवा इति ब्रुवताऽभ्युपगतमर्थान्तरं भवति। अनभ्युपगमे वा कोऽस्य वाक्यस्यार्थः चक्रादयो रथावयवा इति। ये च चक्रादयो रथावयवत्वेनाभ्युपगम्यन्ते तेऽप्यर्थान्तरप्रतिषेधान्न रथस्य नाप्यन्यस्यावयवा इति उच्छिन्नोऽवयवावयविशब्दस्य विषयः, तस्मादहेतुरयम्।

नान्योऽवयव्यवयवेभ्यो द्रव्यान्तरोत्पत्तिदेशव्यवच्छेदात्—यदुभयसम्प्रतिपन्नमर्थान्तरत्वेन तत् तस्माद्भिन्नदेशमुत्पद्यमानं दृष्टम्, यथा गौरश्वात्, न तु तन्तुभ्यो भिन्नदेशः पट उत्पद्यते तस्मान्नासौ तेभ्योऽर्थान्तरमिति। अत्रापि हेतुन्यूनता चासाधारणता च पूर्ववदिति। तद्देशोत्पत्तेरिति हेतुः न तन्तुस्तन्तुदेश उत्पद्यत इति विरुद्धः। उत्पत्तिप्रत्याख्यानं वा पटप्रतिषेधात्—यदि तन्तुभ्यः पटो नोत्पद्यते, क उत्पत्तिशब्दस्यार्थः, न तन्तुरुत्पद्यते न पट इति उत्पत्तिदेशव्यवच्छेदादित्युत्पत्तिशब्दस्यार्थो वक्तव्य इति। स च निरूप्यमाणो व्यक्त्यादिधर्मभेदेनापूर्वं जन्माहेति विरुद्धः।

नान्योऽवयव्यवयवेभ्यः, अवयवान्तरावयविनोऽवयवान्तरार्थान्तरभावात्—इह योऽवयवान्तराणामवयवी भवति सोऽवयवान्तरेभ्योऽर्थान्तरं भवति, यथा चक्रादिभ्यो घटः। चक्रादिभ्योऽवयवेभ्योऽर्थान्तरं घट इति चक्राद्यवयवव्यतिरेकेणावयवान्तराणामवयवी भवति, न तु पटस्तन्तुव्यतिरेकेणावयवान्तराणामवयवी भवति, तस्मान्नासौ तन्तुभ्योऽर्थान्तरम् (क)। तत्राप्यसाधारणता हेतुन्यूनता च पूर्ववत्। अवयवान्तराणामवयवीति ब्रुवता अवयव्यर्थान्तरभूतोऽभ्यनुज्ञातो भवति शून्यं वा वाक्यम्। अथ नाभ्यनुज्ञायते, कोऽस्य वाक्यस्यार्थः अवयवान्तराणामवयवीति। न ह्यवयविप्रत्याख्यानादेतद्वाक्यमर्थवत्तायां शक्यं व्यवस्थापयितुम्। तद्व्यतिरेकेणान्यानवयवित्वं हेतुरस्यापि प्रसङ्गः पूर्ववत्।

## न्यायवार्त्तिकतात्पर्यटीका

उभयेन व्याघातादिति। अभ्युपगमेनानभ्युपगमेनेत्यर्थः। द्रव्यान्तरेति। द्रव्यान्तरोत्पत्तिदेशावच्छेदो व्यवच्छेदः, यथा पटोत्पत्तिदेशादन्यो घटोत्पत्तिदेश इत्यर्थः। व्यक्त्यादिधर्मभेदेनेति, आदिग्रहणेनाविर्भावसंस्थानादय उच्यन्ते ते च कारणव्यापारात् पूर्वं नाऽऽसन्निति जन्माऽपि तेषामपूर्वमित्यर्थः।

यथा चक्रादिभ्यो रथावयवेभ्य इत्यर्थः।

---

(क) अत्रायमाशयः—अवयवान्तरार्थान्तरत्वं व्याप्यम्, तद्व्यतिरेकेण अवयवान्तरावयवित्वं च व्यापकम्। तदिह व्यापकं तन्तुव्यतिरेकेण अवयवान्तरावयवित्वं निवर्त्तमानं तद्व्याप्यमवयवान्तरार्थान्तरमपि निवर्त्तयतीति।

## न्यायवार्त्तिकम्

नान्योऽवयव्यवयवेभ्यः सत्यन्यकर्तुरर्थान्तरभावात्—इह ये यस्मिन् सत्यन्यत् कुर्वन्ति ते तस्मादर्थान्तरं भवन्ति यथा कटात् तन्तवः, (क) सति कटेऽर्थान्तरं पटं कुर्वन्तीति कटादर्थान्तरं भवन्ति, न पुनः सति पटे तन्तवो द्रव्यान्तरं कुर्वन्ति तस्मात् ते नार्थान्तरमिति। (ख)अस्यापि हेत्वर्थः सत्यन्याकरणात्। अस्याप्यसाधारणता च पूर्ववत्। सति कटे तन्तवः पटं कुर्वन्तीति ब्रूषे न चार्थान्तरमिति व्याहतम्। नहि तन्तव आत्मानं कुर्वन्ति। पटमप्यर्थान्तराभावात् न कुर्वन्तीति चेत् क्रियाविषयोच्छेदः—न तन्तव आत्मानं कुर्वन्तीति नार्थान्तरं कुर्वन्तीति क्रियाविषय उच्छिन्नो भवतीति।

नान्योऽवयव्यवयवेभ्यः स्वात्मसंयोगव्यतिरेकभाव्यवयव्यन्यत्वात्—इह ये यस्मादर्थान्तरं भवन्ति ते आत्मसंयोगव्यतिरेकेण भवन्ति, तद् यथा तन्तुसंयोगव्यतिरेकेण कटो भवति, न च तन्तुसंयोगव्यतिरेकेण पटो भवति तस्मान्नासौ तेभ्योऽर्थान्तरम्। अस्यापि हेत्वर्थस्तन्तुसंयोगेभ्यस्तदुत्पत्तिरिति, अस्याप्यसाधारणता हेतुन्यूनता च पूर्ववदेव। तन्तुसंयोगेभ्यस्तदुत्पत्तिरिति ब्रुवता तन्तुव्यतिरिक्तः संयोगश्चावयवी चाभ्युपगतो भवति।

नान्योऽवयव्यवयवेभ्यो द्रव्यान्तरगुणानां द्रव्यान्तरगुणाकारणत्वे अगुणत्वप्रसङ्गात्—न किल द्रव्यान्तरगुणानां द्रव्यान्तरगुणेभ्यो दृष्ट उत्पादः। यथा न गोगुणेभ्योऽश्वगुणानाम्। तन्तुगुणेभ्यस्तु पटगुणानामुत्पत्तिस्तस्मान्नासौ तेभ्योऽर्थान्तरमिति। सोऽयमपन्यायो वर्तते। कोऽत्रापन्यायः? तन्तुगुणेभ्यः पटगुणानामुत्पत्तिं प्रतिपद्यसे न चार्थान्तरं पट इति। न च तन्तुगुणेभ्यस्तन्तुगुणानामुत्पत्तिरिति तन्तुगुणेभ्यस्तद्गुणोत्पत्तिरिति हेतुर्विरुद्धः।

नान्योऽवयव्यवयवेभ्योऽप्रत्यक्षत्वप्रसङ्गात्—प्रत्यक्षाप्रत्यक्षवृत्तिरवयव्यप्रत्यक्षः स्यात् यद्यवयव्यर्थान्तरं स्यात्; यथा गर्भमातृसंयोगः प्रत्यक्षाप्रत्यक्षवृत्तिर्न प्रत्यक्षः, प्रत्यक्षस्त्ववयवी, तस्मान्नासौ तेभ्योऽर्थान्तरम्। प्रत्यक्षत्वादेव नार्थान्तरमिति विरुद्धो हेतुः। गर्भमातृसंयोगश्चाप्रत्यक्ष इति किमयं (ग)प्रत्यक्षाप्रत्यक्षाभ्यामारम्भादप्रत्यक्षः, उत प्रत्यक्षाप्रत्यक्षवृत्तित्वादप्रत्यक्ष इति। यद्याद्यः, हिमवत्परमाणुकमप्रत्यक्षं प्राप्नोति तस्य ह्येक एव प्रत्यक्ष एक एवाप्रत्यक्ष

## न्यायवार्त्तिकतात्पर्यटीका

हिमवत्परमाणुकमिति। परमाणुग्रहणं सूक्ष्मद्रव्योपलक्षणार्थम्, न पुनः परमाणोर्द्व्यणुकादन्यत्रारम्भसंभवः। न च विवादाध्यासितः परमाणुर्न महद्द्रव्यमारभते परमाणुत्वाद् द्व्यणुकारम्भकपरमाणुवत्। अमहत्त्वाच्च न हिमवत्परमाणुकं प्रत्यक्षं स्यात्। तस्माद्धिमवद्धिमबिन्दुभ्यां संसर्गिभ्यां संयोगादवयविद्रव्यमारभ्यते महत्त्वं चास्यावयवमहत्त्वादुत्पद्यते। तथा

---

(क) अत्र 'तन्तवः' इति कर्तृ पदं पूरणीयम्। (ख) अस्यापि प्रयोगस्येत्यर्थः। (ग) 'प्रत्यक्षाप्रत्यक्षाणां संयोगस्याप्रत्यक्षत्वात् पञ्चात्मकं न विद्यते' इति काणादसूत्रम् (अ० ४, आ० २, सू० २)।

## न्यायवार्त्तिकम्

इति। अथ द्वितीयः, भावोऽप्रत्यक्षः (१) स्यात् स हि प्रत्यक्षाप्रत्यक्षवृत्तिरिति। न चायं पक्षोऽस्ति अवयवानामप्रत्यक्षत्वे अवयवी न प्रत्यक्ष इति। उक्तश्चात्र। किमुक्तम्? (क)येषामिन्द्रियार्थसन्निकर्षोऽस्ति अवयवानां तैः सहावयवी गृह्यते, येषां नास्ति तैः सह न गृह्यते। (२)न च तत्कृतोऽस्ति भेदः। अवयवानामप्रत्यक्षत्वादवयविनोऽप्रत्यक्षत्वं ब्रुवतः सर्वमतीन्द्रियं प्राप्नोति, न हि कस्यचिद् मध्यभागपरभागौ ज्ञायेते इति। सोऽयं प्रत्यक्षविषय उच्छिन्नो भवति।

प्रत्यक्षत्वादिति च ब्रुवाणेन अवयवातिरिक्तोऽवयव्यभ्युपगतो भवति परमाणूनामतीन्द्रियत्वात्। न हि परमाणवः कदाचिदुपलभ्यन्ते। (ख) न परमाणवोऽतीन्द्रिया रूपादिमतामतीन्द्रियत्वनिवृत्तेः—न हि रूपादिमत् किञ्चिदतीन्द्रियमस्ति। दृष्टं च रूपादिमदैन्द्रियकं घटादि। (ग)ऐन्द्रियकाः परमाणव इति कोऽर्थः? किन्तावदिन्द्रियकरणप्रत्यक्षा उत इन्द्रियसम्बद्धा इति। किं चातः? यदीन्द्रियकरणप्रत्यक्षा ऐन्द्रियका इति, तन्न युक्तम्; न हीन्द्रियमन्यस्यान्यथाऽर्थं प्रकाशयति अन्यथाऽन्यस्य, इन्द्रियवृत्तीनाम् (३)अविकल्पत्वात्। भवतां चेत् परमाणव ऐन्द्रियका अस्मदादीनामप्यैन्द्रियकाः स्युः। अथेन्द्रियसम्बद्धा ऐन्द्रियका इति, तस्मिन्न् न विरोधः। न हि परमाणव इन्द्रियेण न सम्बध्यन्त इति। तस्मादिन्द्रियसन्निकर्षे सत्यपि महत्त्वाभावान्न परमाणव उपलभ्यन्त इति।

कथं पुनरवगम्यते महत्त्वमप्युपलम्भे रूपवत्कारणमिति? भावाभावयोस्तद्वत्त्वात्—यस्मात् सति महत्त्वे रूपे चोपलब्धिर्भवति असति च न भवति, तस्मादुभयं कारणमिति। यत्त्वत्रोक्तं

## न्यायवार्त्तिकतात्पर्यटीका

च चाक्षुषत्वमस्य भवति। एवं तोयदविमुक्तोदबिन्दूदधिसंयोगाद् द्रव्यान्तरोत्पत्तिः प्रतिपत्तव्या। भावोऽप्रत्यक्षः स्यादिति, 'भावः' सत्ता। ननु यथा संयोगः संयोगिद्वयनिरूपणाधीननिरूपणः तयोरेकस्यैवाप्रत्यक्षत्वे न प्रत्यक्ष एवमवयवाप्रत्यक्षत्वे नावयवी प्रत्यक्षः स्यादित्यत आह—न चायं पक्ष इति। संसृज्यमाननिरूपणाधीननिरूपणो हि संसर्गो (४)युक्तः, यत्तदनिरूपणे न निरूप्यत इति, न त्ववयवी अवयवनिरूपणाधीनो यत्तेष्वनिरूपितेषु न निरूप्यत इति, त्र्यणुकस्यावयवाग्रहणेऽपि ग्रहणात्, एवं विदूरवर्त्तिनो हस्तिवनस्पत्यादेरवयवाग्रहणेऽपि ग्रहणादिति भावः। न च तत्कृतोऽस्ति भेद इति, न ग्रहणाग्रहणकृतो भेद इत्यर्थः।

न हीन्द्रियम् अन्यस्य सांख्यस्य अन्यथा सूक्ष्मत्वेन अर्थं प्रकाशयति। अन्यस्य नैयायिकस्य अन्यथा स्थौल्येन अविकल्पत्वाद् ऐकरूप्येणावस्थानादिति।

(१) आदर्शपुस्तकयोः 'स्यात्' इत्यत्र 'प्राप्नोति' इति पाठः। (२) 'न चैतत्कृतः' इत्यादर्शपुस्तकयोः पाठः। (३) 'अविकल्पितत्वात्' क-ख। (४) आदर्शपुस्तकयोः 'युक्तम्' इति पाठः।

(क) ४७३ अङ्कितपत्रे भाष्यं द्रष्टव्यम्। (ख) चोदयति न परमाणव इति। (ग) विकल्प्य दूषयति ऐन्द्रियका इति।

## न्यायवार्त्तिकम्

(क)तेजःस्पर्शवदिति सति तेजःस्पर्शे उपलब्धिर्भवति असति च न भवति। न च तेजःस्पर्शोऽपि रूपवद् द्रव्योपलब्धेः कारणमिति, तन्न; व्यभिचारात्—व्यभिचारात् स्पर्शं उपलब्धेरकारणम्, न पुना रूपमहत्त्वे क्वचिद् व्यभिचरतः। तस्माद् रूपमहत्त्वे एवोपलब्धेः कारणमिति। अयञ्चार्थः सूत्रकारेण सूत्रद्वयेनोक्तः—"अद्रव्यद्रव्यत्वात् परमाणावनुपलब्धिः, रूपसंस्काराभावाद्वायोरनुपलब्धि"रिति(ख)। रूपसंस्कारो रूपसमवाय इति सूत्रार्थः। अथ पुनः स्पर्शस्यापि रूपमहत्त्ववदव्यभिचारः, कस्मात् स्पर्शो न कारणमिति वक्तव्यम्। समवधार्य चैतद्भवताऽभिधीयते स्पर्शवदेतत् स्यादिति। येन प्रमाणेनावधृतमेतत् स्पर्शो न कारणमिति, मयाऽपि तत एवाकारणत्वम्। अथाकारणत्वप्रतिपादकं न प्रमाणमस्ति, को ह्यस्य वाक्यस्यार्थः स्पर्शवदेतत् स्यादिति। तद्भावभावित्वं च व्यभिचारयता कार्यकारणभाव उच्छिन्नो भवति। इदमस्य कारणम् इदमस्य कार्यमिति परेण पर्यनुयुक्तस्तद्भावभावित्वव्यतिरेकेणान्येन (१)न प्रतिपादयसि अतो(१*) विरोधादनुत्तरमेतत्।

यत्पुनरेतद् अतीन्द्रियसंयोगातीन्द्रियत्वादिति—अतीन्द्रिययोः किलात्ममनसोः संयोगो ह्यतीन्द्रियो दृष्ट इति यदि च परमाणवोऽतीन्द्रियाः स्युः तत्कार्यमप्यतीन्द्रियं स्यात्, ऐन्द्रियकं च दृष्टम्, तस्मादैन्द्रियका इति; सोऽयं दृष्टान्तप्रयोगः, अतीन्द्रियसंयोगातीन्द्रियत्वादिति दृष्टान्तप्रयोगमात्रे च हेतुन्यूनता। योऽप्यत्र कथञ्चिद्धेतुर्लभ्यते नातीन्द्रियकार्यं महाभूतादि व्यक्तम् ऐन्द्रियकत्वाद् घटादिवदिति—घटाद्यैन्द्रियकमैन्द्रियककार्यं दृष्टं तथाच महाभूतादि व्यक्तमैन्द्रियकम्, तस्मात्तदप्यैन्द्रियककार्यमिति। अयमपि प्रत्यक्षप्रमाणविरोधाद्विरुद्धः, अनुष्णोऽग्निः कृतकत्वादिति यथा।

एके तु वातायनच्छिद्रदृश्यं त्रुटिं परमाणुं वर्णयन्ति। तन्न युक्तम्; तस्य भेद्यत्वात्—अभेद्यः परमाणुर्भिद्यते त्रुटिरिति। कथमवगम्यते भिद्यते (२)त्रसरेणुरिति? द्रव्यत्वे सत्य-

## न्यायवार्त्तिकतात्पर्यटीका

प्रत्यक्षप्रमाणविरोधादिति। महाभूतानां हि मूलकारणं परमाणवः परमसूक्ष्माः (३)तेषामप्रत्यक्षत्वं मानसानुव्यवसायगम्यं परमसूक्ष्मविषयं मे प्रत्यक्षमिति, तदभावश्चात्मनि संयुक्तविशेषणेन मनःसन्निकर्षेण प्रत्यक्षविरोध इत्यर्थः।

एके त्विति। यमेव हि त्र्यणुकं दृश्यं भवन्तो दृश्यावयवमाचक्षते तमेव वयं परमाणुमाचक्ष्महे न हि तदवयवकल्पनायामस्ति प्रमाणमिति भावः। कथमवगम्यते भिद्यते

(१) 'तस्य प्रतिपादयतो' इति क-वार्त्तिकपाठः। (२) आदर्शपुस्तकयोः 'त्रुटि'रिति पाठः। (३) 'तेषामप्रत्यक्षत्वे' इति ख।

(क) दूषणग्रन्थे स्पर्शपदमात्रोपादानात् पूर्वपक्षे तेजःपदप्रयोजनं चिन्त्यम्।

(ख) पण्डितवर्यश्रीमत्पञ्चाननतर्करत्नसम्पादिते वैशेषिकदर्शने तु चतुर्थाध्यायस्य प्रथमाह्निके षष्ठसूत्रं 'महत्यनेकद्रव्यवत्त्वात् रूपाच्चोपलब्धिः' सप्तमसूत्रम्—'सत्यपि द्रव्यत्वे महत्त्वे रूपसंस्काराभावाद् वायोरनुपलब्धिः' अष्टमसूत्रं च 'अनेकद्रव्यसमवायाद् रूपविशेषाच्च रूपोपलब्धिः' इत्याकारेण मुद्रितम्।

## न्यायवार्त्तिकम्

स्मदादिबाह्यकरणप्रत्यक्षत्वाद् घटवदिति। कथं चान्यथा अभेद्यः परमाणुरित्युच्यते। अनित्यत्वाच्च न परमाणुः(क) सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वाच्च। तस्मान्नैन्द्रियकाः परमाणव इति तेषामतीन्द्रियत्वात्। यत्प्रत्यक्षं तदन्यदिति विरुद्धो हेतुः।

संहतानामुत्पत्तिनिरोधात् नासंहतः परमाणुरस्तीत्यपरे—अपरे तु संहतं परमाणुं वर्णयन्ति संहता एव ह्युत्पद्यन्ते निरुध्यन्ते च, असंहतास्तु परमाणवो न सन्त्येवेति। तदयुक्तम्, संहतार्थस्यानुक्तत्वात्—असंहताः परमाणवो न सन्तीति ब्रुवता संहतशब्दार्थो वक्तव्यः। संघातो हि नाम बहूनामकार्यकारणभूतानां संयुक्तानामवस्थानम्। न चासंहतप्रतिषेधे संहतस्य निमित्तमस्ति संहन्यमानतन्त्रत्वात्—नित्यमयं संघातः संहन्यमानतन्त्रो भवति। न चासंहतप्रतिषेधे संहन्यमानमस्ति। तस्मान्नासंहतोऽस्तीति विरोधान्न किञ्चिदेतत्। एकप्रतिषेधादनेकाभ्युपगमवदिति। यथा नाम कश्चिन्मुग्ध एकप्रतिषेधादनेकमभ्युपेयात् तस्य चैकप्रतिषेधादनेकं निवर्तेत एकसमुदायत्वादनेकस्य, तथाविधमिदं भवतीति।

इतश्च नान्योऽवयव्यवयवेभ्यः संयोगाप्राप्त्यभावात्—यत् खलु यस्मादर्थान्तरं भवति तस्य तेन संयोगो भवत्यप्राप्तिर्वा, यथा गवाऽश्वस्य; न पुनस्तन्तुभिः पटस्य संयोगो न चाप्राप्तिस्तस्मान्नासौ तेभ्योऽर्थान्तरमिति। (ख) अवयविनः पक्षीकरणे संयोगविभागाभावस्य संयोगविभागविषयत्वादसम्बद्धम्(ग)। अथासंयोगित्वाविभागित्वे (घ) हेतुभूते, ते (१)असिद्धे—संयुज्यते

## न्यायवार्त्तिकतात्पर्यटीका

त्रसरेणुरिति, अङ्गुल्यग्राभ्यां मृद्यमानस्यास्यादर्शनं सूक्ष्मतयाऽप्युपपद्यते। जालसूर्यमरीचिस्थमेव तद्रजः कथञ्चिदुपलभ्यते नान्यथेति भावः। द्रव्यत्वे सतीति सामान्यसमवायौ निवर्त्तयति। बाह्येत्यात्मानं निवर्त्तयति। अनित्यत्वाच्चेति। अनन्तावयवत्वेन मेरुसर्षपयोरभिन्नपरिमाणत्वप्रसङ्गात् महाभूतमूलकारणमनवयवं कल्पनीयम्, न च द्रव्यमनवयवं विनश्यति आकाशादिवदिति नित्याः परमाणवस्त्रसरेणवस्त्वनित्या इति न परमाणुः। अनित्यत्वमेव कुत इत्यत आह—सामान्यविशेषवत इति।

संहतानामिति। रूपादीनां संघातः परमाणुरिति। न चासंहतप्रतिषेध इति, अप्रतिषेधे वा त एवासंहताः परमाणव इति भावः।

---

(१) 'तथाऽसिद्धेः' इति क।

(क) न परमाणुरिति साध्यम्, पक्षश्चात्र त्रसरेणुरित्यूहनीयम्। (ख) अत्र प्रतिषेधसूचकं 'अयुक्तं' इति 'न' इति वा आदर्शपुस्तकयोर्नोपलभ्यते। (ग) 'असम्बद्धं साधनमिति शेषः। 'संयोगविभागविषयत्वात्' संयोगविभागप्रतियोगिकत्वात्'। तथाच केवलान्वयित्वेन व्याप्तिरूपसम्बन्धशून्यम्, तथाच व्यभिचारः। (घ) पूर्वत्र संयोगविभागात्यन्ताभावस्य हेतुत्वमिह तु संयोगिविभागिभिन्नत्वस्येति पूर्वत्र हेतुरेकः इह तु हेतुद्वयमिति वा विशेषः।

## न्यायवार्त्तिकम्

चायं विभज्यते चेति। अथ स्वावयवेनासंयोगित्वात्(क), सोऽप्यनुपसंहार्यः नास्यान्वयो न व्यतिरेक इति। अथापि सर्पकुण्डलकाद्युदाहरणं स्यात्—सर्पकुण्डलकादि किल स्वकारणेनासंयोगि न चार्थान्तरमिति, तदसिद्धम्। यथा चार्थान्तरं सर्पकुण्डलकादि तथोक्तं पुरस्तात्। यदपि स्वकारणेनासंयोगीति ; तत्र चिन्त्यम्, किं गुणत्वात् स्वकारणेनासंयोगि अथानर्थान्तरभावादिति। वयन्तु ब्रूमो गुणत्वात्, न अनर्थान्तरभावात्। गुणश्च सर्पकुण्डलकः संयोगः, स चार्थान्तरमिति प्रतिपादितमेतत्। अर्थान्तरभावे च दर्शनाद्विरुद्धः—सत्त्वरजस्तमांसि भवतां पक्षे मिथोऽर्थान्तरभूतानि, तेषां च न संयोगो नाप्राप्तिरिति—प्रधानपुरुषयोर्न संयोगो नाप्राप्तिरुभयोर्व्यापकत्वाद्विरुद्धः।

नान्योऽवयव्यवयवेभ्यो गुरुत्वान्तरकार्याग्रहणात्। गुरुत्वान्तरकार्याग्रहणादित्येतन्न कथञ्चिदपि पक्षेण सम्बध्यते। क्व नान्योऽवयव्यवयवेभ्यः, क्व च गुरुत्वान्तरकार्याग्रहणम्। गुरुत्वान्तरकार्याग्रहणाद् गुरुत्वान्तरकार्यं न स्यात्, न गुरुत्वं न गुरुत्वान्तरं नावयवी। नोदकप्रतिषेधात् कमण्डलोः कपालानां वा प्रतिषेधो युक्तः।

एके तु गुरुत्वान्तरकार्याग्रहणादित्यनेन गुणान्तरारम्भं प्रतिषेधन्ति उदाहरणमात्रार्थत्वाद् गुरुत्वान्तरारम्भप्रतिषेधस्य। कथमिति? न कार्यं कारणरूपादिपूर्वकरूपादिमत् गुरुत्वान्तरवत्त्वप्रसङ्गात्—यदि कारणगता रूपादयः कार्ये रूपादीन्यारभेरन् अपि तर्हि कारणगतान्यपि गुरुत्वानि कार्ये गुरुत्वान्तरमारभेरन्, ततश्च गुरुत्वान्तरवत् कार्यमुपलभ्येत, न चोपलभ्यते, तस्मान्न कारण(१)रूपादिपूर्वकरूपादिमत्कार्यमिति। सत्यमुपपादितः पक्षधर्मः स तु प्रत्यक्षविरोधान्न किञ्चित्। कथमिति? अभ्युपेत्य कार्यं रूपादयः कार्ये प्रतिषिध्यन्ते, कार्याभ्युपगमाच्च प्रतिषेध्यमभ्यनुज्ञातं भवति। कारणरूपादयश्च कार्यरूपादीन् नारभन्ते इति ब्रुवतः कार्य-

## न्यायवार्त्तिकतात्पर्यटीका

संयुज्यते चायं विभज्यते च अयमवयवन्तरेणेति। न व्यतिरेक इति। यथा भिन्नात् संयोगप्राप्त्यभावो व्यावृत्त एवमभिन्नादपि। न हि स एव तन्तुस्तेनैव तन्तुना प्राप्यत इत्यर्थः। सर्पकुण्डलोदाहरणे अन्वयी हेतुरित्यर्थः। सत्त्वरजस्तमसां न संयोगः किन्तु तेषां स्वाभाविकः स कोऽपि परिणतिभेदो यतः संभूयकारित्वमित्यर्थः।

गुरुत्वान्तरकार्याग्रहणादिति। अवयवगुरुत्वाद् गुरुत्वान्तरमवयविनः, तस्य यत्कार्यमवनतिविशेषस्तस्याग्रहणादित्यर्थः। सत्यमुपपादितः पक्षधर्म इति। कार्याग्रहणेन कार्याभावस्ततः कारणस्य गुरुत्वस्याभाव इत्यर्थः। प्रतिषेध्यं कार्यगतरूपादि, तद् अभ्यनुज्ञातं

(१) '-रूपादिमत्पूर्वक-' कं।

(क) स्वावयवेनासंयोगित्वादित्येवं हेतुरिति शेषः।

## न्यायवार्त्तिकम्

मगुणं स्यात्, न त्विदमगुणं दृश्यते, ततश्च विरोधादयमहेतुः। अथ कार्यं नैवास्ति, न कार्यं कारणरूपादिपूर्वकरूपादिमदित्यनर्थकम्। न हि कमण्डलोरभावे अनुदकः कमण्डलुरिति युक्तं वक्तुम्। एतेन कार्ये रूपादिप्रतिपत्तिः प्रत्युक्ता। यश्चायं हेतुः गुरुत्वान्तरवत्त्वप्रसङ्गादिति, अयमप्यभ्युपगमान्न किञ्चित्—नाभ्युपगम एव (१)निषेध्यत्वेन दृश्यते। (क) यदि तर्हि गुरुत्वान्तरवत् कार्यद्रव्यं रूपाद्यन्तरवच्च ततो गुरुत्वान्तरकार्यमुपलभ्येत यथा रूपाद्यन्तरकार्यम्, न तूपलभ्यते। न हि तुलायां विभक्तपिण्डद्वयोपन्यासवत् सम्बद्धयोरपि कार्यभेदं पश्यामः, तस्माद्विभक्तयोरिव संयुक्तयोरपि नास्ति द्रव्यान्तरारम्भ इति।

केचित्तु न गुरुत्वान्तरवत्कार्यद्रव्यवती तुलेति पक्षयित्वाऽवनमनविशेषाभावादिति हेतुं ब्रुवते। सोऽयं व्यधिकरणः अवनमनविशेषाभावस्यातुलाधर्मत्वात्—न ह्यवनमनविशेषाभावस्तुलाधर्म इति। एवं तु युक्तमुत्पश्यामः—अवनमनविशेषानाधारत्वान्न गुरुत्वान्तरवत्कार्यद्रव्यवती तुलेति। असिद्धस्तावदयं हेतुरवनमनविशेषानाधारत्वस्यातुलावृत्तित्वात्, न तद्वत्तानुपलब्धेः। अयमप्यनैकान्तिकत्वादहेतुः गुरुत्वान्तरवद्द्रव्यसन्निपाते सत्यवनमनविशेषानाधारत्वस्य दृष्टत्वात्, यथा गुरुत्ववति द्रव्ये उन्मीयमाने त्रुटिभूते रजसि गुरुत्ववति (ख)सन्निपतित इति। महागुरुत्वे चोन्मीयमाने गुरुत्वमात्रोपहितानामवनमनविशेषं न करोति। समहीनाधिकप्रसङ्ग इति चेत्—यदि तावत् कारणगुरुत्वैः समं कार्यगुरुत्वं यावद् द्विपलाभ्यामसम्बद्धेऽवनमनं द्विस्तावत्सम्बन्धे सति स्यात्।

## न्यायवार्त्तिकतात्पर्यटीका

भवतीति। तथाऽपि कुतः प्रत्यक्षविरोध इत्यत आह—कारणरूपाद्य इति। चो हेतौ। एतेन कार्ये रूपादिप्रतिपत्तिः प्रत्युक्ता। (ग)निषेध्यत्वेनेति। यदा हि कार्यमेव रूपादि नास्ति तदा कस्मात्तत्र रूपादिप्रतिपत्तिः प्रतिषिध्यते इत्यर्थः। यथा रूपाद्यन्तरकार्यमिति। अवयविगतानां रूपादीनां कार्यं रूपसंस्कारादवयविनश्चाक्षुषता, (घ) एवं दृश्यतेति। उपन्यासः स्थापनम्।

यद्यप्ययमवनमनविशेषाभावस्तुलाव्यधिकरणः (ङ) तथाऽपि न शाब्दी तुलासंबन्धिताऽस्य प्रतीयते किं त्ववनमनविशेषसंबन्धितेत्येतावतोक्तं सोऽयमिति। असिद्धस्तावदित्येकदेशिनो दूषणम्। तदेतदेकदेशिदूषणं दूषयति—न तद्वत्तानुपलब्धेः। परमार्थदूषणमाह—अयमपीति। गुरुत्वमात्रोपहितानाम् अणूनाम् अवनमनविशेषं न करोति तुला।

---

(१) आदर्शपुस्तकयोः 'निषेध्यत्वेन' इत्यत्र 'दोषत्वेन' इति पाठः।

(क) 'यदि तर्हि'त्यादिः 'नास्ति द्रव्यान्तरारम्भ इति' इत्यन्तो ग्रन्थः 'गुरुत्वान्तरवत्त्वप्रसङ्गा'दित्यस्य विवरणरूपः अयमप्यभ्युपगमादित्यादिः 'दृश्यते' इत्यन्तो ग्रन्थश्च दूषणग्रन्थतया 'द्रव्यान्तरारम्भ इति' इत्यनन्तरमेव पठितुं युक्तः। अनयोः स्थानविपर्यये लिपिकृत्प्रमाद एव हेतुः, इत्यश्च तात्पर्यटीकाग्रन्थस्याप्यत्र स्थानविपर्यय इति सम्भाव्यते। व्यक्तमेतत् घ-टिप्पन्याम्। (ख) "स निपतित" इति क। इतिशब्दोऽत्र सम्पातायातः। तथा च सन्निपतिते महागुरुत्वे इति समीचीनम्। (ग) अत्र 'निषेध्यत्वेनेति' इति लिपिकृत्प्रमादादागतमिति सम्भाव्यते। 'एवं निषेध्यत्वेन न दृश्यते' इति पाठः समीचीनः सम्भाव्यते। एवमिति अन्यत् घ-टिप्पन्यां द्रष्टव्यम्। (घ) अत्र अभ्युपगम्यमानं गुरुत्वान्तरकार्यमित्यर्थः। (ङ) शाब्दी इत्यनेन वाधबुद्ध्या प्रतिबन्धादप्रतीतिरिति सूचितम्। 'न तथापि त शाब्दी' इति ख-पुस्तके पाठः।

## न्यायवार्त्तिकम्

अथ कारणगुरुत्वाधिकं कार्यगुरुत्वम्, तथाऽप्यधिकं प्रसज्येत। अथ कारणगुरुत्वाद्धीनं कार्यगुरुत्वम्, तथाऽपि विशेषो गृह्येत, न त्विदमस्ति, तस्मान्न कार्यगुरुत्वमस्ति। न, कार्यकारणगुरुत्वेयत्तानवधारणात्—यद्येतदवधारितं स्यात् एतावत् कारणगुरुत्वमेतावत् कार्यगुरुत्वमिति, तदैतद् युज्यते वक्तुं समाधिकहीनकार्यप्रसङ्ग इति, तत्त्वनवधारितम् इयत्कारणे गुरुत्वम् इयत्कार्ये गुरुत्वमिति। यदि (१)न कार्यकारणगुरुत्वमवधारितं योऽयं प्रत्ययस्तुलयोन्मीयमाने द्रव्ये द्विपलं पञ्चपलमिति न प्राप्नोति। न न प्राप्नोति द्रव्यसमाहारगुरुत्वावधारणात्—यदिदं भवता मन्यते द्विपलं पञ्चपलमिति नात्र कार्यकारणगुरुत्वे अवधार्येते, किं त्वा चरमादा च(२)परमाणोर्द्रव्यसमाहार उन्मीयते। तत्र मनुष्यधर्मणो न युक्तं वक्तुमियत् कारणगुरुत्वमियत् कार्यगुरुत्वमिति। न च समाहारः कारणमपि त्वनारब्धकार्यं चरमद्रव्यं कारणमिति।

केचित्त्वारभ्यारभन्त इति प्रतिपद्यन्ते, तान् प्रतीदमुच्यते—न पूर्वोत्तरकार्यद्रव्ये (३)समानकालदेशे मूर्तत्वात् घटादिवदिति। शेषस्त्वारभ्यारम्भकविचारो (४)नाप्रस्तुतत्वान्निराक्रियते। निरनुमानं तर्हि कार्यगुरुत्वं यदि गुरुत्वान्तरवद्द्रव्योपचये सति कार्यभेदो न गृह्यते कथं प्रतिपद्येत इति। क एवमाह कार्यगुरुत्वं न गृह्यत इति। यदि गृह्यते, किं तत्? पतनम्। न हि कार्यगुरुत्वमन्तरेण कार्यपातेऽन्यो हेतुरस्ति, तस्माद् गुरुत्वान्तरवत् कार्यमिति। एतेन तुलावनतिविशेषाग्रहान्न कार्यगौरवमिति प्रत्युक्तम्। अथ मन्यसे कारणगुरुत्वेनैव कार्यं पात्यते न कार्यगुरुत्वमस्ति अतः कार्यपातस्यान्यनिमित्तत्वान्न सिध्यति गुरुत्वान्तरवत् कार्यमिति। न, कार्यकारणयोरसंयोगात्—यत्र गुरुत्वमाश्रयान्तरपाते हेतुर्भवति तत्र संयोग उपकरणम्, यथा तुलापटलकगुरुत्ववद्द्रव्यसंयोग इति; न तु कार्यकारणयोः संयोगोऽयुतसिद्धत्वात्—युतसिद्धिरसम्बद्धस्य विद्यमानता, न पुनः कार्यं कारणासम्बद्धं विद्यते जातः सम्बद्धश्चेत्येकः कालः, तस्मान्न कार्यकारणे

## न्यायवार्त्तिकतात्पर्यटीका

द्रव्यसमाहार इति कार्यकारणद्रव्यसमाहारः, मृत्कण-मृच्चूर्ण-शर्करा-कपाल-कुम्भसमाहार इत्यर्थः। ननु समाहारः कुम्भस्य कारणं तच्च ज्ञातेयद्गुरुत्वमेवेत्यत आह—न चेति।

ये त्वाहुः—सर्वो मृत्कणादिः कुम्भपर्यवसानः कार्यसमूहः परमाणुष्वेव समवैति ते हि मृत्कणादिकमारभ्य मृच्चूर्णान्यारभन्त इति, प्रसङ्गात्तन्मतमपाकर्त्तुमुपन्यस्यति—केचित्त्विति। निराकरोति—तान् प्रतीदमिति।

---

(१) 'कार्यकारणगुरुत्वे नावधार्येते' इति पाठान्तरमादर्शपुस्तकयोर्दृष्टम्।
(२) 'परमाणोर्याद्द्रव्य-' इति क-वार्त्तिकपाठः।
(३) 'समानदेशे' इति ख। (४) '-ऽप्रस्तुतत्वान्न क्रियते' वा।

## न्यायवार्त्तिकम्

संयुक्ते। समवायोपकरणं गुरुत्वं पातयिष्यतीति चेत्, न ; असङ्कीर्तनाद् विरोधाच्च। अथ मन्यसे सत्यं न कार्यकारणयोः संयोगोऽस्ति, अस्ति च समवायः, समवायो गुरुत्वापेक्षः कार्यं पातयिष्यतीति न सिध्यति कार्यगुरुत्वम्। न ; असङ्कीर्तनात्—न समवायः क्रियाहेतुत्वेन क्वचिदपि सङ्कीर्तितः सूत्रकारेण यथा संयोगः, "नोदनाभिघातसंयुक्तसंयोगाच्च पृथिव्यां कर्मेति" (क)। न केवलमसङ्कीर्तनादेव, विरोधाच्च। यदि समवायः क्रियाहेतुः स्यात् कारणरूपादयोऽपि कार्येणैकार्थसमवायात् पतेयुः। पतन्तु रूपादयोऽपि, किन्नो बाध्यत इति चेत्, न; गुरुत्वस्यापि पातप्रसङ्गात्—यथा रूपादयः कार्यद्रव्यमनुपतन्ति तथा गुरुत्वमप्यनुपतेत्। गुरुत्वं चानुपतत् कुतः पततीति वक्तव्यम्, न तु गुरुत्वस्य गुरुत्वान्तरं पातहेतुरस्ति। तस्मान्न गुरुत्वं पतति न रूपादयः पतन्तीति। यदि रूपादयो न पतन्ति द्रव्ये पतति तिष्ठेयुरित्यद्रव्या रूपादयः स्युः द्रव्यं च रूपादिहीनमुपलभ्येत। अथ द्रव्ये पतति पतन्ति, क्रियावन्तो रूपादयः प्राप्नुवन्ति। अथ न तिष्ठन्ति न पतन्ति, सोऽयं युक्तिविरोधोऽवश्यं भवताऽभ्युपगन्तव्यः पतति पतन्ति तिष्ठन्ति वेति। वेद पुनर्भवान् युक्तायुक्तयोर्नानाकारणम्। वेद्मीति परः—युक्तं प्रमितमयुक्तमप्रमितम्। अयुक्तं तर्हीदं पतति पतन्ति (१)तिष्ठति तिष्ठन्तीति वा। तच्चोक्तम्—गुरुत्वस्य गुरुत्वान्तरप्रसङ्गाद् रूपादिशून्यस्य द्रव्यस्यादर्शनात् अद्रव्याणां च रूपादीनामदर्शनादिति। यच्च पतति गच्छति वा तत्प्राप्तं जहाति अप्राप्तं चाप्नोति, न पुना रूपादयः प्राप्तं जहत्यप्राप्तं वा प्राप्नुवन्ति। रूपादयोऽप्राप्तं न प्राप्नुवन्तीति न युक्तम्—भवति हीदं द्रव्ययोः प्राप्तयो रूपे अपि प्राप्ते इति।

## न्यायवार्त्तिकतात्पर्यटीका

गुरुत्वमनुपतदिति। न च यथा प्रदीपाधीनप्रकाशा घटादयः, न तु प्रदीपः प्रदीपाधीनप्रकाशः तस्य स्वमहिमनिषिद्धतमोऽनुषङ्गत्वात्, एवं गुरुत्वाधीनपाता घटादयः, गुरुत्वं तु स्वस्य चान्येषां च गुरुत्वान्तरानपेक्षं पतनहेतुरिति वक्तव्यम्, न हि प्रदीपेन स्वात्मनि प्रकाशयितव्ये किंचिदन्यत् क्रियते यादृशा घटादयः स्वप्रकाशोत्पादे तादृशः प्रदीपोऽपि। चक्षुषः पुनरयं स्वभावभेदो येन घटादौ प्रकाशयितव्ये प्रदीपमपेक्षते न तु प्रदीपे प्रकाशयितव्ये प्रदीपान्तरमिति। तस्मान्न प्रदीपस्य स्वात्मनि कर्मकरणभावः। गुरुत्वं तु द्रव्यगतस्य पतनकर्मणः करणम्, तेन हि द्रव्यं पात्यते, स्वगतस्य तु पतनकर्मणः करणत्वे तदेव कर्म करणं चेति स्वात्मनि वृत्तिविरोधः। आत्मनस्तु स्वात्मनि प्रकाशयितव्ये कर्तृत्वमेव न कर्मत्वमित्युपपादितमिति। तस्माद् गुणादयो (ख)विवादाधिकरणा न पतन्ति अद्रव्यजातीयत्वाद् गुरुत्ववदिति सिद्धम्। सिद्धान्त्याह—

(१) 'तिष्ठति' इति ख-पु० नास्ति।

(क) वैशेषिकसू० अ० ५ आ० २ सू० १।

(ख) अत्राधिकरणशब्दस्य पुंस्त्वं प्रयत्नेनोपपादनीयम्।

## न्यायवार्त्तिकम्

न, सन्देहात्—किमयं प्राप्तिप्रत्ययः प्राप्तिनिमित्त आहो अप्राप्तेरदर्शननिमित्त इति सन्दिह्यते। वयन्तु ब्रूमः अप्राप्तेरदर्शननिमित्त इति। नहि द्रव्ययोः प्राप्तयो रूपयोरप्राप्तिं पश्यति। द्रव्ययोरप्येवमेवेति चेत्—अथ मन्यसे यथा रूपयोः प्राप्तिप्रत्ययोऽप्राप्तेरदर्शननिमित्तः एवं द्रव्ययोरप्राप्त्यदर्शननिमित्तो भवति न प्राप्तिनिमित्त इति। नैष दोषः; प्रत्ययद्वैतस्यानेकनिमित्तत्वात्—न खलु प्रत्ययद्वैतमेकनिमित्तं दृष्टम्, तद्यथा चित्रगतासु प्रतिकृतिषु क्रोधभयपरिहारेऽपि क्रुद्धभीतप्रत्यया भवन्ति न तावता पुरुषेष्वपि क्रोधभयाभावे क्रुद्धभीतप्रत्ययाः प्रादुर्भवितुमर्हन्तीति। एवमयं प्राप्तिप्रत्ययः क्वचित् संयोगनिमित्तः क्वचिदप्राप्त्यदर्शननिमित्त इति। तस्माद्व्यवस्थितं न गुरुत्वं पतति न रूपादयः पतन्तीति।

अपरे तु कार्यगुरुत्वेन कारणगुरुत्वं प्रतिबद्धं ब्रुवते। कार्यगुरुत्वैः किल कारणगुरुत्वानि प्रतिबद्धानि, अतोऽवनतिविशेषो न भवति। एतत्तु न युक्तमिति पश्यामः। कुतः? कार्यकारणयोः पातदर्शनात्—यदि कार्यं पतति कारणमवतिष्ठेत प्रतिपद्येमहि कार्यगुरुत्वेन कारणगुरुत्वं प्रतिबद्धमिति, न त्विदमस्ति, अतोऽयुक्तमेतत्। अनाधारत्वप्रसङ्गाच्च—यदि कार्यगुरुत्वेन कारणगुरुत्वं प्रतिबद्धं न (१)कारणं क्रियामारभेत, कार्यं पतति न कारणं पतेदिति कार्यमनाधारं स्यात्। एतेन कार्यगुरुत्वेन कारणगुरुत्वविनाशोऽपि व्याख्यातः। विभक्तानां च पातो न स्यादित्यधिकम्—यदि कार्यगुरुत्वेन कारणगुरुत्वं विनाश्येत कार्यद्रव्यविनाशात् कारणानां विभक्तानां पातो न स्यात्। गुरुत्वमेव च न स्याद् यदि कार्यगुरुत्वेन कारणगुरुत्वं विनाश्येत—अपि तर्हि न क्वचिद् गुरुत्वं स्यात्, नहि कस्यचित् परमाणोरतीतं कार्यं नास्ति, अतोऽगुरवः परमाणवः स्युः; परमाणुषु च गुरुत्वाभावात् कार्यगुरुत्वं कुत उत्पद्येत। तस्मादप्रतिषेधोऽयं कार्यगुरुत्वैः कारणगुरुत्वानां विनाशप्रतिबन्धाविति। अतः पूर्व एव प्रतिषेधो नानैकान्तादिति कार्यकारणगुरुत्वानवधारणाच्च। तदेवमवयविनोऽसत्त्वाव्यतिरेकप्रतिपादकं न प्रमाणमस्तीत्यतः साध्यत्वादवयविनि सन्देह इत्ययुक्तम्।

अतश्च साध्यत्वादवयविनि सन्देह इति न युक्तम्, असङ्कीर्तनात्—नहि साध्यत्वं संशयहेतुरिति कीर्तितं क्वचिदपि, अतो न भवति साध्यत्वात् संशयः। क एवमाह साध्यत्वात् संशयः? अपि तु साध्यत्वाद्विप्रतिपत्तिः विप्रतिपत्तेः संशय इति। साध्यत्वकार्यायां विप्रतिपत्तौ साध्यत्वमध्यारोप्योक्तं—साध्यत्वादवयविनि सन्देह इति ॥ ३३ ॥

## न्यायवार्त्तिकतात्पर्यटीका

वेद पुनरिति। कारणं प्रमाणम्। रूपादयो न संयोगरूपप्राप्तिमन्तः गुणत्वात् संयोगवदित्यप्राप्तेः रूपादिषु निश्चयात्तददर्शननिमित्तो रूपादिषु प्राप्तिभ्रमः द्रव्येषु प्राप्तिप्रत्ययः पारमार्थिक एवेति विनिश्चयः। तदनेनाभिप्रायेणोपसंहरति—तस्माद् व्यवस्थितमिति। शेषमतिरोहितार्थम्॥ ३३ ॥

(१) 'कारणक्रियामारभेत' क, 'कारणे क्रियामारभेत्' ख।

## (सू० )—सर्वाग्रहणमवयव्यसिद्धेः ॥ ३४ ॥

### न्यायभाष्यम्

यद्यवयवी नास्ति सर्वस्य ग्रहणं नोपपद्यते। किं तत्सर्वम् ? द्रव्यगुणकर्मसामान्यविशेषसमवायाः। कथं कृत्वा ? परमाणुसमवस्थानं तावद् दर्शनविषयो न भवत्यतीन्द्रियत्वादणूनाम्, द्रव्यान्तर(१)ञ्चावयविभूतं दर्शनविषयो नास्ति, दर्शनविषयस्थाश्चेमे द्रव्यादयो गृह्यन्ते (२)ते निरधिष्ठाना न गृह्येरन्। (३)गृह्यन्ते तु कुम्भोऽयं श्याम एको महान् संयुक्तः स्पन्दते अस्ति मृन्मयश्चेति, सन्ति चेमे गुणादयो धर्मा इति। तेन सर्वस्य ग्रहणात् पश्यामोऽस्ति द्रव्यान्तरभूतोऽवयवीति ॥ ३४ ॥

### न्यायवार्त्तिकम्

संशयापाकरणार्थं सूत्रम्—

सर्वाग्रहणमवयव्यसिद्धेरिति। सर्वेषामर्थानामग्रहणं प्रसज्येत यद्यवयवी अर्थान्तरभूतोऽवयवेभ्यो नास्ति इति। कथमिति ? परमाणवस्तावद्व दर्शनविषयभावं नाऽऽपद्यन्ते अतीन्द्रियत्वादित्युक्तम्। अवयविद्रव्याणि च भवद्भिर्न प्रतिपद्यन्ते, तदनभ्युपगमे च योऽयं द्रव्यप्रत्ययः कुम्भ इति, गुणप्रत्ययश्च श्याम इति, क्रियाप्रत्ययश्चलतीति, सामान्यप्रत्ययोऽस्तीति, विशेषप्रत्ययः कलश इति, समवायप्रत्यय इह घटे रूपादय इति, तथाऽन्येऽपि प्रत्यया एको महान् संयुक्तो विभक्तः पृथक् परोऽपर इति च न स्युः। अस्ति च सर्वस्य ग्रहणं द्रव्यगुणकर्मादिप्रपञ्चस्य, तेन सर्वस्य ग्रहणात् पश्यामोऽवयवातिरिक्तोऽस्त्यवयवीति।

अथवा सर्वाग्रहणमिति सर्वैः प्रमाणैरग्रहणम्। कथम् ? प्रत्यक्षस्य वर्तमानमहद्विषयत्वात्—यद्वर्तमानं यत् महच्च तद् बाह्यकरणप्रत्यक्षम्, घटाद्यवयविप्रत्याख्याने च न बाह्यकरणप्रत्यक्षविषयोऽस्ति, तस्याभावादनुमानादेरप्यभावः, सेयं सर्वप्रमाणनिवृत्तिः। उपलभ्यन्ते चार्थाः प्रत्यक्षादिभिः

### न्यायवार्त्तिकतात्पर्यटीका

सर्वा—द्धेः (सू० ३४ )॥ स्यादेतत्—यथाऽवयविनं नाभ्युपैति परः एवं गुणकर्माद्यपि।

### वृत्तिः

सिद्धान्तसूत्रम्—( सर्वेति )

अवयविनोऽसिद्धौ तद्गुणकर्मादीनां सर्वेषामग्रहणम्। तथा च सकम्पाकम्पत्वरक्तारक्तत्वादिकमपि न सुग्रहं परमाणुगतत्वात्, प्रत्यक्षे महत्त्वस्य हेतुत्वात् ॥ ३४ ॥

---

(१) 'च' इति नास्ति ग०। (२) 'तेन निरधिष्ठाना' इति ल-फ-ग-ज०। (३) 'गृह्यते च कुम्भो-' टि०।

## ( सू० )—धारणाकर्षणोपपत्तेश्च ॥ ३५ ॥

### न्यायभाष्यम्

अवयव्यर्थान्तरभूत इति ।

सङ्ग्रहकारिते वै धारणाकर्षणे । संग्रहो नाम संयोगसहचरितं गुणान्तरं स्नेहद्रवत्वकारितम्, अपां संयोगादामे कुम्भे, अग्निसंयोगात् (१)पक्के । यदि त्ववयविकारिते अभविष्यतां पांशुराशिप्रभृतिष्वप्यज्ञास्येताम् । द्रव्यान्तरानुत्पत्तौ च तृणोपलकाष्ठादिषु जतुसंगृहीतेष्वपि नाभविष्यतामिति ।

### न्यायवार्त्तिकम्

प्रमाणैः, तैः सर्वैर्ग्रहणात् पश्यामोऽस्त्यवयवीति । तदिदं सूत्रमवयव्यनभ्युपगमे विरोधप्रदर्शनपरम् । सोऽयं सर्वाकारो विरोधो लोकपरिदृष्टप्रत्ययोच्छेद इति ॥ ३४ ॥

धारणाकर्षणोपपत्तेश्च । अवयव्यर्थान्तरभूत इति चार्थः । किमिदं धारणं नाम ? एकदेशग्रहणसाहचर्ये सत्यवयविनो देशान्तरप्राप्तिप्रतिषेधो धारणम् । यदाऽयमवयविन एकदेशं गृह्णाति तदैकदेशग्रहणेन सहावयविनमपि गृह्णाति । तेन च ग्रहणेन यदवयविनो देशान्तरप्राप्तिनिराकरणं तद्धारणम् । आकर्षणं नाम एकदेशग्रहणसाहचर्येण यदवयविनो देशान्तरप्रापणं पूर्ववत् । कुत एतत् ? लोकतः—लोकः खलु धारणाकर्षणे एवं प्रयुङ्क्ते इति । ते एते धारणाकर्षणे अवयविनं साधयतः । कथमिति ? निरवयवे चावयवे चादर्शनात्—नहि धारणाकर्षणे निरवयवे अवयवे च दृष्टे, दृष्टे च धारणाकर्षणे, तस्मादवयविधर्माविति ।

यत्त्वत्रोक्तं संग्रहकारिते धारणाकर्षणे नावयविकारिते पांशुराशिप्रभृतिष्वभावात् तृणोपल-

### न्यायवार्त्तिकतात्पर्यटीका

तत् कथमयं प्रसङ्गः परस्य सर्वाग्रहणमित्यत आह—तदिदं सूत्रमिति । योऽपि हि तावद् गुणकर्मादि नेच्छति सोऽपि न तत्प्रत्ययमपह्नुते, अस्ति लौकिकपरीक्षकाणामवयविद्रव्यगुणकर्मादिप्रत्ययः, सोऽयमशक्यापह्नवः । तस्य च प्रत्यक्षत्वमुपपादितं प्रत्यक्षलक्षणे । अवयविद्रव्यबाधकानि च प्रमाणानि अधस्तान्निराकृतानि । सोऽयमसति बाधके स्वयं च गुणादिभिश्च सहोपलभ्यमानो न शक्यो निराकर्त्तुमित्यधिकरणार्थः ॥ ३४ ॥

धार—श्च (सू० ३५) ॥ ते एते धारणाकर्षणे गोघटादिकमुपलभ्यमानमवयविनं साधयतः । कुतः ? निरवयवे विज्ञानाकाशादौ अवयवे च परमाणौ चादर्शनात् । इदमेवं प्रयोगमारोहति । योऽयं दृश्यमानो गोघटादिरवयवी परमाणुसमूहभावेन विवादाध्यासितः नासावनवयवी धारणाकर्षणानुपपत्तिप्रसङ्गात् । यो योऽनवयवी तत्र तत्र धारणाकर्षणे न भवतः, यथा विज्ञानादौ । न चायं गोघटादिस्तथा, तस्मान्नानवयवीति ।

(१) 'सक्ते' इति टि० ।

### न्यायभाष्यम्

अथावयविनं प्रत्याचक्षाणको मा भूत् प्रत्यक्षलोप इत्यणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति। एकमिदं द्रव्यमित्येकबुद्धेर्विषयं पर्यनुयोज्यः—किमेकबुद्धिरभिन्नार्थविषयेति आहोस्वित् (१)भिन्नार्थविषयेति। अभिन्नार्थविषयेति

### न्यायवार्त्तिकम्

काष्ठादिषु जतुसंगृहीतेषु च दर्शनादिति, तन्न, अनवधारणात्। न ब्रूमः सर्वस्मिन्नवयविनि धारणाकर्षणे भवतः, अपि त्वन्यत्र न भवतः। न च विरोधः, अवयविष्वेव दर्शनात्—यानि तृणोपलकाष्ठानि जतुसंगृहीतान्याकृष्यन्ते (क)धार्यन्ते च अवयविन एव ते। यदि च निरवयवे चावयवे च धारणाकर्षणे स्यातां स्याद्विरोधः। यदिदमुच्यते संग्रहकारिते ते इति, न; विशेषहेत्वभावात्—संग्रहकारिते धारणाकर्षणे नावयविकारिते इति न च भवता विशेषहेतुरपदिश्यते इति। पांशुराशिप्रभृतिषु च कस्मात् संग्रहो नास्तीति वाच्यम्। य एवात्र संग्रहाभावे भवतो हेतुः स एवावयविनो विद्यमानस्य धारणाकर्षणयोरभाव इति। कः पुनरसौ ? उक्तोऽसावेकदेशगृहीतस्य तत्सहचरितस्य सम्बन्धविशेष इति। स च पांशुराशिप्रभृतिषु नास्ति। तस्मान्न तत्र धारणाकर्षणे इति सोऽयं व्यतिरेकी हेतुः।

अथेदानीमन्वयिनो हेतोः प्रयोगमुपन्यसिष्यन्निदमाह—"अथावयविनं प्रत्याचक्षाणको मा

### न्यायवार्त्तिकतात्पर्यटीका

न विरोध इति, व्यभिचारलक्षणो दोषो विरोधः। अवयविन एव ते प्रत्येकमिति, परमाणुसमूहे तु प्रत्येकमपि न परमाणवोऽवयविन इत्यर्थः। विशेषहेत्वभावादिति। एवं हि विशेषहेतुः स्याद् यद्यवयविनमन्तरेण क्वचिद्विज्ञानाकाशादौ संग्रहश्चोक्तलक्षणो धारणाकर्षणहेतुता वाऽस्य दृष्टा स्यात्, न चासौ दृश्यते ; काष्ठतृणोपलादयः प्रत्येकमवयविन एवेत्यर्थः। स्यादेतत्—अवयवित्वेन तुल्यत्वेऽपि कस्मादेकत्र धारणाकर्षणे नान्यत्रेत्यत आह—पांशुराशीति। समूहमात्रत्वेन तुल्यत्वेऽपि यथा कश्चिद्विशेषे हेतुरेवमवयवित्वेन तुल्यत्वेऽपीति समानमित्यर्थः। तत्सहचरितस्य संबन्धविशेषः स्नेहद्रवत्वकारित इति। तस्माद्भाष्यकारस्य सूत्रदूषणं परमतेन द्रष्टव्यम्।

### वृत्तिः

हेत्वन्तरमाह—( धारणेति )

अवयवेभ्योऽवयव्यतिरिच्यते तथा सति धारणाकर्षणयोरुपपत्तेः, अन्यथा परमाणुपुञ्जत्वे चैकदेशधारणेन सकलधारणमेकदेशाकर्षणेन सकलाकर्षणं च न स्यादित्यर्थः ॥ ३५ ॥

---

(१) 'नानार्थवि-' ज०।

(क) आदर्शपुस्तकयोः 'धार्यन्ते चेति अवयविन एवैते' इति पाठ एवं शोधितः।

### न्यायभाष्यम्

चेत्—अर्थान्तरानुज्ञानादवयविसिद्धिः। नानार्थविषयेति चेत्—भिन्नेऽनेकदर्शनानुपपत्तिः, अनेकस्मिन्नेक इति व्याहता बुद्धिर्न दृश्यत इति ॥ ३५ ॥

## (सू०)—सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनाम् ॥३६॥

यथा सेनाङ्गेषु (१)वनाङ्गेषु च दूराद्गृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिः (२)एवमणुषु सञ्चितेष्वगृह्यमाणपृथक्त्वेष्वेकमिदमित्युपपद्यते बुद्धिरिति। यथा गृह्यमाणपृथक्त्वानां (३)सेनावनाङ्गानामारात् कारणान्तरतः पृथक्त्वस्याग्रहणम्,

### न्यायवार्त्तिकम्

भूत् प्रत्यक्षलोप इति अणुसञ्चयं दर्शनविषयं प्रतिजानानः किमनुयोक्तव्य इति। एकबुद्धेर्विषयं पर्यनुयोज्यः" येयं बुद्धिरेकमिदं द्रव्यमिति किमियं नानाविषया उताभिन्नविषयेति। यदि नानाविषया, बहुष्वदर्शनादयुक्ता—न च बहुष्वेकमिदमिति युक्तः प्रत्ययः। अथाभिन्नार्थविषया, योऽसावेकबुद्धेर्विषयः सोऽवयवीति। एकानेकबुद्धी भिन्नविषये विशेषवत्त्वाद् रूपादिविषयबुद्धिवदिति। अथवा एकानेकबुद्धी भिन्नविषये समुचितासमुचितविषयत्वात् इदमिति यथा इदं चेदं चेति यथा ॥ ३५ ॥

सेनावनवद् ग्रहणमिति चेन्नातीन्द्रियत्वादणूनामिति। सेनावनवद् ग्रहणमिति चेत्—अथ मन्यसे असत्यर्थान्तरभावेऽसति चैकानेकविभेदे (क)च दृष्टो बुद्धिविशेषः—अन्या सेनाबुद्धिः अन्या गजादिबुद्धय इति, तथाऽन्याः खदिरादिबुद्धयः, अन्या च वनबुद्धिरिति। न च तावता सेना वनं चार्थान्तरम्। तस्मादनैकान्तिकत्वादहेतुः।

### न्यायवार्त्तिकतात्पर्यटीका

अथेदानीमन्वयिन इति, अन्वयव्यतिरेकिण इति। पटोऽयमित्येकविषया बुद्धिरेकबुद्धिः, तन्तव इति नानाविषया बुद्धिरनेकबुद्धिः। समुच्चितासमुच्चितविषयत्वादिति, असमुचितविषयत्वादेकबुद्धेः समुचितविषयत्वादनेकबुद्धेरिति ॥ ३५ ॥

आशङ्कात इतरसूत्रम्—

सेना—नाम् ( सू० ३६ ) ॥ तथोक्तमिति, बहुत्वसंख्यैव सेना वनं चेति। यस्तु मन्यते—सेना वनमिति व्यपदेशाय तज्जनिताय वा विज्ञानाय बहुत्वसंख्या कथंचित्कारणं संभवति,

### वृत्तिः

इदमवद्यम्—नौकाकर्षणेन नौकास्थाकर्षणवत् , (४) कुण्डधारणेन कुण्डस्थदधिधारणवचोपपत्तेर्विजातीयसंयोगबलेनैवावयवावयविभावाभावेऽप्युपपत्तेः, अतः पूर्वोक्तां युक्तिमेव

(१) 'वनाङ्गेषु' इति टि-पु० नास्ति। (२) 'एवं परमाणुषु' ज०। (३) 'खलु सेना-' इति ज०। (४) 'कुण्डलधा-' ल०।

(क) 'च'कारोऽयं लिपिप्रमादादागतः सम्भाव्यते।

## न्यायभाष्यम्

यथा गृह्यमाणजातीनां पलाश इति वा खदिर इति वा नाऽऽराज्जातिग्रहणं भवति। यथा गृह्यमाणप्रस्पन्दानां नाऽऽरात् स्पन्दग्रहणम्, गृह्यमाणे चार्थजाते पृथक्त्वस्याग्रहणादेकमिति भाक्तः प्रत्ययो भवति, न त्वणूनां गृह्यमाणपृथक्त्वानां कारणतः पृथक्त्वस्याग्रहणाद् भाक्त एकप्रत्ययः, अतीन्द्रियत्वादणूनामिति।

## न्यायवार्त्तिकम्

इदं तावत् सूत्रं साधनपक्षे दृष्टान्तमात्रार्थत्वादसम्बद्धम्, अनैकान्तिकीकरणपक्षे तु न, असिद्धत्वात्। (१) केन सेनावनयोरनर्थान्तरभावोऽभ्युपगम्यते। यथा च सेनावनान्यर्थान्तरभूतानि तथोक्तम्। अभेदप्रत्ययस्य चानेकनिमित्तत्वान्न युक्तम्—अस्त्ययमभेदप्रत्ययोऽभिन्न एव, अस्ति च भिन्ने उपलभ्यमाने भेदस्यादर्शनात्। अभिन्ने तावदेकप्रत्ययः (क)यदेकमुभयपक्षसम्प्रतिपत्त्या व्यवस्थितम्। एकं नास्तीत्यनेकप्रत्ययो व्याहतः, एकसमुच्चयो ह्यनेकमिति। अनेकस्मिन्नुपलभ्यमानेऽपि भेदस्यादर्शनादभेदप्रत्ययः। भेदस्यादर्शनमाराान्निमित्ताद् यथा सेनावनादिषु। यानि तानि (ख)सेनावनाङ्गानि हस्त्यादीनि तान्येकश उपलभ्यमानपृथक्त्वानि आरान्निमित्ताद्भेदं नोपलम्भयन्ति, भेदानुपलब्धेर्भिन्ने वस्तुन्यभिन्नप्रत्ययः। न च परमाणवः केनचिदुपलभ्यन्ते। कस्मात्? अतीन्द्रियत्वादणूनामिति।

अतीन्द्रियाः परमाणव इति प्रतिपादितमेतत्। यश्चैन्द्रियकः पदार्थः स उपलभ्यमानपृथक्त्व आरात् पृथक्त्वस्याग्रहणे अभेदप्रत्ययनिमित्तं भवति। यथा उपलभ्यमानजातीयानामारान्न जातिग्रहणम्, उपलभ्यमानप्रस्पन्दानां च नाऽऽरात् प्रस्पन्दग्रहणमिति। गृह्यमाणाग्रहणस्य

## न्यायवार्त्तिकतात्पर्यटीका

यस्त्वयमैन्द्रियकः प्रत्ययः प्रत्येकमगृहीतैकत्वेषु वृक्षेष्वनुत्पन्नापेक्षाबुद्धेर्दूरादित्येकघनवनावगाही (ग) जायते तत्र कारणाभावेन बहुत्वस्यानुत्पादान्न बहुत्वसंख्यालम्बन इति न (घ)परितुष्यति तं प्रत्याह—अभेदप्रत्ययस्य चेति, उपलभ्यमानरूपेष्वेव कुतश्चिन्निमित्तादनुपलभ्यमानपृथक्त्वेषु मिथ्याऽभेदबुद्धिर्भवति, न पुनः सर्वथाऽनुपलभ्यमानेष्विति तात्पर्यार्थः। यस्तु नोभयपक्षसंप्रतिपन्नमस्ति जगति किंचिदेकमिति मन्यते तं प्रत्याह—एकं नास्तीति। स्यादेतत्—दूरात् काष्ठलोष्टतृणपाषाणादयः प्रत्येकं पृथक्कृता नोपलभ्यन्ते, समुदायस्तु तेषां दृश्यते, न च ते द्रव्यान्तरमारभन्ते विजातीयत्वात्; तथा मा भूवन् परमाणवः प्रत्येकं दृश्याः समूहस्तु तेषां द्रक्ष्यते विनैव कार्यान्तरारम्भमित्यत आह—गृह्यमाणाग्रहणस्य चेति। तेषामेवागृह्यमाणानामपि

(१) 'न केन' इति ख-पुस्तकपाठः।

(क) तत्र अभिन्ने इति पूर्ववाक्ये तत्पदस्याऽऽर्थत्वाद् यत्पदान्वयी बोध्यः। (ख) 'हस्त्यश्वरथपादातं सेनाङ्गं स्याच्चतुष्टयम्' इत्यमरः। (ग) एकघनवनावगाहीति एकमिदं घनं वनमित्याकारक इत्यर्थः। (घ) मन्यतेः परितुष्यतेश्चैक एव कर्त्ता य इति।

## न्यायवार्त्तिकम्

चान्यनिमित्तत्वात्—यच्चेदं गृह्यमाणस्य पदार्थस्याग्रहणं तदन्यनिमित्तं दृष्टम्, यथा तेषामेव सेनावनाङ्गानाम्, न तु परमाणवो गृह्यन्ते तेषामतीन्द्रियत्वात्। तस्मान्न तेषामन्यनिमित्तमग्रहणमिति।

अनुपजातविशेषाणां च बुद्धिभेदाहेतुत्वाद्विरोधः—यस्य परमाणवो घटादिबुद्धिहेतवो भवन्ति स चेदं प्रष्टव्यः किं परमाणव उपजातविशेषा बुद्धिभेदं कुर्वन्ति उतानुपजातविशेषा इति। किं चातः? यद्युपजातविशेषाः, योऽसौ विशेषः सोऽवयवीति प्राप्तम्; अथानुपजातविशेषाः, त एवातीन्द्रिया ऐन्द्रियकाश्चेति महान् विरोधः। विशेषः संयोगः परमाणूनाम्, ते परस्परप्रत्यासत्तौ

## न्यायवार्त्तिकतात्पर्यटीका

मिलितानां दर्शनं (क) ये स्वरूपेण ग्रहणयोग्या निमित्तान्तरात्तु न गृह्यन्ते; परमाणवस्तु परमसूक्ष्मतया न स्वरूपेण ग्रहणार्हा इति मिलिता अपि न ग्रहीतव्या एव। न जातु मिलिता अपि पवनसमूहा भवन्ति चाक्षुषाः। रूपवन्महत्त्वमपि भावानां स्वरूपयोग्यता ग्रहणं प्रतीति भावः।

(ख)अथानुपजातविशेषा इति। ततश्च त एवैन्द्रियका अनैन्द्रियकाश्चेति महान् विरोधः।

अत्रान्तरे आह स्म—को वा विरोधो बहवः संजातातिशयाः पृथक्।
भवेयुः कारणं बुद्धेर्यदि नामेन्द्रियादिवत्॥ इति।

एतदपि वार्तिककृतैव यद्युपजातविशेषा इति वदता परास्तम्। न खलु स्थैर्यसिद्धौ भावानामवयविद्रव्योत्पादमन्तरेणास्त्यन्योऽतिशयः परमाणूनाम्। (ग)न च यमागन्तुकमासाद्य परमाणवोऽवयविनं जनयन्ति तेनैव स्थूलबुद्धिम्, कृतमवयविनेति सांप्रतम्; यदाभासा हि बुद्धिस्तदस्या आलम्बनप्रत्ययः, न चेयं परस्परव्यावृत्तपरमसूक्ष्मपरमाण्वालम्बना, तथा सति स्थूलभेदात् तदेकमिति न स्यात्। न चैष प्रत्ययो विकल्पः, स्पष्टप्रतिभासत्वात्, न वा विकल्पोपाधिरस्य विशदता, निर्विकल्पकेनापि तस्या ग्रहणात्। न च प्रतिभासधर्मः स्थौल्यम्, नानादिग्देशस्थितस्य निरन्तरस्यैकेन विज्ञानेन ग्रहणं स्थौल्यम्; तत् खल्वीदृशत्वं परमाणूनां प्रतिभाससमयभावीति प्रतिभासधर्म इत्युच्यते। तथा चैष समीचीन एवानुभवः—न हि ते न परमाणवः, न च न निरन्तरोत्पन्नाः, न च न दिग्देशभिन्नाः, न चैकस्मिन् विज्ञाने न चकासति। तस्मात् कस्यात्रान्यथात्वम्।

---

(क) अत्राऽऽदर्शपुस्तकयोः 'येन रूपेण ग्रहणयोग्यता निमित्तान्तरात्तु न गृह्यन्ते' इति पाठः लिपिप्रमादकृत इति धिया एवं शोधितः।

(ख) वार्त्तिके अक्षरविपर्ययो द्रष्टव्यः। अत्र मुद्रिततात्पर्यपुस्तकयोः 'ततश्च त एवैन्द्रियका अनैन्द्रियकाश्चेति महान् विरोधः। अत्रान्तरे वार्त्तिककार आह स्म। को वा विरोधो बहवः संजातातिशयाः पृथग्भवेयुः कारणं बुद्धेर्यदि नामेन्द्रियादिवत् इति। एतदपि वार्त्तिककृतैव अथानुपजातविशेषा. इति वदता परास्तम्' इति ग्रन्थाकार उपलभ्यते। उपरिष्टात् मुद्रिताकारस्तु स्वबुद्ध्या कल्पितः।

(ग) आदर्शपुस्तकयोः 'नचायमागन्तुक'मिति मुद्रणस्य प्रामादिकत्वधिया शोधितमिदम्।

### न्यायभाष्यम्

इदमेव च परीक्ष्यते किमेकप्रत्ययोऽणुसञ्चयविषय आहोस्वित् नेति, अणुसञ्चय एव सेनावनाङ्गानि। न च परीक्ष्यमाणमुदाहरणमिति युक्तं साध्यत्वादिति।

दृष्टमिति चेन्न तद्विषयस्य परीक्षोपपत्तेः। यदपि (१)मन्येत दृष्टमिदं सेनावनाङ्गानां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम्, (२)नच दृष्टं शक्यं प्रत्याख्यातुमिति, (३) तच्च नैवम्, तद्विषयस्य परीक्षोपपत्तेः—दर्शनविषय एवायं परीक्ष्यते योऽयमेकमिति प्रत्ययो दृश्यते, स परीक्ष्यते किं द्रव्यान्तरविषयो वा अथाणुसञ्चयविषय इति। अत्र दर्शनमन्यतरस्य साधकं न भवति। नानाभावे चाणूनां पृथक्त्वस्याग्रहणादभेदेनैकमिति ग्रहणम् अतस्मिंस्तदिति प्रत्ययः, यथा स्थाणौ पुरुष इति। ततः

### न्यायवार्त्तिकम्

सत्यां संयोगोपकरणा उपलप्स्यन्त इति, न ; अतीन्द्रियत्वादणूनां—नातीन्द्रियाणां संयोगः प्रत्यक्षो भवितुमर्हति। भवति हीदमनेन संयुक्तमिति। तस्मान्न संयोगो विशेषः।

### न्यायवार्त्तिकतात्पर्यटीका

यथाह—न च तद्दर्शनं भ्रान्तं नानावस्तुग्रहात् (४) स्वतः।
सांवृतग्रहणं नान्यन्न च वस्तुग्रहो भ्रमः॥ इति।

अत्र तावत्तिलतण्डुलवद् गन्धरूपरसस्पर्शपरमाणुभिरन्तरिततया नैरन्तर्यमेषां नास्ति। तस्मादन्तरालाग्रहणे दूरादेकघनवनप्रत्ययवदयं मिथ्याप्रत्ययो रूपादिपरमाणूनां सान्तरत्वाद् अनेकत्वाच्च। न चासति बाधके मिथ्येति युक्तम्। उक्तश्च बाधकाभावः। स्थेमा च भावानामुपपादयिष्यते। तस्मादयुक्तमेतदपीति।

इदमेव परीक्ष्यत इति भाष्यम्। सर्वत्रावयविनमपह्नुवानस्य अतीन्द्रियं चाऽणुसंचयमात्रमिच्छतः सेनावनाङ्गानामपि (क) करिकुसुम्भादीनामतीन्द्रियाणुसंचयमात्रत्वाद् दृष्टान्ताभाव इति तात्पर्यार्थः।

शङ्कते—दृष्टमिति चेत्। सेनावनाङ्गानि तावद् दृष्टतया न शक्यान्यपह्नोतुमिति सिद्धं निदर्शनमित्यर्थः। निराकरोति—(५)तच्च नैवमिति। यदि दृष्टमप्रत्याख्येयमवयव्यपि दृष्ट इति

### वृत्तिः

साधीयसीं मन्यमानस्तत्र परोक्तं समाधानमाशङ्क्य दूषयति—( सेनावनादिवदिति(ख) )

---

(१) 'मन्यते' ज-भा०। (२) 'नच शक्यं' ल०। (३) 'तच्च तन्नैवं' फ०। (४) 'यतः' इति ख-पु० धृतपाठान्तरम्। (५) 'तच्च तन्नैवम्' इति फ०।

(क) करी सेनाङ्गम्, कुसुम्भो वृक्षः वनाङ्गमिति बोध्यम्। (ख) सूत्रे आदिपदं वृत्तिकृत्सम्मतम्।

## न्यायभाष्यम्

किम्? अतस्मिंस्तदिति प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिः। स्थाणौ पुरुष इति प्रत्ययस्य किं प्रधानम्? योऽसौ पुरुषे पुरुषप्रत्ययः, तस्मिन् सति पुरुषसामान्यग्रहणात् स्थाणौ पुरुषोऽयमिति। एवं नानाभूतेष्वेकमिति (१)सामान्यग्रहणात् प्रधाने सति भवितुमर्हति। प्रधानं च सर्वस्याग्रहणादिति नोपपद्यते। तस्मादभिन्न एवायमभेदप्रत्यय एकमिति।

## न्यायवार्त्तिकम्

यश्चायमनेकस्मिन्नेकप्रत्ययः स मिथ्याप्रत्ययः। मिथ्याप्रत्ययनिमित्तं च सामान्यदर्शनं विशेषानुपलब्धिः अविद्यमानविशेषदर्शनद्वारेणाध्यारोपिततद्विपरीतधर्मता। न चातीन्द्रियत्वादणूनां सामान्यदर्शनमस्ति, तदभावे कुतो विशेषादर्शनम्, सामान्यदर्शने विशेषादर्शने वाऽसति न तद्विपरीतधर्माध्यारोपः। न च निमित्तमन्तरेण नैमित्तिकस्य मिथ्याप्रत्ययस्य प्रादुर्भावो युक्त इति।

एतेन भाक्त औपमिकश्च प्रत्ययो व्याख्यातः। भक्तिर्नाम अतथाभूतस्य तथाभाविभिः सामान्यम्, उभयेन भज्यत इति भक्तिः; यथा वाहीकस्य मन्दामन्तःसंज्ञामुपादाय वाहीको गौरिति, न तदतीन्द्रियत्वात् परमाणूनामस्ति। उपमानप्रत्ययोऽपि न युक्तः अतद्भाविनस्तद्भाविभिरसामान्यात्—यस्यातथाभूतस्य तथाभाविभिः सामान्यं तत्रोपमानप्रत्ययो युक्तः यथा सिंहो माणवक इति, सिंह इव सिंहः। किं पुनरत्रोपमीयते? शौर्यम्, न तु परमाणूनामतीन्द्रियत्वान्मिथ्याप्रत्ययानां निमित्तमस्तीति। मिथ्याप्रत्यया अप्येते न भवन्ति प्रधानाभावात्।

## न्यायवार्त्तिकतात्पर्यटीका

सोऽपि न प्रत्याख्येयः। अथायं परीक्ष्य प्रत्याख्यायते सेनावनाङ्गान्यपि प्रत्याख्येयानीति दृष्टान्ताभावः साध्यसमत्वादिति भाष्यार्थः।

वार्त्तिकम्—यश्चायमनेकस्मिन्निति। अविद्यमानो विशेषः शुक्तौ रजतत्वम्, तस्य दर्शनं वणिग्वीथ्यादौ, तस्य द्वारं संस्कारः, तेनाध्यारोपितः (क)स्मारितः तद्विपरीतधर्मो रजतत्वं येन सामान्यदर्शनेन तत्तथोक्तं तस्य भावः तत्ता सामान्यदर्शनस्येति।

तिरोभूतभेदमुपमानमेव भाक्तम्, भेदोल्लेखेन (२)जायमान(३)मौपमिकमिति विवेकः। (ख)संज्ञाज्ञानमौपमिकोदाहरणम्—यथा सिंहो माणवक इति। नन्वेतदपि तिरोभूतभेदतया भाक्तमेवेत्यत आह—सिंह इव सिंहः। अयमर्थः। सिंहशब्दात् (ग)उपमानादाचारे सर्वप्रातिपदिकेभ्यः क्विबिति

---

(१) 'प्रामाण्यग्रहणात्' ज-ग०। (२) 'जायमानम्' इति ख। (३) 'औपमिकमि'ति क-तात्पर्ये नास्ति।

(क) भवाऽऽदर्शपुस्तकयोः 'शुक्तिविपरीतधर्मो' इति पाठः। क-तात्पर्यपुस्तके धृतं प्राचीनपुस्तकपाठान्तरं च समीचीनतया गृहीतम्। (ख) ख-तात्पर्ये ( संज्ञाज्ञानमौपमिकोदाहरणम्' ) इत्येवमर्द्धं कुण्डलीवेष्टनेन मुद्रितम्। 'उदाहरणम्' इत्येतन्मात्रं तु समीचीनं सम्भाव्यते। (ग) "उपमानादाचारे" इति पाणिनीयं सूत्रम् ( ३।१।१० )। 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' इति वार्त्तिकसूत्रम् ( ३।१।११ )।

### न्यायभाष्यम्

इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति चेद् न विशेषहेत्वभावाद् दृष्टान्ताव्यवस्था—श्रोत्रादिविषयेषु शब्दादिष्वभिन्नेष्वेकप्रत्ययः प्रधानमनेकस्मिन्नेकप्रत्ययस्येति। एवं च सति दृष्टान्तोपादानं न व्यवतिष्ठते विशेषहेत्वभावात्। अणुषु सञ्चितेष्वेकप्रत्ययः किमतस्मिंस्तदिति प्रत्ययः स्थाणौ पुरुषप्रत्ययवत्, अथार्थस्य तथाभावात्तस्मिंस्तदिति प्रत्ययः यथा शब्दस्यैकत्वादेकः शब्द इति विशेषहेतुपरिग्रहणमन्तरेण दृष्टान्तौ संशयमापादयत इति। कुम्भवत्सञ्चयमात्रं गन्धादयोऽपीत्यनु-

### न्यायवार्त्तिकम्

इन्द्रियान्तरविषयेष्वभेदप्रत्ययः प्रधानमिति चेत्—अथ मन्यसे श्रोत्रादिविषयेष्वेकत्वादिप्रत्ययाः प्रधानं भवन्ति, तदभावे तु मिथ्याप्रत्यया इति ; विशेषहेत्वभावाद् दृष्टान्ताव्यवस्था—एवं सति दृष्टान्तोपादानं न व्यवतिष्ठते। तस्मिंस्तदिति प्रत्ययः अतस्मिंस्तदिति च प्रत्ययः। अस्ति चायं परमाणुषु सञ्चितेषु तदिति प्रत्ययः स च किमतस्मिंस्तदिति आहोस्विन्नेति सन्दिह्यते। शब्दादिष्वेकप्रत्ययः प्रधानम्, घटादिषु त्वेकप्रत्ययो मिथ्याप्रत्यय इति ब्रुवाणो घटादीनभ्युपैति। न ह्यनभ्युपगतेषु घटादिषु शब्दादिसामान्यमेकप्रत्ययबीजं घटस्यास्ति। अथ मन्यसे नास्माभिर्घटादयोऽप्यभ्युपगम्यन्ते, किन्तु परमाणूनां सञ्चितानां शब्देन सामान्यादेकप्रत्ययोत्पत्तिनिमित्तत्वमिति। अत्रोक्तम्—नातीन्द्रियत्वादणूनामिति। यांश्च शब्दादीन् प्रधानप्रत्ययनिमित्तत्वेन भवान् प्रतिपद्यते तेऽपि सञ्चिता एव, सञ्चितत्वात् तेष्वप्ययमेकप्रत्ययो न युक्तः। शब्दादिषु चैकप्रत्ययः समुच्चयनिवृत्तिनिमित्त एकत्ववद्द्रव्यसामान्याद् भाक्तः—यान्येकत्ववन्ति द्रव्याणि तेषां समुच्चयनिवृत्तिर्धर्मः, अस्ति च

### न्यायवार्त्तिकतात्पर्यटीका

क्विबन्तात् कर्त्तरि अचि कृते सिंहशब्द उपमानार्थो भवति। नानाभावे चाणूनामित्यादिभाष्यं व्याचष्टे—मिथ्याप्रत्यया अपीति। तदभावे तु प्रधानाभावे तु घटादौ मिथ्याप्रत्यया इति। परमाणुषु संचितेष्विति, येषामपि घटोऽवयवी तैरपि परमाणुसंचयोऽभ्युपेयः येषामप्यवयवी नास्ति तैरपि परमाणुसञ्चय उपेयः, सोऽयमुभयसंमतः सञ्चय इत्यर्थः। तेऽपि संचिता एवेति, वैभाषिकाः खलु (क)वात्सीपुत्रा भूतभौतिकसमूहात् (१) पटादीनपि शब्दादीनिच्छन्ति, अतस्तेषां मते शब्दादयोऽपि सञ्चिता एवेत्यर्थः। अपि चास्मन्मतेऽपि शब्दादीनां न मुख्यमेकत्वं संख्याया गुणस्य गुणेषु शब्दादिष्वभावात् अपि तु भाक्तमेवेत्यत आह—शब्दादिषु चैक-

### वृत्तिः

अतिदूरस्थैकमनुष्यैकवृक्षादेरप्रत्यक्षत्वेऽपि सेनावनादिप्रत्यक्षवदेकस्य परमाणो-

(१) "पटादपि" इति क-तात्पर्यपाठः।

(क) वात्सीपुत्रा वैभाषिकसम्प्रदायेऽवान्तरसम्प्रदायप्रवर्त्तकविशेषाः।

## न्यायवार्त्तिकम्

शब्दादिषु समुच्चयनिवृत्तिः, तेनैकत्ववद्द्रव्यसामान्याच्छब्दादिष्वेकप्रत्ययो भाक्तः। सर्वत्र समुच्चयनिवृत्तिनिमित्त एवेति चेत् न द्वे इत्यत्रैकानेकगतौ सन्देहो न स्यात्—यदि सर्वत्रायं समुच्चयनिवृत्तिनिमित्त एवैकप्रत्ययो भवति न द्वे इत्यत्र किमेकमनेकमिति द्विप्रतिषेधसामान्यात् सन्देहो न स्यात्। सति च सन्देहे एकमिति नियमार्थम्, यतो नियमस्तदेकत्वम्, यतस्त्र्यादिप्रत्ययास्ते त्रित्वादय इति। एवं द्वित्वादिप्रत्यया अपि शब्दादिषु समुच्चयनिमित्ता द्रष्टव्याः। कस्मात्? द्वित्वादिमद्द्रव्यसामान्यात्—द्वित्वादिमता द्रव्येण शब्दादीनां समुच्चयः समानः। सर्वत्र समुच्चयादेवेति चेत् नैकमित्यत्र सामान्यगतौ न संशयः स्यात्—यदि समुच्चयनिमित्तत्वाद् द्व्यादिप्रत्यया भवन्ति नैकमिति प्रतिषेधे द्वे त्रीणीति सामान्यगतौ न संशयः स्यात्। तस्माद् यतो व्यवस्था ते द्वित्वादय इति।

## न्यायवार्त्तिकतात्पर्यटीका

प्रत्यय इति। शङ्कते—सर्वत्रेति। निराकरोति—न द्वे इत्यत्रेति, समुच्चयनिवृत्तिमात्रमेव चेदेकत्वं द्वित्वनिषेधेन समुच्चयो निवर्तत इति तन्निवृत्तिमात्रमेकत्वमेवेति एकमनेकं वेति संशयो न स्यात्। न च तत्रोत्तरमेकमेवेति नियमार्थं भवेदिति। गतौ प्राप्तौ। शङ्कते—सर्वत्रेति। निराकरोति—नैकमित्यत्रेति। अयमभिसन्धिः। द्वित्वादीनामभावे समुच्चयमात्रं स्यात्, न तु समुच्चयानामवान्तरभेदः। तथा च नैकमित्यसमुच्चयसहितैकत्वसमुच्चयः प्राप्त एवेति न संशयः स्यात्।

इदं त्विह वक्तव्यम्। शब्दादौ द्वित्वाद्यभावे कथं द्वित्वादिप्रयोगः? भाक्त इति चेत् किं भक्तिनिमित्तम्? समुच्चयमात्रं चेत् कुतो द्वाविति नियमः। समुच्चयविशेषादिति चेद् नन्वस्य नास्त्याजानतो भेद इत्युक्तम्। न चेह द्वित्वमस्ति यद्विशिंष्यात्। तथा चाकामेनापि समुच्चयानामवान्तरभेदः स्वाभाविको वक्तव्यः। तथा च स एवास्तु संशयविषयः कृतं द्रव्ये द्वित्वादिनेति। तस्मात् संविदेव भगवती वस्तूपगमे नः शरणं समुच्चयादिविलक्षणं द्वित्वाद्यवगाहमाना व्यवस्थापिका द्वित्वादीनाम्। तदनुसरणप्रकारश्च युक्तिबहुलतया वार्तिककृता कृत इति मन्तव्यम्।

यः पुनरनुभूयमानमेकत्वं द्वित्वादींश्चानुभूयमानान्न प्रतिपद्यते तस्य खल्वनुभवमपह्नुवानस्य

## वृत्तिः

रप्रत्यक्षत्वेऽपि (१)तत्समूहरूपघटादेः प्रत्यक्षं स्यादिति (२)चेद् ब्रूषे, तदपि न, अणूना-

---

(१) 'तत्समूहघटादेः' ल०।

(२) 'चेन्न तदपि अणूनां' भ०।

## न्यायभाष्यम्

दाहरणं गन्धादय इति। एवं परिमाण-संयोग-स्पन्द-जाति-विशेष(१)प्रत्ययानप्यनुयोक्तव्यः, तेषु चैवं प्रसङ्ग इति।

एकत्वबुद्धिस्तस्मिंस्तदिति प्रत्यय इति विशेषहेतुर्महदिति प्रत्ययेन सामानाधिकरण्यात्—एकमिदं महच्चेति एकविषयौ प्रत्ययौ समानाधिकरणौ भवतः तेन विज्ञायते यन्महत् तदेकमिति। अणुसमूहातिशयग्रहणं महत्प्रत्यय इति चेत् सोऽयममहत्सु अणुषु महत्प्रत्ययोऽतस्मिंस्तदिति प्रत्ययो भवतीति। किं चातः? अतस्मिंस्तदिति (२)प्रत्ययस्य प्रधानापेक्षित्वात् प्रधानसिद्धिरिति भवितव्यं महत्येव महत्(२)*-प्रत्ययेनेति।

## न्यायवार्त्तिकम्

यः पुनरेकत्वं द्वित्वादींश्च न प्रतिपद्यते तस्य न समुच्चयो न समुच्चयनिवृत्तिः—अनभ्युपगतैकत्वस्य कस्य समुच्चयः अनभ्युपगतद्वित्वस्य च कस्य प्रतिषेधः। एकद्वित्वादींश्चार्थान्तरभूतानन-भ्युपगच्छत एकं शतम् एकं द्वित्वमित्येकप्रत्ययो न स्यात्। भेदाग्रहाच्च शब्दादिष्वेकप्रत्ययः—यस्माच्छब्दादिषु भेदो न गृह्यते उपलभ्यमानेष्वतस्तेषु अभेदप्रत्ययः, न पुनः परमाणुष्वभेद-ग्रहणस्य निमित्तमस्त्यतीन्द्रियत्वादणूनामित्युक्तम्। उदाहरणमात्रत्वाच्चैकप्रत्ययपर्यनुयोगस्यैकप्रत्यय-वदनेकप्रत्ययमप्यनुयोक्तव्यः—योऽवयविनमर्थान्तरं न प्रतिपद्यते तस्य यथैकप्रत्ययोऽनुपपन्नस्तथाऽ-नेकप्रत्यया अपि न प्राप्नुवन्ति। यथा चैकानेकप्रत्ययान् एवं घटादिप्रत्ययान् पर्यनुयोज्य इति। एवं परिमाण-संयोग-प्रस्पन्द-जाति-विशेषप्रत्ययानपि पर्यनुयोज्यः तेषु चैवं प्रसङ्गः—यद्यवयविन-मर्थान्तरं न प्रतिपद्यसे महदिति संयुक्त इति (क)वाऽश्वो गच्छतीति प्रत्यया न प्राप्नुवन्ति, न ह्यतीन्द्रियेषु परमाणुषु एते प्रत्यया युज्यन्त इति।

किमेते एकादिप्रत्यया अणुसञ्चयमात्रे आहोस्विदर्थान्तरभाव इति सन्दिह्यते। सन्देहे सति विशेषहेतुर्वक्तव्य इति। अयं विशेषहेतुः महत्प्रत्ययसामानाधिकरण्यादेकप्रत्ययो महति भवति। यः खलु यत्समानाधिकरणः प्रत्ययो दृष्टः स तद्धर्मयुक्तो भवति, यथा—नीलमुत्पलमिति उभयधर्म-योगिनि नीलोत्पलप्रत्ययः प्रवर्तते। अस्ति च महत्प्रत्ययसामानाधिकरण्यमेकप्रत्ययस्य, तस्मा-

## न्यायवार्त्तिकतात्पर्यटीका

निर्मर्यादतयैकत्वाधारोऽपि नास्तीति कस्य समुच्चयो द्वित्वादिः स्यात्। समुच्चयाभावेऽपि कस्याभाव एकत्वं स्यादित्याह—यः पुनरिति। अपि च एकत्वादीन् मुख्याननभ्युपगच्छतो-ऽयमपि भाक्तः प्रयोगो न स्यादित्याह—(ख)एकत्वं द्वित्वादींश्चेति।

भाष्यमनुभाष्य व्याचष्टे—तेषु चैवमिति।

(१) '-प्रत्यया अप्यनुयोक्तव्या' इति ज०। (२) अयमंशः वि-पु० नास्ति।

(क) 'वा' शब्दः 'प्रत्ययाः' इत्यतः पूर्वं पठितुमुचितः।

(ख) आदर्शपुस्तकयोः 'एकत्वद्वित्वादींश्चे'ति पाठः।

## न्यायभाष्यम्

(१)अणुः शब्दो महानिति च व्यवसायात् प्रधानसिद्धिरिति चेन्न मन्दतीव्रताग्रहणमियत्तानवधारणात्—यथा द्रव्ये अणुः शब्दोऽल्पो मन्द इत्येतस्य ग्रहणं महान् शब्दः पटुस्तीव्र इत्येतस्य ग्रहणम्। कस्मात्? इयत्तानवधारणात्। न ह्ययं महान् शब्द इति व्यवस्यन्नियानयमित्यवधारयति, यथा बदरामलकबिल्वादीनि।

## न्यायवार्त्तिकम्

न्महत्येकप्रत्ययः। अणुसमूहेऽतिशयग्रहणमिति चेत्—अथ मन्यसे नास्माभिरर्थान्तरभूतोऽवयव्यभ्युपगम्यते, अपि त्वणुसमूहमुपलभ्याणुसमूहान्तरेऽतिशयं गृह्णतो महत्प्रत्ययो भवति, सोऽयमतस्मिंस्तदिति प्रत्यय इति पूर्ववत्प्रसङ्ग इति—अमहत्स्वणुष्वमहत्सु चाणुसमूहेषु योऽयं महत्प्रत्ययः सोऽतस्मिंस्तदिति मिथ्याप्रत्ययः, मिथ्याप्रत्ययाश्च प्रधानमन्तरेण न भवन्तीति पूर्ववदेव प्रसङ्गः।

अणुः शब्दो महानिति व्यवसायात् प्रधानसिद्धिरिति चेत्—अथ मन्यसे महान् शब्दोऽणुः शब्द इति शब्दे दृष्टो महदणुप्रत्ययः प्रधानमन्यत्र महदणुप्रत्ययस्येति। न च मन्दतीव्रताग्रहणमियत्तानवधारणात्—न शब्दे महत्त्वं नाणुत्वं गुणत्वात्। अणुमहत्प्रत्ययस्तर्हि शब्देन प्राप्नोति? न न प्राप्नोति, अन्यनिमित्तत्वात्। किं निमित्तम्? मन्दता तीव्रता च। कस्मात्? इयत्तानवधारणात्—न ह्ययं महान् शब्द इति व्यवस्यन्नियानित्यवधारयति। यथा (क) कुवलामलकबिल्वान्यवधारयन् कुवलादामलकं महद् आमलकाच्च महद् बिल्वम्, तानि चेयत्तया परिच्छिनत्ति इयत्परिमाणमेतदिति, न पुनः शब्देषु एतदस्ति, शब्देष्वपि पूर्वावधृतं शब्दमुपलभ्य तस्माच्छब्दादयं महानणुर्वेति अवधार्यते नावधारणं प्रतिपिध्यते।

इदन्तु चिन्त्यते। योऽयं शब्देऽणुमहत्प्रत्ययः किमयं परिमाणयोगादुतान्यस्मान्निमित्तादिति। अन्यस्मान्निमित्तादिति युक्तम्, गुणस्य गुणान्तरसम्बन्धानुपलब्धेः—न हि गुणस्य गुणान्तरसम्बन्धो दृष्टः यतः परिमाणसम्बन्धोऽपि गम्येत। महत्प्रत्ययादेव गुणवान् शब्दो द्रव्यवदिति चेत्—यथाऽयं महत्प्रत्ययो द्रव्येषु भवन्महत्परिमाणयोगाद्भवति, शब्देऽपि चायं महत्प्रत्ययो भवति, अतो महत्प्रत्ययविषयत्वान्महत्परिमाणयुक्तः शब्द इति। न, अनैकान्तात्

## न्यायवार्त्तिकतात्पर्यटीका

इयत्ताऽनवधारणादिति। प्रत्यक्षपरिमाणविषयमियत्तावधारणम्, परममहतां त्वप्रत्यक्षपरिमाणानां सत्यपीयत्तानवधारणे नापरिमाणता, द्रव्यत्वेन व्योमादीनां परिमाणानुमानादिति।

---

(१) 'अणुशब्दो' ज०।

(क) कुवलं बदरमेदः।

## न्यायभाष्यम्

संयुक्ते इमे इति च (१)द्वित्वसमानाश्रयप्राप्तिग्रहणम्—द्वौ समुदायावाश्रयः संयोगस्येति चेत् कोऽयं समुदायः? प्राप्तिरनेकस्यानेका वा प्राप्तिरेकस्य समुदाय इति चेत् प्राप्तेरग्रहणं प्राप्त्याश्रितायाः। संयुक्ते इमे वस्तुनी इति नात्र द्वे प्राप्ती संयुक्ते गृह्येते।

अनेकसमूहः समुदाय इति चेद् न द्वित्वेन समानाधिकरणस्य ग्रहणात्। द्वाविमौ संयुक्तावर्थाविति ग्रहणे सति नानेकसमूहाश्रयः संयोगो गृह्यते। न च द्वयोरण्वोर्ग्रहणमस्ति। तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगस्य स्थानमिति।

## न्यायवार्त्तिकम्

—महत्प्रत्ययविषयत्वे सत्यपि महत्परिमाणयोगो न दृष्टः, यथा महत्परिमाण इति। द्रव्ये तर्हि महत्प्रत्ययः कथम्—यदि तावन्महत्प्रत्ययविषयत्वे सत्यपि महत्परिमाणयोगं न प्रतिपद्यसे महत्परिमाणयुक्तं द्रव्यमित्येतत् कथम्? न महत्प्रत्ययविषयत्वात् महत्परिमाणयुक्तं द्रव्यम्, अपि तु महत्परिमाणयोगे सति महत्प्रत्ययो द्रव्य इति। महत्परिमाणयोगस्तु द्रव्यस्य विशेषप्रत्ययानामनाकस्मिकत्वेन। यदि विशेषप्रत्ययानामनाकस्मिकत्वेन महत्परिमाणयोगो द्रव्ये, शब्देऽप्येवम्, शब्दस्य महत्प्रत्ययोऽस्ति तेनापि नाकस्माद्भवितव्यम्। कश्चैवमाह शब्देऽप्ययमाकस्मिक इति। किन्निमित्तः? मन्दतीव्रतानिमित्तः—मन्दता तीव्रता च शब्दधर्मः अतोऽणुमहत्प्रत्ययः शब्दे इति। का पुनरियं मन्दता तीव्रता च? अणुद्रव्यसामान्यात् सामान्यप्रत्ययविषयत्वं मन्दता (क)महद्द्रव्यसामान्याच्च(२) सामान्यप्रत्ययविषयत्वं तीव्रता पाटवमिति।

संयुक्ते इति द्वित्वसमानाश्रयं प्राप्तिग्रहणमवयविनः प्रतिपादकम्। कथमिति? संयुक्तमहत्प्रत्ययावेकविषयौ प्रतिसन्धानान्नीलोत्पलादिप्रत्ययवत्—यथा च नीलमुत्पलं चेति प्रतिसन्धीयमानौ प्रत्ययावेकविषयौ भवतः तथा संयुक्ते महती इति च प्रतिसन्धानमस्ति। तस्मात् प्रतिसन्धानादेकविषयाविति। एतेनैकं महच्चलति खदिर इति प्रत्यया व्याख्याताः।

## न्यायवार्त्तिकतात्पर्यटीका

यथा महत्परिमाण इति। कुवलपरिमाणादामलकपरिमाणं महदिति लौकिका व्यपदिशन्ति, यथा कुवलादामलकं महदिति। न च परिमाणस्य परिमाणयोगः अनवस्थाप्रसङ्गादिति। तस्माद्भाक्तोऽयं व्यपदेशो महत्त्वे महदिति। तस्मिन् तच्छब्दो भाक्तमहच्छब्दवान् गुणत्वान्महत्त्ववत् गुणत्वं च शब्दस्यानुमानलक्षणे प्रसाधितम्। भाक्तं च मुख्यपूर्वकमिति क्वचिन्मुख्येन महत्त्वेन भवितव्यं तच्चासति बाधके द्रव्ये मुख्यमिति सिद्धम्। न महत्प्रत्ययविषयत्वादिति, न तन्मात्राद् अपि त्वबाधितादनन्यथासिद्धादिति। तदेवाऽऽह—अपि त्वित्यादि।

(१) 'द्वित्वसमानाश्रयं प्राप्ति-' ज-वि०। (२) अत्र 'अणुसामान्यप्रत्ययविषयत्वं' इति पाठान्तरं क्वचिद्दृष्टम्। (क) महत्त्वाद्द्रव्येति वक्तव्ये महद्द्रव्येत्युक्तिः शिष्टप्रवराणामुपपादनीया।

## न्यायभाष्यम्

प्रत्यासत्तिः (१)प्रतीघातावसाना संयोगो नार्थान्तरमिति चेत् नार्थान्तरहेतुत्वात् संयोगस्य। शब्दरूपादिस्पन्दानां हेतुः संयोगः। न च द्रव्ययोर्गुणान्तरोपजननमन्तरेण शब्दे रूपादिषु (२)स्पन्दे च कारणत्वं गृह्यते, तस्माद्गुणान्तरम्। प्रत्ययविषयश्चार्थान्तरं तत्प्रतिषेधो वा, कुण्डली गुरुरकुण्डलश्छात्र इति। संयोगबुद्धेश्च यद्यर्थान्तरं न विषयः अर्थान्तरप्रतिषेधस्तर्हि विषयः, तत्र प्रतिषिध्यमानवचनम्—संयुक्ते द्रव्ये इति यदर्थान्तरमन्यत्र दृष्टमिह प्रतिषिध्यते तद्वक्तव्यमिति। (३)द्वयोर्महतोराश्रितस्य ग्रहणान्नाण्वाश्रय इति।

## न्यायवार्त्तिकम्

समुदायद्वयापेक्ष इति चेत्—अथ मन्यसे द्वौ समुदायावाश्रित्य संयुक्तमहत्प्रत्ययौ भवतः, तथैकादिमहत्प्रत्यया (४) अप्येकसमुदायापेक्षा इति चेत्, न; विकल्पानुपपत्तेः। समुदायापेक्षाः संयुक्तमहदादिप्रत्यया इति कोऽयं समुदायः ? किमनेकः समुदाय्युतानेकस्य प्राप्तिरिति। अनेकस्य प्राप्तिः समुदाय इति चेत्, प्राप्ती प्राप्ते इति प्रत्ययः स्याद् इति। किं कारणम् ? समुदायस्य प्राप्तित्वेनाभ्युपगमात्। इमे वस्तुनी संयुक्ते इति च न स्यात्, प्राप्ती प्राप्ते इति च स्यात्। समुदायश्च समुदायान्तरप्राप्तावेकीभूत इति प्राप्तिप्रत्ययो न स्यात् समुदायस्यैकत्वात्। अथानेकः समुदायी समुदायः, द्वित्वेन सामानाधिकरण्यं न स्यात्—संयुक्ते इमे वस्तुनी इति द्वित्वसमानाधिकरणः प्रत्ययो न स्यात्। तस्मान्महती द्वित्वाश्रयभूते द्रव्ये संयोगसंस्थानमिति। न संयोगोऽस्तीति चेत् ? उक्तमत्र यथा अर्थान्तरं संयोग इति।

## न्यायवार्त्तिकतात्पर्यटीका

अनेनानन्यथासिद्धिर्द्रव्ये महत्प्रत्ययस्य दर्शिता। तथैकादिमहत्प्रत्यया इति, समुदायमेकमाश्रित्येति शेषः। समुदायश्च समुदायान्तरप्राप्ताविति। यदा हि भिन्ना अपि समुदायिनः प्राप्त्या एकीकृता एकः समुदायः तदा समुदायान्तरमपि समुदायान्तरेण प्राप्तमेकः समुदायः, न चैकस्याऽऽत्मना प्राप्तिरस्ति। न हि तदेवाङ्गुल्यग्रं तेनैवाङ्गुल्यग्रेण प्राप्यते। ततश्च द्वयोः समुदाययोः प्राप्तिरित्ययुक्तमित्यर्थः।

## वृत्तिः

मतीन्द्रियत्वात्। प्रत्यक्षे च महत्त्वस्य हेतुत्वात् तत्सत्त्वात् सेनावनादिप्रत्यक्षं युज्यते, न त्वणूनां महत्त्वाभावादिति भावः॥ ३६॥

समाप्तमवयविपरीक्षाप्रकरणम्॥ ४॥

---

(१) 'प्रतीघा तावता' इति ज०। (२) 'स्पर्शे' इति ज०। (३) 'द्रव्ययो-' इति टि०। (४) 'एकादिसमुदायापेक्षा' इति क-ख-वार्त्तिकपुस्तकधृतपाठान्तरम्।

## न्यायभाष्यम्

जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानम्, प्रत्याख्याने वा प्रत्ययव्यवस्थानुपपत्तिः। व्यधिकरणस्यानभिव्यक्तेरधिकरणवचनम्। अणुसमवस्थानं विषय इति चेत् प्राप्ताप्राप्तसामर्थ्यवचनम्—किमप्राप्ते अणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्यते अथ प्राप्ते इति। अप्राप्ते ग्रहणमिति चेत् व्यवहितस्याणुसमवस्थानस्याप्युपलब्धिप्रसङ्गः, (१)व्यवहितेऽणुसमवस्थाने तदाश्रयो जातिविशेषो गृह्येत। प्राप्ते ग्रहणमिति

## न्यायवार्त्तिकम्

इदं चावयवसमुदायवादी प्रष्टव्यः—योऽयं गौरश्वः पुरुष इति जातिनिमित्तः प्रत्ययः, स क्व भवतीति। नैव जातिरस्ति कुतो जातिनिमित्तः प्रत्ययो भविष्यतीति। जातिविशेषस्य प्रत्ययानुवृत्तिलिङ्गस्याप्रत्याख्यानम्—न जातिविशेषमन्तरेण प्रत्ययानुवृत्तेर्निमित्तमस्ति। न च निर्निमित्तः प्रत्ययो नामाऽऽस्थातुमर्हति, अस्ति चायमनुवृत्तः प्रत्ययः इमानि कुण्डलानीति, अस्ति च व्यावृत्तः प्रत्ययो नेमानि कुण्डलानीति; तस्माज्जातिविशेषो न प्रत्याख्येयः। व्यधिकरणस्यानभिव्यक्तेरधिकरणवचनम्—न चायं जातिविशेषो व्यधिकरणो व्यज्यत इत्यधिकरणमवश्यं वक्तव्यम्। अणुसमवस्थानमधिकरणमिति चेत्—अथ मन्यसे परमाणव एव केनचित्समवस्थानेनावतिष्ठमानास्तां तां जातिं व्यञ्जयन्त्यतो नावयवी सिध्यतीति। तत्र तावदुक्तम्—समवस्थानं संयोगोऽप्यर्थान्तरमिति। यच्च तत्समवस्थानं जातिविशेषं व्यनक्तीति मन्यसे, किं तच्चक्षुषा

## न्यायवार्त्तिकतात्पर्यटीका

चोदयति—नैव जातिरस्तीति। अयमभिसन्धिः—न सामान्यं नाम वस्तुसद् यस्याश्रयो वस्तुभूतोऽनुस्रियते। तथा हि तत् पिण्डे वा वर्त्तेत सर्वत्र वा। यदि सर्वत्र, सर्व एव गावः प्रसज्येरन्। यथा हि शाबलेयादयो गोत्वाभिसम्बन्धाद् गाव एवं विश्वमेव तत्सम्बद्धमिति गौः प्रसज्येत। अथ केषुचिदेव पिण्डेषु वर्तते, तदा (क)वक्तव्यं यदा क्वचिद्देशे पिण्डो जायते तदा (ख) कुतस्त्यं पुनरस्य गोत्वमिति। न तावत्तत्रापि पिण्डोत्पादात् पूर्वमासीत् नापि पिण्डान्तरादागतं तस्य निष्क्रियत्वात् पिण्डान्तरत्यागप्रसङ्गाच्च। न च पिण्डे जायमाने जायते अनित्यत्वापत्तेः। पिण्डान्तरस्य च गोत्वाजन्माजन्मस्वरूपविरुद्धधर्माध्यासेन भेदे सत्यसामान्यत्वप्रसङ्गः। तदितो महाव्यसनाद्बिभ्यता सांवृतमेव सामान्यमास्थेयं न पारमार्थिकमिति। परिहरति—जातिविशेषस्येति। प्रत्ययानुवृत्तिर्यद्यपि प्रत्यक्षा तथाऽपि विप्रतिपन्नं प्रति सैव

---

(१) 'ते व्यवहिते' इति ल०, 'अव्यवहिते' ज०।

(क) 'वक्तव्यं ततो यदा' इत्यादर्शपुस्तकयोः पाठः। उपरि मुद्रिताकारस्तु शोधितः।

(ख) अतः परमादर्शपुस्तकयोर्दृश्यमानं 'वक्तव्यं' इत्यक्षरत्रयं प्रमादान्मुद्रितमिति मत्वा परित्यक्तम्।

## न्यायभाष्यम्

चेत् मध्यपरभागयोरप्राप्तावनभिव्यक्तिः। यावत्प्राप्तं भवति तावत्यभिव्यक्तिरिति चेत् तावतोऽधिकरणत्वमणुसमवस्थानस्य। यावति प्राप्ते जातिविशेषो गृह्यते तावदस्याधिकरणमिति प्राप्तं भवति। तत्रैकसमुदाये प्रतीयमानेऽर्थभेदः। एवं च सति योऽयमणुसमुदायो वृक्ष इति प्रतीयते तत्र वृक्षबहुत्वं प्रतीयेत, यत्र यत्र ह्यणु-समुदायस्य भागे वृक्षत्वं गृह्यते स स वृक्ष इति। तस्मात् समुदिताणुसमवस्थानस्या-र्थान्तरस्य जातिविशेषाभिव्यक्ति(क)विषयत्वादवयव्यर्थान्तरभूत इति ॥ ३६ ॥

## न्यायवार्त्तिकम्

प्राप्तं व्यनक्त्याहोस्विदप्राप्तमिति। प्राप्तं व्यनक्तीति चेत् मध्यभागपरभागयोरप्राप्तत्वादनभि-व्यक्तिः—स यदि प्राप्ते समवस्थाने जातिविशेषो व्यज्यते मध्यभागपरभागयोरर्वाग्भागव्यवधाना-दप्राप्तावनभिव्यक्तिः। यावत्प्राप्तं तावति अभिव्यक्तिरिति चेत् न, तावतोऽधिकरणत्वम्—अथ मन्यसे यावच्चक्षुषा समवस्थानं प्राप्तं तावति भवति जातिव्यक्तिः, तावदेव तर्ह्यधिकरणं जातेः प्राप्तम्। एवं सति प्रतीयमानभेदः—योऽयं वृक्ष इति समुदायः प्रतीयते तस्य वृक्षस्य भेदः प्राप्नोति। किं कारणम्? यावति यावति जातिर्व्यज्यते स स वृक्ष इति प्राप्नोति। ततश्चैको वृक्षोऽनेक इति प्रतीयेत इत्येकप्रत्ययो न स्यात्। अर्वाग्भागस्य चावृक्षत्वाद् न कश्चिद्वृक्षत्वमिति वृक्ष-बुद्धेर्विषयो वक्तव्यः। तस्मात् समुदिताणुस्थानार्थान्तरस्य जातिविशेषाभिव्यक्तिहेतुत्वादवय-व्यर्थान्तरभूत इति। समुदिता अणवः स्थानं यस्य सोऽयं समुदिताणुस्थानः समुदिताणुस्थान-श्चासावर्थान्तरं च तस्य जातिविशेषव्यक्तिहेतुत्वं नाणूनामिति सिध्यत्यवयव्यर्थान्तरभूतः।

## न्यायवार्त्तिकतात्पर्यटीका

लिङ्गमुच्यते। सन्ति हि केचिद्भावा ये सहावस्थानेऽपि परस्परमसंबद्धाः, यथा समानकाला गन्धरसरूपस्पर्शाः, विज्ञानानि च बहूनि परेषां समानकालान्यप्यसंसर्गीणि, दिक्कालाकाशात्मानश्च सहावस्थाना अपि परस्परासंसर्गिणो वैशेषिकाणाम्; तथा सामान्यमपि सर्वासंबद्धमपि सर्वैः सहावतिष्ठते, यास्त्वस्य व्यक्तयस्ताभिः परं संबध्यन्ते। तथा च यत्र जायन्ते व्यक्तयस्तत्रासंबद्धावपि स्तः सामान्यसमवायाविति। तासां जन्मैव सामान्यसमवाया-वच्छेदः। स च स्वकारणादननुयोज्य इति वस्तुगतिं प्रामाणिकीं विद्वांसो नास्माद्दूषणा-द्बिभ्यतीति। बाधकान्तराणि चास्यावयविव्याख्यानेन प्रत्याख्यातानि। तावदेव तर्ह्यधिकरणं जातेः प्राप्तमिति। ये ये वृक्षत्वादिजातिमनपेक्षा व्यञ्जयन्ति ते ते परस्परं वृक्षादिव्यक्तितया भिद्यन्ते। यथा किंशुकाशोकचम्पकादयो भिन्नास्तरवस्तथाऽर्वाग्भागमध्यभागापरभागा अपि भिन्नास्तस्य स्युः। अवयविनि तु जायमाने नायं दोषः, तस्य सर्वावयवसाधारण्येन प्रत्यभिज्ञाय

(क) विषयो देशः अधिकरणमिति यावत्। 'नीवृज्जनपदौ देशविषयौ तूपवर्त्तनम्' इत्यमरः।

## न्यायवार्त्तिकम्

अनभ्युपगतार्थान्तरावयविना परमाणुशब्दस्यार्थो वक्तव्यः। परमाणुशब्दस्य परमापकर्ष-वाचित्वात् न ह्रसति महति न चासत्यणौ परमाणुरिति विशेषणं युक्तम्। परिमाणप्रकर्षयोगे सति परमाणुरिति विशेषणमर्थवत्, असत्यनर्थकमिति। स चायं परिमाणप्रकर्षयोगः सत्यवयविनि सिध्यतीति।

सत्त्वरजस्तमसां सर्वापकृष्टः संघातः परमाणुरिति कस्यचिद्दर्शनम्। तन्न युक्तमिति पश्यामः, व्याघातात्—सर्वापकृष्टः संघातश्चेति व्याहतम्, न हि संहन्यमानमन्तरेण संघातः सम्भवति।

अर्थान्तरं पटात्तन्तवः तद्धेतुत्वात् तुर्यादिवदिति। तुर्यादिपटकारणमर्थान्तरमिति दृष्टम्, तथा च तन्तवः, तस्मादर्थान्तरमिति। सामर्थ्यभेदाद् विषागदवत्, भिन्नप्रत्ययविषयत्वाद् रूपस्पर्शवत्। तन्तुपटरूपे भिन्नकारणे विशेषवत्त्वाद् रूपस्पर्शवत्।

एके तु भिन्नरूपत्वादित्येवं हेतुं कृत्वा परमाणुना प्रत्यवतिष्ठन्ते—एकस्मिन्नपि परमाणौ रूपभेदो दृष्टः रक्तः श्याम इति च। स त्वेवं प्रत्यवस्थेयः—न हेत्वर्थापरिज्ञानात्—न ब्रूमो भिन्नरूपत्वादन्योऽवयव्यवयवेभ्यः, अपि तु तन्तुपटरूपे भिन्नकारणे इति पक्षयित्वा विशेषवत्त्वादिति हेतुं ब्रूमः। तथा चायमप्रतिषेधः। बहुग्रन्थविस्तारिणी त्वेषा कथेत्युपरम्यते ॥ ३६ ॥

( इत्यवयविपरीक्षा )

## न्यायवार्त्तिकतात्पर्यटीका

-मानत्वात्। न चैवमवयविनोऽपि तावन्तः स्युरिति वाच्यम्, तस्यैकस्य सर्वावयवसाधारण्येन प्रत्यभिज्ञायमानत्वात्, अवयवान्तरस्य तु नावयवान्तरे प्रत्यभिज्ञानमिति तेषां वृक्षव्यक्ति-हेतुत्वे वृक्षानेकत्वप्रसङ्ग इति।

**सर्वापकृष्टः संघातश्चेति**, व्याघातः संहन्यमानापेक्षयाऽनपकर्षादित्यर्थः। सांख्यमवयवेभ्यो-ऽनर्थान्तरमवयविनं मन्यमानं प्रति प्रयोगमाह—**अर्थान्तरमिति**। (क)प्रावरणसामर्थ्यं पटस्य, तन्तूनां तु पटोत्पादनसामर्थ्यम्। **तन्तुपटरूपे इति**, तन्तूनां नीलपीतलोहितादिरूपं पटस्य तु चित्रम्, तत्र नीलादीनां समवायिकारणं तन्तवः चित्रस्य तु पटः। एवं तन्तुपटयोः सावर्ण्येऽपि कश्चिद्विशेष उन्नेयः। विशेषवत्त्वं च वैयधिकरण्येन प्रतीयमानत्वम्, तेन च भिन्नकारणत्वम्, (ख)भिन्नसमवायिकारणत्वं साध्यत इति न सिद्धसाधनं नाप्यनैकान्तिकत्वमिति।

ये तु पक्षहेतू अन्यथाकारं गृहीत्वा दूषयांबभूवुः तन्मतमुपन्यस्य दूषयति—**एके त्विति** ॥३६॥

(क) सामर्थ्यभेदादिति हेत्वन्तरं दृष्टान्तेन विवृणोति प्रावरणेति।

(ख) तन्तुपटरूपे भिन्नकारणे इति वार्त्तिकप्रयोगे भिन्नकारणत्वं व्याचष्टे भिन्नसमवायीति।

## न्यायभाष्यम्

परीक्षितं प्रत्यक्षम्। अनुमानमिदानीं परीक्ष्यते—

**( सू० )—रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् ॥ ३७ ॥**

अप्रमाणमिति एकदाऽप्यर्थस्य न प्रतिपादकमिति। रोधादपि नदी पूर्णा गृह्यते, तदा चोपरिष्टाद् वृष्टो देव इति मिथ्यानुमानम्। नीडोपघातादपि पिपीलिकाण्डसञ्चारो भवति, तदा च भविष्यति वृष्टिरिति मिथ्यानुमानमिति। पुरुषोऽपि मयूरवाशितमनुकरोति तदाऽपि शब्दसादृश्यान्मिथ्यानुमानं भवति ॥ ३७ ॥

## न्यायवार्त्तिकम्

परम्परया परीक्षितं प्रत्यक्षम्, अथेदानीमवसरप्राप्तमनुमानं परीक्ष्यते। किमिदमनुमानम्? उक्तं तत्पूर्वकमनुमानमिति। अत्र च पूर्ववदादेरुदाहरणानि—नदीपूरः, पिपीलिकाण्डसञ्चरणम्, मयूरवाशितमिति। एतदुदाहरणव्यभिचारद्वारकं सूत्रम्—

रोधोपघातसादृश्येभ्यो व्यभिचारादनुमानमप्रमाणम् इति। तत्र रोधो नाम (१)अपां स्पन्दमानानां (२)द्रवत्वप्रतिबन्धहेतुः, उपघातः पिपीलिकागृहोपद्रवः, सादृश्यं मयूरशब्दपुरुषशब्दयोः समानप्रत्ययकर्तृत्वम्, एभ्यो व्यभिचारादनुमानमप्रमाणमिति। शेषं भाष्ये।

यत्तावदनुमानमप्रमाणमित्युक्तं तदयुक्तम्, प्रतिज्ञापदयोर्व्याघातात्—अनुमानमिति सम्बन्धस्यातीन्द्रियार्थसाधकस्यैतन्नाम, अप्रमाणमिति तस्य प्रतिषेधः। सोऽयं प्रतिज्ञापदयोर्व्याघातः अनुज्ञातप्रतिषिद्धयोरेकत्वानुपपत्तिः(क) प्रतिज्ञाहेत्वोश्च विरोधः—अनुमानमप्रमाणमिति

## न्यायवार्त्तिकतात्पर्यटीका

अनुमानमिदानीमिति भाष्यम्। अत्रेदानींपदार्थमाह वार्तिककारः—अथेदानीमवसरप्राप्तमिति। उद्देशक्रम एव लक्षणपरीक्षयोः संबन्ध इत्यर्थः।

रोधो—णम् (सू० ३७)॥ अप्रमाणपदस्य व्याख्यानभाष्यम् एकदाऽपीति। प्रतिपादकं निश्चायकम्। लक्ष्यपरत्वाल्लक्षणस्य लक्षणयुक्तस्य लक्ष्यस्य व्यभिचारादप्रमाणत्वेन लक्षणमेव दूषितं भवतीत्यर्थः।

वार्तिकम्—पूर्ववदादेरुदाहरणानीति। अत्र च नदीपूरमयूरवाशिते शेषवत उदाहरणे। पिपीलिकाण्डसञ्चरणं चाचिरमुत्पत्स्यमानस्य वर्षस्य न कार्यम्, न ह्यनागतं कारणं भवति पूर्वोत्पन्नस्य। न च नासावक्रत्वादयोऽप्यनागतेन मरणेन क्रियन्ते, तथा सति पुत्रोऽपि पितुः

(१) 'अपां स्पन्दमानानाम्' इति ख-पुस्तके नास्ति। 'अपां स्पन्दमानाना'मिति पाठान्तरं क्वचिद् दृष्टम्।
(२) 'द्रवत्वप्रतिबन्धहेतुः' इति ख।
(क) एकत्वानुपपत्तेरिति पञ्चम्यन्तपाठकल्पना तु शोभना।

## न्यायवार्त्तिकम्

प्रतिज्ञा रोधोपघातसादृश्येभ्यो व्यभिचारादिति हेतुः। यद् व्यभिचारि तदप्रमाणमिति, यथा गोसिद्धौ विषाणित्वम्। सोऽयं हेतुः प्रतिज्ञां व्याहन्ति प्रतिज्ञा च हेतुमिति। यच्चेदमुच्यते अनुमानमप्रमाणमिति, तत्किमनुमानमात्रस्याप्रमाणत्वमुतानुमानविशेषस्येति। किं चातः ? यद्यनुमानमात्रमप्रमाणमिति पक्षः, हेतोरेकदेशवृत्तित्वादव्यापकत्वम्—समस्तमनुमानं (१)पक्षीकृतम्, न सर्वस्मिन्ननुमाने व्यभिचारोऽस्ति। न हि व्यभिचारस्याप्रमाणत्वसाधकस्य व्यभिचारः (२)प्रतिपादयितुं शक्यः। (३)न हि व्यभिचारस्य व्यभिचारे किञ्चित् प्रमाणमस्तीत्यव्यापकत्वादहेतुः। अथ यद् व्यभिचारि तदप्रमाणमिति ब्रूपे, प्रतिज्ञाविशेषणत्वाद्धेतोर्हेत्वन्तरं (४)वचनीयम्। सिद्धसाधनं चैतत् यद् व्यभिचारि तत् प्रमाणं न भवति ॥ ३७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

कारणं स्यादिति सर्वमवदातम्। कार्यकारणभावव्यवस्थापनं लौकिकं भवेत्। नियमवान् खलु प्राग्भावः कारणत्वस्य व्यवस्थापको नियमवांश्च पश्चाद्भावः कार्यत्वस्य व्यवस्थापकः, नासावक्रत्वाद्यो मरणस्य यत्कारणं तस्य पूर्वकार्याणीति प्रत्यासत्त्याऽनया मरणमनुमापयन्ति। न च पिपीलिकाण्डसञ्चरणं वर्षस्य कारणमनुपलब्धसामर्थ्यात्, असत्यपि तस्मिन् वर्षस्योत्पत्तेः। वर्षमूलकारणस्य तु महाभूतसंक्षोभस्य पिपीलिकाण्डसञ्चरणं पूर्वकार्यम्। क्थ्यमानाः खलु पिपीलिका भौमेनोष्मणा स्वान्यण्डानि भूमिष्ठान्युपरिष्टान्नयन्ति। तस्मात् पिपीलिकाण्डसञ्चारेण वर्षकारणमनुमाय यदि वर्षकारणात् कार्यं वर्षमनुमिमते अनुमातारः तदा पूर्ववदुदाहरणम्। अथ कार्यकारणभावमबुद्ध्वैव, तदा कार्यकारणभावाभावेन सामान्यतोदृष्टस्योदाहरणमिति मन्तव्यम्। उदाहरणव्यभिचारद्वारकमिति, लक्ष्यदूषणद्वारेण लक्षणस्य दूषणमित्यर्थः। न हि व्यभिचारलक्षणस्यानुमानाप्रामाण्यप्रतिपादकस्यानुमानस्य व्यभिचारे किञ्चित् प्रमाणमस्तीति ॥ ३७ ॥

## वृत्तिः

अवसरेण क्रमप्राप्तमनुमानं परीक्षितुं पूर्वपक्षयति—( रोधोपघातेति )

अनुमानस्य त्रैविध्यं पूर्वमुक्तम्। तत्र त्रिविधस्याप्रामाण्ये साधितेऽनुमानमप्रमाणमर्थात्सिद्धमित्याशयेनेदम्।

अनुमानम् अनुमानत्वेनाभिमतं न प्रमाणं (५)प्रमितिकरणत्वव्यभिचारि व्यभिचारिहेतुकत्वात्। तत्र त्रिविधे व्यभिचारं दर्शयति—रोधेत्यादिना। नदीवृद्ध्या पिपीलिकाण्डसञ्चारेण मयूररुतेन च वृष्ट्यनुमानम्, तत्र त्रिविधमुदाहरणं न सम्भवति

(१) 'पक्षितम्' ख। (२) 'प्रतिपादयितुं' इति ख-पु० नास्ति। (३) 'नह्यि व्यभिचारेऽव्यभिचारस्य' ख। (४) 'रचनीयम्' खं। (५) 'प्रमितिकरणं व्यभि-' इति भ०।

## ( सू० )—नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात् ॥ ३८ ॥

### न्यायभाष्यम्

नायमनुमानव्यभिचारः, अननुमाने तु खल्वयमनुमानाभिमानः। कथम्? नाविशिष्टो लिङ्गं भवितुमर्हति। पूर्वोदकविशिष्टं खलु वर्षोदकं शीघ्रतरत्वं स्रोतसो बहुतर(१)फेनफलपर्णकाष्ठादिवहनं चोपलभमानः पूर्णत्वेन नद्या उपरि वृष्टो देव इत्यनुमिनोति नोदकवृद्धिमात्रेण। पिपीलिकाप्रायस्याण्डसञ्चारे भविष्यति वृष्टिरित्यनुमीयते न कासाञ्चिदिति। नेदं मयूरवाशितं तत्सदृशोऽयं शब्द इति विशेषापरिज्ञानान्मिथ्यानुमानमिति। यस्तु (२)सदृशाद् विशिष्टाच्छब्दाद्विशिष्टमयूरवाशितं गृह्णाति तस्य विशिष्टोऽर्थो गृह्यमाणो लिङ्गम्, यथा सर्पादीनामिति। सोऽयमनुमातुरपराधो नानुमानस्य, योऽर्थविशेषेणानुमेयमर्थमविशिष्टार्थदर्शनेन बुभुत्सत इति ॥ ३८ ॥

### न्यायवार्त्तिकम्

यान्यप्येतान्युदाहरणानि भवता व्यभिचारीणीत्युच्यन्ते तेष्वपि व्यभिचारो नास्तीत्यसिद्धतोद्भावनद्वारकं सूत्रम्—

नैकदेशत्राससादृश्येभ्योऽर्थान्तरभावात्। यत्तावत् रोधादपि नदीपूरो भवतीति, नात्र नदीपूरमात्रेण उपरि वृष्टिमद्देशसम्बन्धित्वं नद्याः साध्यते, अपि तु (३)पूरविशेषेण, तस्य च व्यभिचारोऽसिद्धः(३*)। उपघातात् पिपीलिकाण्डसञ्चारमात्रस्य च व्यभिचारो न सञ्चरणविशेषस्य।

### न्यायवार्त्तिकतात्पर्यटीका

भाष्ये पिपीलिकाप्रायस्येति। प्रायशब्दः प्रबन्धार्थः ॥ ३८ ॥

### वृत्तिः

नदीरोधाधीननदीवृद्ध्या आश्रयोपघाताधीनपिपीलिकाण्डसञ्चारेण मनुष्यकर्तृकमयूररुतसदृशरुतेन व्यभिचारात्। पिपीलिकाण्डसञ्चारस्य वृष्टिहेतुत्वाभिप्रायेणेदम्।

अथवा लक्षणसूत्रे पूर्ववत् पूर्वकालीनसाध्यानुमापकम्, शेषवत् उत्तरकालीनसाध्यानुमापकं सामान्यतोदृष्टं विद्यमानसाध्यस्यानुमापकम् इत्यर्थ इत्याशयः। एतेन त्रैकालिकसाध्यानुमापकत्वं (४)न सम्भवति।

परे तु—पिपीलिकाण्डसञ्चारेणात्यन्तोष्मानुमानम्, ततश्च महाभूतक्षोभानुमानं तस्य च वृष्टिहेतुत्वात् तेन वृष्ट्यनुमानमिति—वदन्ति।

एवमन्यत्रापि व्यभिचारशङ्कासम्भवादव्यभिचारनिश्चयस्यानुमितिहेतोरेव दुर्लभत्वात् प्रामाण्यं न सम्भवतीत्याशयः ॥ ३७ ॥

---

(१) 'फेनफलपर्णकाष्ठादिवहुलं' इति ज०। (२) 'सदृशात्' इति ल-ग-भ-पु० नास्ति। (३) 'पूरविशेषे वा तस्याव्यभिचारादसिद्धः' ख। (४) भ-पु० 'सम्भवती'ति नकारशून्यः पाठः।

### न्यायभाष्यम्

त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम्। अत्र च—

## (सू०)—वर्त्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः ॥३९॥

वृन्तात् प्रच्युतस्य फलस्य भूमौ प्रत्यासीदतो यदूर्ध्वं स पतितोऽध्वा तत्संयुक्तः कालः पतितकालः, योऽधस्तात् स पतितव्योऽध्वा, तत्संयुक्तः कालः पतितव्यकालः। नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति वर्त्तमानः कालो गृह्येत। तस्माद्द् वर्त्तमानः कालो न विद्यत इति(क) ॥ ३९ ॥

### न्यायवार्त्तिकम्

कः पुनरसौ विशेषः? अविनष्टानां भूयसीनां भूयःसु स्थानेष्वपि (१)पिपीलिकाण्डभूयस्त्वेनोर्ध्व-सञ्चारणं यत् तदनागतवृष्ट्यविनाभावि। शब्दव्यभिचारोऽपि नास्ति—यस्मान्न शब्दमात्रमनुमानं मयूरास्तित्वे, न चात्र मयूरः साध्यते, अपि तु शब्दगताद्द विशेषात् (२)षड्जादेः शब्द एव (३)मयूरगुणविशिष्टोऽनुमीयते, एवं हि व्यभिचारो नास्तीत्यसिद्धो हेतुः ॥ ३८ ॥

( इत्यनुमानपरीक्षा )

त्रिकालविषयमनुमानं त्रैकाल्यग्रहणादित्युक्तम्। तत्र तावत् काल एव नास्तीति केचित्। तच्च न; प्रमाणाभावात्—न हि कालसत्त्वे प्रमाणमस्तीति। ननु चानुपलब्धिः कालसत्त्वं प्रतिपादयति, न प्रतिपादयति व्यभिचारात्—त्रिकारणेयमनुपलब्धिः, तत्रानुपलब्ध्या कारण-

### न्यायवार्त्तिकतात्पर्यटीका

तदेवम् (ख)अनुमानलक्षणपरीक्षाद्वारेणानुमानलक्षणं परीक्ष्य संप्रत्यनुमानविषयपरीक्षयाऽनु-मानपरीक्षामवतारयति भाष्यकारः—त्रिकालविषयमिति।

वर्त्त—त्तेः ( सू० ३९ )॥ तत्र वार्त्तिककारः सत्यां कालस्य सिद्धौ वर्त्तमानत्वं परीक्ष्यते स एवापरीक्षितोऽद्यापि न सिध्यतीति कालस्वरूपं परीक्षते—तत्र तावदिति। त्रिकारणेय-

### वृत्तिः

समाधत्ते—( नैकदेशेति )

अनुमानाप्रामाण्यं न युक्तमेकदेशरोधजनदीवृद्धेः त्रासजपिपीलिकाण्डसञ्चारात् मयूररुतसदृशरुताच्च लिङ्गीभूतानां नदीवृद्ध्यादीनां भिन्नत्वात् (ग)न दोषः। न च सर्वत्र व्यभिचारशङ्का, सत्यां तस्यां तर्केण तदपनयनान्न दोष इत्याशयः ॥ ३८ ॥

समाप्तमनुमानपरीक्षाप्रकरणम् ॥ ५ ॥

---

(१) 'पिपीलिकापिण्डभूयस्त्वेन' ख। (२) 'षड्जनुषङ्गादेः' ख। (३) 'मयूरविशिष्टो-' ख।

(क) 'अपर आहुः नास्ति वर्त्तमानः काल' इति पा० ३।२।१२३ सूत्रे महाभाष्यम्।

(ख) 'अनुमानलक्षणपरीक्षाद्वारेणानुमानलक्षणं परीक्ष्य' इति पाठः समीचीनतया प्रतिभाति।

(ग) 'न दोषः' इत्ययमंशोऽत्र प्रमादान्मुद्रित इति सम्भाव्यते।

## न्यायवार्त्तिकम्

वैकल्यं गम्येत, उपलभ्यमेव नास्तीत्येतदेव कुतः? अथोपलभ्यमानस्याभावादनुपलब्धिरित्ययं प्रतिज्ञार्थः, तथा च हेतुर्नास्ति, प्रतिज्ञार्थेनाऽऽक्षिप्तत्वात्—आक्षिप्तो हेतुः प्रतिज्ञार्थेनेति। न चासति धर्मिणि धर्मः सम्भवति आश्रयाभावात्। अथ धर्मोऽपि नास्ति, साधनार्थो हीयते—न ह्यसतः साधनार्थं पश्यामः।

परापरादिप्रत्ययानां च सनिमित्तत्वात् कालप्रतिषेधो न युक्तः—यश्च कालं न प्रतिपद्यते तेन परापरादिप्रत्ययानां निमित्तं वक्तव्यम्। न ह्यसति निमित्ते नैमित्तिकान् विशेषवतः प्रत्ययान् पश्यामो रूपादिप्रत्ययवदिति। कालैकत्वात् प्रत्ययभेदानुपपत्तिरिति चेत्—अथ मन्यसे कालैकत्वे सति न युक्तः परापरादिप्रत्ययभेदः, नाभिन्नं निमित्तं भिन्नं कार्यं करोतीति; न, सापेक्षत्वात्

## न्यायवार्त्तिकतात्पर्यटीका

मिति कारणान्तरवैकल्यं विषयस्यायोग्यत्वमभावो वा विषयस्येति त्रीण्यनुपलब्धिकारणानीति। अथ धर्मोऽपि नास्तीति। भावरूपो हि हेतुरभावाधिकरणो न भवति, अभावरूपस्य त्वभावाधिकरणत्वाविरोध इत्यर्थः। परिहरति—साधनार्थो हीयते। न हि पराभिमतोऽभावः सर्वसामर्थ्यरहितः साधनं कस्यचिद्भवति, अस्मदभिमतस्त्वभावः परतन्त्रो भावाधिकरण एव नानधिकरणो नाप्यभावाधिकरण इत्यर्थः।

एवं कालस्य बाधकप्रमाणाभावमुक्त्वा साधकं प्रमाणमाह—परापरादीति। स्वयं विद्यमानयोरनियतदिग्देशयोः समानदिक्कयोर्वा देशतः सन्निकृष्टविप्रकृष्टयोर्वा विप्रकृष्टसन्निकृष्टयोर्वा युवस्थविरयोरेकस्मिन् शरीरावस्थाभेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयबहुत्वान्तरितजन्मनि स्थविरे युवानं शरीरावस्थाभेदानुमितातीतसूर्योदयास्तमयरूपक्रियाप्रचयाल्पत्वान्तरितजन्मानमवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते, तामपेक्ष्य बहुतरसवित्रुदयास्तमयविशिष्टेन कालप्रदेशेन योगाद् वर्षीयसि परत्वस्योत्पत्तिः एवं वर्षीयांसमवधिं कृत्वा यवीयसि सन्निकृष्टा बुद्धिरुत्पद्यते (क)तामपेक्ष्याल्पतरदिनकरोदयास्तमयाल्पत्वान्तरितजन्मानमवधिं कृत्वा विप्रकृष्टा बुद्धिरुत्पद्यते तामपेक्ष्य बहुतरसवित्रुदयास्तमयप्रचयविशिष्टेन कालप्रदेशेन योगाद् यवीयस्यपरत्वस्योत्पत्तिः, तयोश्च कालपिण्डसंयोगयोः प्रत्यक्षत्वं न लोकसिद्धम्। ते एते परत्वापरत्वे कालपिण्डसंयोगादुत्पद्यमाने कालकारणविशिष्टमात्मानं कार्यतया गमयतः। सूर्योदयास्तमयक्रियाप्रचयाल्पत्वबहुत्वविशिष्टात् पिण्डादेव परत्वापरत्वे भविष्यतः कृतमत्र द्रव्यान्तरेण कालेनेति चेत्, न; सवितृसमवेतायाः क्रियायाः पिण्डेनासंबन्धात्। संयुक्तसमवायस्त्वस्याः संबन्धः कालेन सर्वगतेनास्यास्ति। (ख) न वाकाशं सर्वगतमपि परापरव्यतिकरं प्रत्ययवकल्पते अस्य स्वरूपेणासेदात्।

(क) 'तामपेक्ष्याल्पतरे'त्यादि'कालप्रदेशेन योगा'दित्यन्तो ग्रन्थः लिपिकृत्प्रमाददुष्टः, तत्र 'तामपेक्ष्याल्पतरसवित्रुदयास्तमयविशिष्टेन कालप्रदेशेन योगात्' इत्येतावन्मात्रपाठः समीचीनः सम्भाव्यते।

(ख) अत्र कल्पान्तरस्यानुक्ततया वाशब्दार्थासङ्गतेः 'न चाऽऽकाश'मिति पाठः समीचीनतया सम्भाव्यते।

## न्यायवार्त्तिकम्

पित्रादिप्रत्ययभेदवदिति—यथैकस्मिन् पुरुषे अनेकसम्बन्धभेदानुविधायिन्यभिन्ने पिता पुत्रो भ्रातेति प्रत्यया भवन्ति तद्वदेकः कालः कार्यकारणविशेषापेक्षः परापरादिप्रत्ययहेतुरिति।

( इति कालपरीक्षा )

## न्यायवार्त्तिकतात्पर्यटीका

अपि चाऽऽकाशात्मानौ न परापरव्यतिकरकारणम् असाधारणगुणयोगित्वात् पृथिव्यादिवत्। तस्मात् परापरव्यतिकरकारणे कल्पनीये। ते च द्रव्यमपारतन्त्र्याद् आकाशवत्, ते दिक्काला उच्येते। एवं यौगपद्यायौगपद्य-चिर-क्षिप्रप्रत्यया अपि काललिङ्गम्। न ह्येते क्रियायां तत्कारकेषु वा भवितुमर्हन्ति तेषु सत्स्वपि कादाचित्कत्वात्। नन्वयं कालोऽपि नित्य इति तस्मिन् सत्यप्येते कादाचित्काः कथं (क) कालकारणम् अपि? यद्युच्येत—एकसूर्यपरिस्पन्दावच्छिन्नकालसम्बन्धिन्यः (ख) क्रियाः युगपदनेकसूर्यपरिस्पन्दावच्छिन्नकालसम्बन्धिन्यः क्रियाः क्रमवत्योऽयौगपद्यप्रत्ययगोचरः, एवं बहुतरानेकसूर्यपरिस्पन्दावच्छिन्नकालसम्बन्धिनी क्रिया चिरप्रत्ययगोचरः, अल्पतरानेकसूर्यपरिस्पन्दावच्छिन्नकालसम्बन्धिनी क्रिया क्षिप्रप्रत्ययगोचर इति; कृतं तर्हि सूर्यपरिस्पन्दस्य कालावच्छेदेन, नन्वयं साक्षादेव क्रियामवच्छेत्स्यतीति, तथा च युगपदादिप्रत्यया भविष्यन्तीति तन्न; सूर्यपरिस्पन्दस्य क्रियाभिः सम्बन्धाभावेन तदवच्छेदकत्वानुपपत्तेः, न वाकाशादिसम्बन्धद्वारमस्य तदवच्छेदकत्वम्। तथा हि नाऽऽकाशादयः क्रियायौगपद्यादिप्रत्ययनिमित्तम् असाधारणगुणयोगित्वाद् घटवत्। एवं यौगपद्यादिप्रत्यया न दिक्कारणकाः दिग्देशनियमानपेक्षणात् कालपिण्डसंयोगजपरत्वापरत्ववदिति। तस्मात् सूर्यपरिस्पन्दस्य देवदत्तादिपरिस्पन्दस्य चास्ति कालेन सर्वगतेन संयुक्तसमवायलक्षणः संबन्धः, एतया च द्वारा परिस्पन्दयोरप्यस्ति सम्बन्ध इति। कालसम्बन्धानपेक्षमेव च सूर्यपरिस्पन्दावच्छिन्नस्य देवदत्तादिपरिस्पन्दस्य ग्रहणमुपपद्यते। यथा दण्डीति शब्दाद्दण्डावच्छिन्नं पुरुषं प्रतीत्य तदन्यथानुपपत्त्या पश्चाद् दण्डपुरुषयोः संयोगभेदोऽवगम्यते न तु सम्बन्धज्ञानपुरःसरं दण्डिविज्ञानम् एवं परत्वापरत्वे अपि कालपिण्डसंयोगनिबन्धने गृहीत्वा कालोऽनुमीयते न तु कालज्ञानपुरःसरं तज्ज्ञानम्; तत्सिद्धमरूपतया कालोऽप्रत्यक्षः परत्वापरत्वाद्यनुमेयश्चेति। तस्मात् सूक्तम्—परादिप्रत्ययानां चेति। कार्यकारणविशेषापेक्ष इति। कार्यस्य परापरादेः

## वृत्तिः

अनुमानस्य त्रिकालविषयत्वमभिमतम्, तन्न युक्तम्, वर्तमानाभावेन तदधीनज्ञानयोरतीतानागतयोरभावेन कालत्रयात्मकविषयाभावात् इत्याशयेन वर्तमानपरीक्षाप्रकरणमारभमाणो वर्तमानमाक्षिपति—( वर्तमानेति )

(क) अत्राऽऽदर्शपुस्तकसम्पादकैः क्वचित् पुस्तके दृष्टः 'कालकारणा' इति पाठः सम्यक्तया प्रतिभाति।

(ख) अत्र 'क्रियाः यौगपद्यप्रत्ययगोचरः, अनेकसूर्य' त्यादिपाठो युक्तः।

## (सू०)—तयोरप्यभावो वर्त्तमानाभावे तदपेक्षत्वात् ॥ ४० ॥

### न्यायभाष्यम्

नाध्वव्यङ्ग्यः कालः। किं तर्हि? क्रियाव्यङ्ग्यः पततीति। यदा पतनक्रिया (१)व्युपरता भवति (२)स कालः पतितकालः। यदोत्पत्स्यते स पतितव्यकालः।

### न्यायवार्त्तिकम्

एवमुपपादितः कालः। तस्योपपन्नस्य वर्तमानकालप्रतिषेधार्थं सूत्रम्—

वर्तमानाभावः पततः पतितपतितव्यकालोपपत्तेः। वृन्तात् प्रच्युतस्य फलस्य भूमिं प्रत्यासीदतो यदूर्ध्वं फलमवधिं कृत्वा यावद्वृन्तमिति स पतितोऽध्वा। यदधस्तात् फलमवधिं कृत्वा (क)यावद्भूमिरिति स पतितव्योऽध्वा। नेदानीं तृतीयोऽध्वा विद्यते यत्र पततीति स्यात्। न चाध्वानमन्तरेण कालव्यक्तिहेतुरस्ति। तस्माद् वर्तमानः कालो नास्तीति। न, विरोधात्—वर्तमानः कालो नास्तीति ब्रुवन्नभ्युपगतौ कालौ बाधते ॥ ३९ ॥

(३)एतदर्थज्ञापनार्थं सूत्रम्—

तयोरप्यभावो वर्तमानाभावे तदपेक्षत्वात्। वर्तमानसापेक्षावितरौ कालौ, यस्य वर्तमानो नास्ति तस्य वर्तमानानभ्युपगमेऽभ्युपगतयोः कालयोरभाव इति। न चायं कालोऽध्वव्यङ्ग्यः। किं तर्हि? क्रियाव्यङ्ग्यः पततीति। यदा द्रव्यं क्रियासम्बद्धमुपलभते सोऽयं

### न्यायवार्त्तिकतात्पर्यटीका

प्रत्ययस्य च यः कारणविशेषो बहुतराल्पतरातीततपनपरिस्पन्दावच्छिन्नकालपिण्डसंयोगः तदपेक्षः काल एकोऽपि परापरादिप्रत्ययहेतुः परापरत्वलक्षणगुणोत्पादनद्वारेणेति वर्त्तते कारकव्यङ्ग्यः कालः, तस्य निष्पन्नतया व्यक्तिसाधनत्वोपपत्तेः; न तु क्रियाव्यङ्ग्यः, तस्याः साध्यतया असिद्धत्वाद्व्यक्तिं प्रति हेतुभावाभावात्। तथा चातीतानागतमात्रदर्शनाद्वर्त्तमानाभावेन न त्रैकाल्यविषयमनुमानं तयोश्च पितापुत्रवत्परत्वापरत्ववद् ह्रस्वदीर्घवच्च परस्परापेक्षा सिद्धिरन्तरेणापि वर्तमानं कालमिति पूर्वः पक्षः ॥ ३९ ॥

तयो—त्वात् (सू० ४०) ॥ नातीतादिरूपता कालस्य कारकव्यङ्ग्या तयोस्तादवस्थ्यात्, अपि तु क्रियाव्यङ्ग्या; तां खलूरीकृत्य प्रवर्त्तमानानयमतीतानागतवर्त्तमानान् प्रतिपद्यते नान्यथा। यदा खल्वयं पुरुषः फलं प्रवर्त्तमानपतनक्रियाविशिष्टं प्रतिपद्यते तदा व्यपदिशति

### वृत्तिः

वर्तमानाभावः अतीतानागतभिन्ने कालत्वाभावः। व्युत्पादयति—पतत इति। पततः फलादेर्वृक्षावधिकः कश्चन देशः पतिताध्वा, भूम्यवधिकः कश्चन पतितव्याध्वा, न तु वर्तमानस्य प्रसङ्गोऽपीति भावः ॥ ३९ ॥

(१) '-व्युपरतो' वि-टि। (२) 'तत्कालः' वि-टि। (३) 'एतदनुज्ञापनार्थम्' ख।
(क) 'यावद् भूमिम्' इति युक्तः पाठः।

## न्यायभाष्यम्

यदा द्रव्ये (१)वर्त्तमाना क्रिया गृह्यते स वर्त्तमानः कालः। यदि चायं द्रव्ये वर्तमानं पतनं न गृह्णाति कस्योपरममुत्पत्स्यमानतां वा प्रतिपद्यते। पतितः काल इति भूता क्रिया, पतितव्यः काल इति चोत्पत्स्यमाना क्रिया, उभयोः कालयोः क्रियाहीनं द्रव्यम्; अधः पततीति क्रियासम्बद्धम्। सोऽयं क्रियाद्रव्ययोः सम्बन्धं गृह्णातीति(२) वर्त्तमानः कालः, तदाश्रयौ चेतरौ कालौ तदभावे न स्यातामिति ॥ ४० ॥

## न्यायवार्त्तिकम्

सम्बन्धविशिष्टः कालो वर्तमान उच्यते। क्रियासम्बन्धातिक्रमादतीतः। यदा तु क्रियाकारणान्याभिमुख्येनावस्थितान्यप्रतिबद्धशक्तिकानि, तदा भविष्यति क्रियेत्यनागतः काल इति। यदि चायं वर्तमानां क्रियां न प्रतिपद्यते कस्मादतीतामनागतां च प्रतिपद्यते। न कालोऽतीतः न फलमतीतम्, कालस्य सर्वदा वर्तमानत्वात् फलस्य चापतत् पतति पतिष्यतीति क्रियाविशेषणत्वेन प्रत्ययविशेषविषयत्वात् क्रियायां सम्भवो न फले इति। तस्मात् क्रिया कालाभिव्यक्तिनिमित्तम्, नाध्वा गन्तव्यस्य तादवस्थ्यात्—योऽसौ गन्तव्यो देशः स यथाभूत एवानुत्पन्नक्रिये फले तथाभूत एवोत्पन्नक्रिय इत्यभेदान्नाध्वा कालव्यक्तिहेतुः ॥ ४० ॥

## न्यायवार्त्तिकतात्पर्यटीका

पतति फलमिति। तन्मूले चास्यातीतानागतत्वे अपतत् फलं पतिष्यतीति। न च वर्तमानपतनमसिद्धं येन न कालं व्यञ्ज्यात्(क) तदसत्त्वे कस्येदं कारणं गुरुत्वं कस्य च फलं कारकं कस्य च (ख)फलं भूमिसंयोगः कार्यः। न च परत्वापरत्वादीनामपि सिद्धिः परस्परापेक्षा। किं तर्हि? सन्निकृष्टबुद्ध्यपेक्षमपरत्वम्, विप्रकृष्टबुद्ध्यपेक्षं परत्वम्, पूर्वसंख्यावच्छिन्नता च संयुक्तसंयोगानां सन्निकर्षः, परसंख्यावच्छिन्नता च विप्रकर्षः। एवं ह्रस्वत्वदीर्घत्वे अपि परिमाणभेदौ न परस्परापेक्षौ। पितापुत्रौ च प्रमाणप्रमेयव्याख्यया व्याख्यातौ। तस्मादतीतानागतयोर्वर्त्तमानापेक्षत्वाद् वर्तमानस्य च तदनपेक्षत्वादस्ति त्रैकाल्यमिति सिद्धान्तः ॥ ४० ॥

## वृत्तिः

समाधत्ते—( तयोरिति )

वर्तमानाभावे तयोरतीतानागतयोरप्यभावः स्यात् तयोस्तदपेक्षत्वात्। वर्तमानध्वंसप्रतियोगित्वं ह्यतीतत्वम्, वर्तमानप्रागभावप्रतियोगित्वम्(३)अनागतत्वमिति भावः ॥ ४० ॥

---

(१) 'वर्तमाने' ज०। (२) 'इति' पदं ठ-पु० नास्ति। (३) भ-पु० 'हि' पदमत्राधिकम्।

(क) अतः परमादर्शपुस्तकयोः ( तदद्वयोस्तादवस्थ्यात् अपि तु क्रियाव्यङ्ग्यता ) इत्याकारेण मुद्रितः पाठः क-पुस्तकसम्पादकैः पुस्तकविशेषेऽनुपलब्धः, अस्माभिरपि असङ्गतिभीतैः परित्यक्तः। (ख) 'फलभूमिसंयोगः कार्यम्' इति पाठकल्पनं तु समीचीनम्।

## न्यायभाष्यम्

अथापि—

### (सू०)—नातीतानागतयोरितरेतरापेक्षा सिद्धिः ॥ ४१ ॥

(१)यद्यतीतानागतावितरेतरापेक्षौ सिध्येतां प्रतिपद्येमहि वर्त्तमानविलोपम्। नातीतापेक्षाऽनागतसिद्धिः नाप्यनागतापेक्षाऽतीतसिद्धिः। कया युक्त्या? केन कल्पेनातीतः कथ(२)मतीतापेक्षाऽनागतसिद्धिः, केन च कल्पेनानागत इति नैतच्छक्यं निर्वक्तुमव्याकरणीयमेतद्वर्तमानलोप इति। यच्च मन्येत ह्रस्वदीर्घयोः स्थलनिम्नयोश्छाया-तपयोश्च यथेतरेतरापेक्षया सिद्धिरेव(२*)मतीतानागतयोरिति, तन्नोपपद्यते विशेषहेत्व-भावात्। दृष्टान्तवत्प्रतिदृष्टान्तोऽपि प्रसज्यते, यथा रूपस्पर्शौ गन्धरसौ नेतरेतरापेक्षौ

## न्यायवार्त्तिकम्

अथ मन्यसे वर्तमानकालानभ्युपगमेऽप्यतीतानागतावितरेतरापेक्षौ सेत्स्येते (क), एतत्प्रति-षेधार्थं सूत्रम्—

नातीतानागतयोरितरेतरापेक्षा सिद्धिरिति। न ह्यतीतानागतावितरेतरापेक्षौ सिध्यतः। कथमिति? वर्तमानाभावे किमतीतं कथं चेति किमनागतं कथं चेति न शक्यते वक्तुम्, अव्याकरणीयमेतद्वर्तमानलोप इति। विशेषप्रतिषेधाच्च वर्तमानोऽभ्युपगतः—

## न्यायवार्त्तिकतात्पर्यटीका

भाष्यम्—अथापीति कस्मादतीतानागतावितरेतरापेक्षौ न भवतः कृतं वर्तमानेनेति शङ्कां सूचयति। तन्निराकरणाय सूत्रम्—

नाती—द्धिः (सू० ४१)॥ परस्परापेक्षसिद्धेर्हि वर्तमानाभावः, सैव तु नास्तीति सूत्रार्थः। कया युक्त्येति प्रश्नः। उत्तरम्—केन कल्पेन प्रकारेण अतीतः। तदनेन वर्तमानाभावे अतीतस्वरूपाक्षेपः कृतः। ह्रस्वदीर्घत्वादीनां परस्परापेक्षसिद्धित्वमङ्गीकृत्याऽऽह— तन्नोपपद्यते विशेषहेत्वभावादिति। परमार्थतस्तु न चेतरेतरापेक्षा ह्रस्वदीर्घत्वादीनामपि सिद्धिरिति।

## वृत्तिः

ननु तयोः परस्परापेक्षयैव सिद्धेर्न वर्तमानापेक्षेत्यत आह—(नातीतेति)। अन्योन्याश्रयादिति भावः॥ ४१ ॥

---

(१) अत्र 'अथापि' इत्यधिकम् ल०। (२) 'अतीते'त्यादि'रेव'मित्यन्तोऽंशः ज-पु० नास्ति। (३) 'कालोपपत्तिरिति' इति क-ख।

(क) अत्राऽऽत्मनेपदं प्रयत्नेनोपपादनीयम्। (ख) भाष्ये च-कारो नोपलभ्यते।

### न्यायभाष्यम्

सिध्यतः एवमतीतानागताविति नेतरेतरापेक्षा कस्यचित्सिद्धिरिति। यस्मादेकाभावेऽन्यतराभावादुभयाभावः—यद्येकस्यान्यतरापेक्षा सिद्धिरन्यतरस्येदानीं किमपेक्षा ? यद्यन्यतरस्यैकापेक्षा सिद्धिरेकस्येदानीं किमपेक्षा ? एवमेकस्याभावे अन्यतरन्न सिध्यतीत्युभयाभावः प्रसज्यते ॥ ४१ ॥

अर्थसद्भावव्यङ्ग्यश्चायं वर्त्तमानः कालः, विद्यते द्रव्यं विद्यते गुणः विद्यते कर्मेति। यस्य चायं नास्ति, तस्य—

## (सू०)—वर्त्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः ॥ ४२ ॥

प्रत्यक्षमिन्द्रियार्थसन्निकर्षजम्, न चाविद्यमानमसदिन्द्रियेण सन्निकृष्यते। न चायं विद्यमानं सत् किञ्चिदनुजानाति। प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षज्ञानं सर्वं नोपपद्यते, प्रत्यक्षानुपपत्तौ तत्पूर्वकत्वाद् अनुमानागमयोरनुपपत्तिः। सर्वप्रमाणविलोपे सर्वग्रहणं न भवतीति ॥ ४२ ॥

### न्यायवार्त्तिकम्

यस्मादयं विशेषप्रतिषेधः पततः पतितपतितव्यकालोपपत्तेरिति (३)। नच वर्तमानकालानभ्युपगमे पतत इति पदस्यार्थोऽस्ति। न चैतत्पदार्थानभ्युपगमे पतत इति युक्तं वक्तुम्। सोऽयं व्याघातः—वर्तमानश्च नास्ति पतत इति च प्रयोगः। न (ख) चेतरेतरापेक्षया कस्यचित् सिद्धिरिति। यस्मादेकाभावेऽन्यतराभावाद् द्वयाभावः—यदीतरेतरापेक्षया सिद्धिः स्यात् यावदितरत् नास्ति तावदितरत् नास्तीत्युभयोरभावः ॥ ४१ ॥

अर्थसद्भावव्यङ्ग्यश्च वर्तमानकालः—विद्यते द्रव्यं विद्यते गुणो विद्यते कर्मेति यस्य चायं नास्ति तस्य—

वर्तमानाभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः। सूत्रार्थो विरोधः। कथं पुनर्वर्तमानाभावे

### न्यायवार्त्तिकतात्पर्यटीका

स्वकीयां युक्तिं वार्तिककार आह—न च वर्तमानकालानभ्युपगमे पतत इतीति ॥ ४१ ॥

वक्ष्यमाणसूत्रावतारपरं भाष्यम्—अर्थसद्भावव्यङ्ग्यश्चायमिति। अस्यार्थः। न केवलं पतनादिक्रियाव्यङ्ग्यो वर्तमानः कालः, अपि त्वर्थसद्भावोऽर्थस्य सत्ता अस्तिक्रियेति यावत्, तया व्यङ्ग्यः कालः। एतदुक्तं भवति—पतनादयः क्रियाः वर्तमानेष्वपयान्त्युपयन्ति च, अस्तिक्रिया तु सर्ववर्तमानव्यापिनी। तदेवमस्तिक्रियाविशिष्टस्य वर्तमानस्याभावे सर्वाग्रहणं प्रत्यक्षानुपपत्तेः।

वर्त्त—त्तेः ( सू० ४२ ) ॥ न चाविद्यमानं तस्य विवरणम् असदिति। न चायं वर्तमानाभाववादी विद्यमानं सत् किंचिदनुजानाति।

अत्र वार्तिककारः पृच्छति—कथं पुनरिति। न हि सर्वं प्रत्यक्षं वर्तमानविषयमतीताना-

## न्यायभाष्यम्

उभयथा च वर्त्तमानः कालो गृह्यते क्वचिदर्थसद्भावव्यङ्ग्यः यथा (१)अस्ति द्रव्यमिति। क्वचित् क्रियासन्तानव्यङ्ग्यः यथा पचति छिनत्तीति। नानाविधा चैकार्था क्रिया क्रियासन्तानः क्रियाभ्यासश्च। नानाविधा चैकार्था क्रिया पचतीति स्थाल्यधिश्रयणमुदकासेचनं तण्डुलावपनमेधोऽपसर्पणमग्न्यभिज्वालनं दर्वीघट्टनं मण्डस्रावणमधोऽवतारणमिति। छिनत्तीति क्रियाभ्यास उद्यम्योद्यम्य परशुं दारुणि निपातयन् छिनत्तीत्युच्यते।

## न्यायवार्त्तिकम्

प्रत्यक्षानुपपत्तिः? यस्माद् इदं प्रत्यक्षं वर्तमानाधारं कार्यत्वात् क्षीरवदिति—यत्कार्यं तद्वर्तमानाधारं दृष्टं यथा क्षीरम्, कार्यं च प्रत्यक्षम्, तस्माद्वर्तमानाधारमिति वर्तमानकालानभ्युपगमादनाधारं प्रत्यक्षं प्राप्नोति, अनाधारं च कार्यं नास्तीति प्रत्यक्षानुपपत्तिः, प्रत्यक्षानुपपत्तेश्च सर्वप्रमाणलोपः। सर्वप्रमाणलोपे च सर्वस्य ग्रहणं न स्यात्। अस्ति च सर्वस्य ग्रहणम्, सर्वस्य ग्रहणात् पश्यामोऽस्ति वर्त्तमानः प्रत्यक्षनिमित्तं प्रत्यक्षविषयः प्रत्यक्षं चेति सोऽयं वर्तमानः काल इति ॥४२॥

उपपन्नश्च सन् द्वेधा विभिद्यते, क्वचित् क्रियामात्रव्यङ्ग्यः क्वचित् क्रियासन्तानव्यङ्ग्यः। क्रियामात्रव्यङ्ग्यः विद्यते द्रव्यमिति। क्वचित् क्रियासन्तानव्यङ्ग्यः पचति छिनत्तीति। क्रियासन्तानोऽपि द्वेधा भवति एकाकारक्रियो नानाकारक्रियश्चेति। एकाकारक्रियः छिनत्तीति। तत्र ह्युद्यम्योद्यम्य

## न्यायवार्त्तिकतात्पर्यटीका

गतयोरपि योगिप्रत्यक्षत्वादिति भावः। उत्तरम्—यस्मादिति। नातीतानागतविषयतया प्रत्यक्षानुपपत्तिं ब्रूमः अपि त्वतीतानागताधारतयेत्यर्थः। भाष्यमपि वर्तमानाभावे प्रत्यक्षनिमित्तं सन्निकर्षः अस्मदादिप्रत्यक्षविषयः विद्यमानो घटादिः प्रत्यक्षं प्रमाणमनाधारं सत्सर्वं नोपपद्यत इति द्रष्टव्यम् ॥ ४२ ॥

अत्र भाष्यम्—उभयथा वर्तमानो गृह्यत इति। तदवतार्य व्याचष्टे वार्तिककारः—उपपन्नश्च

## वृत्तिः

तयोरप्यभावे का क्षतिः? अतो युक्त्यन्तरमाह—( वर्तमानेति )।

वर्तमानाभावे प्रत्यक्षं नोपपद्यते प्रत्यक्षस्य वर्तमानविषयत्वात्। अत एवाऽऽहुः—'सम्बद्धं वर्तमानं च गृह्यते चक्षुरादिना' इति।

प्रत्यक्षाभावे च सर्वमेव ग्रहणं ज्ञानं न स्यात् प्रत्यक्षमूलकत्वादितरज्ञानानामिति भावः ॥ ४२ ॥

---

(१) 'द्रव्ये' इति ल-ज-भा०।

### न्यायभाष्यम्

यच्चेदं पच्यमानं छिद्यमानं च तत्क्रियमाणम्, तस्मिन् (१)क्रियमाणे—

## (सू०)—कृतताकर्त्तव्यतोपपत्तेस्तूभयथा ग्रहणम् ॥ ४३ ॥

क्रियासन्तानोऽनारब्धश्चिकीर्षितोऽनागतः कालः पक्ष्यतीति। प्रयोजनावसानः

### न्यायवार्त्तिकम्

निपातनक्रिया एकाकारा। नानाकारक्रियश्च सन्तानः—पचतीति। तत्र ह्यनेका क्रिया अनेकाकारा—तद्द यथा एधोपसर्पणमरन्यभिज्वालनं स्थाल्यधिश्रयणमुदकासेचनं (क) तण्डुलपचनं दर्वीघट्टनं मण्डस्त्रावणमवतारणमिति। स ह्येवम्भूतः क्रियासन्तानः पचतीत्यनेनैकशब्देनाभिधीयते, क्रियासन्तानस्य ह्यत्राविच्छेदो विवक्षितो नानारम्भो नोपरम इति। (२) सन्तानारम्भविवक्षायां पक्ष्यतीति, उपरमविवक्षायामपाक्षीदिति।

### न्यायवार्त्तिकतात्पर्यटीका

सन् द्वेधा भिद्यत इति। क्वचित् क्रियामात्रव्यङ्ग्यः, (ख)यथा अस्तीति। क्वचित् क्रियासंतानव्यङ्ग्यः (ग)पचति छिनत्तीति। अत्र हि पूर्वापरीभावः प्रतीयते। न च प्रतिक्षणमपवर्गवतः कर्मण एकस्य पाकस्य वा छेदनस्य वा पूर्वापरीभाव इति कर्मसन्तानस्त्वास्थेयः; सोऽपि चैकमुपसंग्राहकमन्तरेण न भवत्यत उक्तं भाष्यकृता—एकार्था क्रिया क्रियासन्तान इति, एकप्रयोजनावच्छिन्नेत्यर्थः। अत्र चाधिश्रयणादयो भवन्तु पच्यर्थाः। यथाह महाभाष्यकारः—तदभिसन्धिपूर्वकं प्रेषणमध्येषणं वा युक्तं तत्सर्वं पच्यर्थ इति। रूपादिपरावृत्तिमात्रार्थत्वं वाऽस्य पचेः, आख्यातार्थः सर्वोऽयमध्येषणादिर्भवतु भावनाभिधानः, नोभयथाऽपि काचिदस्ति दर्शनक्षतिः। अनागताद्द व्यवच्छिनत्ति—नानारम्भ इति, अनारम्भः अननुष्ठानं न विवक्षितम्, यथा पक्ष्यतीत्यत्रेत्यर्थः। अतीताद्द व्यवच्छिनत्ति—नोपरमः विवक्षित इति, यथा अपाक्षीदित्यत्रेत्यर्थः। सन्तानारम्भविवक्षायामिति, आरम्भोऽत्र चिकीर्षाऽभिधीयत इति न विरोधः।

### वृत्तिः

ननु यदि वर्तमानध्वंसप्रतियोगित्वमतीतत्वम्, वर्तमानप्रागभावप्रतियोगित्वं च भविष्यत्त्वम्, तदा वर्तमान एव घटे कथं श्याम आसीद्रक्तो भविष्यतीति धीरत आह—(कृततेति)।

---

(१) 'क्रियमाणे च' इति वि०। (२) 'सन्तानानारम्भ विवक्षायां' इति ख।

(क) तण्डुलपचनं तण्डुलानां विक्लित्तिस्तेन नाऽऽत्माश्रयः। भाष्ये तु तण्डुलावपनमिति पाठः। (ख) वार्तिके विद्यते द्रव्यमिति विशेषः। (ग) आदर्शपुस्तकयोः 'पचती'त्यत्र 'पतती'तिपाठभेद उत्तरग्रन्थवार्तिकादि-पर्यालोचनया परित्यक्तः। (घ) आदर्शपुस्तकयोः 'न तत् क्रियमाण'मिति पाठः। तत्र नकारः प्रामादिक इति त्यक्तः।

## न्यायभाष्यम्

क्रियासन्तानोपरमः अतीतः कालः अपाक्षीदिति। आरब्धक्रियासन्तानो वर्त्तमानः कालः पचतीति। तत्र या (१)उपरता सा कृतता। या चिकीर्षिता सा कर्तव्यता। या विद्यमाना सा क्रियमाणता। तदेवं क्रियासन्तानस्थस्त्रैकाल्यसमाहारः पचति पच्यत इति वर्त्तमानग्रहणेन गृह्यते, क्रियासन्तानस्य ह्यत्राविच्छेदो(२)ऽभिधीयते नाऽऽरम्भो नोपरम इति। सोऽयमुभयथा वर्त्तमानो गृह्यते अपवृक्तो व्यपवृक्तश्च अतीतानागताभ्याम्। स्थितिव्यङ्ग्यः—विद्यते द्रव्यमिति। क्रियासन्तानाविच्छेदाभिधायी च त्रैकाल्यान्वितः—पचति छिनत्तीति। अन्यश्च प्रत्यासत्तिप्रभृतेरर्थस्य विवक्षायां तदभिधायी बहुप्रकारो लोकेषु उत्प्रेक्षितव्यः। तस्मादस्ति वर्त्तमानः काल इति ॥ ४३ ॥

## न्यायवार्त्तिकम्

यच्चेदं छिद्यमानं तत् क्रियमाणम्, तस्मिन् क्रियमाणे—

कृतताकर्त्तव्यतोपपत्तेस्तूभयथा ग्रहणम्। कस्य ? वर्त्तमानस्य। कथम् ? उभयथा, केवलस्य व्यपवृक्तस्यातीतानागताभ्याम्, सम्पृक्तस्य च ताभ्यामिति। क्व पुनर्व्यपवृक्तस्य ? विद्यते द्रव्यमित्यत्र हि केवलः शुद्धो वर्त्तमानोऽभिधीयते। पचति छिनत्तीत्यत्र सम्पृक्तः। कथम् ? काश्चिदत्र क्रिया व्यतीताः काश्चिदनागताः एका च वर्त्तमाना इति। अन्यश्च लोके प्रत्यासत्ति-

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं वर्तमानं क्रियासद्भावमुक्त्वा तत्संबन्धव्यङ्ग्यां कारकस्य वर्तमानतामाह—यच्चेदं छिद्यमानमिति। (घ) तत् क्रियमाणं वर्तमानक्रियासम्बन्धेन वर्तमानं न तु स्वरूपत इत्यर्थः। तस्य च कारकस्य वर्तमानक्रियासम्बन्धमतीतानागतानपेक्षमपेक्ष्यातीतानागतत्वे, क्रियायाः कारकस्यापि व्यक्तिः तद्भावव्यक्तिः, तद्धेतुकं च द्वैविध्यमिति प्रतिपादनपरं सूत्रमवतारयति तस्मिन् क्रियमाणे—

कृत—णम् ( सू ४३ )॥ भाष्यम्—आरब्धः अभीष्टफलोरीकरणेन क्रियासन्तानः पचतीति। वक्ष्यमाणासंपृक्ततोपयोगितया क्रियासन्तानस्वरूपमाह—तत्रेति, (क) क्रियासन्ताने। (ख)ननु विद्यत इत्यत्रापि पूर्वापरीभावावगमादतीतानागताभ्यां संपृक्त एवेत्यत आह वार्तिककारः—अत्र हि केवल इति। शब्दमाहात्म्यात् संपर्को न वास्तवः, वास्तवं तु वर्तमानत्वमत एवाऽऽह—केवलः शुद्ध इति। पर्यायाभिधानमात्यन्तिकं संपर्काभावं दर्शयति। यदि कश्चिन्मुख्यं वर्त्तमानत्वं नाभ्युपेयते ततस्तत्पूर्वको भाक्तोऽपि वर्त्तमानप्रयोगोऽपि न स्यादित्यत आह—अन्यश्च लोक इति ॥ ४३ ॥

---

(१) 'उपरता क्रिया' इति टि०। (२) 'विधीयते' इति अ-ग-ल-भा०।

(क) 'क्रियासन्तानो' इति क-पुस्तक-पाठः प्रामादिकः। (ख) 'न तु' इत्यादर्शपुस्तकपाठोऽर्थासङ्गत्या परित्यक्तः।

## (सू०)—अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिः ॥ ४४ ॥

### न्यायभाष्यम्

अत्यन्तसाधर्म्यादुपमानं न सिध्यति। न चैवं भवति यथा गौरेवं

### न्यायवार्त्तिकम्

प्रभृतेरर्थस्य विवक्षायामनेकप्रकारो वर्त्तमानस्य प्रयोगः। कदाचिदयं वर्त्तमानमतीते प्रयुङ्क्ते, आगतः सन् ब्रवीति एष आगच्छामीति। कदाचिदनागते प्रयुङ्क्ते, यथा स्थितः सन् ब्रवीति एष आगच्छामीति। एवमन्येषु प्रयोगेषूत्प्रेक्षितव्यमिति ॥ ४३ ॥

इति वर्त्तमानपरीक्षा।

अथेदानीमुपमानमवसरप्राप्तं परीक्ष्यते। किं पुनरुपमानम्? प्रसिद्धसाधर्म्यात् साध्यसाधनमित्युक्तम्। तस्याऽऽक्षेपः—

अत्यन्तप्रायैकदेशसाधर्म्यादुपमानासिद्धिरिति। नात्यन्तसाधर्म्यादुपमानं भवति यथा गौरेवं गौरिति। भूयःसाधर्म्यादपि नोपमानं सिध्यति, न हि भवति यथा गौरेवं महिष इति। एकदेशसाधर्म्यादपि न भवति, यथा मेरुस्तथा सर्षप इति। न चान्या गतिरस्ति तस्मान्नोपमानं सिध्यति।

अत्यन्तादिसाधर्म्यादुपमानप्रतिषेधान्नोपमानप्रतिषेधः—यदत्यन्तप्रायैकदेशसाधर्म्यादुपमानं तत् प्रतिषिध्यते, तेन सूत्रेण न पुनरुपमानमात्रस्य प्रतिषेधः। एवं सत्यन्यथोपमानम्, तत्स्वरूपं वक्तव्यम्। अथ नैवान्यथोपमानस्य स्वरूपमस्तीति मन्यसे कथं तर्हीदं वाक्यम् अत्यन्त-

### न्यायवार्त्तिकतात्पर्यटीका

अत्य—द्धिः (सू० ४४)॥ यथा गौरेवं गवय इत्यतिदेशवाक्यार्थस्मृतिसहकारि सारूप्यदर्शनं साध्यस्य गवयोऽयमिति संज्ञासंज्ञिसम्बन्धस्य साधनमुपमानम्, तच्चेदं नोपपद्यते विकल्पानुपपत्तेः। किं यथा गौरेवं (१) गवय इति गवाऽत्यन्तसाधर्म्यं विवक्षितम्, तथा सति गवान्तरमेव गवयः स्यात्। तदिदमाह भाष्यकारः—न चैवं भवति यथा गौरेवं गौरिति। चो यस्मादर्थे। (क) तस्माद् यथा गौरेवं गवय इति वाक्यस्यार्थो भवति यथा गौरेवं गौरिति। गवा प्रायसाधर्म्यादपि गवयोपमानं न सिध्यति महिषस्यापि गवा प्रायसाधर्म्यस्य विद्यमानत्वेन तस्यापि

### वृत्तिः

वर्तमानस्यापि घटादेः श्यामरक्तरूपादीनां कृतताकर्तव्यतयोरतीतताभविष्यत्तयोरुपपत्तेः घटादेरप्यतीतानागतत्वेन व्यवहारः परम्परासम्बन्धादित्यर्थः ॥ ४३ ॥

समाप्तं वर्तमानपरीक्षाप्रकरणम् ॥ ६ ॥

---

(१) 'गवय' इति ख-पुस्तके नास्ति।

(क) तस्मादित्यादि गौरेवं गौरित्यन्तग्रन्थे तस्मादित्यस्यार्थासङ्गतेः 'यथा गौरेवं गवय इति वाक्यस्यार्थो यथा गौरेवं गौरिति यस्मान्न भवति' इति पाठो यथार्थतया प्रतिभाति। यथाश्रुतस्यैव सम्यक्त्वे तु तस्मादित्यस्य तथा सतीत्यर्थः।

## न्यायभाष्यम्

गौरिति। प्रायःसाधर्म्यादुपमानं न सिध्यति, न हि भवति यथाऽनड्वानेवं महिष इति। एकदेशसाधर्म्यादुपमानं न सिध्यति, न हि सर्वेण सर्वमुपमीयत इति ॥ ४४ ॥

# (सू०)– प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः ॥४५॥

न साधर्म्यस्य कृत्स्नप्रायाल्पभावमाश्रित्योपमानं प्रवर्त्तते। किं तर्हि?

## न्यायवार्त्तिकम्

प्रायैकदेशसाधर्म्यादुपमानासिद्धिरिति। अनभ्युपगच्छता ह्युपमानमेवं वक्तव्यम् उपमानं न प्रमाणमर्थाप्रतिपादकत्वादिति ॥ ४४ ॥

प्रसिद्धसाधर्म्यादुपमानसिद्धेर्यथोक्तदोषानुपपत्तिः। प्रसिद्धसाधर्म्यस्य (क) वैधर्म्यस्य चोपमानहेतुत्वादप्रतिषेधः—योऽयं भवता प्रतिषेधः क्रियते अत्यन्तादिसाधर्म्यादुपमानं न सिध्यतीति अयमनुपपन्नोऽनभ्युपगमात्। कः खल्वेवमाह अत्यन्तादिसाधर्म्यादुपमानमिति, अपि तु प्रसिद्धसाधर्म्यादुपमानम्, साध्यसाधनभावमाश्रित्य; तथा चायमप्रतिषेधः। सर्वथा-

## न्यायवार्त्तिकतात्पर्यटीका

गवयाभिधानप्रसङ्गात्। तदिदमाह—न हि भवति यथाऽनड्वानेवं महिष इतीति। यथाऽनड्वानेवं गवय इत्यस्य (ख) वाक्यस्यार्थो यथाऽनड्वानेवं महिष इति यस्मान्न भवति। एकदेशसामर्थ्यादुपमानं न भवति एकदेशोपमानस्यैवानुपपत्तेरतिप्रसङ्गात्। तदिदमाह—न हि सर्वेण सर्वमुपमीयते; तथा सति सुमेरोरपि सर्षपेणोपमानप्रसङ्गात् ॥ ४४ ॥

प्रसि—त्तिः ( सू० ४५ )॥ प्रकरणाद्यपेक्षं हि वाक्यं स्वार्थं प्रतिपादयति न केवलम्। तद्वशाच्च क्वचिदत्यन्तसाधर्म्यं प्रतीयते क्वचिद्भूयःसाधर्म्यं क्वचिदेकदेशसाधर्म्यम्। तदिह प्रतीतमहिषादिकं पुरुषं प्रति यथा गौरेवं गवय इति वाक्यमुच्चार्यते तदा महिषादिपरिहाराय भूयःसाधर्म्यं विवक्षितमित्यवगतं वाक्यार्थं स्मरन् महिषादिषु वने गोसाधर्म्यं पश्यन्नपि न गवयसंज्ञां निवेशयति, अपि तु साधर्म्यवति गवय एव तां निवेशयति। यस्त्वप्रतीतमहिषादिस्तं प्रति-

## वृत्तिः

अथावसरेण क्रमप्राप्तमुपमानं परीक्षितुं पूर्वपक्षयति—( अत्यन्तेति )।

प्रसिद्धसाधर्म्यादुपमानमुक्तम्, तन्न युक्तम्, यतः साधर्म्यमात्यन्तिकं प्रायिकमैकदेशिकं वा न सम्भवति। नहि आत्यन्तिकसाधर्म्येण गौरिव गौरित्युपमानं प्रवर्तते, न वा प्रायिकसाधर्म्येण गौरिव महिष इति, न वा यत्किञ्चित्साधर्म्येण मेरुरिव सर्षप इति। साधर्म्यस्य चोपलक्षणत्वाद्वैधर्म्योपमानमप्येवं खण्डनीयम् ॥ ४४ ॥

---

(क) सौत्रं साधर्म्यपदमुपलक्षणतया व्याचष्टे वैधर्म्यस्य चेति।

(ख) वाक्यस्यार्थः सादृश्यम्, तच्च यथैवंपदाभ्यामुपस्थाप्यते। एवं च महिषोपस्थापकपदाभावेन यथाऽनड्वानेवं गवय इति वाक्याद् यथानड्वानेवं महिष इति बोधापत्तिः कथमित्याशङ्काया नावसरः, प्रायसाधर्म्येण तथाविधवाक्यप्रयोगस्यैवाऽऽपत्तिविषयत्वादिति ध्येयम्।

न्यायभाष्यम्

प्रसिद्धसाधर्म्यात् साध्यसाधनभावमाश्रित्य प्रवर्त्तते। यत्र चैतदस्ति न तत्रोपमानं प्रतिषेद्धुं शक्यम्। तस्माद्र यथोक्तदोषो नोपपद्यत इति ॥ ४५ ॥

अस्तु तर्ह्युपमानमनुमानम्—

(सू०)—प्रत्यक्षेणाप्रत्यक्षसिद्धेः ॥ ४६ ॥

यथा धूमेन प्रत्यक्षेणाप्रत्यक्षस्य वह्नेर्ग्रहणमनुमानम्, एवं गवा प्रत्यक्षेणाप्रत्यक्षस्य गवयस्य ग्रहणमिति नेदमनुमानाद्विशिष्यते ॥ ४६ ॥

न्यायवार्त्तिकम्

भावाच्चात्यन्तसाधर्म्यादप्युपमानं सिध्यति, तत्क्रिययैव तत्क्रियोपमीयते। यथा "रामरावणयोर्युद्धं रामरावणयोरिवे"ति। भूयःसाधर्म्येणापि भवति—यदा गोर्बलप्रकर्षजिज्ञासा भवति तदा भूयःसाधर्म्येणोपमानं यथा महिषस्तथा गौरिति। एकदेशसाधर्म्यादपि भवति यदा तु सन्मात्रं जिज्ञासानिमित्तं भवति, मेरोः सत्ता किंरूपेति; यथा सर्षपस्य तथा मेरोः। तस्मादप्रतिषेधोऽयमिति ॥ ४९ ॥

अस्तु तर्ह्युपमानमनुमानम्—

प्रत्यक्षेणाप्रत्यक्षसिद्धेः। यथा प्रत्यक्षेण धूमधर्मेणोर्द्ध्वगत्यादिनाऽप्रत्यक्षो (क)धूमधर्मो-

न्यायवार्त्तिकतात्पर्यटीका

एतद्वाक्यमुपमानं न भवत्येवेति परमार्थः। यथा च प्रकरणादिवशादत्यन्तप्रायैकदेशसाधर्म्यमाश्रित्यातिदेशवाक्यानि प्रवर्त्तन्ते तथा चोक्तं वार्त्तिककृता।

न साधर्म्यस्येत्यादि भाष्यं नियमं निषेधति। न साधर्म्यस्य कृत्स्नभावमेव वाऽल्पभावमेव वा आश्रित्यातिदेशवाक्यं प्रवर्त्तते। किं तर्हि ? प्रसिद्धसाधर्म्याद्र हेतोः साध्यसाधनभावम् आश्रित्य उद्दिश्येति। एतदुक्तं भवति। न नियमः, किं तु क्वचित् किंचित् साधर्म्यमाश्रित्यातिदेशवाक्यं प्रवर्त्तते तच्च प्रकरणाद्युन्नेयमिति। अनभ्युपगमादिति च वार्त्तिकं नियमाभिप्रायमेव। तत्क्रिययैव तत्क्रियान्तरमित्यर्थः ॥ ४९ ॥

प्रत्य—द्धेः ( सू० ४६ ) ॥ यथा गौरेवं गवय इति हि वाक्यं प्रत्यक्षेण गवा गवयप्रत्यक्षं प्रतिपादयति। न खलु श्रुतवाक्योऽपि यदा प्रत्यक्षेण गवयं पश्यति तदा वाक्यार्थाधि-

वृत्तिः

समाधत्ते—( प्रसिद्धेति )

प्रसिद्धं प्रकर्षेण महिषादिव्यावृत्त्या सिद्धं ज्ञातं यत् साधर्म्यं तज्ज्ञानस्योपमितिकरणत्वान्न दोषः। साधर्म्यं च प्रकरणाद्यनुसारात् क्वचित् किञ्चिदिति ॥ ४५ ॥

(क) 'धूमधर्मा' इति पाठः सम्भाव्यते।

### न्यायभाष्यम्

विशिष्यत इत्याह। कया युक्त्या ?

**(सू०)—नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्यामः(क) ॥४७॥**

यदा ह्ययमुपयुक्तोपमानो गोदर्शी गवयसमानमर्थं पश्यति तदाऽयं गवय इत्यस्य संज्ञाशब्दस्य व्यवस्थां प्रतिपद्यते (१)न चैवमनुमानमिति। परार्थं चोपमानम्— यस्य ह्युपमानमप्रसिद्धं तदर्थं प्रसिद्धोभयेन क्रियत इति परार्थमुपमानमिति चेत्; न,

### न्यायवार्त्तिकम्

ऽग्निरनुमीयते तथा प्रत्यक्षेण गवाऽप्रत्यक्षस्य गवयस्य प्रतिपत्तिरित्यप्रत्यक्षार्थप्रतिपादकत्वादुपमानमनुमानमिति। न, अपरिज्ञानात्—न भवतोपमानलक्षणं व्यज्ञायि ॥ ४६ ॥

नाप्रत्यक्षे गवये प्रमाणार्थमुपमानस्य पश्याम इति। नचाप्रत्यक्षे गवये उपमानार्थं

### न्यायवार्त्तिकतात्पर्यटीका

गमादधिकं किञ्चित् प्रतिपद्यते। संज्ञासंज्ञिसम्बन्धोऽप्यनेन वाक्यादेवावगतः। तस्मात् प्रत्यक्षेण गवा प्रत्यक्षस्य गवयस्य गवयसंज्ञाविशिष्टस्य प्रतीतेरुपमानस्यानुमानतेति पूर्वः पक्षः ॥ ४६ ॥ सिद्धान्तस्तु—

नाप्र—मः ( सू० ४७ )॥ गवयत्वं हि संज्ञि, न च तद्व यथा गौरेवं गवय इति वाक्यात् प्रतीयते; अपि तु कस्यचिद्गवा सादृश्यम्, न च वाक्यगतो गवयशब्दस्तस्य वाचकः तथा तदानीमगृहीतसङ्गतित्वात्। न च सादृश्यं संज्ञि। तस्मात् प्रत्यक्ष एव गवये गवयत्वस्य प्रत्यक्षत्वात् संज्ञासंज्ञिसम्बन्धपरिच्छेदः प्रमाणार्थः। उपपादितं चैतदुपमानलक्षणे। तस्मादप्रत्यक्षो गवयः प्रत्यक्षेण गवा प्रतीयत इति सिद्धमित्यर्थः।

पूर्वपक्षवाद्याह—परार्थमुपमानमिति चेत् मन्यसे सिद्धान्तवादिन्, तत् न अस्ति। कुतः ?

### वृत्तिः

अनुमानेन चरितार्थं नोपमानं मानान्तरम् इति वैशेषिकमतमाशङ्कते—(प्रत्यक्षेणेति) प्रत्यक्षेण गोसादृश्यविशेषेण अप्रत्यक्षस्य गवयपदवाच्यत्वस्य अनुमितेर्नोपमानं मानान्तरमिति ॥ ४६ ॥

अत्रोत्तरयति—( नाप्रत्यक्ष इति )

अप्रत्यक्षे व्याप्यवत्तया अप्रत्यक्षे, अनुमानत्वेन प्रमाणार्थं (२)प्रमाणप्रयोजनम्

---

(१) 'न चेदम्' इति ल-भा०। (२) 'प्रमाप्रयोजनम्' इति भ०।

(क) 'पश्याम इति' इत्येवम् इतिशब्दान्तं सूत्रं ल-ग-ज-भा-पुस्तकेषु क-ख-वार्त्तिकयोश्च मुद्रितं दृश्यते। तात्पर्यटीका-न्यायसूचीनिबन्ध-वृत्तिप्रभृतिष्वदर्शनादस्माभिस्तदुपेक्षितम्।

### न्यायभाष्यम्

स्वयमध्यवसायात्—भवति च भोः स्वयमध्यवसायः यथा गौरेवं गवय इति। नाध्यवसायः प्रतिषिध्यते (१)उपमानं तु तन्न भवति 'प्रसिद्धसाधर्म्यात् साध्यसाधनमुपमानम्'। न च यस्योभयं प्रसिद्धं तं प्रति साध्यसाधनभावो विद्यत इति ॥ ४७ ॥

अथापि—

## (सू०)—तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः ॥ ४८ ॥

तथेति समानधर्मोपसंहारादुपमानं सिध्यति नानुमानम्। अयं चानयोर्विशेष इति ॥ ४८ ॥

### न्यायवार्त्तिकम्

पश्यामः। अथ प्रत्यक्षे गवये क उपमानार्थः ? याऽसौ संज्ञासंज्ञिसम्बन्धप्रतिपत्तिः स उपमानार्थः। एवं च नोपमानमागमो न प्रत्यक्षम्, न ह्ययमागमात् प्रत्यक्षाद्वाऽयं गवय इति (२)प्रतिपद्यते ॥ ४७ ॥

तथेत्युपसंहारादुपमानसिद्धेर्नाविशेषः। परार्थत्वाच्च—परार्थं चोपमानं भवति। न हि यथा गौरेवं गवय इत्येतदागममन्तरेण सारूप्यमात्रपरिज्ञानमुपमानम्। न ह्यागममात्रं सारूप्यपरिज्ञानमन्तरेणोपमानं भवितुमर्हति। न चैवमनुमानम्। तस्माद् यथा लिङ्गलिङ्गिसम्बन्ध-

### न्यायवार्त्तिकतात्पर्यटीका

स्वयम् अपि अध्यवसायात्। एवं हि परार्थं स्याद् यथा गौरेवं गवय इति वाक्यं यदि परस्यैवाध्यवसायं जनयेत्, यावतोच्चारयितुरप्यध्यवसायं जनयति तस्मात् स्वार्थमपीत्यर्थः। एतदेव दर्शयति भाष्यकारः—भवति भोः स्वयम् अप्युच्चारयितुर्वाक्याद् अध्यवसाय इति। सिद्धान्तवाद्याह—नाध्यवसाय उच्चारयितुः प्रतिषिध्यते, उपमानम् उच्चारयितारं प्रति न भवति। कुत इत्यत आह—प्रसिद्धसाधर्म्यादिति ॥ ४७ ॥

तथे—षः (सू० ४८) ॥ वार्त्तिकं तु परार्थत्वेनानुमानादुपमानभेदमाह—परार्थत्वाच्चेति। ननु प्रत्यक्षं सारूप्यज्ञानमुपमानम्, न चैतत्परार्थमित्यत आह—न हि (३)यथा गौरिति।

### वृत्तिः

उपमानस्य न पश्याम इत्यर्थः। अथवा गवये गवयवृत्तौ अप्रत्यक्षे गवयपदवाच्यत्वे उपमानस्य प्रमाणार्थं प्रमाम् उपमानजन्यां प्रमाम् अनुमानत्वेन न पश्याम इत्यर्थः, व्याप्तिज्ञानाभावादिति भावः ॥ ४७ ॥

---

(१) 'उपमाने तु' ज०। (२) 'संप्रतिपद्यते' इति ख। (३) अत्र 'यथार्थे'ति क-पुस्तकपाठः प्रामादिकः।

## न्यायवार्त्तिकम्

स्मृत्यनुग्रहे सति लिङ्गपरामर्शोऽनुमानम्, तच्च प्रत्यक्षम्, तथागमाहितसंस्कारस्मृत्यपेक्षं सारूप्यप्रत्यक्षमुपमानमिति ।

प्रतिपत्तिभेदाच्च—नानुमानमेवं भवति यथा धूमस्तथाऽग्निरिति, अस्त्युपमाने यथा गौरेवं गवय इति । यत्र प्रतिपत्तिभेदस्तत्प्रमाणान्तरम्, यथा प्रत्यक्षादनुमानम्; अपूर्वानधिगमादुपमानं (क)न भवतीत्यनेन प्रत्युक्तम् ॥ ४८ ॥

( इत्युपमानपरीक्षा )

अथावसरप्राप्तः शब्दः परीक्ष्यते । कः पुनरयं शब्दः ? आप्तोपदेशः शब्द इत्युक्तम् । तस्याऽऽक्षेपः—न शब्दः प्रमाणम् । सत्यप्यप्रमितेः (ख)यस्माद् विद्यमानोऽप्ययं शब्दोऽश्रूयमाणो न प्रतिपत्तिहेतुः, प्रतिपत्तिहेतुश्च प्रमाणमिति । विषयाभावाच्च—न प्रत्यक्षानुमानव्यतिरेकी विषयः शब्दस्यास्ति, न चाविषयं प्रमाणमिति । अविज्ञानात्मकत्वाच्च न प्रमाणम्,—यद् यत् प्रमाणं तत् तद्विज्ञानात्मकम् यथा प्रत्यक्षम्; अविज्ञानात्मकं च न प्रमाणं घटादिवदेव । बाह्यकरण-

## न्यायवार्त्तिकतात्पर्यटीका

अस्तु तर्हि वाक्यमेवेत्यत आह—न ह्यागमेति । भिन्नयोरप्यनुमानोपमानयोरेतावन्मात्रेण (ग)साध्यमित्युपसंहारव्याजेनाऽऽह—तस्माद् यथेति । अतिरोहितमितरत् ॥ ४८ ॥

अत्र हि सूत्रकारेण प्रथममनुमानान्तर्गतिः परीक्षिता । न चापरीक्षितप्रमाणभावस्य सा युक्तेति वार्तिककारः प्रथममस्य प्रमाणभावमेव परीक्षते—तस्याऽऽक्षेपः—न शब्दः प्रमाणमिति । यस्मिन् सति प्रमा भवत्येव, न न भवति, तत् प्रमाणं साधकतमस्य करणत्वात् । सत्यपि तु शब्दे प्रमा न भवतीति तस्य साधकत्वं विघटयति—विषयाभावाच्चेति । प्रामाण्यं हि विषयवत्तया व्याप्तम्, सा शब्दान्निवर्तमाना प्रामाण्यमपि निवर्तयति वृक्षतेव निवर्तमाना स्वव्याप्तं शिंशपात्वम् । द्विविधश्च विषयः प्रत्यक्षः परोक्षश्च । तत्र पूर्वः प्रत्यक्षस्य प्रमाणस्य विषयः ।

## वृत्तिः

ननु व्याप्तिज्ञाननियमः कल्प्यतामित्याशयेन युक्त्यन्तरमाह—( तथेत्युपेति ) ।

अनुमानादुपमानस्य नाविशेषः, तथेत्युपसंहारात् । यथा गौस्तथा गवय इति ज्ञानात्, उपमानसिद्धेः उपमानाधीनसिद्धेरुपमितेः । तथा च व्याप्तिज्ञानानपेक्षसादृश्यज्ञानाधीनोपमितिरित्यनुभवसिद्धम् । किञ्च नानुमिनोमि किन्तूपमिनोमीत्यनुव्यवसायसिद्धोपमितिर्नापलपितुं शक्यत इत्याशयः ॥ ४८ ॥

समाप्तमुपमानप्रामाण्यपरीक्षाप्रकरणम् ॥ ७ ॥

---

(क) अत्र 'प्रमाण'मिति पदमपेक्षणीयं सम्भाव्यते । तथा च अगृहीतग्राहकत्वं प्रमाणानां विशेषो धर्मो नानास्तीति हृदयम् । (ख) अनाऽऽदर्शपुस्तकयोः 'सत्यप्यप्रसिद्धे'रिति पाठ उत्तरग्रन्थानुसारेण शोधितः । (ग) 'साध्यमि'त्यत्र 'साधर्म्यमि'ति पाठः सम्भाव्यते ।

## न्यायवार्त्तिकम्

प्रत्यक्षत्वाच्च घटादिवदेव न प्रमाणम्। आत्मन्यसमवायाद्व न घटादिवदेव प्रमाणम्। आकाशगुणत्वाच्च संख्यादिवन्न प्रमाणम्।

यत् तावत् सत्यप्यप्रमितेरिति, तन्न; असिद्धत्वात्—(१)न हि कदाचिच्छब्द उपलभ्यमानो न प्रमाणं भवति (क)अनुपलभ्यमानो भवतीति नासौ प्रमाणम् (१*)। प्रमाणं हि नाम येन प्रमीयते। कदा च तेन प्रमीयते? यदोपलभ्यते। यत् पुनरेतद्व विषयाभावादिति। क एवमाह प्रत्यक्षानुमानव्यतिरेकी विषयो नास्तीति, असिद्धो हेतुः। यथा प्रत्यक्षादिभ्यो भेदस्तथोक्तम्। यत्पुनरेतद्व अविज्ञानात्मकत्वाद्व बाह्यकरणप्रत्यक्षत्वाद्व आत्मन्यसमवायाच्चेति, तन्न; अनेकान्तात् प्रदीपवत्। प्रदीप एतत् सर्वमस्ति प्रमाणं च प्रदीपः प्रत्यक्षाङ्गत्वादित्युक्तम्। तस्मादनैकान्तिकत्वादहेतव एवेति। यत् पुनरेतदाकाशगुणत्वादिति, अयमप्यनैकान्तिक एव—यथा आकाशे यत् परिमाणं तन्महत्प्रत्ययकर्तृत्वात् प्रमाणं भवति। तस्मादाकाशगुणत्वादित्ययमप्यहेतुः।

अनुमानं शब्दः स्मृत्यपेक्षत्वात्—यस्य स्मृत्यपेक्षित्वं तदनुमानम्, स्मृत्यपेक्षश्च शब्दोऽर्थप्रत्यायने, तस्मादनुमानम्। त्रिकालविषयत्वाच्च—त्रिकालविषयमनुमानम्, तथा च शब्दः तस्मादनुमानम्। अन्वयव्यतिरेकोपपत्तेश्च—यदन्वयव्यतिरेकि तदनुमानम् यथा धूमविशेषदर्शनमग्निमत्प्रतीतौ, तथा च शब्दोऽन्वयव्यतिरेकाभ्यामेवार्थं प्रतिपादयति तस्मादनुमानम्।

## न्यायवार्त्तिकतात्पर्यटीका

अप्रत्यक्षश्चाविनाभूताल्लिङ्गादवगन्तव्यः। तदनपेक्षणे असम्बन्धाविशेषात् सर्वं सर्वस्माद्गम्येत। तथा च सर्वः परोक्षार्थप्रत्ययोऽनुमानव्याप्तः। न च प्रत्यक्षपरोक्षाभ्यामन्यो राशिरस्ति तस्माद्विषयाभावादपि न शब्दप्रामाण्यमिति।

यत्तावत् सत्य(ख)प्रमितेरिति; तन्न, असिद्धत्वादिति। न शब्दमात्रं प्रमाणमपि तु गृहीतः स्मर्यमाणसम्बन्धश्च। न चेदृशे शब्दे सति प्रमा न भवति। यादृशे तु सति प्रमा न भवति नासौ प्रमाणमित्यर्थः। तन्महत्प्रत्ययकर्तृत्वादिति। महत्त्वपरिमाणं हि महतो विशेषणम्, (ग)तन्न ज्ञातं विशेष्ये महति प्रमाणम्।

---

(१) 'न हि कदाचित्र उपलभ्यमानोऽप्रमाणं भवत्यनुपलभ्यमानो न भवतीति नासौ प्रमाणम्' इति ख-वार्त्तिकपाठः।

(क) अत्र 'यस्त्वनुपलभ्यमानो भवति नासौ प्रमाणमिति' इत्येवं पाठो यथार्थतया सम्भाव्यते।

(ख) वार्त्तिकगतः अपिशब्दो नात्र गृहीतः।

(ग) तन्नेत्यत्र तच्चेति पाठः समीचीनतया प्रतिभाति। विशेषणं परिमाणं ज्ञानस्वरूपव्यापारेण आकाशं महदिति प्रत्यये कारणमिति तत् प्रमाणमिति भावः।

## न्यायभाष्यम्

### (सू०)—शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात् ॥ ४९ ॥

शब्दोऽनुमानम्, न प्रमाणान्तरम्। कस्मात्? शब्दार्थस्यानुमेयत्वात्। कथमनुमेयत्वम्? प्रत्यक्षतोऽनुपलब्धेः। यथाऽनुपलभ्यमानो लिङ्गी मितेन लिङ्गेन पश्चान्मीयत इति अनुमानम्। एवं मितेन शब्देन पश्चान्मीयते (१)अर्थोऽनुपलभ्यमान इत्यनुमानं शब्दः ॥ ४९ ॥

इतश्चानुमानं शब्दः—

### (सू०)—उपलब्धेरद्विप्रवृत्तित्वात् ॥ ५० ॥

प्रमाणान्तरभावे द्विप्रवृत्तिरुपलब्धिः, अन्यथा ह्युपलब्धिरनुमाने अन्यथोपमाने (२)तद्व्याख्यातम्। शब्दानुमानयोस्तूपलब्धिरद्विप्रवृत्तिः यथाऽनुमाने प्रवर्तते तथा शब्देऽपि। विशेषाभावादनुमानं शब्द इति ॥ ५० ॥

## न्यायवार्त्तिकम्

शब्दोऽनुमानमर्थस्यानुपलब्धेरनुमेयत्वात्। इतश्चानुमानं शब्दोऽर्थस्यानुपलब्धेः प्रत्यक्षेणानुपलभ्यमानार्थविषयत्वादिति सूत्रार्थः ॥ ४९ ॥

इतश्चानुमानम्—

उपलब्धेरद्विप्रवृत्तित्वात्। प्रमाणान्तरभावे (३)उपलब्धिभेदो दृष्टः यथा

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं सिद्धप्रमाणभावस्य शब्दस्यानुमानादभेदं परीक्षमाणः पूर्वपक्षयति—अनुमानं शब्द इति।

शब्दो—त्वात् ( सू० ४९ ) ॥ यज् ज्ञानं प्रत्यक्षेणानुपलभ्यमानार्थविषयं प्रत्यक्षस्य पश्चादुपजायते तदनुमानम्, यथाऽग्निमद्धूमज्ञानं तथा च शब्दज्ञानं तस्मादनुमानमित्यर्थः ॥ ४९ ॥

## वृत्तिः

क्रमप्राप्तं शब्दं परीक्षितुं पूर्वपक्षयति—( शब्दोऽनुमानमिति )

शब्दोऽनुमानमित्यस्य शाब्दबोधोऽनुमितिरिति पर्यवसितार्थः। तथाच शब्दो लिङ्गविधयाऽनुमितिकरणम् अर्थस्य शब्दप्रतिपाद्यस्यानुपलब्धेरप्रत्यक्षत्वादनुमेयत्वादिति। तथा च शाब्दज्ञानमनुमितिरप्रत्यक्षविषयत्वात्, प्रत्यक्षभिन्नत्वाद्वेत्यत्र तात्पर्यम् ॥ ४९ ॥

हेत्वन्तरमाह—( उपलब्धेरिति )

उपलब्धेः शाब्दबोधत्वेनाभिमताया अनुमितित्वेनाभिमतायाश्च अद्विप्रवृत्तित्वात्

(१) 'अर्थोऽयमनुप-' ज-वि-टि०। (२) 'तद्व्याख्यानम्' ज०। (३) 'उपलब्धि(द्वैतौ)भेदः' इति ख०।

## (सू०)—सम्बन्धाच्च ॥ ५१ ॥

### न्यायभाष्यम्

शब्दोऽनुमान(१)मिति वर्तते। सम्बद्धयोश्च शब्दार्थयोः सम्बन्धप्रसिद्धौ शब्दोपलब्धेरर्थग्रहणं यथा सम्बद्धयोर्लिङ्गलिङ्गिनोः सम्बन्धप्रतीतौ लिङ्गोपलब्धौ लिङ्गिग्रहणमिति ॥ ५१ ॥

### न्यायवार्त्तिकम्

प्रत्यक्षेऽनुमाने च। अन्यथा हि प्रत्यक्षे उपलब्धिरन्यथाऽनुमाने, न त्वेवं शब्दे इति। तस्मान्न प्रमाणान्तरम् ॥ ५० ॥

सम्बन्धाच्च। सम्बद्धार्थप्रतिपादकत्वाच्चेति सूत्रार्थः। सम्बद्धार्थप्रतिपादकमनुमानं तथा च शब्द इति ॥ ५१ ॥

यत्तावत् स्मृत्यपेक्षत्वादनुमानं शब्द इति, तन्न; अनेकान्तात्। अनुमानेऽपि स्मृत्यपेक्षित्वमस्ति (क) यथा संशये यथा तर्के यथोपमान इति। एतेन त्रिकालविषयत्वं प्रत्युक्तम्। यत् पुनरेतदन्वयव्यतिरेकोपपत्तेरिति, अन्वयव्यतिरेकोपपत्तिः प्रत्यक्षेऽपि—यथा यत्र घटस्तत्र

### न्यायवार्त्तिकतात्पर्यटीका

उप—त्वात् ( सू० ५० )॥ अद्विप्रवृत्तिकत्वं प्रकारभेदरहितत्वं प्रत्यक्षानुमाने तु परोक्षापरोक्षावगाहितया प्रकारभेदवती इत्यर्थः ॥ ५० ॥

सम्ब—च ( सू० ५१ )॥ (ख)

सिद्धान्तस्वरूपमुपक्रमते—यत्तावदिति। एतेन संशयादिषु व्यभिचारेण। तेऽपि हि त्रिकालविषया इति। अन्वयव्यतिरेकोपपत्तिमात्रं प्रत्यक्षेऽप्यस्ति। प्रत्यायनाङ्गान्वयव्यतिरेकज्ञानं तु अन्यादृशं शब्दे अन्यादृशं त्वनुमाने। तद्धि पक्षधर्मतापेक्षमनुमाने शब्दे तु तदनपेक्षमित्यत्र सूत्रं भवति—

### वृत्तिः

अद्विप्रकारत्वात्। अनुमितित्वं शाब्दत्वं च न जातिद्वयं शब्दस्य लिङ्गविधया बोधकत्वाल्लिङ्गान्तरजज्ञानवद्विजातीयत्वाभावात् ॥ ५० ॥

हेत्वन्तरमाह—( सम्बन्धाच्चेति )

सम्बन्धात् नियतसम्बन्धाज् ज्ञायमानादिति शेषः। शब्दो हि व्याप्तिग्रहणसापेक्षो बोधयति। तेन शाब्दबोधोऽनुमितिरिति भावः ॥ ५१ ॥

---

(१) '-मित्यनुवर्तते' इति फ०।

(क) अत्र यथाशब्दद्वयस्थाने तथेति पाठो यथार्थतया प्रतिभाति, सहचारप्रदर्शने उभयपक्षसिद्धतया अनुमानस्य दृष्टान्ततायाः संशयादिषु उपमेयताया युक्तत्वादिति ध्येयम्।

(ख) द्वितीयाध्यायस्य प्रथमाह्निके एकपञ्चाशत्तमसूत्रस्य तात्पर्यटीका नोपलभ्यते।

## न्यायभाष्यम्

यत्तावदर्थस्यानुमेयत्वादिति तन्न—

### (सू०)—आप्तोपदेशसामर्थ्याच्छब्दादर्थसम्प्रत्ययः (१) ॥५२॥

स्वर्गः अप्सरसः उत्तराः कुरवः सप्त द्वीपाः समुद्रो लोकसन्निवेश इत्येवमादेरप्रत्यक्षस्यार्थस्य न शब्दमात्रात् प्रत्ययः, किं तर्हि ? आप्तैरयमुक्तः शब्द इत्यतः सम्प्रत्ययः, विपर्ययेण सम्प्रत्ययाभावात् ; न त्वेवमनुमानमिति ।

## न्यायवार्त्तिकम्

घटज्ञानम्, यत्र नास्ति तत्र तदभाव इति । यत् पुनरेतदनुपलभ्यमानार्थविषयत्वादिति, सत्यम् ; अनुपलभ्यमानार्थविषयमनुमानम्, न पुनः स्वर्गापूर्वदेवताद्यर्थेषु लौकिकस्य प्रत्यक्षमनुमानं वा । अपि तु—

आप्तोपदेशसामर्थ्याच्छब्दादर्थे सम्प्रत्ययः । न ह्ययं शब्दमात्रात् स्वर्गादीन् प्रतिपद्यते ।

## न्यायवार्त्तिकतात्पर्यटीका

आप्तो—यः ( सू० ५२ ) ॥ यो ह्यत्यन्तादृष्टपूर्वः स्वर्गापूर्वदेवतादिः स वाक्यार्थरूपः । तथाहि—

यन्न दुःखेन संभिन्नं न च ग्रस्तमनन्तरम् ।
अभिलाषोपनीतं च तत्सुखं स्वःपदास्पदम् ॥ इति ।

स्वर्गो वाक्यार्थः । एवमपूर्वमपि ; तत् खलु स्वर्गनरकादिहेतुः पुरुषविशेषगुणः कालान्तरस्थायी स्वकार्यविरोधीति वाक्यार्थ एव । एवं देवताऽपि । साऽपि हि सूक्तहविर्भागिनी (क) सहस्राक्षाद्युपेतदेहादिमती वाक्यार्थ एव । नैवैष शब्दादृते अस्मदादिप्रत्यक्षादिगोचरः । न चागृहीतं लिङ्गमस्मिन् प्रवर्तितुमर्हति । न चागृहीते सम्बन्धिनि शक्यग्रहः सम्बन्धः । पदं तु यद्यपि पदार्थसङ्गतिसंवेदनमपेक्षते (ख)यद्यपि पदार्थ एव पदार्थान्तरविशिष्टो वाक्यार्थः । येऽपि वाक्यार्थे स्वर्गादौ पदार्थस्मरणद्वारेण प्रवर्तमानं सङ्गतिग्रहानपेक्षमेव स्वर्गरूपवाक्यार्थं कुर्वन्ति, स्वलोकसिद्धं सुखजातीयमुद्दिश्य लोके सिद्धैरेव दुःखाद्यसंभेदैर्विशिष्टं स्वर्गपदवाच्यं प्रतिपादयन्ति, नापदार्थं वाक्यार्थं कुर्वन्ति वाक्यार्थे च पदवचनं स्वर्ग इति यथा (ग)श्रोत्रियश्छन्दोऽधीत इति (घ)यथा चक्षुरादयो रूपादिष्वगृहीतसङ्गतयः प्रवर्तन्ते एवं पदार्थसङ्गतिग्रहापेक्षाण्यपि पदानि वाक्यार्थबोधने न सङ्गतिग्रहमपेक्षन्ते, कार्यव्यङ्ग्यत्वात् प्रमाणभावस्य सङ्गतिग्रहापेक्षेभ्योऽपि

---

(१) '-दर्थे सम्प्रत्ययः' इति वि० ।

(क) इन्द्रियवाचकोऽक्षशब्दोऽत्र चक्षुःपरः । सहस्राक्ष्याद्युपेतेति वा पाठः । (ख) पूर्ववाक्ये यद्यपीति दर्शनादत्र 'तथाऽपी'ति पाठो युक्तः । (ग) ओंकारपूर्विकास्तिस्रः सावित्रीर्यश्च विन्दति । चरितब्रह्मचर्यश्च स वै श्रोत्रिय उच्यते ॥ इति शब्दसारः । (घ) यथा च चक्षुरादय इति पाठः सम्भाव्यते ।

## न्यायवार्त्तिकतात्पर्यटीका

च पदभेदेभ्यो वाक्यार्थावबोधकार्यदर्शनात्। तस्मान्न पदं तदर्थो वा वाक्यार्थावबोधे लिङ्गं तत्र सम्बन्धग्रहानपेक्षत्वाद् रूपादिबोधे चक्षुरादिवत्।

स्यादेतत्। मा भूत्प्रत्यक्षतोदृष्टमनुमानं वाक्यार्थे, सामान्यतोदृष्टं भविष्यति। यद्यपि च वाक्यार्थे साध्ये पदानामपक्षधर्मत्वं यद्यपि च पदस्मारिताः पदार्था व्यभिचारिणः तथा अप्याकाङ्क्षायोग्यतासत्तिविशेषणाः पदार्थाः संसर्गे लिङ्गं भविष्यन्ति। तथा हि यन्न दुःखेनेत्यादिभिः पदैः स्मारिताः पदार्थाः गुणप्रधानभावेनावस्थिताः संसर्गवन्तः आकाङ्क्षायोग्यतासत्तिमत्त्वे सति पदैः स्मारितत्वाद् गामभ्याजेति पदस्मारितपदार्थवत्। संसर्गस्य च संसृज्यमाना एव विशेषो न पुनराजानतोऽस्ति कश्चिद्विशेषः। संसृज्यमानाश्च पदैरेव स्मारिता इति संसर्गविशेषप्रतिलम्भः। स एव च वाक्यार्थ इति सिद्धमानुमानिको वाक्यार्थ इति। गामभ्याजेत्यत्र पदार्थानां संसर्गवत्त्वं च वाक्यश्रवणसमनन्तरप्रयोज्यवृद्धप्रवृत्त्यनुमितपदार्थसंसर्गप्रत्ययादवगतम्। तदेतदचतुरस्रम्, पदानामेव पदार्थस्मरणावान्तरव्यापाराणां वाक्यार्थप्रमां प्रति करणतया प्रमाणत्वात् तेषां चापक्षधर्मतया लिङ्गत्वानुपपत्तेः।

यदि तु पदानि पदार्थमात्रपर्यवसितवृत्तीनि न वाक्यार्थप्रत्ययपराणि स्युः ततो न पदार्थानामाकाङ्क्षा अस्तीति वाक्यार्थप्रत्ययो न भवेत्। न खल्वाकाङ्क्षां विना सन्निधियोग्यताभ्यामेव पदार्थाः संसृज्यन्ते, यथा अयमेति पुत्रो राज्ञः पुरुषोऽपसार्यतामित्यत्र पुत्रसम्बन्धेन निराकाङ्क्षो राजा न पुरुषेण संबध्यते। न च पदानां वाक्यार्थप्रत्ययपरत्वमन्तरेण तत्स्मारितानां पदार्थानामाकाङ्क्षाऽस्ति। न हि यद् येन विना न भवति तत् तदाकाङ्क्षति, येन कारकं क्रियामपेक्षेत द्रव्यं वा गुणम्; तथा सति पटो भवतीति वाक्यं न निराकाङ्क्षं स्यात्। पटस्य द्रव्यस्य गुणाकाङ्क्षित्वात्। (क)तस्माद् रक्तः पटो भवतीत्यस्यैकदेशः पटो भवतीति साकाङ्क्षत्वादप्रमाणम्, एवं (१)पटो भवतीत्यपि वाक्यं साकाङ्क्षं स्यात्, न चैवमस्ति। पटो भवतीति हि वाक्यं यं कञ्चिद् गुणं गृहीत्वा अनाकाङ्क्षं प्रमाणमेव, यदा पुना रक्तः पटो भवतीत्यस्यैकदेशो, यं कञ्चिद् गुणमाक्षिप्य निराकाङ्क्षः एवं विभागे सति निराकाङ्क्षत्वेन वाक्यभेदः स्यात्। रक्त इत्यपि च वाक्यं यं कञ्चिद् गुणिनं क्रियां च कांचिदाक्षिप्य निर्वृणुयात्। न च विशेषदर्शने सति नाऽऽक्षेप इति युक्तम्, एकवाक्यतायां सत्यां विशेषदर्शने अनाक्षेपः, अनाक्षेपे च सत्येकवाक्यतेत्यन्योन्याश्रयापत्तेः। तस्माद्वाक्यार्थप्रतिपादनपरसमभिव्याहृतपदकदम्बस्मारितत्वेनापर्यवसानमेव पदार्थानामाकाङ्क्षेति युक्तमुत्पश्यामः। तथा च पटो भवतीत्येतावन्मात्रं निराकाङ्क्षं यं कञ्चिद् गुणमाक्षिप्य निर्वृणोति, रक्तः पटो भवतीत्यत्र तु रक्तपदस्यापि समभिव्याहारात् पटादिसंसर्गपरत्वमिति पटादिसंसर्ग-

(१) 'पटो भवतीत्यपि वाक्यं साकाङ्क्षं स्यात् न चैवमस्ति' इत्यंशः ख-तात्पर्ये नास्ति।
(क) तस्माद् रक्त इत्यादौ अन्योन्याश्रयापात्तिरित्यन्ते ग्रन्थे मुद्राप्रमादः सम्भाव्यते।

## न्यायभाष्यम्

यत्पुनरुपलब्धेरद्विप्रवृत्तित्वादिति, अयमेव शब्दानुमानयोरुपलब्धेः प्रवृत्तिभेदः ; तत्र विशेषे सत्यहेतुर्विशेषाभावादिति ।

## न्यायवार्त्तिकम्

किन्तु पुरुषविशेषाभिहितत्वेन प्रमाणत्वं प्रतिपद्य तथाभूताच्छब्दात् स्वर्गादीन् प्रतिपद्यते । न चैवमनुमाने, तस्मान्नानुमानं शब्द इति । (क) एवं चोल्लिखिता प्रतिपत्तिः शब्दान्नानुमानादिति । एतेनाद्विप्रवृत्तित्वं व्याख्यातम् ।

## न्यायवार्त्तिकतात्पर्यटीका

मन्तरेण रक्तत्वमपर्यवस्यत् पटादयश्च रक्तत्वसंसर्गं विनाऽपर्यवस्यन्तः परस्परसम्बन्धा भवन्तीति सिध्यत्येकवाक्यता । तस्मात्पदान्येव पदार्थस्मरणद्वारेण तत्संसर्गं लक्षयन्ति वाक्यार्थे प्रमाणम्, तेषां चापक्षधर्मतया न लिङ्गत्वम् ।

स्यादेतत्—अयं पदकदम्बकविशेषः स्मारितपदार्थसंसर्गवान् आकाङ्क्षादिमत्त्वे सति पदकदम्बत्वाद् गामभ्याजेतिपदावलीवदिति नापक्षधर्मता, मैवम्, अन्योन्याश्रयापत्तेः । कर्मकारकं हि पटादन्यद्वस्तुतः सिद्धं ज्ञानलक्षणाय फलाय कल्पते । यथा अग्निमत्ता धूमस्य पर्वतस्य वा अग्निसंयोगः, न त्वग्निज्ञानजनकत्वं तद्वत्ता । फलव्यङ्ग्यं हि तन्नानुपजाते फले कल्पते । तथा च फलोपजनने सत्यग्निमत्ता तद्वत्तायां तु कर्मणि फलोपजननमित्यन्योन्याश्रयापत्तिः । न हि फलकर्मणोरैक्यम् । न हि वृक्ष एव छिदा भवति । तदिह संसर्गवत्त्वं पदानां तज्ज्ञानजनकत्वं नानुमानसाध्यं भवितुमर्हति । न ह्यग्निज्ञानजनकत्वं धूमस्यानुमानसाध्यमित्युक्तम् । स्मृतिजनकत्वमप्येषां वाक्यार्थप्रत्यायनाय कल्पितं न संबन्धान्तरं व्यनक्तीति । तत्सिद्धमेतत् न पदानि वाक्यार्थबोधे लिङ्गम् अपक्षधर्मत्वान्मनोवदिति ।

अपि च लौकिक एवार्थः परीक्षकैरनुगम्यते न तु स्वकृतलक्षणानुरोधेनालौकिकमास्थीयते । न च क्लेशेन कयाचित्प्रणाड्या पक्षधर्मतां कल्पयित्वा लोकः पदेभ्यो वाक्यार्थमवगच्छति अपि तु स्वतन्त्रेभ्य एव तेभ्य इति सिद्धः शब्दस्य प्रमाणस्यानुमानाद्भेदः । आप्तोक्तत्वं तु स्वर्गादिप्रतिपादकस्याऽऽगमस्य प्रामाण्ये लिङ्गमेव, न चैतावता तदर्थं आनुमानिको भवति । न हि प्रवृत्तिसामर्थ्यानुमितप्रामाण्यस्य प्रत्यक्षस्य विषयो भवत्यानुमानिकः । अर्थविषयं हि प्रमाणं प्रामाण्यविषये च प्रवृत्तिसामर्थ्याप्तोक्तत्वे इति । एवं व्यवस्थिते अभ्युच्चयमात्रतया भाष्यवार्त्तिककाराभ्यामाप्तोक्तत्वाश्रयत्वानाश्रयत्वे शब्दानुमानभेदहेतुतयोपन्यस्ते इति मन्तव्यम् । एतेन प्रवृत्तिभेदकथनेन अद्विप्रवृत्तिकत्वं व्याख्यातम् निराकार्यतया ।

---

(क) ख-पुस्तकपाठोऽत्र गृहीतः । क-पुस्तकसम्पादकास्तु 'एवं ( शब्दं ) चोल्लिखन्ती' इत्याकारेण मुद्रापयामासुः ।

## न्यायभाष्यम्

यत्पुनरिदं सम्बन्धाच्चेति, अस्ति च शब्दार्थयोः सम्बन्धोऽनुज्ञातः, अस्ति च प्रतिषिद्धः। अस्येदमिति षष्ठीविशिष्टस्य (१)वाक्यस्यार्थविशेषोऽनुज्ञातः, प्राप्तिलक्षणस्तु शब्दार्थयोः सम्बन्धः प्रतिषिद्धः। कस्मात्? प्रमाणतोऽनुपलब्धेः(क)—प्रत्यक्षतस्तावच्छब्दार्थप्राप्तेर्नोपलब्धिरतीन्द्रियत्वात्। येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभावमतिवृत्तोऽर्थो न गृह्यते। अस्ति चातीन्द्रियविषयभूतोऽप्यर्थः (२)समानेन चेन्द्रियेण गृह्यमाणयोः प्राप्तिर्गृह्यत इति ॥ ५२ ॥

## न्यायवार्त्तिकम्

यत् पुनरेतत् सम्बन्धाच्चेति, अस्ति शब्दार्थयोः सम्बन्धोऽनुज्ञातोऽस्ति च प्रतिषिद्ध इति। वाच्यवाचकभावलक्षणः सम्बन्धोऽनुज्ञातः—अस्य शब्दस्यायमर्थो वाच्य इति। यः पुनरयं स्वाभाविकः शब्दार्थयोः सम्बन्ध इति कैश्चिदभ्युपगम्यते स प्रतिषिद्ध इति। न स्वाभाविकः शब्दार्थयोः सम्बन्धोऽस्ति। कथम्?

'प्रमाणतोऽनुपलब्धेः'—तत्र प्रत्यक्षेण तावच्छब्दार्थस्यानुपलब्धिरतीन्द्रियविषयत्वात्। यस्माच्छब्दस्यातीन्द्रियोऽप्यर्थो विषयस्तस्मान्न प्रत्यक्षेणोपलब्धिरिति ॥ ५२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

सम्बन्धात्प्रतिपत्तेरनुमानं शब्द इति यदुक्तं पूर्वपक्षिणा तदनुभाष्य दूषयति—यत्पुनरेतदिति। अस्येदमिति षष्ठीविशिष्टस्येति भाष्यम्। तस्य व्याख्यानम्—वाच्यवाचकभाव इति। स्वाभाविको हि शब्दार्थयोः संबन्धस्तथा स्यात् तादात्म्यलक्षणो वा प्रत्याय्यप्रत्यायकभावो वा प्राप्तिलक्षणो वा। तत्राव्यपदेश्यपदेन प्रत्यक्षलक्षणस्थेन तादात्म्यमपाकृतम्। शब्दार्थयोः प्राप्तिनिराकरणहेतुना चोपरिष्टादौत्पत्तिकः प्रत्याय्यप्रत्यायकभावो निराकरिष्यते। तेन प्राप्तिं निराकरोति भाष्यकारः—प्राप्तिलक्षणस्त्विति। (ख) एकेन्द्रियग्राह्येभ्यो(३)हि प्राप्तिः प्रत्यक्षा यथाऽङ्गुल्योः न तु शब्दार्थयोरेकेन्द्रियग्राह्यता तस्मान्नानयोः प्राप्तिः प्रत्यक्षगम्या वायुवनस्पत्योरिवेत्यर्थः। ननु शब्दस्यार्थः समानेन्द्रियग्राह्य एव, तत्कथं (ग) येनेन्द्रियेण गृह्यते शब्दस्तस्य विषयभाव(घ)मतीतोऽर्थ इति, अत आह—अस्ति चातीन्द्रियविषयभूतोऽपीति। शब्दग्राहकेन्द्रियमतिपतित इन्द्रियमात्रमतिपतितश्चातीन्द्रियः, स च विषयभूतश्चेति कर्मधारयः।

तदेतद् यस्माच्छब्दस्येति वार्त्तिकेन व्याख्यातम् ॥ ५२ ॥

## वृत्तिः

सिद्धान्तसूत्रम्—( आप्तोपदेशेति )

आप्तस्य भ्रमादिशून्यस्य य उपदेशः शब्दस्तत्र यत् सामर्थ्यम् आकाङ्क्षायोग्यतादिमत्त्वं

---

(१) 'वाक्यार्थस्याविशेषो-' इति टि०। (२) 'समानेनैवेन्द्रियेण' इति टि०। (३) '-ऽप्राप्तिः' इति क।

(क) इदं ज-पुस्तके वार्त्तिके च सूत्राकारेण मुद्रितम्। (ख) अत्र सुवर्थश्चिन्तनीयः। (ग) क-ख-पुस्तकयोः 'नेन्द्रियेणे'ति पाठः प्रामादिकः। (घ) 'अतीत' इति अतिवृत्त इति भाष्यमर्थतो धृतम्।

## (सू०)—पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः ॥५३॥

### न्यायभाष्यम्

प्राप्तिलक्षणे च गृह्यमाणे सम्बन्धे शब्दार्थयोः शब्दान्तिके वाऽर्थः स्यात्, अर्थान्तिके वा शब्दः स्यात्, उभयं वोभयत्र । अथ (१)खलूभयम् ?

स्थानकरणाभावादिति चार्थः । न चायमनुमानतोऽप्युपलभ्यते शब्दान्तिकेऽर्थ इति । एतस्मिन् (२)पक्षेऽप्यास्यस्थानकरणोच्चारणीयः शब्दस्तदन्तिकेऽर्थ इति अन्नाग्न्यसिशब्दोच्चारणे पूरणप्रदाहपाटनानि गृह्येरन्, न च गृह्यन्ते ; अग्रहणात् नानुमेयः प्राप्तिलक्षणः सम्बन्धः ।

### न्यायवार्त्तिकम्

अनुमानेनोपलप्स्यत इति चेत् (क)नानुमानेन विकल्पानुपपत्तेः । शब्दो वाऽर्थदेशमुपसम्पद्यते अर्थो वा शब्ददेशम्, उभयं वा । पूरणप्रदाहपाटनानुपलब्धेः ।

पूरणप्रदाहपाटनानुपलब्धेश्च सम्बन्धाभावः । आस्यैकदेशस्थानकरणोच्चारणीयः शब्द इति अन्नाग्न्यसिशब्दोच्चारणे पूरण-प्रदाह-पाटनानि गृह्येरन् । मूर्त्तिमान् महान् पदार्थो मोदकादिर्गवादिवदागच्छन्नुपलभ्येत । ततश्च लोकव्यवहार उच्छिद्येत । अथ शब्दोऽर्थान्तिकमुपसम्पद्यते, तस्याप्यनुपपत्तिर्व्याघातात्—नित्यः शब्दः सन्तानवृत्त्या चागच्छतीति व्याहतम् । अथ नाऽऽगच्छत्यर्थदेश एव भवतीति, नित्यश्च भवति चेत्यनिवृत्तो व्याघातः । स्थानकरणप्रयत्ना-

### न्यायवार्त्तिकतात्पर्यटीका

प्राप्तिलक्षणे चेत्यादि भाष्यं व्याचष्टे—नानुमानेनापीति (ख) । उपसंपद्यते प्राप्नोति, गच्छतीति यावत् ।

पूर—वः (सू ५३) ॥ आगच्छन्नुपलभ्येत मोदकादिः, न चोपलभ्यते तस्मान्नाऽऽगच्छति शब्ददेशमर्थः । ततश्च अस्मिन् पक्षे शब्देन लोकव्यवहार उच्छिद्यते । अथ शब्द इति । न तावत् गुणस्य शब्दस्य गतिरुपपद्यते, तस्मात्संतानवृत्त्या (ग)शब्दोऽर्थदेशमागच्छतीति वाच्यम्, तथा च नित्यत्वव्याहतिरित्यर्थः । शङ्कते—अथ नाऽऽगच्छतीति । भवति विद्यत इत्यर्थः । अभूत्वा भवनं भवत्यर्थ इति मत्वा निराकरोति—नित्यश्च भवति चेतीति । शङ्किता स्वाभिप्रायमाह—

### वृत्तिः

ततः । अथवा आप्तं प्राप्तं यदुपदेशसामर्थ्यम् आकाङ्क्षादिमत्त्वं ततः तत्सहकारात् । सावधारणश्चायं निर्देशः, तेन व्याप्तिनिरपेक्षादाकाङ्क्षादिज्ञानादर्थे सम्प्रत्ययः शाब्दबोधः

---

(१) 'खल्वयम्' इति ख-ज-ग-झा० । (२) '-पक्षेऽप्यस्य स्थान-' इति ग-ज-फ० ।

(क) अत्र 'अनुमानेन' इत्येतत् अन्वयिपदान्तराभावेन मुद्राप्रमादागतमिव सम्भाव्यते । तथा सति तात्पर्यटीकायामपि 'नानुमानेनापीत्य'त्र अनुमानेनापेति इति पाठो युक्तः । (ख) अपिशब्दो वार्त्तिके न दृश्यते । (ग) आदर्शपुस्तकयोः 'शब्दोऽर्थ देशमि'ति पाठो मुद्राप्रमादकृतः ।

## न्यायभाष्यम्

**अर्थान्तिके शब्द इति स्थानकरणासम्भवाद् अनुच्चारणम्—स्थानं कण्ठादयः, करणं प्रयत्नविशेषः, तस्यार्थान्तिकेऽनुपपत्तिरिति। उभयप्रतिषेधाच्च नोभयम्। तस्मान्न शब्देनार्थः प्राप्त इति ॥ ५३ ॥**

## न्यायवार्त्तिकम्

सम्भवाच्चार्थदेशे न भवति। अथ न गच्छति न भवति तत्र व्यज्यते, एको वितत्यावस्थित इति चेत् न, सर्वार्थोपलब्धिप्रसङ्गात्। यदि सर्वशब्दा एव वितत्यावस्थिताश्च (१)स्थानकरणादिनिमित्तसन्निधाने सति व्यज्यन्त इति मन्यसे, सर्वार्थानामुपलब्धिः प्राप्ता ; यदेकस्य व्यञ्जकं तच्छब्दान्तराणामपीति। वितत्यावस्थितश्च शब्दो व्यक्त इति स्वविषयं व्याप्यावस्थाने सति यत्र क्वचनावस्थितानां (२)गोशब्दाभिव्यक्तौ ककुदादिमदर्थप्रत्यायनं स्यात्। (३)सामान्यवदेतत् स्यात्—यथा सामान्यं स्वविषयं व्याप्यावस्थितं (४)न च सर्वत्रोपलभ्यते तथा शब्दोऽपि स्वविषयं व्याप्यावस्थित इति नियमो भविष्यति ? न युक्तमेवं भवितुम्, सामान्यस्याऽऽश्रयोपलब्धिर्व्यक्तिहेतुः, न च पुनः शब्दस्याऽऽश्रयोपलब्धिरस्ति, न च वाच्ये वृत्तिः, तस्मादसमो दृष्टान्तः। यदि च वाच्यार्थवृत्तिः शब्दः स्यात् वाच्योपलब्धावकृतसमयेनापि प्रतिपद्येत यथा सामान्यमकृतसमयोऽपि प्रतिपद्यते इति। तस्मान्नानुमानादपि प्रतिपद्यते।

## न्यायवार्त्तिकतात्पर्यटीका

अथ (क) न गच्छतीति। निराकरोति—न सर्वार्थेति। न हि समानदेशाः समानेन्द्रियग्राह्याः प्रतिनियतव्यञ्जकव्यङ्ग्या दृष्टा इत्यभिप्रायः। सामान्यस्याऽऽश्रयोपलब्धिर्व्यक्तिहेतुः (ख)न पुनः शब्दस्याऽऽश्रयोपलब्धिरस्ति यतः शब्दो व्यज्येत, प्रत्युत शब्देनैवाऽऽश्रयो व्यञ्जनीयः स्यात्। तथा चार्थाश्रितः शब्दस्ताल्वादिभिरप्राप्तैः सर्वान् प्रति व्यक्त इत्युक्तदोषापत्तिः न च शब्दस्यार्थे वृत्तिरनुभवगोचर इत्याह—न च वाच्ये वृत्तिः।

## वृत्तिः

सम्भवतीति नानुमानान्तर्भावः शब्दस्येत्यर्थः, शब्दादमुमर्थं प्रत्येमि न त्वनुमिनोमीत्यनुभवादिति भावः ॥ ५२ ॥

शब्दार्थयोः सम्बन्धाभाव इत्यप्याह—(पूरणेति)

शब्देन सहार्थस्य सम्बन्धाभावः व्याप्त्यभावः। हेतुमाह—पूरणेति। यदि शब्दस्यार्थेन व्याप्तिः स्यात् तदा अन्नाग्न्यसिशब्दैर्मुखपूरण-मुखदाह-मुखपाटनानि स्युः, शब्दस्य व्याप्यस्य सत्त्वेनान्नादेरर्थस्यापि सत्त्वात् ॥ ५३ ॥

---

(१) 'स्थानकरणादि (निमित्त) सन्निधाने' इत्येवं क-वार्तिके मुद्रितम्। (२) 'गोशब्दोऽभिव्यक्तौ' इति ख। (३) 'सामान्यवदेतत् स्यात्' इति ख-पुस्तके नास्ति। (४) 'स च सर्वत्रे'ति ख-पुस्तकपाठः।

(क) क-ख-तात्पर्ययोः 'नाऽऽगच्छती'ति प्रासङ्गिकम्। (ख) वार्तिके 'न च पुनरि'ति विशेषः।

# (सू०)—शब्दार्थव्यवस्थानादप्रतिषेधः ॥ ५४ ॥

## न्यायभाष्यम्

(१)शब्दादर्थप्रत्ययस्य व्यवस्थादर्शनादनुमीयते अस्ति शब्दार्थसम्बन्धो व्यवस्थाकारणम्। असम्बन्धे हि शब्दमात्रादर्थमात्रे प्रत्ययप्रसङ्गः। तस्मादप्रतिषेधः सम्बन्धस्येति ॥ ५४ ॥

## न्यायवार्त्तिकम्

इतश्च स्वाश्रयादन्येनापि न सम्बन्धी शब्दः गुणत्वात्; अन्येन गवादिना शब्दं प्रति समवायोऽपि नास्ति शब्दस्याऽऽकाशवृत्तित्वात्। नापि शब्दार्थयोरेकार्थसमवायः(क), ताभ्यामेकस्यानारम्भात्। उपमानात् प्रतिपत्स्यत इति चेत् न, उपमानास्यापि नायं विषयः। आगमात् प्रतिपत्स्यत इति चेत्, स एवात्र विचार्यते, किं शब्दार्थौ सम्बद्धावाहोस्विदसम्बद्धाविति।

यदिदं भवताऽभिधीयते स्मृत्याद्यपेक्षत्वादनुमानसाधर्म्यादनुमानं शब्द इति, तस्मादेव नानुमानम्, न हि तेनैव तस्य साधर्म्यमिति। अथ स्मृत्यादिसाधर्म्याच्छब्दानुमानयोरेकत्वमेव? तर्ह्येकं प्रमाणं प्राप्नोते, अस्ति ह्यर्थपरिच्छेदकत्वं सर्वप्रमाणानां साधर्म्यमिति। भवत्वेकं प्रमाणं किन्नो बाध्यत इति? कथं न बाध्यत इति, यदभीष्टं तन्निवर्त्तते। किमभीष्टम्? प्रत्यक्षानुमाने भिन्ने इति। अथ सामान्यमाश्रित्याभेदो देश्यते तदोपेक्षया वर्त्तितव्यम्, सामान्यमाश्रित्याभेदो विशेषमाश्रित्य भेद इति न किञ्चिद्बाधितम्। न चानुमानं शब्दः स्वपरात्मप्रत्यायकत्वात्। यत् स्वपरात्मप्रत्यायकं तदनुमानं न भवति यथा प्रदीपः—प्रदीपो येनापि क्रियते तस्याप्युपलब्धिसाधनं भवति अन्यस्यापि। शब्दोऽप्येवं तस्मान्नानुमानमिति।

शब्दार्थव्यवस्थानादप्रतिषेधः(ख)। यदि शब्दार्थावसम्बद्धौ स्याताम्, शब्दार्थप्रत्ययव्यवस्था न स्यात्। शब्दः सम्बद्धोऽर्थं प्रतिपादयति प्रत्ययनियमहेतुत्वात् प्रदीपवत्—यः प्रत्ययनियमहेतुः स सम्बद्धोऽर्थप्रत्यायको दृष्टः यथा प्रदीपः, शब्दश्चैवंधर्मा, तस्माच्छब्दोऽपि सम्बद्धोऽर्थप्रत्यायक इति। यद्वा प्रत्ययः पक्षीकर्तव्यः सम्बद्धाभ्यां शब्दार्थाभ्यां वस्तुप्रत्ययो भवतीति नियमात् कुण्डलीति प्रत्ययवदिति ॥ ५४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

आगमात् प्रतिपत्स्यत इति, निरुक्तादिरागमः। उत्तरम्—(२)स एवात्रेति। निरुक्तादीनामर्थसंबन्धे (३)सिद्धे प्रतिपादकत्वं भवेत्। स एव तु विचार्यत इत्यर्थः ॥ ५३ ॥

पूर्वपक्षवाद्याह—

शब्दा—धः (सू ५४) ॥

---

(१) 'शब्दार्थप्रत्ययस्य' इति ज० ग० फ०। (२) 'स एवायमिति' इत्यादर्शपुस्तकयोः पाठः। (३) 'सिद्धे' इति ख-तात्पर्ये नास्ति।

(क) एकार्थसमवायोऽत्र एकस्यार्थस्य समवाय इति व्युत्पत्त्या समवायिद्वयनिरूपितसमवायपरः, यथा घटस्यैकार्थस्य कपालद्वये। अत उत्तरं पठति ताभ्यामिति। एकस्मिन्नर्थे समवाय इति व्युत्पत्तिलभ्यसम्बन्धविशेषपरत्वे तु तयोरेकेनानारम्भादित्युत्तरं भवेदिति ध्येयम्।

(ख) ख-वार्त्तिके शब्दार्थव्यवस्थानदर्शनादप्रतिषेधः इति दृश्यते।

न्यायभाष्यम्

अत्र समाधिः—

## (सू०)—न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य ॥ ५५ ॥

(१)न सम्बन्धकारितं शब्दार्थव्यवस्थानम्। किं तर्हि ? समयकारितम्। यत्तद्वोचाम अस्येदमिति षष्ठीविशिष्टस्य वाक्यस्यार्थविशेषोऽनुज्ञातः शब्दार्थयोः सम्बन्ध इति (२)समयं तम् अवोचाम इति। कः पुनरयं समयः ? अस्य शब्दस्येदमर्थजातमभिधेयमिति अभिधानाभिधेयनियमनियोगः। तस्मिन्नुपयुक्ते शब्दादर्थसम्प्रत्ययो भवति। विपर्यये हि शब्दश्रवणेऽपि प्रत्ययाभावः। सम्बन्धवादिनोऽपि चायमवर्जनीय इति।

न्यायवार्त्तिकम्

न सामयिकत्वाच्छब्दार्थसम्प्रत्ययस्य। न सम्बन्धकारितं शब्दार्थव्यवस्थानम्। किं तर्हि ? समयकारितम्। कः पुनरयं समयः ? अभिधानाभिधेयनियमनियोगः, समययुक्ते शब्दार्थ-

न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तवाद्याह—

न सा—स्य (सू ५५) ॥ न सामयिकत्वादिति।

अभिधानाभिधेयनियमनियोग इति। अभिधानाभिधेययोर्नियमो गोशब्दस्य सास्नादिमानेवार्थ एवमश्वशब्दस्य केशरादिमानेवेति, तस्मिन् नियोगः बोद्धव्य इति भगवतः परमेश्वरस्य सर्गादौ, सोऽयं समय इति अयमर्थः। तस्मिन् उपयुक्ते ज्ञाते शब्दार्थव्यवस्था भवति। संबन्धवादिनोऽपि चायमवर्जनीय इति। येऽपि मीमांसका वैयाकरणा वा स्वाभाविकं शब्दार्थयोः संबन्धमास्थिषत तेषामपि नैव सत्तामात्रेण गमकोऽपि तु ज्ञातः सन्, विज्ञाने चायमस्य वाचक इति वाऽस्मादयं बोद्धव्य इति वा संकेत एवोपायः। वृद्धव्यवहारोऽपि गवादिशब्दानां देवदत्तादिशब्दवत् संकेतपूर्व एव। तद्वरमस्तु संकेत एव कृतमत्र स्वाभाविकेन संबन्धेन तन्मात्रादेव प्रयोगप्रतिपत्तिव्यवहाराणामुपपत्तेरित्यर्थः।

नन्वयं समयः केषांचित् पदानामसति स्वाभाविकेऽर्थैः संबन्धे न कर्तुं शक्यः, निर्दिश्य ह्यर्थं ब्रूयादयमस्माद्बोद्धव्य इति। न च निर्देशोऽसति स्वाभाविके संबन्धे

वृत्तिः

तत्किं शब्दोऽसम्बद्धमेवार्थं प्रत्याययति, तथा सत्यतिप्रसङ्ग इत्याशङ्कते—(शब्दार्थेति) 'अप्रतिषेधः' शब्दार्थयोः सम्बन्धप्रतिषेधो न, शब्दार्थयोः सम्बन्धस्य व्यवस्थितत्वात्, कश्चिदेव हि शब्दः कञ्चिदेवार्थं बोधयति न सर्वः सर्वमिति। इत्थं च सम्बन्धेऽङ्गीकृते तेन सम्बन्धेन व्याप्तिरप्यावश्यकी, स च सम्बन्धो न मुखपूरणादिनियामक इति भावः ॥ ५४ ॥

(१) 'असम्बन्धकारितं' इति वि०। (२) 'समयं तदवोचाम' इति ज० ग० फ०।

## न्यायभाष्यम्

प्रयुज्यमानग्रहणाच्च समयोपयोगो लौकिकानाम् । (१)समयपरिपालनार्थं चेदं पद-

## न्यायवार्त्तिकम्

व्यवस्था भवतीति। (क) कश्चित् (२)च सम्बन्धोऽनुज्ञात इति (३)यदवोचाम (४)समयं तदवोचाम इति। सेयं शब्दार्थव्यवस्थाऽन्यथाऽपि भवतीत्यहेतुः। अयं च वाच्यवाचकभाव-लक्षणः सम्बन्धः स्वाभाविकशब्दार्थसम्बन्धवादिनाऽप्यनुज्ञेयः । न हि स्वाभाविकसम्बन्ध-

## न्यायवार्त्तिकतात्पर्यटीका

केषांचिच्छब्दानां सिध्यति। संकेताधीने तु वाचकत्वे सर्वेषामकृतसमयत्वात् किं केन निर्दिश्येत। तस्मात्संकेतकरणमेव स्वाभाविकसंबन्धं प्रतिपादयति शब्दानामित्यत आह— प्रयुज्यमानग्रहणाच्चेति। परमेश्वरेण हि यः सृष्ट्यादौ गवादिशब्दानामर्थे संकेतः कृतः, सोऽधुना वृद्धव्यवहारे प्रयुज्यमानानां शब्दानामविदितसंगतिभिरपि बालैः शक्यो ग्रहीतुम्। तथा हि वृद्धवचनानन्तरं तच्छ्राविणो वृद्धान्तरस्य प्रवृत्तिनिवृत्तिभयशोकहर्षादिप्रतिपत्तेस्तद्धेतुं प्रत्ययमनुमिमीते बालः। तस्य च सत्स्वप्यन्येष्वर्थेषु भूतस्य अभूतस्य वा श्रवणसमनन्तरं च भवतो वाक्यश्रवणहेतुतामवगच्छति तदवयवानां च पदानामावापोद्वापभेदेन तदर्थप्रत्ययोपजनापाय-दर्शनात्तेषु तेष्वर्थेषु तेषां तेषां पदानां वाचकत्वं कल्पयति। एवं पदावयवेषु प्रकृतादिष्वपि द्रष्टव्यम्। सोऽयं वृद्धव्यवहारः साम्प्रतिकानां संकेतग्रहोपायः, सर्गादिभुवां तु महर्षिदेवतादीनां परमेश्वरानु-ग्रहाद्धर्मज्ञानवैराग्यैश्वर्यातिशयसंपन्नानां परमेश्वरेण सुकर एव संकेतः कर्तुम्। तद्व्यवहाराच्चा-स्मदादीनामपि सुग्रहः संकेतः(ख)। संकेतग्रहो न संबन्धस्मृतिमपेक्षते आप्तपरम्परात एव ततो निःशङ्कव्यवहारोपपत्तेः, अत एवाऽऽह भाष्यकारः—लौकिकानामिति। स्यादेतत्। यदि शब्दानां सांकेतिकसंबन्धो न स्वाभाविकः कृतं तर्हि साध्वसाधुविभागपरेण व्याकरणेन, स्वाभाविकं हि यस्य वाचकत्वं स साधुरसाधुश्चेतरः, सामयिकत्वे तु सर्व एव साधवोऽसाधवो वेत्यत आह— समयपरिपालनार्थं चेदमिति, पारमेश्वरसमयपरिपालनार्थमित्यर्थः। तथा च येषां पदानां येनार्थेन परमेश्वरेण कृतः समयः तानि तत्र साधूनि असाधूनीतरत्रेति विभागाय व्याकरण-

## वृत्तिः

उत्तरयति—( न सामयिकत्वादिति )

मन्मतेऽपि शब्दार्थयोर्व्यवस्था न, 'शब्दाधीनस्यार्थसम्प्रत्ययस्य सामयिकत्वात् शक्ति-

---

(१) 'समयपालनार्थं' ख-ग-ज-भा०। (२) 'च' कारः ख-पुस्तके नास्ति। (३) 'यदवोचाम' इति ख। (४) 'समयं तदवोचाम' इति ख-पुस्तके न दृश्यते।

(क) 'कश्चित् च' इत्यत्र 'अस्ति च' इति पाठ एव प्रशस्तः, भाष्ये तथा दर्शनात्। भाष्यवाक्यमत्र आनुपूर्वीव्यतिक्रमेणोद्धृतमिति सम्भाव्यते। ४३९, ५४३ पत्रयोर्भाष्यं द्रष्टव्यम्। (ख) अतः परमादर्शपुस्तकयोः (तद्व्यवहारपरम्परागतश्चास्मदादीनामपि) इति चिह्नितः पाठो वर्त्तते; तत्र तद्व्यवहारपरम्परातश्च इति यथार्थः पाठः स च महर्षिदेवतादीनां व्यवहारादस्मदादेः संकेतग्रहानुपपत्त्या तद्व्यवहारादित्यस्य व्याख्यानपरा टिप्पणी, अस्मदादीनामपीति च द्विरुक्तम्, प्रमादादयमंशष्टीकायामन्तर्भावित इति परित्यक्तः।

## न्यायभाष्यम्

लक्षणायां वाचाऽन्वाख्यानं व्याकरणम् वाक्यलक्षणाया (१,क)वाचोऽर्थलक्षणम् , पदसमूहो वाक्यमर्थपरिसमाप्ताविति । तदेवं प्राप्तिलक्षणस्य शब्दार्थसम्बन्धस्या(२)र्थतुषोऽपि अनुमानहेतुर्न भवतीति ॥ ५५ ॥

## न्यायवार्त्तिकम्

वादिनोऽनुपयुक्तशब्दार्थसम्बन्धस्य शब्दग्रहणाद्विशेषप्रत्ययो भवति। स पुनः समयः कुतः प्रत्येतव्यः ? पदज्ञानाल्लोकतश्चेति। तदिदं समयशास्त्रं शब्दस्याविलोपार्थं प्रणीतम् । लोकतश्च समयो बोद्धव्यः मात्रादींस्तेषु तेष्वर्थेषु तांस्तान् शब्दान् प्रयुञ्जानानुपलभ्य सोऽपि तथैव शिक्षितस्तांस्तानेव शब्दांस्तेषु तेष्वर्थेषु प्रयुङ्क्ते न पुनरेनं लिपिमिव कश्चित् शिक्षयतीति ॥५५॥

## न्यायवार्त्तिकतात्पर्यटीका

अर्थवदिति सिद्धम् । अर्थरूपस्तुषो लेशोऽर्थतुषः स नास्ति, केवलं परैः प्राप्तिलक्षणः सम्बन्धः कल्पित इत्यर्थः। तथा च स्वाभाविकसम्बन्धाभावादनुमानाभेदायाविनाभावसिद्ध्यर्थं स्वाभाविकसम्बन्धाभिधानमयुक्तमिति सिद्धम् ।

वार्त्तिकम्—स पुनः समयः कुतः इति। यदि केचनापि शब्दाः (ख)न प्रसिद्धसंबन्धास्ततोऽशक्यप्रतीतिः समय इति भावः। उत्तरम्—पदज्ञानात् । पदं ज्ञायते व्युत्पाद्यते अनेनेति व्युत्पत्त्या व्याकरणादित्यर्थः। ननु सर्वेषां शब्दानामविदितसङ्गतिः कथं व्याकरणादपि शब्दमात्रात् समयं प्रतिपद्यते इत्यत आह—लोकतश्चेति । वृद्धव्यवहारावधृतसमयो व्याकरणात्साध्वसाधुविभागं च प्रतिपद्यत इत्यर्थः। तदेतद्विभजते—तदिदं शास्त्रमिति।

## वृत्तिः

ग्रहाधीनत्वात् , शक्तिरूपसम्बन्धेन च न व्याप्तिस्तस्या वृत्तिनियामकसम्बन्धाधीनत्वादिति भावः ॥ ५५ ॥

---

(१) 'वाचोऽर्थो लक्षणम्' इति ल०-ग-ज-भा०। (२) '-र्थजुषः' ज-ग।

(क) 'समयज्ञानार्थं चेदं पदलक्षणाया वाचोऽन्वाख्यानं व्याकरणं वाक्यलक्षणाया वाचोऽर्थलक्षणम्' इति लघु वैयाकरणसिद्धान्तमञ्जूषा। (ख) 'न'कारोऽयं क-तात्पर्ये न दृश्यते। ख-तात्पर्ये तु 'यदि न केचनापि शब्दा न प्रसिद्धसम्बन्धा इति पाठः। मुद्रित आकारस्तु शोधितः।

## (सू०)—जातिविशेषे चानियमात् ॥ ५६ ॥

### न्यायभाष्यम्

सामयिकः शब्दादर्थसम्प्रत्ययो न स्वाभाविकः। ऋष्यार्यम्लेच्छानां यथाकामं शब्दविनियोगोऽर्थप्रत्यायनाय प्रवर्त्तते। स्वाभाविके हि शब्दस्यार्थप्रत्यायकत्वे यथाकामं न स्याद् यथा तैजसस्य प्रकाशस्य रूपप्रत्ययहेतुत्वं न जातिविशेषे व्यभिचरतीति ॥ ५६ ॥

### न्यायवार्त्तिकम्

जातिविशेषे चानियमात्। न स्वाभाविकः शब्दार्थयोः सम्बन्धः। यदि स्वाभाविकः शब्दार्थसम्बन्धोऽभविष्यन्न जातिविशेषे शब्दार्थव्यवस्थाऽभविष्यत्। अस्ति तु (क)यथाकामं प्रयोगः—जातिविशेषे यथाकामं प्रयोगो दृष्टः नतु स्वाभाविकेन सम्बन्धेन सम्बद्धानां जातिविशेषे व्यभिचारो दृष्टः। न हि प्रदीपोऽस्माकमन्यथा प्रकाशयत्यन्यथा जातिविशेष इति। जातिविशेष-शब्देन पुनर्देशोऽभिधीयत इति ॥ ५६ ॥

( इति शब्दस्यानुमानाद्भेदः। )

### न्यायवार्त्तिकतात्पर्यटीका

एवं तावद्दृष्टेनैव समयेनोभयसिद्धेन शब्दार्थव्यवस्थापनस्योपपत्तेर्नात्यन्तापरिदृश्यमानस्वाभा-विकसम्बन्धकल्पना युक्तेत्युक्तम् ॥ ५५ ॥

सम्प्रत्ययनुपपन्नोऽप्ययं स्वाभाविकः सम्बन्ध इत्याह—

जाति—मात् ( सू० ५६ ) ॥ स्वाभाविको हि सम्बन्धः कस्यचिच्छब्दस्य केनचिदर्थेनास्ति न सर्वस्य सर्वेण, तथा सति शब्दार्थव्यवस्था न स्यात्। एवं च तर्हि न ऋष्यार्यम्लेच्छानां नियमः स्यात्। तथा हि यवशब्द आर्यैर्दीर्घशूके पदार्थे प्रयुज्यते ते हि यवशब्दाद्दीर्घशूकं पदार्थं प्रतिपद्यन्ते। म्लेच्छास्तु प्रियङ्गौ प्रयुञ्जते ते हि ततः प्रियङ्गुं प्रतिपद्यन्ते, एवं त्रिवृतशब्दमृषयः (ख)स्तोत्रीयानवके प्रयुञ्जते, आर्यास्तु लताविशेषे; सोऽयमनियमो न स्यात्स्वाभाविके संबन्धे। न हि स्वाभाविकसंबद्ध आलोको रूपेण सहस्रेणापि शिल्पिभी रसादिसंबद्धः शक्यः कर्त्तुं यतस्ततो रसादयो गम्येरन्। नापि तत्र संकेतेन स्वाभाविकः संबन्धो व्यज्यते, सदेव हि व्यज्यते नासत्। नो खलु यत्र घटो नास्ति तत्र तं प्रदीपः शक्तो व्यङ्क्तुम्। सोऽयमनियमः सामयिकत्वे उपपद्यते पुरुषेच्छाधीनत्वात् तस्याश्चानियमात्। (१)न तु स्वाभाविकेन इति। न च वाच्यं सर्व एव शब्दाः सर्वैरेवार्थैः स्वभावतः संबद्धाः संकेतेन तु नियम्यन्त इति प्रमाणाभावात् जातिभेदेन चार्थभेदप्रत्ययस्य संकेतभेदादप्युपपत्तिरिति।

नन्वार्यदेशवर्त्तिनां म्लेच्छानामार्यव्यवहारनिश्चितसंकेतानां नानियम इत्यत आह वार्त्तिक-कारः—जातिविशेषशब्देनेति ॥ ५६ ॥

---

(१) 'न तु स्वाभाविकत्व' इति क।

(क) यथाकाममित्यत्र 'जातिविशेषे' इति—पाठान्तरं क्वचिद् दृष्टम्। (ख) स्तोत्रीया ऋग्विशेषाः 'उपास्मै गायताम्' इत्यादयः, तन्नवकमित्यर्थः।

## न्यायभाष्यम्

पुत्रकामेष्टिहवनाभ्यासेषु—

**(सू०)—तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः ॥ ५७ ॥**

तस्येति शब्दविशेषमेवाधिकुरुते भगवान् ऋषिः। शब्दस्य प्रमाणत्वं न सम्भवति। कस्मात्? अनृतदोषात्—पुत्रकामेष्टौ "पुत्रकामः पुत्रेष्ट्या यजेत" इति; नेष्टौ संस्थितायां पुत्रजन्म दृश्यते। दृष्टार्थस्य वाक्यस्यानृतत्वाद् अदृष्टार्थमपि वाक्यम् "अग्निहोत्रं जुहुयात् स्वर्गकाम" इत्याद्यनृतमिति(१) ज्ञायते।

## न्यायवार्त्तिकम्

तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्यः इति सूत्रम्। तदित्यधिकृतशब्दाभिधाना-च्छब्दविशेषाधिकारः—यस्मात् प्राप्तमपि प्रकरणेन शब्दं तच्छब्देन पुनरभिधत्ते तत्र ज्ञापयति शब्दविशेषं प्रतीयं चिन्ता न तु शब्दमात्रं प्रति। (क)अन्यथैवं वक्तव्यम्—अप्रमाणं शब्दोऽनृत-व्याघातपुनरुक्तदोषेभ्य इति। अप्रामाण्यमर्थस्याप्रत्यायकत्वम्, अनृतत्वमयथार्थाभिधानम्, व्याघातः पदयोर्वाक्ययोर्वा सहासम्भवः, पुनरुक्तं पूर्वाभिहितार्थाभिधानम्। उदाहरणानि भाष्ये।

## न्यायवार्त्तिकतात्पर्यटीका

अनुमानान्तर्भावे कदाचिदर्थाविनाभावाद्भवेच्छब्दस्य प्रामाण्यम्, तद्बहिर्भावे तु सुलभमस्या-प्रामाण्यमिति मत्वा अनुमानभेदाभिधानानन्तरमप्रामाण्यमाह पूर्वपक्षी—

तद्—भ्यः ( सू० ५७ )॥ तस्येत्यादिभाष्यम्, तद्वार्त्तिककारो व्याचष्टे—तदित्यधि-कृतशब्दाभिधानादिति। शास्त्रे ह्यस्मिन्निःश्रेयसाधिगमपरे तन्नान्तरीयकतया वेदप्रामाण्य-व्युत्पादनमधिकृतमित्यधिकृतः शब्दो वेद इत्यर्थः। स्यादेतत्—अनृतत्वमप्रामाण्यमिति पर्यायः, तथा च प्रतिज्ञार्थ एव हेतुरित्यत आह—अप्रामाण्यमर्थस्याप्रत्यायकत्वम्। अर्थस्येत्य-विपरीतस्येत्यर्थः। पुत्रकामेष्टिकारीर्यादयो हि ऐहिकफला नाऽऽमुष्मिकफलाः, ऐहिकत्वेनैव तत्फलस्य चेतनेन काम्यमानत्वात् एतच्छरीरोपभोगयोग्यत्वाच्च। विरुद्धार्थोपस्थापकत्वेन (ख) सहासंभवो वाक्ययोर्वा पदयोर्वेति। अत्र भाष्यकारेणोदितहोमादिविधिवाक्यानां निन्दाभिर्व्याघात

## वृत्तिः

( जातिविशेष इति )

शब्दस्यार्थेन सह न स्वाभाविकः सम्बन्धः, जातिविशेषेऽनियमात् शब्दस्यानियता-र्थकत्वदर्शनात्। आर्या हि यवशब्दाद्दीर्घशूकविशेषं प्रतियन्ति, म्लेच्छास्तु कङ्गुमिति। नियमे तु सर्वः सर्वं प्रतीयात्। आपाततश्चेदम्, नानाशक्तावपि यत्र यस्य शक्तिग्रह-स्तस्य तदर्थोपस्थितेः ॥ ५६ ॥

---

(१) 'विज्ञायते' इति टि०।

(क) 'प्रति' इत्येतत् क-ख-पुस्तकयोरदृष्टमपि पुस्तकान्तर उपलभ्यते। (ख) अत्र वार्त्तिकं व्युत्क्रम्य गृहीतम्, 'वा' कारश्चैकोऽधिक इति बोध्यम्।

## न्यायभाष्यम्

विहितव्याघातदोषाच्च, हवने "उदिते होतव्यम् अनुदिते होतव्यम् समयाध्युषिते होतव्यम्" इति विधाय विहितं व्याहन्ति—"श्यावोऽस्याऽऽहुतिमभ्यवहरति य (क)उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति यो(ख)ऽनुदिते जुहोति, (ग) श्यावशबलौ (१)वाऽस्याऽऽहुतिमभ्यवहरतो यः (घ)समयाध्युषिते जुहोति"। व्याघाताच्चान्यतरन्मिथ्येति।

## न्यायवार्त्तिकम्

तत्रानृतत्वे हेतुः फलादर्शनम्। अग्निहोत्रं जुहुयादिति विधिवाक्यम्, अस्य व्याघातः कालासम्भवेन उदितानुदितसमयाध्युषितप्रतिषेधः, न चान्यः कालो विद्यते यत्राग्निहोत्रहवनं स्यात्। उदितानुदितसमयाध्युषितवाक्यानां वा परस्परविरोधः। प्रथमोत्तमयोश्चिरभिधाने पुनरुक्तम्।

## न्यायवार्त्तिकतात्पर्यटीका

इत्युक्तम्। अधिकविवक्षया वार्तिककार आह—अग्निहोत्रमिति, होमकालानामुदितादीनां निन्दया प्रतिषेधात्। ननु मध्याह्नापराह्णसायाह्ना भविष्यन्ति होमस्य काला इत्यत आह—न चान्य इति, तेषामपि सर्वेषामुदितकालत्वादित्यर्थः। यस्तु—उदयानन्तर एव काल उदितकाल इत्युच्यते, तथा चान्योऽस्ति काल इति उक्ते व्याघाते न तुष्यति तं प्रत्यन्यथा व्याघातमाह—उदितानुदितेति। अग्निहोत्रं जुहोतीत्युत्पत्तिवाक्येन विहिते अग्निहोत्रनाम्नि होमे तदनुवादेनैकं

## वृत्तिः

शब्दस्य दृष्टादृष्टार्थकत्वेन द्वैविध्यमुक्तम्, तत्र चादृष्टार्थकशब्दस्य वेदस्य प्रामाण्यं परीक्षितुं पूर्वपक्षयति—(तदप्रामाण्यमिति)

तस्य दृष्टार्थकव्यतिरिक्तशब्दस्य वेदस्य अप्रामाण्यम्। कुतः? अनृतत्वादिदोषात्।

---

(१) 'वा'शब्दः ल-पुस्तके नास्ति।

(क) रेखामात्रोदिते सूर्ये रश्मिभिः परिदृश्यते।
उदितं तं विजानीयात् तत्र होमं प्रकल्पयेत्॥

(ख) 'उदयात् पूर्वमरुणकिरणवान् प्रविरलतारकोऽनुदितकालः' इति कुल्लूकभट्टः।

अन्यच्च— रात्रेः षोडशमे भागे ग्रहनक्षत्रभूषिते।
अनुदितं विजानीयात् तत्र होमं प्रकल्पयेत्॥ इति।

(ग) द्वौ श्वानौ श्यावशबलौ वैवस्वतकुलोद्भवौ।
ताभ्यां बलिं प्रयच्छामि स्यातामेतावहिंसकौ॥ इति वायुपुराणे १३८।३१।

(घ) 'समयाध्युषितशब्देन समुदायेनैव औषसः काल उच्यते' इति मेधातिथिः। 'सूर्यनक्षत्रवर्जितः कालः समयाध्युषितशब्देनोच्यते' इति कुल्लूकभट्टः।

प्रभातसमये जाते नष्टे नक्षत्रमण्डले।
रविर्यावन्न दृश्येत समयाध्युषितं विदुः॥

## न्यायभाष्यम्

पुनरुक्तदोषाच्च, अभ्यासे देश्यमाने "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" इति पुनरुक्तदोषो भवति। पुनरुक्तं च प्रमत्तवाक्यमिति। तस्माद् अप्रमाणं शब्दोऽनृतव्याघातपुनरुक्तदोषेभ्य इति ॥ ५७ ॥

## न्यायवार्त्तिकम्

उदाहरणं भाष्ये। दृष्टान्तत्वेनैतानि वाक्यान्युपन्यस्य एककर्तृकत्वेन(क) शेषवाक्यानामप्रमाणत्वमिति। अग्निहोत्रादिवाक्यानां वा प्रमाणत्वप्रतिषेधो वैदिकत्वेन तदन्यवाक्यवत्। पुनरुक्ततायां पूर्वमुत्तरं वा न वाच्यमेकेन प्रतीयमानत्वात् ॥ ५७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

वाक्यमुदितं कालं विधत्ते (१) अन्यच्चानुदितकालमपरं च समयाध्युषितकालम्। न चैक एव होमस्तदा तदा शक्यः कर्तुम्। न च कालगुणानुरोधेन प्रधानहोमस्याऽऽवृत्तिरिति युक्तम्। न चोदितादिवाक्ये होमस्याभ्यासः श्रूयते। तस्मात् परस्परव्याघातादप्रामाण्यमेव साधीय इति। नन्वेतेऽनृतत्वादयः सर्ववेदवाक्यान्यापिन इति भागासिद्धतया हेत्वाभासता इत्यत आह—दृष्टान्तत्वेनेति। अयमत्र प्रयोगः। पुत्रकामेष्टिहवनाभ्यासवाक्यानि अप्रमाणम् अनृतत्वादिभ्यः क्षणिकवाक्यवदिति। एवं शेषाणि वेदवाक्यानि अप्रमाणं वेदवाक्यत्वात् पुत्रकामेष्टिवाक्यवदिति। पर्युदासं साध्यमुक्त्वा तेनैव हेतुना प्रसज्यप्रतिषेधसाध्यमाह—अग्निहोत्रादिवाक्यानां वेति। तदन्यवाक्यं पुत्रकामेष्ट्यादि ॥ ५७ ॥

## वृत्तिः

तत्र च पुत्रेष्टिकारीर्यादौ क्वचित्फलानुत्पत्तिदर्शनादनृतत्वम्। व्याघातः पूर्वापरविरोधः, यथा "उदिते जुहोति, अनुदिते जुहोति, समयाध्युषिते जुहोति। श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति, शबलोऽस्याऽऽहुतिमभ्यवहरति योऽनुदिते जुहोति, श्यावशबलावस्याऽऽहुतिमभ्यवहरतो यः समयाध्युषिते जुहोति"। अत्र च उदितादिवाक्यानां निन्दानुमितानिष्टसाधनताबोधकवाक्यविरोधः। पौनरुक्त्यादप्रामाण्यम्, यथा "त्रिःप्रथमामन्वाह त्रिरुत्तमामन्वाह" इत्यत्र (ख)उत्तमत्वस्य प्रथमत्वपर्यवसानात् त्रिःकथनेन पौनरुक्त्यम्। एतेषामप्रामाण्ये तद्दृष्टान्तेन तदेककर्तृत्वेन तदेकजातीयत्वेन वा सर्ववेदाप्रामाण्यं साधनीयमिति भावः ॥ ५७ ॥

---

(१) 'अन्यथा' क।

(क) शेषवाक्यानाम् अप्रमाणत्वम् अनुमेयमित्यध्याहारेणान्वयः। तथाच उपन्यस्येति यपो नानुपपत्तिः। (ख) उत्तमत्वस्येति। अथैकस्या ऋचस्त्रिः कथनं सप्रयोजनमिति तदर्थं त्रिः प्रथमामिति वा त्रिरुत्तमामिति वा वक्तव्यम्, उभयोपादानाच्च पौनरुक्त्यमिति पूर्वपक्षी वृत्तिकृत्सम्मतः, भाष्ये तु प्रथमोत्तमयोर्भेदः पूर्वपक्षिसम्मतः त्रिः कथनादेव पौनरुक्त्यमिति विशेषः।

## (सू०)—न कर्मकर्तृसाधनवैगुण्यात् ॥ ५८ ॥

### न्यायभाष्यम्

नानृतदोषः पुत्रकामेष्टौ। कस्मात्? कर्म-कर्तृ-साधनवैगुण्यात्। इष्ट्या पितरौ संयुज्यमानौ पुत्रं जनयत इति। (१) इष्टेः करणं साधनम्, पितरौ कर्त्तारौ, संयोगः कर्म, त्रयाणां गुणयोगात् पुत्रजन्म, (२) वैगुण्याद्विपर्ययः। इष्ट्याश्रयं तावत्कर्मवैगुण्यं समीहाभ्रेषः, कर्तृवैगुण्यम् अविद्वान् प्रयोक्ता कपूयाचरणश्च।

### न्यायवार्त्तिकम्

न कर्मकर्तृसाधनवैगुण्यात्। यत्तावदनृतत्वादप्रमाणानि वेदवाक्यानि फलादर्शनादिति? तदत्र सम्प्रधार्यम्। किं फलादर्शनं वेदवाक्यानामप्रमाणत्वादाहो कर्मकर्तृसाधनवैगुण्यादिति। वयं तु (३) ब्रूमः कर्मकर्तृसाधनवैगुण्यादिति, फलादर्शनात् तु कारणानामसामर्थ्यं गम्यते। इष्टेः (ख)करणसाधनत्वेनाविरोधः—न चेयमिष्टिर्मथा साक्षात् पुत्रकारणत्वेनाभ्युपगम्यते,

### न्यायवार्त्तिकतात्पर्यटीका

एवं पूर्वपक्षमुक्त्वा सिद्धान्तमुपक्रममाणः प्रथमं तावदनृतत्वं दूषयति—

न क—ण्यात् (सू० ५८)॥ फलादर्शनमन्यथाऽप्युपपद्यमानं नानृतत्वं साधयति, ततश्चासिद्धमनृतत्वं हेतुरित्यर्थः। स्यादेतत् इष्टेश्चोदितत्वादनपेक्षेयं (क)साधयति पुत्रकारणमिति किमस्याः कर्मकर्तृवैगुण्यं करिष्यतीत्यत आह—इष्टेः करणसाधनत्वेनेति। दृष्टसहकार्यदृष्टं कारणम्, न केवलम्; ततो दृष्टवैगुण्यादुपपन्नमभवनं फलस्येत्यर्थः। अपेक्षणीयं कर्त्तारमाह—पितराविति। करणमाह—इष्ट्येति। क्रियामाह—संयुज्यमानाविति। इष्ट्याश्रयं तावदिति भाष्यम्। "समीहा" तदङ्गसमिदादिकर्मानुष्ठानं तस्या "भ्रेषो" भ्रंशोऽननुष्ठानमिति यावत्। अविद्वान्प्रयोक्तेति, विदुषो ह्यधिकारः सामर्थ्यात्। अत एव स्त्रीशूद्रतिरश्चामसमर्थानामनधिकारः। विद्वानपि यदि द्विजातिकर्महानिहेतुं कर्म ब्रह्महत्यादि कृतवान् तत्कृतमपि कर्म फलाय न

### वृत्तिः

सिद्धान्तसूत्रम्—( न कर्मेति )

न वेदाप्रामाण्यम्, कर्मकर्तृसाधनवैगुण्यात् फलाभावोपपत्तेः। कर्मणः क्रियाया वैगुण्यम्

---

(१) 'इष्टिः' ल-ग-झा०। (२) अयमंशः टि-पुस्तके नास्ति। (३) 'ब्रूमः न कर्म-' ख।

(क) अत्र 'साधयति पुत्रकारण'मिति पदयोरेकं टीकाकृदुक्तमपरञ्च तद्व्याख्यानं प्रमादाद् ग्रन्थेऽन्तर्भूतमिति सम्भाव्यते। अत एव ख-पुस्तके ( साधयति ) इति सचिह्नं मुद्रितम्। (ख) 'कारणसाधनत्वाविरोधः' इति क, 'करणसाधनत्वाद्विरोधः' इति ख०। स्वपदवर्णनानुसारेण 'कारणसाधनत्वेन' इत्येव पाठः सम्भाव्यते। मुद्रिताकारस्तु तात्पर्यानुयायी।

## न्यायभाष्यम्

साधन(२*)वैगुण्यं हविरसंस्कृतमुपहतमिति, मन्त्रा न्यूनाधिकाः स्वरवर्णहीना इति, दक्षिणा दुरागता हीना निन्दिता चेति। अथोपजनाश्रयं कर्मवैगुण्यं मिथ्यासम्प्रयोगः, कर्तृवैगुण्यं योनिव्यापदो बीजोपघातश्चेति। साधनवैगुण्यम् इष्टावभिहितम्। लोके च "अग्निकामो दारुणी मथ्नीयात्" इति विधिवाक्यम्, तत्र कर्मवैगुण्यं मिथ्याभिमन्थनम्, कर्तृवैगुण्यं प्रज्ञाप्रयत्नतः प्रमादः, साधनवैगुण्यम् आर्द्रं सुषिरं दार्विति, तत्र फलं न निष्पद्यत इति नानृतदोषः, गुणयोगेन फलनिष्पत्तिदर्शनात्। न चेदं लौकिकाद्भिद्यते 'पुत्रकामः पुत्रेष्ट्या यजेत" इति ॥ ५८ ॥

## न्यायवार्त्तिकम्

अपि तु पितराविष्ट्या संप्रयुज्यमानौ पुत्रं जनयत इति। तत्र न ज्ञायते किं पित्रोरसाद्गुण्यात् पुत्रजन्म न भवति, आहोस्विदिष्टेरसाद्गुण्यादिति। मन्त्राश्चेष्टिसाधनत्वेन प्रयुज्यमाना इष्ट्यङ्गं भवन्ति। तत्रापि न ज्ञायते किमिष्टिर्मन्त्राणां वैगुण्यान्न सम्पन्ना आहो दर्भेन्धनादेः कारणस्य वैगुण्यादिति—यथैव (१) मन्त्राणां न्यूनाधिकभावेन प्रयुज्यमानानामिष्टिर्न निर्वर्त्तते तथा दर्भेध्मादेरपि साधनस्य वैगुण्यादिति।

न केवलं साधनवैगुण्यादेवेष्टेरनभिनिर्वृत्तिः, तथेष्टेः साधयितुः कर्मणश्चासाद्गुण्यादिति। उपेत्येष्टिसरूपदं न केवलैवेष्टिः कारणमित्युक्तम्। तत्र पुत्रजन्मादर्शनेन न युक्तं मनुष्यधर्मणो वक्तुम्—मन्त्राणामसामर्थ्यात् पुत्राद्युत्पत्तिरिति। उभयथा दृष्टत्वात् सन्देह इति

## न्यायवार्त्तिकतात्पर्यटीका

कल्पते कर्तृत्वे वैगुण्यादिति दर्शयति—कृपूयेति। कपूयं निन्दितं कर्म, (ख)आचरतीत्याचरणः पुरुषः। हविः असंस्कृतम् अपूतमप्रोक्षितं वा। उपहतं श्वमार्जारादिभिः। मन्त्रा न्यूनाः क्रमविशेषेण। दक्षिणा दुरागता द्यौत्यद्यूतोत्कोचादेर्दुष्टादुपायादागतेत्यर्थः। (ग)अन्वाहार्यमिह दक्षिणा। सा ततो न्यूना वा दीयते यावत्या पुरुषो न तृप्यति। स च पुरुषाहारो (घ)जरत्वरत्वेनापाक्यतया निन्दितः। मिथ्यासंप्रयोगः पुरुषायितादि, मातरि योनिव्यापदो नानाविधाः (ङ)पुत्रजनप्रतिबन्धहेतवः। लोहितरेतसो बीजस्योपघात उपहतत्वम्, यतः पुत्रजन्म न भवति। मिथ्याभिमन्थनं यतो नाग्निर्जायते।

कर्मवैगुण्यकर्तृवैगुण्ये आह वार्त्तिककारः—तथेष्टेः साधयितुरिति। मन्त्राणामसामर्थ्या-

---

(१) 'न्यूनाधिकभावे' इति ख०।

(क) प्रयुज्यमानानां मन्त्राणां न्यूनाधिकभावेनेत्यन्वयः। न्यूनाधिकभावेन प्रयुज्यमानानामित्यन्वये तु वैषम्यादिति सम्बन्धनीयम्। (ख) अत्र 'आचरतीति कपूयाचरण' इति पाठः शोभनः।

(ग) यच्च श्राद्धं कर्मणामादौ या चान्ते दक्षिणा भवेत्।
अमावास्यां द्वितीयं यदन्वाहार्यं विदुर्बुधाः॥ इति कर्मप्रदीपः।

(घ) अत्र जरत्तरत्वेनेति पाठः सम्भाव्यते। (ङ) जनशब्दोऽत्र जन्मार्थः 'पुत्रजननप्रतिबन्धहेतव' इति वा पाठः।

## न्यायवार्त्तिकम्

चेत्; न, अभ्युपेतहानेः—अथ मन्यसे त्रिकारणं पुत्रजन्म, तत्रान्यतरकारणवैकल्यात् पुत्रो न भवतीति कारणवैकल्यं गम्यते; तत्र यथैव पित्रोर्वैगुण्यात् पुत्रानुत्पत्तिस्तथा मन्त्राणामप्रमाणत्वादिति सन्दिह्यते। नाभ्युपेतहानेः—पूर्वं भवताऽभ्यधायि वेदोऽप्रमाणमिति, अधुना त्वभिधीयते सन्दिग्धं प्रमाणत्वमिति, एवं ब्रुवता पूर्वो वादस्त्यक्तो भवति। समानमिति चेत्—अथ मन्यसे समानमेतद्भवतोऽपि किं पित्रोर्वैगुण्यात् पुत्राजन्म वेदवाक्यानामप्रामाण्याद्वेति सन्दिह्यते। नासाधनात्—न मयैतत् साध्यते वेदवाक्यानि प्रमाणमप्रमाणं वेति, भवता तु साध्यते। तत्र मया भवतः साधनान्यतरवैकल्यात् (१) पुत्त्रजन्म न भवतीति सन्दिग्धो हेतुरुपदिश्यते। तत्सहकारित्वाच्चोपदेशो दारुमथनवदिति नेयमिष्टिः साक्षात्कारणत्वेन पुत्त्रजन्मन उपदिश्यते, अपि तु 'पुत्त्रकाम इष्टिं कुर्वीत' इति, यथा अग्निकामो दारुणी मथ्नीयादित्युपदेशः तत्र कर्तृकर्मणोर्वैगुण्यादग्निर्न भवतीति नोपदेशवैयर्थ्यं तथेहापीत्यदोषः। सामस्त्ये फलनिष्पत्तिदर्शनाच्च—यत्र समस्तानि कारणानि तत्र फलाभिनिर्वृत्तिर्दृष्टेत्यदोषः। यच्चेदं वाक्यं "तदप्रामाण्यमनृतव्याघातपुनरुक्तदोषेभ्य" इति, तदपि वेदवाक्यस्य पक्षीकृतत्वादव्यापकम्(क)। अथ यान्येवंधर्मकाणि वाक्यानि तानि पक्षीक्रियन्ते, तेष्वप्येषां धर्माणां विशेषणत्वेनोपयुक्तत्वादप्रामाण्यप्रतिपादको हेतुर्वक्तव्यः। अनृतत्वादप्रामाण्यमिति चेत्? किमिदमनृतत्वं नाम?

## न्यायवार्त्तिकतात्पर्यटीका

दिति। मन्त्रादिसाधनानां पुत्रकामेष्ट्यादीनां कर्मणामित्यर्थः। ननु यदि निरपेक्षा नेष्टिः साधनं(ख) तास्तर्ह्यनपेक्षमाणौ पितरावेव सम्यक् संयुज्यमानौ पुत्रस्य जनकौ, कृतमत्र पुत्रकामेष्ट्या; अत एव म्लेच्छादीनामपि पुत्रजन्मोपपद्यत इत्यत आह—तत्सहकारित्वादिति। नान्वयव्यतिरेकगम्यमिष्टेः सहकारित्वम् अपि त्वागमगम्यम्, म्लेच्छादीनां पुत्रजन्म जन्मान्तरीयादृष्टवशादित्यागमप्रामाण्यादनुसरणीयम्। दृश्यमानकर्मकर्तृवैगुण्ये च फलानुत्पादोऽदृष्टमपेक्षणीयं सूचयति। तदनेन पुत्रकामेष्ट्यादीनामनियतफलत्वमपि सूचितं भवति। तथा कर्मान्तरप्रतिबन्धेन कर्मकर्तृसाधनावैगुण्येऽपि फलानुत्पादः समर्थितो भवति। ऐहिकफलेषु तु कारीर्यादिषु साधनवैगुण्यं परिहारः। (२)अनृतत्वादप्रामाण्यमिति चेदिति। धर्मिविशेषणत्वेनोपयुक्तानामपि पश्चान्निष्कृष्याभि-

## वृत्तिः

अयथाविधित्वादि। कर्तुर्वैगुण्यम् अविद्वत्त्वादि, साधनस्य हविरादेर्वैगुण्यम् अप्रोक्षितत्वादि। यथोक्तकर्मणः फलाभावे ह्यनृतत्वम्, न चैवमस्तीति भावः ॥ ५८ ॥

---

(१) 'पुत्राजन्म' इति क०। (२) 'अनृतत्वादप्रमाणमिति चेत्' क-ख०।

(क) वेदवाक्यमात्रस्य पक्षत्वेन तदेकदेशे अनृतत्वायसिद्धेर्भागासिद्धिरिति भावः। (ख) 'तां तर्हि' इति युक्तम्।

## (सू०)—अभ्युपेत्य कालभेदे दोषवचनात् ॥ ५६ ॥

### न्यायभाष्यम्

न व्याघातो हवन इत्यनुवर्त्तते। योऽभ्युपगतं हवनकालं भिनत्ति ततोऽन्यत्र जुहोति (१)तत्रायमभ्युपगतकालभेदे दोष उच्यते "श्यावोऽस्याऽऽहुतिमभ्यवहरति य उदिते जुहोति"। तदिदं विधिभ्रेषे निन्दावचनमिति ॥ ५६ ॥

### न्यायवार्त्तिकम्

(२)यद्ययथार्थाभिधानम्, (३)नन्वयमेव प्रतिज्ञार्थोऽप्रमाणमिति। (४)अनृतत्वं चासिद्ध-(५)मित्युक्तमेतत् ॥ ९८ ॥

यत् पुनरेतत्—व्याघातदोषादिति—

अभ्युपेत्य कालभेदे दोषवचनात् न व्याघातः। अग्न्याधानकाल एवायं नियमपरिग्रहः—'उदिते होतव्यमनुदिते होतव्यं समयाध्युषिते होतव्यमि'ति। सोऽयमभ्युपेत्य कालं यदाऽतिक्रामति तदाऽभ्युपेतकालातिक्रमान्निन्द्यते निन्दावचनेन। न च व्याघातः उभयप्रतिषेधानभिधानात् नेदमन्यथा—यदि पुनरेतदुभयप्रतिषेधाभिधानं स्यात् भवेदयं प्रसङ्गो व्याघात इति, न पुनरेतानि प्रतिषेधवाक्यानि उदिते होतव्यमित्येवमादीनि, तस्मादप्रसङ्गोऽयमिति। अथ पुनरेतानि वाक्यानि होमविधेः प्रतिषेधकानि स्युः, तदोदितादिग्रहणं व्यर्थम्; एवं हि वक्तव्यम्—अग्निहोत्रं जुहुयादिति यद्वाक्यं तन्न कर्तव्यमिति। एवं च सङ्गतार्थता—यथैतद् व्याख्यानमेवं पूर्वोत्तरे वाक्ये

### न्यायवार्त्तिकतात्पर्यटीका

धानं न दोषावहमिति भावः। उत्तरम्—किमिदमिति। नन्वर्थाप्रतिपादकत्वं (६)प्रतिज्ञातम् एतदेवानृतत्वं च हेतुरिति (क)प्रतिज्ञाहेत्वोरर्थभेद इत्यत आह—अनृतत्वं चेति ॥९८॥

अभ्यु—नात् (सू० ५६) ॥ यत्पुनरुक्तम् (ख) उदिते होतव्यमित्यादीनामेव परस्परव्याघात इति तत्राऽऽह—उभयेति। त्रिषु कालविधिपरेषु वाक्येष्वेकैकेनैव वाक्येनोभयोभयवाक्यार्थप्रतिषेधानभिधानात् नान्यथा नाप्रामाण्यमित्यर्थः। यद्यपि चैको होमः समुच्चयेन तदा न शक्यः कर्तुं तथाऽपि विकल्पेन करिष्यते बहुलं हि विकल्पो लोकेऽप्युपलभ्यते। वस्तु हि व्यवस्थितं न विकल्प्यते अनुष्ठाने चानागतोत्पाद्ये विधि-प्रतिषेध-विकल्पानामविरोधः

---

(१) 'तस्यायम्' इति टि०। (२) 'यद्ययथाऽतथाभूतार्थाभिधानम्' ख। (३) 'न त्वयमेव' ख। (४) 'अनृतत्वं वा' इत्यादग्रंथोः पाठः। (५) '-मित्ययुक्तमेतत्' ख। (६) 'प्रतिज्ञा तदेवानृतत्वं' क।

(क) अत्र प्रतिज्ञाहेत्वोरर्थभेद इति पाठः समीचीनः। (ख) ५४८ अङ्कितपत्रे वार्त्तिकं द्रष्टव्यम्।

## (सू०)—अनुवादोपपत्तेश्च ॥ ६० ॥

### न्यायभाष्यम्

पुनरुक्तदोषोऽभ्यासे नेति प्रकृतम्। अनर्थकोऽभ्यासः पुनरुक्तम्, अर्थवानभ्यासोऽनुवादः। योऽयमभ्यासः "त्रिः प्रथमामन्वाह त्रिरुत्तमाम्" (तै० स० २य-काण्डे ५म प्र०) इत्यनुवाद उपपद्यते अर्थवत्त्वात्। त्रिर्वचनेन हि प्रथमोत्तमयोः पञ्च-

### न्यायवार्त्तिकम्

सज्जते भवतः हवनमनूद्य कालविशेषविधानादिति। एवमेतत् न पुनर्यथाऽस्माभिर्व्याघातोऽभिधीयत इति नियमहेतुर्वक्तव्यः। इदमेवोदितादिवाक्यं नियमहेतुः। कथमिति? इदं (१) पुनर्वाक्यं कामतो वा (२) प्रकल्प्येत अभिहितं वाऽनद्यत इति। अभिहितानुवादो न्याय्यः, तत्र हि प्रमाणानामविसंवादादिति न व्याघात इति ॥ ५९ ॥

यत्पुनरेतत्—पुनरुक्तदोषात्

अनुवादोपपत्तेश्च। न पुनरुक्तदोषः अनुवादोपपत्तेः। पुनरुक्तं नाम तस्यैवार्थस्यानङ्गीकृत-विशेषस्य सतः पुनर्वचनम्, अनुवादस्तु पुनःश्रुतिसामर्थ्यादङ्गीकृतविशेषस्यार्थस्य वादः। एवं

### न्यायवार्त्तिकतात्पर्यटीका

स्वरूपानिष्पत्तेरिति। वाक्यार्थो न कर्त्तव्य इति वाक्यं तत्र (३)कर्त्तव्यमित्यस्यार्थः। कामतो वा प्रकल्प्येतेति। परस्परव्याहतार्थं प्रकल्प्येतेत्यर्थः। अभिहितं वेति, यदनेन वाक्येन स्वसामर्थ्येनाभिहितं तद्वा परीक्षकैरवधृत्यानूद्यते इदमनेन वाक्येनाभिहितमिति। निर्द्धारयति—अभिहितेति। विहितानुवादो वेति क्वचित्पाठः, विहितो होमस्तस्यानुवादः कालविशेषविधाना-येति। विहितानुवाद एव न्याय्यः कालविशेषविधानाय न तु कालान्तरप्रतिषेधोऽर्थः कल्प्यत इत्यर्थः॥ ५९ ॥

अनु—श्च (सू० ६०) ॥ एकादश सामिधेन्य उत्पत्तौ पठितास्तासां प्रथमोत्तमयोस्त्रिर्वचनं (क) पञ्चदशावरत्वं मन्त्रस्य प्रयोजनवतः साधयत्सप्रयोजनमिति ॥

### वृत्तिः

व्याघातं परिहरति—( अभ्युपेत्येति )

न व्याघात इति शेषः। अग्न्याधानकाले उदितहोमादिकमभ्युपेत्य स्वीकृत्य अनुदितहोमादिकरणे पूर्वोक्तदोषकथनान्न व्याघात इत्यर्थः॥ ५९ ॥

---

(१) 'पुनर्वाक्यं ( तावद्वक्तव्यम् )' इति क-वार्त्तिके मुद्रितम्। (२) आदर्शयोः 'प्र' शब्दो नास्ति। (३) 'कर्त्तव्यमित्यर्थः' क।

(क) अत्र क्वचिन्मुद्रितं पञ्चदशारत्नमित्ययुक्तः पाठः। व० सा० प० प्र० न्यायदर्शने २यखण्डे ३२४ स० पत्रं द्रष्टव्यम्।

## न्यायभाष्यम्

दशत्वं सामिधेनीनां भवति (क)। तथा च मन्त्राभिवादः "इदमहं भ्रातृव्यं पञ्चदशावरेण (१) वाग्वज्रेणाववाधे योऽस्मान् द्वेष्टि यं च वयं द्विष्म" इति (ख) पञ्चदश (ग) सामिधेनी (२) र्वज्रमन्त्रोऽभिवदति तदभ्यासमन्तरेण न स्यादिति ॥ ६० ॥

## न्यायवार्त्तिकम्

सति यथोक्तो न दोषः। उदाहरणं भाष्ये। पुत्रकामेष्टिवाक्यानि प्रमा वेदैकदेशत्वात् "भूमिरावपनं मह"दिति वाक्यवत्। इतश्च पदादिनियमात् "द्वादश मासाः संवत्सर" इति वाक्यवत्। इतश्च कर्तृविशेषाभिहितत्वात् "अग्निर्हिमस्य भेषज" मिति वाक्यवत् ॥ ६० ॥

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं वेदाप्रामाण्यहेतूनुद्धृत्य प्रामाण्यसंभवहेतुः सूत्रकारेण वक्तव्य इति पूर्वं वार्त्तिककारः स्वत एव तावत्प्रामाण्यसंभवहेतूनाह—पुत्रकामेष्टीति ॥ ६० ॥

## वृत्तिः

पौनरुक्त्यं परिहरति—( अनुवादोपेति )

चः पुनरर्थे। अनुवादोपपत्तेः पुनर्न पौनरुक्त्यम्। निष्प्रयोजनत्वे हि पौनरुक्त्यं दोषः, उक्तस्थले तु अनुवादस्योपपत्तेः प्रयोजनस्य सम्भवाद्। एकादशसामिधेनीनां

---

(१) 'वाग्वज्रेणापबाधे' इति फ०, 'वाग्वज्रेण बबाधे' इति टि, 'वज्रेण बाधे' ल-ग-ज० भा०।

(२) '-वज्रं मन्त्रो' ल-भा-ज०।

(क) अयमर्थः 'अभ्यासेन तु संख्यापूरणं सामिधेनीष्वभ्यासप्रकृतित्वात्' (जै० सू० २७, ५ पा, १० अ०) इत्यत्र शबरस्वामिभिरप्युक्तः। तथाच 'प्रकृतौ अभ्यासेन संख्या पूरिता त्रिःप्रथमामन्वाह त्रिरुत्तमामिति। कथम्? पञ्चदशसामिधेन्य इति श्रुतिः, एकादश च समाम्नाताः, तत्राभ्यासेनाऽऽगमेन वा संख्यायां पूरयितव्यायामभ्यास उक्तः—'त्रिःप्रथमामन्वाह त्रिरुत्तमामिति। अनेन नियमेन—प्रथमोत्तरयोरभ्यासः कर्त्तव्य इति। यावत्कृत्वस्तयोरभ्यासे क्रियमाणे पञ्चदशसंख्या पूर्येत तावत्कृत्वोऽभ्यसितव्यमित्येतदभिप्रायं त्रित्वम्' इति भाष्यम्।

(ख) पञ्चदशेति। 'ताः पञ्चदश सामिधेन्यः सम्पद्यन्ते। पञ्चदशो वै वज्रो वीर्यं वज्रो वीर्यमेवैतत् सामिधेनीरभिसम्पादयति तस्मादेतास्वनूच्यमानासु यं द्विष्यात् तमङ्गुष्ठाभ्यामवबाधेत इदमहममुमवबाध इति तदेनमेतेन वज्रेणावबाधते' इति शतपथब्राह्मणम् [१ का० ३ अ० ५ ब्रा०]।

(ग) सामिधेनीति। 'समिन्धे सामिधेनीभिर्होता तस्मात् सामिधेन्यो नाम' इति शतपथब्राह्मणम् १ का० ३ अ० ५ ब्रा०। 'होता च सामिधेनीभिः 'प्रवोवाजा' इत्यादिभिरृग्भिरग्निं समिन्धे, अतः समिन्धनसाधनत्वात् तासामपि सामिधेन्य इति नाम निष्पन्नम्' इति सायणाचार्याः।

'समिधामाधाने षेण्यण्' इति कात्यायनीयवार्त्तिकसूत्रव्याख्याने तत्त्वबोधिनीकारैरपि 'यया ऋचा समिदाधीयते सा सामिधेनीत्यर्थः। प्रवोवाजा अभिद्यव' इत्याद्याः 'आजुहोता दुवस्यत' इत्यन्ताः सामिधेन्य इति व्यवह्रियन्ते इति व्युत्पादितम्।

## ( सू० ) वाक्यविभागस्य चार्थग्रहणात् ॥ ६१ ॥

### न्यायभाष्यम्

प्रमाणं शब्दो यथा लोके ॥ ६१ ॥

विभागश्च ब्राह्मणवाक्यानां त्रिविधः—

## ( सू० ) विध्यर्थवादानुवादवचनविनियोगात् ॥ ६२ ॥

( भा० ) त्रिधा खलु ब्राह्मणवाक्यानि विनियुक्तानि—विधिवचनान्यर्थवाद-वचनान्यनुवादवचनानीति ॥ ६२ ॥

### न्यायवार्त्तिकम्

वाक्यविभागस्य चार्थग्रहणात् । समस्तानि वा वेदवाक्यानि पक्षीकृत्याभिधीयन्ते—प्रमाणं वेदवाक्यानि अर्थविभागवत्त्वात् मन्वादिवाक्यवत्—यथा मन्वादिवाक्यान्यर्थविभागवन्ति, अर्थविभागवत्त्वे सति प्रामाण्यम्, तथा च वेदवाक्यान्यर्थविभागवन्ति तस्मात् प्रमाण-मिति ॥ ६१ ॥

विभागश्च त्रिविधो भवति—

विध्यर्थवादानुवादवचनविनियोगात् । त्रिधा खलु ब्राह्मणवाक्यानि भवन्ति—विधि-वचनानि, अनुवादवचनानि, अर्थवादवचनानि च ॥ ६२ ॥

### न्यायवार्त्तिकतात्पर्यटीका

वाक्य—णात् ( सू० ६१ ) । सौत्रं हेतुमवतारयति—समस्तानीति ॥ ६१ ॥

विध्य—गात् ( सू० ६२ ) (क) ।

### वृत्तिः

प्रथमोत्तमयोस्त्रिरभिधाने हि पञ्चदशत्वं सम्भवति । तथा च पञ्चदशत्वं श्रूयते (ख)"इममहं भ्रातृव्यं पञ्चदशावरेण वाग्वज्रेण (ग)च बाधे, योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः" इति ॥ ६० ॥

अनुवादस्य सार्थकत्वं लोकसिद्धमित्याह—( वाक्येति )

वाक्यविभागस्य अनुवादत्वेन विभक्तवाक्यस्य अर्थग्रहणात् प्रयोजनस्वीकारात्, शिष्टै-रिति शेषः । शिष्टा हि विधायकानुवादकभेदेन वाक्यं विभज्यानुवादकस्यापि सप्रयो-जनत्वं मन्यन्ते, वेदेऽप्येवमिति भावः ॥ ६१ ॥

वेदे वाक्यविभागं दर्शयति—(विध्यर्थेति)

मन्त्रब्राह्मणभेदाद् द्विविधो वेदः, तत्र ब्राह्मणस्यायं विभागः, विधिवचनत्वेनार्थवाद-वचनत्वेनानुवादवचनत्वेन च वेदस्य विनियोगाद् विभजनात् ।

(क) द्वाषष्टितमसूत्रस्य तात्पर्यटीका नोपलभ्यते । (ख) भाष्ये तु 'इदमहं'मिति पाठभेदः । (ग) भाष्ये 'च'कारो नास्ति ।

## न्यायभाष्यम्

तत्र—

### (सू०)—विधिर्विधायकः ॥ ६३ ॥

यद्वाक्यं विधायकं चोदकं स विधिः। विधिस्तु नियोगोऽनुज्ञा वा। यथा "अग्निहोत्रं जुहुयात् स्वर्गकामः" इत्यादि ॥ ६३ ॥

## न्यायवार्त्तिकम्

तत्र—

विधिर्विधायकः। यद्वाक्यं विधायकं देशकं स विधिः।

## न्यायवार्त्तिकतात्पर्यटीका

विधिर्विधायकः ( सू० ६३ ) ॥ तस्य व्याख्यानं यद्वाक्यमिति। चोदकं प्रवर्त्तकम्। अत्र चाऽऽरोग्यकामः पथ्यमश्नीयादित्याद्युपदेशश्रवणसमनन्तरं पथ्याशने प्रवर्त्तमानं प्रयोज्यवृद्धमुपलभ्य बालस्तस्य प्रवृत्तिहेतुं प्रत्ययमनुमिमीते—अस्य प्रवृत्तिः प्रवर्त्तकप्रत्ययपूर्विका स्वतन्त्रप्रवृत्तित्वात् मत्प्रवृत्तिवत्; स चायमनुमाता व्युत्पित्सुः स्वात्मसिद्धमेव प्रवर्त्तकज्ञानमनुमिनोति नादृष्टपूर्वम्। न हि स्वात्मनि पूर्वसिद्धे प्रवृत्तिहेतौ दृष्टे संभवत्यदृष्टकल्पना न्याय्या। न चैष शब्दतद्व्यापारपुरुषाशयनिरुपाधिप्रवर्तकमात्रापूर्वप्रत्ययानात्मनि प्रवर्तकानवगतवान्, येन तेषु प्रवर्तकत्वशङ्काऽप्यवतरेत्। स्तन्यपानादिविषयककार्यप्रत्ययोऽस्य प्रवर्तक इति चेत् किं पुनरेतत्कार्यमिति। पुरुषप्रयत्नः कृतिस्तद्व्याप्यत्वमिति चेत् ननु कृतिरिति मानसी प्रवृत्तिः, तदुपहितं कार्यं प्रवृत्तिविषयः प्रवृत्तिफलं वा फलोद्देशेन पुरुषप्रवृत्तेः, तदवगमः प्रवृत्तिहेतुः। प्रवृत्त्यवगतिस्तर्हि प्रवृत्तिहेतुरित्युक्तं भवति। (क) न चाननुविधेयोऽश्रद्धेयः, न वाऽननुविधेयनियोगेष्वस्माकं व्युत्पन्नानां नास्ति प्रवृत्त्यवगमः, न चास्मात्प्रवर्त्तेमहि। अपि चेयं प्रवृत्तिः प्रयत्नापरनामा इच्छाद्वेषयोनिरसति कारणे न स्वज्ञानमात्रादुदेतुमर्हति। न चेच्छाद्वेषावेव प्रवृत्तिहेतू (१)लिङादिगोचराविति सांप्रतम्, तत् खलु (२)लिङादिगोचरोऽभ्युपेयः यत् स्वज्ञानेन प्रवर्तयति न तु स्वसत्तया, शब्दस्य ज्ञापकत्वादनुत्पादकत्वाच्च। न चेच्छाद्वेषौ स्वज्ञानेन प्रवर्त्तयतो यतः प्रवृत्तिं प्रति ज्ञानाय शब्दमपेक्षेयाताम्, अपि तु सत्तया; तस्मात्तदेव लिङादेर्ज्ञाप्यम्। सत्यम्, ज्ञानमिच्छाद्वेषौ प्रसूते, तत्र फलं निसर्गसुन्दरतया ज्ञातमात्मनीच्छां प्रसूते, एवं तदुपायोऽपि तत्तया ज्ञातः फलसंबन्धादात्मनीच्छाम्; तस्माद् द्वयमवशिष्यते फलं तदुपायो वा। तत्र फलस्य यद्यपि स्वत एवेच्छादिविषयत्वं तथाऽपि तद्विषयेच्छा न तत्र प्रवर्त्तयितुमर्हति तस्यायोग्यत्वेन प्रवृत्ति-

## वृत्तिः

अथवा विनियोगाद् भेदाद्। तथा च विध्यादिभेदाद् ब्राह्मणभागस्त्रिधेति शेषः ॥ ६२ ॥

---

(१) 'लिङादि' इति क। (२) 'लिङादि' इति क।
(क) ख-तात्पर्ये (नचा ननु विधेयोऽश्रद्धेयः) । इति सचिह्नं मुद्रितम्, क-पुस्तके तु 'नानुविधेय' इति पाठः।

### न्यायवार्त्तिकतात्पर्यटीका

विषयत्वानुपपत्तेः। न च फलगोचरेच्छा (क)अन्यच तदुपाये स्वकार्यं प्रयत्नं जनयितुमर्हति (ख) इच्छाप्रयत्नयोरेकविषयतया कार्यकारणयोः संप्रतिपत्तेः। न च तत्सम्बन्धात्तदुपायो नेष्यते येन फलेच्छाया एवोपायविषयप्रयत्नप्रसवहेतुत्वं कल्प्येत। यथाहुः—

अन्यदिच्छत्यन्यत्करोतीति विप्रतिषिद्धमिति।

तस्मादिष्यमाणमपि फलं प्रवृत्तिविषयत्वाभावान्नाऽऽत्मनि स्वज्ञानेन प्रवर्तकं तदुपायस्तु प्रवृत्तिविषयत्वादिष्यमाणत्वाच्च स्वज्ञानेन प्रवर्त्तक इति युक्तमुत्पश्यामः। बालानां तु स्तन्यादावपेक्षितोपायताज्ञानं प्राग्भवीयव्याप्तिग्रहणजनितसंस्कारानुवृत्तिवशादुत्पन्नव्याप्तिस्मरणानां तज्जातीयत्वलिङ्गज्ञानजमनुमानमेव। एतच्च 'पूर्वाभ्यस्तस्मृत्यनुबन्धात्'-(सू० १८, आ१, अ३) इत्यत्रोपपादयिष्यते। अत एव प्रयोजनलक्षणं व्याचक्षाणेनोक्तं वार्त्तिककृता—

(ग) इदं सुखसाधनमिति बुद्ध्वा सुखावाप्तये यतते इदं दुःखसाधनमिति चावगम्य दुःखहानायेति। तस्मादपेक्षितोपायता प्रवर्त्तना स्वात्मनि सिद्धा वृद्धस्यापि प्रवृत्तिहेतुरित्यवगच्छति व्युत्पित्सुर्बालः। सा च लिङादिश्रवणसमनन्तरमुपजायमाना लिङाद्यर्थ इति निश्चिनोति। न चापेक्षितोपायतामात्रं प्रवृत्तिहेतुः भवति हि यजमाननिर्वर्तिता कारीरी कृषीवलानामपेक्षितोपायो न चैतेऽस्यां प्रवर्त्तन्ते तस्याः सिद्धत्वात्। तस्मात् कर्त्तुरपेक्षितोपायता प्रवृत्तिहेतुरित्यास्थेयम्। न च सिद्धे कर्तृताऽस्ति। यथाह भगवान् जैमिनिः—

'शास्त्रफलं प्रयोक्तरि तल्लक्षणत्वात्' इति, लोके च क्रियैवापेक्षितोपायः शब्दार्थ इति तदनुसारेण 'अग्निहोत्रं जुहुयात् स्वर्गकाम' इत्यादयोऽपि वैदिका उपदेशाः क्रियामेवापेक्षितोपायमभिदधति। सा चेयमाशुतरविनाशिन्यप्यवान्तरापूर्वव्यापारा सती चिरभाविनेऽपि फलाय कल्पते कृषिरिव निदाघसमयजन्मा हेमन्तसमयभाविने शस्यायेति नापूर्वस्यात्रापेक्षितोपायत्वं कल्पयितव्यम्। भवतु वा तदेवापेक्षितोपायप्रवृत्तिहेतुः, तथापि कर्त्तुरपेक्षितोपायतालक्षणसमानोपाधिर्विधिशब्दस्तदेकोपाधिसंबन्धात् क्वचित्क्रियायां क्वचिदपूर्वे प्रवर्तत इति न काचिद्दर्शनक्षतिः। तदेवमुपदेशे नियोज्यप्रयोजनकर्मणि व्युत्पन्नस्तानेव शब्दान् नियोक्तुं प्रयोजनकर्मण्याज्ञादौ प्रयुज्यमानानुपलभ्याध्येषणानुज्ञावाचकत्वमप्यवगच्छति। अग्निहोत्रादिवाक्यानां तु नियोज्यप्रयोजनकर्मवाचिनामुपदेशत्वमेव। तस्माद् यद्यप्याज्ञा-

### वृत्तिः

तत्र विधिलक्षणमाह—( विधिरिति )

इष्टसाधनताबोधकप्रत्ययसमभिव्याहृतं वाक्यं विधिः(घ)। "अग्निहोत्रं जुहुयात् स्वर्गकामः" इति ॥ ६३ ॥

---

(क) 'अन्यत्र' इति पाठो युक्तः। (ख) 'इति प्रयत्नयो'रित्यादर्शपुस्तकयोः पाठः प्रामादिकः। (ग) २५७ पत्रे मुद्रितमिदम् अक्षरभेदस्तु तत्र वर्त्तते इति द्रष्टव्यम्। (घ) मीमांसकास्तु उत्पत्तिविधिरधिकारविधिर्विनियोगविधिः प्रयोगविधिरिति विधेश्चातुर्विध्यमभ्युपगच्छन्ति।

## ( सू० ) स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः ॥६४॥

### न्यायभाष्यम्

विधेः फलवादलक्षणा या प्रशंसा सा स्तुतिः (१) सम्प्रत्ययार्था, स्तूयमानं श्रद्दधीतेति, प्रवर्तिका च, फलश्रवणात् प्रवर्त्तते—"सर्वजिता वै देवाः सर्वमजयन् सर्वस्याप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति" इत्येवमादि। (ताण्ड्य-ब्राह्मणम् १६।७।२) अनिष्टफलवादो निन्दा (२) वर्जनार्था निन्दितं न समाचरेदिति

### न्यायवार्त्तिकम्

विधिस्तु नियोगोऽनुज्ञा वा—यद्वाक्यं विधत्ते इदं कुर्यादिति स नियोगः। अनुज्ञा तु—यत् कर्त्तारमनुजानाति तदनुज्ञावाक्यम्, यथाऽग्निहोत्रवाक्यमेवैतत् साधनावाप्तिप्रवृत्ति-पूर्वकत्वमनुजानाति ॥ ६३ ॥

स्तुतिर्निन्दा परकृतिः पुराकल्प इत्यर्थवादः। एषामुदाहरणानि भाष्ये ॥ ६४ ॥

### न्यायवार्त्तिकतात्पर्यटीका

ध्येषणामन्त्रणोपदेशाः सर्वे विधयस्तथाऽपीहोपदेशो विधिरभिमतः। तस्मात् सूक्तम्—यद्वाक्यं विधायकमिति, कर्त्रपेक्षितोपायताज्ञापकमित्यर्थः।

विधिस्तु नियोगोऽनुज्ञा वेति भाष्यमनुभाष्य व्याचष्टे—विधिस्त्विति। यदेतद् अग्निहोत्रं जुहुयात् स्वर्गकाम इति वाक्यमप्रवृत्तप्रवर्त्तकलक्षणं कर्त्रपेक्षितोपायतां ज्ञापयद्विधिः तदेव तत्साधन-द्रव्याद्यवाप्तिप्रवृत्तिमनुजानाति। एतदुक्तं भवति—ये हि द्रव्यार्जननियमविधयः 'ब्राह्मणस्य प्रतिग्रहादि'इत्येवमादयः ते च रागतो धनार्जने प्रवृत्तानां ब्राह्मणानां लौकिकानेकोपायप्रयुक्तौ सत्यां नियमपराः पुरुषार्थाः न क्रत्वर्थाः, क्रतुविधयस्तु धनसाधनास्तेऽनूदिताः पर्यवस्यन्तोऽपि न धनार्जनं तन्नियमं वा प्रयुञ्जते पुरुषार्थत्वेनैव तस्य प्रयुक्तत्वात्, केवलमनुजानन्ति। तस्मात् तदेवाग्निहोत्रादिवाक्यमप्राप्तेऽग्निहोत्रादौ विधिरन्यतः प्राप्ते तत्साधनेऽनुज्ञेति सिद्धम्। समुच्चये वाशब्दः ॥ ६३ ॥

स्तुति—दः (सू० ६४) ॥ स्तुतेरुपयोगद्वयं प्रवृत्त्या धर्मे कर्त्तव्ये विधिना प्रवृत्तौ कर्त्तव्यायां च सहकारिता। प्रशस्तमिति ज्ञात्वा प्रवर्त्तमानाः पुमांसः प्रवर्त्तन्तेतराम्, सा च प्रवृत्तिः श्राद्धस्य धर्मं प्रसूते नाश्राद्धस्य। तथा च श्रूयते—यदेव विद्यया करोति श्रद्धयोपनिषदा तदेवास्य वीर्यवत्तरं भवतीति। तत्र प्रवृत्तेः कार्ये सहकारितामाह—स्तूयमानमिति। विधेः कार्ये सहकारितामाह—प्रवर्तिका चेति।

### वृत्तिः

अर्थवादः अर्थस्य प्रयोजनस्य वदनम्, विध्यर्थप्रशंसापरं वचनमित्यर्थः।

---

(१) 'सम्प्रत्ययार्थं' इति ज-ग०, 'सम्प्रदायार्थान्' इति टि। (२) 'वर्जनार्थम्' इति ज-ग०।

## न्यायभाष्यम्

स एष वाव प्रथमो यज्ञो (१) यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वा(२)ऽन्येन यजते (क)गर्त्तपत्यमेव तज्जीयते वा प्रमीयते वा इत्येवमादि ।

अन्यकर्तृकस्य व्याहतस्य विधेर्वादः परकृतिः "हुत्वा वपामेवाग्रेऽभिघारयन्ति अथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्ति अग्नेः प्राणाः पृषदाज्यस्तोममित्येवमभिदधति" इत्येवमादि ।

ऐतिह्यसमाचरितो विधिः पुराकल्प इति । "तस्माद्वा एतेन ब्राह्मणा बहिष्पवमानं सामस्तोममस्तौषन् योने यज्ञं प्रतनवामहे इत्येवमादि ।

कथं परकृतिपुराकल्पावर्थवादाविति ? स्तुतिनिन्दावाक्येनाभिसम्बन्धाद् विध्याश्रयस्य(३) कस्यचिदर्थस्य द्योतनाद् (४)अर्थवाद इति ॥ ६४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

कथं परकृतिपुराकल्पावर्थवादाविति । चरकाध्वर्युपुरुषसंबन्धश्रवणाद् वपाहोमपृषदाज्याभिघारणयोः क्रमभेदस्याप्राप्तस्य पुरुषविशेषधर्मतया विधायकं परकृतिवाक्यम्, तथा बहिष्पवमानसामस्तोममन्त्रसंबन्धस्य पूर्वकालपुरुषसंबन्धितया श्रवणादिदानींतनपुरुषधर्मतया विधायकं पुराकल्पवाक्यं कस्मान्न भवतीति भावः । उत्तरम्—स्तुतिनिन्दावाक्येन कस्यचिद्विधेः शेषभूतेन (ख) संबन्धादिति । न तावदेतेषु वाक्येषु सिद्धाभिधायिषु विधिश्रुतिरस्ति । तत्र किमश्रूयमाणो विधिः कल्प्यतामाहो प्रतीतेन विधिनैकवाक्यतेति । तत्र कल्पनालाघवात् प्रतीतेन विधिनैकवाक्यतैव ज्यायसी । पूर्वपक्षे विधिकल्पना तदेकवाक्यताकल्पनमिति द्वयं कल्पनीयम्, उत्तरस्मिंस्तु एकवाक्यतामात्रमिति भावः । स्फुटतरस्तुतिनिन्दाप्रतीत्यभावाच्च परकृतिपुराकल्पयोः स्तुतिनिन्दाभ्यां भेदेनोपन्यास इति ॥ ६४ ॥

## वृत्तिः

अर्थवादो हि स्तुत्यादिद्वारा विध्यर्थे शीघ्रप्रवृत्तये प्रशंसति । तत्र स्तुत्यादिभेदादर्थवादं विभजते—(ग) (स्तुतिरिति) ।

---

(१) फ-पुस्तके 'यज्ञानां ( यज् ज्योतिष्टोमो )' इत्येवं मुद्रितम् । (२) '-ऽथान्येन' इति फ० । (३) 'कस्य कस्यचिद्' इति ज० । (४) 'अर्थवादाविति' इति क० ।

(क) अत्र ख-ग-ज-झा-पुस्तकेषु मुद्रितः 'गर्त्तं पतत्ययमेवैतज्जीर्यते वा प्रमीयते वा' इति पाठः परित्यक्तः, तद्बीजं फ-पुस्तके द्वितीयखण्डे ३३० पत्रे द्रष्टव्यम् ।

(ख) भाष्ये अभिपदमधिकम् ।

(ग) मीमांसकास्तु—

विरोधे गुणवादः स्यादनुवादोऽवधारिते । भूतार्थवादस्तद्धानेरर्थवादस्त्रिधा मतः ॥

इत्युक्तरीत्याऽर्थवादस्य त्रैविध्यमिच्छन्ति ।

## (सू०)—विधिविहितस्यानुवचनमनुवादः ॥ ६५ ॥

### न्यायभाष्यम्

विध्यनुवचनं चानुवादो विहितानुवचनं च। पूर्वः शब्दानुवादोऽपरोऽर्थानुवादः। यथा पुनरुक्तं द्विविधमेवमनुवादोऽपि। किमर्थं पुनर्विहितमनूद्यते? अधिकारार्थम्; विहितमधिकृत्य स्तुतिर्बोध्यते निन्दा वा, विधिशेषो वा(१)ऽभिधीयते।

### न्यायवार्त्तिकम्

विधिविहितस्यानुवचनमनुवादः। विध्यनुवचनं चानुवादो विधिविहितानुवचनं च।

### न्यायवार्त्तिकतात्पर्यटीका

विधि—दः (सू० ६५)॥ विहितमधिकृत्य स्तुतिर्बोच्यते निन्दा वेति। यथा "अश्वमेधेन यजेते"ति विधेरर्थवादः "योऽश्वमेधेन (२)यजत" इति। किमर्थम्? स्तोतुम्; "तरति मृत्युं तरति पाप्मानमि"ति स्तुतिः। 'उदिते होतव्य'मित्यस्य विधेरर्थवादः (क) 'य उदिते जुहोती'ति। किमर्थम्? निन्दितुम्; (ख) श्यावोऽस्याऽऽहुतिमभ्यवहरतीति निन्दा। प्रयोजनान्तरमाह—विधिशेषो वाऽभिधीयत इति। यथा 'यदाग्नेयोऽष्टाकपालो भवती'त्यादिभिरुत्पत्तिवाक्यैः षडाग्नेयादयो यागाः पौर्णमास्यमावास्याकालसंबन्धा विहिताः, ते च विधय इष्टाभ्युपायतारूपाः स्ववाक्ये चेष्टमनासादयन्तः सापेक्षाः, एवमाघाराद्युत्पत्तिविधयोऽपि कालविशेषासंबन्धा इष्टापेक्षा एव। तत्र 'य एवं विद्वान्पौर्णमासीं यजते य एवं विद्वानमावास्यां यजत'इति कालविशेषसंबन्धेनोत्पन्नानामाग्नेयादीनामनुवादः। किमर्थम्? 'यदाग्नेयोऽष्टाकपाल' इत्याद्युत्पत्तिविध्यपेक्षितेष्टसंबन्धनियमार्थम्, 'दर्शपौर्णमासाभ्यां स्वर्गकामो यजेते'ति षण्णामेवाऽऽग्नेयादीनां कालविशेषसंबन्धोत्पन्नानूदितानां फलसंबन्धो यथा स्याद्व (ग) मा भूदाघारादीनां कालासंबन्धे-

### वृत्तिः

स्तुतिः साक्षाद्विध्यर्थस्य प्रशंसार्थकं वाक्यम्। यथा "सर्वजिता वै देवाः। सर्वमजयन् सर्वस्याऽऽप्त्यै सर्वस्य जित्यै सर्वमेवैतेनाऽऽप्नोति सर्वं जयति" इत्यादि। अनिष्टबोधनद्वारा विध्यर्थप्रवर्तकं निन्दा। "एष वाव प्रथमो यज्ञो यज्ञानां यज्ज्योतिष्टोमो य एतेनानिष्ट्वाऽन्येन यजते स (घ) गर्ते पतत्ययमेवैतज्जीर्यते प्र वा मीयते" इत्यादि। पुरुषविशेषनिष्ठमिथोविरुद्धकथनं परकृतिः। यथा "हुत्वा वपामेवाग्रेऽभिघारयन्त्यथ पृषदाज्यं तदुह चरकाध्वर्यवः पृषदाज्यमेवाग्रेऽभिघारयन्त्यग्नेः प्राणाः पृषदाज्यमित्यभिदधति" इत्यादि। ऐतिह्य-

(१) 'विधीयते' इति ग। (२) 'यजेते' इति ख।

(क) आदर्शपुस्तकयोः 'यदुदिते' इति मुद्राप्रमादकृतः पाठः ५९-सूत्रीयभाष्यानुसारेण शोधितः। (ख) आदर्शपुस्तकयोः 'श्यावो वा अस्याऽऽहुतिम्' इति मुद्राप्रमादकृतः पाठः शोधितः। (ग) पूर्ववाक्ये 'यथा' शब्ददर्शनादत्र 'तथे'ति अर्थादवगन्तव्यम्। (घ) 'गर्तपत्यमेव तज्जीयते' इति युक्तः पाठः।

## न्यायभाष्यम्

विहितानन्तरार्थोऽपि चानुवादो भवति। एवमन्यदप्युत्प्रेक्षणीयम्।

लोकेऽपि च विधिरर्थवादोऽनुवाद इति च त्रिविधं वाक्यम्। ओदनं पचेदिति विधिवाक्यम्। अर्थवादवाक्यम्—आयुर्वर्चो बलं सुखं प्रतिभानं चान्ने प्रतिष्ठितम्। अनुवादः—पचतु पचतु भवानित्यभ्यासः, क्षिप्रं पच्यतामिति वा ; अङ्ग पच्यतामित्यध्येषणार्थम्, पच्यतामेवेति (१) चावधारणार्थम्।

यथा लौकिके वाक्ये विभागेनार्थग्रहणात्प्रमाणत्वम् एवं वेदवाक्यानामपि विभागेनार्थग्रहणात्प्रमाणत्वं भवितुमर्हतीति ॥ ६५ ॥

## न्यायवार्त्तिकम्

पूर्वः शब्दानुवादः (क) परोऽर्थानुवादः, यथा पुनरुक्तं द्विविधम्, शब्दपुनरुक्तमर्थपुनरुक्तं च। शब्दपुनरुक्तम्—अनित्योऽनित्य इति। अर्थपुनरुक्तम्—अनित्यो निरोधधर्मक इति ॥ ६५ ॥

## न्यायवार्त्तिकतात्पर्यटीका

नोत्पन्नानामित्येवमर्थम्। अत आघारादयः 'फलवत्सन्निधावफलं तदङ्ग'मिति दर्शपौर्णमासाङ्गतयाऽवतिष्ठन्त इति सिद्धं भवति। सोऽयं फलसम्बन्धनियमो विधिशेषः तदर्थमनुवाद इत्यर्थः। एवम् 'अग्निहोत्रं जुहोती'ति विहितो होमोऽनूद्यते। किमर्थम्? दध्यादिगुणविशेषविधानार्थम्, 'दध्ना जुहोति पयसा जुहोतीत्यादिषु। सोऽयं गुणविधिर्विधिशेष इति। प्रयोजनान्तरमनुवादस्याऽऽह—विहितानन्तरार्थ इति। यथा सोमो विहितो (२) दर्शपौर्णमासौ च, तयोरानन्तर्यं विधातुमुभयानुवादः 'दर्शपौर्णमासाभ्यामिष्ट्वा सोमेन यजेते'ति, एव'मध्वर्युर्गृहपतिं दीक्षयित्वा ब्रह्माणं दीक्षयती'ति। (ख) विभागेऽर्थग्रहणात् प्रामाण्यं भवितुमर्हतीति, प्रामाण्यं भवतीत्यर्थः ॥६५॥

## वृत्तिः

समाचरिततया कीर्तनं पुराकल्पः। यथा "तस्माद्वा एतेन पुरा ब्राह्मणा बहिष्पवमानसामस्तोममस्तौषन् यज्ञं प्रतनवामहे" इत्यादि ॥ ६४ ॥

अनुवादलक्षणमाह—( विधीति )

प्राप्तस्य अनु पश्चात् कथनं सप्रयोजनम् अनुवाद इति सामान्यलक्षणम्, तद्विशेषो विधिविहितस्येति ; विध्यनुवादो विहितानुवादश्चेत्यर्थः। अयम् अर्थवादानुवादविभागो विधिसमभिव्याहृतवाक्यानाम्, तेन भूतार्थवादरूपाणां वेदान्तवाक्यानामपरिग्रहान्न न्यूनता ॥ ६५ ॥

---

(१) 'चाऽवधारणार्थम्' इति फ। (२) ख-पुस्तके 'दर्शपौर्णमासौ च तयोरानन्तर्यं' विधातुमुभयानुवादः' इति न दृश्यते।

(क) भाष्ये चपर इति विशेषः। (ख) भाष्ये 'विभागेनार्थग्रहणाद्' इति बहुपुस्तकसंवादी पाठः।

## (सू०)—नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः ॥६६॥

### न्यायभाष्यम्

पुनरुक्तमसाधु साधुरनुवाद इति अयं विशेषो नोपपद्यते। कस्मात्? उभयत्र हि प्रतीतार्थः शब्दोऽभ्यस्यते चरितार्थस्य शब्दस्याभ्यासादुभयमसाध्विति ॥६६॥

## (सू०)—शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः ॥ ६७ ॥

### न्यायभाष्यम्

नानुवादपुनरुक्तयोरविशेषः। कस्मात्? अर्थवतोऽभ्यासस्यानुवादभावात्। अर्थवानभ्यासोऽनुवादः, शीघ्रतरगमनोपदेशवत्। शीघ्रं शीघ्रं गम्यतामिति क्रियाति-

### न्यायवार्त्तिकम्

नानुवादपुनरुक्तयोर्विशेषः शब्दाभ्यासोपपत्तेः। कोऽस्य सूत्रस्यार्थः? प्रतीतार्थ-शब्दाभ्यासोऽनुवादपुनरुक्तयोः साम्यम्। पुनरुक्तेऽपि प्रतीतार्थः शब्दोऽभ्यस्यते, अनुवादेऽप्येवम्, अतः प्रतीतार्थशब्दाभ्यासादुभयमसाध्विति ॥ ६६ ॥

शीघ्रतरगमनोपदेशवदभ्यासान्नाविशेषः इति। यथा शीघ्रं गम्यतां शीघ्रतरं गम्यतामिति तरपा क्रियातिशयो गम्यते तथाऽनुवादलक्षणेनाप्यभ्यासेन क्रियातिशयोऽभिधीयत इति। अस्य प्रयोगः—अर्थवाननुवादलक्षणोऽभ्यासः प्रत्ययविशेषहेतुत्वात् शीघ्रतरगमनोप-देशवदिति। यथा शीघ्रशब्दाच्छीघ्रतरशब्दः प्रयुज्यमानः प्रत्ययविशेषहेतुत्वान्न पुनरुक्तदोषं लभते तथाऽनुवादलक्षणोऽप्यभ्यासः प्रत्ययविशेषहेतुत्वान्न पुनरुक्तदोषं लप्स्यत इति।

### न्यायवार्त्तिकतात्पर्यटीका

नानु—त्तेः ( सू० ६६ )॥ भाष्योक्तमनुवादस्य प्रयोजनमविदुषः पूर्वः पक्षः ॥ ६६ ॥

शीघ्र—षः ( सू० ६७ )॥ वार्तिकम् यथेति। यथा शीघ्रं गम्यतामित्युक्ते शीघ्रतरं गम्यतामिति न पुनरुक्तम्, तरपः क्रियातिशयप्रतीतेः, एवं शीघ्रं शीघ्रं गम्यतामित्यभ्यासात् क्रियातिशयप्रतीतेः सकृदुच्चरिताच्चानवगतेः क्रियातिशयस्य प्रयोजनवानभ्यासः। क्रियाविशेषणाति-शयोऽपि क्रियातिशय एवेत्यर्थः। अवगतं तावच्छीघ्रं शीघ्रं गम्यतामित्यत्राभ्यासातिशयप्रतीतेरनु-

### वृत्तिः

शङ्कते—( नानुवादेति )

'शब्दस्य' बोधितार्थकशब्दस्य योऽभ्यासः पुनः प्रयोगः तस्य 'उपपत्तेः' सत्त्वाद् अनुवादः पुनरुक्तान्न भिद्यते इत्यर्थः ॥ ६६ ॥

समाधत्ते—( शीघ्रतरेति )

अनुवादस्य पुनरुक्तात् नाविशेषः अभ्यासाद् अभ्यासस्य सप्रयोजनत्वात्। तत्र

## न्यायभाष्यम्

शयोऽभ्यासेनैवोच्यते। उदाहरणार्थं चेदम्। (१)एवमन्योऽप्यभ्यासः पचति पचतीति क्रियानुपरमः। ग्रामो ग्रामो रमणीय इति व्याप्तिः। परि परि त्रिगर्तेभ्यो वृष्टो देव इति परिवर्जनम्। अध्यधि कुड्यं निषण्णमिति सामीप्यम्। (क) तिक्तं तिक्तम् इति प्रकारः। एवमनुवादस्य स्तुति-निन्दा-शेष-विधिष्वधिकारार्थता (२)विहितानन्तरार्थता चेति ॥ ६७ ॥

किं पुनः प्रतिषेधहेतूद्धारादेव शब्दस्य प्रमाणत्वं (३)सिध्यति? न, अतश्च(३*)—

## न्यायवार्त्तिकम्

कः पुनरसौ विशेषो भवतीति वक्तव्यः, तदुच्यते—आद्ये पचतुशब्दप्रयोगे पाको निर्वर्तनीय इति पक्तुः प्रत्ययो भवति, द्वितीयात्तु पचतुशब्दादवधारणप्रत्ययो भवति, मयैव पक्तव्यमिति; सातत्य-प्रत्ययो वा भवति सततं मया पक्तव्यमिति; अध्येषणप्रत्ययो वा भवति मामेवायमधिकुरुत इति, आशुप्रत्ययो वा भवति आशु मया पक्तव्यमिति। एवं श्रोतुः—यथा च श्रोतुस्तथा वक्तुरप्येते एव प्रत्यया भवन्तीति। पुनरुक्ते तु न कश्चिद्विशेषो गम्यत इति महान् विशेषः पुनरुक्तानुवादयोः। एवमन्योऽप्यनुवादस्य प्रयोगो वाक्ये बोद्धव्य इति ॥ ६७ ॥

किं पुनः प्रतिषेधहेतूद्धारादेव प्रमाणता वेदवाक्यानां सिद्धा? न। (४) किं कारणम्? न साधनमन्तरेण सिद्धिरस्तीति। कुतस्तर्हि? प्रमाणतः। किं तत् प्रमाणम्? अर्थविभाग-वत्त्वम्—

## न्यायवार्त्तिकतात्पर्यटीका

वादस्य विशेषः, पचति पचतीत्यादौ को विशेष इत्याह—कः पुनरसौ विशेषः यः पचति पचती-त्यादौ भवतीति। न च वक्तुरन्यथा प्रत्ययः श्रोतुश्चान्यथा येन विप्रतिपत्तेः श्रोतुः प्रत्ययो भ्रान्त इति कल्प्येतेत्याह—यथा च श्रोतुरिति। एवमन्योऽपीति। यथा ग्रामो ग्रामो रमणीय इत्यादिरिति ॥ ६७ ॥

अनन्तरसूत्रावतारणपरं भाष्यं किं पुनः प्रतिषेधेति। तदनुभाष्य व्याचष्टे—किं पुनरिति। उत्तरम्—नेति। पृच्छति—किं कारणम्। उत्तरम्—न साधनमन्तरेणेति। पुनः पृच्छति—

## वृत्तिः

दृष्टान्तमाह—शीघ्रेति। यथा लोके गम्यतामित्युक्त्वा पुनर्गम्यतां गम्यताम् इत्यादिक-मविलम्बादिबोधार्थमुच्यते तथा प्रकृतेऽपीति ॥ ६७ ॥

---

(१) 'एवमन्येऽप्यभ्यासाः' इति फ०। (२) 'विहितार्थता च' इति ज०, 'विहितार्थशानुवाद' इति टि०। (३) 'न सिध्यति' इति ज०, 'न' इति नास्ति ल-भा-ग०। (४) 'न किं' इति क-वार्त्तिकपाठः।

(क) अत्र 'तिक्ततिक्त'मिति पाठो गुरुभिः परिगृहीतः। तद्बीजं व० सा० प० प्रकाशिते न्यायदर्शने २य-खण्डे ३४३ पत्रे द्रष्टव्यम्।

## (सू०)—मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात् ॥६८

### न्यायभाष्यम्

किं पुनरायुर्वेदस्य प्रामाण्यम् ? यत्तदायुर्वेदेनोपदिश्यते इदं कृत्वेष्टमधिगच्छति इदं वर्जयित्वाऽनिष्टं जहाति, तस्यानुष्ठीयमानस्य तथाभावः सत्यार्थताऽविपर्ययः। मन्त्रपदानां च विषभूताशनिप्रतिषेधार्थानां प्रयोगेऽर्थस्य तथाभाव एतत्प्रामाण्यम्। किंकृतमेतत् ? आप्तप्रामाण्यकृतम्। किं पुनराप्तानां प्रामाण्यम् ? साक्षात्कृतधर्मता भूतदया

### न्यायवार्त्तिकम्

मन्त्रायुर्वेदप्रामाण्यवच्च तत्प्रामाण्यमाप्तप्रामाण्यात्। चशब्दः पूर्वहेत्वनुकर्षणार्थः। यथा मन्त्रायुर्वेदवाक्यानि पुरुषविशेषाभिहितत्वात् प्रमाणं तथा वेदवाक्यानीति पुरुषविशेषाभिहितत्वं हेतुः। किमायुर्वेदस्य प्रामाण्यं यत् तदायुर्वेदेनोपदिश्यते इदं कृत्वेष्टमधिगच्छति इदं(क) कृत्वाऽनिष्टं जहाति, तस्यानुष्ठीयमानस्य तथाभावोऽविपर्ययः, एतत् प्रामाण्यम्। किंकृतमेतत् ? आप्तप्रामाण्यकृतम्। किं पुनराप्तानां प्रमाणत्वम् ? साक्षात्कृतधर्मता—यं ते पदार्थमुपदिशन्ति स तैः साक्षात्कृतो भवतीति। भूतदया च—यस्मै चोपदिशन्ति तं प्रत्यनुकम्पा भवति। (१) यथापरिज्ञातार्थचिख्यापयिषा चास्य भवति। एतेन त्रिविधेन विशेषणेन विशिष्टो वक्ता आप्तः। तेन य उपदेशः क्रियते स प्रमाणमिति।

### न्यायवार्त्तिकतात्पर्यटीका

कुतस्तर्हीति। उत्तरम्—प्रमाणतः। पृच्छति—(ख)तत्किं प्रमाणम्। तत्र तावद्वेदप्रामाण्यसंभावनायां प्रमाणमाह—अर्थविभागवत्त्वम्; न त्वेतद्वेदप्रामाण्ये प्रमाणं (२)बुद्धादिप्रणीतेनागमेनार्थविभागवता अनैकान्तिकत्वात्। वेदप्रामाण्यप्रमाणं तु सूत्रोक्तम्—

मन्त्रा—ण्यात् (सू० ६८)॥ चशब्दः पूर्वहेत्वनुकर्षणार्थ इति। पूर्वस्य प्रामाण्यसंभावनाहेतोरर्थविभागवत्त्वस्यानुकर्षणार्थः। संभावितो हि पक्षो हेतुना साध्यते न त्वसंभावितः। यथाहुः—

संभावितः प्रतिज्ञायां पक्षः साध्येत हेतुना।
न तस्य हेतुभिस्त्राणमुत्पतन्नेव यो हतः॥ इति।

सूत्रं व्याचष्टे—यथा मन्त्रायुर्वेदवाक्यानीति। पुरुषस्य भगवतो वेदकारकस्य विशेषः प्रत्यक्षीकृतहेयोपादेयता तद्धेतुभूता भूतदया यथार्थचिख्यापयिषा च करणपाटवं चेति; विशिष्यते ह्यनेनैव पुरुषः पुरुषान्तरेभ्योऽनाप्तेभ्य इति। त्रिविधेन विशेषणेनेत्युपलक्षणं करणापाटवमपि द्रष्टव्यम्।

(१) 'यथार्थपरिज्ञानार्थं चिख्यापयिषा चास्य' ख०। (२) 'बुद्धाबुद्धादि'—ख।
(क) कृत्वेत्यत्र भाष्ये वर्जयित्वेति विशेषः। एवमन्य अन्येऽपि विशेषा द्रष्टव्याः।
(ख) 'किं तत्' इति व्युत्क्रमस्तु वार्तिकानुसारी मनोरमः।

## न्यायभाष्यम्

यथाभूतार्थचिख्यापयिषेति। आप्ताः खलु साक्षात्कृतधर्माणः इदं हातव्यमिदमस्य हानिहेतुरिदमस्याधिगन्तव्यमिदमस्याधिगमहेतुः इति भूतान्यनुकम्पन्ते। तेषां खलु

## न्यायवार्त्तिकतात्पर्यटीका

एतदत्राऽऽकूतम्—अनन्तान्तर्गणिकसुखदुःखभेदवन्तः प्राणभृद्भेदा दृश्यन्ते न चैषां वैचित्र्यं स्वाभाविकमिति तृतीये निवेदयिष्यते। न च दृष्टकारणमात्रनिबन्धनम्, तस्य दृष्टव्यभिचारत्वात्। तस्माद् दृष्टसहायमदृष्टमस्य वैचित्र्यस्य कारणम्, तच्चापूर्वमिति च धर्माधर्माविति चाऽऽख्यायते। तच्च कस्यचित्प्रत्यक्षं मन्वादेरित्युपपादितम्। तनुभुवनादिलक्षणस्य कार्यस्य कर्ता तन्निर्माणसमर्थः समस्तवस्तुतत्त्वज्ञः क्लेशकर्मविपाकाशयापरामृष्टः परमकारुणिकस्तनुभुवनादेरेव कार्यादनुमीयत इति चतुर्थे उपपादयिष्यते। सोऽयमात्मीयहिताहितप्राप्तिपरिहारोपायानविदुषः प्राणिनः पश्यन् प्रत्युतानेकविधदुःखदहनदह्यमानानवलोकयन् कथं न तप्येत तप्यमानो वा (क)हिताहितप्राप्तिपरिहारोपायतत्त्वं विद्वान् कथं नोपदिशेत् अन्यथोपदिशेद्वा। तस्मादनेन परमकारुणिकेन पृथिव्यादि सृष्ट्वा (ख)प्रजाश्चतुर्विधास्ताभ्यो हिताहितप्राप्तिपरिहारोपाय उपदेष्टव्यः। न ह्ययमनुपदिश्य स्थातुमर्हति। प्रजानां पितृकल्पस्य चास्योपदेशो देवर्षिमनुष्यगोचरश्चातुर्वर्ण्येन चातुराश्रम्येण चाऽऽदराद् ग्राह्यः, धार्यश्च हिताहितप्राप्तिपरिहारोपायानुष्ठानाय। तस्माद् यो वर्णाश्रमाचारव्यवस्थापक आगमो महाजनपरिगृहीतः स तत्प्रणीत आप्तोक्तत्वात् प्रमाणं मन्त्रायुर्वेदवाक्यवदिति संप्रसाध्यते। कतमोऽसावागम आप्तोक्तः, किं शाक्यभिक्षुकदिगम्बरसंसारमोचकादीनामागमाः किं वा वेदा इति। तत्र शाक्याद्यागमानां (ग) बुद्धर्षभादयः प्रणेतार इति स्फुटतरमस्ति स्मरणं न तूक्तलक्षण ईश्वरस्तेषां कर्त्तेति। न चैते शौद्धोदनिप्रभृतयः तनुभुवनादीनां कर्त्तारो येन सर्वज्ञा इति निश्चीयेरन्, तदुपायानुष्ठानेन तु संभाव्येतैषां सर्वज्ञता। न च संभावनामात्रेण तत्प्रणीतेष्वागमेष्वाश्वासः प्रेक्षावतां भवितुमर्हति। न चैतेषामागमा वर्णाश्रमाचारव्यवस्थाहेतवः। नो खलु निषेकाद्याः क्रियाः श्मशानान्ताः प्रजानामेते विदधति। न हि प्रमाणीकृतबौद्धाद्यागमा अपि लोकयात्रायां श्रुतिस्मृतीतिहासपुराणनिरपेक्षागममात्रेण प्रवर्त्तन्ते, अपि तु तेऽपि सांवृतमेतदिति ब्रुवाणा लोकयात्रायां श्रुत्यादीनेवानुसरन्ति। तस्माद्भवतु वेदेषु जगन्निर्मातृकर्तृकत्वस्मृतिः मा वा भूत्, त एव त्वीश्वरप्रणीता इति पश्यामः। न ह्येते चैत्यवन्दनादिवाक्यवदन्यकर्तृकाः स्मर्यन्ते, न चान्य आगमो लोकयात्रामुद्वहन् महाजनपरिगृहीत ईश्वरप्रणीततया स्मर्यमाणो दृश्यते, न चेश्वरोऽनुपदिशन्नवस्थातुमर्हतीत्युक्तम्; तत् पारिशेष्याद्वेदा एव सकललोकयात्रामुद्वहन्तो हिताहितप्राप्तिपरिहारोपायमुपदिशन्त ईश्वरप्रणीता इत्यवगच्छामः। तथा ह्येत एव त्रैवर्णिकैर्यथावत् प्रयत्नेन गृह्यन्ते धार्यन्ते च। तदर्थपालनायां च महर्षिपरम्पराभिरङ्गोपाङ्गेतिहासपुराणधर्मशास्त्राणि प्रणीतानि। बुद्धादिवाक्यानि तु न लोकयात्रामुद्वहन्ति, न

(क) 'हिताहितपरिहारोपायतत्त्वम्' इत्यादर्शपुस्तकयोः पाठः शोधितः। (ख) 'प्रजाश्च चतुर्विधाः' इति च-शब्दोऽत्रानुसन्धेयः। (ग) बुद्धः प्रसिद्धः, ऋषभः आर्हतसम्प्रदायप्रवर्त्तकः।

## न्यायभाष्यम्

वै प्राणभृतां स्वयमनवबुध्यमानानां नान्यदुपदेशादवबोधकारणमस्ति। न चानवबोधे समीहा वर्जनं वा, न वाऽकृत्वा स्वस्तिभावः, नाप्यस्यान्य उपकारकोऽप्यस्ति। हन्त वयमेभ्यो यथादर्शनं यथाभूतमुपदिशामः त इमे श्रुत्वा प्रतिपद्यमाना हेयं हास्यन्त्यधिगन्तव्यमेवाधिगमिष्यन्ति इति। एवमाप्तोपदेशः एतेन त्रिविधेनाप्तप्रामाण्येन परिगृहीतोऽनुष्ठीयमानोऽर्थस्य साधको भवति; (१)एवमाप्तोपदेशः प्रमाणम्(१*)। एवमाप्ताः प्रमाणम्।

दृष्टार्थेनाऽऽप्तोपदेशेनाऽऽयुर्वेदेनादृष्टार्थो वेदभागोऽनुमातव्यः प्रमाणमिति आप्तप्रामाण्यस्य हेतोः समानत्वादिति। अस्यापि चैकदेशो "ग्रामकामो यजेत"इत्येवमादिर्दृष्टार्थः, तेनानुमातव्यमिति।

लोके च भूयानुपदेशाश्रयो व्यवहारः। लौकिकस्याप्युपदेष्टुरुपदेष्टव्यार्थ

## न्यायवार्त्तिकम्

(२) दृष्टार्थवाक्याविसंवादेन वा शेषानुमानं—यद्वाक्यं दृष्टार्थं (क) यथा "ग्रामकामो यजेते"त्येवमादि, तेन वा शेषानुमानं प्रमाणमिति।

## न्यायवार्त्तिकतात्पर्यटीका

च तत्र लौकिकानामविगानम्, न च विगायतां सांवृतमित्युक्त्वाऽपि तदर्थानुष्ठानम्। तस्माद् विगानात् कैश्चिदेव म्लेच्छादिभिर्मनुष्यापसदैः पशुप्रायैः परिग्रहान्नैतेषामाप्तोक्तत्वसंभवः। न चैतेषां मन्वादिवाक्यवद्वेदमूलकतया प्रामाण्यमिति सांप्रतम्, अध्येत्रध्यापयित्रनुष्ठातृकर्तृसामान्यस्य वेदमूलकत्वानुमानलिङ्गस्य स्मृतिवेदयोरिव बुद्धादिवाक्येष्वभावात्, तत्सर्वज्ञत्वसंदेहेन चानुभवमूलकत्वानिश्चयात्; मन्त्रायुर्वेदेषु प्रवृत्तिसामर्थ्यानुमितप्रामाण्येषु वैदिकशान्तिकपौष्टिकादिकर्माभ्यनुज्ञानात् रसायनादिक्रियारम्भे च वेदविहितचान्द्रायणादिप्रायश्चित्तोपदेशादायुर्वेदेनाप्याप्तप्रणीतेन वेदानां प्रामाण्यमभ्युपेयते। तत्सिद्धमाप्तप्रणीता वेदाः प्रमाणमिति। अभ्युच्चयमात्रं तु कारीर्यादिषु संवाद इति।

## वृत्तिः

एवमप्रामाण्यसाधकं निरस्य प्रामाण्यं साधयति—( मन्त्रायुर्वेदवदिति )।

'आप्तस्य' वेदकर्त्तुः, 'प्रामाण्यात्' यथार्थोपदेशकत्वात्, वेदस्य तदुक्तत्वमर्थाल्लब्धम्,

---

(१) अयमंशः ज-टि-पुस्तकयोर्नास्ति। (२) 'दृष्टवाक्याविसंवादेन चाशेषानुमानं' ख०।

(क) 'यथा वा' इत्यादर्शपुस्तकयोः पाठः। अवत्यो 'वा'शब्दोऽर्थासङ्गतेः संग्रहवाक्यानुसारेण 'तेन' इत्यतः परं योजितः। दृष्टार्थकं वाक्यमधिकृत्य—'ननु न कदाचिदपि कर्मसमनन्तरमेव फलमुपलब्धमिति तदनृतत्वमेव, तददर्शनकारणं न कारणवैगुण्यमिति तदयुक्तम् 'अविगुणायां कारीर्यां प्रयुक्तायां सद्य एव वृष्टेर्दर्शनात्' इति प्रक्रम्य तथा ह्यस्मत्पितामह एव ग्रामकामः सांग्रहणीं कृतवान् स इष्टिसमाप्तिसमनन्तरमेव गौरमूलकं ग्राममवाप' इत्युक्तं न्यायमञ्जर्याम्।

## न्यायभाष्यम्

(१)ज्ञानेन परानुजिघृक्षया यथाभूतार्थचिख्यापयिषया च प्रामाण्यम्, तत्परिग्रहादाप्तोपदेशः प्रमाणमिति।

द्रष्टृ-प्रवक्तृसामान्याच्चानुमानम्। य एवाप्ता वेदार्थानां द्रष्टारः प्रवक्तारश्च त एवाऽऽयुर्वेदप्रभृतीनाम् इत्यायुर्वेदप्रामाण्यवद्वेदप्रामाण्यमनुमातव्यमिति।

नित्यत्वाद् वेदवाक्यानां प्रमाणत्वे तत्प्रामाण्यमाप्तप्रामाण्यादित्ययुक्तम्। शब्दस्य वाचकत्वादर्थप्रतिपत्तौ प्रमाणत्वं न नित्यत्वात्। नित्यत्वे हि सर्वस्य सर्वेण वचनाच्छब्दार्थव्यवस्थानुपपत्तिः। (२) नानित्यत्वे वाचकत्वमिति चेद् न, लौकिकेष्वदर्शनात्। तेऽपि नित्या इति चेद् न, अनाप्तोपदेशादर्थविसंवादोऽनुपपन्नः।(२*) नित्यत्वाद्धि

## न्यायवार्त्तिकम्

लौकिकमपि वाक्यमनेनैव त्रिप्रकारेण विशेषणेन विशिष्टस्य वक्तुः प्रमाणं भवति। अस्य प्रयोगः—प्रमाणं वेदवाक्यानि वक्तृविशेषाभिहितत्वात् मन्त्रायुर्वेदवाक्यवदिति।

एककर्तृकत्वेन वा मन्त्रायुर्वेदवाक्यानि पक्षीकृत्यालौकिकविषयप्रतिपादकत्वेन वैधर्म्यहेतुर्वक्तव्यः।

पौरुषेयत्वमसिद्धं नित्यत्वादिति चेत्—अथ मन्यसे नित्यानि वेदवाक्यानि, नित्यत्वाच्चैषां प्रामाण्यम्, तस्मात् पौरुषेयत्वमसिद्धम्। न, असिद्धत्वात्—सिद्धे नित्यत्वे एतद् युक्तम्, तत्तु न

## न्यायवार्त्तिकतात्पर्यटीका

एतदेवाभिप्रेत्य वार्त्तिककारः प्रयोगमाह—अस्य प्रयोगः—प्रमाणं वेदवाक्यानीति।

प्रयोगान्तरमाह—एककर्तृकत्वेनेति। मन्त्रायुर्वेदवाक्यानि सर्वज्ञकर्तृकाणि महाजनपरिग्रहे सति अलौकिकार्थप्रतिपादकत्वात्। यानि तु न सर्वज्ञपूर्वकाणि तानि नैवंरूपाणि यथा (क)वातपुत्रीयवाक्यानीति व्यतिरेकी हेतुः। यथा च बुद्धादिवाक्यान्यलौकिकान्यपि न महाजनपरिगृहीतानि तथोक्तमनन्तरमेव। मन्त्रायुर्वेदवाक्यानां च सत्यपि प्रवृत्तिसामर्थ्ये तासां तासामौषधीनां तत्संयोगभेदानां च (ख) तत्तदक्षरावापोद्धारभेदस्य च नासर्वज्ञः सहस्रेणापि पुरुषायुषैः शक्तः कर्तुं प्रथममन्वयव्यतिरेकौ, न चानिदंप्रथमता तत्परिहारः सर्गादौ तदसंभवात्। सृष्टिमहाप्रलयौ चानुमानागमाभ्यामुपपादयिष्येते इति सर्वं रमणीयम्। तदेवं सर्वज्ञपूर्वकत्वे सति सिद्धमाप्तोक्तत्वेन मन्त्रायुर्वेदप्रामाण्यमोदनार्थी पचेदिति लौकिकवाक्यवदिति।

## वृत्तिः

तेन हेतुना वेदस्य प्रामाण्यमनुमेयम्। तत्र दृष्टान्तमाह—मन्त्रायुर्वेदप्रामाण्यवदिति।

(१) '-ज्ञानपरानु-' ज० ग०। (२) अयमंशः टि-पुस्तके नास्ति।

(क) वातपुत्रीयो वातपुत्राद् भिन्नो नवेत्यनुसन्धेयम्। (ख) 'तत्तदक्षरावापोद्वापभेदस्य' इत्येव पाठो नवेति चिन्तनीयम्।

## न्यायभाष्यम्

शब्दः प्रमाणमिति। अनित्यः स इति चेत्? अविशेषवचनम्। अनाप्तोपदेशो लौकिको न नित्य इति कारणं वाच्यमिति। यथायोगं चार्थस्य प्रत्यायनाद् नामधेयशब्दानां लोके प्रामाण्यं नित्यत्वात् प्रामाण्यानुपपत्तिः। यत्रार्थे नामधेयशब्दो नियुज्यते लोके (१)तस्य नियोगसामर्थ्यात् प्रत्यायको भवति, न नित्यत्वात्। मन्वन्तरयुगान्तरेषु

## न्यायवार्त्तिकम्

सिद्धमतो न युक्तमेतत्। यदि न नित्यानि कथं प्रमाणम्? प्रमेयप्रतिपादकत्वात् प्रमाणम्, न नित्यत्वात्।

केचित्तु ब्रुवते न किञ्चिन्नित्यं प्रमाणमस्तीति प्रमाणत्वादेवानित्यानीति। तत्तु न सम्यगिति पश्यामः, नित्यमपि प्रमाणं यथा मनः आत्मा च। प्रमाणशब्दस्य समुदायवाचित्वात्—अयं खलु प्रमाणशब्दः समुदाये वर्तते। तत्र नित्यमनित्यं चानेकं समुदायि प्रमाणस्याङ्गत्वात् प्रमाणमित्युच्यते यथा प्रदीपः एवं च नित्यमपि प्रमाणमस्तीति। यदा च परमाण्वादि नित्यमितरवस्तुसाधकत्वेनोपादीयते तदा परमाण्वादेर्नित्यस्य प्रमाणभावात् 'प्रमाणत्वादनित्य' इत्ययं नैकान्तो भवतीत्यनुत्तरमेतत्।

तस्माद् युक्तमर्थविभागवत्त्वादनित्यत्वं लौकिकवाक्यवदिति—यथा अर्थविभागवन्ति लौकिकवाक्यानि तथा च वेदवाक्यानि तस्मान्न नित्यानीति। लौकिकान्यपि नित्यानीति चेत्—अथ

## न्यायवार्त्तिकतात्पर्यटीका

यदि न नित्यानि कथं प्रमाणम्, अनित्यत्वे हि पुरुषाणां विचित्राभिसन्धित्वेन भ्रमशङ्का, न च शक्याऽपाकर्त्तुम्। तस्मादपौरुषेयत्वमेव पुरुषाश्रयान् दोषानपाकुर्वद् वेदप्रामाण्यव्यवस्थापकमिति भावः। उत्तरम्—प्रतिपादकत्वादिति, आप्तोक्तत्वेनानित्यस्यापि निश्चायकत्वादित्यर्थः।

केचित्त्विति। प्रमालक्षणामर्थक्रियां कुर्वत् प्रमाणम्, न च नित्यस्यार्थक्रियाऽस्ति तस्मान्न प्रमाणमित्यर्थः। निराकरोति—तत्तु न सम्यगिति पश्याम इति। यथा च नित्यस्याप्यर्थक्रियासंभवस्तथा तृतीये वक्ष्याम इति भावः। आत्मा चेति प्रमाहेतुतामात्रविवक्षया, न तु करणत्वाभिप्रायम्। प्रमाणशब्दस्येति अत्रापि न करणत्वविवक्षया किं तु प्रमाहेतुमात्रविवक्षयेति द्रष्टव्यम्। इतरवस्तुसाधकत्वेनेति। इतरस्य परमाणुगतस्यैव मूर्त्तत्वादेः साधकत्वेनेत्यर्थः।

## वृत्तिः

मन्त्रो विषादिनाशकः, आयुर्वेदभागश्च (२)वेदस्थ एव; तत्र संवादेन प्रामाण्यग्रहात् तद्दृष्टान्तेन वेदत्वावच्छेदेन प्रामाण्यमनुमेयम्।

(१) 'तत्र' इति ग०। (२) 'वेदस्य' इति ख०।

## न्यायभाष्यम्

न्नातीतानागतेषु सम्प्रदायाभ्यासप्रयोगाविच्छेदो वेदानां नित्यत्वम्, आप्तप्रामाण्याच्च प्रामाण्यम्; लौकिकेषु शब्देषु चैतत् समानमिति ॥ ६८ ॥

इति वात्स्यायनीये न्यायभाष्ये द्वितीयाध्यायस्याऽऽद्यमाह्निकम्।

## न्यायवार्त्तिकम्

मन्यसे यान्यप्येतानि लौकिकवाक्यानि अर्थविभागवन्ति तान्यपि नित्यानीति; अर्थविभागो न स्यात—योऽयमर्थविभागो लौकिकवाक्ये स न स्यात्, दृष्टस्तु। तान्यनित्यानीति चेत्, विशेषहेतुर्वक्तव्यः—तुल्ये चार्थविभागवत्त्वे तुल्ये चार्थप्रतिपादकत्वे लौकिकान्यनित्यानि वैदिकानि नित्यानीति विशेषहेतुर्वक्तव्यः। तुल्यं भवतोऽपि अनित्यत्वे विशेषहेतुर्वक्तव्य इति।

उक्तोऽर्थविभागवत्त्वं हेतुः। इतश्च, वर्णवत्त्वाद्—वर्णवन्ति लौकिकवाक्यानि अनित्यानि, तथा च वेदवाक्यानि, तस्मात् तान्यप्यनित्यानि। इतश्च, सामान्यविशेषवत्त्वे सति श्रोत्रग्राह्यत्वात् लौकिकवाक्यवत्। इतश्च, पदवत्त्वात् लौकिकवाक्यवत्। दर्शनस्य परार्थत्वादिति चेत्—अथ मन्यसे दर्शनं परार्थम्, दर्शनशब्द उच्चारणार्थः, उच्चारणं परप्रतिपादनार्थम्, न हि कश्चिदात्मप्रतिपत्तये शब्दमुच्चारयति, यदि चायं नित्यो भवति शब्दादर्थप्रत्ययो युक्तः, अथानित्य उत्पन्नप्रध्वंसी ततोऽस्य श्रोतुर्नित्यमपूर्वः श्रोत्रविषयमेति, न चापूर्वश्रवणात् प्रतिपत्तिर्युक्ता, न हि नारिकेलद्वीपवासिनोऽप्रसिद्धगोश्रवणात् ककुदादिमदर्थप्रतिपत्तिर्भवति, तथा चानित्यवादिनः सर्वे शब्दाः तथा, तस्मादस्यापि शब्दात् प्रत्ययनियमो न प्राप्त इति। न अनेकान्तात्—क्षणविध्वंसिषु प्रदीपादिषु अपूर्वस्य प्रत्यायनं दृष्टमिति? नोदाहरणवैधर्म्यात् प्रदीपो नाख्यातः प्रकाशनीयार्थसम्बन्धात् प्रकाशनीयार्थसम्प्रतिपत्तिं करोति न पुनरनाख्यातः शब्द इति। कः पुनरेवमाह अनाख्यातः शब्दः प्रतिपादयति इति? सम्बन्धस्यादर्शनादाख्यानमनुपपन्नम्। उक्तमेतद् यथा न शब्दार्थयोः प्राप्तिलक्षणः सम्बन्धोऽस्तीति। वाच्यवाचकभावलक्षणस्तु पौरुषेयः सम्बन्धः स च कृतक इति। स च संसारानादित्वात् लोकतोऽवगम्यते। ये तु संसारमादिमन्तं वर्णयन्ति त एवमुपालभ्याः। अथ योऽयमभिलापो नित्या(१)वर्णा इति, स कथम्? सम्प्रदायस्याविच्छेदात्—तान्येव वेदवाक्यानि मन्वन्तरचतुर्युगान्तरेषु सम्प्रदायाभ्यासाविच्छेदेन प्रवर्तन्ते, तदपेक्षया लौकिकाः शब्दान् प्रयुञ्जते नित्या वेदा इति, यथा नित्याः पर्वताः नित्याः सरित इति,

## न्यायवार्त्तिकतात्पर्यटीका

तदेवमेकदेशिमतमपाकृत्य स्वमतमाह—तस्मादिति। स च संसारानादित्वादिति। यद्यपि वर्णपदवाक्यानि प्रत्युच्चारणमन्यानि तथाऽपि गत्वादिसामान्यावच्छिन्नानां गकारादीनां तत्समूहानां च वाक्यानां शक्यो गोत्वादिसामान्यावच्छिन्नाभिः शाबलेयादिव्यक्तिभिरेव सङ्केतो

(१) 'वर्णा (वेदा)' इत्येवं क-पुस्तके मुद्रितम्।

## न्यायवार्त्तिकम्

तन्मन्वादिवाक्येषु समानम्। कुत एवं सम्प्रदायाविच्छेदात् नित्यत्वं न पुनर्नित्यत्वादेव? अनित्यत्वोक्तप्रमाणाविघातात्—यानि मयाऽनित्यत्वे प्रमाणान्युपन्यस्तानि तानि न विहन्यन्ते, तेषामविघातादनित्यत्वे सति सम्प्रदायाविच्छेदात् नित्यत्वोपचार इति ॥ ६८ ॥

इति—औद्द्योतकरे न्यायवार्त्तिके द्वितीयस्या-
ध्यायस्याऽऽद्यमाह्निकम् ॥

## न्यायवार्त्तिकतात्पर्यटीका

ग्रहीतुमिति भावः। मन्वन्तरेति। महाप्रलये स्वीश्वरेण वेदान् प्रणीय सृष्ट्यादौ संप्रदायः प्रवर्त्यत एवेति भावः। शेषं भाष्यं वार्त्तिकं चातिरोहितार्थमिति ॥ ६८ ॥

इति मिश्रश्रीवाचस्पतिविरचितायां न्यायवार्त्तिकतात्पर्यटीकायां
द्वितीयाध्यायस्याऽऽद्यमाह्निकम् ॥

## वृत्तिः

आप्तं गृहीतं प्रामाण्यं यत्र स वेदस्तादृशेन वेदत्वेन प्रामाण्यमनुमेयमिति केचित् ॥ ६८ ॥

समाप्तं शब्दविशेषपरीक्षाप्रकरणम् ॥ ८ ॥

इति श्रीविश्वनाथन्यायपञ्चाननभट्टाचार्यकृतायां न्यायसूत्रवृत्तौ
विभागपरीक्षानिरपेक्षसाङ्गप्रमाणपरीक्षणं नाम
द्वितीयाध्यायस्याऽऽद्यमाह्निकम्।

# अथ द्वितीयाध्यायस्य द्वितीयमाह्निकम्

## न्यायभाष्यम्

अयथार्थः प्रमाणोद्देश इति मत्वाह—

**(सू०)—न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात् ॥ १ ॥**

न चत्वार्येव प्रमाणानि। किं तर्हि? ऐतिह्यमर्थापत्तिः सम्भवोऽभाव इत्येतान्यपि

## न्यायवार्त्तिकम्

प्रत्यक्षानुमानोपमानशब्दाः प्रमाणानीति सूत्रम्। तस्याऽऽक्षेपः—

न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्यात्। अस्यार्थः—अयथार्थोऽयं प्रमाणोद्देश इति। 'न चत्वार्येव प्रमाणानि' ऐतिह्यार्थापत्तिसम्भवाभावा अपि प्रमाणानीति। संशयव्युदासार्थं वा ऐतिह्यादय उपदिश्य प्रतिषिध्यन्ते—प्रत्यक्षादीनि च प्रमाणानि ऐतिह्यादीनि (क)चेति (१)केचित् मन्यन्ते, तत्र श्रोतुः संशयः स्यात् किं विद्यमाना ऐतिह्यादयो नोक्ता अथाविद्यमाना इति। विधिन्यूनतापरिहारार्थं वा प्रकरणम्। विद्यमानान्यैतिह्यादीनि नोक्ता-

## न्यायवार्त्तिकतात्पर्यटीका

अयथार्थ इति भाष्यम्। प्रमाणानां विभागोद्देशो यः सोऽयथार्थः। तदेतद्वार्त्तिककारो व्याचष्टे—प्रत्यक्षेति।

न च—ण्यात् ( सू० १ )॥ एवं विभ्रान्तस्याऽऽक्षेप इति भाष्यमतेन सूत्रं व्याख्याय प्रकारान्तरेणापि व्याचष्टे—संशयव्युदासार्थं वा प्रकरणम्, सूत्रं तु संशयार्थम्। 'न चतुष्ट्व' निश्चेतुं शक्यम्। कस्मात्? ऐतिह्यार्थापत्तिसंभवाभावप्रामाण्यात् परैरभ्युपगतादस्माकं संशयादिति सूत्रार्थः। तात्पर्यान्तरमाह—विधीति। विभागोद्देशोऽधिकनिषेधपर इति पूर्वपक्षे अयथार्थः प्रमाणोद्देश इति पूर्वं व्याख्यातम्, संप्रति तु प्रत्यक्षादिविधिपरोऽसावारम्भः प्रत्यक्षानुमानोपमानशब्दाः

## वृत्तिः

अथ विभागसापेक्षप्रमाणपरीक्षणम्, तदेव चाऽऽह्निकार्थः। चत्वारि चात्र प्रकरणानि, तत्राऽऽदौ चतुष्ट्वपरीक्षाप्रकरणम्। अन्यानि च तत्र तत्र वक्ष्यन्ते। तत्राऽऽक्षेपसूत्रम्—( न चतुष्ट्वमिति )

प्रमाणानां न चतुष्ट्वम्। प्रमाणत्वं नोक्तचतुष्कान्यतमत्वव्याप्यम् उक्तान्यवृत्तित्वात्।

---

(१) 'केचि'दिति ख-पुस्तके नास्ति।

(क) 'च'कारद्वयमुभयोः पक्षयोस्तुल्यतां द्योतयति।

## न्यायभाष्यम्

प्रमाणानि, (१)तानि कस्मान्नोक्तानि। इतिहोचुरित्यनिर्दिष्टप्रवक्तृकं प्रवाद-पारम्पर्यम् (क)ऐतिह्यम्। अर्थादापत्तिरर्थापत्तिः। आपत्तिः प्राप्तिः प्रसङ्गः। (२)यत्राभिधीयमानेऽर्थे योऽन्योऽर्थः प्रसज्यते सोऽर्थापत्तिः। यथा मेघेष्वसत्सु वृष्टिर्न

## न्यायवार्त्तिकम्

नीति विधिवाक्यहीनं (३) शास्त्रं स्यात्। दोषवतां दोषानभिधानाद् दोषहीनं वा शास्त्रं स्यात् इत्यत उद्दिश्य निवर्त्यन्ते—दोषवन्त ऐतिह्यादय इत्यतो नाभिधीयन्त इति। दोषस्तर्हि वक्तव्यः, अथ दोषो नाभिधीयते दोषहीनं शास्त्रमिति तत्परिहारार्थं प्रकरणमुपक्षिप्यते। प्रत्यक्षादिष्वन्तर्भावप्रदर्शनार्थं वा—ऐतिह्यादीनि प्रत्यक्षादिष्वन्तर्भावयितुं ये यत्रान्तर्भवन्ति तत्र तेषां प्रदर्शनार्थं प्रकरणमिति। सिद्धत्वादनारम्भः—नन्वयमर्थश्चत्वार्येव प्रमाणानीत्यस्मिन्नेव विभागोद्देशसूत्रे सिद्ध इति सिद्धत्वात् पुनरनारम्भ इति? न, अवधारणप्रयोजनस्य (ख)इतः सिद्धेः—येन न्यायेन चत्वार्येव प्रमाणानीत्येतदवस्थाप्यते स न्याय इह प्रकरणे वर्ण्यत इति तस्मादारम्भ्यमेवेति।

किमिदमैतिह्यं नाम? अनिर्दिष्टवक्तृकं प्रवादपारम्पर्यम्, 'इतिहोचुः' वृद्धाः कथयन्तीति। अर्थादापत्तिरर्थापत्तिः—आपत्तिः—प्राप्तिः प्रसङ्गः। यस्मिन् वाक्ये विधीयमानादर्थादन्योऽर्थ

## न्यायवार्त्तिकतात्पर्यटीका

प्रमाणानीति, अधिकनिषेधस्त्वर्थलभ्य इति पक्षमभिप्रेत्योक्तमित्यपौनरुक्त्यम्। तात्पर्यान्तरमाह—दोषवतामिति। तात्पर्यान्तरमाह—प्रत्यक्षादिष्विति। अन्तर्भावपरात् प्रकरणात् अर्थाद्विभागोद्देशस्य यथार्थता सिध्यतीत्यर्थः। देशयति—सिद्धत्वादिति। न हि यावत्सूच्यते सूत्रकारेण तावदवश्यमुपपादनीयं भाष्यकारादिभिरपि तदुपपादनसिद्धेरिति भावः। परिहरति—न, अवधारणप्रयोजनस्य प्रमाणान्तरनिरासस्येति। यत्सूचनमात्रादनुक्तमपि लभ्यते तत्सूत्रकारेण नोच्यते। यच्च सूचितमपि तिरोहितमिव तत् सूत्रकारेणोद्घाटनीयमेव। न हि

## वृत्तिः

तत्रान्यवृत्तित्वं व्युत्पादयति—ऐतिह्येत्यादि। ऐतिह्यम् इतिहोचुरित्यनेन प्रकारेण यदुच्यते, तद्धि अनिर्दिष्टप्रवक्तृकं परम्परागतं वाक्यम्, यथा इह वटे यक्ष इत्यादि। तस्य

---

(१) 'तानि कस्मान्नोक्तानि' इति नास्ति फ०। (२) 'यथाऽभिधीयमाने' इति ग०।

(३) 'शब्दशास्त्रम्' इति ख-पुस्तकपाठः।

(क) 'पारम्पर्योपदेशे स्यादैतिह्यमितिहाव्ययमि'त्यमरः। 'इतिहेति निपातसमुदायः प्रवादवाची। इतिहैव ऐतिह्यं प्रवादः। 'अनन्तावसथेतिहभेषजाञ् ञ्यः' इति स्वार्थे ञ्यः। अस्यानिर्दिष्टेत्यादि लक्षणम्। इतिहोचुरिति स्वरूपप्रदर्शनम्" इति तार्किकरक्षाटीकायां मल्लिनाथः।

(ख) 'इतश्च' इति ख-पुस्तकपाठः, तत्र 'च'कारोऽवधारणे बोध्यः।

### न्यायभाष्यम्

भवतीति। किमत्र प्रसज्यते ? सत्सु भवतीति। सम्भवो नामाविनाभाविनोऽर्थस्य सत्ताग्रहणादन्यस्य सत्ताग्रहणम्। यथा (क)द्रोणस्य सत्ताग्रहणादाढकस्य सत्ताग्रहणम्, आढकस्य (१)सत्ताग्रहणात् प्रस्थस्येति। अभावो (२, ख)विरोध्यभूतं भूतस्य, अविद्यमानं (३)वर्षकर्म विद्यमानस्य वाय्वभ्रसंयोगस्य प्रतिपादकम्, विधारके हि वाय्वभ्रसंयोगे गुरुत्वादपां पतनकर्म न (ग)भवतीति॥ १॥

### न्यायवार्त्तिकम्

आपद्यते साऽर्थापत्तिः—यथाऽसत्सु मेघेषु वृष्टिर्न भवतीति। किमत्रार्थादापद्यते ? सत्सु भवतीति। सम्भवो नामाविनाभाववर्त्तिनोऽर्थस्य (घ)ग्रहणादन्यसत्ताविज्ञानम्—यथा द्रोणस्य ग्रहणादाढकस्य सत्तेति। अभावो नाम प्रत्यनीकस्य ग्रहणात् तद्विरोधिनो ग्रहणम्—यथा विधारके वाय्वभ्रसंयोगे सति गुरुत्वप्रतिबन्धादपां पातः प्रतिषिद्धः, तदपामपातेन विरोधिनं वाय्वभ्रसंयोगं प्रतिपद्यते इति॥ १॥

### न्यायवार्त्तिकतात्पर्यटीका

तत्रास्ति निश्चयोऽस्मदभिमतमेव वदन्ति भाष्यकारादयो नान्यदिति भावः। किमत्रार्थादापद्यत इति प्रश्नः। उत्तरम्—सत्सु भवतीति। प्रत्यनीकस्य ग्रहणादिति। अपां पातप्रत्यनीकस्य उपात्तस्य ग्रहणात् तद्विरोधिनः पातविरोधिनः वाय्वभ्रसंयोगस्य 'ग्रहणम्', तदिदं किलाभावाख्यं प्रमाणम्, प्रमीयते मेघोदयेऽपि यत्तोयपाताभावेन वाय्वभ्रसंयोग इति॥ १॥

### वृत्तिः

चाऽऽप्तोक्तत्वानिश्चयान्न शब्देऽन्तर्भाव इति भावः। अर्थापत्तिः अनुपपद्यमानेनार्थेनोपपादककल्पनम्, यथा वृष्ट्या मेघज्ञानम्, वृष्ट्या सह मेघस्य वैयधिकरण्यान्न व्याप्तिरिति नानुमानेऽन्तर्भावः। सम्भवो भूयःसहचाराधीनज्ञानम्, यथा सम्भवति ब्राह्मणे विद्या, सम्भवति सहस्रे शतम्, अत्र च व्याप्तिर्नापेक्षितेत्याशयः। अभावस्तु विरोध्यभावज्ञानाधीनविरोध्यन्तरकल्पनम्, यथा नकुलाभावज्ञानेन नकुलविरोधिनो व्यालस्य कल्पनम्, अत्रापि व्याप्तिर्नापेक्षितेत्याशयः।

अथ वा कारणाभावादिना कार्याभावादिज्ञानमभावः, भावनिष्ठव्याप्तिरेवानुमानाङ्गमित्याशयः॥ १॥

---

(१) 'ग्रहणात्' इति ल-ग-भा०। (२) 'विरोधी अभूतं भूतस्य' इति ज-ग-ल-भा०। (३) 'च यत् कर्म' इति वि०।

(क) "अष्टमुष्टिर्भवेत् कुञ्चिः कुञ्चयोऽष्टौ तु पुष्कलम्। पुष्कलानि च चत्वारि आढकः परिकीर्त्तितः॥ चतुराढको भवेद् द्रोण इत्येतन्मानलक्षणम्॥" अन्यच्च—"चत्वारः कुडवाः प्रस्थश्चतुःप्रस्थमथाऽऽढकम्। अष्टाढको भवेद् द्रोणः—"इति। (ख) 'विरोध्यभूतं भूतस्य' इति वैशेषिकसूत्रम् (३।१।११)। (ग) 'अपां संयोगाभावे गुरुत्वात् पतनम्' इति काणादसूत्रम् (अ० ५, आ० २, सूत्र० ३), अस्य व्यतिरेकोऽत्र प्रदर्शित इति। (घ) भाष्ये सत्ताग्रहणादिति विशेषः।

## न्यायभाष्यम्

सत्यम् एतानि प्रमाणानि, न तु प्रमाणान्तराणि। प्रमाणान्तरं च मन्यमानेन प्रतिषेध उच्यते। सोऽयम्—

## (सू०)—शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः (क)॥ २॥

अनुपपन्नः प्रतिषेधः। कथम्? "आप्तोपदेशः शब्दः" इति। न च शब्दलक्षणमैतिह्याद् व्यावर्तते ; सोऽयं भेदः सामान्यात् संगृह्यत इति। प्रत्यक्षेणाप्रत्यक्षस्य

## न्यायवार्त्तिकम्

तान्येतान्यैतिह्यादीनि एवम्भूतानीति लक्षणाभेदादेतेष्वेवान्तर्भवन्ति इति न पृथगुच्यन्ते। विषयाभावाच्च—(ख)न प्रत्यक्षादिप्रमाणव्यतिरेकेण विषया ऐतिह्यादीनां सम्भवन्त्यतश्च न प्रमाणान्तराणि। अथ प्रयोजनभेदाद् भिद्यन्त इति मन्यसे, एवं तर्ह्यष्टत्वं निवर्तते—यदभ्युपगतं प्रमाणाष्टत्वं तन्निवर्तते प्रयोजनभेदात् प्रमाणभेदमभ्युपगच्छत इति। एककरणश्च प्रयोजनभेदो दृष्ट इत्यनेकान्तः। यथैकं चक्षुरनेकनीलादिभिन्नरूपग्रहणप्रयोजनमिति। इन्द्रियानेकत्वं वा—अथ प्रयोजनभेदाद्भेदं मन्यसे, एकमिन्द्रियमनेकं प्राप्नोति। अथ विषयसामान्याव्यतिरेकादेकमिन्द्रियम्? न युक्तस्तर्हि प्रतिषेधः 'न चतुष्ट्वमैतिह्यार्थापत्तिसम्भवाभावप्रामाण्या'दिति। यद्येतानि प्रमाणानि न प्रमाणान्तराणि क्व तर्ह्यन्तर्भवन्तीति वक्तव्यम्। अन्तर्भावप्रदर्शनार्थं सूत्रम्—शब्द ऐतिह्यानर्थान्तरभावादनुमानेऽर्थापत्तिसम्भवाभावानर्थान्तरभावाच्चाप्रतिषेधः।

## न्यायवार्त्तिकतात्पर्यटीका

सिद्धान्तमाह—तान्येतानीति। ननु भविष्यत्यसौ विषय उक्तलक्षणानामगोचरः प्रमाणानाम्, प्रवर्त्स्यन्ति च तत्रैतिह्यादीनि प्रमाणान्तराणीत्यत आह—विषयाभावाच्चेति। चोदयति—अथ प्रयोजनभेदादिति। तदेतदतिप्रसङ्गापादनेन दूषयति—एवं तर्ह्यष्टत्वमिति। न तावत् सन्ति तादृशः प्रयोजनसामान्यविशेषाः यैः प्रयोजनवन्ति प्रमाणानि परस्परतो व्यावर्त्तयेयुः, अपि तु भेदमात्राद्व्यावर्त्तयन्तीति वक्तव्यम्। तथा चातिप्रसङ्गेनाष्टत्वसंख्याव्यावृत्तिरित्यर्थः। अथ विषयसामान्येति। रूपत्वादिकं विषयसामान्यं तस्य स्वस्वव्यक्तिष्वव्यतिरेक एकत्वं तस्मादित्यर्थः। निराकरोति—न युक्तस्तर्हीति। निरुपाधानस्वरूपमेकं व्यापकत्वान्वितत्वसंज्ञित्वोपधानाश्रय इति चत्वारो विषयसामान्यविशेषा इति चतुष्ट्वप्रतिषेधो (ग)न युक्त इत्यर्थः। यद्येतानीति। यद्यैतिह्यादीनि प्रमाणानि क्व प्रत्यक्षादौ किमैतिह्याद्यन्तर्भवतीति वक्तव्यम्।

---

(क) वरदराजस्तु अभावस्य प्रत्यक्षादिष्वपि यथासम्भवमन्तर्भावो महर्षिसम्मत इति मन्यते। तार्किकरक्षा ९७ पत्रं द्रष्टव्यम्।

(ख) अत्र 'न प्रत्यक्षादिप्रमाणविषयव्यतिरेकेण' इति युक्तम्। मुद्रणदोषाद् 'विषय'शब्दः स्खलित इति सम्भाव्यते। (ग) क-ख-तात्पर्ययोः 'न युक्तमित्यर्थः' इति पाठः प्रामादिकः।

## न्यायभाष्यम्

(१)सम्बद्धस्य प्रतिपत्तिरनुमानम्। तथा चार्थापत्तिसम्भवाभावाः। वाक्यार्थसम्प्रत्ययेनानभिहितस्यार्थस्य प्रत्यनीकभावाद् ग्रहणमर्थापत्तिरनुमानमेव। अविनाभाव-

## न्यायवार्त्तिकम्

शब्द ऐतिह्यमन्तर्भवति समानलक्षणत्वान्न शब्दलक्षणमैतिह्यान्निवर्त्तते सोऽयं भेदः सामान्येन संगृहीतः। अनुमानेऽर्थापत्तिसम्भवाभावानामन्तर्भावः समानलक्षणत्वात्। कथमर्थापत्तिरनुमानेन संगृह्यते? द्वयोरेकतरप्रतिषेधस्य द्वितीयाभ्यनुज्ञाविषयत्वात्—यत्र यत्र द्वयोर्वस्तुनोरेकतरद् वस्तु प्रतिषिध्यते तत्र तत्र द्वितीयाऽभ्यनुज्ञा दृष्टा यथा दिवा न भुङ्क्ते इत्यभिधानाद् रात्रौ भुङ्क्ते इति गम्यते।

एके तु ब्रुवते—नेयमर्थापत्तिर्दिवा न भुङ्क्ते इति। अत्र (२)किलावधारणद्वयं दिवा न भुङ्क्ते

## न्यायवार्त्तिकतात्पर्यटीका

अप्रमाणस्य प्रमाणान्तर्भावो न भवतीति प्रमाणानीत्युक्तम्। यत् खल्वनिर्दिष्टप्रवक्तृकं प्रवादपारम्पर्यमैतिह्यं तस्य चेदाप्तः कर्त्ता नावधारितः ततस्तत्प्रमाणमेव न भवतीति यदीत्युक्तम्।

शब्द—धः (सू० २)॥ अथाक्षरपरम्परेत्यवगतं (क)तत्राऽऽप्तोपदेश इति शब्दलक्षणान्नातिवर्त्तते तदिदमुक्तम्—समानलक्षणत्वादिति। पृच्छति—कथमर्थापत्तिरिति, असत्सु मेघेषु वृष्टिर्न भवति सत्सु भवतीति सेयमर्थापत्तिः कथमनुमानेन संगृह्यते। उत्तरम्—द्वयोरिति। अत्रोदाहरणमाह—यत्र यत्रेति।

उदाहरणस्य साध्यविकलत्वमुदाहरति—एके त्विति। यदि दिवैव न भुङ्क्त इति कालविशेषप्रतिषेधो निश्चीयते ततो रात्रौ भुङ्क्त इति कालान्तरविधानं गम्यते न तु कालविशेषनिषेध-

## वृत्तिः

सिद्धान्तसूत्रम्—( शब्द इति )

न प्रमाणचतुष्ट्वस्य प्रतिषेधः शब्दे ऐतिह्यस्यानर्थान्तरभावाद् अन्तर्भावात् सामान्यत आप्तोक्तत्वज्ञानसम्भवात्। वस्तुत आप्तोक्तत्वज्ञानं न शाब्दे कारणम्, किं त्वाकाङ्क्षादिज्ञानम्, योग्यताप्रमाधीना च शाब्दप्रमेति। अर्थापत्त्यादेरनुमानेऽन्तर्भावः। उप-

---

(१) 'सम्बन्धस्य' इति टि०। (२) 'कि' त्ववधा-' इति ख०।

(क) 'तत्राऽऽप्तोपदेश इति शब्दलक्षणं नातिवर्त्तते' इति पाठः समीचीनतया प्रतिभाति।

## न्यायभाष्यम्

वृत्या च सम्बद्धयोः समुदायसमुदायिनोः समुदायेनेतरस्य ग्रहणं सम्भवः, तदप्यनुमानमेव। अस्मिन् सतीदं नोपपद्यत इति विरोधित्वे प्रसिद्धे कार्यानुत्पत्त्या कारणस्य प्रतिबन्धकमनुमीयते। सोऽयं यथार्थ एव प्रमाणोद्देश इति ॥ २ ॥

## न्यायवार्त्तिकम्

एव, दिवैव न भुङ्क्ते इति च, उभयप्राप्तौ न वक्तव्यं रात्रौ भुङ्क्ते इति। एतत् तु न सम्यगसम्भवात्—दिवा न भुङ्क्ते एव इत्ययमर्थोऽसम्भवेन निराकृतः। (१)न हि कश्चिद् दिवा भुङ्क्ते एव(१*) भुञ्जानोऽपि तावन्न भुङ्क्त एव किं पुनरभुञ्जान इति। तस्मादसम्भवेनार्थस्य निराकृतत्वात् कालप्रतिषेधोऽनेन दिवा न भुङ्क्त इति। अन्यथाऽनर्थकं स्यात्(२)क्रियान्तरप्रतिषेधनिवृत्तेरसम्भवेन निराकृतत्वात् कालप्रतिषेधस्यानभ्युपगमात् अनर्थकं वाक्यम्। भवत्वनर्थकं किं नो बाध्यते? यदभ्युपगतं तन्निवर्तते। किं चाभ्युपगतम्? क्रियान्तरप्रतिषेधः (३)न कालप्रतिषेध इति। (४)न चेदमनर्थकम्। तस्माद् द्वयोरेकतरप्रतिषेधे द्वितीयाभ्यनुज्ञानादनुमान-

## न्यायवार्त्तिकतात्पर्यटीका

निश्चयः,(क)अपि तु दिवा भुङ्क्त एव नेति भोजनादिक्रियाया याऽन्या आसनादिक्रिया तन्निषेधनिषेधेन रात्रिभोजनाक्षेपादिति। दिवैव न भुङ्क्त इत्यस्यैकस्य प्राप्तौ भवेद्रात्रौ भुङ्क्ते इति क्रियान्तरनिषेधाः, निषेधस्य च प्राप्तौ न वक्तव्यं रात्रौ भुङ्क्त इत्यर्थः। तदेतद् दूषयति—एतत्तु न सम्यगिति। (ख) प्राप्तिपूर्वका हि प्रतिषेधा भवन्ति। न चेह भुञ्जानस्याभुञ्जानस्य वा क्रियान्तराभावः प्रसक्तो येनासौ प्रतिषिध्यते भुङ्क्त एव नेति। न हि कश्चिद् (ग) भुङ्क्त एव (घ) न भुञ्जानो न वीक्षते, अन्ततोऽस्त्यादेरपि क्रियाया भावात्। व्यापृतः कदाचिन्न व्यापारान्तरं कुर्यादपि, किं पुनरव्यापृतः; स हि व्यापारान्तराण्यव्यासक्तः करोत्येवेत्यर्थः। उपसंहरति—तस्मादिति। कालप्रतिषेधः दिवैव भुङ्क्त इत्यस्य प्रतिषेध इत्यर्थः। क्रियान्तरप्रतिषेधनिवृत्तेरसंभवेन निराकृतत्वाद् अप्राप्तत्वान्न प्रतिषेध इति भावः। क्रियान्तरप्रतिषेध इति,

---

(१) 'न कश्चिद् दिवा भुङ्क्त एव' इति ख०। 'न हि कश्चिद् दिवा न भुङ्क्ते एव' इति क०। (२) 'क्रियान्तरनिवृत्तेरसम्भवेन' इति ख०। (३) 'यत्र कालप्रतिषेधः' इति ख०। (४) 'न चेदनर्थकम्' इति क०।

(क) अत्र 'अपि त्वि'ति दर्शनाद् 'गम्यते' इत्यत्रान्वययोग्यं प्रथमान्तपदमाकाङ्क्षितम्। तथाच "अपि तु 'दिवा भुङ्क्ते एव ने'ति भोजनादिक्रियाया याऽन्या आसनादिक्रिया तन्निषेधनिषेधः, तेन रात्रिभोजनानाक्षेपादिति, 'दिवैव न भुङ्क्त' इत्यस्यैकस्य प्राप्तौ भवेद् रात्रौ भुङ्क्ते इति, क्रियान्तरनिषेधनिषेधस्य च प्राप्तौ न वक्तव्यं रात्रौ भुङ्क्त इत्यर्थः" इति पाठो युक्त इत्यनुमीयते। अत्र भोजनादीत्यत्र आदिपदं कुत आगतमिति चिन्तनीयम्। (ख) 'प्राप्तिपूर्विका' इत्यादर्शपुस्तकयोः पाठः। (ग) अत्र वार्त्तिकगतं 'दिवे'ति परित्यक्तम्। (घ) न भुञ्जान इति, भुञ्जानो न वीक्षत इति नेत्यर्थः।

## न्यायभाष्यम्

नानैकान्तिकत्वमर्थापत्तेः—

### (सू०)—अनर्थापत्तावर्थापत्त्यभिमानात् ॥ ४ ॥

असति कारणे कार्यं नोत्पद्यत इति वाक्यात् प्रत्यनीकभूतोऽर्थः सति कारणे कार्यमुत्पद्यते इत्यर्थादापद्यते। अभावस्य हि (१)भावः प्रत्यनीक इति। सोऽयं कार्योत्पादः सति कारणेऽर्थादापद्यमानो न कारणस्य सत्तां व्यभिचरति। न खल्वसति कारणे कार्यमुत्पद्यते तस्मान्नानैकान्तिकी।

यत्तु सति कारणे निमित्तप्रतिबन्धात् कार्यं नोत्पद्यते इति, (२)कारणधर्मोऽसौ न त्वर्थापत्तेः प्रमेयम्। किं तर्ह्यस्याः प्रमेयम्? सति कारणे कार्यमुत्पद्यते इति(२*) योऽसौ कार्योत्पादः कारणस्य सत्तां न व्यभिचरति तदस्याः प्रमेयम्। एवं तु

## न्यायवार्त्तिकम्

हेतुश्च नास्ति हेतोः प्रतिज्ञाविशेषणत्वात्—यदनैकान्तिकं तदप्रमाणमिति प्रतिज्ञा तत्र हेतुर्नास्ति, न चायमर्थः साध्य इति हेत्वभावः। व्याघातश्चाभ्युपगमाद् याऽनैकान्तिक्यर्थापत्तिः सा प्रमाणं न भवतीति ब्रुवता ऐकान्तिकी सा प्रमाणमित्यभ्युपगतं भवति। अनर्थकं चेदमभिधानम्—याऽनैकान्तिक्यर्थापत्तिः सा न प्रमाणमिति ॥ ३ ॥

यामपि भवानर्थापत्तिं मन्यते साऽपि नानैकान्तिकी—

अनर्थापत्तावर्थापत्त्यभिमानात्। नेयमर्थापत्तिरनैकान्तिकी, अर्थापत्तिश्च सत्सु मेघेषु वृष्टिर्भवतीति, सेयमनैकान्तिकी कथम्—न सत्सु भवत्येवेति अपि तु सत्सु भवतीति, यत्तु सत्सु मेघेषु वृष्टिर्न भवतीति कारणप्रतिबन्धोऽसौ, न तदर्थापत्तेः प्रमेयम्; किं त्वस्याः प्रमेयं कारणे सति कार्यं

## न्यायवार्त्तिकतात्पर्यटीका

स्वमतेन दूषयित्वा सौत्रं दूषणमाह—यामपि भवानिति।

अन—नात् (सू० ४) ॥ न सत्सु मेघेषु वृष्टिर्भवत्येवेत्यर्थः, येन व्यभिचारो दृश्येत, अपि तु असत्सु न भवतीति; तथा च न व्यभिचार इत्यर्थः ॥ ४ ॥

## वृत्तिः

सत्यर्थापत्तेः प्रामाण्ये बहिर्भावान्तर्भावचिन्ता, तदेव तु नास्तीति तटस्थः शङ्कते—( अर्थापत्तिरिति )

असति मेघे वृष्टिर्न भवतीत्यनेन सति मेघे वृष्टिर्भवतीत्यर्थापत्तिविषयः, तत्र च न प्रामाण्यं सत्यपि मेघे वृष्ट्यभावाद् अनैकान्तिकत्वात् ॥ ३ ॥

---

(१) 'वाक्यात् प्रत्यनीकः' इति ग। (२) चयमंशः टि-पुस्तके नास्ति।

### न्यायभाष्यम्

सत्यनर्थापत्तावर्थापत्त्यभिमानं कृत्वा प्रतिषेध उच्यते इति। दृष्टश्च कारणधर्मो न शक्यः प्रत्याख्यातुमिति ॥ ४ ॥

## (सू०)—प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात् ॥ ५ ॥

अर्थापत्तिर्न प्रमाणम् अनैकान्तिकत्वादिति वाक्यं प्रतिषेधः। तेनानेनार्थापत्तेः प्रमाणत्वं प्रतिषिध्यते न सद्भावः, एवमनैकान्तिको भवति। अनैकान्तिकत्वादप्रमाणेनानेन न कश्चिदर्थः प्रतिषिध्यते इति ॥ ५ ॥

### न्यायवार्त्तिकम्

भवतीति, सेयमनैकान्तिकी कथं स्यात्। यद्यसत्यपि कारणे कार्यमुत्पद्यते (क) तत्तु न दृष्टमिति न कदाचिदनैकान्तिकत्वम् ॥ ४ ॥

प्रतिषेधाप्रामाण्यं चानैकान्तिकत्वात्। योऽयं भवता प्रतिषेधः क्रियते अर्थापत्तिर्न प्रमाणम् अनैकान्तिकत्वात्, अयमप्यनैकान्तिकः सत्ताऽप्रतिषेधात्—नानेन प्रतिषेधेनार्थापत्तेः सत्ता प्रति-

### न्यायवार्त्तिकतात्पर्यटीका

यदि तु यत्र विषयेऽर्थापत्तिरैकान्तिकी ततो विषयान्तरं कल्पयित्वाऽनैकान्तिकं देश्येत ततो यः प्रतिषेधविषयः प्रामाण्यमर्थापत्तेः ततो विषयान्तरमर्थापत्तेः सत्त्वं प्रतिषेधविषयं कल्पयित्वा प्रतिषेधस्याप्रामाण्यं शक्नुमो वक्तुम्। तथा च प्रतिषेधाप्रामाण्यान्नार्थापत्तेरप्रामाण्यमित्याह—

प्रति—त्वात् ( सू० ५ ) ॥ एवं ह्यैकान्तिकः प्रतिषेधः स्याद् यद्यर्थापत्तेः प्रामाण्यं सत्तां च प्रतिषेधति, न तु सत्त्वं प्रतिषेद्धुमर्हत्यनैकान्तिकत्वात्। न हि यदनैकान्तिकं तत् सर्वं नास्ति

### वृत्तिः

समाधत्ते—( अनर्थेति )

अर्थापत्तेर्नानैकान्तिकत्वमिति शेषः। असत्सु मेघेषु न वृष्टिरित्यनेन सति मेघे वृष्टिरिति, तत्र च वृष्ट्या मेघज्ञानमभिमतं यत्र च मेघेन वृष्टिज्ञानं तत्रानर्थापत्तावर्थापत्तिभ्रमः। न चैतावता प्रामाण्यविरोधः, व्याप्त्यादिभ्रमाद् भ्रमानुमितिदर्शनाद् अनुमानस्याप्यप्रामाण्यापत्तेः।

'नानैकान्तिकत्वमर्थापत्तेः' इति भाष्यस्थावतरणिकां सूत्रादौ केचिल्लिखन्ति ॥ ४ ॥

प्रतिबन्दिमप्याह—( प्रतिषेधेति )

त्वदुक्तरीत्या त्वदीयप्रतिषेधस्याप्यप्रामाण्यं स्यादनैकान्तिकत्वाद् यत्र कुत्रचिदनैकान्तिकत्वस्य प्रतिषेधासाधकत्वाद् अनैकान्तिकत्वात् ॥ ५ ॥

---

(क) तदाऽनैकान्तिकी स्यादिति शेषः।

## न्यायभाष्यम्

अथ मन्यसे नियतविषयेष्वर्थेषु स्वविषये व्यभिचारो भवति, न च प्रतिषेधस्य सद्भावो विषयः ? एवं तर्हि—

**(सू०)—तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम् ॥ ६ ॥**

अर्थापत्तेरपि कार्योत्पादेन कारणसत्ताया (१)अव्यभिचारो विषयः। न च कारणधर्मो निमित्तप्रतिबन्धात् कार्यानुत्पादकत्वमिति ॥ ६ ॥

## न्यायवार्त्तिकम्

षिध्यते। कथं न सत्ताप्रतिषेधः ? यस्मादर्थापत्तेर्विशेषः प्रतिषिध्यते नार्थापत्तिमात्रं तेन सत्ताऽप्रतिषेधादनैकान्तिको भवति ॥ ५ ॥

अथ मन्यसे न प्रतिषेधस्य सत्त्वं विषयः किं तु प्रमाणत्वम्, सोऽयं प्रतिषेधः स्वविषये प्रवर्तमानो नानैकान्तिको भवितुमर्हतीति ; अनैकान्तिको हि नाम स ज्ञेयो यः स्वविषयतज्जातीयान्यवृत्तिः, न चानैकान्तिकत्वं प्रामाण्यप्रतिषेधेऽस्ति, तस्माच्चानैकान्तिकः प्रतिषेध इति—

तत्प्रामाण्ये वा नार्थापत्त्यप्रामाण्यम्। यदि स्वविषयतज्जातीयान्यवृत्तिरनैकान्तिक इति मन्यसे ? अर्थापत्तिरपि तर्ह्यनैकान्तिकी न भवति, न ह्यसति कारणे कार्यमुत्पद्यमानं दृष्टमिति। तदिदं सूत्रं व्याघातदेशनार्थम्। यदुक्तं भवता स्वविषयादन्यत्र वर्तमानमनैकान्तिकं भवति अर्थापत्तिश्चानैकान्तिकीति व्याहतम्। अज्ञानं वा—अथाबुद्ध्वैवानैकान्तिकव्यवहारमिदमुच्यते

## न्यायवार्त्तिकतात्पर्यटीका

प्रमेयत्वादीनां नित्यत्वसाधने अनैकान्तिकानां सत्त्वात्। यस्मादर्थापत्तेर्विशेष इति अर्थापत्तेर्विशेषः प्रामाण्यं न ह्यर्थापत्तिमात्रं सत्तेति ॥ ५ ॥

न चानैकान्तिकत्वं प्रमाणत्वप्रतिषेधेऽस्तीति यदि मन्यते पूर्वपक्षी एवं तर्हि—

तत्प्रा—ण्यम् ( सू० ६ ) ॥ (क) विप्रतिपत्तिरप्रतिपत्तिर्वा निग्रहस्थानमिति वदत इत्यर्थः।

याऽपि मीमांसाभाष्यकृताऽर्थापत्तिरुदाहृता (ख) जीवतश्चैत्रस्य गेहाभावदर्शनेन बहिर्भाव-

## वृत्तिः

अथ यत्र कुत्रचिदनैकान्तिकत्वं न दोषाय, किन्तु स्वविषय इति यदि, तदाऽर्थापत्तेरपि नाप्रामाण्यमित्याह—( तत्प्रामाण्य इति )

---

(१) 'व्यभिचारो' इति टि०।

(क) अथाबुद्ध्वैवेत्यादिवार्तिकं विभजते विप्रतिपत्तिरिति।

(ख) तथाच "अर्थापत्तिरपि 'दृष्टः श्रुतो वाऽर्थोऽन्यथा नोपपद्यते' इत्यर्थकल्पना। यथा जीवति देवदत्ते गृहाभावदर्शनेन बहिर्भावस्यादृष्टस्य कल्पना" इति शबरस्वामिपादाः ( जै० सू० ५, भाष्यम्, अ० १, पा० १ )

### न्यायभाष्यम्

अभावस्य तर्हि प्रमाणभावाभ्यनुज्ञा नोपपद्यते। कथमिति ?

## (सू०)—नाभावप्रामाण्यं प्रमेयासिद्धेः ॥ ७ ॥

अभावस्य भूयसि प्रमेये लोकसिद्धे (१,क)वैयात्यादुच्यते नाभावप्रामाण्यं प्रमेयासिद्धेरिति ॥ ७ ॥

### न्यायवार्त्तिकम्

अर्थापत्तिरप्रमाणमनैकान्तिकत्वादिति, तत्रोपेक्षया वर्तितव्यं नोन्मत्तवाक्यानि प्रतिसन्धेयानीति ॥ ६ ॥

### न्यायवार्त्तिकतात्पर्यटीका

स्यादृष्टस्य कल्पनेति, तदप्यनुमानमेव। यदा खलु सन्नेकत्र नास्ति तदाऽन्यत्रास्ति यदा वाऽव्यापक एकत्रास्ति तदाऽन्यत्र नास्ति, सोऽयं स्वशरीर एव व्याप्तिग्रहः सुकरः। तथा च सतो गेहाभावदर्शनेन लिङ्गेन बहिर्भावदर्शनमनुमानम्, न च तस्य सत्त्वेन गेहाभावः शक्योऽपह्नोतुं येनासिद्धो गेहाभावो न हेतुः स्यात्; गेहाभावेन वा सत्त्वमपह्नूयेत येन सत्त्वमेवानुपपद्यमानं न स्वात्मानं बहिरवस्थापयेत्। तथा हि सत्त्वमात्रं वा विरुध्यते चैत्रस्य गेहाभावेन गेहसत्त्वं वा चैत्रस्य, न तावद् यत्र क्वचन सत्त्वस्यास्ति विरोधो गेहे असत्तया समानविषयत्वाभावात्। देशसामान्येन गृहविशेषाक्षेपोऽपि पाक्षिक इति समानविषयतया विरोध इति चेत्—न ; प्रमाणविनिश्चितस्य सांशयिकेन प्रतिक्षेपायोगात्। नापि प्रमाणविनिश्चितोऽभाव एव पाक्षिकं तस्य गृहसत्त्वं प्रतिक्षिपन् सत्त्वमपि प्रतिक्षेप्तुं सांशयिकत्वं वाऽपनेतुमर्हतीति युक्तम्, गृहावच्छिन्नाभावेन गृहसत्त्वं विरुद्धत्वात् प्रतिषिध्यते न तु सत्त्वमात्रं तत्र तस्यौदासीन्यात्। तस्माद् गृहाभावेन सिद्धेन सतो बहिर्भावोऽनुमीयत इति युक्तम्। एतेन विरुद्धयोः प्रमाणयोरविरोधापादनं विषयव्यवस्थया अर्थापत्तिविषयः परास्तः, अवच्छिन्नानवच्छिन्नयोरविरोधात्। तस्माद् नानुमानात् प्रमाणात् प्रमाणान्तरमर्थापत्तिरिति स्थितम् ॥ ६ ॥

### वृत्तिः

अनैकान्तिकत्वस्य स्वविषये साधकत्वाद् यदि स्वहेतोः प्रामाण्यं मन्यसे, तदाऽर्थापत्तेरपि स्वविषये प्रामाण्यमिति ॥ ६ ॥

अभावस्य न प्रमाणेष्वन्तर्भाव इति तटस्थः शङ्कते—( नाभावेति )

अभावनामकं प्रमाणं तदा स्याद् यदि तस्य प्रमेयं सिध्येत्, तदेव तु नास्ति। अभावस्य तुच्छत्वान्न तत्र प्रमाणप्रवृत्तिरिति भावः ॥ ७ ॥

---

(१) 'वैजात्या-' ज०।

(क) वियातो धृष्टः, तद्भावो वैयात्यम्। 'धृष्टे धृष्णग् वियातश्च' इत्यमरः। 'वैयात्यं सुरतेष्विव' इति माघे (२।४)।

## न्यायभाष्यम्

अथायमर्थबहुत्वादर्थैकदेश उदाह्रियते—

**(सू०)—लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः(१) ॥ ८ ॥**

## न्यायवार्त्तिकम्

नाभावप्रामाण्यं प्रमेयासिद्धेः। नाभावः प्रमाणं विषयाभावात्—यदविषयं तदप्रमाणम्, यथा गोशब्दोऽश्वप्रतिपादने, तथा चाभावस्तस्मादप्रमाणम्।

कश्चैवमाहाभावः प्रमाणम्, अपि त्वभावविषया प्रतिपत्तिः प्रमाणम्, तया प्रमीयत इति। कः पुनरस्या (क)विषयः? भाव इत्युक्तम् ॥ ७ ॥

## न्यायवार्त्तिकतात्पर्यटीका

नाभा—द्धेः ( सू० ७ ) ॥ नाभावज्ञानं प्रमाणम्। कस्मात्? प्रमेयस्याभावस्यासिद्धेः; नो खलु सर्वोपाख्यारहितं प्रमाणज्ञानविषयभावमनुभवति, केवलं काल्पनिकोऽयमभावव्यवहारो लौकिकानामिति पूर्वपक्षः।

सिद्धान्तमाह—अभावस्य भूयसीति। सर्वजनीनाभावप्रत्ययव्यवहारौ न काल्पनिकौ भवितुमर्हतः। न च कल्पनाऽपि सर्वोपाख्यारहितं गोचरयितुमर्हतीत्युक्तं विपरीतख्यातिसाधनावसरे। क्षणभङ्गभङ्गावसरे च तस्योपाख्येयत्वमुपपादयिष्यते। तस्मादस्य प्रामाण्याद्युक्तः प्रमाणान्तर्भावः।

तदेतत् सर्वं वार्तिककारो व्याचष्टे—नाभावः प्रमाणमिति।

यथोक्तं दूषयति—कश्चैवमाहेति। अभावो हि प्रमेयमुच्यते, न तत्स्वरूपेण प्रमाणमपि तु तद्विषया प्रतिपत्तिः। सा च प्रत्यक्षफलमुपादानादिबुद्धौ प्रमाणं यथा अग्रे तथा वक्ष्यते। वर्षाभावप्रत्ययस्तु वाय्वभ्रसंयोगेऽनुमानमुक्तम् ॥ ७ ॥

---

(१) '-सिद्धिः' इति भा०।

(क) 'अस्याः' अभावप्रतिपत्तेः, 'विषयः' फलीभूतज्ञानविषयः, प्रमेयम् इत्यर्थः। अत्राऽऽदर्शपुस्तकयोः 'विषयोऽभाव' इति पाठश्चिन्त्यः, 'न चतुष्ट्व'मित्यादिसूत्रभाष्ये अभावप्रमाणस्य भावरूपो वायुभ्रसंयोगः प्रमेयमित्युक्तत्वात्। अथ भावस्यापि अभावप्रमाणं प्रति प्रमेयत्वे सूत्रे 'प्रमेयासिद्धे'रिति सङ्गतमिति चेन्न, प्रमाणत्वेनाभ्युपगतस्याभावप्रमाणज्ञानस्य विषयो योऽभावस्तस्यासिद्धेरिति तदर्थात्। तथाच भावातिरिक्ताभावस्थापनमेव परीक्षार्थ इति बोध्यम्। व्यक्तीभविष्यति चेदं तात्पर्यटीकायाम्। एतेन मीमांसकसम्मतोऽनुपलब्ध्यपरनामा अभावोऽत्र प्रमाणान्तरत्वेनाऽऽशङ्क्य खण्डित इति शङ्का निरस्ता।

## न्यायभाष्यम्

(१)तस्याभावस्य सिध्यति प्रमेयम्। कथम्? लक्षितेषु वासःसु अनुपादेयेषु उपादेयानामलक्षितानामलक्षणलक्षितत्वाद् लक्षणाभावेन (२)लक्षितत्वादिति(१*)। उभयसन्निधावलक्षितानि वासांस्यानयेति प्रयुक्तो येषु वासःसु लक्षणानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यते, प्रतिपद्य चाऽऽनयति, प्रतिपत्तिहेतुश्च प्रमाणमिति ॥८॥

## (सू०)—असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः ॥९॥

यत्र भूत्वा किञ्चिन्न भवति तत्र तस्याभाव उपपद्यते। (३)न चालक्षितेषु वासःसु (३*) लक्षणानि (४)भूत्वा न भवन्ति, तस्मात्तेषु (५)लक्षणाभावोऽ-

## न्यायवार्त्तिकम्

तत्रानेकधा भिन्नस्याभावप्रपञ्चस्योदाहरणार्थं सूत्रम्—

लक्षितेष्वलक्षणलक्षितत्वादलक्षितानां तत्प्रमेयसिद्धेः। अलक्षितानि वासांस्यानयेति प्रयुक्तः उभयसन्निधौ येषु वासःसु लक्षणानि न पश्यति तानि लक्षणाभावेनैव प्रतिपद्यते, प्रेषणसम्प्रतिपत्त्योरेकविषयत्वात्, प्रतिपद्य चाऽऽनयति प्रतिपत्तिहेतुश्च प्रमाणम्। तस्मात् सिध्यत्यभावस्य प्रमेयम् ॥ ८ ॥

असत्यर्थे नाभाव इति चेन्नान्यलक्षणोपपत्तेः। असत्यर्थे नाभाव इति चेत्? अथ मन्यसे यत्र यद्भवति तत्र तस्याभावः, न चालक्षितेषु वासःसु लक्षणानि भवन्ति, तस्मान्न

## न्यायवार्त्तिकतात्पर्यटीका

लक्षि—द्धेः (सू० ८) ॥ प्रतिपद्य चाऽऽनयतीति लक्षणाभावेन विशेषणेनावच्छिन्नान्यानेतव्यत्वेन प्रतिपद्याऽऽनयति। एतदुक्तं भवति—लक्षणाभावज्ञानं विशिष्टे वाससि प्रत्ययं जनयत् साधकतमत्वात् प्रमाणं भवति ॥ ८ ॥

अस—त्तेः ( सू० ९ ) ॥ भावाधीननिरूपणत्वात् प्राप्तिपूर्वकत्वाच्च प्रध्वंस एवाभावः, तस्य

## वृत्तिः

सिद्धान्तसूत्रम्—( लक्षितेष्विति )

तस्य अभावप्रमाणस्य प्रमेयसिद्धिः, भावप्रधानो निर्देशः। किं तत्प्रमेयमित्यतआऽऽह—लक्षितेष्विति। लक्षितेषु घटादिषु सत्सु अलक्षितानां तत्प्रमेयत्वसिद्धिः। अलक्षितानां कथं प्रमेयत्वमत आह—अलक्षणलक्षितत्वादिति। यद्यप्यभावस्य गुणकर्मादिभिर्लक्षणं न सम्भवति, तथाप्यलक्षणेनैव तल्लक्षितं भवति। अनीलमानयेत्युक्ते नीलाभावो हि इतरव्यावर्तकतया लक्षणम् अतोऽभावो नाप्रामाणिक इति भावः ॥ ८ ॥

---

(१) अयमंशः ठि-पुस्तके नास्ति। (२) 'लक्षितत्वात्' फ०। (३) 'अलक्षितेषु च वासःसु' इति ग-ज-फ०। (४) 'न भूत्वा न भवन्ति' फ० 'भूत्वा न न भवन्ति' भा०। (५) अयमंशः वि-पुस्तके नास्ति।

## न्यायभाष्यम्

नुपपन्न इति। नान्यलक्षणोपपत्तेः—यथाऽयमन्येषु वासःसु (५*)लक्षणानामुपपत्तिं पश्यति नैवमलक्षितेषु। सोऽयं लक्षणाभावं पश्यन्नभावेनार्थं प्रतिपद्यते इति ॥ ६ ॥

## न्यायवार्त्तिकम्

तत्र न भवन्तीति ; न अपरिज्ञानात्—न भवताऽस्मदभिप्रायोऽबोधि ; न ब्रूमो यत्र यद्भवति तत्र तन्न भवतीति, अपि तु लक्षितानि वासांस्युपलभमानं इतराणि लक्षणाभावविशिष्टानि प्रतिपद्यत इति। अयथार्थोऽयमुपालम्भः प्रयुज्यत इति अत उक्तार्थं सूत्रम्—नान्यलक्षणोपपत्तेरिति ॥ ९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

भावपूर्वकत्वात्, नान्योऽस्त्यभाव इति मन्वानस्य पूर्वपक्षः। नापरिज्ञानादिति। प्रत्यक्षं हि प्रमाणं प्रमेयाभावं व्यवस्थापयति, तच्च प्रध्वंसवत् प्रागभावेऽपि तुल्यम्। प्रतियन्ति हि लौकिका (क)दध्नि क्षीराभावमिव क्षीरे दध्यभावम्। ननु सूत्रम् अन्येषु वासःसु (ख)लक्षणानां भावरूपाम् उपपत्तिं सद्भावमाह न त्वभावोपलब्धिं (ग)ब्रूते तत्कुतो न विरोध इत्यत आह—अत उक्तार्थं सूत्रमिति, व्यतिरेकमुखेन सूत्रस्योक्तोऽर्थः। अत एवाऽऽह भाष्यकारः—नैवमलक्षितेष्विति। लक्षणादर्शनेन हि लक्षणाभावदर्शनमुपलक्षितम् ॥ ९ ॥

## वृत्तिः

आक्षिप्य समाधत्ते—( असत्यर्थे इति )

असति प्रतियोगिन्यभावो वक्तुं न शक्यते। सति च प्रतियोगिनि कथं तदभाव इति चेत्? न, अन्यत्र लक्षणेन सत्त्वेन अर्थात् प्रतियोगिन उपपत्तेः अभावोपपत्तेः। नहि तत्रैव प्रतियोगिनः सत्त्वमपेक्षितम् ॥ ९ ॥

---

(क) दध्नि क्षीराभावमिवेति, दध्नि सति क्षीरसमवायिवृत्तिक्षीरध्वंसमिवेत्यर्थः। तेन क्षीरासमवायितया दध्नि क्षीरध्वंसस्यासत्त्वेऽपि न दोषः, न वा दध्नि क्षीराभावस्यात्यन्ताभावरूपतया पूर्ववाक्योक्तस्य सोदाहरणासङ्गतिः। नापि 'नास्त्यन्योऽभाव' इति मन्वानस्य पूर्वपक्षिणो मते अत्यन्ताभावस्यापि असिद्धत्वेन तस्य दृष्टान्तत्वे विरोधः। क्षीरे दध्यभावमित्यत्र प्रागभावः स्पष्टः। न चैतावता प्रागभाव एव प्रमाणोक्त्या अत्यन्ताभावोऽनभिमत इति भ्रमितव्यम्, अभावप्रमाणोदाहरणे वर्षकर्माभावस्य प्रागभावरूपस्यैव प्रकृतत्वेन तन्मात्रे प्रमाणोक्तौ दोषाभावादिति ध्येयम्। (ख) अत्राऽऽदर्शपुस्तकयोः 'लक्षणाभावरूपाणामुपपत्तिं' इति प्रामादिकः पाठः शोधितः। (ग) आदर्शपुस्तकयोः 'ब्रूषे' इति पाठः।

## (सू०)—तत्सिद्धेरलक्षितेष्वहेतुः ॥ १० ॥

### न्यायभाष्यम्

तेषु वासःसु लक्षितेषु सिद्धिर्विद्यमानता येषां भवति न तेषामभावो लक्षणानाम्। यानि च लक्षितेषु विद्यन्ते लक्षणानि (१)तेषामलक्षितेष्वभाव इत्यहेतुः। यानि खलु भवन्ति तेषामभावो व्याहत इति ॥ १० ॥

## (सू०)—न (२)लक्षणावस्थितापेक्षसिद्धेः ॥ ११ ॥

न ब्रूमो यानि लक्षणानि भवन्ति तेषामभाव इति, किं तु (३)केषुचिल्लक्षणान्यव-स्थितानि (४)अनवस्थितानि केषुचित्, अपेक्षमाणो येषु लक्षणानां भावं न पश्यति तानि लक्षणाभावेन प्रतिपद्यत इति ॥ ११ ॥

### न्यायवार्त्तिकम्

तत्सिद्धेरलक्षितेष्वहेतुः। यानि तानि लक्षितेषु वासःसु लक्षणानि (५)तानि न कस्यचिन्न सन्तीति, यानि च सन्ति तेषामभावो व्याहतः। अत्रोक्तं नापरिज्ञानादिति ॥ १० ॥

अस्य वार्थस्य ज्ञापनार्थं सूत्रम्—

न लक्षणावस्थितापेक्षसिद्धेः। न ब्रूमो यानि भवन्ति तेषां तत्रैवाभाव इति, अपि तु केषुचिल्लक्षणान्यवस्थितान्यपेक्ष्य येषु तानि न भवन्ति तानि लक्षणाभावेन प्रतिपद्यत इति ॥ ११ ॥

### न्यायवार्त्तिकतात्पर्यटीका

तत्सि—तुः ( सू० १० )॥ यानि तानि लक्षितेष्विति। न कस्यचित् लक्षितस्य न सन्ति, यानि च सन्ति तेषामभावो व्याहतः। एतदुक्तं भवति, यत्र लक्षणानि सन्ति तत्र तेषामभावो व्याहतः, यत्र च न सन्ति तत्राप्यभावोऽनुपपन्नः तस्य भावाधीननिरूपणस्य तदभावेऽशक्यनिरूपणत्वादिति। परिहरति—नापरिज्ञानादिति। भावज्ञानाधीननिरूपणो भवत्य-भावो न तु भावाधीननिरूपणः, प्रागभावोऽपि च शक्यो भविष्यद्भावज्ञानेनान्यत्रावस्थितभावज्ञानेन वा निरूपयितुमिति न प्रागभावाभाव इत्यर्थः ॥ १० ॥

न ल—द्धेः ( सू० ११ ) ॥ (क)

### वृत्तिः

शङ्कते—( तत्सिद्धेरिति )

लक्षितेषु लक्षणस्य तत्सिद्धेः व्यावर्त्तकत्वसिद्धेः, अलक्षितेषु अभावेषु अहेतुः अहेतुत्वं व्यावृत्त्यहेतुत्वम् अभावस्य लक्षणाभावात्; निःस्वरूपस्य न व्यावर्तकत्वमिति भावः ॥ १० ॥

---

(१) 'तेषामलक्षितेषु भावः' इति टि०। (२) 'लक्षणावस्थितापेक्षासिद्धेः' इति ग-ख-भा०। (३) 'केषुचिल्लक्षणान्यपेक्षमाणो' इति टि०। (४) 'अनवस्थानि' ज०। (५) 'तानि कस्यचिन्न सन्तीति' ख।

(क) ११श-सूत्रस्य तात्पर्यटीका नोपलभ्यते।

## (सू०)—प्रागुत्पत्तेरभावोपपत्तेश्च ॥ १२ ॥

### न्यायभाष्यम्

अभावद्वैतं खलु भवति प्राक् चोत्पत्तेरविद्यमानता, उत्पन्नस्य चाऽऽत्मनो हाना-द्विद्यमानता। तत्रालक्षितेषु वासःसु प्रागुत्पत्तेरविद्यमानतालक्षणो लक्षणानामभावो नेतर इति ॥ १२ ॥

### न्यायवार्त्तिकम्

( प्रमाणचतुष्ट्वपरीक्षा )

प्रागुत्पत्तेरभावोपपत्तेश्च। अभावद्वैतं खलु भवति प्रागुत्पत्तेरविद्यमानता ऊर्ध्वं च विनाशादविद्यमानतेति। तत्र योऽयं विनाशादभावो लक्षणानाम् अलक्षितेषु वासःसु सोऽनुपपन्नो नेतर इति। "असत्यर्थे नाभावः" "तत्सिद्धेरलक्षितेष्वहेतु"रिति उभे अप्येते छलसूत्रे। छल-स्योक्तमुत्तरं ज्ञात्वाऽज्ञात्वा वा (१)ऽसम्बन्धत्वमज्ञानं वेति तस्मादप्रयोज्यं छलमिति ॥ १२ ॥

### न्यायवार्त्तिकतात्पर्यटीका

प्रागु—श्च ( सू० १२ )॥ अभावद्वैतमिति प्रकृतापेक्षम्, प्रकृतं प्रध्वंसमात्रवादिनं प्रति प्रागभावप्रतिपादनम्। परमार्थतस्तु प्रथममभावे द्वैतं तादात्म्याभावः संसर्गाभावश्चेति। संसर्गाभावोऽपि प्राक्प्रध्वंसात्यन्ताभावभेदेन त्रिविध इति चतस्रो विधा अभावस्येति। "असत्यर्थे नाभावः" "तत्सिद्धेरलक्षितेष्वहेतु"रिति (क)चोभे अप्येते छलसूत्रे इति। यो योऽभावः स (ख)सर्वः सत्यर्थे भवति यथा प्रध्वंसः, न च तथा लक्षणाभाव इति सामान्यच्छलम्। तत्सिद्धेरिति तु वाक्छलम्, (ग) यानि लक्षणानि भवन्ति कथं तान्येव न भवन्तीति हि तस्यार्थः ॥ १२ ॥

### वृत्तिः

समाधत्ते—( न लक्षणेति )

पूर्वपक्षो न युक्तः प्रतियोगिनो लक्षणस्य यदवस्थितम् अवस्थानं तस्यापेक्षा यत्र तादृश-सिद्धेः। अयमर्थः—प्रतियोगिस्वरूपज्ञानादेवाभावस्वरूपनिरूपणसम्भवान्नाभावलक्षणा-पेक्षेति भावः ॥ ११ ॥

( प्रागुत्पत्तेरिति )

प्रमेयसिद्धिरिति मण्डूकप्लुत्याऽनुवर्तते। प्रतियोगिन उत्पत्तेः प्राग् अभावस्योपपत्ते-

---

(१) '-ऽसम्बन्धमज्ञातं वा' इति ख०।

(क) वार्त्तिके चकारो न दृश्यते। (ख) अत्र सर्व इत्यनेन अतिसामान्ययोगो दर्शितः। तथाहि ध्वंसरूपोऽभावः प्रतियोगिनः कदाचित् प्रसिद्धौ तदधिकरणे भवतीति सम्भवन्नर्थः, तस्य प्रतियोगिनि स्वाधिकरणे विद्यमान एव तत्र वृत्तित्वमभावमात्रस्येति अतिसामान्ययोगादसम्भवदर्थकल्पनया व्याघात उक्त इति सामान्यच्छलमिति भावः। (ग) यानीति। लक्षणानि भवन्तीति धर्मिविशेषमनिर्दिश्योक्तम्, लक्षणानि यत्र भवन्ति तत्रैव न भवन्तीति तु वक्तुरनभिप्रेतमर्थान्तरमत्र कल्पितमिति वाक्छलमिति भावः।

## न्यायभाष्यम्

"आप्तोपदेशः शब्द" इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते। तस्मिन् सामान्येन विचारः—किं नित्योऽथानित्य इति।

(क) विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः। आकाशगुणः शब्दो (१)विभुर्नित्योऽभिव्यक्तिधर्मक इत्येके।

## न्यायवार्त्तिकम्

"आप्तोपदेशः शब्द" इति प्रमाणभावे विशेषणं ब्रुवता नानाप्रकारः शब्द इति ज्ञाप्यते। कथम्? नासति भेदे विशेषणमर्थवत् न चानर्थकं विशेषणं युक्तमिति—युक्तो नानाभूतः शब्दो विशेषणसामर्थ्यादिति। तस्मिन् सामान्येन विचारः नित्योऽनित्यो वा। 'विचारः' परीक्षा।

विमर्शहेत्वनुयोगे च विप्रतिपत्तेः संशयः। विप्रतिपत्तिशब्दस्योक्तोऽर्थः। तत्र आकाशगुणः शब्दः महत्त्ववदभिव्यक्तिधर्मेत्येके—एके तावद् ब्रुवते नित्यः शब्द इति, अविनश्यदाधारैकद्रव्याकाशगुणत्वात्—यदविनश्यदाधारैकद्रव्यमाकाशगुणश्च तन्नित्यं दृष्टम्, यथा

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं शब्दपरीक्षां प्रस्तुत्य तस्य प्रामाण्यं परीक्ष्य विभागोद्देशः परीक्षितः। संप्रति शब्दपरीक्षाशेषं वर्तयन्नाह—आप्तोपदेशः शब्द इति। संशयकारणं विप्रतिपत्तिं दर्शयन् जरन्मीमांसकानां मतमाह—आकाशगुणः शब्द इति। अभिघातप्रेरितेन हि वायुना यावद्वेगमभिप्रतिष्ठमानेन कर्णशष्कुल्यवच्छिन्ननभोभागसमवेतः नित्यः शब्दो व्यज्यत इति। तदेतद्वार्त्तिककारो व्याचष्टे—एके तावदिति। अविनश्यदाधारमपि संयोगाद्यनित्यमित्यत आह—एकद्रव्यमिति। तथाऽपि पार्थिवाणुगतै रूपादिभिरनैकान्तिकमत आह—आकाशगुणश्चेति। एकद्रव्यत्वे

## वृत्तिः

रुपलम्भाद् घटो भविष्यतीत्यादिप्रागभावविषयकप्रत्यक्षस्य सार्वलौकिकत्वादिति भावः। चकारेण ध्वंसादेरपि प्रत्यक्षसिद्धत्वं समुच्चीयते।

चेष्टाया निर्व्यापारत्वेन न प्रामाण्यम्। वस्तुतो लिप्यादिवत् साङ्केतिकत्वात् तस्या अप्यनुमाने शब्दे वाऽन्तर्भाव इति ॥ १२ ॥

समाप्तं प्रमाणचतुष्ट्वप्रकरणम् ॥ १ ॥

---

(क) इदं सूत्रमिति केचित्।

(१) 'विभुत्वन्नित्यः' इति टि०।

## न्यायभाष्यम्

गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मक इत्यपरे।

आकाशगुणः शब्द उत्पत्तिनिरोधधर्मको बुद्धिवदित्यपरे।

महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिधर्मको निरोधधर्मक इत्यन्ये। अतः संशयः किमत्र तत्त्वमिति।

## न्यायवार्त्तिकम्

आकाशमहत्त्वम्, तथा शब्दस्तस्मान्नित्य इति। सोऽयं नित्यः सन्नभिव्यक्तिधर्मा तस्याभिव्यञ्जकाः संयोगविभागनादा इति।

गन्धादिसहवृत्तिर्द्रव्येषु सन्निविष्टो गन्धादिवदवस्थितोऽभिव्यक्तिधर्मेत्यपरे—अपरे पुनर्ब्रुवते गन्धादिभिः सह सन्निविष्टः शब्दो गन्धादिवदेवाभिव्यज्यते तस्याभिव्यञ्जका भूतविशेषाभिघाता इति।

आकाशगुणः शब्द उत्पत्तिनिरोधधर्मेति चान्ये—अन्ये पुनर्वर्णयन्ति अनित्यः शब्द आकाशगुण उत्पत्तिनिरोधधर्मक इति।

महाभूतसंक्षोभजः शब्दोऽनाश्रित उत्पत्तिनिरोधधर्मेति चापरे। अतः संशयः किमत्र तत्त्वमिति।

अनित्य इत्येतत् तत्त्वम्। किमिदमनित्यत्वं नाम ? यतोऽनित्य इति भवति। किं पुनस्तत् ? प्राक्प्रध्वंसाभावावित्येके—एके तावद्वर्णयन्ति यस्य प्राक्प्रध्वंसाभावौ स्तः तदनित्यमिति। नासम्बन्धात्—न हि प्राक्प्रध्वंसाभावाभ्यां भावः सम्बध्यत इति। अनुत्पन्नविनष्टयोश्च प्रसङ्गात्—यदि च प्राक्प्रध्वंसाभावावनित्यतेति मन्यसे अनुत्पन्ने वस्तुनि प्रागभावोऽस्ति

## न्यायवार्त्तिकतात्पर्यटीका

सत्याकाशगुणत्वादित्येतावताऽभिमतसिद्धेरविनश्यदाधारत्वं तत्प्रपञ्चार्थं वेदितव्यम्। संयोगविभागनादा इति। भेरीदण्डसंयोगप्रेरितो वायुः कर्णशष्कुलीमन्तमाकाशं प्राप्तः शब्दस्य व्यञ्जकः, एवं वंशदलविभागप्रेरितो वायुः शब्दस्य व्यञ्जक इति द्रष्टव्यम्। संयोगविभागौ पारम्पर्येण नादस्तु साक्षादिति।

सांख्यीयमतमाह—गन्धादिसहवृत्तिरिति। पञ्चतन्मात्रोत्पन्न(क)भूतसूक्ष्मसमुदायारब्धपृथिव्यादिविकारो गोघटादिवृत्तिः शब्दो योग्यदेशस्य आहंकारिकतया व्यापकं विषयदेशस्थं श्रोत्रेन्द्रियं विकुर्वन्नवस्थित एव गृह्यते। तदेतदाह—अपरे पुनरिति। भूतविशेषाभिघाता इति, भेरीदण्डाभिघाता इत्यर्थः।

वैशेषिकमतमाह—आकाशगुण इति।

बौद्धराद्धान्तमाह—महाभूतसंक्षोभज इति।

नासंबन्धादिति। यदा भावोऽस्ति तदा (ख)प्राक्प्रध्वंसाभावान्नानित्यत्वम्। अनुत्पन्न-

(क) अत्र भूतसूक्ष्मसमुदायारब्धेति पञ्चतन्मात्रोत्पन्नेत्यस्य विवरणं कथमपि टीकायामन्तर्भूतमिति सम्भाव्यते। (ख) अत्र प्राक्प्रध्वंसाभावाभावादिति युक्तः पाठः।

## न्यायवार्त्तिकम्

ऊर्ध्वं च वस्तुनः प्रध्वंसाभावोऽस्तीति (क)असति प्राक्प्रध्वंसाभावेऽनिमित्ततोऽनित्यप्रत्ययः स्यात्। अनित्यस्य भावोऽनित्यतेति प्राक्प्रध्वंसाभावयोरभावत्वाद्भावशब्देनानभिधानम्—अनित्यं नाम (ख)यस्य नास्त्यत्यन्तं भावः, तस्यानित्यस्य यो भावः साऽनित्यता, प्राक्प्रध्वंसाभावौ च भावप्रतिषेधौ, न चाभावो भावाभिधानेन (१)वक्तुं युक्तः। तस्मान्न प्राक्प्रध्वंसाभावावनित्यतेति। षष्ठ्यर्थश्च नास्ति—"तस्य भावस्त्वतलावि"ति तस्येति धर्म्यपदिश्यते भाव इति धर्मिणो धर्मः; न चाभावो धर्मः, न च धर्मकाले तच्छब्दवाच्यो धर्मी विद्यते न चाविद्यमानस्य षष्ठ्या योग इति। अथ यद्भवति तत्प्राङ् न भवति ऊर्ध्वं च न भवतीति मन्यसे, एवमपि न किञ्चित् प्रतिषिद्धम्, वयमपि ब्रूमः यत् प्राङ् न भवति तदूर्ध्वं न भवतीति, षष्ठ्यर्थस्तु पूर्ववन्नास्ति। घटस्य प्रागभावो घटस्य प्रध्वंसाभाव इति एतत् कथम्? नात्र षष्ठ्या सम्बन्धोऽभिधीयते अपि तु प्रागिदं वस्तु नाऽऽसीत्(२) पश्चाज्जातमित्यर्थः, ऊर्ध्वं च विनाशादिदं वस्तु न भविष्यतीति अनित्यमित्युच्यते तस्य च भावोऽनित्यतेति। वर्तमाने चासम्भवात्—यदि

## न्यायवार्त्तिकतात्पर्यटीका

विनष्टयोश्च प्रसङ्गादिति। न तावत्प्राक्प्रध्वंसाभावयोः सहभावोऽस्ति तस्मात् प्रत्येकमेव (३)तावदनित्यत्वम्; तथा चानुत्पन्ने वस्तुनि नष्टे वाऽनित्यत्वप्रसङ्गः। नचेदं दृष्टमिष्टं वा भावधर्मत्वेनानित्यत्वस्य प्रतीतेरनित्यो घट इति। (ग)न केवलमनित्यत्वस्य भाव इति परमस्मिन् पक्षे न युज्यते षष्ठ्यर्थश्च नास्ति। कस्माद् भावस्याभावो धर्मो (घ)न भवतीत्यत आह—न च धर्मकाल इति। चो हेत्वर्थे। शङ्कते—अथेति। भवन्नेव हि यस्मात् प्राग् न भवति पश्चाच्च तस्मात्तस्याभाव इति षष्ठ्युपपत्तिरित्यर्थः। उत्तरम्—एवमपीति। सत्यं भवन्नेव न भवतीति न त्वेतावताऽस्याभावसंबन्धो भिन्नकालत्वात्। तस्मान्नास्मदुक्तं किंचित् प्रतिषिद्धमित्यर्थः। लोकविरोधमुद्भावयति—घटस्य प्रागभाव इति। असंबन्धे षष्ठीप्रयोगोऽयं भाक्तः भावाधीननिरूपणत्वं च भक्तिरित्यर्थः। अपि च वर्तमानवस्तु नित्यमित्युच्यते तस्य भावो नित्यता भवतु किमेतावताऽपीत्यत आह—वर्त्तमाने चेति।

---

(१) वक्तुमित्यतः पूर्वं क-ख-वार्त्तिकयोः '( अभिधातु' )' इति सचिह्नं मुद्रितं वर्त्तते। (२) अत्रादर्शपुस्तकयोः '( नास्ति )' इति वेष्टितो भागो मुद्रितः। (३) 'तावन्नित्यत्वम्' इति क०।

(क) असतीति। अयमभावः—वस्तुनः सत्त्वदशायां प्रागभावप्रध्वंसयोरसत्त्वेन विषयरूपनिमित्ताभावेन अनित्य इति प्रत्ययोऽहेतुकः स्यादिति। तादृशः प्रत्ययो नोत्पद्येत भ्रमो वा स्यादिति तु फलितम्। अनिमित्तत इति प्रथमायास्तसिल्। (ख) 'यस्य नास्ति नित्यत्वं भावः' इति पाठो यथार्थो न वेति चिन्त्यम्। (ग) अत्र 'न केवलमनित्यस्य भाव' इति पाठो युक्तः, 'तस्यानित्यस्य यो भाव' इति वार्त्तिकानुसारात्। तथाच अस्मिन् पक्षे अनित्यस्य भाव इति केवलं न युज्यते इति न। 'परं' किन्तु षष्ठ्यर्थोऽपि न युज्यते इति समुदायार्थः। 'केवल' 'परम्' इत्यनयोरेकं सम्पातायातमिति तु हृदयम्। (घ) 'न भवतीत्याह' इति यथार्थः पाठोऽनुमीयते।

## न्यायवार्त्तिकम्

च प्राक्प्रध्वंसाभावावनित्यतेति मन्यसे वर्तमाने वस्तुनि न प्रागभावो न प्रध्वंसाभाव इति अनित्य इत्यभिलापो(क) न स्यात्। (ख)पाठकादिशब्दवदिति चेत्—अथ मन्यसे यथाऽमी पाठकादिशब्दास्त्रिकालविषयास्तथाऽयमनित्यशब्दस्त्रिकालविषयो भविष्यतीति; न, (१)ण्वुल-स्त्रिकालविषयत्वात्—(२)ण्वुलप्रत्ययस्त्रिकालविषयो दृष्टः, पाठको भवति पाठको भविष्यति पाठको-ऽभूदिति। (ग) त्यपस्त्रिकालविषयत्वमिति· चेत्—अथ मन्यसे त्यपोऽपि त्रिकालविषयत्व-मिति; तच्च न, अदर्शनात्। न ह्यसत्यनित्ये अनित्य इति प्रयोगं पश्यामः। तस्मात् त्यप-स्त्रिकालविषयत्वमयुक्तमिति। अतो न प्रागभावप्रध्वंसाभावावनित्यतेति।

विनाशहेतुभाव इत्यन्ये—अन्ये पुनर्ब्रुवते विनाशहेतोरस्तित्वमनित्यतेति। एतत्तु न युक्तम्, असति भावात्—प्राग् विनाशहेतुभावात् अनित्यप्रत्ययो दृष्टः अनुपजातकपालविभागेषु घटादिषु। यदि विनाशहेतुभावोऽनित्यता स्याद्वर्त्तमानेषु घटादिषु न स्यात्। न ह्यसति ज्वरे ज्वरितप्रत्ययो दृष्टः। विनाशहेतुभावाच्च विनाशहेतुरस्तीति युक्तः प्रत्ययो नानित्य इति। न हि गोत्वादश्वप्रत्ययो भवतीति। अथ मन्यसे यस्य विनाशहेतुरस्ति तद्विनाशवत्, यद् यद् विनाशवत् तदनित्यमिति, एतदपि न बुद्ध्यामहे यस्य विनाशे हेतुरस्ति तद्विनाशवदिति, किन्तु यस्य विनाशहेतुरस्ति तद्विनाशहेतुमदिति युक्तं वक्तुम्। न चान्येन योगादन्यनिमित्तः प्रत्ययो युक्तः, न हि दण्डयोगात् कुण्डलीति भवति। विनाशवच्छरीरमिति प्रयोगदर्शनाद् युक्तमिति चेत्—अथ मन्यसे विनाशवच्छरीरमिति दृष्टः प्रयोगः, न चासति सम्बन्धे प्रयोगो भवितुमर्हति; न, मतुपोऽसत्स्वदर्शनात्—नायं मतुप् क्वचिदप्यसत्सु दृष्टः, न ह्यसता कुण्डलेन कुण्डलीति भवति। न चासता विनाशेन सम्बन्धोऽस्ति तद्विनाशवच्छरीरमित्ययुक्तः प्रयोगः। दृष्ट इति चेत्—अथ मन्यसे दृष्टोऽयं प्रयोगो विनाश्येतच्छरीरमेतेऽध्रुवा विषया इति; न, उपचारात्—विनाशीत्युप-चारेण प्रयोगः, (३)विनाशोऽस्यावश्यन्तया भविष्यति इति। अध्रुवा विषया इत्यनित्यतैवोच्यते, तस्मान्न विनाशहेतुभावोऽनित्यता।

## न्यायवार्त्तिकतात्पर्यटीका

विनाशोऽस्यावश्यंतया भविष्यतीति अवश्यंभाविनो विनाशस्य सन्निधानेन संबन्ध-मुपचर्य मतुपः प्रयोग इत्यर्थः।

---

(१) 'स्थूल' ख। (२) 'स्थूल: प्रयोग:' ख। (३) 'विनाशो यस्यावश्यन्तया' इति क०।

(क) अभिलाप इति। 'नासम्बन्धात्' 'अनुत्पन्नविनष्टयोश्च प्रसङ्गात्' इत्यत्र अनित्यप्रत्ययस्या-हेतुकत्वोक्त्या फलतोऽनुपपत्तिरुक्ता, इह तु तद्व्यवहारानुपपत्तिरित्यपौनरुक्त्यमिति ध्येयम्। (ख) ख-पुस्तके तु 'पाठक'पदस्थाने सर्वत्र 'पाचके'ति मुद्रितम्। (ग) "त्यब् नेर्ध्रुवे" इति पा० वा० ४।२।१०४सू०।

## न्यायवार्त्तिकम्

उपलब्धिलक्षणप्राप्तस्य अत्यन्ततिरोभावोऽनित्यतेत्यन्ये—अन्ये पुनरनित्यताशब्दार्थमन्यथा वर्णयन्ति। यदुपलब्धिलक्षणप्राप्तं वस्तु तेनैवाऽऽत्मनाऽत्यन्तं नोपलभ्यते तिरोभूतं तदनित्यमित्युच्यते। एतत्तु शून्यमभिधानम्, उपलब्धिलक्षणप्राप्तमत्यन्ततिरोभूतं नोपलभ्यत इति ब्रुवाणः सिद्धान्तं बाधते। न हि (१)किञ्चिद्वस्त्वत्यन्तं नोपलभ्यत इति सिद्धान्तः। अनुपजातविशेषस्य च वस्तुनस्तिरोभावो न युक्त इत्यनेकधा वर्णितम्। तस्मादियमनित्यता न युक्ता।

ये पुनर्वर्णयन्ति—स एव भावोऽभूत्वा भवन् भूत्वा चाभवन्ननित्य इत्युच्यते, सा चावस्था भावप्रत्ययेनानित्यतेत्यभिधीयते, एतत् तु न युक्तम्, स्वार्थे भावप्रत्ययस्यादर्शनात्—न हि कश्चित् स्वार्थे भावप्रत्ययो दृष्टः। विनयादिवदिति चेत् ? न ; अनभ्युपगमात्—ननु च "विनयादिभ्यष्ठक्" ( पा० ५।४।३४ ) इति स्वार्थे प्रत्ययो दृष्टः विनय एव वैनयिकमिति ; न, अनभ्युपगमात्—नायं स्वार्थे प्रत्ययोऽपितु विनयेन योगो वैनयिकमित्युच्यते। एवं सर्वत्र द्रष्टव्यम्। अनुपलभ्यमान-

## न्यायवार्त्तिकतात्पर्यटीका

उपलब्धिलक्षणप्राप्तस्येति। न हि सतो विनाशोऽस्ति येनासंबन्धो भावस्य देश्येत किं तु यथा सत आविर्भावो जन्म एवं सत एवात्यन्ततिरोभावो विनाश इति अनित्यतेति चाख्यायते, तिरोभावस्य च सता सह समानकालतया संबन्ध उपपद्यत इति भावः। तिरोभावश्च घटादिनाऽपि संभवतीत्युपलब्धिलक्षणप्राप्तस्येत्युक्तम्। तदेतत्सांख्यीयं मतं दूषयति—एतत्तु शून्यमभिधानमिति। प्रधानविकारत्वाद्विश्वस्य विकारस्य च प्रकृतेरनन्यत्वात् प्राधानिकस्य कस्यचिदुपलम्भान्नास्त्येव तद्वस्तु यदत्यन्तं नोपलभ्यत इति सांख्यसिद्धान्तः तं बाधत इत्यर्थः। अपि च यथा सतो न विनाशः एवमसतोऽपि जन्म नास्ति, तथा चानुपजातविशेषस्य वस्तुनस्तिरोभावो न युक्तः, विशेषोपजनने च कथं (क) सत उत्पत्तिर्विशेषस्यैव प्रागसत्त्वात् सत्त्वे वा प्रागप्यनुपलब्धिप्रसङ्ग इति।

ये पुनरिति। अनित्य एवानित्यता स्वार्थिकस्तल्प्रत्यय इत्यर्थः। दूषयति—एतत्तु न युक्तम्। पाणिनेरपि स्मृतिः प्रमाणाविरोधिनी तत्त्वव्यवस्थाहेतुर्न तद्विरोधिन्यपि। अस्ति च ठगादीनां स्वार्थिकत्वे प्रमाणविरोधः, तथा हि प्रकृतिप्रत्यययोः समभिव्याहारो न स्यात्। न खल्वेकार्थयोः समभिव्याहारो दृष्टः, न हि भवति वृक्षः शिंशपा इतिवद् वृक्षस्तरुरिति प्रयोगः। कथं तर्ह्येको द्वौ बहव इति चेत् ; न, लिङ्गविशेषव्यक्त्यर्थत्वाद् विभक्तिप्रयोगस्य। एवं यावकादिष्वपि विरुद्धजात्यन्तरव्यवच्छेदः प्रत्ययार्थो वेदितव्यः। यथा च व्याचक्षते शाब्दाः—याव एव

(१) 'किञ्चिद्वस्तूत्पन्नं' ख०।

(क) अत्र 'सत' इति सावधारणम्। तथाच उत्पत्तिराविर्भावापरनामधेयं जन्म सत एव इति सिद्धान्तः कथमित्यर्थः।

## न्यायवार्त्तिकम्

भेदानामप्यनुमानतो भेदोऽनुमेयः—यांश्चापि भवाननुपलभ्यमानभेदान् प्रत्ययान् स्वार्थं मन्यते तेष्वप्यनुमानतो भेदोऽनुमेयः। किमनुमानम्? षष्ठ्या भेदविषयत्वम्—सर्वा षष्ठी भेदविषये दृष्टेति। यथा चानर्थान्तरे षष्ठी नास्ति तथोक्तं गुणगुणिभाववाद इति।

तत् किमिदानीमनित्यतेत्ययं शब्दो निरभिधेय एव? नानभिधेयः अवध्यपेक्षानपेक्षाभेदात् सत्तैवोभयथा—योभयान्तपरिच्छिन्नवस्तुसत्ता सा अनित्यतेति। या तूभयन्तानवच्छिन्नवस्तुसत्ता सा नित्यता, यथा समवाय एकः सन् कार्येण विशिष्यमाणः (१)कारणत्वमभिधीयते कारणेन विशिष्यमाणः (२)कार्यत्वमिति च। कथमिति? कारणमित्ययं प्रत्ययो नानिमित्तकः कदाचिद्भावात्; (क)न च वस्तुनिमित्तोऽवस्तुप्रत्ययः व्यतिरेकित्वात्। न च सत्तातो वैलक्षण्यात्—सत्तातः सदिति स्यात्, अयं तु सत्ताप्रत्ययाद्विलक्षणस्तस्मान्न सत्तातः। इहविशेषणनिमित्तत्वाच्च सम्बन्धनिमित्तः—इह तन्तुषु पट इत्याधारविशिष्टः प्रत्यय उपजायते, न चासति सम्बन्धे इहप्रत्ययेन शक्यं भवितुम्; यतोऽयमिहप्रत्ययः स समवायः, कार्यसमवाये सति कारणमित्यभिधीयते। यस्य गुणस्य योगाद् यस्मिन्नर्थे शब्दनिवेशस्तदभिधाने त्वतलौ। कार्यसमवायस्य भावादेतद्भवतीति कार्यसमवायः कारणत्वम्। एतेन कार्यत्वं व्याख्यातम्—कार्यात्मलाभहेतुः समवायः कारणविशिष्टः कार्यत्वम्। यथा समवाय एवं सत्ताऽप्येका सती उभयान्तपरिच्छिन्न-

## न्यायवार्त्तिकतात्पर्यटीका

यावक इति। तदिदमुक्तम्—अनुपलभ्यमानभेदानामप्यनुमानतो भेद इति। किमनुमानम्? षष्ठ्या भेदविषयत्वमिति त्वतलभिप्रायम्, नित्यत्वानित्यत्वयोः प्रकृतत्वात्। "तस्य भावस्त्वतलौ"विति त्वतलोः षष्ठीसमर्थादुत्पत्तेः, सर्वविषयं त्वनुमानमुक्तमिति।

अवध्यपेक्षानपेक्षेति, सत्तैवोभयान्तावध्यपेक्षा भवत्यनित्यता, सैव च तदनपेक्षा नित्यता। अवधिश्चोपलक्षणं न विशेषणम्, तच्च भिन्नकालमपि भवत्येव, यथा मृतायां मातरि देवदत्तायां देवदत्तापुत्रो यज्ञदत्त इति भूतपूर्वगत्या देवदत्ता स्वपुत्रमुपलक्षयति। यदा च कार्यत्वं समवायस्तदोभयान्तावच्छिन्ना सत्ता नित्यता यदा तु पूर्वान्तावच्छिन्ना सत्तैवोत्पत्तिस्तदाऽपरान्तावच्छिन्ना सत्ता अनित्यतेति न हेतुलक्षणव्याख्यानावसरोक्तेन (ख) विरोध इति। कारणमित्यभिधीयत इति समवायिकारणाभिप्रायम्, समस्तकारणव्यापकं तु लक्षणं कार्योत्पादस्य पुरस्तान्नियमेन सद्भाव इति द्रष्टव्यम्। कार्यात्मलाभहेतुः समवाय इति। कार्यस्याऽऽत्मलाभः

---

(१) 'कारणमभि-' ख०। (२) 'कार्यमिति' ख०।

(क) 'न चावस्तुनिमित्तो वस्तुप्रत्ययः' इति पाठः समीचीनः सम्भाव्यते।

(ख) २८८ पृ० वार्त्तिक-तात्पर्यटीके द्रष्टव्ये।

## न्यायभाष्यम्

अनित्यः शब्द इत्युत्तरम्। कथम्?—

### (सू०)—आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च ॥१३॥

आदिर्योनिः कारणम् आदीयते अस्मादिति। कारणवदनित्यं दृष्टम्। संयोगविभागजश्च शब्दः कारणवत्त्वादनित्य इति। का पुनरियमर्थदेशना कारणवत्त्वादिति? उत्पत्तिधर्मकत्वात्; अनित्यः शब्द इति—भूत्वा न भवति विनाशधर्मक इति।

## न्यायवार्त्तिकम्

वस्तुसम्बन्धित्वेनानित्यतेत्युच्यते विपर्ययान्नित्यतेति। एतयाऽनित्यतया योगादनित्यः शब्द इति ॥ १२ ॥

आदिमत्त्वादैन्द्रियकत्वात् कृतकवदुपचाराच्च। आदिमत्त्वाद्—आदिः योनिः कारणमिति। कारणवत्त्वादनित्य इति सूत्रार्थः। किं पुनरिदं कारणवत्त्वं नाम? निमित्तकारणभेदानुविधानम् उत्पत्तिधर्मकत्वम्, तदभिव्यङ्ग्येषु नास्ति। न हि किञ्चिदभिव्यज्यमानं निमित्तकारणभेदानुविधायि दृष्टमिति। संयोगविभागानन्तरमुपलब्धेः सन्देह इति चेत्—अथ मन्यसे संयोगविभागानन्तरमुपलभ्यते शब्दः, सा च तदनन्तरोपलब्धिर्व्यज्यमानस्यापि युक्ता, अतः सन्देहः किमयं संयोगविभागाभ्यां व्यज्यते अथ क्रियत इति।

न व्यज्यते ऐन्द्रियकत्वात्। किमिदमैन्द्रियकत्वम्? इन्द्रियप्रत्यासत्तिग्राह्यम् ऐन्द्रियकमिति। ततः किम्? यदीन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकस्ततो न व्यज्यते। न हि व्यज्यमानस्येन्द्रियेण प्रत्यासत्तिर्युक्ता। कथमिति? श्रोत्रं तावन्न शब्ददेशमुपगच्छति अमूर्तत्वात्—यदमूर्तं तन्निष्क्रियं

## न्यायवार्त्तिकतात्पर्यटीका

स्वकारणसंबन्धित्वं तस्य हेतुः समवायः, समवायो हि समवेतत्वं भवति। (क)समवायः कारणविशिष्टः कार्यत्वमिति ॥ १२ ॥

आदि—च (सू० १३) ॥ निमित्तकारणभेदानुविधानमुत्पत्तिधर्मकत्वं गम्यगमकयोरभेदविवक्षया। निमित्तकारणानि भेरीदण्डसंयोगादयः, तद्भेदात् खलु शब्दो भिन्नो भवति। शङ्कते—संयोगविभागेति। यथा हि कारणभेदेन भेदो दृश्यते एवं व्यञ्जकभेदेनापि मणि-कृपाण-दर्पणादिव्यज्यमानस्य मुखस्य भेदो दृष्टः, तस्मात् संशय इति।

श्रोत्रं तावन्न शब्ददेशं (ख)गच्छत्यमूर्त्तत्वादिति। कर्णशष्कुल्यवच्छिन्नं हि नभः

## वृत्तिः

वेदस्य प्रामाण्यमाप्तप्रामाण्यात् सिद्धम्, न चेदं युज्यते वेदस्य नित्यत्वादित्याशङ्कायां

(क) वार्त्तिकगतं 'समवाय'पदं द्विरावृत्तम्। (ख) वार्त्तिकगतः 'उप'शब्दो न गृहीतः।

## न्यायभाष्यम्

सांशयिकमेतत्—किम् उत्पत्तिकारणं संयोगविभागौ शब्दस्य, आहोस्विदभिव्यक्तिकारणमित्यत आह—ऐन्द्रियकत्वात्। इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियकः।

किमयं व्यञ्जकेन समानदेशोऽभिव्यज्यते रूपादिवत् अथ संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नो गृह्यत इति? संयोगनिवृत्तौ शब्दग्रहणात् न व्यञ्जकेन समानदेशस्य ग्रहणम्—दारुव्रश्चने दारुपरशुसंयोगनिवृत्तौ दूरस्थेन शब्दो गृह्यते। न

## न्यायवार्त्तिकम्

यथा रूपादि, अमूर्तं चाऽऽकाशम्, तस्मान्निष्क्रियमिति। क्रियाकारणगुणसमवायात् क्रियावत्त्वमिति चेत्—अथ मन्यसे यत्र क्रियाकारणं गुणो वर्तते तत् क्रियावद् दृष्टं यथा लोष्टं यथा चाऽऽकाशम्, तस्मादेतदपि क्रियावदिति; न, अनेकान्तात्—क्रियाकारणं च गुणः आत्मनि, न क्रियावानात्मा इत्यनेकान्तः। विद्यमानस्यापि न (१)क्रियाहेतुत्वं महत्परिमाणप्रतिबन्धात्—विद्यमानोऽप्याकाशेऽभिघातो न क्रियाहेतुः, महत्परिमाणप्रतिबन्धात्। यदाकाशे वर्तते महत्त्वं तेनैकार्थसमवेतेन तद्वृत्तिरभिघातः प्रतिबध्यत इति। यथा लोष्टगुरुत्वं तदेकार्थवृत्तिना संयोगेनेति। संयोगप्रतिबन्धाद् गुरुत्वस्य सापेक्षत्वप्रसङ्ग इति चेत्—अथ मन्यसे यदि संयोगेन प्रतिबध्यमानं गुरुत्वं न क्रियामारभते तत्प्रतिबन्धापगमापेक्षमारभत इति, नन्वेवं गुरुत्वं सापेक्षं क्रियाकारणमिति प्राप्तम्, एवं च शास्त्रव्याघातः, निरपेक्षं गुरुत्वं कर्मकारणमिति हि शास्त्रम्। न, निरपेक्षस्यान्यथा व्याख्यानात्—नायं निरपेक्षस्यार्थो गुरुत्वं न किञ्चिदपेक्षत इति, अपि तु चरमभाविनिमित्तान्तरं

## न्यायवार्त्तिकतात्पर्यटीका

श्रोत्रम्, न च कर्णशष्कुली मूर्ताऽपि सती वक्तृवक्त्रमुपसर्पति, प्रत्यक्षं हि कर्णशष्कुली श्रोत्रस्था गृह्यते (क) तस्माद् गच्छदपि कर्णशष्कुल्युपधानविरहान्न नभोमात्रं श्रोत्रम्। तस्मान्मा कर्णशष्कुली यासीत् तदुपकृतं तु नभो गच्छतीति यो मन्यते तं प्रत्येतदुक्तमिति द्रष्टव्यम्। क्रियाकारणगुणसमवायादिति नोदनाभिघातसमवायादित्यर्थः। नायं (ख)निरपेक्षार्थ इति। यद्यपि समवायिकारणं पतने कर्त्तव्ये गुरुत्वमपेक्षते तथाऽपि चरमभाविनिमित्तान्तरं नापेक्षत इति निरपेक्षशब्दस्यार्थः। यद्यपि प्रतिबन्धकापगमो भवति चरमभावी

## वृत्तिः

वर्णानामनित्यत्वात् कथं तत्समुदायस्वरूपस्य वेदस्य नित्यत्वमित्याशयेन शब्दानित्यत्वप्रकरणमारभते। तत्र सिद्धान्तसूत्रम्—( आदिमत्त्वादिति )

(१) 'क्रियावत्त्व' क०।

(क) तस्मादिति, कर्णाद् गच्छदपि नभोमात्रं कर्णशष्कुलीरूपोपाधिविरहात् न श्रोत्रमित्यर्थः, अपिकारेण नभसो गमनमसम्भवीति सूचितम्। श्रोत्रस्य गतिमत्त्वपक्षस्तु प्राचीनसम्मतः वेदान्तपरिभाषाकृद्भिर्गृहीतः, "चक्षुःश्रोत्रे तु स्वत एव विषयदेशं गत्वा स्वस्व-विषयं गृह्णीतः, श्रोत्रस्यापि चक्षुरादिवत् परिच्छिन्नतया भेर्यादिदेशगमनसम्भवात्" इति। विस्तरस्तु श्लोकवार्त्तिके शाबरभाष्यादौ च द्रष्टव्यः। (ख) वार्त्तिके तु 'निरपेक्षस्यार्थः' इति पाठः।

## न्यायभाष्यम्

च व्यञ्जकाभावे व्यङ्ग्यग्रहणं भवति, तस्मान्न व्यञ्जकः संयोगः, उत्पादके तु संयोगे (१)संयोगजाच्छब्दाच्छब्दसन्ताने सति श्रोत्रप्रत्यासन्नस्य ग्रहणमिति युक्तं संयोगनिवृत्तौ शब्दस्य ग्रहणमिति।

## न्यायवार्त्तिकम्

नापेक्षत इति निरपेक्षं गुरुत्वं कर्मकारणमिति नास्ति व्याघातः। तथा च शास्त्रम्—"संयोगाभावे गुरुत्वात् पतन"मिति। विषयाभावाच्च—न क्रियाकारण (२)समवायमात्रं क्रियावत्त्वे हेतुः, अपि तु क्रियाकारणगुणसमवाये सति मूर्त्तिः। यदि क्रियाविषयो मूर्त्तिर्भवति क्रियाकारणं गुणोऽप्रतिबद्धो भवति तदा क्रियोत्पद्यत इति। तस्मादक्रियावत्त्वादाकाशं न गच्छति, शब्दोऽपि न गच्छति निष्क्रियत्वादेव। न चाप्राप्तस्य ग्रहणमस्ति सर्वशब्दोपलब्धिप्रसङ्गात्। परिशेषात् तु सन्तानसिद्धिः। तत्राद्यः शब्दः संयोगविभागहेतुकः तस्माच्छब्दान्तराणि कदम्बगोलकन्यायेन सर्वदिक्कानि, तेभ्यः प्रत्येकमेकैकः शब्दो मन्दतरतमादिन्यायेनाऽऽश्रयाप्रतिबन्धमनुविधीयमानः प्रादुरस्ति, ततोऽन्त्यस्यातिमान्द्याच्छब्दान्तरोत्पत्तिशक्तिविघातो येन केनचित् प्रतिबन्धाद् भवतीति, अतः शब्दसन्तानोच्छेदः। तत्र यः कर्णशष्कुलीमन्तमाकाशदेशं प्राप्नोति स उपलभ्यते नेतर इति तस्मादैन्द्रियकत्वम्, तच्चान्यथा न युक्तमित्यतोऽनित्य इति।

एक एवेति चेत् न, सर्वैरुपलब्धिप्रसङ्गात्—अथ मन्यसे नैव शब्दान्तराणि मयाऽभ्युपगम्यन्ते, अपि त्वेक एवायं शब्दो वितत्याऽऽकाशमवतिष्ठते, स संयोगविभागाभ्यामभिव्यक्तः सन्नुपलभ्यते यथा

## न्यायवार्त्तिकतात्पर्यटीका

तथाऽपि न निमित्तान्तरम्, प्रतिबन्धे हि सति गुरुत्वं न करोति कार्यमौत्सर्गिकम्, न पुनः प्रतिबन्धकापगमस्यापि तत्र निमित्तभावकल्पना युक्ता तदन्वयव्यतिरेकस्यान्यथासिद्धेरिति, भावरूपं वा चरमभाविनिमित्तान्तरं नापेक्षत इत्यनपेक्षार्थः। विषयाभावाच्चेति। क्रियोत्पादं प्रति योग्यता क्रियाविषयः, (क)तामाश्रित्य क्रिया भवति सा मूर्त्तिः, न चासावसर्वगतद्रव्यपरिमाणलक्षणा आत्माकाशादौ सर्वगते समस्ति तस्मान्नैते क्रियावन्त इत्यर्थः। ततोऽन्त्यस्यातिमान्द्यादिति। नान्त्यः शब्दान्तरमारभते, न केवलमसौ स्वकारणं शब्दं नाशयति किन्तु सोऽपि स्वकारणेन शब्देन नाश्यते, तदिदमनयोः (ख)कार्यकारणविरोधित्वम्। आद्यस्तु कार्येणैव नाश्यते मध्यानां त्वनियम इति।

जरन्मीमांसकमतमुत्थापयति—एक एवेति चेदिति। एक एव तेषां शब्दो नभोगुणो नभो

---

(१) 'संयोगजशब्दसम्भवे' टि०। (२) '-समवधानमात्रं' ख०।

(क) 'यामाश्रित्ये'ति पाठो युक्तः। (ख) एतेन वार्त्तिकेऽपि कार्यकारणविरोधित्वघटितः कोऽपि ग्रन्थभागोऽभासीदिति सम्भाव्यते।

## न्यायवार्त्तिकम्

घटाद्य(१)पवरकावस्थितं प्रदीपसंयोगेनेति ; तच्च न, सर्वैरुपलब्धिप्रसङ्गात्—यद्येकः शब्दो वितत्यावस्थितः संयोगेनाभिव्यक्तः श्रोत्रवतोऽर्थे प्रत्ययं करोतीति मन्यसे तदा येन केनचिद्द यत्र (२)तत्रावस्थितेन शब्दो व्यक्त इति सर्वैः श्रोत्रवद्भिरुपलभ्येत, न चोपलभ्यते ; तस्मात् कल्पनेयम्। एकदेशाभिव्यक्तिरिति चेत् न किमस्तादात्म्यातादात्म्यानुपपत्तेः—अथ मन्यसे सत्यं वितत्यावस्थितः, तस्य त्ववस्थितस्यैकदेशो निमित्तेनाभिव्यज्यत इति ; न, किमस्तादात्म्यातादात्म्यानुपपत्तेः—यांस्तानेकदेशान् शब्दस्य मन्यसे ते किं शब्दात्मका आहो नेति ? किञ्चातः ? यदि शब्दात्मकास्ततोऽनेके शब्दा इति व्याघातः, अथाशब्दात्मकाः, न तदा शब्दादर्थप्रत्यय इति प्राप्तम्। तेषां स्वभावश्च (क)वक्तव्यः। शब्दस्याऽऽकाशवृत्तित्वादेकदेशार्थानभिधानाच्च—एकदेश इति समासपदमेतत् एकश्चासौ देशश्चेति। तत्र देशशब्द आधारार्थः कारणार्थो वा ? तत्राऽऽधारार्थस्तावन्न युक्तः, शब्दस्याऽऽकाशवृत्तित्वात्—आकाशवृत्तिः शब्दस्तद्गुणत्वात्। तस्मादाकाशव्यतिरिक्तो नाऽऽधार इति। कारणार्थोऽपि नास्ति अकृतकत्वाभ्युपगमात्—अकृतकः शब्द इति स्वयं प्रतिपद्यमाना भवन्तो नार्हन्ति वक्तुं कारणमेकदेश इति। न चान्य एकदेशार्थः सम्भवतीति शून्यमभिधानमेकदेशः शब्दस्य व्यज्यते इति। एकदेशाभिव्यक्तौ चार्थप्रत्ययो न स्याद्वर्णवत्—वर्णाः सर्वे एव व्यापका भवन्तीति एतस्मिन् पक्षे वर्णैकदेशव्यक्तिः, न च वर्णैकदेशः शक्यो निरूपयितुम्। न च

## न्यायवार्त्तिकतात्पर्यटीका

वितत्यावस्थितः परिमाणवदित्यर्थः। शब्दसंस्कारपक्षं कक्षीकृत्य दूषणमाह—न सर्वैरुपलब्धिप्रसङ्गादिति। न किम इति प्रश्नस्येत्यर्थः। शब्दस्याऽऽकाशवृत्तित्वादिति। आकाशस्य सर्वगतत्वेन तत्र व्यक्तः सर्वत्रैव व्यक्त इति सर्वत्रैवोपलम्भस्तदवस्थ एवेत्यर्थः। अभ्युपेत्यैकदेशमाह—एकदेशाभिव्यक्तौ चार्थप्रत्ययो न स्यात्, (ख)वर्णसाध्यस्य कार्यस्यैकदेशेनाकरणात्। (ग)यथा नानावर्णे पदे एकवर्णाभिव्यक्तौ नार्थप्रत्यय इति। स्यादेतत्—एकदेश एव वर्णः, तथा च वर्णसाध्यं कार्यमेकदेशः शक्तः कर्त्तुमित्यत आह—सर्व एव व्यापका भवन्तीति एतस्मिन् पक्षे वर्णैकदेशव्यक्तिः अभ्युपगम्यते, तस्माद्द व्यापकाद्द वर्णादव्यापक एकदेशोऽन्य इत्यर्थः। नन्वस्त्वेकदेशत एवार्थप्रत्यय इत्यत आह(घ)—न च वर्णैकदेशः शक्यो

## वृत्तिः

शब्दोऽनित्य इत्यादि पूरणीयम्। आदिमत्त्वात् सकारणकत्वात्। ननु न सकारण-

---

(१) '-पवरकाद्यव-' क०।　　(२) 'अकुत्राव-' इति क०।

(क) 'वक्तव्य' इत्यत्र 'विमोक्तव्य' इति ख-पु-पाठः, तत्र तेषामिति कर्त्तरि षष्ठी। तथाच तैरेकदेशैः शब्दस्य स्वभावोऽपि परित्यक्तव्यस्तेषामशब्दात्मकत्वादित्यर्थः। स्वभावश्चेति चो हेतौ 'प्राप्त'मित्यन्तवाक्यार्थे चास्य सम्बन्ध इत्यूहनीयम्। (ख) अर्थप्रत्ययानुपपत्तौ बीजमाह 'वर्ण'ति। (ग) वार्त्तिकगतं 'वर्णवदि'ति व्याचष्टे यथेति। (घ) अतः परमादर्शपुस्तकयो 'एतस्मिन् पक्षे वर्णैकदेशव्यक्तिरभ्युपगम्यते' इति मुद्रितम्।

## न्यायवार्त्तिकम्

निरूपितादपि तस्मादर्थप्रत्ययो भवति (क)वर्णानामर्थप्रत्यायनानभ्युपगमात्—वर्णा अपि तावदेकैकशोऽर्थप्रत्यायका न भवन्ति कुतस्तदेकदेशा इति ।

एतेन बहुत्वं प्रत्युक्तम् । यथैकस्य (ख) व्यक्तौ दोष एवमनेकशब्दस्यापि व्यापित्वे दोषाः; कोलाहलश्च स्यात्—यदि चानेकशब्दा आकाशे वर्तन्ते युगपदिति (१)प्रतिपद्यसे एकशब्दाभिव्यञ्जकोपादाने समानदेशानां शब्दानां व्यक्तिरिति कोलाहलः स्यात्, यथा मल्लनटसमाजेषु (२) प्रयोगजझङ्कारातिशयावर्जितेषु नदत्सु भवति ; तस्मान्नानेको व्यापक इति । नियमश्च न स्यात्—यदि चानेके शब्दा युगपदाकाशे वर्त्तन्ते इति—एवं च यत्किञ्चिद्व्यञ्जकमुपात्तं समानदेशान् सर्वानभिव्यनक्तीति यदा वीणा वाद्यते तदा रासभध्वनिरपि श्रूयेत । न हि समानेन्द्रियग्राह्याणां समानदेशानां व्यञ्जकेषु नियमो दृष्टः । यद्व यस्य व्यञ्जकं तेन तस्य व्यक्तिरिति चेत् तन्नादृष्टत्वात्—अथ मन्यसेऽनेकशब्दसन्निपाते सति व्यञ्जकानि भिद्यन्ते, व्यञ्जकभेदानुविधायिन्यो व्यक्तयः प्रतिशब्दमुपजायन्त इति ; तन्नादृष्टत्वात्—न हि समानदेशानामेकेन्द्रियग्राह्याणां व्यञ्जकेषु नियमो

## न्यायवार्त्तिकतात्पर्यटीका

निरूपयितुम् । अल्पीयसा हि प्रयत्नेन वर्णमुच्चरितं मतिर्न गृह्णाति गृह्णती वा वर्णमेव गृह्णाति न तु तदेकदेशं कदाचिदपीत्यर्थः । निरूपणमभ्युपेत्याऽऽह—न च निरूपितादिति ।

बहवस्तर्हि वर्णा व्यज्यन्तां तन्निरूपणाचार्थो गम्यत इत्यत आह—एतेनेति । यस्तु मन्यते न वस्तुतोऽस्त्येकदेशः शब्दस्य किं तु संस्कारस्याव्याप्यवृत्तित्वमेवैकदेशः भवतः पक्षे (ग) शब्दस्याव्याप्यवृत्तित्वमिव नभस एकदेश इति तं प्रति दोषान्तरमाह—कोलाहलश्च स्यादिति । यद्युच्येत कश्चिदेव ध्वनिः कञ्चिदेव शब्दं व्यनक्ति ततश्च न कोलाहल इति तत्राऽऽह—नियमश्च न स्यादिति । समानदेशानामपि रूपरसादीनां व्यञ्जकनियम इत्यत उक्तम्—समानेन्द्रियग्राह्याणामिति, तथाऽपि भिन्नदेशानां समानेन्द्रियग्राह्याणामपि न सहसा सर्वेषां व्यक्तिरित्यत उक्तम्—समानदेशानामिति । शङ्कते—यद्व यस्य व्यञ्जकमिति । न हि व्यञ्जकानां व्यञ्जकत्वं व्यक्तेरन्यतः प्रतीयते सा च नियतेति व्यञ्जकानामपि नियमसिद्धिरित्यर्थः । परिहरति—तन्नादृष्टत्वात् ।

## वृत्तिः

कत्वं कण्ठताल्वाद्यभिघातादेर्व्यञ्जकत्वेनाप्युपपत्तेरत आह—ऐन्द्रियकत्वादिति । सामान्यवत्त्वे सति बहिरिन्द्रियजन्यलौकिकप्रत्यक्षविषयत्वादित्यर्थः ।

---

(१) 'प्रतिपद्यन्ते' ख० । (२) 'प्रयोग ( झङ्कारा ) कारणातिशया-' इति क-पुस्तके मुद्रितम् ।

(क) 'वर्णानामर्थप्रत्यायकत्वानभ्युपगमात्' इति पाठः सम्यक्तया सम्भाव्यते । यथाश्रुते विवक्षिते कारणत्वे सम्बन्धसामान्याभिप्रायिकी षष्ठी । (ख) 'व्याप्ताविति सम्भाव्यते' इत्यादर्शपुस्तकशोधकाः । (ग) 'शब्दस्याव्याप्यवृत्तित्वमिव' इत्यादर्शपुस्तकयोः पाठः, मुद्रिताकारस्तु स्वयं शोधितः ।

## न्यायवार्त्तिकम्

दृष्टः। न हि प्रदीप एकेन्द्रियग्राह्यमनेकमर्थं युगपत् सन्निपतितं न प्रकाशयति। सामान्यवदेतत् स्यादिति चेत् नानभ्युपगमात्—अथ मन्यसेऽनेकार्थसन्निपाते सति सर्वाभिर्व्यक्तिभिः सामान्यानि सम्बध्यन्ते अनेकार्थसम्बन्धे सत्यपि सामान्यस्य केनचिदर्थेन किञ्चित्सामान्यं व्यज्यत इति, एवमनेकसन्निपाते सति किञ्चिद्व्यञ्जकं कञ्चिच्छब्दं व्यनक्तीति ; तन्न अनभ्युपगमात्—सामान्यमनेकेन भिन्नजातीयेनार्थेन सम्बध्यत इति नाभ्युपगम्यते अपि तु स्वविषयसर्वगतं सामान्यम्, गोत्वं गोष्वेव नाश्वादिषु, अश्वत्वमश्वेष्वेव न गवादिषु, तस्मादसमोऽयं दृष्टान्तः।

व्यञ्जकाभावे चोपलब्धेर्न व्यज्यते शब्दः—यदि च संयोगविभागाभ्यां व्यक्तः शब्द उपलभ्यत इति मन्यसे सोऽपि संयोगाभावे नोपलभ्येत, उपलभ्यते च दारुव्रश्चने दारुपरशुसंयोगनिवृत्ताविति। अभिघाताद्वायुरिति चेत, अत्रोक्तम्—अथ मन्यसे दारुपरश्वोरभिघाताद्वायुर्जायते, स वायुः सन्तानवृत्त्या वर्त्तते, सन्तानवृत्त्या वर्त्तमानः कर्णशष्कुलीमन्तमाकाशं प्राप्नोति, तत्प्राप्तौ तत्रस्थः शब्दो गृह्यत इति, अत्रोक्तम्—यथैकः शब्दः कर्णशष्कुलीमत्याकाशदेशे वर्तते तथा सर्व एव शब्दा वर्त्तन्त इति यत्किञ्चिद् व्यञ्जकमुपात्तं यस्य कस्यचिच्छब्दस्य व्यञ्जकं स्यादिति सर्वशब्दोपलब्धिप्रसङ्गः, नियमश्च न स्यात्।

## न्यायवार्त्तिकतात्पर्यटीका

अन्येषामेव भूतानां व्यञ्जकानां व्यङ्ग्यानां चानियमो दृष्ट इहापि नियमं विघटयति। कार्याणां तु समानदेशानामपि समानेन्द्रियग्राह्याणामपि रूपादीनां संख्यादीनां च दृष्टः कारणनियम इति शब्दानामपि नियतकारणतयोत्पत्तिनियम उपपद्यत इति भावः। समस्तवस्त्वव्यवधानेन सामान्यानां सर्वसामान्यसङ्गतं समस्तं वस्त्विवति मन्वानः शङ्कते—सामान्यवदिति। सर्वार्थाव्यवधानेऽपि किञ्चिदेव वस्तु केनचिदेव सामान्येन सम्बद्धं न सर्वं सर्वेणेत्याशयवान् निराकरोति—नानभ्युपगमादिति। यद्यप्येकदेशस्थानां समानेन्द्रियग्राह्याणां सत्त्वनरत्वब्राह्मणत्वानां स्वरूपभेदसंस्थानयोनिव्यङ्ग्यानां प्रतिनियतव्यञ्जकव्यङ्ग्यत्वे तथाऽपि समानदेशत्वाभावान्न व्यभिचारः, सत्त्वस्य पदार्थत्रयसमवायादधिकदेशतया नरत्वस्य ब्राह्मणवत् क्षत्रियादिषु सद्भावाद् ब्राह्मणत्वस्य क्षत्रियादिपरिहारात् कठादिष्वेव भावाद् न्यूनाधिकदेशतया न समानदेशत्वमिति। एतेन श्रोत्रसंस्कारेऽप्यनियमो बोद्धव्यः, यथोन्मीलनसंस्कृतमिन्द्रियं समानदेशान् स्वग्राह्यान् सकृदेव दर्शयति न तु किञ्चिदेवेति सर्वमवदातम्।

अपि च सर्वशब्दस्य ताल्वादिसंयोगव्यङ्ग्यत्वे तदुपरमे विदूरे (क) शब्देनोपलब्धव्यं न चोपलभ्यते, वायुसन्तानव्यङ्ग्यत्वे तु प्रागुक्तनियमाभाव एव दोष इति शङ्कोत्तराभ्यां दर्शयति—यदि चेति। अपि चायं नित्यः शब्दः प्रादेशिको वा स्याद् व्यापको वा ? उभयथाऽपि दोष इति

(क) अत्र 'शब्दो नोपलब्धव्यः नच नोपलभ्यते' इति युक्ततया प्रतिभाति।

## न्यायभाष्यम्

इतश्च शब्द उत्पद्यते नाभिव्यज्यते—कृतकवदुपचारात्। तीव्रं मन्दमिति कृतकमुपचर्यते, तीव्रं सुखं मन्दं सुखं तीव्रं दुःखं मन्दं दुःखमिति, उपचर्यते च तीव्रः शब्दो मन्दः शब्द इति।

## न्यायवार्त्तिकम्

निमित्तसन्निधाने च सर्वत्रोपलब्धेर्न व्यज्यते—यत् खलु व्यज्यते तत् निमित्तसन्निधाने सति न सर्वत्र व्यज्यमानं दृष्टम्, यथा घटार्थिनो बिभ्राणाः प्रदीपं घटादिरहितानपवरकादीन् प्रविश्य न घटादीनुपलभन्त (१)इत्यभिव्यक्तिं घटादीनां प्रतिपद्यन्ते, न पुनस्ताल्वाद्यभिघातसन्निपाते सति क्वचिदपि शब्दान्न पश्यामः तस्मान्न व्यज्यत इति। सर्वत्र सन्तीति चेत् नोक्तोत्तरत्वात्—अथ मन्यसे यस्यैकदेशवृत्तयः शब्दास्तं प्रत्ययमुपालम्भः, अस्माकं तु सर्वं एव व्यापकास्तस्मान्नैष दोष इति। न, उक्तोत्तरत्वात्—उक्तोत्तरमेतद्वाक्यं न पुनः प्रतिसमाधानं प्रयोजयतीति तस्मान्न व्यज्यत इति। नादोपलब्धौ च विप्रकृष्टदेशावस्थितेन नादसमानदेशशब्दानुपलब्धेर्न व्यञ्जको नादः। एतेन वायवीयाः संयोगविभागा व्यञ्जका इति प्रत्युक्तम्।

## न्यायवार्त्तिकतात्पर्यटीका

शङ्कोत्तराभ्यां दर्शयति—निमित्तसन्निधाने चेति। स्यादेतत्—मा भूद्वायुसन्तानो व्यञ्जकः सन्ति खलु वायुगुणा नादास्तेऽस्य शब्दस्य व्यङ्क्तार इत्यत आह—नादोपलब्धौ चेति। न तावन्नादो नाम वायुगुणः कश्चिदुपलभ्यते, अभ्युपेत्यापि ब्रूमः नादोपलब्धावपि यत्र वायुस्तत्र तद्गुणोऽङ्गीकर्तव्यः, न च विप्रकृष्टेन पुरुषेण शब्दोपलब्धौ तत्र वायुरस्ति तद्गुणो वा नादः, वायुसन्तानगमनं चास्मिन् पक्षे नेष्यते, (क) तस्माद् विप्रकृष्टेन पुरुषेण शब्दोपलब्धेर्न व्यञ्जको नाद इति। स्यादेतत्—मा भूद्वायुसन्तानो मा च भूत्तद्गुणो नादः शब्दस्य व्यञ्जकः, वायवीयास्तु संयोगविभागा व्यञ्जका भवन्तीत्यत आह—एतेनेति।

यस्तु मन्यते—प्रत्यभिज्ञैव भगवती शब्दस्थेमसाधिनी, तदानुगुण्याय व्यापिनः शब्दस्य गुणस्य द्रव्यस्य वा प्रयत्नप्रेरिता वायवो यावद्वेगं प्रतिष्ठमानाः श्रोत्रं श्रोत्रावच्छिन्नशब्दविशेषं वा संस्कुर्वन्तो व्यञ्जका इति कल्प्यते ; न च समानदेशानां समानेन्द्रियग्राह्याणां नियतव्यञ्जकव्यङ्ग्यत्वं न दृष्टमितीमं प्रसङ्गं प्रत्यभिज्ञा मृषति, सोऽयमनया बाधितविषयो विलीयत इति तं प्रत्याह—कृतकवदुपचारात्। अत्र चोपचारेण प्रयोगेण तत्कारणं शब्दभेदप्रत्ययमुपलक्षयति। अस्ति हि

(१) 'इत्यभिव्यक्त्या घटादीन्न प्रतिपद्यन्ते' ख०।

(क) आदर्शपुस्तकयोः 'यस्मा'दिति पाठः।

न्यायवार्त्तिकतात्पर्यटीका

शुकसारिकामनुष्यवक्त्रप्रभवेषु गकारादिषु स्फुटतरा रूपभेदप्रत्ययाः पुंसाम्(क)। एवं स्त्रीपुंसप्रभवेषु स्त्रीपुंसभेदप्रभवेषु च। न चेयमौपाधिकी न तु स्वरूपत इति वाच्यम्। तथा हि औपाधिकत्वमानुभाविकं वा स्याद् यथा कुङ्कुमारुणा तरुणीति, उपपत्तिगोचरो वा, यथा कृपाणधारायां जले च प्रतिबिम्बहेतौ रोचिष्णुतायां दीर्घश्यामतायां मुखस्य। न तावदानुभाविकम्, विदितोपाधेः खलु तद्भवति, यथा विदितकुङ्कुमस्य कुङ्कुमारुणेति; शुकादिभेदमविदुषोऽपि च काण्डपटाद्यावृते शुकादौ शब्दभेदप्रत्ययो भवति यत एतदुन्नयति शुकोदीरिता मञ्जुतमा गाथेति। नाप्यौपाधिकत्वमुपपत्तिगोचरः। न हि शब्दस्वरूपसमवायिनो भेदस्यौपाधिकत्वे किंचिदस्ति प्रमाणं मुखस्येव मणि-दर्पण-कृपाणगतस्य। न खलु विरुद्धपरिमाणेषु दर्पणादिषु विरुद्धपरिमाणानां प्रतिबिम्बानामुत्पादः सम्भवति। शब्दानां तु संयोगविभागयोनीनां युक्तस्तद्भेदेन रूपभेदः।

स्यादेतत्—तीव्रमन्दत्वादयो धर्माः परं भिद्यन्ते न तु तदाश्रयः शब्दः। न ह्यन्यस्य भेदेनान्यो भेत्तुमर्हति अतिप्रसङ्गात्। न हि रूपरसादीनां युगपद्भाविनां वा क्रमभाविनां वा संयोगादीनां भेदे द्रव्यं भिद्यते। कथमेकस्यैव शब्दस्यापर्यायेण तीव्रमन्दत्वादिविरुद्धधर्मसंसर्ग इति चेत्; अत एवौपाधिकोऽस्तु मुखस्येवाभेदिनोऽपर्यायेण कृपाणादिषु दीर्घपरिमण्डलत्वादिः। अत्रोच्यते—न वयं धर्मभेदमात्रेण धर्मिणो भेदमाचक्ष्महे किं तु धर्मभेदमात्रप्रथा उत धर्मिभेदोऽपि प्रथत इति निपुणं निरूप्यताम्। अस्ति हि गौर्गौरिति प्रथानुगमेऽपि शुक्लकपिलकपोतिकासु गोषु धर्मिभेदावगाहिनी प्रथा; अस्ति च धर्ममात्रभेदावगाहिनी प्रथा धर्मिणमभिन्नमाकलयन्ती; यथा शालप्रांशुः पृथुलविशालवक्षाः प्रलम्बभुजो नीलोत्पलदलश्यामः सिंहास्यो नवाम्भोदध्वनिर्गम्भीरमधुरघोषश्चकोरेक्षणः क्षत्रिययुवेति। सेयं शुकसारिकामनुष्येषु युगपद्गकारानुच्चारयत्सु तीव्रमन्द्रानुनासिकादिगकारावगाहिनी प्रथा किमेकमेव क्षत्रिययुवानमिव गकारमनेकधर्मवन्तमालम्बते एको गकारो नानाधर्मेति, किं वा यथेयं शुक्ला गौरियं कपिला गौरिति तथा तीव्रोऽयं गकारो मन्दोऽयं गकारोऽनुनासिकोऽयमिति भवन्त एव विदांकुर्वन्तु। सेयं गोत्वमिव कपिलादिषु गोविशेषेषु गत्वं तीव्रमन्दादिशब्दभेदेष्वालम्बमाना प्रत्यभिज्ञा च भेदप्रथा चोपपत्स्यते। अपि च युगपत्तीव्रमन्दत्वादिलक्षणविरुद्धधर्मसंसर्गादपि गकाराणां परस्परतस्तपनखद्योतवद्भेदमनुमिमीमहे। न चायं विरुद्धधर्मसंसर्गो न गकारादिनिवेशी किं त्वौपाधिकः, उपाधयश्च भिद्यन्त एव न गकार इति सांप्रतम्; गकारसमवायिनः प्रतीयमानस्यासति बाधके औपाधिकत्वकल्पनायोगात्, प्रत्यभिज्ञानस्य च गत्वसामान्यालम्बनत्वेनोपपत्तेः। अपि चौपाधिकत्वपक्षे ताल्वादिसंयोगधर्मो वा तदभिघातप्रेरितध्वनिधर्मो वा तीव्रानुनासिकत्वादिः शब्दे समारोप्यत

(क) पुंसां स्फुटतरा रूपभेदप्रत्यया भवन्तीति सत्यमस्तीति अध्याहारेणान्वयो बोध्यः। 'स्फुटतरो रूपभेदप्रत्यय' इति 'रूपभेदप्रतीतिः' इति वा पाठः। 'प्रतीति'शब्दः विप्रकृष्टोऽपि उत्तरत्र 'इयम्' शब्ददर्शनाद् बुद्धिपथमारोहतीति बोध्यम्।

## न्यायवार्त्तिकम्

कृतकवदुपचाराच्च—तीव्रं मन्दमिति कृतकमुपचर्यते तीव्रं सुखं मन्दं सुखम्(क) इति उपचर्यते च तीव्रः शब्दो मन्दः शब्द इति। अत्र च प्रयोगः—अनित्यः शब्दः (ख) तीव्रमन्दविषयत्वात् सुखदुःखवदिति। कृतकवदुपचारादित्यनेन सूत्रेण सर्वानित्यत्वसाधनधर्मसंग्रहः कृतकत्वग्रहणस्योदाहरणार्थत्वात्; यथा सामान्यविशेषवतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात्, उपलभ्यस्यानुपलब्धिकारणाभावे सत्यनुपलब्धेः, गुणस्य सतोऽस्मदादिबाह्यकरणप्रत्यक्षत्वात् इत्येवमादि। तीव्रशब्दस्य तीव्रार्थविषयत्वं न शब्दादिविषयत्वमिति चेत्—अथ मन्यसे तीव्रशब्देन तीव्रार्थोऽ-

## न्यायवार्त्तिकतात्पर्यटीका

इत्यास्थेयम्। न चाऽऽरोप्यमजानतामारोपः संभवति। न च ध्वनीनां ताल्वादिसंयोगविभागानां वा धर्मः श्रोत्रेण शक्यो ग्रहीतुं तदन्यधर्मवत्। न चैते तदानीं प्रमाणान्तरेणोपनीयन्ते स्मृता वा येनाऽऽरोप्येरन्। न च ध्वनिभेदसंस्कारवशाच्छ्रोत्रस्यैतादृशः सामर्थ्यभेद आविर्भवति, यत आरोप्याग्रहेऽपि भ्रमो भवति। न च मण्डूकवसाक्ताक्षाणामिवानवगतास्मृतोरगाणामपि प्रथमाक्षसन्निपाताद् वंशेषूरगारोप इति सांप्रतं सर्वासामेव भ्रान्तीनां प्रमाणगृहीतारोप्यारोपविषयग्रहणपुरःसरत्वनियमात् तदनुसारेण मण्डूकवसाक्ताक्षाणामपि वंशेषूरगभ्रमो व्याख्येयः। वंशानां तावदस्ति भूयः सारूप्यमुरगेण, तेन चैते तन्मात्रेण रूपेण शक्नुवन्ति गृहीताः स्मारयितुमुरगम्। एवमपि यदन्येषां भ्रमो न भवति तत्र सर्पाकारव्यावृत्तवंशग्रहो हेतुः मण्डूकवसाऽञ्जनं च वंशाकारपिधानमात्रहेतुः। न च प्रथमाक्षसन्निपातादेव भ्रम इति प्रामाणिकं क्षणभेदस्य दुर्ज्ञानत्वात्। न चागृहीतसर्पस्य भवतीति (१)शक्यं वक्तुं तस्मिन् जन्मनि जन्मान्तरे वा सर्पग्रहसंभवात्। ध्वनिधर्मस्त्वनुनासिकत्वादिः(ग) अस्मिन्निव जन्मनि जन्मान्तरेऽप्यशक्यग्रह एव। तस्माद्वर्णसमवेतोऽनुनासिकत्वादिः प्रतीयमानो वर्णधर्म एव नौपाधिकः। तथा च युगपद्विरुद्धधर्मयोगात् परस्परमन्यत्वं गकारादीनामिति युक्तम्। तदनेनाभिसन्धिनोक्तम्—कृतकवदुपचारादिति।

तदेतद्वार्तिककारो व्याचष्टे—तीव्रं मन्दमिति कृतकमुपचर्यत इति। शब्दविषयत्वेन विरुद्धधर्ममुपलक्षयति। अपरानपि शब्दानित्यत्वहेतूनाह—कृतकवदुपचारादित्यनेनेति। सामान्यवत इत्येतावतैव जातिनिराकरणे सिद्धे विशेषग्रहणं साधर्म्यं सामान्यमिति भ्रमनिराकरणार्थम्, तद्धि प्रमेयत्व(घ)सत्त्वादिकं गुण इव जात्यादावप्यस्तीति। विशेषपदेन तु जातिग्रहणान्निवर्तितं भवति। उपलभ्यस्येति तूपरिष्टात् स्फुटीभविष्यतीति। शङ्कते—तीव्रशब्दस्येति। तीव्रत्वधर्मान्वयव्यतिरेकानुविधायिप्रवृत्तिस्तीव्रशब्दो न शब्दं धर्मिणमभिधातुमर्हतीति

(१) 'युक्तं शक्यं वक्तु'मिति पाठः क-ख-पुस्तकयोः।

(क) 'तीव्रं दुःखं मन्दं दुःख'मिति भाष्यांशोऽत्र परित्यक्तः। (ख) अत्र तीव्रमन्दशब्दविषयत्वादिति पाठः सम्भाव्यते। (ग) 'अस्मिन्नेव' इति क-ख-पुस्तकयोः पाठः प्रामादिकत्वबुद्ध्या शोधितः। (घ) सत्त्वमत्र कालसम्बन्धित्वरूपं न तु द्रव्यादित्रिकवृत्ति परसामान्यमिति बोध्यम्।

## न्यायभाष्यम्

व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति चेद् न अभिभवोपपत्तेः—संयोगस्य व्यञ्जकस्य तीव्रमन्दतया शब्दग्रहणस्य तीव्रमन्दता भवति न तु शब्दो भिद्यते यथा प्रकाशस्य तीव्रमन्दतया रूपग्रहणस्येति, तच्च न, एवमभिभवोपपत्तेः—तीव्रो भेरीशब्दो मन्दं तन्त्रीशब्दमभिभवति (१)न मन्दः। न च शब्दग्रहणमभिभावकम्, शब्दश्च न भिद्यते (क)शब्दे तु भिद्यमाने युक्तोऽभिभवः। तस्मादुत्पद्यते शब्दो नाभिव्यज्यत इति।

## न्यायवार्त्तिकम्

भिधीयते न शब्दः, न चान्यविषयः शब्दोऽन्यस्यार्थस्य प्रतिपादक इति ; न, शब्दशब्देन समानाधिकरणस्य तीव्रशब्दस्याभिधानात्—सत्यमयं तीव्रशब्दः केवल उच्चारितो द्रव्यगुणकर्मणां समानधर्मं प्रतिपादयति, (२)शब्दशब्दोऽप्युच्चरन्नेकधर्मसंयोगिणं शब्दमभिधत्ते। यदा पुनरेतौ (३)तीव्रशब्दशब्दौ विशेषणविशेष्यभावापन्नावभिधीयेते तदा तीव्रशब्देन धर्मान्तराणि व्यवच्छिद्यन्ते शब्दशब्देन धर्म्यन्तराणीति उभयशब्दप्रयोगात् शब्दो गम्यते। तस्मादुपपन्नं तीव्रशब्दविषयत्वादनित्यः शब्द इति।

व्यञ्जकस्य तथाभावाद् ग्रहणस्य तीव्रमन्दता रूपवदिति चेत् नाभिभवोपपत्तेः। शेषं भाष्ये।

## न्यायवार्त्तिकतात्पर्यटीका

यथोक्तमात्रस्याऽऽक्षेप इत्यर्थः। निराकरोति—न शब्दशब्देन समानाधिकरणस्येति। एतच्च व्यक्त्याकृतिजातयः पदार्थ इत्यत्र प्रतिपादयिष्यते।

शङ्कते—व्यञ्जकस्येति। स्वकारणात् खलु व्यञ्जकाच्छब्दज्ञानमुत्पन्नं तीव्रं मन्दं चेति। तेन तीव्रज्ञानज्ञेयः शब्दोऽपि तीव्र इव मन्दज्ञानज्ञेयः शब्दो मन्द इव भासते न स्वाजानतोऽस्य तीव्रत्वं मन्दत्वं वा येन भिद्यत इत्यर्थः। निराकरोति—नाभिभवेति। अन्यत् खल्वन्येन समानजातीयेनाभिभूयते न तु तदेव तेन। न हि मध्यन्दिनोल्काप्रकाशसम्बन्धी पटः पटुना सावित्रेण प्रकाशेन प्रकाशमानमात्मानमात्मनाऽभिभवति। एवं गकारोऽपि तीव्रध्वनिप्रकाश्यं गकारमात्मानमभिभवेत्, यदि स्वयं मन्दध्वनिप्रकाश्यो गकारस्तीव्रध्वनिप्रकाश्याद्गकारादन्यो भवति। ततो मध्यन्दिनोल्काप्रकाशः सवितृप्रकाशेन चाल्पत्वादभिभूयते इति युज्यते तदिदं शेषं भाष्ये उक्तमिति।

## वृत्तिः

परे तु—ऐन्द्रियकत्वं लौकिकप्रत्यक्षविशेष्यत्वम्, सामान्यसमवाययोस्तु न तथात्वम्,

---

(१) 'न मन्दः' इति वि-टि-पुस्तकयोर्नास्ति। (२) 'शब्देन शब्दाद्युच्चरतानेक-' ख०। (३) 'तीव्रशब्दौ' ख०।

(क) एवंपदं विद्यतीति शब्द इति।

## न्यायभाष्यम्

अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावाद्—व्यञ्जकेन समानदेशोऽभिव्यज्यते शब्द इत्येतस्मिन् पक्षे नोपपद्यतेऽभिभवः। न हि भेरीशब्देन तन्त्रीस्वनः प्राप्त इति।

## न्यायवार्त्तिकम्

ग्रहणं निमित्तभेदानुविधायीति चेत् न, ग्रहणभेदस्यैकत्राहष्टत्वात्—अथ मन्यसे न शब्दो भिद्यते, शब्दे त्वभिन्ने ग्रहणं निमित्तभेदानुविधायि भवति ग्रहणभेदाच्चाभिभव इति ; न, ग्रहणभेदस्यैकत्राहष्टत्वात्—यद्यभिन्नः शब्दः, ग्रहणभेदो न प्राप्नोति ; न ह्यभिन्ने ग्रहणभेदं विषये पश्यामः। अथाभिन्नेऽपि विषये ग्रहणानि भिद्यन्त इति मन्यसे नित्यं ग्रहणभेदः स्यात्, ततश्च भिन्नोऽभिन्न इति भिन्नाभिन्नप्रत्ययौ न स्याताम्। अभिभवानुपपत्तिश्च ग्रहणयोर्युगपदसम्भवात्—न हि ग्रहणे युगपद्भवतः, न चैकं ग्रहणमात्मन एवाभिभावकम्, न चायमभिभवो नास्ति, तस्माद्भिद्यते शब्दः।

अभिभवानुपपत्तिश्च व्यञ्जकसमानदेशस्याभिव्यक्तौ प्राप्त्यभावात्—व्यञ्जकेन समानदेशोऽभिव्यज्यत (क) इति एतस्मिन् पक्षे नोपपद्यतेऽभिभवः। कस्मात्? व्यञ्जकसमानदेशत्वात्—न हि (ख)व्यञ्जकसमानदेशेनाप्राप्तः शब्दोऽभिभवितुं शक्यः। अप्राप्तत्वात् (ग) नह्यप्राप्तमभिभावकं भवति।

## न्यायवार्त्तिकतात्पर्यटीका

सत्यम्, अन्यदन्येनाभिभूयते ; तथाऽपि न गकारस्य नानात्वमपि तु तद्ग्रहणानाम्, तेषां चाभिभाव्याभिभावकभावो न गकारस्येत्यनेनाभिप्रायेण शङ्कते—ग्रहणमिति। निराकरोति—न ग्रहणभेदस्येति। अर्थभेदाधीननिरूपणो ग्रहणभेदो नार्थभेदमन्तरेण शक्यो निरूपयितुम्। (घ) न च भेदेनानिरूपितः शक्योऽभिभाव्याभिभावकभावेन प्रत्येतुमित्यर्थः। नित्यं ग्रहणभेदः स्यादिति, ग्रहणभेददर्शनाभ्युपगमे नियतमर्थभेदोऽभ्युपगन्तव्यः। तथा च सर्वमेव भिद्यत इति नाभिन्नं किंचिद्भवेत्। भेदोऽपि न स्यादभेदाश्रयत्वाद्भेदस्येत्यर्थः। अभिभवानुपपत्तिश्चेति, यस्मिन्नेव क्षणे पूर्वं ज्ञानमुत्तरेणोत्पद्याभिभवनीयं तदैव तेन विनाश्यते, न चासतोऽभिभव इत्यर्थः।

---

(क) 'अभिव्यज्यते शब्द इति' इति भाष्ये विशेषः।

(ख) अत्र 'व्यञ्जकसमानदेशत्वेन' इति समीचीनतया सम्भाव्यते। तथाच अनभिव्यक्तस्याभिभवस्वीकारानुपयोगात् अभिव्यक्तस्यैवाभिभवोऽङ्गीकर्त्तव्यः, अभिव्यक्तिस्तु शब्दस्य वीणादिदेश एव इति दूरदेशवर्त्तिना भेर्यादिना नाभिभव इत्याशयः।

(ग) प्राप्त्यभावादिति भाष्यं शब्दान्तरेण धृत्वा व्याचष्टे नहीति। अप्राप्तमिति कर्त्तरि क्तः, अभिभाव्यदेशेऽवर्त्तमानमपीत्यर्थः।

(घ) नच भेदेऽनिरूपिते शक्योऽभिभाव्याभिभावकभावः प्रत्येतुमिति पाठो युक्तः सम्भाव्यते।

## न्यायभाष्यम्

अप्राप्तेऽभिभव इति चेत् शब्दमात्राभिभवप्रसङ्गः—अथ मन्येत असत्यां प्राप्तावभिभवो भवतीति, एवं सति यथा भेरीशब्दः कश्चित्तन्त्रीस्वनमभिभवति एवमन्तिकस्थोपादानमिव दवीयःस्थो(१)पादानानपि तन्त्रीस्वनानभिभवेद् अप्राप्तेरविशेषात्। तत्र क्वचिदेव भेर्यां प्रणादितायां सर्वलोकेषु समानकालास्तन्त्रीस्वना न श्रूयेरन् इति। नानाभूतेषु शब्दसन्तानेषु सत्सु श्रोत्रप्रत्यासत्तिभावेन कस्यचिच्छब्दस्य तीव्रेण

## न्यायवार्त्तिकम्

अथाप्राप्तमप्यभिभावकं भवतीति मन्यसे, वीणाशब्दानामश्रवणप्रसङ्गः—अप्राप्ताः शङ्खरासभादिशब्दा अभिभावका इति न कदाचिद्वीणादिशब्दाः श्रूयेरन्। सर्वत्र सन्तीति चेत् न, पूर्वदोषानुवृत्तेः—अथ मन्यसे (२) यो व्यञ्जकसमानदेशं शब्दमभ्युपैति तस्यैष दोषः, अस्माकं तु सर्व एव शब्दाः समानदेशाः, तस्माददोषोऽयमिति ; न, पूर्वदोषानतिवृत्तेः—समानदेशत्वे शब्दानां व्यञ्जकेषु नियमो नास्तीति यत्किञ्चिद् व्यञ्जक(३)मुपात्तं सर्वशब्दव्यक्तिहेतुरिति पूर्वदोषानतिवृत्तिरिति। (क)समानदेशत्वे च वीणावेणुशब्दानां शङ्खशब्देन वीणावेणुशब्दयोरभिभव इति वीणादिशब्दाश्रवणप्रसङ्गः। तस्माच्छब्दा एव भिद्यन्त इति। तेषां च भिन्नानां समानदेशत्वे सति ये कर्णशष्कुलीमत्याकाशदेशे युगपत् समवयन्ति तत्र यः पटुः शब्दः स इतरस्याभिभावक इति। अभिभवश्च नाम मन्दस्य पटीयसा ग्रहणादग्रहणमिति।

## न्यायवार्त्तिकतात्पर्यटीका

सांख्यमतेऽपि नाभिभव इत्याह—अभिभवेति। पराजितं सांख्यं दृष्ट्वा नास्माकमयमस्त्यनुयोग इति मन्वानो मीमांसकः पुनः शङ्कते—सर्वत्रेति। निराकरोति—नेति।

## वृत्तिः

जातित्वादिना विशेष्यत्वसम्भवेऽपि जातित्वादेरप्रत्यक्षत्वान्न व्यभिचारः। मनस इन्द्रियत्वाभावाच्च नाऽऽत्मनि व्यभिचारः, आत्मन ऐन्द्रियकत्वाभावाद्वेत्याहुः।

अप्रयोजकत्वमाशङ्क्याऽऽह—कृतकेति। कृतके घटादौ यथा उपचारो ज्ञानं तथैव कार्यत्वप्रकारकप्रत्यक्षविषयत्वादित्यर्थः। तथा च कार्यत्वेनानाहार्यसार्वलौकिकप्रत्यक्षबलादनित्यत्वमेव सिध्यति।

---

(१) ज-पुस्तके '-पादानमपि तन्त्रीस्वनमभि-' इति पाठः। (२) योऽभिव्यञ्जक-' क०। (३) '-मुपात्तं न सर्वशब्दस्य' ख०।

(क) सर्वशब्दानां समानदेशत्वे दोषान्तरमाह समानेति।

## न्यायभाष्यम्

मन्दस्याभिभवो युक्त इति। कः (१)पुनरयमभिभवो नाम ? ग्राह्यसमानजातीय-ग्रहणकृतमग्रहणम् अभिभवः ; यथोल्काप्रकाशस्य ग्रहणार्हस्याऽऽदित्यप्रकाशेनेति ॥१३॥

## न्यायवार्त्तिकम्

यदि च सन्तानवृत्तिः शब्दः कर्णशष्कुलीमदाकाशदेशं प्राप्तश्च गृह्यते, दिग्देशप्रत्ययो न प्राप्नोति (क) पूर्वेण शब्द उत्तरेण शब्द इति। न हि विषयेषु प्रत्यासीदत्सु दिग्देशप्रत्ययो दृष्टः गन्धादिवदिति। न उपादाननिमित्तत्वाद्दिग्देशव्यपदेशस्य—योऽयं शब्देषु दिग्देशव्यपदेशः नायं शब्दनिमित्तः पूर्वापरादिभिन्नेभ्यो निमित्तेभ्य उपजायमानानामेकदेशग्रहणात् तुल्यो दिग्देशव्यपदेशः स्यात् ; तस्मान्न शब्दनिमित्तः। कुतस्तर्ह्ययं भवतीति वाच्यम् , निमित्तभेदात्—यानि निमित्तानि शब्दकारणस्य संयोगस्यानुग्रहकारीणि दिग्देशवन्ति तेषां निमित्तानां भेदाद् दिग्देशप्रत्यया इति। य उपलभ्यमाननिमित्ताः शब्दास्तेषु तद् युक्तं येषां तु शब्दानां निमित्तानि नोपलभ्यन्ते तेषु दिग्देशप्रत्ययो न युक्तः ? न न युक्तः, शब्दसन्तानस्य निमित्तभेदाभिमुख्येनाऽऽदौ प्राप्तेः—यः शब्दसन्तानो यस्मान्निमित्तादुपजायते स समन्तात् शब्दान्तराणि सन्तनोति। तत्र यः शब्दविशेष आदौ कर्णशष्कुलीमत आकाशदेशस्य तदभिमुखेन भागेन सम्बध्यते तन्निमित्तः पूर्वापरादिशब्दव्यपदेशः इति। यदा पुनराद्यशब्दपरिच्छेदो नास्ति तदा विपर्यय इति।

## न्यायवार्त्तिकतात्पर्यटीका

सांख्यश्चोदयति—यदि संतानवृत्तिरिति। परिहरति—शब्दसंतानस्य निमित्तभेदाभिमुख्येनाऽऽदौ प्राप्तेरिति। निमित्तभेदो भेरी शङ्खताल्वादिश्च तदाभिमुख्येन यः कर्णशष्कुल्यवरुद्धस्य नभसः श्रोत्रस्य भागः स्थितस्तस्मिन्नादौ य उत्पन्नः शब्दस्तस्य प्राप्तेः पूर्वादिदिगवस्थितशङ्खादिजन्माऽयं शब्द इत्यनुमीयते। एतदुक्तं भवति—विशिष्टदिग्देशावस्थितशङ्खादिप्रभवशब्दसंतानजन्यस्य तस्य शब्दस्य कोऽपि धर्मभेदः श्रोत्रगोचरः, यस्मात्तस्य विशिष्टदिग्देशावस्थितशङ्खादिप्रभवत्वमनुमीयते ; न चासौ सामान्यविशेषोऽव्यपदेश्यत्वान्नास्ति। न हीक्षुक्षीरगुडादीनां मधुरत्वावान्तरसामान्यभेदाः प्रत्यक्षवेदनीयाः शक्या अव्यपदेश्यतया प्रत्याख्यातुम् ; अनुभवश्च समानः। तस्मादानुमानिकः शब्दे दिग्देशप्रत्यय इति। यः शब्दसंतान इति। संतनोतीति संतानः, आद्यः शब्दो यो जायते स संतनोतीति सम्बन्धः। यस्मात्तन्निमित्तादभिमुखेनेति योजना। आद्यशब्देति, तदभिमुखभागयुक्तः शब्द इति।

## वृत्तिः

केचित्तु—उपचाराद्विनाशित्वात् कृतकवदिति दृष्टान्त इति।

---

(१) 'पुनरभिभवो' इति वि-टि।

(क) 'पूर्वेणे'ति एमप्रत्ययः। एवमुत्तरेणेत्यत्र।

(सू०)—न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च ॥ १४ ॥

### न्यायभाष्यम्

न खलु आदिमत्त्वादनित्यः शब्दः। कस्मात्? व्यभिचारात्। आदिमतः खलु घटाभावस्य दृष्टं नित्यत्वम्। कथमादिमान्? कारणविभागेभ्यो हि घटो न भवति। कथमस्य नित्यत्वम्? योऽसौ कारणविभागेभ्यो न भवति न तस्याभावो भावेन कदाचिन्निवर्त्यत इति। यदप्यैन्द्रियकत्वात्, तदपि व्यभिचरति, ऐन्द्रियकं च सामान्यं नित्यं चेति। यदपि कृतकवदुपचारादिति, एतदपि व्यभिचरति; नित्येष्वनित्यवदुपचारो दृष्टः—यथा हि भवति वृक्षस्य प्रदेशः कम्बलस्य प्रदेशः एवमाकाशस्य प्रदेशः आत्मनः प्रदेश इति भवतीति ॥ १४ ॥

### न्यायवार्त्तिकम्

एके तु ब्रुवते—नैव शब्देषु दिग्देशप्रत्ययाः सन्ति। कुतः? चक्षुर्विषयसिद्धौ दिग्देशाध्यवसायात्। तथाहि जात्यन्धानां पूर्वापरादिप्रत्ययाः शब्दे न सन्तीति। अपरे तु दिग्देशव्यपदेशेन चक्षुःश्रोत्रे अप्राप्यकारिणी इति ब्रुवते। तेषामुक्तमुत्तरं प्रत्यक्षसूत्रं वर्णयद्भिरिति ॥ १३ ॥

न घटाभावसामान्यनित्यत्वान्नित्येष्वप्यनित्यवदुपचाराच्च। सूत्रस्य पूर्वहेतूनामनैकान्तिकत्वज्ञापनमर्थः। शेषं भाष्ये ॥ १४ ॥

### न्यायवार्त्तिकतात्पर्यटीका

तदेवं स्वमतमुक्त्वा परमतमाह—एके त्विति। परोक्षे वक्तरीति शेषः। यद्यपि जात्यन्धानामपि कथंचिदभिमुखपृष्ठपार्श्वतः शब्दविवेकः संभवति तथाऽपि पूर्वापरदिग्विभागो नास्तीत्यत उक्तम्—जात्यन्धानामिति ॥ १३ ॥

न घ—च (सू० १४) ॥ (क)

### वृत्तिः

परे तु कृतकवदुपचारात्। कृतकसुखदुःखादिवद् व्यवहारात्। यथा हि सुखादौ तीव्रमन्दादिव्यवहारः शब्देऽप्येवम्, न तु नित्ये तथेत्याहुः ॥ १३ ॥

यथाश्रुते हेतूनां व्यभिचारमाशङ्कते—( न घटेति )

नोक्ता हेतवः घटाभावस्य घटध्वंसस्य नित्यत्वाद् अविनाशित्वाद् आदिमत्त्वं व्यभिचारि। ऐन्द्रियकत्वं सामान्ये व्यभिचारि, नित्येष्वप्यनित्यवदुपचारात्, यथा घटाकाशमुत्पन्नम्, अहं सुखी जात इत्यादि ॥ १४ ॥

---

(क) १४-सूत्रस्य तात्पर्यटीका नोपलभ्यते।

## (सू०)—तत्त्वभाक्तयो(१)र्नानात्वस्य विभागादव्यभिचारः ॥१५॥

### न्यायभाष्यम्

नित्यमित्यत्र किं तावत् तत्त्वम्? (२)अर्थान्तरस्यानुत्पत्तिधर्मकस्याऽऽत्महाना-नुपपत्तिर्नित्यत्वम्, तच्चाभावे नोपपद्यते। भाक्तं तु भवति (३)यत्तत्राऽऽत्मान-महासीद् यद् भूत्वा न भवति न जातु तत् पुनर्भवति, तत्र नित्य इव नित्यो घटाभाव इत्ययं पदार्थ इति। तत्र यथाजातीयकः शब्दो न तथाजातीयकं कार्यं किंचिन्नित्यं दृश्यत इत्यव्यभिचारः ॥ १५ ॥

### न्यायवार्त्तिकम्

तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः। नित्यत्वमित्यत्र किं तावत् तत्त्वम्? उभयान्तापरिच्छिन्नवस्तुसत्ता(४)सम्बन्ध इति। विपर्ययादनित्यत्वम्, एतच्चाभावे नास्ति। भाक्तं तु तद्भवति नित्य इव नित्यो घटाभाव इति, न पुनर्नित्य एव कालद्वयाननुभवात्—प्रध्वंसा-भावो न प्रागस्ति न घटकालेऽस्ति, प्रागभावो न घटकाले न प्रध्वंसकाल इति। कथं तर्हि नित्य इव नित्य इत्युच्यते? भक्त्या। का पुनरियं भक्तिः? प्रागभावस्य कारणाभावः प्रध्वंसा-भावस्य विनाशाभावः। उभयं चैतन्नित्यविषयमिति, एतत्सामान्यान्नित्य इव नित्यो न पुनर्नित्य एवेति ॥ १९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

तत्त्व—रः ( सू० १५ ) ॥ एतच्चाभावे नास्तीति। न सत्तासम्बन्धो (क)नोभयान्ताव-च्छिन्नत्वमित्यर्थः ॥ १९ ॥

### वृत्तिः

प्रथमे व्यभिचारं परिहरति—( तत्त्वभाक्तयोरिति )

तत्त्वस्य पारमार्थिकस्य भाक्तस्य च नानात्वस्य भेदस्य विभागाद् विवेकात् न व्यभिचारः। ध्वंसे हि उत्पत्तिमत्त्वलक्षणम् आदिमत्त्वम्, त्रैकालिकत्वरूपनित्यत्वाभाव-रूपं चानित्यत्वमस्त्येव, अविनाशित्वान्नित्यत्वमौपचारिकम्, अतो न व्यभिचारः। आदि-मत्त्वं प्रागभावावच्छिन्नसत्त्वं न चैतदभावे इति वाऽर्थः ॥ १५ ॥

---

(१) '-र्नानात्वविभागा-' इति ज-ल-ग-झा-सम्मतः पाठः। वि-फ-पुस्तकयोर्न्यायसूचीनिबन्धे च असमस्तपाठो गृहीतः। (२) 'आत्मान्तरस्य' ज-ख-ग०। (३) 'यत्तत्राऽऽत्मा न महानासीद्' इति ज०।
(४) क-ख-पुस्तकयोः-'संसर्ग' इति मुद्रितम्, तत्र धृतं पाठान्तरं तु गृहीतम्।

(क) अत्र नोभयान्तापरिच्छिन्नत्वमिति सम्यक्तया सम्भाव्यते।

### न्यायभाष्यम्

यदपि सामान्यनित्यत्वादिति इन्द्रियप्रत्यासत्तिग्राह्यमैन्द्रियकमिति—

## (सू०)—सन्तानानुमानविशेषणात् ॥ १६ ॥

(१)नित्येष्वव्यभिचार इति प्रकृतम्। नेन्द्रियग्रहणसामर्थ्याच्छब्दस्यानित्यत्वम्। किं तर्हि ? इन्द्रियप्रत्यासत्तिग्राह्यत्वात् सन्तानानुमानं तेनानित्यत्वमिति ॥ १६ ॥

यदपि नित्येष्वप्यनित्यवदुपचाराद् इति। न—

## (सू०)—कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् ॥ १७ ॥

(क)नित्येष्वप्यव्यभिचार इति। एवमाकाशप्रदेशः आत्मप्रदेश इति नाऽऽकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य। कथं ह्यविद्यमानमभिधीयते,

### न्यायवार्त्तिकम्

इन्द्रियप्रत्यासत्तिग्राह्य ऐन्द्रियक इति—

सन्तानानुमानविशेषणात्। अव्यभिचारः। न वयमैन्द्रियकत्वादित्यनेनानित्यत्वं प्रतिपादयामः अपि तु शब्दस्याभिव्यक्तिं प्रतिषेधामः। न हि व्यज्यमानस्यैन्द्रियकत्वं युक्तमिति पुरस्तादुक्तम् ॥ १६ ॥

कारणद्रव्यस्य प्रदेशशब्देनाभिधानान्नित्येष्वप्यव्यभिचारः(ख)। न हि नित्यानां द्रव्याणां प्रदेशशब्देन कारणमुच्यते। आकाशस्य प्रदेश आत्मनः प्रदेश इति नाऽऽकाशात्मनोः कारणद्रव्यमभिधीयते यथा कृतकस्य। किमिति नाभिधीयते ? अविद्यमानत्वात्—न हि विद्यमाना आकाशादेः प्रदेशा इति। कथं न विद्यन्ते ? प्रमाणतोऽनुपलब्धेः—यद्याकाशादेः प्रदेशाः स्युः प्रमाणत उपलभ्येरन्निति। कथं प्रमाणतोऽनुपलब्धिः ? विकल्पानुपपत्तेः—प्रदेशशब्देन कारणं वाऽभिधीयते आधारो वा ? न कारणमकृतकत्वात्—यस्मादकृतकमाकाशमतो न कारणार्थः प्रदेश-

### वृत्तिः

द्वितीये व्यभिचारमुद्धरति—( सन्तानेति )

सन्तानस्यानुमाने अनुमितिकरणे लिङ्गे विशेषणात्। सन्तानः सन्तन्यमानः एकधर्मावच्छिन्नत्वेन ज्ञायमानः। तेन सामान्यवत्त्वे सतीति विशेषणीयम् इति ॥ १६ ॥

---

(१) 'नित्ये व्यभिचारः' इति ज-ग०। 'नित्येष्वप्यव्यभिचारः' इति फ०।

(क) 'नित्येष्वप्यव्यभिचार इति' इत्यंशः ग-ज-ख-पुस्तकेषु सूत्रांशतया गृहीतः, फ-पुस्तके तु सर्वथा परित्यक्तः। झा-पुस्तके भाष्यतया धृतः। न्यायसूचीतात्पर्यपरिशुद्धिप्रभृतिषु सूत्रांशतया न गृहीतः। अस्माकं तु 'नित्येष्वप्यव्यभिचार इत्येव। आकाशप्रदेश' इत्यादिः पाठः सम्यक्तया प्रतिभाति। (ख) क-वार्त्तिक-पुस्तके '-प्यव्यभिचार ( इति )' इत्येवं मुद्रितम्।

## न्यायभाष्यम्

अविद्यमानता च प्रमाणतोऽनुपलब्धेः। किं तर्हि तत्राभिधीयते ? संयोगस्याव्याप्य-वृत्तित्वं—परिच्छिन्नेन द्रव्येणाऽऽकाशस्य संयोगो नाऽऽकाशं व्याप्नोति अव्याप्य वर्त्तत इति, तदस्य कृतकेन द्रव्येण सामान्यम्। न ह्यामलकयोः संयोग आश्रयं व्याप्नोति। सामान्यकृता च भक्तिराकाशस्य प्रदेश इति। अनेनाऽऽत्मप्रदेशो व्याख्यातः। संयोगवच्च शब्दबुद्ध्यादीनाम् अव्याप्यवृत्तित्वमिति। परीक्षिता च तीव्रमन्दता शब्दतत्त्वं न भक्तिकृतेति।

## न्यायवार्त्तिकम्

शब्देनोच्यते। नाऽऽधारोऽनाश्रितत्वात्—अनाश्रितमाकाशं तस्याऽऽधारार्थो न शक्यो वक्तुमिति। लोकविरोध इति चेत् नान्यथा तदुपपत्तेः—यद्याकाशं निष्प्रदेशं प्रतिपद्यसे ननु लोको विरुध्यते पूर्वभागेण व्याप्त आदित्य इति। न, अन्यथा तदुपपत्तेः—संयोगस्याव्याप्यवृत्तित्वे प्रदेशशब्देना-भिधीयमाने न लोकविरोधः, यस्माद् यत्संयोगस्याव्याप्यवृत्तित्वं तत्प्रदेशशब्देनाभिधीयते। एतच्च प्रदेशवता द्रव्येणाऽऽकाशस्य सामान्यम्। ये खलु परिच्छिन्ने (१)आमलकादिके भवतस्तयोर्यः संयोगो वर्त्तते स ते न व्याप्नोति प्रदेशवती च ते। आकाशसंयोगोऽपि नाऽऽकाशं व्याप्नोतीति प्रदेशवद्द्रव्यसामान्यात् प्रदेशवदाकाशमिति भाक्तः प्रयोगः। का पुनरियं भक्तिः ? अतथा-भूतस्य तथाभाविभिः सामान्यम्; उभयेन भज्यत इति भक्तिः। एतस्मात् सामान्यादध्यारोपित-प्रदेशवृत्तिः प्रदेशशब्दः—यस्मादाकाशस्य प्रदेशवद्भिर्द्रव्यैः सामान्यं संयोगस्याव्याप्यवृत्तित्व-मस्त्यतः प्रदेशशब्दोऽप्याकाशे प्रयुज्यत इति। एवमेतत् न तत्त्वतः, कुत इति चेत् न प्रमाणतो-ऽनुपलब्धेः—अथ मन्यसे आकाशप्रदेशाः प्रदेशवद्द्रव्यसामान्यादाकाश उपचर्यन्ते न पुनस्तत्त्वत-स्तदस्तीति (क) न (२) प्रमाणमस्ति; न प्रदेशस्य प्रमाणतोऽनुपलब्धेः—न ह्याकाशादेः प्रदेशप्रतिपादकं प्रत्यक्षादिप्रमाणं सम्भवतीति। स्वरूपेणानभिधानाच्च—यद्याकाशस्य प्रदेशाः

## वृत्तिः

तृतीये व्यभिचारं वारयति—

(कारणद्रव्यस्य प्रदेशशब्देनाभिधानात् नित्येष्वप्यव्यभिचार इति)

आकाशे हेतुर्नास्त्येव। आकाशे प्रादेशिकत्वव्यवहारस्तु गौणः, प्रदेशशब्देन कारणद्रव्यस्य कारणवतो द्रव्यस्याभिधानात्। न त्वाकाशं तादृशम्, तादृशत्वे वा साध्य-सत्त्वात् न व्यभिचारः। एवं सुखी जात इत्यादौ सुखाद्युत्पत्तिरेव विषय इति भावः ॥१७॥

---

(१) अतः परं क-वार्त्तिके 'अविप्रतिपन्न' इत्यधिकम्। (२) 'प्रमाणमस्तीति' ख०।

(क) 'न प्रमाणमस्तीति न तदस्ती'त्यस्य व्याख्यानं ग्रन्थेऽन्तर्भूतमिति सम्भाव्यते, सम्भावनाबीजं तु क-ख-पुस्तकयोर्दृष्टं सन्तीति पाठान्तरम्। तथाच न पुनस्तत्त्वतस्ते सन्तीति युक्तः पाठः। अगतिकतया च तत् पदं प्रमाणपरतया केनचिद् व्याख्यातम्।

## न्यायवार्त्तिकम्

स्युः ते स्वरूपेण व्यपदिश्येरन् यथा पटस्य प्रदेशाः। के ? तन्तवः। न पुनराकाशस्य प्रदेशाः के इत्युक्ते स्वरूपेण व्यपदेष्टुं शक्या इति। किमोऽनुपपत्तिश्च पूर्ववत्—यांश्चाऽऽकाशप्रदेशान् भवान् मन्यते ते किमाकाशात्मका उत नेति ? किं चातः ? यद्याकाशात्मका अनेकमाकाशमिति प्राप्तम्। अथ न, तेषां स्वभावो वक्तव्यः—कथं च ते तस्य प्रदेशा इति वक्तव्यम्। अनाकाशात्मकाः सन्तः आकाशस्य प्रदेशा इति केनार्थेनाभिधीयन्ते ? तद् यथा तन्तवः पटस्य प्रदेशा इत्युक्ते कारणार्थ आधारार्थश्च गम्यते न पुनराकाशस्य प्रदेशेष्वेतदस्ति। प्रदेशाभावादनाधारः संयोग इति चेन्नानाधारः आकाशवृत्तित्वात्—अथ मनुषे यद्याकाशदेशा न सन्ति आकाशदेशाश्रयः संयोगोऽनाधारः। न अनाधारः आकाशवृत्तित्वात्—यस्मात् त्वयैवोच्यते आकाशाश्रय इति, तस्मान्नानाधार इति। समानदेशा इति चेत् नाबाधनात्—अथ मन्यसे मूर्त्तिमद्द्रव्यसंयोगा ये आकाशदेशे वर्तन्ते ते प्रदेशाभावात् सर्व एव समानदेशाः प्राप्नुवन्ति इति, एवं च समानदेशत्वे सति न किञ्चिद्बाध्यत इति। तदेवं प्रदेशवद्द्रव्यसामान्यादाकाशप्रदेश इति (क)भाक्तः प्रत्यय इति। निष्प्रदेशत्वात् सर्वेण सर्वशब्दोपलब्धिप्रसङ्ग इति चेत् न, उक्तोत्तरत्वात्—अथ मनुषे यदि निष्प्रदेशमाकाशं (ख) तेन तर्हि सर्व एव शब्दाः समानदेशा इति सर्वैः सर्वः शब्द उपलभ्येत, न तूपलभ्यते, तस्माद् अन्यान्यवृत्तयः शब्दाः सर्वैरग्रहणादङ्गुलिरूपादिवदिति ; एतच्च न, उक्तोत्तरत्वात्—उक्तोत्तरमेतत् ; यथा संयोगस्याव्याप्यवृत्तित्वं तथा शब्दस्यापीति।

गुणत्वाद् व्यापकमित्येके—एके गुणत्वाद्धेतोः शब्दसंयोगादि अङ्गुलिरूपवद् व्यापकं प्रतिपद्यन्ते। त एवं प्रष्टव्याः व्यापकत्वमिति कोऽर्थः ? (१)यद्याश्रयवृत्तित्वं व्यापकत्वं न किञ्चिद् बाध्यते। अथान्यत् तन्नास्ति। वयं तु व्याप्तिमङ्गुलिरूपस्याऽऽश्रयोपलब्ध्योपलब्धिं ब्रूमः, न पुनः शब्दादय आश्रयोपलब्धावुपलभ्यन्ते तस्मादङ्गुलिरूपवन्न व्यापका इति। समुदितस्थानानामेकसमुदाय्युपलब्ध्यनुपलब्धी व्याप्त्यव्याप्ती एकाश्रयाणामाश्रयोपलब्धाविति। अथ य आकाशे मूर्त्तिमतां संयोगास्तेषां

## न्यायवार्त्तिकतात्पर्यटीका

ननु यद्यन्यद् व्यापकत्वं नास्ति कथं तर्हि भवद्भिः केषांचिद् व्यापकत्वमव्यापकत्वं च केषांचिदिष्यत इत्यत आह—वयं तु व्याप्तिमङ्गुलिरूपस्येति। यत्र यत्राऽऽश्रयोपलब्धिस्तत्र तत्र यद्वस्तूपलब्धियोग्यं सदुपलभ्यते तद् व्यापकम्, तेन बलाकाव्यापकमपि शौक्ल्यं मन्दमन्दालोके बलाकायामुपलभ्यमानायामपि नोपलभ्यते योग्यताभावात्। ईदृशं संयोगादीनां व्यापकत्वमशक्यं गुणत्वेन साधयितुमनुपलब्धिविरोधादित्याह—न पुनः शब्दादय इति, उपलब्धियोग्या इति शेषः। सर्ववस्तुविषयं च स्वाभिमतं व्यापकत्वाव्यापकत्वं संक्षिप्याऽऽह—समुदितस्थानानामिति। समुदितस्थाना हि सत्तादयो गोत्वादयश्च व्यापका एकसमुदाय्युपलम्भेऽप्युपलब्धेः,

(१) 'यद्याश्रयवृत्तित्वव्याप्तिः' क०।

(क) क-पुस्तके 'प्रत्ययः (प्रयोगः) इति' इति मुद्रितम्। (ख) तेनेति कुत्रान्वेतीत्यनुसन्धेयम्।

## न्यायवार्त्तिकम्

कांश्चित् केचित् कृतकान् प्रतिपद्यन्ते कांश्चिदकृतकानिति। तत्र कार्यद्रव्यसंयोगः कृतकः संयोगजत्वात् (क)उत्पद्यमानस्य कारणसम्बन्धिभिः कार्यस्य संयोगजः संयोग इति। (१)क्रियाजं तु केचित् नेच्छन्ति यावद्द्रव्यभावित्वात् संयोगस्य, अविभक्तस्य संयोगो नास्तीति नास्त्याकाशे क्रियाजः संयोग इति अण्वाकाश(२)संयोगमकृतकमिच्छन्ति। (३)तत्राण्वाकाशसंयोगस्य तावत् कृतकत्वेऽनुमानम् (ख)—आकाशेन कृतकसम्बन्धेन सम्बन्धी परमाणुर्मूर्त्तिमत्त्वादिभ्यो घटादिवदिति। कार्याकाशसंयोगो विप्रतिपत्तिविषयो न यावद्द्रव्यभावी अविनश्यदाधारत्वे क्रियावद्द्रव्यवृत्तित्वे सत्यप्राप्तिप्रतिद्वन्द्वित्वात् मूर्त्तिमदितरसंयोगवत्। तस्मात् कार्यद्रव्येणाऽऽकाशस्य संयोगजः संयोगः क्रियाजश्च, परमाणोस्तु क्रियाज इति। (ग) विप्रतिपत्तिविषयाविभागिन आकाशादयः (४)क्रियावद्द्रव्यसंयोगित्वात् परमाणुवत्। यथा परमाणोः क्रियावद्द्रव्यसंयोगा अयावद्द्रव्यभाविनः, संयोगवच्छब्दबुद्ध्यादयश्चाऽऽत्मन्यव्यापकाः संयोगस्य चाव्याप्यवृत्तित्वमात्मनः प्रदेशार्थं इति व्याख्यातम्। (५)एकस्य चानेक-

## न्यायवार्त्तिकतात्पर्यटीका

संयोगादयस्तु समुदितस्थाना अव्यापकाः, न ह्येते समुदायिन्येकस्मिन्निरूप्यन्ते अपि तु समुदितेष्वेव। एकाश्रयाणां रूपादीनां व्यापकानामव्यापकानां च शब्द-बुद्ध्यादीनामाश्रयोपलब्धावुपलब्ध्यनुपलब्धी व्याप्त्यव्याप्ती इति योजना। एकसमुदायीत्यत्रैकग्रहणमशेषसमुदायिनिवृत्त्यर्थम्, न त्वेको विवक्षितस्तद्ग्रहणं वा; तेन कतिपयावयवोपलब्धौ तदनुपलब्धौ चोपलभ्यमानोऽवयवी व्यापकत्वेनोक्तो भवति। मूर्त्तिमत्त्वादिभ्य इत्यादिग्रहणेन स्पर्शवत्त्वाव्यापित्वादीनि गृह्यन्ते। कार्याकाशसंयोगो विप्रतिपत्तिविषय इति। यदि कार्याकाशसंयोगमात्रं पक्षीक्रियते ततो विनश्यदाधारद्रव्यवर्तिनः (घ)संयोगस्येत्यस्त्यत एव यावद्द्रव्यभावित्वमित्यपसिद्धान्तः स्यादित्यत उक्तम्—विप्रतिपत्तिविषय इति। तेनैवानेकान्तिकं स्यादत उक्तम्—अविनश्यदाधारत्व इति। तथाऽपि पटस्य नीलीद्रव्यसंयोगेन यावद्द्रव्यभाविनाऽनैकान्तिकं स्यादित्यत उक्तम्—क्रियावद्द्रव्यवृत्तित्वे इति। विवक्षितपरस्परविभागहेतुक्रियावत्त्वमिह ग्राह्यम्। क्वचित् पठ्यते—विप्रतिपत्तिविषया विभागिन आकाशादयः क्रियावद्द्रव्यसंयोगित्वात् परमाणुवदिति। अत्र यद्याकाशादयो विभागिन इति साध्येत

---

(१) 'क्रियाजन्यं तु' ख०। (२) '-संयोगं तु कृतकमिच्छन्तीति' ख०। (३) 'तत्रैवाऽऽकाश-' क०। (४) 'क्रियावद्द्रव्यसंयोगित्वाद् विभागित्वं संयोगवत्' इति क-पुस्तकधृतं पाठान्तरम्। (५) 'एकस्यानेक-' ख०।

(क) उत्पद्यमानस्येति। उत्पद्यमानस्य कार्यस्य घटादेर्यत् कारणं कपालादि तद्रूपैः सम्बन्धिभिः सह य आकाशसंयोगस्तज्जन्यो घटादेराकाशादिसंयोग इति योजना। (ख) 'आकाशेन सहेत्यर्थः'। (ग) विप्रतिपत्तीत्यादिः परमाणुवदित्यन्तो भागः असाववैक इति तात्पर्यटीकायां क्वचित् पठ्यते' इति दर्शनात् परिज्ञायते। (घ) अयं प्रामादिकः पाठः।

## न्यायभाष्यम्

कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयते इति ? शीलमिदं भगवतः सूत्रकारस्य बहुष्वधिकरणेषु द्वौ पक्षौ न व्यवस्थापयति तत्र शास्त्रसिद्धान्तात् तत्त्वावधारणं प्रतिपत्तुमर्हतीति मन्यते। शास्त्रसिद्धान्तस्तु न्यायसमाख्यातमनुमतं बहुशाखमनुमानमिति ॥ १७ ॥

## न्यायवार्त्तिकम्

(क)मूर्त्तिमत्प्रदेशवद्द्रव्यसम्बन्धित्वं प्रदेशार्थः। यद्वा यदाकाशस्यैकस्य सतः प्रदेशवताऽनेकेन सम्बन्धित्वं तत् प्रदेशवद्द्रव्यसामान्यम्, यथा घटादेः।

'कस्मात् पुनः सूत्रकारस्यास्मिन्नर्थे सूत्रं न श्रूयते' इति। कतमस्मिन्नर्थे ? निष्प्रदेशमाकाशं निष्प्रदेश आत्मेति एतस्मिन्नर्थे। अर्थतोऽधिगतेर्न सूत्रम्—यस्मादयमर्थोऽर्थतोऽधिगम्यते ततो न सूत्रित इति। शब्दसन्तानप्रतिपादने वा न सूत्रमर्थतोऽधिगतेः।

शास्त्रसिद्धान्ताद्वा तदधिगतिः—शास्त्रसिद्धान्तस्तु न्यायसमाख्यातं बहुशाखमनुमानं तेनानुक्तमपि गम्यत इति न सूत्र्यते ॥ १७॥

## न्यायवार्त्तिकतात्पर्यटीका

तत आत्मादिभिरपि विभागिनः स्युरित्यपसिद्धान्तः स्यादत उक्तम्—विप्रतिपत्तिविषया इति। ततो मूर्तेन (ख)विभागो न इत्यभिमतं लभ्यते। संयोगस्य चाव्याप्यवृत्तित्वमिति। प्रदेशवतोः खल्वामलकयोः संयोगः (१)अव्याप्यवृत्तिता संयोगस्याऽऽकाशादावपि प्रदेशवद्द्रव्यसामान्यम्, तेनाऽऽकाशादौ प्रदेशोपचार इत्युक्तम् (ग), संप्रति (२)सामान्यान्तरमुपचारबीजमाह—एकस्य चेति। यथा घट एकोऽनेकमूर्त्तिमद्द्रव्यसंयोगी प्रदेशवानेवमाकाशमित्यर्थः।

कतमस्मिन्नर्थ इति प्रश्नः। तस्यार्थः 'तत्त्वभाक्तयोर्नानात्वस्य विभागादव्यभिचारः' 'संतानानुमानविशेषणात्' 'कारणद्रव्यस्य प्रदेशशब्देनाभिधाना'दिति सूत्रैरेवानैकान्तिकत्वपरिहारादस्मिन्नर्थे सूत्रं न श्रूयते इत्ययुक्तमिति। उत्तरम्—निष्प्रदेशमाकाशमिति, न हि 'कारणद्रव्यस्य प्रदेशशब्देनाभिधाना'दिति सूत्रमाकाशादीनां निष्प्रदेशत्वं साक्षाद् ब्रूत इत्यर्थः। एवं स्थिते भाष्यकारीये प्रश्ने वार्तिककारः स्वमुत्तरमाह—अर्थतोऽधिगतेरिति। विषयान्तरं प्रश्नोत्तरयोराह—शब्दसंतानेति।

भाष्यकारीयमुत्तरमाह (घ)—द्वौ पक्षौ न व्यवस्थापयतीति। भाष्यस्यार्थः निष्प्रदेशत्वमात्मादीनां शब्दसंतानं च साक्षादाचक्षाणः सूत्रकारः पक्षं व्यवस्थापयेन्न तु तेनेदमभिहितमिति। अनुमानतरोश्च पञ्चानां रूपाणां चतुर्णां वा संपदः शाखा बहव इत्यर्थः ॥ १७ ॥

---

(१) 'व्याप्यवृत्तिता' इति ख०। (२) 'सामान्यान्तर उप-' क-ख०।

(क) अत्र मूर्त्तिमत्प्रदेशवदित्यनयोरेकं व्याख्यानमपरं व्याख्येयं प्रमादादुभयं ग्रन्थेऽन्तर्भावितमिति प्रतिभाति। (ख) 'विभागिनः' इति भवितुमर्हति। (ग) २९४पृ० वार्त्तिके द्रष्टव्यम्। (घ) 'आहे'ति भाष्यकार इति शेषः।

## न्यायभाष्यम्

(१) अथापि खल्विदमस्ति इदं नास्तीति कुत एतत् प्रतिपत्तव्यमिति ? प्रमाणत उपलब्धेरनुपलब्धेश्चेति। अविद्यमानस्तर्हि शब्दः—

### (सू०)—प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च ॥१८॥

प्रागुच्चारणान्नास्ति शब्दः। कस्मात् ? अनुपलब्धेः। "सतोऽनुपलब्धिरावरणादिभ्यः" एतन्नोपपद्यते। कस्मात् ? आवरणादीनामनुपलब्धिकारणानामग्रहणात्—अनेनाऽऽवृतः शब्दो नोपलभ्यते असन्निकृष्टश्चेन्द्रिय(२)व्यवधानादित्येवमादि अनुपलब्धिकारणं न गृह्यत इति सोऽयमनुच्चारितो नास्तीति। उच्चारणमस्य व्यञ्जकं तदभावात् प्रागुच्चारणादनुपलब्धिरिति। किमिदमुच्चारणं नामेति ? विवक्षाजनितेन

## न्यायवार्त्तिकम्

(क)अथापीदमस्ति इदं नास्तीति भाष्यम्। योऽयं पर्यनुयोगस्तस्य को विषय इति ? अनुपलभ्यमानास्तित्वम्—ये शब्दस्य नित्यत्वं कल्पयन्ति ते इदं पर्यनुयोज्याः इदमस्ति इदं नास्तीत्येतद् भवन्तः (३)कुतः प्रतिपद्यन्त इति। एवमनुयुक्ताः सन्तः प्रतिब्रुवते प्रमाणत उपलब्धेरनुपलब्धेश्चेति।

अविद्यमानस्तर्हि शब्दः ?—

प्रागुच्चारणादनुपलब्धेरावरणाद्यनुपलब्धेश्च इति। यच्चोभयपक्षसम्प्रतिपन्नं घटाद्यनित्यत्वेन, तेन चानुयोज्याः—यदिदमनित्यं घटादि भवद्भिः प्रतिपद्यते तत् कथमनित्यमिति। एवमनुयुक्ता यदि घटाद्यनित्यत्वन्यायं प्रतिपद्यन्ते स शब्देऽपीति सूत्रम्। सतोऽनुपलब्धिकारणाभावे कदाचिदनुपलब्धेरनित्यः शब्द इति सूत्रार्थः। शेषं भाष्ये।

व्यञ्जकाभावादग्रहणमिति चेत् नोक्तोत्तरत्वात्—अथ मन्यसे शब्दस्योच्चारणं व्यञ्जकं तस्याभावान्नोपलभ्यत इति असिद्धं विशेषणमनुपलब्धिकारणाभाव इति। किमिदमुच्चारणं नाम ?

## न्यायवार्त्तिकतात्पर्यटीका

सतोऽनुपलब्धिकारणाभाव इति। प्राक्प्रध्वंसाभावाभ्यां व्यभिचारो मा भूदिति सत इत्युक्तम् ॥ १८ ॥

---

(१) 'तथाऽपि' इति फ०। (२) '-व्यवधानाद्वा इत्येव'—इति वि-टि-भा०। (३) 'कथं'।

(क) 'अथापि खल्वि'ति भाष्ये विशेषः।

### न्यायभाष्यम्

प्रयत्नेन कोष्ठ्यस्य वायोः प्रेरितस्य कण्ठताल्वादिप्रतिघातः, यथास्थानं प्रतिघाताद्वर्णाभिव्यक्तिरिति। संयोगविशेषो वै प्रतिघातः, प्रतिषिद्धं च संयोगस्य व्यञ्जकत्वम्, तस्मान्न व्यञ्जकाभावादग्रहणम्, अपि त्वभावादेवेति। सोऽयमुच्चार्यमाणः श्रूयते श्रूयमाणश्चाभूत्वा भवतीति अनुमीयते। (१)ऊर्ध्वं चोच्चारणान्न श्रूयते स भूत्वा न भवति अभावान्न श्रूयत इति। कथम्? आवरणाद्यनुपलब्धेरित्युक्तम्। तस्मादुत्पत्तितिरोभावधर्मकः शब्द इति ॥ १८ ॥

एवं च सति तत्त्वं पांशुभि(२)रिवावाकिरन्निदमाह—

## (सू०)—तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः ॥१९॥

यद्यनुपलम्भादावरणं नास्ति, आवरणानुपलब्धिरपि तर्ह्यनुपलम्भात् नास्तीति तस्या अभावादप्रतिषिद्धमावरणमिति। कथं पुनर्जानीते भवान् नाऽऽवरणानुपलब्धिरुपलभ्यत

### न्यायवार्त्तिकम्

विवक्षाजनितेन प्रयत्नेन कौष्ठ्यस्य वायोः प्रेरितस्य कण्ठादिस्थानाभिघातः। तन्न उक्तोत्तरत्वात्—वायुगतवेगापेक्षो(३) वायुना ताल्वादिसंयोगोऽभिघातः संयोगस्य व्यञ्जकत्वं प्राक् प्रतिषिद्धमिति ॥ १८ ॥

एवं च (क)सति तत्त्वं पांशुभिरवाकिरन्निदमाह। कोऽस्यार्थः? तत्त्व उक्ते जात्या प्रत्यवतिष्ठते, सा च जातिः—

### वृत्तिः

न चोक्तहेतूनामप्रयोजकत्वम्, विपक्षबाधकसत्त्वादित्याह—(प्रागिति)

शब्दो यदि नित्यः स्यात् उच्चारणात् प्रागप्युपलभ्येत श्रोत्रसन्निकर्षसत्त्वात्, न चात्र प्रतिबन्धकमस्तीत्याह—आवरणेति। आवरणादेः प्रतिबन्धकस्यानुपलब्ध्याऽभावनिर्णयात् देशान्तरगमनं तु शब्दस्यामूर्त्तत्वात् न सम्भाव्यते। अतीन्द्रियानन्तप्रतिबन्धकत्वकल्पनामपेक्ष्य शब्दानित्यत्वकल्पनैव लघीयसीति भावः ॥ १८ ॥

---

(१) 'ऊर्द्धं चोच्चारणं श्रूयते' इति ग०, 'ऊर्द्धं चोच्चारणात् श्रूयते' इति ज०।

(२) '-रिवाकिरन्' इति ग-फ०।

(३) 'वेगापेक्षेण वायुना' इति आदर्श-पुस्तकधृतं पाठान्तरम्।

(क) क-ख-पुस्तकयोः 'सतीति' नास्ति पाठान्तररूपेण तु धृतम्; भाष्यानुसारितया चास्माभिस्तदेव गृहीतम्।

## न्यायभाष्यम्

इति ? किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वात् समानम्—अयं खल्वावरणम् अनुपलभमानः प्रत्यात्ममेव संवेदयते नाऽऽवरणमुपलभ इति, यथा कुड्येनाऽऽवृतस्याऽऽवरणमुपलभमानः प्रत्यात्ममेव संवेदयते। सेयमावरणोपलब्धिवदावरणानुपलब्धिरपि संवेद्यैवेति। एवं च सत्यपहृतविषयमुत्तरवाक्यमस्तीति ॥ १९ ॥

## न्यायवार्त्तिकम्

तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः। कोऽस्य वाक्यस्यार्थः ? आवरणाद्यनुपलब्ध्याऽनेकान्त इत्यर्थः। यथावरणाद्यनुपलब्धिरनुपलभ्यमानाऽप्यस्ति तथावरणमित्यनेकान्तः। अथानुपलब्धिरनुपलभ्यमाना नास्ति ? तदभावादुपलब्धिरस्ति। न चाविद्यमानस्योपलब्धिरस्तीति सिद्धमावरणम्। कथं पुनर्भवान् जानीते नाऽऽवरणानुपलब्धिरुपलभ्यत इति ? किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वात्—(१)प्रत्यात्ममेवायमावरणानुपलब्धिमावरणोपलब्धिं च वेदयते। एवं च सत्यपहृतविषयमुत्तरवाक्यमिति। 'अपहृतविषय'मिति नास्योत्थानमस्तीति ॥ १९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

अत्र जातिवादिनः सूत्रद्वयम्—

तदनुपलब्धेरनुपलम्भादावरणोपपत्तिः।

( सू० १९ ) ॥ आवरणानुपलब्धेस्तावदुपलब्धिर्न संभवति अनुपलब्धिस्वरूपविरोधात्। तस्मादावरणानुपलब्धिरेव वक्तव्या। तथाचाऽऽवरणानुपलब्धेरभावे सत्यावरणोपलब्धिस्तया त्वावरणसद्भावः ज्ञानस्य निरालम्बनत्वायोगात्।

द्वितीयं सूत्रम्—अनुपलम्भादप्यनुपलब्धिसद्भावान्नाऽऽवरणानुपपत्तिरनुपलम्भात्।

( सू० २० ) ॥ यदि पूर्वोक्तदोषभयादनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति तथा सत्यनुपलब्धेरनैकान्तिकत्वान्नाऽऽवरणाभावोऽनुपलम्भादिति। तदिह द्वाभ्यां सूत्राभ्यामनैकान्तिकत्वं देशितम्। अस्यावतारभाष्यम्—एवं च सति तत्त्वमिति।

तदेतद्वार्तिककारो व्याचष्टे—एवं चेति। सूत्रयोस्तात्पर्यं प्रश्नपूर्वकमेकत्र दर्शयति—कोऽस्य वाक्यस्येति। अत्र सिद्धान्ती पृच्छति—कथं पुनरिति। जातिवाद्याह—किमत्र ज्ञेयं प्रत्यात्मवेदनीयत्वादिति। सिद्धान्त्याह—एवं सतीति। यद्यावरणानुपलब्धिरुपलभ्यते मानसेन प्रत्यक्षेण तदा नानैकान्तिकत्वं न चाऽऽवरणसद्भावः। उत्तरवाक्यमिति। जात्युत्तरवाक्यमित्यर्थः। नास्योन्मानमस्तीति। न सूत्रद्वयस्याप्युत्थानमस्तीत्यर्थः ॥ १९ ॥

(१) 'प्रत्यात्मवेदनीयामेवाय-' इति क०।

### न्यायभाष्यम्

अभ्यनुज्ञावादेन तूच्यते जातिवादिना—

## (सू०)—अनुपलम्भादप्यनुपलब्धिसद्भावान्नाऽऽवरणानुपपत्तिरनुपलम्भात् ॥ २० ॥

यथाऽनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति यद्यभ्यनुजानाति भवान् (१) अनुपलभ्यमानावरणानुपलब्धिरस्तीति(१*) अभ्यनुज्ञाय च वदति नास्त्यावरणमनुपलम्भादिति (२), एतस्मिन्नप्यभ्यनुज्ञावादे प्रतिपत्तिनियमो नोपपद्यत इति ॥ २० ॥

### न्यायवार्त्तिकम्

अभ्यनुज्ञावादेन तूच्यते—

अनुपलम्भादप्यनुपलब्धि(क)सद्भाववन्नाऽऽवरणानुपपत्तिरनुपलम्भात् इति। अस्य सूत्रस्य अनुपलब्धेरनैकान्तिकत्वमर्थः ॥ २० ॥

### न्यायवार्त्तिकतात्पर्यटीका

ननु पूर्वेणैव सूत्रेणाऽऽवरणोपपत्तौ दर्शितायां कृतमनुपलम्भादित्यनेन सूत्रेणेत्यत आह—अभ्यनुज्ञावादेनेति।

अनु—म्भात् (सू० २०) ॥ पूर्वसूत्रेण अनुपलब्धेरनुपलम्भादभाव उक्तः, इह त्वनुपलम्भादपि यद्यनुपलब्धेर्नाभावादिति। तदनेनाभ्यनुज्ञाया अनैकान्तिकत्वमुच्यत इति नापार्थकमेतत्सूत्रमित्यर्थः। सूत्रगतोऽपिरभ्युपगमांशमवद्योतयति। एतदेवाऽऽह भाष्यकारः—(ख)यद्यभ्यनुजानाति भवान् इति। तदनेन सूत्रद्वयेनानैकान्तिकत्वमुक्तमिति स्थितम् ॥ २० ॥

### वृत्तिः

भ्रान्तस्य पूर्वपक्षपरं सूत्रद्वयम्—( तदनुपलब्धेरिति, अनुपलम्भादिति च )

यथा त्वयावरणस्यानुपलब्ध्याऽभाव इत्युच्यते, तथावरणानुपलब्धेरनुपलम्भात्तदभाव आवरणोपलब्धिरेव स्यात्। यदि वा आवरणानुपलब्धेरनुपलम्भेऽपि नाऽऽवरणानुपलब्धेरभावः तदावरणस्यानुपलम्भादपि नाऽऽवरणस्यानुपपत्तिरित्यर्थः ॥१९—२०॥

---

(१) 'अनुपलभ्यमानाऽप्यावरणानुपलब्धिरस्ति एवमनुपलभ्यमानमप्यावरणमस्तीति। यद्यभ्यनुजानाति न चानुपलभ्यमाना नावरणानुपलब्धिरस्तीति' ज०। (२) अतः परं ग-झा-ख-पुस्तकेषु 'एतत्' इत्यधिकम्।

(क) यद्यपि 'अनुपलब्धिसद्भाववत्' इति वार्त्तिकधृत एव पाठो व्याख्यादर्शनेन भाष्यकारसम्मतः प्रतीयते तथाऽपि मूले आदर्शसकलपुस्तकानुसारितया न्यायसूचीनिबन्धगृहीततया च '-सद्भावात्' इति गृहीतम्।

(ख) क-ख-पुस्तकयोः 'यद्यप्यनुजानाति' इति मुद्रितम्।

# (सू०)—अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः ॥२१॥

## न्यायभाष्यम्

यदुपलभ्यते तदस्ति, यन्नोपलभ्यते (१) तन्नास्ति, इति अनुपलम्भात्मकमसदिति व्यवस्थितम्। उपलब्ध्यभावश्चानुपलब्धिरिति सेयमभावत्वान्नोपलभ्यते(१*)। सच्च

## न्यायवार्त्तिकम्

अनुपलम्भात्मकत्वादनुपलब्धेरहेतुः। अतथाजातीयेन प्रत्यवस्थानादनुत्तरमिति सूत्रार्थः। यथाजातीयकः शब्दोऽनित्यस्तथाजातीयकं किञ्चिन्नित्यं न दृष्टमिति। उक्तं चात्र। किमुक्तम् ? उभयान्तापरिच्छिन्नवस्तुसत्तासम्बन्धो नित्यतेति। तस्मादयथार्थप्रत्यवस्थानात् (क) न किञ्चिदेतत्।

## न्यायवार्त्तिकतात्पर्यटीका

अस्योत्तरसूत्रम्—

अनु—तुः (सू० २१) ॥ जातिवादी अनुपलब्धेरनुपलब्धिर्नास्ति विरोधादिति मन्यते। तत्र विधिविषयप्रमाणगोचरताऽनुपलब्धौ विरुध्येत ; (ख) न तु निषेधगोचरप्रमाणविषयताऽपि। ततश्चोपलब्धिं निषेधता प्रमाणेन मनसाऽनुपलब्धिग्रहणं न विरोधमावहति। तदयं सूत्रार्थः—अनुपलब्धेः आवरणानुपलब्धेः अनुपलम्भात्मकत्वाद् आवरणोपलब्धिनिषेधात्मकत्वात् 'तदनुपलब्धेरनुपलम्भा-' दित्ययमावरणोपपत्तौ न हेतुः, असिद्धत्वात्—निषेधविषयेणानुपलब्धेरनुपलम्भादिति।

तदेतद्भाष्यकारो व्याचष्टे—यदुपलभ्यत इति। यदुपलभ्यते विधिविषयेण प्रमाणेन तदस्ति, यन्नोपलभ्यते यन्निषेधविषयेण प्रमाणेनोपलभ्यते तन्नास्तीति। तस्मादनुपलम्भात्मक-निषेधविषयप्रमाणागम्यमसदिति स्थितम्।

उपलब्ध्यभावश्चानुपलब्धिः (ग)सेयमभावत्वान्नोपलभ्यते विधिविषयेण प्रमाणेन। शेषं सुगमम्।

अस्य वार्तिककारः परमतात्पर्यमाह—अतथाजातीयेनेति। अनुत्तरं जात्युत्तरमित्यर्थः। यथाजातीयक इति। उपलब्धस्य हि शब्दस्यासत्यनुपलब्धिकारणे प्रागूर्द्ध्वं चोच्चारणादनुपलभ्यमानस्यानित्यस्य सधर्मा नान्य आत्मादिर्दृष्टोऽनित्य इति। ननु प्रागूर्द्ध्वं चोच्चारणान्मा भूच्छब्द इति एतावताऽपि नित्यान्तरवैधर्म्येण कस्मान्न नित्यः शब्दः, न ह्यात्माकाशादयो नित्याः सर्वथा सर्वेषां सधर्माणः ; मा भूदेषामभेद इत्यत आह—उक्तं चेति।

---

(१) अयमंशः टि-पुस्तके नास्ति।

(क) क-ख-वार्त्तिकपुस्तकयोः 'यत्किञ्चिदेतत्' इति प्रमादान्मुद्रितम्। (ख) 'ननु' इत्यादर्श-पुस्तक-पाठः प्रामादिकः। (ग) भाष्यगतम् 'इति' पदं त्यक्तम्।

## न्यायभाष्यम्

खल्वावरणं तस्योपलब्ध्या भवितव्यं न चोपलभ्यते तस्मान्नास्तीति। (१)तत्र यदुक्तं नाऽऽवरणानुपपत्तिरनुपलम्भादित्ययुक्तमिति ॥ २१ ॥

अथ शब्दस्य नित्यत्वं प्रतिजानानः कस्माद्धेतोः प्रतिजानीते—

## न्यायवार्त्तिकम्

अनित्यः शब्दो गुणत्वे सत्यस्मदादीन्द्रियविषयत्वाद् बुद्धिवत्। अव्यापकस्य व्यापकद्रव्यसमवायित्वे सति प्रत्यक्षत्वात् सुखवत्। आकाशनिष्प्रदेशत्वे हेतुः निष्प्रदेशमाकाशं व्यापकत्वात् आत्मवत्, द्रव्यस्य सतः (२) सर्वदाऽमूर्त्तत्वात् आत्मवदेव। व्यापकत्वादेवाकृतकत्वम्। (३)व्यापकत्वे च (क)द्रव्यव्यापकस्य सतः सर्वदाऽमूर्त्तत्वात्। एतेन दिक्कालौ व्याख्यातौ। एतावत्त्वसाधनस्थित्या व्यवस्थितम् अनित्यः शब्द इति ॥ २१ ॥

अथ शब्दस्य नित्यत्वं प्रतिजानान इति भाष्यम्। विप्रतिपत्तेः प्रमाणमूलत्वाद्धेतोः परिप्रश्नः।

## न्यायवार्त्तिकतात्पर्यटीका

अनित्यत्वसाधनमाह—अनित्य इति। प्रत्यक्षत्वादित्युच्यमाने गोत्वादिभिर्व्यभिचारः स्यादत उक्तम्—(ख)व्यापकद्रव्ये समवाये सतीति। तथाऽप्यात्मसमवायिनैकत्वेन व्यभिचारः स्यादत उक्तम्—(ग) अव्यापकस्य असमवाये सतीति, तथाऽप्यात्मसमवायित्वस्येति। अमूर्त्तत्वादित्युच्यमाने घटादिभिः प्रदेशवद्भिः प्रथमे क्षणे व्यभिचारोऽत उक्तम्—सर्वदेति। तथाऽपि क्रियागुणादिभिर्व्यभिचारस्तेषामपि हि समवायिकारणं प्रदेश इत्यत उक्तम्—द्रव्यस्य सत इति॥२१॥

तदेवं स्वपक्षसाधनमुक्त्वा विप्रतिपत्तिनिमित्तं परपक्षसाधनमुपन्यस्य निराकरोति—अथ शब्दस्येति।

## वृत्तिः

सिद्धान्तसूत्रम्—(अनुपलम्भेति)

आवरणानुपलब्धेरनुपलम्भादावरणोपलब्धिरिति जात्युत्तरम्। 'अहेतुः' न मन्मतप्रतिषेधसाधनम्, अनुपलब्धेः आवरणानुपलब्धेः, अनुपलम्भात्मकत्वाद् उपलम्भाभावात्मकत्वात्, तस्य च मनसैव सुग्रहत्वात् तदनुपलब्धिरसिद्धेति भावः ॥ २१ ॥

---

(१) 'तच्च' ज-ल-ग०। (२) 'सदा' क-ख०। (३) 'व्यापकत्वं च' ख०।

(क) अत्र 'द्रव्यस्य सतः' इति सम्यक्। (ख) अत्र व्याख्यानव्याख्येययोरक्षरविसंवादो द्रष्टव्यः।

(ग) क-ख-तात्पर्यपुस्तकयोः '**अव्यापकस्यासमवाये सतीति**' इति मुद्रितम्। 'असमवाये सती'त्यंशो वार्त्तिके न दृश्यते। 'तथाऽप्यात्मसमवायिनेति समवाये सतीति' इत्येवं पाठकल्पनायां तु अर्थसङ्गतिर्भवतीति चिन्तनीयम्।

## (सू०)—अस्पर्शत्वात् ॥ २२ ॥

### न्यायभाष्यम्

अस्पर्शमाकाशं नित्यं द्रव्यमिति तथा च शब्द इति ॥ २२ ॥

(क)सोऽयमुभयतः सव्यभिचारः—स्पर्शवांश्चाणुर्नित्यः, अस्पर्शं च कर्मानित्यं द्रव्यम् ।

अस्पर्शत्वादित्येतस्य साध्यसाधर्म्येणोदाहरणम्—

## (सू०)—न कर्मानित्यत्वात् ॥२३॥

(भा०) साध्यवैधर्म्येणोदाहरणम्—

## (सू०)—(१)नाणुनित्यत्वात् ॥ २४ ॥

(भा०) उभयस्मिन्नुदाहरणे व्यभिचारान्न हेतुः ॥ २४ ॥

### न्यायवार्त्तिकम्

विप्रतिपत्तिर्नाम द्वयोरेकविषया विरुद्धधर्मप्रतिपत्तिः । न च विप्रतिपत्तिः प्रमाणान्तरमन्तरेण युक्तेति नित्यत्वे प्रमाणं वक्तव्यमित्यत आह—

अस्पर्शत्वात् । नित्यः शब्दोऽस्पर्शत्वात् अनुपलब्धविपक्षैकदेशस्य प्रयोगः । (ख)आकाशवदिति ॥ २२ ॥

तस्य व्यभिचारदर्शनार्थं सूत्रम्—

न कर्मानित्यत्वात् । शेषमस्य भाष्ये ॥ २३ ॥

नाणुनित्यत्वात् ॥ २४ ॥(ग)

### न्यायवार्त्तिकतात्पर्यटीका

अस्पर्शत्वात् ( सू० २२ ) (घ) ॥ न क—त्वात् (सू० २३) (ङ) ॥

नाणु—त्वात् (सू० २४) ॥

अस्पर्शेन कर्मणैवोभयतो व्यभिचारे लब्धे नित्येनाणुना व्यभिचारोद्भावनं कृतकत्वानित्यत्ववत् समव्याप्तिकत्वनिराकरणार्थं द्रष्टव्यम् ॥ २४ ॥

### वृत्तिः

सत्प्रतिपक्षमाशङ्कते—( अस्पर्शत्वात् इति )

शब्दो नित्यः अस्पर्शत्वाद् गगनवदिति भावः ॥ २२ ॥

न सत्प्रतिपक्षस्त्वदीयहेतोरनैकान्तिकत्वादित्याह—( न कर्मानित्यत्वात् )

अस्पर्शत्वं न शब्दनित्यत्वसाधकं कर्मणि व्यभिचारात् ॥ २३ ॥

---

(१) 'नाणुर्नित्यत्वात्' इति—वि० ।

(क) 'सोऽय'मित्यादिः 'उदाहरणम्' इत्यन्तो ग्रन्थः 'न कर्मे'त्यादिद्वयोर्विशसूत्रभाष्यमिति सम्भाव्यते, अत एव 'शेषमस्य भाष्ये' इति वार्त्तिकम् । मुद्रिताकारस्तु आदर्शपुस्तकानुसारी । (ख) आकाशवदित्यनेन भाष्यं व्याख्यातम् । वस्तुतः 'नित्यः शब्दोऽस्पर्शत्वात् आकाशवदिति अनुपलब्धविपक्षैकदेशस्य प्रयोगः' इत्याकारक एव ग्रन्थ इति सम्भाव्यते । (ग) अस्य वार्त्तिकं स्वातन्त्र्येण न दृश्यते । (घ-ङ) अनयोस्तात्पर्यटीका नोपलभ्यते ।

न्यायभाष्यम्

अयं तर्हि हेतुः—

## (सू०)—सम्प्रदानात् ॥ २५ ॥

(भा०) सम्प्रदीयमानमवस्थितं दृष्टम्, सम्प्रदीयते च शब्द आचार्येणान्तेवासिने, तस्मादवस्थित इति ॥ २५ ॥

## (सू०)—तदन्तरालानुपलब्धेरहेतुः ॥ २६ ॥

(भा०) येन सम्प्रदीयते यस्मै च, तयोरन्तरालेऽवस्थानमस्य केन लिङ्गेनोपलभ्यते। सम्प्रदीयमानो ह्यवस्थितः सम्प्रदातुरपैति सम्प्रदानं च प्राप्नोति इत्यवर्जनीयमेतत् ॥२६॥

न्यायवार्त्तिकम्

अयमन्यो हेतुः शब्दनित्यत्वे—

सम्प्रदानात्। न हि किञ्चिन्नित्यं सम्प्रदीयमानमित्यन्वयिनो दृष्टान्तस्याभावाद् विरुद्धः ॥ २५ ॥

अथायं प्रतिज्ञार्थः अवतिष्ठते शब्दः सम्प्रदानाद् घटादिवदिति। एवमपि नित्यत्वं न सिध्यति—

तदन्तरालानुपलब्धेरहेतुः। अवतिष्ठमानो हि दातृप्रतिग्रहीत्रोरन्तराले उपलभ्येतेति (क)इति विरोधः सूत्रार्थः ॥ २६ ॥

न्यायवार्त्तिकतात्पर्यटीका

अयं तर्हि हेतुः—

संप्रदानात् इति। संप्रदीयमानत्वादित्यर्थः ॥ २५ ॥

तद्—तुः ( सू० २६ ) ॥(ख)

वृत्तिः

अनैकान्तिकमपि साधकं स्याद् अत्राऽऽह—( नाणुनित्यत्वात् इति )

अनैकान्तिकस्य साधकत्वेऽणोः परमाणोर्नित्यत्वं न स्यात् रूपवत्त्वादिना तत्रानित्यत्वानुमानापत्तेरित्यर्थः ॥ २४ ॥

शङ्कते—( सम्प्रदानात् इति )

गुरुणा शिष्याय विद्यायाः सम्प्रदानात्; तथा च शब्दस्य प्राक् सत्त्वं सिद्धम्। तथा च—

तावत्कालं स्थिरं चैनं कः पश्चान्नाशयिष्यति ? (ग)

—इति न्यायान्नित्यत्वमर्थसिद्धमिति भावः ॥ २५ ॥

---

(क) एकम् 'इति' पदं सम्पातायातं सम्भाव्यते। (ख) २६श-सूत्रे तात्पर्यटीका नोपलभ्यते। (ग)'अनपेक्षत्वसूत्रेण तच्चैतत् साधयिष्यते' इति द्वितीयार्द्धम् ( श्लोकवार्त्तिकम्, शब्दनित्यत्वाधिकरणम्, ३६६ श्लोकः )।

(सू०)—अध्यापनादप्रतिषेधः ॥ २७ ॥

न्यायभाष्यम्

अध्यापनं लिङ्गम्, असति सम्प्रदानेऽध्यापनं न स्यादिति ॥ २७ ॥

(सू०)—उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः ॥२८॥

समानमध्यापनमुभयोः पक्षयोः संशयानिवृत्तेः, किमाचार्यस्थः शब्दोऽन्तेवासिन-

न्यायवार्त्तिकम्

अध्यापनादप्रतिषेधः । न विरोधोऽनुमानादुपलब्धेः । (क)न हि प्रत्यक्षतोऽनुपलब्धि-रनुमानेनोपलब्धस्य सत्तां बाधते । किमनुमानम्? अध्यापनम् । किमिदमध्यापनं नाम? दीय-मानस्य (ख)सम्प्रदानप्राप्तिः । दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्त्यध्यापनात् शरादिवदिति ॥२७॥

न्यायवार्त्तिकतात्पर्यटीका

अध्या—धः (सू० २७)॥ दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्ति अध्यापनाद् गुरुणा शिष्याय दीयमानत्वाद् धनुर्वेदविदाचार्येण शिष्याय दीयमानेष्वादिवदिति ॥ २७ ॥

वृत्तिः

सिद्धान्तसूत्रम्—( तदन्तरेति )

शिष्ये उपसन्ने गुरुरध्यापयति, यदि च शब्दो नित्यः स्यात्तदा शिष्यागमनानन्तर-मध्यापनात् पूर्वमपि शब्द उपलभ्येतेत्यनुपलब्ध्या च नास्ति शब्द इत्यतस्त्वदुक्तो न हेतुः ॥ २६ ॥

पूर्वपक्षसूत्रम्—( अध्यापनात् इति ) ।

मदीयहेतोः प्रतिषेधो न युक्तः अध्यापनात् । यद्यन्तरालकाले शब्दो न स्यात् कथ-मध्यापनं घटेत ? अनुपलब्धिस्तु शब्दस्य कण्ठताल्वाद्यभिघातरूपव्यञ्जकाभावादुपपद्यत इति भावः ।

आचार्यास्तु सूत्रद्वयमेवं व्याचक्षते—विभक्तिव्यत्यासाद् अहेतोस्तदन्तरालानुप-लब्धिरर्थः । तथा च हेतोः स्वत्वस्याभावात् तदन्तरालस्य स्वत्वध्वंसस्यानुपलब्धिः, अतो न दानमित्यर्थः । प्रतिषेधो न युक्तः न हि दानं ममाभिप्रेतम्, किं त्वध्यापनम्, तच्च विद्यमानस्य शब्दस्यैवेति भावः ॥ २७ ॥

---

(क) 'न हि प्रत्यक्षतोऽनुपलब्धस्यानुमानेनोपलब्धिः सत्तां बाधते' इति क-ख-वार्त्तिकयोः प्रमादान्मुद्रितम् । अत एव वक्ष्यति भगवान् सूत्रकारः 'नानुमीयमानस्य प्रत्यक्षतोऽनुपलब्धिरभावहेतुः' ( अ ३, आ १, सू ३६ ) ।

(ख) 'सम्प्रदानं प्राप्तिः' इति क-ख-पुस्तकयोः प्रमादान्मुद्रितम् ।

## न्यायभाष्यम्

मापद्यते तदध्यापनम्, आहोस्विन्नृत्योपदेशवद् गृहीतस्यानुकरणमध्यापनमिति। एवमध्यापनमलिङ्गं सम्प्रदानस्येति ॥ २८ ॥

अयं तर्हि हेतुः—

**(सू०)—अभ्यासात् ॥ २९ ॥**

अभ्यस्यमानमवस्थितं दृष्टम्। पञ्चकृत्वः पश्यतीति रूपमवस्थितं पुनः पुनर्दृश्यते। भवति (१)च शब्देऽभ्यासः—दशकृत्वोऽधीतोऽनुवाको विंशतिकृत्वोऽधीत इति। तस्मादवस्थितस्य पुनः पुनरुच्चारणमभ्यास इति ॥ २९ ॥

## न्यायवार्त्तिकम्

उभयोः पक्षयोरन्यतरस्याध्यापनादप्रतिषेधः। न शब्दस्याध्यापनं प्रतिषिध्यते, (क)अपि तु नृत्योपदेशवदनित्यस्यैवाध्यापनमिति यत् पुनरेतद् 'दातृप्रतिग्रहीत्रोरन्तराले शब्दोऽस्ती'ति सिद्धसाधनमेतदिति। वयमपि ब्रूमो दात्रोच्चारितः शब्दः सन्तानवृत्त्या सम्प्रदातं प्राप्नोति। तस्मात् सम्प्रदानमवस्थाने न हेतुः ॥ २८ ॥

अयं तर्हि हेतुः—

अभ्यासात्। वीणादिवदिति। अनित्येष्वेव लङ्घनप्लावनादिष्वभ्यास इति विरुद्धः। अथावस्थानमभ्यासात् साध्येत तथाऽप्यनवस्थितेष्वेवाभ्यास इत्यनेकान्तः, अभ्यासस्वरूपानवधारणादसिद्धश्च। अभ्यासो (ख)ह्येकविषयोऽनेकज्ञानोत्पाद एकाकारविषयो वा। (ग)तन्नायमभ्यास एकविषय एकाकारविषयो वेति सन्दिग्धासिद्धः ॥ २९ ॥

## न्यायवार्त्तिकतात्पर्यटीका

उभ—धः ( सू० २८ ) ॥(घ)

## वृत्तिः

सिद्धान्तसूत्रम्—( उभयोरिति )

अन्यतरस्य पक्षस्यानित्यत्वसाधकस्याध्यापनाद् यः प्रतिषेधः स न सम्भवति, उभयोः पक्षयोरध्यापनस्य समानत्वादिति शेषः। अध्यापनं हि गुरूच्चारणानूच्चारणं शिष्योच्चारणानुकूलोच्चारणं वा, तच्च स्थैर्यास्थैर्यपक्षयोस्तुल्यम्, न शब्दनित्यतायाः साहायकं विधातुमलम्। न ह्यध्यापनं दानं येन स्वस्वत्वध्वंस-परस्वत्वापादनार्थं तस्य स्थैर्यमाशङ्कनीयम्। न वा दानं सम्भवति बहूनामेकदा स्वत्वविरोधात् परस्वदानासम्भवाच्च, अपि तु नृत्याध्यापनादाविवोपदेशमात्रमिति भावः ॥ २८ ॥

---

(१) 'च' इति वि-टि-पुस्तकयोर्नास्ति।

(क) 'अपि तु' इत्यनेन प्रक्रान्तोऽर्थः प्रतिषिध्यते इत्यत्र नान्वेति किन्तु अध्याहृतेन 'उच्यते' इत्यनेनेति बोध्यम्। (ख) अत्र एकविषयत्वम्—एकाकारविषयत्वं च ज्ञानपारतन्त्र्येण उत्पादेऽन्वित इति बोध्यम्। (ग) तन्नायमिति, 'अय'मित्यनेन शब्दपचकः अभ्यास उक्त इति बोध्यम्। (घ) २८श-सूत्रे तात्पर्यटीका नोपलभ्यते।

## (सू०)—नान्यत्वेऽप्यभ्यासस्योपचारात् ॥ ३० ॥

### न्यायभाष्यम्

(१)अनवस्थानेऽप्यभ्यासस्याभिधानं भवति द्विर्नृत्यतु भवान् त्रिर्नृत्यतु भवानिति, द्विरनृत्यत् त्रिरनृत्यद् द्विरग्निहोत्रं जुहोति द्विर्भुङ्क्ते ॥ ३० ॥

एवं व्यभिचारात् प्रतिषिद्धहेतावन्यशब्दस्य प्रयोगः प्रतिषिध्यते—

## (सू०)—अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः ॥३१॥

यदिदमन्यदिति मन्यसे तत् स्वार्थेनानन्यत्वाद्(२) अन्यन्न भवति, एवमन्यताया अभावः। तत्र यदुक्तम् अन्यत्वेऽप्यभ्यासोपचारादिति एतदयुक्तमिति ॥ ३१ ॥

### न्यायवार्त्तिकम्

नान्यत्वेऽप्यभ्यासस्योपचारात्। अभ्यासासिद्धावभ्यासोपचारविषयत्वेन साधनं तस्यानैकान्तिकत्वज्ञापनार्थं नान्यत्वेऽप्यभ्यासोपचारादिति ॥ ३० ॥

अन्यदन्यस्मादनन्यत्वादनन्यदित्यन्यताऽभावः। (क)एतत्सूत्रमनन्यत्वप्रतिषेधार्थम्। यदिदमन्यदिति मन्यसे इदमन्यस्माद् अन्यद्वा स्याद् अनन्यद्वा। यद्यन्यत्, अनन्यन्न भवति यथा ब्राह्मणादन्यो न ब्राह्मण इति। अथानन्यत्, तथाऽप्यन्यन्न भवति अनन्यत्वात्; यदनन्यत् तत् कथमन्यद् भविष्यतीति ॥३१॥

### न्यायवार्त्तिकतात्पर्यटीका

अभ्यासात् ( सू० २९ ) (ख) ॥ यद्यन्यन्नाम जगति भवेत् ततोऽन्यत्वेऽप्यभ्यासोपचारादित्यनेनानैकान्तिकत्वमुद्भाव्येत तदेव नास्तीति वाक्छलेन प्रत्यवतिष्ठते—

नान्य—रात् ( सू० ३० )(ग) ॥

अन्य—वः ( सू० ३१ ) ॥ ३१ ॥

### वृत्तिः

पूर्वपक्षसूत्रम्—( अभ्यासात् इति )

यद्धि स्थिरं तदभ्यस्यमानं दृष्टम्, यथा दशकृत्वो रूपं पश्यति, एवं शतकृत्वोऽनुवाकमधीत इत्यभ्यासात् स्थैर्यं शब्दस्येति भावः ॥ २९ ॥

उत्तरयति—( नान्यत्व इति )

पूर्वपक्षो न युक्तः। कुतः? अन्यत्वे भेदेऽपि शब्दानाम् अध्ययनाभ्यासस्य उपचारात् सम्भवात्। न ह्यभ्यासः स्थैर्यं साधयति, द्विर्जुहोति त्रिर्नृत्यतीत्यादौ भेदेऽप्यभ्यासदर्शनादिति भावः ॥ ३० ॥

---

(१) 'अन्यस्य चाप्यभ्यासाभिधानं' इति फ०। (२) स्वात्मनोऽनन्यत्वात्—इति पु० पा०।

(क) 'एतत् सूत्रमन्यत्वप्रतिषेधार्थ'मित्यंशः क-ख-पुस्तकयोः ३०श-सूत्रीयवार्त्तिके अन्तर्भावितः।

(ख-ग) २९-३०श-सूत्रयोस्तात्पर्यटीका नोपलभ्यते।

### न्यायभाष्यम्

शब्दप्रयोगं प्रतिषेधतः शब्दान्तरप्रयोगः प्रतिषिध्यते—

## (सू०)—तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः ॥३२॥

(१) अन्यस्मादनन्यतामुपपादयति भवान्, उपपाद्य चान्यत् प्रत्याचष्टे अनन्यदिति च शब्दमनुजानाति, प्रयुङ्क्ते चानन्यदित्येतत् समासपदम्, अन्यशब्दोऽयं प्रतिषेधेन सह (२)समस्यते। यदि चात्रोत्तरं पदं नास्ति कस्यायं प्रतिषेधेन सह समासः? तस्मात् तयो(३)रन्यानन्यशब्दयोरितरोऽनन्यशब्द इतरमन्यशब्दमपेक्षमाणः सिध्यतीति तत्र यदुक्तम् अन्यताया अभाव इति एतदयुक्तमिति ॥ ३२ ॥

### न्यायवार्त्तिकम्

तदभावे नास्त्यनन्यता तयोरितरेतरापेक्षसिद्धेः। सूत्रस्यार्थोऽविरोधः। अनन्यत्वमभ्युपगतं तन्निवर्त्तत इति। कथं निवर्त्तते? प्रतिषेधस्यान्यविषयत्वात्; अन्याभावे अनन्यन्नास्तीति। न हि ब्राह्मणाभावेऽब्राह्मणः सिध्यति।

(क)अयं तर्हि हेतुः—प्रत्यभिज्ञानात्—तदभावे प्रत्यभिज्ञानं न दृष्टं मण्यादिषु, अस्ति च प्रत्यभिज्ञानं शब्दे, तस्मात् प्रत्यभिज्ञानाद् अवतिष्ठते शब्द इति। किमिदं प्रत्यभिज्ञानम्?

### न्यायवार्त्तिकतात्पर्यटीका

तस्य परिहारसूत्रम्—

तद—द्धेः ( सू० ३२ )॥ तयोरन्यानन्ययोर्मध्येऽनन्यस्यान्यापेक्षसिद्धेरित्यर्थः। (ख)न चान्यस्वरूपात्तदनन्यदिति परस्मादप्यनन्यद्भवितुमर्हति। न हि नीलमात्मनोऽनन्यदिति पीतादप्यनन्यदिति। अन्यदेव हि पीतान्नीलमिति परमार्थः।

### वृत्तिः

अन्यतैव जगति नास्तीति कथमन्यत्वेऽन्यभ्यासोपपत्तिरिति तटस्थ आशङ्कते—( अन्यदिति )

यद्वस्त्वन्यस्मादन्यदुच्यते, तत् स्वस्मादनन्यत् अभिन्नम्, तत् कथमन्यत्? भेदाभेदयोर्विरोधादिति भावः। स्वाभेदस्याऽऽवश्यकत्वमिति हृदयम् ॥ ३१ ॥

समाधत्ते—( तदभाव इति )

'तदभावे'ऽन्यत्वस्याभावे 'अनन्यता'ऽपि नास्ति तयोर्भेदाभेदयोः सिद्धेः परस्पर-

---

(१) 'अन्यस्मादन्यता-' ल-ग-ज०, 'अन्यस्मान्यता-' वि-टि-मा०। (२) 'कल्पते' वि०। (३) '-रनन्यान्यशब्दयो-' ल-ग-ज०।

(क) एतत्सूत्रभाष्यमेतद् द्रष्टव्यम्। (ख) "न च स्वरूपात् तदनन्यदिति" इति युक्तम्, अन्यस्वरूपादिति तु लिपिप्रमादः।

## न्यायवार्त्तिकम्

तत्प्रत्ययविषयत्वम् । तत्प्रत्ययविषयत्वमन्यत्वेऽपीत्यनेकान्तः । अथ प्रत्यभिज्ञानं तत्प्रत्ययविषयस्याव्यभिचारः, न हि शब्दे कदाचित् तत्प्रत्ययविषयव्यभिचारोऽस्ति । यः पुनः सदृशे तत्प्रत्ययविषयः स विशेषदर्शनान्निवर्तते, अतो याऽसौ तत्प्रत्ययस्य शब्देऽव्यावृत्तिः तत् प्रत्यभिज्ञानमिति । न, तत्प्रत्ययस्याव्यावृत्तिरसिद्धा । अयं तावत् तत्प्रत्ययः पुरुषान्तरे निवर्त्तमानो दृष्टः । यत् पुनरेतद् विशेषदर्शनात् सदृशे तद्भावप्रत्ययो निवर्त्तत इति मन्यसे, एवमेतत् ; शब्दे तु किं विशेषस्यादर्शनात् सदृशे तत्प्रत्यय उत तद्भावादेव तत्प्रत्यय इति सन्दिह्यते । अथ प्रत्यभिज्ञानं तद्भावाद् भवतीति पक्षस्तथाऽप्यन्यो हेतुर्वक्तव्यः । किं कारणम् ? प्रत्यभिज्ञानस्य (१)पक्षविशेषणत्वेनोपयुक्तत्वात् । यत्पुनर्गोशब्दो गोशब्द इति प्रत्ययस्याव्यावृत्तिरस्तीति, न च गोशब्दस्य गोप्रत्ययकर्तृत्वव्यभिचारः इति, एतदपि सन्दिह्यते । कथम् ? किं कारणसामान्याद् गोशब्दे गोप्रत्ययस्यानिवृत्तिराहो तद्भावादिति । एतेन तत्प्रत्ययकर्तृत्वं व्याख्यातम् । (२)युक्ता तु कारणसामान्याद्गोशब्दे गोशब्दप्रत्ययस्याव्यावृत्तिः । कथमिति ? गोबुद्धौ गोबुद्धिप्रत्ययो न व्यावर्त्तते न चास्या गोशब्दबुद्धेस्तत्प्रत्ययकर्तृत्वं निवर्त्तते । तस्मात् तत्प्रत्ययहेतुत्वे प्रत्यभिज्ञानमहेतुः ।

## न्यायवार्त्तिकतात्पर्यटीका

अयं तावत्प्रत्ययः पुरुषान्तरे निवर्त्तमानो दृष्ट इति । यदा खल्वेकस्य तत्प्रत्ययो भवति तदाऽवश्यं न पुरुषान्तरस्य, तस्मात् प्रत्ययाव्यावृत्तिरसिद्धैवेति । एवमेतदिति । सत्यं विशेषदर्शनं तत्प्रत्ययनिवृत्तिहेतुः, तदभावे तु विशेषादर्शनस्य न शक्यं संशयहेतुत्वं निवारयितुमित्यर्थः । यत्पुन(क)रेतद्गोशब्द इति । गोशब्दो गोशब्द इत्येकाकारः प्रत्ययो नैकमन्तरेण भवितुमर्हति । अथ भ्रान्तः कस्मान्न भवतीत्यत आह—न च गोशब्दस्येति । भ्रान्तत्वे हि ततो गोशब्दादर्थप्रत्ययो भ्रान्तः, यथा समारोपितधूमभावया मशकवर्त्या धूमध्वजानुमानम् । तस्मादभ्रान्तो गोशब्दैकत्वप्रत्ययः स्थायितामस्य सूचयतीत्यर्थः । दूषयति—एतदपीति । युक्ता तु कारणसामान्यात्तत्प्रत्ययस्याव्यावृत्तिरिति । गोशब्दबुद्धेः कारणमालम्बनं गोशब्दस्तस्य सामान्यं गत्वमोत्वं गोशब्दत्वमिति यावत्, तस्मात् तत्प्रत्ययस्य व्यावृत्तिर्युक्ता गोशब्दो गोशब्द इत्येवंरूपा । कथमिति प्रश्नः । गोबुद्धौ गोबुद्धिप्रत्ययो न व्यावर्तते जात्यभिप्राय-

## वृत्तिः

सापेक्षत्वात् । वस्तुतस्तु तयोर्मध्ये इतरस्य एकतरस्य अनन्यत्वस्येतरापेक्षसिद्धेः (ख)इतरत्वस्य भेदस्य ज्ञानापेक्षा सिद्धिर्यस्य तादृशत्वादित्यर्थः ॥ ३२ ॥

---

(१) 'अपक्षविशेषण-' इति ख० । (२) 'युक्तं तु' इति क-ख० ।

(क) वार्त्तिके 'एतत्' इति नास्ति । (ख) तथाच सूत्रे उत्तरमितरपदं भावप्रधानमिति भावः ।

### न्यायभाष्यम्

अस्तु तर्हीदानीं शब्दस्य नित्यत्वम्—

(सू०)—विनाशकारणानुपलब्धेः ॥३३॥

यदनित्यं तस्य विनाशः कारणाद् भवति यथा लोष्टस्य कारणद्रव्यविभागात्। शब्दश्चेदनित्यस्तस्य विनाशो यस्मात् कारणाद् भवति तदुपलभ्येत, न चोपलभ्यते तस्मान्नित्य इति ॥ ३३ ॥

### न्यायवार्त्तिकम्

यश्चानुपलब्धविशेष एव निवर्त्तते तं प्रति तस्य वस्तुनः किं विशेषोऽस्ति नास्तीति भवन्त एव प्रष्टव्याः। यद्यस्ति विशेषः प्रत्ययाव्यावृत्तिरहेतुरनेकान्तात्। अथ नास्ति एकं वस्तु द्व्यात्मकमिति प्राप्तम्। विरोधादहेतुः प्रत्ययाव्यावृत्तिश्चाशेषपुरुषविषयतयाऽसिद्धा पुरुषमात्रविषयतयाऽनैकान्तिकीति ॥ ३२ ॥

अयं तर्हि हेतुः—

विनाशकारणानुपलब्धेः। यदनित्यं तस्य विनाशकारणमुपलभ्यते यथा लोष्टस्य कारणद्रव्यविभागः, न तु शब्दस्य तस्मान्नित्यः शब्द इति ॥ ३३ ॥

### न्यायवार्त्तिकतात्पर्यटीका

मेकवचनं गोबुद्धाविति। यथा हि गोबुद्धिषु भिन्नास्वपि परस्परं गोबुद्धिर्गोबुद्धिरित्यनुगतावभासिनी प्रथा गोबुद्धित्वसामान्योपधाना स्वकारणभूता गोबुद्धीरालम्बते एवं गोशब्दो गोशब्द इति बुद्धिरपि गोशब्दत्वोपधाना गोशब्दव्यक्तीः, न पुनर्गोशब्दव्यक्तिमेकामनेकदेशकालव्यापिनीम्। न चास्या गोशब्दबुद्धेरिति। अत्रापि जातावेकवचनम्। गोशब्दो गोशब्द इति बुद्ध्यनुगतिः सामान्यनिबन्धना अनुगतित्वे सति गोशब्दबुद्धिसंबन्धित्वाद् गोशब्दबुद्धिर्गोशब्दबुद्धिरित्यनुगतबुद्धिवदिति।

भिन्नमभेदेन विद्वान् यश्चानुपलब्धविशेष एव निवर्तते तं प्रति तस्य वस्तुनः किं विशेषोऽस्ति नास्तीति भवन्त एव प्रष्टव्याः। उभयत्र दोषमाह—यद्यस्तीति। द्व्यात्मकमिति भिन्नमभिन्नमित्यर्थः। अशेषपुरुषविषयतयेति आधारतयेत्यर्थः ॥ ३२ ॥

विना—ब्धेः ( सू० ३३ ) ॥

कारणद्रव्यविभाग इति। विभागेनासमवायिकारणसंयोगविनाशो लक्षितः तत्कार्यत्वात् ॥ ३३ ॥

### वृत्तिः

शङ्कते—(विनाशेति)

शब्दो नित्य इत्यादिः ॥ ३३ ॥

## (सू०)—अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्गः ॥३४॥

### न्यायभाष्यम्

यथा विनाशकारणानुपलब्धेरविनाशप्रसङ्ग एवमश्रवणकारणानुपलब्धेः सततं श्रवणप्रसङ्गः। व्यञ्जकाभावादश्रवणमिति चेत्? प्रतिषिद्धं व्यञ्जकम्। (१)अथ विद्यमानस्य (२)निर्निमित्तमश्रवणमिति (३)विद्यमानस्य निर्निमित्तो विनाश इति। समानश्च दृष्टविरोधो निमित्तमन्तरेण विनाशे चाश्रवणे चेति ॥ ३४ ॥

## (सू०)—उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः ॥३५॥

अनुमानाच्चोपलभ्यमाने शब्दस्य विनाशकारणे विनाशकारणानुपलब्धेरसत्त्वादित्यनपदेशः, (४) यथा (क)यस्माद् विषाणी तस्मादश्व इति। किमनुमानमिति चेत्? सन्तानोपपत्तिः। उपपादितः शब्दसन्तानः संयोगविभागजाच्छब्दाच्छब्दान्तरं (५)ततोऽन्यत्ततोऽप्यन्यदिति। तत्र कार्यः शब्दः कारणशब्दं (६)निरुणद्धि

### न्यायवार्त्तिकम्

अश्रवणकारणानुपलब्धेः सततश्रवणप्रसङ्ग इति। शेषं भाष्ये ॥ ३४ ॥

उपलभ्यमाने चानुपलब्धेरसत्त्वादनपदेशः। अनुमानेन शब्दस्य विनाशकारणमुपलभ्यते। यच्चानुमानेनोपलभ्यते न तन्नास्ति। किमनुमानम्? सन्तानोपपत्तिरिति। तस्मादनपदेशोऽयं विनाशकारणानुपलब्धेरिति।

यथा यस्माद्विषाणी तस्मादश्व इति। किं पुनरत्रासत् विषाणमाहोस्वित् (ख)विषाणसम्बन्ध इति? उभयमित्याह। यदा विषाणिनमर्थमश्वत्वेन साधयति तदा विषाणमस्त्येव न विषाणं प्रतिषिध्यते; अश्वविषाणसम्बन्धस्याभावादनुमानमसदिति युक्तमुक्तमसत्त्वादनपदेश इति।

### न्यायवार्त्तिकतात्पर्यटीका

अश्र—ङ्गः ( सू० ३४ ) (ग) ॥

उप—शः ( सू० ३५ ) ॥ अनपदेशोऽहेतुरित्यर्थः। उभयमितीति। (७, घ) यदा क्रमेलकं विषाणित्वादश्वत्वेन साधयति तदाऽस्य न विषाणं नापि तत्सम्बन्धः यथा विषाणित्वं

---

(१) 'अथाविद्यमानस्य'—इति ग-ज०। (२) 'निर्निमित्तं श्रवणमिति'—इति वि०। (३) 'अविद्यमानस्य'—इति फ०। (४) 'यस्माद्विषाणी' इति ल-ग-ज०। (५) अत्र वि-टि-पुस्तकपाठो गृहीतः। 'ततोऽप्यन्यत्' इति ल-फ-ग-ज-झा०। (६) 'अभिरुणद्धि' इति ल०, 'विरुणद्धि' इति टि०। (७) 'यथा' —इति क०।

(क) 'यस्माद्विषाणी तस्मादश्वः' वै-सू० १६, आ० १, अ० २।

(ख) विषाणं शृङ्गं साधनभूतं तस्य सम्बन्धो व्याप्यतारूप इति विषाणसम्बन्धः साध्यधर्मविषाणयोर्व्याप्यव्यापकभाव इति तु फलितार्थः।

(ग) ३४श-सूत्रे तात्पर्यटीका नास्ति।

(घ) उभयस्यासत्त्वं दर्शयति यदेति। वार्त्तिके 'यदा विषाणिन'मित्यत्र विमतो मृगः अश्वो भवितुमर्हति विषाणित्वादित्यादिप्रयोगमभिप्रेत्य 'न विषाणं प्रतिषिध्यते' इत्यादिना हेतोर्विरुद्धत्वमुक्तम्,

## न्यायभाष्यम्

प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य शब्दस्य निरोधकः। दृष्टं हि तिरःप्रतिकुड्यमन्तिकस्थेनाप्यश्रवणं शब्दस्य श्रवणं दूरस्थेनाप्यसति व्यवधाने इति।

## न्यायवार्त्तिकम्

कर्मत्ववदिति चेत् नाश्रयानित्यत्वात्—अथ मनुषे नित्यस्याप्युपलभ्यमानस्यात्यन्तमग्रहणं दृष्टम्—यथा (क)कर्मत्वस्येति ; तच्च न (ख)आश्रयस्यानित्यत्वात्। आश्रयस्य नित्यत्वादश्रवणकारणानुपपत्तिरिति ब्रूमः, कर्मत्वस्य पुनरग्रहणकारणमाश्रयानित्यत्वमस्ति तस्मादप्रसङ्ग इति।

## न्यायवार्त्तिकतात्पर्यटीका

क्रमेलकेऽसिद्धं तथा अनुमानेन विनाशकारणोपलब्धौ तदनुपलब्धिरसिद्धेति। अश्वविषाणसम्बन्धस्याभावादिति। (ग)अश्वत्वविषाणत्वयोर्यतः कोऽपि संबन्धोऽश्वेषु सिद्धो नास्ति तस्माद्विरोधादनुमानमेतदशोभनमित्यर्थः। (घ)तस्माद्व यथा विरुद्धाद्धेतोरनुमानमसदेवमसिद्धादपीत्यर्थः।

शङ्कते—कर्मत्ववदिति चेत्। निराकरोति—तच्च न आश्रयस्यानित्यत्वात्, कर्मत्वाश्रयः कर्म तस्यानित्यत्वादित्यर्थः। (ङ)शब्दस्य नित्यस्याश्रवणमनुपपन्नम् अश्रवणकारणानुपपत्तेरिति ब्रूमः। (च)तन्नाऽऽश्रयानित्यत्वादिति ग्रहणकवाक्यं विभजते—कर्मत्वस्य पुनरिति।

प्रतिघातिद्रव्यसंयोगस्त्वन्त्यस्य शब्दस्य निरोधक इति भाष्यम्। तस्यार्थः—प्रति-

## वृत्तिः

अनुपलब्धिरप्रत्यक्षमज्ञानं वा ? आद्ये प्रतिबन्धिमाह—( अश्रवणेति )

यद्यप्रत्यक्षत्वादभावसिद्धिस्तदाऽश्रवणकारणस्याप्रत्यक्षत्वादश्रवणं न स्यादिति सततश्रवणप्रसङ्ग इत्यर्थः ॥ ३४ ॥

---

शब्दे नित्यत्वसाधकाविनाशित्वानुमाने तु अविनाशी शब्दः अनुपलभ्यमानविनाशकारणकत्वादिति प्रयोगः, तत्र हेतोरसिद्धत्वमिति दृष्टान्तदार्ष्टान्तिकयोर्वैषम्यात् निदर्शनान्तरेण तुल्यतां स्फुटयति क्रमेलकमिति। साध्यधर्मविशिष्टधर्मिण एव विधेयत्वमिति मते क्रमेलकमिति द्वितीयायाः साध्यतारूपविधेयत्वमर्थः। अश्वत्वेनैव तृतीयाया अवच्छिन्नत्वमर्थः तथा च विमतः क्रमेलकः अश्वो भवितुमर्हति विषाणित्वादित्यादिरत्र प्रयोगः। अत्र हेतोर्विरुद्धत्वमिवासिद्धत्वमपि स्फुटमिति बोध्यम्।

(क) कर्मत्वस्याग्रहणं परमाण्वादिगत कर्मान्तर्भावेणेति बोध्यम्।

(ख) 'आश्रयानित्यत्वात्' इति क-ख०। अत्राऽऽदर्शवार्त्तिक-ग्रन्थे मुद्राप्रमादः सम्भाव्यते।

(ग) 'अश्वत्वविषाणित्वयो'रिति युक्तं सम्भाव्यते।

(घ) वार्त्तिके अश्वविषाणसम्बन्धस्येत्यादिकं प्रकृते दृष्टान्तविधयोपयुक्तमित्यभिप्रायेण फलितमाह तस्माद यथेति। अत्र तस्मादिति लिपिप्रमादागतमिव सम्भाव्यते।

(ङ) आश्रयस्य नित्यत्वादिति वार्त्तिकस्य फलितार्थमाह शब्दस्येति।

(च) वार्त्तिके पूर्ववाक्ये तदिति नास्ति, उत्तरवाक्यं तु चकारेणाधिकमिति टीकाधृतपाठाद विसंवादो द्रष्टव्यः।

## न्यायभाष्यम्

घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसन्तानोऽविच्छेदेन श्रूयते। (१)तत्र नित्ये शब्दे घण्टास्थमन्यगतं वाऽवस्थितं

## न्यायवार्त्तिकम्

"घण्टायामभिहन्यमानायां तारस्तारतरो मन्दो मन्दतर इति श्रुतिभेदान्नानाशब्दसन्तानो ह्यविच्छेदेन श्रूयते"। तत्रेदं चिन्त्यते—शब्दस्य व्यज्यमानस्य यद् व्यक्तिकारणं तत् किं घण्टास्थमाहोस्विदन्यवृत्तीति। यदि घण्टास्थम्, किमवस्थितमुत सन्तानवृत्तीति। अन्यवृत्तित्वेऽपि किमवस्थितमुत सन्तानवृत्ति। यदि घण्टास्थमवस्थितं च तदा श्रुतिभेदो न प्राप्नोति। अथ घण्टास्थं सन्तानवृत्ति च, युगपदनेकशब्दोपलब्धिप्रसङ्गः। यदि घण्टास्थेनावस्थितेन सन्तानवृत्तिना वाऽभिव्यक्तः तावानेव शब्द एकस्मिन् काले उपलभ्येत। घण्टास्थं चाभिव्यक्तिकारणं कथमन्यत्र

## न्यायवार्त्तिकतात्पर्यटीका

घातिद्रव्यं कुड्यादि तत्संयोगो नभसः। एतदुक्तं भवति घनतरद्रव्यसंयुक्तं नभो न शब्दसमवायिकारणतां प्रतिपद्यते। ततश्च सन्नप्यसमवायिकारणं शब्दो न शब्दान्तरमारभते, तस्य च (क)स्वकारणं तत्कारणस्य तस्माद्विनाशो भवतीति द्रष्टव्यम्। एवमन्यत्रापीदृश एव शब्दविनाशहेतुरूहनीय इति।

इतश्च शब्दो नित्य इत्याह—घण्टायामभिहन्यमानायामिति। यदि घण्टास्थेन व्यञ्जकेनान्यवृत्तिना वाऽवस्थितेन संतानवृत्तिना वा नित्यः शब्दो व्यज्येत ततः तार-तारतर-तारतम-मन्द-मन्दतरादिश्रुतिभेदो न स्यात्। नित्यस्य च शब्दस्य न स्वाभाविको भेदो नाप्यौपाधिक इत्युपपादितमधस्तात्। यदि तु तारतमादयस्तावन्त एव शब्दा नित्याः ततस्तावन्त एव युगपदेव गम्येरन् विशेषाभावात् एको ह्येषां व्यञ्जकः स्थिर इति। अथ सन्तानवृत्तिस्तथाऽपि सर्व एव तत्सन्ततिपतिताः समर्था इत्याद्येनैव सर्वे व्यज्येरन् न तु समानदेशानां समानेन्द्रियग्राह्याणां व्यञ्जकनियमो युक्त इत्युपपादितमधस्तात्(ख)। कारणत्वे तु घण्टास्थस्य सन्तानवृत्तेर्युक्तं (ग)यत्तारतमादिभेदेन कारणभेदात् कार्यभेद इति तात्पर्यार्थः। युगपदनेकशब्दोपलब्धिप्रसङ्ग इति अनेकस्य तारतमादेः शब्दस्योपलब्धिप्रसङ्ग इत्यर्थः। घण्टास्थं चाभिव्यक्तिकारणं कथमन्यत्र वर्त्तमानम् इति श्रोत्रे वर्तमानमित्यर्थः। द्वितीयं कल्पमाशङ्क्य दूषयति

---

(१) 'तत्र' इति ज०।

(क) स्वकारणमिति विनाशकमित्यध्याहृतेनान्वयः। तस्य स्वकारणात् तत्कारणस्य च तस्माद्विनाश इति पाठस्तु सम्यक् प्रतिभाति। तस्मादिति कार्यभूतात् शब्दादित्यर्थः।

(ख) ५९८ पृ० ९म-पङ्क्तिर्द्रष्टव्या।

(ग) 'यत्तारतमादी'त्यत्र 'तत्तारतमादी'ति युक्तम्। तथाच घण्टास्थस्य सन्तानवृत्तेः संस्कारस्य कारणत्वे तु तस्य संस्कारस्यानेकत्वात् तारतमत्वादिकृतेन भेदेन शब्दस्यापि तारतमत्वादि युक्तमित्यर्थः।

## न्यायभाष्यम्

(१)सन्तानवृत्ति वाऽभिव्यक्तिकारणं वाच्यम्, येन श्रुतिसन्तानो भवतीति (२)शब्दभेदे चासति श्रुतिभेद उपपादयितव्य इति। अनित्ये तु शब्दे घण्टास्थं सन्तानवृत्ति संयोगसहकारि निमित्तान्तरं संस्कारभूतं (३)पटु मन्दमनुवर्तते तस्यानुवृत्त्या शब्दसन्तानानुवृत्तिः, पटुमन्दभावाच्च तीव्रमन्दता शब्दस्य, तत्कृतश्च श्रुतिभेद इति ॥ ३५ ॥

## न्यायवार्त्तिकम्

वर्त्तमानं शब्दं व्यनक्तीति वाच्यम्। अथान्यगतमवस्थितं सन्तानवृत्ति वाऽभिव्यक्तिकारणं मनुषे तदैकस्यां घण्टायामभिहतायां शब्दान् व्यनक्ति न प्रत्यासन्नदेशवृत्तिषु घण्टान्तरेष्विति नियमहेतुर्वक्तव्यः। असति (४)च शब्दभेदे श्रुतीनां भेद उपपादयितव्यः। तारो मन्द इति नादोऽभिधीयत इति चेत् न शब्द(५)सामानाधिकरण्यस्य ग्रहणात्—शब्दसमानाधिकरणोऽयं तारमन्दशब्दः प्रवर्त्तते न नादसमानाधिकरणः तस्माच्छब्दोऽभिधीयत इति। न चासति शब्दविषयत्वे शब्दसामानाधिकरण्यं युक्तं नीलोत्पलादिवदिति। व्यामोहप्रत्ययः स इति चेत्; न, निमित्तानभिधानात्—अथ मन्यसे तारो मन्द इति शब्दसमानाधिकरणो व्यामोहप्रत्ययो भवति—यथा दीर्घः शब्दो महान् शब्द इति। न, विशेषहेत्वभावात्—व्यामोहप्रत्यय इति (६)न विशेषहेतुरस्ति। यदि चायं व्यामोहप्रत्ययो भवति व्यामोहप्रत्ययस्य निमित्तं वाच्यम्, यथा दीर्घः शब्द

## न्यायवार्त्तिकतात्पर्यटीका

अथान्यगतमिति। घण्टासंबन्ध्येष शब्द इति हि तावल्लौकिकप्रत्ययः, सोऽयमन्यगते शब्दव्यञ्जके यथैकस्यां घण्टायां भवति तथा घण्टान्तरेष्वपि तत्प्रत्यासन्नेषु भवेदविशेषात्, तस्मादेकघण्टास्थत्वे नियमहेतुर्वक्तव्य इति। असति शब्दभेदे श्रुतीनामिति शब्दज्ञानानामित्यर्थः। नाद इति वायुधर्मोऽभिधीयत इति। शङ्कते—व्यामोहप्रत्यय इति। यथा हि वस्तुतः स्वच्छधवले स्फटिकमणौ लाक्षारसावसेकतिरस्कृतधवलिम्नि लोहितः स्फटिक इति प्रत्ययः, एवमभिव्यञ्जकवृत्तिस्तारत्वादिर्भ्रान्त्या शब्दे प्रतीयते इत्यर्थः। निराकरोति—न विशेषहेत्वभावादिति। न हि समीचीनात् प्रत्ययात् तारोऽयं शब्द इति प्रत्ययस्य कश्चिद्विशेषहेतुरस्ति बाधकप्रत्ययो येनैष

## वृत्तिः

द्वितीये त्वाह—(अनुपलभ्येति)

अनुमानादिना 'उपलभ्यमाने' विनाशकारणे अनुपलब्धेरभावात् त्वदीयो हेतुः 'अनपदेशः' असाधकः असिद्धत्वात्, जन्यभावत्वेन विनाशकल्पनमिति भावः ॥ ३५ ॥

---

(१) 'सन्तानिवृत्तिरभिव्यक्तिकारणम्' इति ग-ज०। (२) 'शब्दभेदचासति' इति ग-ज०। (३) 'पटुमन्दमित्यनुवर्त्तते' इति ख-ग-ज०। (४) ख-पुस्तके 'च' इति नास्ति। (५) '-सामानाधिकरण्य-ग्रहणात्' इति ख। (६) 'न हेतुरस्ति' इति ख।

## न्यायवार्त्तिकम्

इति (१)अविरतशब्दसन्तानश्रुतौ शब्दे दीर्घप्रत्ययो भवति। यानि खलु दीर्घाणि द्रव्याणि तेषामवयवोपचये सति ग्रहणसन्ततिविषयत्वम्, तत्सामान्यात् शब्दे दीर्घप्रत्ययः ; न तु नित्यशब्दवादिनो व्यामोहप्रत्ययबीजमस्तीत्ययुक्तमेतत्।

तुल्यमेतदिति चेत् ; न, तन्निमित्तस्य कदाचिद्भावात्। अथ मन्यसे (२)यस्याप्यनित्यः शब्दसन्तानः(२*) तेनापि घण्टास्थमवस्थितं सन्तानवृत्ति वाऽन्यस्थमवस्थितं सन्तानवृत्ति वोत्पत्तिकारणं वाच्यम्, घण्टास्थमुत्पत्तिकारणं कदाचिच्छब्दानुत्पादयति कदाचिन्नेति नित्यवत् प्रसङ्गः। न प्रसङ्गः कदाचिद्भावात्—शब्दानामुत्पत्तिकारणं घण्टावृत्ति तत् कदाचिद्भवति (३)कदाचिद्भावेऽपि सति सन्तानवृत्ति, तस्मान्निमित्तभेदानुविधायिनः शब्दाः कदाचिद्भवन्ति, सन्तानवृत्तित्वाच्च मन्दतर-मन्दतमादिभिन्नरूपानुविधायिनं शब्दमुत्पादयन्तीति। तच्च कारणं संस्कार इति।

## न्यायवार्त्तिकतात्पर्यटीका

मिथ्याप्रत्ययः स्यादित्यर्थः। न च निर्बीजा भ्रान्तिरपि संभवितुमर्हति। दीर्घत्वादिभ्रमाणां तु शब्देऽस्ति बीजमित्याह—यदि चायमिति। 'यानि खलु दीर्घाणि' वंशप्रभृतीनि (क)तेषामवयवोपचयः समानजातीयोपचयः। इहाप्यविरतभृतौ शब्दसंताने (ख)विवृतकरणनिष्पन्ने समस्ति समानजातीयोपचय इति तत्साधर्म्याद् दीर्घत्वभ्रमः। एवं शब्दसंतान एव तारो महानित्युच्यते। (ग)तत्राप्यस्ति समानजातीयोपचयोऽस्ति च स्फुटतरत्वं महानपि स्फुटतरोऽयमपि तथेति (घ)महानित्युच्यते।

शङ्कते—तुल्यमिति चेत्। यथा ह्यनित्यवादे घण्टास्थमवस्थितं संतानवृत्ति न युगपत्तारमन्दानुत्पादयति किं तु क्रमेणैव एवं नित्यानपि शब्दान् क्रमेण व्यङ्क्ष्यतीत्यर्थः। निराकरोति—न तन्निमित्तस्य कदाचिद्भावात्। न तावन्नित्यवादिभिस्तारत्वादिधर्मभेदेन शब्दभेदोऽभ्युपेयते तथा चैकेनावस्थितेन घण्टास्थेन सन्तानवृत्तिना व्यज्यमान एकस्मिन् शब्दे (४)नित्ये श्रुतिभेदः कादाचित्को नोपपद्यते, शब्दे त्वनित्येऽन्यस्मिन्नन्यस्मिन् क्रियमाणे संतानवृत्तिना कारणेन

(१) 'अविरलसन्तान-' इति ख०। (२) 'यस्यानित्यः सन्तानः' इति ख०। (३) 'कदाचिद्भावे सति' इति ख०। (४) 'नित्यं' इति ख०।

(क) 'एषामवयवो वाऽपचयः' इति क-ख-पुस्तकयोः पाठः।

(ख) आदर्शपुस्तकयोः 'विवृतकारणनिष्पन्ने' इति प्रामादिकः पाठः। तच्च वर्णध्वनावुत्पद्यमाने यदा स्थान-करण-प्रयत्नाः परस्परं स्पृशन्ति तदा सा स्पृष्टता। ईषद् यदा स्पृशन्ति तदा सा ईषत्स्पृष्टता, सामीप्येन यदा स्पृशन्ति सा संवृतता। दूरेण यदा स्पृशन्ति सा विवृतता एते चत्वार आभ्यन्तराः प्रयत्नाः। ...तत्र स्पृष्टकरणाः स्पर्शाः। कादयो मावसानाः स्पर्शाः। स्पृष्टता गुणः। करणं क्रतिरुच्चारणप्रकारः। स्पृष्टतानुगतं करणं येषां ते स्पृष्टकरणाः। एवमन्यत्रापि वेदितव्यम्। ईषत्स्पृष्टकरणा अन्तःस्थाः। अन्तःस्था यरलवाः। विवृतं करणमूष्मणां स्वराणां च। स्वराः सर्व एवाचः। ऊष्माणः शषसहाः। इति १।१।९म-सूत्रे न्यासः। (ग) तत्राऽपीति वंशप्रभृतावित्यर्थः। (घ) 'महानित्युच्यते' इत्यंशो मुद्राप्रमादादागत इति सम्भाव्यते।

### न्यायभाष्यम्

न वै (१)निमित्तान्तरं संस्कार उपलभ्यते। अनुपलब्धेर्नास्तीति ?

## (सू०)—पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः ॥३६॥

पाणिकर्मणा पाणिघण्टाप्रश्लेषो भवति तस्मिंश्च सति शब्दसन्तानो (२)नोत्पद्यते

### न्यायवार्त्तिकम्

कुतस्तदुत्पत्तिः ? पाणिसंश्लेषमपेक्षमाणात् कर्मणः। पाणिघण्टासंश्लेषात् पाणिगतवेगापेक्षाद् घण्टायां कर्म, तत्कर्म पाण्यभिघातमपेक्षमाणं विभागसमकालं संस्कारं करोति। (३)सा चलन्त्याध्यात्मिकं वायुमुपगृह्णाति। सा च वायुनाऽभिहता पुनः कर्म करोति, (क)ततश्च कर्मणा संस्कारः, संस्कारेण पुनः कर्म, पुनर्वायूपग्रह इत्येवमादिन्यायेन संस्कार उत्पद्यत इति। तत्रान्त्यस्यातिमान्द्याद् घण्टायां महाभूतसंक्षोभणशक्तेरभावस्ततो वायूपग्रहोच्छेदः ततः संस्कारक्षय इति ॥ ३९ ॥

न संस्कारोऽस्त्यनुपलब्धेरिति चेत्—अथ मन्यसे नैव संस्कारोऽस्त्यनुपलब्धेः, तन्नासत्—पाणिनिमित्तप्रश्लेषाच्छब्दाभावे नानुपलब्धिः। उक्तार्थं सूत्रम्। यदि संस्कारं

### न्यायवार्त्तिकतात्पर्यटीका

तद्भेदात् कार्यत्वात् कादाचित्कत्वाच्च श्रुतिभेदोपपत्तिरिति वैषम्यमित्यर्थः। तच्च कारणमिति, निमित्तकारणमित्यर्थः। पाणिसंश्लेषमपेक्षमाणादिति। स्पर्शवद्वेगवद्द्रव्यसंयोगाद् घण्टायां कर्म कर्मवद्घण्टाकाशसंयोगात्तादृशाच्छब्दश्चेत्येकः कालः। तत्कर्म पाण्यभिघातमपेक्षमाणं विभागसमकालं संस्कारं वेगाख्यं करोति। सा घण्टा चलन्त्याध्यात्मिकं वायुमुपगृह्णाति। घण्टातदवयवसंयुक्ता वायुपरमाणव एवाऽऽध्यात्मिको वायुः तदुपग्रहो घण्टायाः स्ववेगमपेक्षमाणाया वायुसंयोगाद्वायौ क्रियोत्पादकत्वम्, ततश्चानिलकर्मणो घण्टानिलसंयोगो वायुगतवेगापेक्षो घण्टायां कर्माऽऽरभते, तदिदमाह—सा च वायुनाऽभिहता पुनः कर्म करोति। तदेवं वायुघण्टासंयोगो घण्टावेगापेक्षो घण्टाकाशसंयोगश्च शब्दमारभत इति द्रष्टव्यम्। ततश्च कर्मणा संस्कारः, संस्कारेण पुनः कर्म, शब्दश्चेत्यपि द्रष्टव्यम्। सुगममन्यत् ॥३९॥

### वृत्तिः

सिद्धान्तिनः सूत्रान्तरम्—(पाणीति)

शब्दायमाने कांस्यादौ पाणिरूपनिमित्तस्य प्रश्लेषात् संयोगात् शब्दाभावे उपलभ्यमाने शब्दाभावकारणस्य नानुपलब्धिरिति यथाश्रुतानुयायिनः।

---

(१) 'निर्निमित्तान्तरम्' इति ग-ज०। (२) 'नोपलभ्यते' ख-ग-ज-भा०। (३) 'सा चानल्याध्यात्मिकं' इति ख०।

(क) 'ततः कर्मणः संस्कारः' इति क-ख-वार्त्तिक-पुस्तकयोः पाठः।

## न्यायभाष्यम्

(१)अतः श्रवणानुपपत्तिः। तत्र प्रतिघातिद्रव्यसंयोगः शब्दस्य निमित्तान्तरं संस्कारभूतं निरुणद्धीत्यनुमीयते; तस्य च निरोधाच्छब्दसन्तानो (२)नोत्पद्यते। अनुत्पत्तौ श्रुतिविच्छेदो यथा प्रतिघातिद्रव्यसंयोगादिषोः क्रियाहेतौ संस्कारे निरुद्धे गमनाभाव इति। कम्पसन्तानस्य स्पर्शनेन्द्रियग्राह्यस्य चोपरमः। (३)कांस्यपात्रादिषु पाणिसंश्लेषो लिङ्गं संस्कारसन्तानस्येति। तस्मान्निमित्तान्तरस्य संस्कारभूतस्य नानुपलब्धिरिति ॥ ३६ ॥

## न्यायवार्त्तिकम्

शब्दोत्पत्तिनिमित्तं न प्रतिपद्यसे पाणिघण्टासंश्लेषाच्छब्दे सन्तानोच्छेदो न प्राप्नोति। अथ घण्टास्थः संस्कारः पाणिसंश्लेषान्निवर्त्तते तथाऽपि कथं शब्दसन्तानोच्छेद इति ? न ब्रूमो घण्टासंश्लेषः शब्दानुच्छिनत्तीति अपि तु पाणिघण्टासंश्लेषात् तद्वृत्तिसंस्कारः स्पर्शवद्द्रव्यसंयोगविरोधित्वान्निवर्त्तते निवृत्ते च कारणाभावात् कार्याभाव इति सन्तानोच्छेदः ॥ ३६ ॥

## न्यायवार्त्तिकतात्पर्यटीका

पाणि—ब्धिः ( सू० ३६ ) ॥ देशयति—अथ घण्टास्थ इति। न खलु कारणविनाशे कार्योच्छेदः, मा भूत् कुलालादिनिवृत्तावपि घटादिनिवृत्तिरित्यर्थः। परिहरति—न ब्रूम इति। यद्यपि निमित्तनिवृत्तावपि कार्यं निवर्त्तते यथा अपेक्षाबुद्धिनाशाद् द्वित्वादि ; तथाऽपि निमित्तनिवृत्तावपि तदनिवृत्तिमभ्युपगम्यैव परिहार इति मन्तव्यम् ॥ ३६ ॥

## वृत्तिः

परे तु—पाणिरूपनिमित्तस्य प्रश्लेषः सम्बन्धो यत्र सः (क) पाणिजः शब्दः अर्थात् उत्तरशब्दः ततः शब्दाभावे शब्दध्वंसे सति न विनाशकारणानुपलब्धिरित्यर्थ इत्याहुः।

अन्ये तु—पूर्वसूत्रे शब्दस्य तावद्वेगात्मकः संस्कारविशेषो हेतुः, तस्य तीव्र-तीव्रतर मन्द-मन्दतरत्वाच्छब्दोऽपि तादृशः, तत्र चोत्तरोत्तरशब्दानां पूर्वपूर्वशब्दनाशकत्वं कल्प्यत इत्यर्थः। ननु तादृशसंस्कार एव नास्तीत्यत्राऽऽह पाणीति। नानुपलब्धिः संस्कारस्येति शेषः। पाणेर्निमित्तस्य प्रश्लेषाद् घण्टादिसंयोगात् संस्काररूपकारणाभावद्वारा शब्दाभावे शब्दानुत्पत्तौ नानुपलम्भः संस्कारस्येत्यर्थ इत्याहुः ॥ ३६ ॥

---

(१) 'ततः' इति वि०। (२) 'नोपपद्यते' इति वि०। (३) 'कांश्य-' इति ज०।

(क) अत्र 'पाणिजशब्दजः शब्द' इति सम्यक्तया प्रतिभाति।

## ( सू० )—विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः (क) ॥३७॥

### न्यायभाष्यम्

यदि यस्य विनाशकारणं नोपलभ्यते तदवतिष्ठते, अवस्थानाच्च तस्य नित्यत्वं प्रसज्यते ; एवं यानि खल्विमानि शब्दश्रवणानि शब्दाभिव्यक्तय इति मतम्, न तेषां विनाशकारणं भवतोपपाद्यते, अनुपपादनाद् (१)अवस्थानमवस्थानात् तेषां नित्यत्वं प्रसज्यत इति। (२)अथ नैवम्, न तर्हि(२*) विनाशकारणानुपलब्धेः शब्दस्यावस्थानान्नित्यत्वमिति ॥ ३७ ॥

(३)कम्पसमानाश्रयस्यानुनादस्य पाणिप्रश्लेषात् कम्पवत् कारणोपरमादभावः। (ख)वैयधिकरण्ये हि प्रतिघातिद्रव्यप्रश्लेषात् समानाधिकरणस्यैवोपरमः स्यादिति—

### न्यायवार्त्तिकम्

विनाशकारणानुपलब्धेश्चावस्थाने तन्नित्यत्वप्रसङ्गः। यदिदमुच्यते विनाशकारणानुपलब्धेर्नित्यः शब्द इति, यदि यस्य विनाशकारणं नोपलभ्यते तन्नित्यं यानीमानि शब्दग्रहणानि तेषां न भवता विनाशकारणमुपपाद्यते अनुपपादनादवस्थानान्नित्यत्वमिति। अथानुपलब्धविनाशकारणान्यपि शब्दग्रहणानि अनित्यानि शब्दोऽप्येवमित्यनेकान्तः। अथानुमानतः शब्दग्रहणविनाशकारणानि गम्यन्ते (४)तत्समानं शब्द इति न किञ्चिद् बाधितं भवति ॥ ३७ ॥

व्यधिकरणत्वादयुक्तमिति चेत्—अथ मन्यसे व्यधिकरणः शब्दः कथमन्यवृत्तिना संश्लेषेण

### न्यायवार्त्तिकतात्पर्यटीका

सिंहावलोकितन्यायेन पूर्वोक्तं हेतुं दूषयति—विनाशेति।

विना—ङ्गः ( सू० ३७ )॥ प्रत्यक्षेण शब्दविनाशकारणानुपलब्धेश्चावस्थाने शब्दस्य शब्दोपलब्धेरपि नित्यत्वप्रसङ्गः ; न हि तस्या अपि विनाशकारणं प्रत्यक्षेणोपलभ्यत इति। तदनेन विनाशकारणानुपलब्धिरित्यस्यानैकान्तिकत्वमुद्भावितम् ॥ ३७ ॥

संप्रति सांख्यः प्रत्यवतिष्ठते—कम्पसमानाश्रयस्येति। अनुवृत्तो नादः शब्दोऽनुनाद इति। वैयधिकरण्ये हीति। (ग) द्रव्यप्रश्लेषात् समानाधिकरणस्यैव संस्कारस्योच्छेदः स्यात्, न

### वृत्तिः

( विनाशकारणेति ॥ ३७ ॥ ) (घ)।

---

(१) 'अनवस्थानमनवस्थानात्' इति ज०। (२) 'अथ नैवं तर्हि' ल-ग-ज०। (३) 'कम्पसमानाश्रयस्य च नादस्य' इति ल-ग-ज०। (४) 'तत् प्रमाणं' इति ख०।

(क) तृतीयाध्याये द्वितीयाह्निके २३श-सूत्रमेतत्समानुपूर्वीकम्। (ख) वैयधिकरण्य इति। प्रतिघातिद्रव्यप्रश्लेषात् समानाधिकरणस्यैव शब्दस्योपरम इति नियमेन वैयधिकरण्ये शब्दस्य कम्पासामानाधिकरण्ये अर्थादाकाशवृत्तित्वे अभ्युपगम्यमाने तु न शब्दानामुपरमः स्यादित्यध्याहारेणार्थो बोद्धव्यः। (ग) 'प्रतिघातिद्रव्यप्रश्लेषात्' इत्यादिभाष्यमर्थतोऽत्र धृतम्। द्रव्यप्रश्लेषासमानाधिकरणस्येतिं क-ख-पुस्तकयोः पाठः।

(घ) अत्र 'विनाशकारणे'त्यादि सूत्रं वृत्तिकृता न व्याख्यातमिति तन्मते अत्र इदं सूत्रं नास्तीति केचिन्मन्यन्ते। अस्माभिस्तु वृत्तिकृतो निषेधाभावेन व्याख्यानुपलब्धिमात्रं न साधकमिति मन्यमानैः सूत्रसंख्याह्रासो न कृतः।

## (सू०)—अस्पर्शत्वादप्रतिषेधः ॥ ३८ ॥

### न्यायभाष्यम्

यदिदं (क) नाऽऽकाशगुणः शब्द इति प्रतिषिध्यते अयमनुपपन्नः प्रतिषेधः, अस्पर्शत्वाच्छब्दाश्रयस्य। रूपादिसमानदेशस्याग्रहणे शब्दसन्तानोपपत्तेरस्पर्शव्यापिद्रव्याश्रयः शब्द इति ज्ञायते (१)न कम्पसमानाश्रय इति ॥ ३८ ॥

### न्यायवार्त्तिकम्

निवर्त्यते। अथ व्यधिकरणोऽपि निवर्त्यते, सर्वघण्टाशब्दोच्छेदप्रसङ्गः। तस्मात् पाणिघण्टासंश्लेषसमानाधिकरणः शब्दः।

अस्पर्शत्वादप्रतिषेधः। अस्पर्शद्रव्याश्रयः शब्द इति सूत्रार्थः। कथमन्यत्र वर्तमानस्य पाणिघण्टासंश्लेषो निवर्तक इति ? नोक्तोत्तरत्वात्—उक्तोत्तरमेतत्, कारणाभावादन्यशब्दानुत्पादः। यस्तूत्पन्नः शब्दः स मन्दतरतमादिन्यायेनान्त्यस्यातिमान्द्याद् येन केनचिद्विरोधित्वात् क्षीयते।

योऽयं संस्कारः शब्दकारणत्वेन समधिगतः स किमेकोऽनेको वेति सन्दिह्यते। अनेकः संस्कार इति तत्त्वं शब्दभेदात्। कारणभेदे सति कार्यभेदो दृष्टः। यस्यैकः संस्कारः तस्येपोः

### न्यायवार्त्तिकतात्पर्यटीका

व्यधिकरणस्य शब्दस्य ; व्यधिकरणस्य तूच्छेदाभ्युपगमेऽतिप्रसङ्गः स्यात्। तस्मात् कम्पसंतानसंस्कारसमानाश्रयः शब्दोऽभ्युपगन्तव्यः। तदनेनाऽऽकाशाश्रयत्वं शब्दस्य प्रतिषिद्धम्। तदेतद् वार्त्तिककारो व्याचष्टे—व्यधिकरणत्वादयुक्तमिति। अस्योत्तरसूत्रम्—

अस्प—धः (सू० ३८ ॥ प्राप्यकारित्वमिन्द्रियाणां व्यवस्थितं प्राक्। घण्टाद्याश्रयः शब्दो न श्रोत्रं प्राप्नोति। एवं हि प्राप्नुयाद् यदि घण्टा कर्णशष्कुलीमागच्छेत्, कर्णशष्कुली वा घण्टाम्; न चैतदुभयमस्ति। न चाऽऽहंकारिकमिन्द्रियं व्यापीत्युक्तम्। तस्माच्छब्दाधारो निःस्पर्शो (ख) व्यापी वाऽऽकाशः, तदाधारः शब्दः श्रोत्रमायाति सन्तानवृत्त्येति युक्तम्; तथाच श्रवणमस्योपपन्नं नान्यथेति। तदेतद्वार्त्तिककृद्विभजते—अस्पर्शेति। येन केनचिदिति, मन्दतरेण वा मन्दतमेन वा कारणशब्देनेत्यर्थः।

अनेकः संस्कार इति तत्त्वं शब्दभेदादिति। एकस्य हि संस्कारस्य धर्मभेदकल्पनायां कल्पनागौरवप्रसङ्गः संस्कारस्तावदेको धर्मी धर्मभेदाश्चेति। तदिह धर्मभेदस्थानेऽस्तु संस्कार-

---

(१) 'न च कम्प-' इति ल-ज०।

(क) अत्रेदमाशङ्क्यते, कम्पसमानाश्रयस्यानुनादस्येति भाष्यग्रन्थः सांख्यानां प्रत्यवस्थानपरतया तात्पर्यटीकायां व्याख्यातः। तथा च "नाऽऽकाशगुणः शब्दः" इतिप्रतिषेधः सांख्यानामेव भवितुमर्हति। प्रकृतेर्महानिति सांख्यकारिकायां 'पञ्चभ्यः पञ्च भूतानि' इति व्याचक्षाणेन च टीकाकृता 'तत्र शब्दतन्मात्रादाकाशं शब्दगुणम्' इति वदता शब्दस्याऽऽकाशगुणत्वं सांख्यानां सम्मतमिति स्पष्टमवधार्यते। ततश्च 'नाऽऽकाशगुणः शब्दः' इति ग्रन्थस्यासुसंगतत्वापत्तिरिति। अत्रोच्यते 'नाऽऽकाशगुणः शब्द' इत्यत्र शब्द इति श्रूयमाणशब्दपरम्। तादृशं हि शब्दमधिकृत्य नित्यानित्यत्वविचारः प्रारभ्यते। आकाशः शब्दगुणः इत्यादितत्त्वकौमुदीग्रन्थस्य च अनुपलभ्यमानसूक्ष्मशब्दानामेव आकाशगुणत्वं श्रूयमाणत्वं तु पार्थिवघण्टादिगतशब्दस्यैवेत्यभिप्रायः। तथा च नासङ्गतिरिति। (ख) 'व्यापी वाकाशः' इति क-ख-पुस्तकयोर्मुद्रितम्। शोधिताकारस्तु गृहीतः।

### न्यायभाष्यम्

प्रतिद्रव्यं रूपादिभिः सह सन्निविष्टः शब्दः समानदेशो व्यज्यत इति नोपपद्यते। कथम्?—

## (सू०)—विभक्त्यन्तरोपपत्तेश्च समासे ॥ ३९ ॥

सन्तानोपपत्तेश्चेति चार्थः। तद् व्याख्यातम्। यदि रूपादयः शब्दाश्च प्रतिद्रव्यं समस्ताः समुदितास्तस्मिन् समासे समुदाये यो यथाजातीयकः सन्निविष्टस्तस्य तथा-जातीयस्यैव ग्रहणेन भवितव्यं शब्दे रूपादिवत्। तत्र योऽयं विभाग एकद्रव्ये नाना-रूपा भिन्नश्रुतयो विधर्माणः शब्दा अभिव्यज्यमानाः श्रूयन्ते यच्च (१)विभागान्तरं सरूपाः समानश्रुतयः सधर्माणः शब्दास्तीव्रमन्दधर्मतया भिन्नाः श्रूयन्ते तदुभयं नोपपद्यते, नाना-

### न्यायवार्त्तिकम्

पातः प्राप्नोति अगत्वैव यावद्गन्तव्यमिति। अथाप्रतिबध्यमाने संस्कारे द्रव्यं गच्छति न कदाचित्पातः प्राप्नोति तस्मादनेकः संस्कारः ॥ ३८ ॥

विभक्त्यन्तरोपपत्तेश्च समासे। नायं शब्दो गन्धादिभिः सह सन्निविष्टो व्यज्यते विभक्त्यन्तरोपपत्तेः। (क)विभागश्च विभागान्तरं चेति विभक्त्यन्तरम्। (२) विधर्माणश्च सरूपाश्च

### न्यायवार्त्तिकतात्पर्यटीका

भेदः कृतमत्रैकेन धर्मिणा। न च संस्कारभेदेषु धर्मभेदाः कल्पनीयाः संस्कारभेदमात्रादेव कारणात् कार्यभेदोपपत्तौ तद्गतधर्मभेदकल्पनावैयर्थ्यादिति भावः। यस्य च वैशेषिकस्य एकः संस्कारस्तस्येषोः पातः प्राप्नोति। संस्कारस्य हीषोर्मूर्त्तद्रव्यसंयोगो विनाशकोऽविनाशको वा? विनाशकश्चेद् आद्येनैव मूर्त्तद्रव्यसंयोगेन तस्य विनाशाद् अगत्वैव यावद्गन्तव्यमिषोः पातप्रसङ्गः। द्वितीये तु कल्पे कृतकस्यापि संस्कारस्य विनाशकारणाभावेनाविनाशान्न कदा-चिदपि पातः स्यात्। प्रयोगश्च इष्वादिवेगः क्षणिकः वेगत्वाद् घटादिगतवेगवदिति ॥ ३८ ॥

विभ—से (सू० ३८) ॥ सांख्यानां रूपरसगन्धस्पर्शशब्दसमुदायो वीणावेणुशङ्खादिद्रव्यम्, तत्र 'समासे' समुदाये स्थित एव व्यज्यत इति दर्शनम्; तस्मिन् समुदाये सांख्याभिमते विभक्त्यन्त-

### वृत्तिः

ननु घण्टादिपाणिसंयोगस्य शब्दनिवर्त्तकत्वे घण्टाद्याश्रय एव शब्दः स्यादित्या-शङ्कायामाह—(अस्पर्शत्वादप्रतिषेधः)।

उक्तः प्रतिषेधो न सम्भवति अस्पर्शत्वात्, शब्दाश्रयस्येति शेषः। शब्दो हि न स्पर्शवद्विशेषगुणः अग्निसंयोगासमवायिकारणकत्वाभाववदकारणगुणपूर्वककार्यत्वा-दित्याशयः ॥ ३८ ॥

---

(१) 'विभागानन्तरम्' इति ग०। (२) 'प्रतिद्रव्यविधर्माणश्च' इति ख०।

(क) 'अत्र विभागाश्च विभागान्तरं चेति' इति अर्थकथनमात्रम्, वाक्यं तु 'विभक्तिश्च विभक्तिश्च' इत्याकारकमेव। विजातीयविभागप्रतिपादनाभिप्रायेण च अन्तरपदमिति बोध्यम्।

### न्यायभाष्यम्

भूतानामुत्पद्यमानानामयं धर्मो नैकस्य व्यज्यमानस्येति। अस्ति चायं विभागो विभागान्तरं च, तेन विभागोपपत्तेर्मन्यामहे न प्रतिद्रव्यं रूपादिभिः सह शब्दः सन्निविष्टो व्यज्यत इति ॥ ३९ ॥

द्विविधश्चायं शब्दो वर्णात्मको ध्वनिमात्रश्च। तत्र वर्णात्मनि तावत्—

## (सू०)—विकारादेशोपदेशात् संशयः ॥ ४० ॥

दध्यत्रेति केचिद् इकार इत्वं हित्वा यत्वमापद्यत इति विकारं मन्यन्ते। केचिदिकारस्य प्रयोगे विषयकृते यदिकारः स्थानं जहाति तत्र यकारस्य प्रयोगं ब्रुवते। संहितायां विषये इकारो न प्रयुज्यते तस्य स्थाने यकारः प्रयुज्यते स आदेश इति उभयमिदमुपदिश्यते। तत्र न ज्ञायते किं तत्त्वमिति।

### न्यायवार्त्तिकम्

शब्दा एकद्रव्याः श्रूयन्ते। समासः समुदायः। एतच्च स्पर्शवद्द्रव्यवृत्तिषु शब्देषु न प्राप्नोति गन्धादिवत्—यथा प्रतिद्रव्यमेको गन्ध एवं प्रतिद्रव्यमेकः शब्द इति। सन्तानोपपत्तेश्चेति चार्थः। यद्ययं गन्धादिभिः सह सन्निविष्टः स्यात् नान्यत्र वर्तमानः श्रोत्र उपलभ्येत। तस्मात् सन्तानवृत्तित्वादाकाशाश्रयः शब्द इति ॥ ३९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

रोपपत्तेश्च न व्यज्यते शब्दः। यदि समुदाये व्यज्येत शब्दः; विभक्तिश्च षड्ज-धैवत-गान्धारादिभेदेन, विभागान्तरं च षड्जजातीयस्यैव (क)तारमन्दादिरूपं नोपपद्यते। न हि तद्गतानां गन्धादीनामेकस्मिन्नेव द्रव्ये वीणादौ नानाजातीयानां च प्रतिक्षणं भेदो दृश्यते। तस्माद्विभक्त्यन्तरोत्पत्तेर्न समासे व्यज्यते शब्दः, अपि त्वाकाशगुणः क्रियत इति सांप्रतम्। सूत्रव्याख्ययैव भाष्यवार्त्तिके व्याख्याते ॥ ३९ ॥

तदेवं रूपादिसन्निविष्टः शब्दो व्यज्यत इति सांख्यमते दूषिते स एव सांख्यो वर्णेषु प्रकृतिविकारभावश्रुतेर्मूर्त्तत्ववर्णादिवत्परिणामिनित्या वर्णा इति यदि प्रत्यवतिष्ठते तत्र परीक्षामारभते—द्विविधश्चायं शब्द इति।

विका—यः (सू० ४०) ॥ विकारोपदेशोऽपि न ध्वनिमात्रे शब्देऽस्तीति न तस्य परिणामि-

### वृत्तिः

एतदेव व्युत्पादयितुमाह—( विभक्त्येति )

'समासे' स्पर्शादिसमुदाये साहित्येन शब्दो वर्तते इति न युक्तम्, 'विभक्त्यन्तरस्य' विभागान्तरस्य तारमन्दादेः 'उपपत्तेः'। अयमर्थः—एकस्मिन्नेव शङ्खादौ तारमन्दादिनानाशब्दा जायन्ते, गन्धादयस्तु विनाऽग्निसंयोगं न परावर्तन्त इति भावः ॥ ३९ ॥

समाप्तं शब्दानित्यत्वप्रकरणम् ॥ २ ॥

(क) 'तारमन्द्रादिरूपम्' इति क-ख-तात्पर्यपुस्तकयोर्मुद्रितम्।

## न्यायभाष्यम्

आदेशोपदेशस्तत्त्वम्। विकारोपदेशे ह्यन्वयस्याग्रहणाद् (१)विकारानुमानम्—सत्यन्वये (२)किञ्चिन्निवर्त्तते किञ्चिदुपजायत इति (३)शक्येत विकारोऽनुमातुम्। न चान्वयो गृह्यते तस्माद्विकारो नास्तीति।

भिन्नकरणयोश्च वर्णयोरप्रयोगे प्रयोगोपपत्तिः—विवृतकरण इकार ईषत्स्पृष्टकरणो यकारः, ताविमौ पृथक्करणाख्येन प्रयत्नेनोच्चारणीयौ, तयोरेकस्याप्रयोगे(४)ऽन्यस्य प्रयोग उपपन्न इति।

अविकारे चाविशेषः। यत्रेमाविकारयकारौ न विकारभूतौ—यतते, यच्छति, प्रायंस्त, इति, इकार इदमिति च, यत्र च विकारभूतौ (५,क)इष्ट्या दध्याहरेति, उभयत्र प्रयोक्तुरविशेषो यत्नः श्रोतुश्च श्रुतिरित्यादेशोपपत्तिः।

## न्यायवार्त्तिकम्

विकारादेशोपदेशात् संशय इति, संशयकारणज्ञापनार्थं सूत्रम्॥ ४०॥

## न्यायवार्त्तिकतात्पर्यटीका

नित्यतामापादयितुमर्हति केवलं वर्णात्मन्यापादयेद् यद्यसंदेहः स्यात्, अस्ति तु तत्रापि संदेहः। तथा हि 'इको यणचि' इत्यादिकं विकारोपदेशमाचक्षत एके अन्ये त्वादेशोपदेशम्। तत्र व्याख्यातृविप्रतिपत्तेः संशयः। तत्रापरीक्ष्य शक्यमवधारयितुमित्यर्थः। तत्र परीक्षायाम्।

आदेशोपदेशस्तत्त्वमित्यवधारयति—आदेशोपदेश इति। सुवर्णजातीयाः खल्ववयवा अन्यतमव्यूहपरित्यागेनान्यतमं व्यूहमापद्यमाना रुचक इति वा वर्द्धमान इति वा परिणमन्ते, अस्ति हि तेषु सर्वेषु सुवर्णजातीयानामवयवानामनुगमः, न तु यकारे इकारस्य वा तदारम्भकस्य वा अवयवस्यानुगममीक्षामहे। तस्माद्विकाराभावादादेशत्वमस्य निश्चिनुम इति।

उपपत्त्यन्तरं चाविकारे दर्शयति—भिन्नकरणयोश्चेति। यदि ईकारविकारो यकारः स्याद् यकारप्रयोगायेकारमुपाददानास्तत्कारणं विवृतकरणं पूर्वमुपाददीरन्, तन्निरपेक्षास्तु यकारं प्रयोक्ष्यमाणा ईषत्स्पृष्टकरणमुपाददते ; तस्मान्नेकारविकारो यकार इत्युत्पश्यामः।

उपपत्त्यन्तरमाह—अविकारे चेति। कारकज्ञापकयोर्हेत्वोरविशेषमाह—उभयत्रेति।

---

(१) 'विकारानुमानम्' इति ज-ग०। (२) 'किञ्चिन्निवर्त्तेते' इति ल-पुस्तके नास्ति। (३) 'शक्यते' इति ल-भा०। (४) '-ऽन्यतरस्य' इति ल-ग-ज-भा०। (५) 'इष्ट्वा व्याहरति' इति ल०, 'इष्ट्वा दध्याहरेति, इदं व्याहरति'। इति ग-ज०।

(क) 'इष्ट्या' इति विकारद्वयस्य एकमुदाहरणम्। अत्र प्रथम इकारो 'ष'कारस्य विकारः, द्वितीयो 'य'कारः इकारस्य विकारः। दध्याहरेति द्वितीयमेकविकारोदाहरणम्।

## न्यायभाष्यम्

प्रयुज्यमानाग्रहणाच्च। न खलु इकारः प्रयुज्यमानो यकारतामापद्यमानो गृह्यते। किं तर्हि? इकारस्य प्रयोगे यकारः प्रयुज्यते, तस्मादविकार इति।

अविकारे च न शब्दान्वाख्यानलोपः। न विक्रियन्ते वर्णा इति। न चैतस्मिन् पक्षे शब्दान्वाख्यानस्यासम्भवो येन वर्णविकारं प्रतिपद्येमहीति।

न खलु वर्णस्य वर्णान्तरं कार्यम्, न हि इकाराद् यकार उत्पद्यते यकाराद्वा इकारः। पृथक्स्थानप्रयत्नोत्पाद्या हीमे वर्णाः तेषामन्योऽन्यस्य स्थाने प्रयुज्यत इति युक्तम्। एतावच्चैतत् परिणामो (१)वा विकारः स्यात् कार्यकारणभावो वा। उभयं च नास्ति तस्मात् न सन्ति वर्णविकाराः।

वर्णसमुदायविकारानुपपत्तिवच्च वर्णविकारानुपपत्तिः—'अस्तेर्भूः' 'ब्रुवो वचि'-रिति यथा वर्णसमुदायस्य धातुलक्षणस्य क्वचिद्विषये वर्णान्तरसमुदायो न परिणामो न कार्यं शब्दान्तरस्य स्थाने शब्दान्तरं प्रयुज्यते तथा वर्णस्य वर्णान्तरमिति ॥ ४० ॥

## न्यायवार्त्तिकतात्पर्यटीका

उपपत्त्यन्तरमाह—प्रयुज्यमानेति। यथा हि क्षीरं कालविपाकापेक्षं दधि भवद् दृश्यते न तथेकारो यकारो भवन्नित्यर्थः।

यदि न विकारः कथं तर्हि शब्दान्वाख्यानम् 'इको यणची'त्यत आह—अविकारे चेति। इकः प्रयोगप्रसङ्गे संहितायां यणः प्रयोगमाह तत्सूत्रम्, न पुनरिग्विकारं यणमित्यर्थः। ननु मा भूद्विकारः परिणामोऽर्थान्तरं तु भविष्यति ततो नित्या वर्णा भविष्यन्तीत्यत आह—एतावच्चैतदिति। परिणामो वा इत्यापाततः, कार्यकारणभावो वा इति परमार्थः। न जातु क्षीरं तदवयवा वा दधिरूपेण परिणमन्ते, न ह्यवयवा अवयविस्वभावाः; तस्मात् कार्यकारणभाव एव तात्त्विक इति, स च वर्णेषु नास्ति इगनपेक्षस्य यणो निष्पत्तेः। तस्मादिक्प्रयोगप्रसङ्गे संहितायां यणः प्रयोग इत्यन्वाख्यानार्थ इति।

इतश्चायमादेशोपदेश इत्याह—वर्णसमुदायेति। वर्णस्यैकस्य वास्तवत्वात् कदाचिद्विकार उपपद्यते (क) बुद्धिसमाहारमात्रस्य तु तत्समुदायस्य न विकारसंभवः। तस्मात्तत्राकामेनाप्या-देशोपदेशो वक्तव्यः। स वरं क्लृप्तत्वादेकस्मिन्नप्यस्तु वर्णे इति इत्यर्थः ॥ ४० ॥

## वृत्तिः

प्रसङ्गाच्छब्दपरिणामवादं दूषयितुं संशयं दर्शयति—( विकारेति )

'इको यणचि' इत्यादिना इकारादेर्विकारो यकारादिरिति (२)केचित् साङ्ख्या व्याचक्षते। परे तु इकारे प्रयोक्तव्ये यकारः प्रयोक्तव्य इत्यादेशं समादिशन्ति।

(१) 'वा' इति ज-ञ-ग-झ-पुस्तकेषु नास्ति। (२) 'केचिद्' इति ज-पुस्तके नास्ति।
(क) क-ख-पुस्तकयोः 'बुद्धिः समाहारमात्रस्ये'ति पाठः।

## न्यायभाष्यम्

इतश्च न सन्ति (१)वर्णविकाराः—

### (सू०)—प्रकृतिविवृद्धौ विकारविवृद्धेः(क) ॥ ४१ ॥

प्रकृत्यनुविधानं विकारेषु दृष्टम्, यकारे ह्रस्वदीर्घानुविधानं नास्ति येन विकारत्वमनुमीयत इति ॥ ४१ ॥

## न्यायवार्त्तिकम्

प्रकृतिविवृद्धौ विकारविवृद्धेरिति सूत्रम्। प्रकृत्यनुविधानादिति सूत्रार्थः, विकारे प्रकृत्यनुविधानं दृष्टमिति ॥ ४१ ॥

## न्यायवार्त्तिकतात्पर्यटीका

इतश्च न प्रकृतिविकारभावः—

प्रकृ—द्धेः ( सू० ४१ ) ॥ प्रकृतिविवृद्धाविति (ख)महद्भिः खलु तूलपिण्डैरारब्धः स्थूलः पिण्डोऽल्पश्चाऽऽरब्धो महानल्प इति दृष्टम्, तद्वदिहापि दीर्घेकारविकारस्य यकारस्य इकारविकाराद्भवितव्यं विशेषेण, न चास्ति विशेषः ; तस्मान्न प्रकृतिविकारभाव इत्यर्थः ॥ ४१ ॥

## वृत्तिः

अतश्च वर्णा विकारिणो न वेति संशयः। विकारश्च स्वरूपस्य विनाशेऽविनाशे वा द्रव्यान्तरारम्भकत्वम्, यथा दुग्धादेर्दध्याद्यारम्भकत्वम्, बीजादेर्वृक्षाद्यारम्भकत्वं च, सुवर्णादेरपि लोहाभिघातजन्यावयवसंयोगनाशादवयविनो नाशे सत्येव(२) कुण्डलाद्यारम्भकत्वम्, कपालादेश्च स्वरूपाविनाशेन घटाद्यारम्भकत्वम् ॥ ४० ॥

तत्र विकारनिराकरणाय (३) सूत्रम्—( प्रकृतीति )

न वर्णा विकारिणः, तथा सति तत्प्रकृतेरुपादानत्वाभिमतस्य विवृद्ध्या विकारस्यापि विवृद्ध्यापत्तेः। महदल्पावयवारब्धावयविनो महदल्पत्ववद् ह्रस्वेकारारब्धयकारापेक्षया दीर्घेकारारब्धयकारस्य विवृद्धिः स्यादित्यर्थः। तस्मादादेशपक्षः श्रेयानिति भावः ॥ ४१ ॥

---

(१) 'विकाराः' ख-ग-झा०। (२) 'कुण्डलारम्भकत्वम्' इति म०। (३) 'सूत्रम्' इति नास्ति म०।

(क) न्यायसूचीनिबन्धे तु 'विकारविवृद्धेश्च' चकारान्तः सूत्रपाठः।

(ख) अत्र 'महद्भिः खलु पिण्डैरारब्धः स्थूलः पिण्डोऽल्पैश्चाऽऽरब्धोऽल्प' इति इत्येवं पाठो यथार्थः, मुद्रिताकारे तु स्थूलपदव्याख्यानं 'महान्' इति पदं प्रमादान्मूलेऽन्तर्भूतम् अस्थाने मुद्रितं च। तूलपदं पुनर्दृष्टान्तविषया: स्पष्टार्थमित्यनुमीयते।

## (सू०)—न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः ॥ ४२ ॥

### न्यायभाष्यम्

द्रव्यविकारा न्यूनाः समाः अधिकाश्च गृह्यन्ते। तद्वदयं विकारो न्यूनः स्यादिति ॥ ४२ ॥

## (सू०)—द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः(क) ॥४३॥

अत्र नोदाहरणसाधर्म्याद्धेतुरस्ति न वैधर्म्यात्। अनुपसंहृतश्च हेतुना दृष्टान्तो न साधक इति।

प्रतिदृष्टान्ते चानियमः प्रसज्येत। यथाऽनडुहः स्थानेऽश्वो वोढुं नियुक्तो न तद्विकारो भवति एवमिवर्णस्य स्थाने यकारः प्रयुक्तो न विकार इति। न चात्र नियमहेतुरस्ति—दृष्टान्तः साधको न प्रतिदृष्टान्त इति ॥ ४३ ॥

### न्यायवार्त्तिकम्

न्यूनसमाधिकोपलब्धेर्विकाराणामहेतुः। न्यूनसमाधिकोपलब्धेर्विकाराणाम् अहेतुरिति साधनपक्षे दृष्टान्तमात्रत्वादहेतुः ॥ ४२ ॥

द्विविधस्यापि हेतोरभावादसाधनं दृष्टान्तः (ख) ॥ ४३ ॥

### न्यायवार्त्तिकतात्पर्यटीका

अस्याऽऽक्षेपसूत्रम्—

न्यून—तुः ( सू० ४२ ) ॥ अल्पेन हि न्यग्रोधबीजेनाऽऽरब्धो न्यग्रोधतरुर्महान्, ततोऽतिमहता (ग) वा नारिकेलबीजेनाऽऽरब्धो नारिकेलतरुरल्पः, नारिकेलबीजैरेव (घ) परस्परापेक्षमाणसमैरारब्धः सम इति ॥ ४२ ॥

अस्य प्रत्याख्यानसूत्रम्—द्विविधस्यापि हेतोरिति।

द्विवि—न्तः ( सू० ४३ ) ॥ यदि च न्यूनसमाधिकोपलब्धेरिति साधनं तदा द्विविधस्य हेतोरभावाद्द दृष्टान्तमात्रस्य चासाधकत्वात् प्रतिदृष्टान्तस्य च संभवादित्येतद्द दूषणम् ॥ ४३ ॥

### वृत्तिः

आक्षिपति—( न्यूनेति )

उक्तो हेतुर्न युक्तः विकाराणां प्रकृत्यपेक्षया न्यूनत्वस्य समत्वस्याधिकत्वस्य चोपपत्तेर्दर्शनात्। यथा तूलकपरिमाणापेक्षया तद्विकारस्तन्तुरल्पपरिमाणः, यथा वा न्यग्रोधबीजादुत्कृष्टेन नारिकेलीबीजेन न्यग्रोधादल्पो नारिकेलीतरुर्जन्यते, कनकादिसमपरिमाणं कटकादि, यथा वा न्यूनाधिकनारिकेलीबीजाभ्यां समौ वृक्षौ, न्यूनपरिमाणाद् वटबीजाच्च महान् वटतरुरिति ॥ ४२ ॥

( द्विविधेति ) ॥ ४३ ॥(ङ)

---

(क) वार्त्तिककृद्वृत्तिकृद्भ्यामिदं सूत्रं न व्याख्यातमिति तन्मते नेदं सूत्रमिति केचित्।

(ख) अयं भागः वार्त्तिकपुस्तकयोर्न मुद्रितः। (ग) 'वा'शब्दस्त्वर्थे।

(घ) अत्र 'परस्परपरिमाणसमै'रिति पाठे अर्थाधिगमः सूत्रोक्तसमोदाहरणं च भवति। नारिकेलबीजतरुस्थले कारणसाम्ये कार्यसाम्योदाहरणमयुक्तमुत्पश्यता वृत्तिकृता परिमाणमुपेक्ष्य गुरुत्वसाम्यमादाय कनककटकोदाहरणमुपन्यस्तमिति बोध्यम्। (ङ) भागोऽयं सूत्रसंख्यार्थं योजितः।

न्यायभाष्यम्

द्रव्यविकारोदाहरणं च—

## (सू०)—नातुल्यप्रकृतीनां विकारविकल्पात् ॥ ४४ ॥

अतुल्यानां द्रव्याणां प्रकृतिभावो(१)विकल्पते (२)विकाराश्च प्रकृतीरनुविधीयन्ते। न त्विवर्णमनुविधीयते यकारः। तस्मादनुदाहरणं द्रव्यविकार इति ॥ ४४ ॥

न्यायवार्त्तिकम्

नातुल्यप्रकृतीनां विकारविकल्पात्। दूषणपक्षे 'नातुल्यप्रकृतीनां विकारविकल्पात्' इत्यसम्बद्धम्; अतुल्यायाः प्रकृतेः (३) विकल्प्यन्ते विकाराः, ह्रस्वदीर्घानुविधानं तु यकारे(३*) नास्तीति ॥ ४४ ॥

न्यायवार्त्तिकतात्पर्यटीका

नातु—ल्पात् (सू० ४४)॥ यदि च न्यूनसमाधिकोपलब्धेरित्यनेनानैकान्तिकोद्भावनं प्रकृत्यनुविधानस्य क्रियते तदा दूषणपक्षे 'नातुल्यप्रकृतीनां विकारविकल्पा'दिति दूषणम् अनैकान्तिकदोषस्यासंबन्धत्वं नाम, न्यूनसमाधिकत्वे तु प्रकृत्यनुविधानं विकाराणामप्रच्युतम्। तथा हि अतुल्यायाः प्रकृतेर्विकारा (४) विकल्प्यन्ते प्रकृतिभेदमनुविधीयन्ते। न जातु न्यग्रोधबीजाद् नारिकेलपादपो भवति भवति च न्यग्रोधबीजात् न्यग्रोधपादप इति। एतदुक्तं भवति—प्रकृतिभेदानुविधानं विकारभेदानां ब्रूमो न पुनस्तद्वृद्धिह्रासाभ्यां तद्वृद्धिह्रासौ, येनानैकान्तिकत्वमुद्भाव्येत। तस्मादनैकान्तिकोद्भावनमसंबद्धमित्यर्थः।

न त्विवर्णमनुविधीयते यकार इति भाष्यम्, तस्यार्थो न त्विवर्णभेदमनुविधीयत इति। तस्मादनुदाहरणं न्यूनसमाधिकभावे द्रव्यविकार इति ॥ ४४ ॥

वृत्तिः

समाधत्ते—( नातुल्येति )

नोक्तं समाधानं युक्तम्। 'अतुल्यप्रकृतीनां' भिन्नप्रकृतीनां हि विकाराणां विकल्पो वैलक्षण्यं मयाऽभिहितम्, न हि बीजादेर्ह्रासवृद्ध्यादिना वृक्षादेर्ह्रासवृद्ध्यादिकं प्रक्रान्तम्, मदुक्तवैलक्षण्यन्तु तत्राप्यस्ति, तथा च त्वदुक्तमुपचारच्छलम् इति भावः ॥ ४४ ॥

---

(१) 'प्रवकल्पते' इति ल-ग-झा०।

(२) 'विकारश्च प्रकृतीरनुविधीयते' ल-ग-ज०।

(३) 'विकल्पात् ते विकाराः ह्रस्वदीर्घानुविधानं तु एकारे' इति ख-वार्तिके मुद्रितम्।

(४) 'विकल्पन्ते' इति क०।

(सू०)—(१)द्रव्यविकारवैषम्यवद् वर्णविकारविकल्पः ॥४५॥

### न्यायभाष्यम्

यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारवैषम्यम्, एवं वर्णभावेन तुल्यायाः प्रकृते-
र्विकारविकल्प इति ॥ ४५ ॥

(सू०)—न विकारधर्मानुपपत्तेः ॥ ४६ ॥

तस्याऽऽत्मनो-
अयं विकारधर्मा द्रव्यसामान्ये, यदात्मकं द्रव्यं मृद्वा सुवर्णं वा
ऽन्वये पूर्वो व्यूहो निवर्त्तते, व्यूहान्तरं चोपजायते ; तं विकार(२)माचक्षते । न
वर्णसामान्ये कश्चिच्छब्दात्माऽन्वयी य इत्वं जहाति यत्वं चाऽऽपद्यते । तत्र यथा सति
द्रव्यभावे विकारवैषम्ये नानडुहोऽश्वो विकारो विकारधर्मानुपपत्तेः, एवमिवर्णस्य न
यकारो विकारो विकारधर्मानुपपत्तेरिति ॥ ४६ ॥

### न्यायवार्त्तिकम्

द्रव्यविकारवैषम्यवद्वर्णविकारविकल्पः । यथा द्रव्यभावेन तुल्यायाः प्रकृतेर्विकारो
विकल्प्यते एवं वर्णभावेन तुल्यायाः प्रकृतेर्विकारविकल्पः स्यादिति ॥ ४५ ॥

न विकारधर्मानुपपत्तेः ॥ ४६ ॥ (क)

### न्यायवार्त्तिकतात्पर्यटीका

अस्याऽऽक्षेपसूत्रम्—द्रव्यविकार इति ।
द्रव्य—ल्पः (सू० ४५)॥ न प्रकृतिभेदमवश्यमनुविधीयन्ते विकाराः द्रव्यत्वेन तुल्यत्वे-
ऽपि प्रकृतीनां (३)विकारवैषम्यदर्शनात् । एवं वर्णत्वेन तुल्यत्वेऽपि(३*) विकारवैषम्यम् ।
तथा च दीर्घह्रस्वाभ्यां वैषम्ये विकारवैषम्यं भविष्यति प्रकृतिसाम्य इव विकारवैषम्यम्
इति भावः ॥ ४५ ॥

तत्र प्रत्याख्यानसूत्रम्—न विकारधर्मेति ।
न वि—त्तेः ( सू० ४६ ) ॥ यद्यपि प्रकृतेर्द्रव्यत्वमभेदस्तथाऽपि विकारभेदे प्रकृतिभेद

### वृत्तिः

शङ्कते—( द्रव्येति )
द्रव्यत्वेन न्यग्रोधादिप्रकृतीनां तुल्यत्वेऽपि विकारवैषम्यं यथा एवमेव वर्णत्वेन तुल्ययो-
रपि ह्रस्वदीर्घयो(४)र्यो विकारो यकारः, तस्य(५)विकल्प ऐकरूप्यं नानुपपन्नमित्यर्थः ॥४५॥
समाधत्ते—( न विकारेति )
नात्र द्रव्यविकारतुल्यता । विकाराणां हि अयं धर्मो प्रकृत्यनुविधानं तद्भेदे भेद
इति, प्रकृते च तदनुपपत्तिः, ह्रस्वत्वदीर्घत्वादिना प्रकृतिभेदेऽपि कार्यभेदाभावात् ॥ ४६ ॥

(१) 'द्रव्यविकारे वैषम्यवद्' इति ल-ग-भा० । (२) '-माचक्ष्महे' इति ज-भा० । (३) अयमंशः ख-पु० नास्ति । (४) 'यो' इति ल-पु० नास्ति । (५) 'अविकल्पः'—इति भ० ।
(क) अस्य वार्त्तिकं नोपलभ्यते ।

न्यायभाष्यम्

इतश्च न सन्ति वर्णविकाराः—

(सू०)—विकारप्राप्तानामपुनरापत्तेः ॥ ४७ ॥

अनुपपन्ना पुनरापत्तिः। कथम्? पुनरापत्तेरननुमानादिति। इकारो यकारत्वमापन्नः पुनरिकारो भवति, न पुनरिकारस्य स्थाने यकारस्य प्रयोगोऽप्रयोगश्चेत्यत्रानुमानं नास्ति ॥ ४७ ॥

अननुमानादिति न। इदं ह्यनुमानम्—

(सू०)—सुवर्णादीनां पुनरापत्तेरहेतुः ॥ ४८ ॥

सुवर्णं कुण्डलत्वं हित्वा रुचकत्वमापद्यते रुचकत्वं हित्वा पुनः कुण्डलत्वमापद्यते, एवमिकारो(१)ऽपि यकारत्वमापन्नः पुनरिकारो भवतीति ॥ ४८ ॥

न्यायवार्त्तिकम्

विकारप्राप्तानामपुनरापत्तेरिति। यदि विक्रियन्ते वर्णाः पुनरापत्तिर्न प्राप्नोति ॥ ४७ ॥

न्यायवार्त्तिकतात्पर्यटीका

एवोपयुज्यते न पुनः प्रकृतेरभेदः तद्विकाराणां तु यदभिन्नं रूपं द्रव्यत्वं तत्र तस्योपयोग इति स्थिते (क) अन्वयग्रहणं परिहार उक्तः ॥ ४६ ॥

इतश्च न सन्ति वर्णविकारा इत्याह—विकारेति।

विका—त्तेः (सू० ४७) ॥ नो खलु क्षीरविकारो दधि पुनः क्षीरं दृष्टमित्यर्थः। अननुमानादिति प्रमाणाभावमुपलक्षयति ॥ ४७ ॥

वृत्तिः

इतश्च न विकार इत्याह—( विकारेति )

विकारप्राप्तस्य न पुनः प्रकृतिरूपता दृष्टा। न खलु दधि क्षीरतां पुनरापद्यते। इकारस्तु यकारतां प्राप्तः पुनरिकारतामापद्यते, दध्यत्र इत्युक्त्वा पुनरपि दधि अत्र इत्युच्यते एवेति भावः ॥ ४७ ॥

आक्षिपति—( सुवर्णेति )

उक्तो हेतुर्न युक्तः। सुवर्णादिकं हि कटकीभावं विहाय कुण्डलतामापन्नं पुनः कटकतामापद्यत एवेति भावः ॥ ४८ ॥

---

(१) 'यथि' इति ग०।

(क) क-ख-तात्पर्यपुस्तकद्वये 'परिहारः अन्वय( सामीपसूत्र' द्रव्यविकार इति।) ग्रहणं' इत्येवं मुद्रितम्। मुद्रिताकारस्तु शोधनादागतः।

## न्यायभाष्यम्

व्यभिचारादननुमानम् यथा पयो दधिभावमापन्नं पुनः (क) न पयो भवति किम् एवं वर्णानां न पुनरापत्तिः, अथ सुवर्णवत् पुनरापत्तिरिति सुवर्णोदाहरणोपपत्तिश्च—

**(सू०)—(ख) न तद्विकाराणां सुवर्णभावाव्यतिरेकात् ॥४९॥**

अवस्थितं सुवर्णं हीयमानेन धर्मेण (१)उपजायमानेन च धर्मि भवति, नैवं कश्चिच्छब्दात्मा हीयमानेन इत्वेनोपजायमानेन यत्वेन धर्मी गृह्यते, तस्मात् सुवर्णोदाहरणं नोपपद्यते इति ।

## न्यायवार्त्तिकम्

सुवर्णादीनां पुनरापत्तेरहेतुः । विकारप्राप्तानां पुनरापत्तिदर्शनादनेकान्त इति सूत्रार्थः ॥ ४८ ॥

न तद्विकाराणां सुवर्णभावाव्यतिरेकात् । सर्वावस्थं सुवर्णदर्शनम्, न पुनरिकारयकारयोर्धर्मयोः कश्चिद्वर्णात्मा व्यवस्थितो भवति य इत्वं हित्वा यत्वमापद्यत इति ।

## न्यायवार्त्तिकतात्पर्यटीका

अस्याऽऽक्षेपः सुवर्णादीनामिति सूत्रम् ।

सुव--तुः ( सू० ४८ ) ॥ साधनपक्षे दूषणं व्यभिचारादिति । दूषणपक्षे दोषमाह—सुवर्णोदाहरणोपपत्तिश्चेति ।

न तद्—कात् (सू० ४९) ॥ तथा हि ये सुवर्णजातीया अवयवा रुचकत्वमापन्नास्त एव

## वृत्तिः

निराकरोति—( न तद्विकारेति )

सुवर्णविकारस्थले हि सुवर्णत्वादिना प्रकृतिता, न तु कटकत्वादिना, तच्चोभयमपि सुवर्णभावं न जहाति । यदि हि सुवर्णतामपहाय कटतामापन्नं पुनः सुवर्णतामापद्येत तदा व्यभिचारः (ग) शङ्क्येत, न चैवम्, प्रकृते तु इकारतां हित्वा यकारतां प्राप्तस्यापीकारतापत्तिरस्त्येवेति दोषो दुष्परिहर इति भावः ॥ ४९ ॥

---

( १ ) 'उपजायमानेन च' इति ग-पुस्तके नास्ति ।

( क ) 'पुनः पयो भवति किमेवं वर्णानां पुनरापत्तिः' इति फ०, 'पुनः पयो भवति किमेवं वर्णानां न पुनरापत्तिः' इति ज-ल०, 'न पुनः पयो भवति किमेवं वर्णानां पुनरापत्तिः' इति वि० । भा-पुस्तकपाठस्तु गृहीतः ।

(ख) नकारोऽयं ज-पुस्तके 'सुवर्णोदाहरणोपपत्तिश्च न' इति भाष्यान्तर्गततया पठ्यते । ग-पुस्तके सम्पूर्णमेव सूत्रं भाष्यतया गृहीतम् ।

(ग) ल-पुस्तके 'शङ्क्यते' इति, भ-पुस्तके 'शक्येत' इति पाठौ अंशतो गृहीतौ ।

### न्यायभाष्यम्

वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः(क)। वर्णविकारा अपि वर्णत्वं न व्यभिचरन्ति यथा सुवर्णविकारः सुवर्णत्वमिति।

सामान्यवतो धर्मयोगो न सामान्यस्य (ख)। कुण्डलरुचकौ सुवर्णस्य धर्मौ न सुवर्णत्वस्य, एवमिकारयकारौ कस्य वर्णात्मनो धर्मौ? (१)वर्णत्वं सामान्यं न तस्येमौ (२)धर्मौ (१*)भवितुमर्हतः। न च निवर्तमानो धर्म उपजायमानस्य प्रकृतिस्तत्र निवर्तमान इकारो न यकारस्योपजायमानस्य प्रकृतिरिति ॥ ४९ ॥

इतश्च वर्णविकारानुपपत्तिः—

## (सू०)—नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात् ॥ ५० ॥

नित्या वर्णा इत्येतस्मिन् पक्षे इकारयकारौ वर्णौ इत्युभयोर्नित्यत्वाद्विकारानुपपत्तिः, (३)नित्यत्वेऽविनाशित्वात् कः कस्य विकार इति। अथानित्या वर्णा इति

### न्यायवार्त्तिकम्

वर्णत्वाव्यतिरेकाद्वर्णविकाराणामप्रतिषेधः। वर्णविकारा अपि न वर्णत्वं व्यभिचरन्तीति। अस्ति वर्णत्वं सामान्यमिति।

सामान्यवतो धर्मयोगो न पुनः सामान्यस्येति परिहारः ॥ ४९ ॥

### न्यायवार्त्तिकतात्पर्यटीका

पूर्वव्यूहपरित्यागेन वर्धमानतामापन्नाः पुना रुचकत्वमापद्यन्ते तदवयवानां तत्र प्रत्यभिज्ञायमानत्वात्, न त्विहेकारो यकारानुगत इकारयकारानुगतो वाऽन्यः कश्चिद्धर्मी दृश्यते य इत्वं परित्यज्य यत्वमापद्यते। वर्णत्वं त्वनुगतमपि न धर्मि किं तु धर्म एव। न च निवर्तमान इकारो यकारस्य धर्मो भवितुमर्हति धर्मधर्मिणोः समानकालत्वादित्यर्थः ॥ ४९ ॥

नित्य—नात् ( सू० ५० ) ॥ ननु दध्यत्रेति प्रयोगे क्वेकारस्योत्पद्य निरोधः? तथा

### वृत्तिः

अविकारे मूलयुक्तिमाह—( नित्यत्वे इति )

वर्णानां नित्यत्वे विकारासम्भवादनित्यत्वे चाचिरस्थायित्वेनेकारप्रत्यक्षानन्तरमिकारनाशाद्विकारानुपपत्तिरित्यर्थः ॥ ५० ॥

---

(१) 'वर्णत्वं वर्णधर्मयोगो न सामान्यस्येमौ धर्मौ' ग०।
(२) 'वर्णौ' इति ज०।
(३) 'अनित्यत्वे विनाशित्वात्' इति ज०।
(क) वाक्यमिदं ज-भा-पुस्तकयोः वार्त्तिके च सूत्ररूपेण मुद्रितम्।
(ख) वाक्यमिदं ज-भा-पुस्तकयोः वार्त्तिके च सूत्राकारेण मुद्रितम्।

## न्यायभाष्यम्

पक्षः, एवमप्यनवस्थानं वर्णानाम्। किमिदमनवस्थानं वर्णानाम्? उत्पद्य निरोधः। उत्पद्य निरुद्धे इकारे यकार उत्पद्यते यकारे चोत्पद्य निरुद्धे इकार उत्पद्यते (१)इति कः कस्य विकारः? तदेतदवगृह्य सन्धाने सन्धाय चावग्रहे वेदितव्यमिति ॥ ५० ॥

नित्यपक्षे तु तावत् समाधिः—

**(सू०)—नित्यानामतीन्द्रियत्वात्तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः ॥ ५१ ॥**

नित्या वर्णा न विक्रियन्त इति विप्रतिषेधः। यथा नित्यत्वे सति किञ्चिदतीन्द्रियं (२) किञ्चिदिन्द्रियग्राह्यम्, इन्द्रियग्राह्याश्च वर्णाः, एवं नित्यत्वे सति किञ्चिन्न विक्रियते, वर्णास्तु विक्रियन्त इति।

## न्यायवार्त्तिकम्

इतश्च वर्णविकारानुपपत्तिः—

नित्यत्वेऽविकारादनित्यत्वे चानवस्थानात्। नित्या वर्णा इति न युक्तो विकारः व्याघातात्, अनित्या वर्णा इति न युक्तो विकारोऽनवस्थितानां विकारादर्शनात् ॥ ९० ॥

## न्यायवार्त्तिकतात्पर्यटीका

दधि अत्रेति प्रयोगे कदा यकारस्योत्पद्य निरोध इत्यत आह—तदेतदवगृह्य संधान इति। अवग्रहोऽसंहिता दधि अत्रेत्युच्चार्य दध्यत्रेत्युच्चार्यते दध्यत्रेति वा संधाय दधि अत्रेत्यवगृह्यत इत्यर्थः ॥ ९० ॥

जातिवादी प्रत्यवतिष्ठते—नित्यपक्षे तावदिति।

नित्या—धः (सू० ५१)॥ यथा हि सत्यपि नित्यत्वे केचिदतीन्द्रियाः, यथा परमाण्वाकाशादयः; केचिदैन्द्रियकाः यथा गोत्वादयः, एवं सत्यपि नित्यत्वे परमाण्वाकाशादयो न प्रकृतिविकारभूताः वर्णास्तु प्रकृतिविकारभावमापत्स्यन्ते नित्या अपीत्यर्थः।

## वृत्तिः

अत्र विकारवादी नित्यत्वमतमालम्ब्य परिहरति—( नित्यानामिति )

विकाराणां प्रतिषेधो न युक्तः नित्यानां 'धर्मविकल्पाद्' धर्मस्य नानाविधत्वात् अतीन्द्रियत्वात्, चकारेणैन्द्रियकत्वं समुच्चीयते। यथा हि नित्यानामाकाशादीनामतीन्द्रियत्वम्, ऐन्द्रियकत्वेऽपि गोत्वादीनां नित्यत्वमेवमन्येषां नित्यानामविकारित्वेऽपि वर्णानां विकारित्वं स्यादिति ॥ ५१ ॥

(१) 'इति' शब्दः फ-भा-ग-पुस्तकेषु न दृश्यते।
(२) 'किञ्चिदिन्द्रियग्राह्यमिति' ग-फ-पुस्तकयोर्नास्ति।

## न्यायभाष्यम्

विरोधाददहेतुस्तद्धर्मविकल्पः। नित्यं नोपजायते नापैति अनुपजनापायधर्मकं (१)नित्यम् अनित्यं पुनरुपजनापाययुक्तम्, न चान्तरेणोपजनापायौ विकारः सम्भवति। तद् यदि वर्णा विक्रियन्ते, नित्यत्वमेषां निवर्तते। अथ नित्याः, विकारधर्मत्वमेषां निवर्तते। सोऽयं विरुद्धो हेत्वाभासो धर्मविकल्प इति॥ ५१॥

अनित्यपक्षे समाधिः—

## (सू०)—अनवस्थायित्वे च वर्णोपलब्धिवत्तद्विकारोपपत्तिः॥५२॥

यथाऽनवस्थायिनां वर्णानां श्रवणं भवत्येवमेषां विकारो भवतीति।

असम्बन्धादसमर्था अर्थप्रतिपादिका वर्णोपलब्धिः न विकारेण (२)सम्बन्धादसमर्था या गृह्यमाणा (३)वर्णविकार(४)मनुमापयेदिति। तत्र यादृगिदं यथा गन्ध-

## न्यायवार्त्तिकम्

(क)नित्यानामप्यतीन्द्रियत्वात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेधः। नित्यानामप्यतीन्द्रियत्वदर्शनात् तद्धर्मविकल्पाच्च वर्णविकाराणामप्रतिषेध इति विकल्पसमा जातिः॥ ९१॥

अनवस्थायित्वे च वर्णोपलब्धिवत् तद्विकारोपपत्तिः। अनवस्थायित्वे च वर्णोपलब्धिवद्विकारोपपत्तिरिति साधर्म्यसमा जातिः॥ ९२॥

## न्यायवार्त्तिकतात्पर्यटीका

सेयं विकल्पसमा जातिरित्याह—विरोधादिति। न खल्वैन्द्रियकत्वानैन्द्रियकत्वाभ्यामस्ति कश्चिन्नित्यत्वस्य विरोधः प्रकृतिविकारभावेन त्वस्ति। न हि संभवति कार्यं च नित्यं चेत्यर्थः॥ ९१॥

अनित्यपक्षे जातिवाद्याह—अनवस्थायित्वे चेति।

अन—त्तिः ( सू० ५२ )॥ यथा सत्यप्यनवस्थायित्वे वर्णा इन्द्रियेण संबध्य स्वविषयं ज्ञानं जनयन्ति एवं विकारमपि करिष्यन्तीत्यर्थः।

सेयं साधर्म्यसमा जातिरित्याह—असंबन्धादिति। कतिपयक्षणावस्थानेन वर्णानां क्षणिकानामपि स्वविषयज्ञानहेतुभावो युज्यते। अवगृह्य चिरं स्थित्वा यदा संधीयते संधाय वा चिरं

## वृत्तिः

अनित्यत्वमालम्ब्य स आह—(अनवेति)

अनवस्थायित्वेऽपि वर्णानां यथा प्रत्यक्षं भवत्येवं विकारोऽपि स्यादिति भावः॥५२॥

---

(१) 'नित्य'मिति ज-पु० नास्ति। (२) 'सम्बद्धा अस-' इति वि०। (३) 'वर्णविकारमर्थम्' फ० भा०। (४) 'अनुत्पादयेदिति' इति ग०, 'अनुपपादयेद्' इति ज०।

(क) वार्त्तिकधृतसूत्रे अधिकः 'अपि' शब्दो दृश्यते।

न्यायभाष्यम्

गुणा पृथिव्येवं शब्दसुखादिगुणाऽपीति, ताद्वगेतद्भवतीति। न च वर्णोपलब्धिर्वर्णनिवृत्तौ (१)वर्णान्तरप्रयोगस्य निवर्तिका। योऽयमिवर्णनिवृत्तौ यकारस्य प्रयोगो यद्ययं वर्णोपलब्ध्या निवर्तते तदा तत्रोपलभ्यमान इवर्णो यत्वमापद्यते इति(२) गृह्येत। तस्माद्वर्णोपलब्धिरहेतुर्वर्णविकारस्येति ॥ ५२ ॥

## (सू०)—विकारधर्मित्वे नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः ॥५३॥

तद्धर्मविकल्पादिति न युक्तः प्रतिषेधः। न खलु विकारधर्मकं किञ्चिन्नित्यमुपलभ्यत इति वर्णोपलब्धिवदिति न युक्तः प्रतिषेधः। अवग्रहे हि दधि अत्रेति

न्यायवार्त्तिकम्

उभयोरप्युत्तरम्—

विकारधर्मित्वेन (क)नित्यत्वाभावात् कालान्तरे विकारोपपत्तेश्चाप्रतिषेधः। नित्या

न्यायवार्त्तिकतात्पर्यटीका

स्थित्वा यदा विगृह्यते तदा वर्णानामनित्यानां न तावन्तं कालमवस्थानमस्तीति नोपलब्धिहेतुत्वेन विकारकर्तृत्वं वर्णानां तुल्यम्। तस्मादसंबन्धादसमर्था वर्णोपलब्धिर्वर्णविकारप्रतिपादन इत्यर्थः। मा भूद्वर्णोपलब्धिर्वर्णविकारेण साक्षात्संबद्धा आदेशविरोधितया तु तन्निवृत्त्या पारिशेष्याद्विकारं साधयिष्यतीत्यत आह—न च वर्णोपलब्धिरिति ॥ ५२ ॥

तदेवं जात्युत्तरमुत्थितमेव मारितं कृत्वा भाष्यकारः अत्रैवार्थे सूत्रं पठति—विकारधर्मित्व इति।

विका—धः ( सू० ५३ ) ॥

वृत्तिः

उभयत्रोत्तरयति—(विकारेति)

उक्तः प्रतिषेधो न युक्तः विकारधर्मित्वे नित्यत्वासम्भवात्, विकारो ह्यत्र स्वरूपपरित्यागेन रूपान्तरापत्तिः, तथात्वे च नित्यत्वविरोधात्। न हि घटादेः कपालाद्युपादेयत्ववत् प्रकृते सम्भवति, यकारकाले इकारानुपलब्धेः। अनित्यत्वपक्षेऽपि प्रतिषेधो न युक्तः प्रत्यक्षं हि वर्णस्य द्वितीयक्षणे युज्यते, विकारस्तु कालान्तरीयो न युज्यते दधीति शब्दानन्तरमत्येत्यादिशब्देन तस्य नाशादिति भावः ॥ ५३ ॥

(१) 'वर्णान्तरं प्रयोगस्य निवर्त्तिका' इति ग-पु०। निवर्त्तिका इत्यत्र 'निर्वर्त्तिका' इति शोधितं ख-पुस्तके। (२) 'गृह्यते' इति ख-ग-ज०।

(क) क-ख-वार्त्तिकपुस्तकयोः सूत्रस्य स्थूलाक्षरैः मुद्रणं तु 'विकारधर्मित्वे' इत्याकारेणैव।

## न्यायभाष्यम्

(१)प्रयुज्य चिरं स्थित्वा ततः संहितायां प्रयुङ्क्ते दध्यत्रेति। चिरनिवृत्ते चायमिवर्णे यकारः प्रयुज्यमानः कस्य विकार इति प्रतीयते, कारणाभावात् कार्याभाव इति अनुयोगः प्रसज्यत इति ॥ ५३ ॥

इतश्च वर्णविकारानुपपत्तिः—

### (सू०)—प्रकृत्यनियमात्(क) ॥५४॥

इकारस्थाने यकारः श्रूयते यकारस्थाने खल्विकारो विधीयते विध्यति (२)इति। तद्र यदि स्यात् प्रकृतिविकारभावो वर्णानाम्, तस्य प्रकृतिनियमः स्यात्। दृष्टो विकार-धर्मित्वे प्रकृतिनियम इति ॥ ५४ ॥

## न्यायवार्त्तिकम्

विक्रियन्त इति व्याघातो दोषः। उपलभ्यमानस्य चेकारस्य यत्वानुपपत्तेः वर्णोपलब्धिवदित्य-सम्बद्धम् ॥ ९३ ॥

इतश्च वर्णविकारानुपपत्तिः—

प्रकृत्यनियमात् इति (ख)। विकारे प्रकृतीनां नियमो दृष्टः। इकारयकारयोस्त्वनियमः; तस्मादनियमान्न विक्रियन्त इति ॥ ९४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

वार्तिकम्—उपलभ्यमानस्य चेकारस्य यत्वानुपपत्तेरिति। अवगृह्य चिरं स्थित्वा संधाय यदा यत्वं तदोपलभ्यमानतेकारस्य नास्तीत्यर्थः ॥ ९३ ॥

इतश्च वर्णविकारानुपपत्तिः—प्रकृत्यनियमादिति—

प्रकृ—मात् ( सू० ५४ ) ॥ क्षीरजातीयस्य दधिजातीयो विकारो न पुनः कदाचिदपि दधिजातीयस्य क्षीरजातीया विकारा उपलभ्यन्ते। इह तु यथेकारजातीयस्य यकारजातीयो विकारो दध्यत्रेति दृश्यते एवं यकारजातीयस्यापि विकार इकारजातीयो दृश्यते यथा व्यधेः सति प्रसारणे यकारस्येकार इति। तस्मादनियमान्न प्रकृतिविकारभाव इत्यर्थः ॥ ९४ ॥

## वृत्तिः

इतश्च विकारानुपपत्तिरित्याह—( प्रकृत्यनियमात् )

विकाराणां हि प्रकृतिनियमः, यथा क्षीरदध्नोः प्रकृतिविकारभावः, न तु वैपरीत्यम्, प्रकृते तु दध्यत्रेत्यादौ इकारो यकारप्रकृतिः, विध्यतीत्यादौ तु यकार इकारप्रकृतिरिति भावः ॥ ५४ ॥

---

(१) 'वियुज्य'—इति वि०। (२) 'इति' शब्दः ग-फ-ज-पुस्तकेषु नास्ति।

(क) अत्र फ-पुस्तकानुसारेण सूत्राकारो गृहीतः; पुस्तकान्तरेषु 'प्रकृत्यनियमाद् वर्णविकाराणाम्' इति सूत्राकारः, तत्परित्यागे बीजं न्यायसूचीनिबन्धविरोधः।

(ख) क-ख-वार्त्तिकपुस्तकयोः सूत्रं स्थूलाक्षरैः 'प्रकृत्यनियमाद्वर्णविकाराणाम्' इत्याकारेण मुद्रितम्। 'इति' पदं च 'दृष्टः' इत्यतः परं मुद्रितम्।

## (सू०)—अनियमे नियमान्नानियमः ॥५५॥

### न्यायभाष्यम्

योऽयं प्रकृतेरनियम उक्तः स नियतो यथाविषयं व्यवस्थितो नियतत्वान्नियम इति भवति, एवं सत्यनियमो नास्ति, तत्र यदुक्तं प्रकृत्यनियमादिति, एतदयुक्तमिति ॥५५॥

## (सू०)—नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः ॥५६॥

नियम इत्यत्रार्थाभ्यनुज्ञा, अनियम इति तस्य प्रतिषेधः। अनुज्ञातनिषिद्धयोश्च व्याघातादनर्थान्तरत्वं न भवति। अनियमश्च नियतत्वात्(१)नियमो न भवतीति नात्रार्थस्य तथाभावः प्रतिषिध्यते। किं तर्हि? तथाभूतस्यार्थस्य नियमशब्देनाभिधीयमानस्य नियतत्वान्नियमशब्द एवोपपद्यते। सोऽयं नियमादनियमे प्रतिषेधो न भवतीति ॥५६॥

### न्यायवार्त्तिकम्

अनियमे नियमान्नानियमः। सूत्रार्थोऽनियमो नास्तीति ॥ ५५ ॥

नियमानियमविरोधादनियमे नियमाच्चाप्रतिषेधः। अनुज्ञातप्रतिषिद्धयो(क)रेकत्वानुपपत्तेरिति विरोधः सूत्रार्थः। तस्मादनुपलभ्यमानपृथग्धर्मिविशेषाणामादेश इति। यद्येते वर्णा विक्रियेरन् ततः पृथग्विकारलक्षणेभ्यो धर्म्युपलभ्येत, न तूपलभ्यते तस्मान्न विक्रियन्त इति ॥५६॥

### न्यायवार्त्तिकतात्पर्यटीका

अत्र च्छलवादी प्रत्यवतिष्ठते—अनियमे नियमादिति।

अनि—मः ( सू० ५५ ) ॥

तदेतस्य वाक्छलत्वमापादयति—नियमानियमविरोधादिति—

निय—धः ( सू० ५६ )॥ नियमानियमसामानाधिकरण्यं विरुध्यते न त्वाधाराधेयभाव इत्यर्थः ॥ ५६ ॥

### वृत्तिः

अत्र च्छलवादी शङ्कते—( अनियम इति )

अनियमो य उक्तः स न युक्तः। कुतः? अनियतत्वस्य नियमादित्यर्थः ॥ ५५ ॥

समाधत्ते—( नियमेति )

अनियमे नियमाद् यस्त्वयाऽनियमप्रतिषेधः कृतः स न युक्तः। कुतः? (२)नियमानियमयोर्विरोधात्। अनियमो हि नियमाभावः तस्मिन् सति नियमासम्भवादिति भावः ॥ ५६ ॥

(१) 'नियमे' इति ख।

(२) 'नियमानियमविरोधात्' इति ख०।

(क) अत्र 'एकत्वानुपपत्ते' रि'ति पञ्चम्यर्थः कुत्रान्वेतीति चिन्त्यम्।

## न्यायभाष्यम्

न चेयं वर्णविकारोपपत्तिः परिणामात् कार्यकारणभावाद्वा। किं तर्हि ?

## (सू०)—गुणान्तरापत्त्युपमर्द-ह्रास-वृद्धि-लेश-श्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकाराः(१) ॥५७॥

स्थान्यादेशभावादप्रयोगे प्रयोगो विकारशब्दार्थः, स भिद्यते। गुणान्तरापत्तिः उदात्तस्यानुदात्त इत्येवमादिः। उपमर्दो नाम एकरूपनिवृत्तौ रूपान्तरोपजनः। ह्रासो दीर्घस्य ह्रस्वः। वृद्धिर्ह्रस्वस्य दीर्घः, तयोर्वा प्लुतः। लेशो लाघवम्, स्त इत्यस्तेर्विकारः। श्लेष आगमः, प्रकृतेः प्रत्ययस्य वा। एत एव विशेषा विकारा इति। एत एवाऽऽदेशाः, एते चेद्विकारा उपपद्यन्ते तर्हि वर्णविकारा इति ॥ ५७ ॥

## न्यायवार्त्तिकम्

अथ विक्रियन्ते, एवं विकारो भवति—

गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः(क)। गुणान्तरापत्त्युपमर्दह्रासवृद्धिलेशश्लेषेभ्यस्तु विकारोपपत्तेः सन्ति वर्णविकाराः। सूत्रार्थो गुणान्तरापत्त्यादेरादेश इति। अयं च विकारादेशोपदेशविचारो भाष्यकारेणैव सम्यग् निरूपित इति सूत्रार्थमात्रं निरूपितमिति ॥ ५७ ॥

इति वर्णानित्यत्ववादः।

## न्यायवार्त्तिकतात्पर्यटीका

तदेवं प्रकृतिविकारभावं निराकृत्य विकारवचनव्यक्तिं शब्दानामादेशपक्षे समर्थयति—न चेयं वर्णविकारोपपत्तिरिति।

गुणा—राः ( सू० ५७ )॥ एकस्याप्रयोगे अन्यस्य प्रयोगो विकार इति सामान्यलक्षणम्। तस्य विशेषानाह—स भिद्यत इति। उपमर्दो नामेति, यथाऽस्तेर्भूरिति। लेशः—स्त इत्यत्रास्तेरकारलोपे सकारमात्रस्य लेशस्यैकदेशस्य व्यवस्थापनम्। श्लेष आगमः प्रकृतेः प्रत्ययस्य वा, अत्रापि केवलस्याप्रयोगे विशिष्टस्य प्रयोग इत्येतावता विकारसामान्यलक्षणं लक्षणीयम्। एतेन वार्तिकमपि व्याख्यातमेवेति ॥ ५७ ॥

## वृत्तिः

तदेवं वर्णानां प्रकृतिविकारभावं निरस्य स्वपक्षे विकारव्यवहारमुपपादयति—

( गुणान्तरापत्त्युपमर्द-ह्रास-वृद्धि-लेश-श्लेषेभ्यस्तु विकारोपपत्तेर्वर्णविकारः )

तुशब्दः पुनरर्थे। एतेभ्यः पुनर्वर्णविकारोपपत्तेः वर्णविकारस्य एकवर्ण(२)प्रयोगे

---

(१) 'वर्णविकारोपपत्तेर्वर्णाविकारः' इति ज० भ०। (२) '-प्रयोगेष'।

(क) वृत्तौ वार्त्तिके च 'वर्णविकार' इत्येकवचनान्तः पाठः।

## (सू०)—ते विभक्त्यन्ताः पदम् ॥ ५८ ॥

### न्यायवार्त्तिकतात्पर्यटीका

तदेवमुक्तेन क्रमेण वर्णानामनित्यतां प्रतिपाद्य शब्दप्रामाण्योपयोगि पदं निरूपयति—

ते वि—दम् ( सू० ५८ ) ॥ एवं किल केचित् पश्यन्ति—न वर्णाः प्रतिपादयन्त्यर्थान् । ते हि प्रत्येकं वा अन्वयधियमादधीरन् नागदन्ता इव शिक्यालम्बनम्, मिलिता वा ग्रावाण इव पिठरधारणम् ? तत्र न तावत् पूर्वः कल्पः प्रत्येकमर्थप्रत्ययानुत्पादात् वर्णान्तरोच्चारणानर्थक्याच्च । नापि संहताः, एकवक्तृप्रयोगे क्रमनियमेन संघातानुपपत्तेः ; अनेककर्तृकप्रयोगेऽपि सत्यपि यौगपद्ये अर्थप्रत्ययानुत्पादनात् । नापि क्रमवत्पूर्ववर्णानुभवभावितसंस्कारसहितोऽन्त्यवर्णप्रत्ययोऽर्थप्रत्ययहेतुरिति सांप्रतम्, भावनापरनाम्नः संस्कारस्य स्वोत्पादकानुभवविषयस्मृतिजननादन्यत्र सामर्थ्यादर्शनात् । न हि गवानुभवजनितः संस्कारः करोति स्मृतिं तुरङ्गमे । अपि चेयमन्त्यवर्णश्रुतिः स्वार्थसंकेतस्मृत्यपेक्षा वाऽर्थप्रत्ययमादधीत अनपेक्षा वा ? तदपेक्षत्वे तत्काले अन्त्यवर्णश्रुतिरुपरता क्षणिकत्वेनेति कया संकेतस्मृतिरपेक्ष्यते अन्त्यवर्णश्रुतिसमये च संकेतस्मृतिरनागतेति किमन्त्यवर्णप्रत्ययोऽपेक्षेत । संकेतस्मृत्यनपेक्षत्वे अगृहीतसंकेतस्यापि प्रथमश्राविणोऽर्थप्रत्ययप्रसङ्गः । न हि चिरध्वस्तस्यानपेक्षितस्मृतेः संकेतग्रहस्यास्ति कश्चिदुपयोग इति । न च भावनाख्यसंस्कारसहितोऽन्त्यवर्णः प्रत्यायकोऽर्थस्य नाप्यन्य एव कश्चित् पूर्ववर्णानुभवजनितः संस्कारः प्रोक्षणादिभिरिव व्रीह्यादेरन्त्यवर्णप्रत्ययसहकारीति युक्तम्, अनेकादृष्टकल्पनाप्रसङ्गात् ; स एव तावददृष्टचरः कल्पनीयस्तस्य चानेकत्वमिति । सोऽयं वर्णेभ्योऽर्थप्रत्ययो भवन्ननुपपद्यमानः (क)तदतिरिक्तस्फोटानुभवमायतते । अस्ति हि भिन्नेष्वपि वर्णेषु वाक्यमिदमेकं पदमिति वा सर्वजनीनोऽनुभवः । न चासौ भिन्नवर्णालम्बनो भवितुमर्हति एकस्य नानात्वविरोधात् । तस्माद्वर्णातिरिक्तं पदं वाक्यं वा आलम्बते, तच्च प्रत्येकमेव ध्वनयोऽभिव्यञ्जयन्ति । केवलं पूर्वे ध्वनयः स्वरूपमाभासयन्ते चरमस्तु व्यक्तम् । न चेयमर्थे विधा संभविनी प्रत्यक्षज्ञाननियतत्वात् । व्यक्ताव्यक्तावभासितायाः पदे प्रत्यक्षे

### वृत्तिः

वर्णान्तरप्रयोगस्य उपपत्तेः वर्णविकार इति व्यवह्रियते । तानेवाऽऽह—गुणान्तरेति । गुणान्तरापत्तिर्धर्मिणि सत्येव धर्मान्तरापत्तिः, यथोदात्तेऽनुदात्तत्वम् । उपमर्दो धर्मिनिवृत्तौ धर्म्यन्तरप्रयोगः यथाऽस्तेर्भूः । ह्रासो दीर्घस्य ह्रस्वत्वम्, वृद्धिः ह्रस्वस्य दीर्घत्वम्, लेशः अल्पत्वम्, यथाऽस्तेरकारलोपः ; श्लेष आगमः, एतैः कारणैर्विकारव्यवहार इति ॥५७॥

समाप्तं शब्दपरिणामप्रकरणम् ॥ ३ ॥

---

(क) 'तदतिरिक्तं स्फोटादनुभवम्' इति क-पुस्तके 'तदतिरिक्तं स्फोटानुभवम्' इति च ख-पुस्तके पाठः । मुद्रिताकारस्तु समीचीनत्वानुरोधेन कल्पितः ।

## न्यायवार्त्तिकतात्पर्यटीका

उपपत्तिः, अर्थस्य तु पदगम्यस्याप्रत्यक्षस्य मानान्तरेण ग्रहणमस्तीति ; अग्रहणं वा न तु स्फुटास्फुटत्वाभ्यां योगः। अपि च यस्मिन्ननुवर्तमाने यद्व्यावर्तते तत् तस्माद्भिद्यते, यथा सुवर्णावयवेष्वनुवर्तमानेषु कटकमुकुटादयः। अनुवर्तमानेषु तु वर्णेषु व्यावर्तन्ते पदभेदाः तस्मात् तेऽपि वर्णेभ्यो भिन्ना इति तान् प्रत्याह—ते विभक्त्यन्ताः पदम् त एव वर्णा एव पदम्, न तु तदतिरिक्तं स्फोटाख्यमित्यर्थः।

इदमत्राऽऽकूतम्—न तावद्वर्णातिरिक्तः पदात्मा कश्चिदुपलभ्यते प्रत्यक्षेण, पदमिति तु व्यपदेशस्तानेव वर्णान् बहूनप्येकस्मृतिसमारोहितया वा एकार्थधीहेतुतया वा अभिन्नकारकावस्थावत्तया वालम्बते भाक्तः। न चैवमन्योन्यसंश्रयः, नत्वं पदावधारणादर्थाधिगमो न चार्थाधिगममन्तरेण पदावधारणमिति ; एकस्मृतिबुद्धिसमारोहिणां वर्णानामसत्यर्थवत्तयाऽवबोधे सुज्ञानत्वात्, तन्मात्रस्य च स्वार्थेन संकेतग्रहस्यापि सुकरत्वात्, तदुत्तरकालत्वाच्च पदमिति कारकशब्दप्रवृत्तेः। इतरथा सर्वेषु कारकशब्देषु दुर्वारमितरेतराश्रयत्वं कार्योपहितमर्यादत्वात् कारकाणाम्, तदनुपातित्वाच्च तच्छब्दानाम्। तस्माद् व्यपदेशमात्रानुरोधेन (क)नैकैकवर्णमात्रावभासिनीषु श्रोत्रजासु बुद्धिषु तदाहितवासनालब्धजन्मायां चानुभूतवर्णसंकलनात्मिकायां स्मृतिबुद्धावप्रथमानो वर्णविभागोपमर्देन न शक्यः पदात्मा प्रत्यक्ष इति वक्तुम्, नापि निर्भागस्य स्फुटास्फुटत्वे वा भागविपर्यासो वा युज्यते। नो खलु सर्वथाऽदृश्यमानो नाम स्फुटः नापि समारोपविषयः। न हि सामान्यात्मनाऽप्यगृहीता शुक्ती रजतत्वसमारोपविषयः। न च निर्भागे पदात्मनि गृहीते किंचिदस्यागृहीतमवशिष्यते यद्ग्रहणादव्यक्तत्वं वा समारोपो वा भवेत्। न च तदेव तदैव तेन गृहीतमगृहीतं च संभवति। तस्मान्न प्रत्यक्षस्य तदाभासस्य वा गोचरः पदात्मा, नाप्यनुमानस्यार्थप्रत्ययलिङ्गजन्मनः, परस्पराश्रयप्रसङ्गात्। न तावत् सत्तामात्रेण पदात्माऽर्थप्रत्ययमाधत्ते मा धान्नित्यत्वेन नित्यमेनम्। तस्मात् स्वज्ञानेन (ख) तच्च स्वज्ञानमर्थप्रत्ययात्। तथा च सत्यर्थप्रत्यये पदप्रत्ययः पदप्रत्यये च सत्यर्थप्रत्यय इति व्यक्तमन्योन्याश्रयत्वम्। न चेयमर्थधीर्वर्णेभ्यो नोदेतुमर्हति। ते हि पूर्वमनुभूताः प्रत्येकमनुभूतताक्रमोपस्थापा एकबुद्धिसमारोहिणः शक्नुवन्त्यर्थधियमाधातुम्। न चाक्रमानुक्रमविपरीतक्रमाणामविशेषो वर्णानां पूर्वानुभवसन्निवेशानुसारित्वात् स्मृतेः, तत्सन्निवेशस्य च विशेषाद्विशेषोपपत्तिः। अभेदेऽपि च वर्णानां 'न हि' 'हि ने'त्यादौ पदभेद उपपत्स्यते विनाऽपि स्फोटकल्पनां क्रमभेदानुविधायित्वात् पदभेदस्य। अर्थप्रत्ययकारकत्वं च न वर्णमात्राणामपि तु क्रमन्यूनातिरिक्तत्वाद्युपहितानाम्। तत्तदुपधानं च तुल्यत्वेऽपि वर्णानामन्यदन्यदिति पदभेदसिद्धिः। तस्माद् दृष्टेभ्य एव वर्णेभ्यो दृष्टप्रकारानुपातिभ्योऽर्थप्रत्ययोत्पत्ति-

(क) अत्र 'एकैकवर्णमात्रावभासिनीषु' इति सम्यक् पाठः।

(ख) 'अर्थप्रत्ययमाधत्ते' इति सम्बध्यते।

## न्यायभाष्यम्

यथादर्शनं विकृता वर्णा विभक्त्यन्ताः पदसंज्ञा भवन्ति। विभक्तिर्द्वयी— नामिक्याख्यातिकी च, ब्राह्मणः पचतीत्युदाहरणम्।

## न्यायवार्त्तिकम्

ते विभक्त्यन्ताः पदम्। ते वर्णा यथादर्शनं विकृता विभक्त्यन्ताः पदसंज्ञका भवन्ति। अर्थप्रत्ययस्तर्हि न प्राप्नोति ? न न प्राप्नोति, अन्त्यवर्णप्रत्ययात् पूर्ववर्णप्रतिसन्धानप्रत्यया-पेक्षादर्थप्रत्यय इति। विभक्तिर्द्वयी नामिकी चाऽऽख्यातिकी च। नामिकी स्वादयः, आख्यातिकी तिबादयः। तया विशिष्यमाणं पदं द्वेधा भवति नाम च आख्यातं च। अभिधेयस्य क्रियान्तर-योगाद् विशिष्यमाणरूपः शब्दो नाम, यथा ब्राह्मण इति क्रियाकारकसमुदायः कारकसंख्या-

## न्यायवार्त्तिकतात्पर्यटीका

रुपपद्यमाना नादृष्टं स्फोटात्मानं दृश्यमानवर्णभेदापह्नवेन कल्पयितुमर्हतीति सिद्धं 'ते विभक्त्यन्ताः पद'मिति।

यथादर्शनं विकृता इति भाष्यम्। गुणान्तरापत्त्यादिभिरादेशरूपेण विकृताः 'यथादर्शनं' यथाप्रमाणम्, न तु प्रकृतिविकारभावेन ; तस्य प्रमाणबाधितत्वादित्यर्थः।

वार्त्तिकम्—अर्थप्रत्ययस्तर्हि न प्राप्नोतीति, स्फोटवादिन उक्तोऽभिप्रायः। उत्तरम्— अन्त्यवर्णप्रत्ययादिति। वर्णेषु प्रत्ययो वर्णप्रत्ययः। अन्त्यश्चासौ वर्णप्रत्ययश्चेति अन्त्यवर्ण-प्रत्ययः सकलवर्णावगाहिनी स्मृतिः। सा च प्राचः प्रत्येकवर्णानुभवानपेक्ष्यान्त्या भवति। यद्येवमगृहीतसंकेतानामप्यसावस्तीति तेषामर्थप्रत्ययप्रसङ्गः स्यादित्यत आह—पूर्ववर्ण-प्रतिसन्धानप्रत्ययापेक्षादिति। संकेतग्रहणसमयः पूर्वः, तद्भाविनो वर्णाः पूर्वे, तेषां प्रति-सन्धानं यावतां यादृशानां यज्जातीयानां गृहीतः संकेतस्तादृशास्तावन्तस्तज्जातीया एवैत इत्येव-माकारम्, तदेव प्रत्ययस्तदपेक्षात्। न चासावगृहीतसंकेतानामस्तीति सन्नप्यन्त्यवर्णप्रत्ययो नार्थस्य प्रत्यायक इत्यर्थः। अभिधेयस्य क्रियान्तरयोगाद्विशिष्यमाणरूपः शब्दो नाम। अन्तरशब्दो विशेषवचनः क्रियाविशेषयोगाद्धेतोरित्यर्थः। एतदुक्तं भवति—यस्याभिधेयं क्रिया-विशेषसम्बन्धेन विना न पर्यवस्यति तन्नाम। आख्यातार्थस्तु यद्यपि क्वचित् क्रिययाऽपि सम्बध्यते

## वृत्तिः

शाब्दबोधे पदजन्यपदार्थोपस्थितेर्हेतुत्वात् तदुपपादनाय पदार्थे निरूपणीये पदमादौ निरूपयति—( ते विभक्त्येति )

ते वर्णा विभक्त्यन्ताः पदम्। बहुत्वमविवक्षितम्। विभक्तेश्च सत्त्वमनपेक्षितम्। विभक्तिश्च सुप्तिङ्रूपा। वस्तुतस्तु नेदं पदं शाब्दबोधोपयोगि, किन्तु इदमाकाङ्क्षा-स्वरूपम्।

## न्यायभाष्यम्

**उपसर्गनिपातास्तर्हि न पदसंज्ञाः लक्षणान्तरं वाच्यमिति ; (क)शिष्यते च खलु नामिक्या विभक्तेरव्ययाल्लोपः तयोः पदसंज्ञार्थमिति ॥ ५८ ॥**

## न्यायवार्त्तिकम्

**विशिष्टः । क्रियाकालयोगाभिधायि क्रियाप्रधानमाख्यातम्—पचतीति यथा । यदि द्वयी विभक्ति-रुपसर्गनिपातास्तर्हि न पदसंज्ञकाः ? (ख)न नाम्न्यन्तर्भावात्—उपसर्गनिपाता नाम्ना संगृहीताः, यस्मादाह अव्ययाल्लोप इति ; ते सुबन्तत्वात्तेनैव संगृहीता इति ।**

## न्यायवार्त्तिकतात्पर्यटीका

यथा 'अग्निकामं जुहोति भुक्त्वा व्रजती'त्यादिषु, तथाऽपि जुहोति व्रजतीत्यादयो न क्रियासम्बन्ध-मन्तरेण न पर्यवस्यन्ति अपि तु तत्समभिव्याहृता अपि सम्बध्यन्ते । नामार्थस्तु न पूर्वापरी-भूतप्रधानक्रियापदार्थमन्तरेण पर्यवस्यति । अत एवाऽऽहुः 'यत्रान्यत् क्रियापदं न श्रूयते तत्रास्तिर्भवन्तीपरः प्रयोक्तव्यः । तथा च ब्राह्मणेऽग्निकामं भोक्तुं भुक्त्वेत्यादयश्च समुच्चयाद्यपेक्षाः क्रियाविशेषमन्तरेणापर्यवस्यन्तो नामत्वेन संगृहीता भवन्ति' । अस्योदाहरणमाह—यथा ब्राह्मण इति । अस्यार्थमाह—क्रियाकारकसमुदायः कारकसंख्याविशिष्टः । अत्र हि क्रियाशब्देन ब्राह्मणस्य भावो ब्राह्मणत्वमभिधीयते भावशब्दस्य क्रियार्थत्वात् । भविता च ब्राह्मणः कारकम् । तयोर्ब्राह्मणत्वब्राह्मणयोः समुदायः, स च कारकस्य भवितुर्ब्राह्मणस्यैकत्व-संख्यया विशिष्टो ब्राह्मण इत्येतस्मान्नामपदाद् गम्यत इत्यर्थः । आख्यातलक्षणमाह—क्रियाकाल-योगाभिधायि क्रियाप्रधानमाख्यातं क्रियायाः कालयोगः पूर्वापरीभावः । कालयोगाद्धि सम्भवति तदभिधायि । तदनेन पाक इत्यादेर्नामपदाद् व्यवच्छिनत्ति । एवमपि भुक्त्वा भोक्तु-मित्यादावपि नाम्नि प्रसङ्गः, अस्ति हि तत्रापि कालावधिपूर्वापरीभूतकर्मक्षणप्रचयप्रत्ययः ; अन्यथा ओदनमिति कर्मसंबन्धो न स्यादत उक्तं क्रियाप्रधानमिति । स्वनिष्ठा ह्याख्यातात् क्रिया प्रतीयते नान्यतन्त्रा, भोक्तुमित्यादौ तु क्रियान्तरमन्तरेण न (ग)पर्यवस्यन्तीति क्रिया गम्यते, व्रजतीत्यादौ तु न तथा ; तदिदं क्रियाप्राधान्यम् । तदनेन पचति पचेत पच्यते

---

(क) 'वाच्यमिति' इत्यन्तः पूर्वपक्षग्रन्थः, तत्प्रतिषेधकस्तु 'न'कारोऽत्र ग्रन्थकारशैलीसिद्धः, ततश्च 'न, शिष्यते च खलु' इति यथार्थः पाठः, आदर्शपुस्तकेषु तदनुपलम्भे च मुद्राप्रमाद एव हेतुरिति सम्भाव्यते ।

एतेन विभक्तिमन्तो विभक्तिलोपवन्तश्च वर्णाः पदमिति एतेषां सिद्धान्तः स्फुटमवभासते । नव्य-नैयायिकास्तु शक्तिलक्षणान्यतरसम्बन्धेनार्थप्रत्यायकानामेव वर्णानां पदत्वमिति वदन्ति । तन्मते 'रामः' 'गाम्' 'पश्यति' इत्यादेः प्रत्येकं न पदत्वं किन्तु वाक्यत्वमिति वाक्यत्रयरूपस्यैतद्वर्णसमुदायस्य महावाक्यत्वमिति । जगदीशतर्कालङ्कारपादास्तु निपातशब्दाद् विभक्तिं नाङ्गीकुर्वन्ति ( शब्दशक्तिप्रकाशिका-प्रकृतिलक्षणव्याख्या ), ततश्च निपातानां पदसंज्ञायां ते भाष्यकारमतमेवानुसरन्तीति बोध्यम् ।

(ख) क-ख-वार्त्तिकपुस्तकयोः 'न नाम्न्यन्तर्भावात्' इति पाठः । समीचीनत्वानुरोधेन कल्पिताकारस्तु मुद्रितः । (ग) अत्र 'अर्थप्रत्ययः' इति कर्तृपदमध्याहार्यम्, तथाच पर्यवस्यतीति युक्तं सम्भाव्यते ।

## न्यायभाष्यम्

पदेनार्थसम्प्रत्यय इति प्रयोजनम्, नामपदं चाधिकृत्य परीक्षा, गौरिति पदं खल्विदमुदाहरणं तदर्थं (क)—

## न्यायवार्त्तिकम्

पदेन व्यवहार इति पदार्थश्चिन्त्यते। नामपदं चाधिकृत्य व्यवहार इति नामपदं चिन्त्यते। नाम्नश्चाधिकारो व्यापकत्वात्—यस्मान्नाम्ना (१)सर्वं पदं व्याप्यते(१*) तस्माद् गौरित्यस्य पदस्यार्थश्चिन्त्यते। न पदादर्थाधिगतिर्विशेषेऽनवस्थानात्—न हि पदे उच्चरिते कश्चिद्विशेषो गम्यते तस्मात् पदमवाचकम्। न पदस्य विशेषाविषयत्वात्—क एवमाह पदेन विशेषो गम्यते, अपि तु सामान्यवर्त्ति पदं विशेषवर्त्ति वाक्यम्। न च सामान्याभिधानादनर्थकं भवितुमर्हतीति। न, सामान्यस्य व्यवहारविशेषाविषयत्वात्—सर्वं उपदेष्टा विशेषप्रतिपत्त्यर्थं पदमुच्चारयति। न च सामान्ये प्रैषो न सम्प्रतिपत्तिः। तस्मात् पदमवाचकमेवेति ? न सामान्यविषयत्वे सति विशेषश्रुतेर्नियामकत्वात्—यदि पदमवाचकं स्यात् न च पदश्रवणात् सामान्यं गम्येत। यदवाचकं न ततः सामान्यं विशेषो वा गम्यते यथा अर्थात्, गम्यते च पदात् तत्सामान्यम्। सामान्यश्रुतेर्विशेषश्रुतिर्नियामिका भवति—यथा गौरिति सामान्याधिगतौ तिष्ठति गच्छतीति

## न्यायवार्त्तिकतात्पर्यटीका

स्थीयत इत्यादि सर्वमाख्यातं संगृहीतं भवति। न क्वचिदपि नाम्नि प्रसङ्गः। यदप्यस्त्यादि नामाऽऽख्यातप्रतिरूपकं तत्रापि सन्नित्यस्यार्थे सिद्धरूपे तद्वर्तते न पुनः पूर्वापरीभूतक्रियार्थत्वमिति द्रष्टव्यम्।

यस्मान्नाम्ना सर्वं पदं व्याप्यत इति। बाहुल्यं व्याप्त्यर्थः। प्रायेण हि वाक्ये बहूनि नामपदानि आख्यातं पुनरेकमेवैकस्मिन् वाक्ये आख्यातभेदे वाक्यभेदादिति। अधिकरणमाक्षिपति—न पदादर्थाधिगतिरिति। पदेन हि विशेषो वाऽभिधीयते सामान्यं वा ? तत्र विशेषाभिधानं तावद् दूषयति—विशेष इति। 'अनवस्थानम्' अनवधारणमिति। सामान्याभिधानमास्थायाऽऽह—न पदस्येति। दूषयति—न सामान्यस्येति। व्यवहाराय हि वाक्यमुच्चारयन्ति वृद्धाः न तु व्यसनितया। न चास्ति सामान्यसाध्यः कश्चिद् व्यवहारः किं तु सर्वो व्यवहारो विशेषसाध्यः। न चास्य पदं वाचकम्, तद्वाक्यमेव वाक्यार्थस्य वाचकमिति न पदार्थचिन्तावसर इत्याक्षेपार्थः। समाधत्ते—न सामान्यविषयत्वे सतीति। न तावत्पदातिरिक्तमस्ति वाक्यं नामेत्युक्तमधस्तात्। न च वर्णमालैव पदार्थप्रतिपादनावान्तरव्यापारानपेक्षा वाक्यार्थबोधिनीति युक्तम्, अनपेक्षितसंकेतग्रहायास्तदवबोधने प्रथमश्राविणोऽविदितसंकेतस्य वाक्यार्थबोधप्रसङ्गः। (ख)यतः संकेतग्रहापेक्षत्वे वाक्यार्थेन सहाऽऽनन्त्यव्यभिचाराभ्यां वाक्यसंकेतग्रहासंभव इत्यकामेनापि पदानां स्वार्थे संकेतोऽभ्युपगन्तव्यः। तस्मात्

---

(१) 'सर्वं एव पदार्थो व्याप्यते' इति ख०।

(क) 'तदर्थं' इत्यंशः ज-ग-ल-पुस्तकेषु सूत्रांशत्वेन गृहीतः। (ख) 'यतः' इत्यत्र 'ततः' इति युक्तम्। तस्या वर्णमालाया इति तदर्थः।

## (सू०)—व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः ॥ ५९ ॥

### न्यायभाष्यम्

अविनाभाववृत्तिः(१)सन्निधिः। अविनाभावेन वर्तमानासु व्यक्त्याकृतिजातिषु गौरिति प्रयुज्यते, तत्र न ज्ञायते किमन्यतमः पदार्थः(२)उतैतत् सर्वमिति ॥ ५९ ॥

### न्यायवार्त्तिकम्

विशेषश्रुत्या विशेषो गम्यत इति। कथं पुनरियं विशेषश्रुतिस्तिष्ठति गच्छतीति? नैवेयं (३) केवला विशेषश्रुतिः किं तु पूर्वपदापेक्षया विशेषप्रत्ययहेतुत्वाद्विशेषश्रुतिरित्युच्यते। भवतु वा पदादेवोभयम्—एतस्मादेव वा गोशब्दादुभयं गम्यते क्रिया च तत्साधनं च प्रधानोपसर्जनभावस्यानियमेन यदाऽयं गोशब्दो गोत्वनिमित्तो गोत्वयोगाद् गौरिति तदा गोशब्दात् प्रधानं साधनं गौर्गम्यते क्रिया त्वङ्गभूता विशेषकत्वात्; यदा पुनः क्रियाप्रधानं पदं तदा गोर्भावो गोत्वमिति (क)तदा गौरङ्गभूता विशेषकत्वाद् गम्यते प्रधानं गोत्वमिति। तदेवं प्रधानोपसर्जनभावस्यानियमेन गोत्वमिति च पदे गौरिति चोभयं गम्यत इति ॥ ५८ ॥

तत्र प्रधानोपसर्जनभावमाश्रित्य तदर्थे—

व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः। अविनाभाववृत्तिश्च सन्निधिः। यस्मादयं

### न्यायवार्त्तिकतात्पर्यटीका

पदानां सामान्यमर्थस्तत्प्रतिपादनावान्तरव्यापाराणां च यथा वाक्यार्थप्रतिपादकत्वं तथाऽस्माभिस्तत्त्वबिन्दौ निपुणतरमुपपादितम्। सेयं पदात् सामान्यप्रतीतिर्गौरिति वा अश्व इति वा सर्वगवीषु सर्वाश्वेषु वोपसर्पन्ती शुक्ल इति कृष्ण इति वा विशेषश्रुत्या नियम्यत इत्यर्थः। पृच्छति—कथं पुनरियमिति। तिष्ठति गच्छतीत्यादयोऽपि न पदत्वेन विशेषे वर्त्तितुमर्हन्ति संबन्धग्रहणासंभवात्। तस्मादेतेऽपि सामान्यवचना इति भावः। उत्तरम्—नैवेयमिति। तदेवं पदस्य सामान्यवाचकत्वनिश्चयादाकृतिव्यक्त्योश्च पदात् प्रतीतेर्वादिनां विप्रतिपत्तेर्भवति संशयः किं त्रितयमर्थ आहो अन्यतम इति। एवं तावत्सामान्यावगमाद्वाचकत्वं निश्चित्य चिन्तान्तरावतारो दर्शितः। संप्रति द्वितयावगमात् पदस्य वाचकत्वशङ्कैव नास्ति तस्माद् युक्तश्चिन्तान्तरावतार इत्याह—भवतु वेति। प्रतीतिसिद्धमनुजानाति—क्रिया च। तत्साधनं चेति, भविता गौरित्यर्थः ॥ ५८ ॥

व्यक्त्या—यः (सू० ५९) ॥ किमन्यतमः पदार्थ उतैतत्सर्वमिति भाष्यम्।

### वृत्तिः

अथवा 'विभक्तिः' वृत्तिः 'अन्तः' सम्बन्धः तेन वृत्तिमत्त्वं पदत्वमिति। इत्थं च पदं निरूप्य तदर्थनिरूपणं सङ्गच्छते।

---

(१) 'सन्निधिरिति' ख०। (२) 'उत सर्वं इति' ख-ग अ-मा०। (३) 'केवलात्' इति ख०।
(क) इदं 'तदा'पदमधिकं मुद्रितमिति सम्भाव्यते।

## न्यायभाष्यम्

शब्दस्य प्रयोगसामर्थ्यात् (१)पदार्थावधारणम्। तस्मात्—

**(सू०)—याशब्द-समूह-त्याग-परिग्रह-सङ्ख्या(२)वृद्ध्यपचय-वर्ण-समासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः ॥ ६० ॥**

व्यक्तिः पदार्थः। कस्मात्? याशब्दप्रभृतीनां व्यक्तावुपचारात्। उपचारः प्रयोगः। या गौस्तिष्ठति या गौर्निषण्णेति, नेदं वाक्यं जातेरभिधायकमभेदात्, (३)भेदात्तु

## न्यायवार्त्तिकम्

गोशब्दो व्यक्त्याकृतिजातिष्वविनाभावेन (४)वर्त्तमानाच्च प्रयुज्यते; अतो न ज्ञायते किं व्यक्तिः पदार्थ उताऽऽकृतिरुत जातिरिति ॥ ५९ ॥

याशब्दसमूहत्यागपरिग्रहसंख्यावृद्ध्यपचयवर्णसमासानुबन्धानां व्यक्तावुपचाराद् व्यक्तिः।

शब्दस्य प्रयोगसामर्थ्यात् पदार्थावधारणमिति प्रयोगप्रदर्शनार्थं याशब्दादिसूत्रम्। नामी याशब्दादयः(५) जातौ प्रयुज्यन्ते। कस्मात्? अभेदात्—एका जातिस्तस्या विशेषणमनर्थकम्, या गौस्तिष्ठतीति या गौर्निषण्णेति। एवं शेषेषु। आकृतेरप्यभिधायकमेतन्न भवति निष्क्रियत्वाद्

## न्यायवार्त्तिकतात्पर्यटीका

तत्रान्यतमार्थमाह वार्त्तिककारः—किं व्यक्तिरिति ॥ ५९ ॥

याश—क्तिः (सू० ६०)॥ अत्र याशब्दादिप्रयोगसामर्थ्याद्व्यक्तिरेव पदार्थ इत्येके मन्यन्ते। स्यादेतत्—व्यक्तिवदाकृतिरपि भिद्यत इत्याकृतेरप्यभिधायकं कस्मान्न भवतीत्यत आह—आकृतेरपीति।

## वृत्तिः

यत्तु प्रसङ्गात् पदार्थनिरूपणमिति तन्न, पदनिरूपणस्यासङ्गतत्वापत्तेः, एकसूत्रस्य प्रकरणत्वाभावाच्च ॥ ५८ ॥

तत्र पदे निरूपिते तद्वाच्यत्वं पदार्थत्वं निरूपितम्। तत्रापि धात्वाद्यर्थस्य निर्विवादत्वाद्गवादिपदार्थं निरूपयितुमाह—(तदर्थे व्यक्त्याकृतिजातिसन्निधावुपचारात् संशयः)।

व्यक्तिर्गवादिः, जातिः गोत्वादिः, आकृतिरवयवसंस्थानविशेषः, तेषां सन्निधिः सामीप्यं मिलनम्, तत्र सति उपचाराद् ज्ञानात्। तथा च त्रयाणां युगपत् प्रत्ययात् किमेतेषां प्रत्येकं पदार्थ उत समस्त इति संशय इत्यर्थः।

इदं भाष्यमिति केचित्। वस्तुतस्तु दुर्बोधादिस्वरसात् सूत्रमेव। तदर्थ इत्यंशस्तु भाष्यकृतः पूरणमिति प्रतिभाति ॥ ५९ ॥

(१) 'पदावधारणम्'—इति ग०। (२) '-वृद्ध्यपचय'—इति ज-ग०। (३) 'भेदात्तु' इति ज-पु० नास्ति। (४) 'वर्त्तमानात्' ख०। (५) अतः परं ख-पुस्तके 'इति' इत्यधिकम्।

## न्यायभाष्यम्

द्रव्याभिधायकम्। (१)गवां समूह इति भेदाद् द्रव्याभिधानं न जातेरभेदात्(१*)। (२,क)वैद्याय गां ददातीति द्रव्यस्य त्यागो न जातेरमूर्तत्वात् (ख)प्रतिक्रमानुक्रमानुपपत्तेश्च। परिग्रहः स्वत्वेनाभिसम्बन्धः, कौण्डिन्यस्य गौर्ब्राह्मणस्य गौरिति; द्रव्याभिधाने द्रव्यभेदात् सम्बन्धभेद इत्युपपन्नम्, अभिन्ना तु जातिरिति। सङ्ख्या—दश गावो विंशतिर्गाव इति भिन्नं द्रव्यं सङ्ख्यायते, न जातिरभेदादिति। वृद्धिः कारणवतो द्रव्यस्यावयवोपचयः, अवर्धत गौरिति; निरवयवा तु जातिरिति। एतेनापचयो व्याख्यातः। वर्णः—शुक्ला गौः कपिला गौरिति; द्रव्यस्य गुणयोगो न सामान्यस्य। समासः—गोहितं गोसुखमिति, द्रव्यस्य सुखादियोगो न जातेरिति। अनुबन्धः—सरूपप्रजननसन्तानो गौर्गां जनयतीति, तदुत्पत्तिधर्मत्वाद् द्रव्ये युक्तं न जातौ विपर्ययादिति। द्रव्यं व्यक्तिरिति हि नार्थान्तरम्॥ ६०॥

## न्यायवार्त्तिकम्

आकृतेः। न हि निष्क्रिया गच्छति तिष्ठति भवति चेति। एवं सर्वत्र। यस्य चानेन (३)विशेषणेन तिष्ठत्यादिना योगस्तं गोशब्दोऽभिधातुमर्हतीति। कुतः? विशेषणविशेष्यभावस्यैकविषयत्वात्। यदि गोशब्दस्य तिष्ठतिशब्दस्य चैकमभिधेयं भवति ततो गोशब्देन धर्म्यन्तराणि निराक्रियन्ते तिष्ठतिशब्देन च क्रियान्तराणीति विशेषणविशेष्यभावापन्नयोस्तिष्ठतिगोशब्दयोः सामानाधिकरण्यं युज्यते अन्यथा नेति।

'द्रव्यं व्यक्तिरिति हि नार्थान्तरं' (४)तिष्ठतिशब्दसन्निहितेन गोशब्देन व्यक्तिरभिधीयत इति॥ ६०॥

## न्यायवार्त्तिकतात्पर्यटीका

(ग)गोत्वं च जातिरुपाधिर्भविष्यति, तेन नातिप्रसङ्गः; न चोपाधेरभिधानम्, अनभिहितस्यापि तच्छब्देनोपहितावच्छेदकत्वदर्शनात्; यथा गार्गिकया श्लाघत इत्यत्र श्लाघोपाधिविहितो वुञ् न श्लाघामाहेति भावः॥ ६०॥

## वृत्तिः

तत्र व्यक्तिशक्तिवादिनो मतमाह—( याशब्देति )

पदार्थ इति शेषः; उक्तानाम् 'उपचाराद्' व्यवहारात्, अनुबन्धः प्रजननम्, यथा

---

(१) इदं ग-ख-पुस्तकयोर्न दृश्यते। (२) 'चैद्याय'—इति ख-ग-भा०। (३) 'विशेषेण' ख०। (४) 'तिष्ठतिशब्दसहितेन' इति ख०।

(क) वैद्यायेति वेदनिष्णातायेत्यर्थः। चैद्यायेति पाठे चेदिदेशवासिने इत्यर्थो बोध्यः। (ख) प्रतिक्रमो विश्लेषः, अनुक्रमः संश्लेषः। ताविमौ संयोगविभागौ, तयोरनुपपत्तिरिति भाव इति भाष्यचन्द्रे रघूत्तमः। (ग) नन्वेवं व्यक्तिमात्रं द्रव्यापरपर्यायं गोत्वरहितं गोपदार्थ इति प्राप्तम्, तथा चाश्वादिव्यक्तावपि गोपदार्थत्वापत्तिरित्याशङ्क्याऽऽह गोत्वमिति।

## न्यायभाष्यम्

अस्य प्रतिषेधः—

### (सू०)—न तदनवस्थानात् ॥ ६१ ॥

न व्यक्तिः पदार्थः। कस्मात्? अनवस्थानात्। याशब्दप्रभृतिभिर्यो विशेष्यते स (१)गोशब्दार्थो या गौस्तिष्ठति या गौर्निषण्णेति, न द्रव्यमात्रमविशिष्टं जात्या विना-ऽभिधीयते। किं तर्हि? जातिविशिष्टम्। तस्मान्न व्यक्तिः पदार्थः। एवं समूहादिषु द्रष्टव्यम् ॥ ६१ ॥

यदि न व्यक्तिः पदार्थः कथं तर्हि व्यक्तावुपचार इति? निमित्तादतद्भावेऽपि तदुपचारः। दृश्यते खलु—

## न्यायवार्त्तिकम्

तत्प्रतिषेधार्थम्—

न तदनवस्थानात् इति सूत्रम्। नानेन गोशब्देन व्यक्तिमात्रं शुद्धमुच्यते। यद्ययं व्यक्ति-मात्राभिधायकोऽभविष्यत् तेन यस्यां कस्यांचिद्व्यक्तौ प्रत्ययोऽभविष्यदिति सूत्रार्थः ॥ ६१ ॥

'यदि व्यक्तिर्न पदार्थः कथं या गौस्तिष्ठतीत्यादिप्रयोगः? निमित्तादतद्भावेऽपि तदुपचारः'। क्व पुनर्निमित्तादतद्भावेऽपि तदुपचारो दृष्ट इति तस्योपपादनार्थं सहचरणादिसूत्रम्—

## न्यायवार्त्तिकतात्पर्यटीका

न त—नात् (सू० ६१) ॥ तमिमं व्यक्त्यभिधाननियमवादिनमपाकरोति—नानेनेति ॥६१॥

(क)नाप्रतीत उपाधिरुपहितावच्छेदाय प्रभवति। न च गार्गिकयेत्यत्रोपाधिर्वुञाऽभिहितो-ऽपि न प्रतीयते श्लाघत इति पदान्तरेण तस्याभिधानात्। यत्र तु श्लाघत इति न प्रयुज्यते न तत्र वुञो भावाभिधायिनः साधुत्वमस्ति। सेयं व्यधिकरणे(ख)ऽनुपाधौ गतिः। समानाधिकरणे तु

## वृत्तिः

गौर्गच्छतीत्यादिव्यवहारो व्यक्तावेव जात्याकृत्योरमूर्त्तत्वात्; एवं गवां समूहः, गां ददाति, गां प्रतिगृह्णाति, दश गावः, गौर्वर्धते, कृशा गौः, कपिला गौः, गोहितम्, गौः प्रसूता इत्यादिव्यवहाराणां व्यक्तावेव सम्भवात्। समासः सम्यगासनम्, (२)सम्बन्धो वा इत्यर्थे, गौरास्ते गोर्मुखमित्युदाहरणीयम् ॥ ६० ॥

तद् दूषयति—( न तदिति )

न व्यक्तौ शक्तिर्व्यक्तिमात्रस्यानवस्थानात् अव्यवस्थानात् ॥ ६१ ॥

---

(१) 'गोशब्दस्यार्थो' इति वि०। (२) 'अनुबन्ध' इति नौ-वि०।

(क) सिद्धान्तपथमभिसर्त्तुकामः 'यदि न व्यक्तिः पदार्थः' इति भाष्यं मात्रशब्देन पूरयितुं तत्र युक्तिमाह नाप्रतीत इति। (ख) 'उपाधौ' इति युक्तम्।

**(सू०)—सहचरण-स्थान-तादर्थ्य-वृत्त-मान-धारण-सामीप्य-योग-साधनाधिपत्येभ्यो ब्राह्मण-मञ्च-कट-राज-सक्तु-चन्दन-गङ्गा-शाटकान्न-पुरुषेष्वतद्भावेऽपि तदुपचारः ॥ ६२ ॥**

### न्यायभाष्यम्

अतद्भावेऽपि तदुपचार इति (१)अतच्छब्दस्य तेन शब्देन(२)अभिधानमिति। सहचरणाद्—यष्टिकां भोजयेति, यष्टिकासहचरितो ब्राह्मणोऽभिधीयत इति।

### न्यायवार्त्तिकम्

सहचरणस्थानतादर्थ्यवृत्तमानधारणसामीप्ययोगसाधनाधिपत्येभ्यो ब्राह्मणमञ्चकटराजसक्तुचन्दनगङ्गा(क)शकटान्नपुरुषेष्वतद्भावेऽपि तदुपचारः।

### न्यायवार्त्तिकतात्पर्यटीका

पश्वादावुपाधौ प्रत्ययान्तशब्दवाच्यत्वमेव, यथा हतिहरिः श्वेति। अत्र हि हतिहरिरित्येतावतैव पशौ लब्धे तद्विशेषनियमार्थं श्वेति प्रयुज्यते। न च प्रयोगादेवोपाधेर्गम्यमानत्वादनभिधानं साम्प्रतम्, तदुपाध्यनभिधायिनस्तत्र प्रयोगनियमस्य पर्यनुयोज्यत्वात्; अननुयोज्यत्वे अनादेर्लोकप्रयोगस्य सर्वेषामेव शब्दानामनभिधायकत्वप्रसङ्गः। प्रयोगनियमादेव हि तेभ्योऽप्यर्थोऽवगम्यते। अथाप्रतिपादकस्य प्रयोगनियमो नोपपद्यत इति यत्र प्रयोगस्तत्प्रतिपादकत्वमित्यभ्युपेयते

### वृत्तिः

व्यक्तिमात्रस्य शक्यत्वे हि गवादिपदाद् यत्किञ्चिद्व्यक्तेरुपस्थितिः स्यादतो गोत्वविशिष्टा व्यक्तिर्वाच्या। तथा च नागृहीतविशेषणा बुद्धिर्विशेष्यमुपसंक्रामतीति न्यायात् जातावेव शक्तिरस्तु। कथं तर्हि व्यक्तिबोध इत्यग्रिमसूत्रम्—( सहचरणेति )

व्यक्तौ 'अतद्भावेऽपि' तत्पदाशक्यत्वेऽपि 'तदुपचारः' तच्छब्दव्यपदेशः, यथा सहचरणादितो ब्राह्मणादौ यष्ट्यादिपदप्रयोगः। सहचरणात्—संयोगविशेषात् यष्टिं भोजयेत्यत्र यष्टिधरब्राह्मणे यष्टिशब्दप्रयोगः। एवम्, स्थानात्—मञ्चाः क्रोशन्तीति मञ्चस्थपुरुषे, तादर्थ्यात्—कटं करोतीति कटार्थकवीरणे, कटस्यासिद्धत्वेन कारकत्वायोगात्, (यमस्य) वृत्तात्—अनुशासनादितो राजनि यम इति, मानात्—आढकेन मिताः सक्तव आढकसक्तव इति, धारणात्—तुलया धृतं चन्दनं तुलाचन्दनमिति, सामीप्यात्—गङ्गायां गावश्चरन्तीति, (कृष्णद्रव्य)योगात्—कृष्णः शाटक इति—शकटेति पाठे कृष्णः शकट इत्युदाहरणीयम्, (प्राण)साधनात्—अन्नं प्राणा इति, आधिपत्यात्—राजेवास्य कुलमिति कुलाधिपतिः प्रतीयते। तथा च यथा गङ्गादिपदाद् गङ्गातीरत्वादिना बोधस्तथा गोपदादितो गोत्वविशिष्टस्य व्यक्तेर्लक्षणया बोधः। एतेन युगपद् वृत्तिद्वयविरोधः एकपदार्थयोः

(१) 'एतच्छब्दस्य' इति ग-ज०। (२) 'अभिधान इति'—इति ग०।
(क) 'शकटे'ति वार्त्तिकधृतपाठः।

## न्यायभाष्यम्

स्थानात्—मञ्चाः क्रोशन्तीति मञ्चस्थाः पुरुषा अभिधीयन्ते। तादर्थ्यात्—कटार्थेषु वीरणेषु (१)व्युह्यमानेषु कटं करोतीति भवति। वृत्तात्—यमो राजा कुबेरो राजेति तद्वद्वर्त्तते इति। मानात्—आढकेन मिताः सक्तवः आढकसक्तव इति। धारणात्—तुलायां धृतं चन्दनं तुलाचन्दनमिति। सामीप्यात्—गङ्गायां गावश्चरन्तीति देशोऽभिधीयते सन्निकृष्टः। योगात्—कृष्णेन रागेण युक्तः शाटकः कृष्ण इत्यभिधीयते। साधनात्—अन्नं प्राणा इति। आधिपत्यात्—अयं पुरुषः कुलम् अयं गोत्रमिति। तत्रायं सहचरणाद् योगाद्वा जातिशब्दो व्यक्तौ प्रयुज्यत इति ॥ ६२ ॥

## न्यायवार्त्तिकम्

अतद्भावेऽपि तदुपचार इति अतच्छब्दस्य तच्छब्देनाभिधानमुपचारः, यथा यष्टिकाशब्देन द्रव्यविशेषोऽभिधीयत इति यष्टिकाशब्दात्तु पुनः साहचर्याद् ब्राह्मणविशेषोऽभिधीयते, यथा यष्टिकाः प्रवेशयेति। एवं सर्वत्र। किं पुनरत्रोपचारबीजं यष्टिका ब्राह्मण इति ? न ह्युपचारबीजमन्तरेणोपचारो लभ्यते। ननूक्तं साहचर्यमिति। साहचर्यं नाम यष्टिकया नित्यसम्बन्धः। यष्टिकासम्बन्धाच्च यष्टिकावानिति स्यान्न यष्टिकेति। यष्टिकावानिति चायं शब्दो मुख्य एवेति। तस्मादुपचारबीजमन्यद्वक्तव्यमिति। यष्टिकायां तावदयं यष्टिकाशब्दो जातिनिमित्तः, यष्टिकात्वं जातिः सा यष्टिकायां वर्त्तते तया यष्टिकात्वयुक्तया यष्टिकया ब्राह्मणस्य योगः, साहचर्यात् संयुक्तसमवेतां जातिं ब्राह्मणेऽध्यारोप्य ब्राह्मणं यष्टिकेत्याह। एवं शेषाण्युपचारबीजानि स्वयमुत्प्रेक्षणीयानीति ॥ ६२ ॥

## न्यायवार्त्तिकतात्पर्यटीका

तदुपाधावपि समानम्। तथा च स्मरति भगवान् कात्यायनः—'तदन्तवाच्यः समानशब्दोऽय'मिति। 'समानशब्दः' समानाधिकरणशब्दः, य उपाधिरसौ प्रत्ययान्तशब्दवाच्य इत्यर्थः। तस्माद् व्यक्तिनियमे अप्रतीता जातिरशक्ता। न च गोशब्दादन्यदस्याः प्रत्यायकमस्तीति साऽपि तेन प्रत्यायनीयेति सिद्धं न व्यक्तिमात्रं पदार्थ इति।

सह—रः ( सू ६२ )॥ कटार्थेषु वीरणेषु व्युह्यमानेष्विति भाष्यम्। कटं करोतीति निर्वर्त्यस्य कटस्य कर्मत्वमनुपपन्नं कारकाधिकारीयत्वात् कर्मसंज्ञायाः, क्रियानिमित्तस्य च कारकत्वात्, असिद्धस्य च क्रियायाः पूर्वं निमित्तभावायोगात्। तस्मात् तादर्थ्यनिमित्तादेव

## वृत्तिः

परस्परानन्वयश्च प्रयुक्तः। गोत्वत्वेन रूपेण शक्तिग्रहात् तथैवोपस्थितिरतो निष्प्रकारकपदार्थोपस्थितिरपि नास्तीति मन्तव्यम् ॥ ६२ ॥

(१) 'व्यूह्यमानेषु' इति ल-ग०।

## न्यायभाष्यम्

यदि गौरित्यस्य पदस्य न व्यक्तिरर्थः, अस्तु तर्हि—

## (सू०)—आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः ॥ ६३ ॥

आकृतिः पदार्थः। कस्मात्? तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। सत्त्वावयवानां तदवयवानां च नियतो व्यूह आकृतिः, तस्यां गृह्यमाणायां सत्त्वव्यवस्थानं सिध्यति अयं गौरयमश्व इति, नागृह्यमाणायाम्। यस्य ग्रहणात् सत्त्वव्यवस्थानं सिध्यति तं शब्दोऽभिधातुमर्हति सोऽस्यार्थ इति ॥ ६३ ॥

तदुपपद्यते यस्य जात्या योगस्तदत्र जातिविशिष्टमभिधीयते गौरिति। न

## न्यायवार्त्तिकम्

यदि तर्हि गौरिति पदस्य न व्यक्तिरर्थः, अस्तु तर्हि—

आकृतिस्तदपेक्षत्वात् सत्त्वव्यवस्थानसिद्धेः। आकृतिः पदार्थः। कस्मात्? तदपेक्षत्वात् सत्त्वव्यवस्थानस्य। गौरश्वः पुरुष इत्येवमादि सत्त्वव्यवस्थानमाकृत्यपेक्षं सिध्यति। यदपेक्षा च सत्त्वव्यवस्थानसिद्धिः स गोशब्दस्य विषय इति। अत्रापि तदेवोपस्थितं न तदनवस्थानादिति। यस्य च जात्या योगः स गोशब्दस्य विषयो नाऽऽकृतिर्जात्ययोगात्। कस्य पुनर्जात्या

## न्यायवार्त्तिकतात्पर्यटीका

कटशब्दः कटार्थेषु वीरणेषु व्युह्यमानेषु वर्तते। वीरणानां च वा रच्यमानानामस्ति कटक्रियापूर्वभावित्वेन निमित्तभाव इति ॥ ६२ ॥

यदि न जात्या विना व्यक्तिनियम इति जातिरभिधेया हन्त भोः साऽप्याकृत्या नियन्तव्येत्याकृतिरेवाभिधीयतामित्याह—यदि तर्हीति।

आकृ—द्धेः ( सू० ६३ ) ॥

एतदपि दूषयति—अत्रापि तदेवोपस्थितं न तदनवस्थानादिति। संस्थानेनापि व्यज्यमाना जातिरेकार्थसमवायाद् व्यज्यते च व्यवस्थाप्यते च। सा तु व्यक्तिसंस्थानाभ्यां व्यावर्तमानाभ्यामनुवर्तमानाऽभिन्नबुद्ध्याऽवसीयते, तादृशी च व्यक्तिसंस्थानाभिधानानपेक्षेणापि पदेन शक्या

## वृत्तिः

आकृतिरेव शक्येति मतमुपन्यस्यति—( आकृतिरिति )

आकृतिः पदार्थः। कुतः? सत्त्वस्य प्राणिनो गवादेः 'व्यवस्थानसिद्धेः' व्यवस्थितत्वसिद्धेः तदपेक्षत्वात् आकृत्यपेक्षत्वात्। अयमश्वो गौरयमित्यादिव्यवहारस्याऽऽकृत्यपेक्षत्वादाकृतिरेव शक्येत्यर्थः ॥ ६३ ॥

### न्यायभाष्यम्

चावयवव्यूहस्य जात्या योगः। कस्य तर्हि? नियतावयवव्यूहस्य द्रव्यस्य। तस्मान्नाऽऽकृतिः पदार्थः।

अस्तु तर्हि जातिः पदार्थः—

**(सू०)—व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः॥ ६४॥**

जातिः पदार्थः। कस्मात्? व्यक्त्याकृतियुक्तेऽपि मृद्गवके प्रोक्षणादीनामप्रसङ्गादिति। गां प्रोक्षय गामानय गां देहीति नैतानि मृद्गवके प्रयुज्यन्ते। कस्मात्? जाते-

### न्यायवार्त्तिकम्

योगः? नियतावयवव्यूहस्यावयविनः—नियतोऽवयवव्यूहो यस्य भवति स नियतावयवव्यूहः; अन्यपदार्थेन बहुव्रीहिणाऽवयव्यभिधीयत इति॥ ६३॥

अस्तु तर्हि जातिः पदार्थः—

(१) व्यक्त्याकृतियुक्तेऽप्यप्रसङ्गात् प्रोक्षणादीनां मृद्गवके जातिः। यस्मान्मृद्गवके व्यक्त्याकृती स्तः न च तत्र प्रोक्षणादीनि प्रयुज्यन्ते, न हि गामानय गां देहीति मृद्गवके

### न्यायवार्त्तिकतात्पर्यटीका

बोधयितुम्, संस्थानं तु व्यक्तिवद् भिन्नम् आनन्त्यव्यभिचाराभ्यामशक्यसंकेतग्रहणं (२)जात्यभिधामनपेक्ष्य न शक्यं पदेन बोधयितुमिति न संस्थानापरनामाऽऽकृतिः पदार्थ इत्यर्थः। नापि जातिद्वारेण व्यक्तिवदाकृतिः पदार्थो जात्या सहासंबन्धादित्याह—यस्य च जात्या योग इति॥ ६३॥

अस्तु तर्हि जातिरेव पदार्थः, तत्र हि सुकरः संकेतग्रहः व्यभिचाराभावाद् (३)व्यक्त्याकृत्योस्तु व्यभिचार इति(३*) जात्यभिधायिनो व्यक्तावाकृतौ चौपचारिकः प्रयोगो भविष्यतीत्यभिप्रायेणाऽऽह—अस्तु तर्हीति। शेषमस्यातिरोहितार्थम्।

व्यक्त्या—तिः ( सू० ६४ )॥

### वृत्तिः

फलतस्तद् दूषयति—( व्यक्त्येति )

मृद्गवके व्यक्त्याकृतियुक्तेऽपि प्रोक्षणादीनामप्रसङ्गाद् अप्रसञ्जनाज्जातिः पदार्थः; इतरथा मृद्गवकस्यापि व्यक्तित्वाद् गवाकृतिसत्त्वाच्च(४)वैधं प्रोक्षणादिकं स्यादिति भावः॥ ६४॥

---

(१) 'व्यक्त्याकृतियुक्तेष्वप्रसङ्गात्' इति क-ख-पुस्तकयोर्मुद्रितम्।

(२) 'जात्यभिधानमपेक्ष्य' इति ख०।

(३) क-ख-तात्पर्यपुस्तकयोः 'इति व्यक्त्याकृत्योस्तु व्यभिचारः' इति मुद्रितम्।

(४) 'वैधप्रोक्षणादिप्रसङ्गादिति' इति भ०।

## न्यायभाष्यम्

रभावात्। अस्ति हि तत्र व्यक्तिः अस्त्याकृतिः यदभावात् तत्रासम्प्रत्ययः स पदार्थ इति ॥ ६४ ॥

## न्यायवार्त्तिकम्

प्रैषसम्प्रतिपत्ती भवतः ; यदभावात् तत्रासम्प्रत्ययः स गोशब्दस्यार्थः । कस्याभावात् तत्रासम्प्रत्ययः ? जातेः ।

अथ मृद्गवके कस्माद् गोत्वं न जातिः ? यस्मान्मृद्गवको गौर्न भवति, यश्च गौर्न भवति न तत्र गोत्वं वर्त्तते यथाऽश्व इति । अथ मृद्गवकः कस्माद् गौर्न भवतीति ? अत एव गौर्न भवति यस्मान्मृद्गवक इति । न चायं युक्तः प्रश्नो मृद्गवकः कस्माद् गौर्न भवतीति । किं कारणम् ? प्रतिपत्तिबाधितत्वात्—भवानप्येनमर्थं प्रतिपद्यते नायं गौरिति, प्रतिपत्त्या च प्रश्नो बाध्यत इति । अथ मृद्गवके गोशब्दः कुतः ? आकृतिसामान्यात् चित्रादिवदिति । सर्वगतेति चेत्—अथ मन्यसे सर्वगता जातिः सोत्पद्यमानेन यथा गवा सम्बध्यते तथा मृद्गवकेनापीति अस्ति मृद्गवके गोत्वम् । नानभ्युपगमात्—केन सर्वगतत्वं जातेरभ्युपगम्यते, अपि तु स्वविषये सर्वत्र वर्त्तत इति सर्वगतेत्युच्यते । कः पुनर्गोत्वस्य स्वो विषयः ? यत्र गोत्वं वर्त्तते । क्व पुनर्गोत्वं वर्त्तते ? यत्र गोत्वनिमित्तोऽनुवृत्तप्रत्ययो भवति । क्व पुनरनुवृत्तप्रत्ययं गोत्वं करोति ? यत्तस्य साधनम् । कः पुनर्नित्ये गोत्वे गोः साधनार्थः ? (क)यत्तेन व्यज्यते । न हि ककुदादिमदर्थव्यतिरेकेण गोत्वस्य (१)अभिव्यक्तिरस्ति ।

न हि पिण्डेभ्योऽर्थान्तरं गोत्वं पिण्डान्तरालेष्वदर्शनादिति केचित् । न, विकल्पानुपपत्तेः—पिण्डान्तरालेष्वदर्शनादिति ब्रुवाणः पिण्डान्तरालं पर्यनुयोज्यः । किमिदं पिण्डान्तरालम् ? किमाकाशम् आहो अभाव उत द्रव्यान्तरम् । यद्याकाशम्, न तत्र गोत्वम् ; न ह्याकाशं गौरिति । एतेनाभावो द्रव्यान्तरं च व्याख्यातम् ।

विशेषप्रत्ययानामनाकस्मिकत्वाच्च—अयं च पिण्डप्रत्ययव्यतिरेकभाक् प्रत्यय उपजायमानो निमित्तान्तराद् भवति, दृष्टा खलु पिण्डप्रत्ययव्यतिरेकभाजां प्रत्ययानां निमित्तान्तरादुत्पत्तिः, यथा वस्त्रचर्मकम्बलेषु नीलप्रत्यय इति । आकृतिसामान्यादिति चेत्—अथ मन्यसे सत्यमयमस्तु, पिण्डव्यतिरेकनिमित्तादनुवृत्तिप्रत्ययो भवति न पुनरस्य जातिर्निमित्तम्, अपि तु यच्छिरःपाणिपादाकृतिसामान्यं तस्मादनुवृत्तिप्रत्यय इति । न, पिण्डवदसाधारणत्वादाकृतेः—यथैव पिण्डाः पिण्डान्तरवृत्तयो न भवन्ति तथा आकृतिरपि एकपिण्डवर्त्तित्वात् पिण्डान्तरवर्त्तिनी न भवति । (ख)आकृतेः पिण्डान्तरवर्त्तित्वमभ्युपगम्यते, नाम्नि विवादो नार्थ इति । अथ पिण्डव्यतिरिक्तं

(१) 'व्यक्तिरस्ति' इति ख० ।
(क) 'येन तद्व्यज्यते' इति समीचीनतया प्रतिभाति ।
(ख) अत्र पक्षान्तरसूचकोऽथशब्द ऊहनीयः ।

## न्यायवार्त्तिकम्

सामान्यं नाभ्युपगम्यते, तथाऽप्येकसामान्यनिराकरणात् समानप्रत्ययबीजमन्यद्वक्तव्यं स्यात्। न ह्यसति सामान्ये समानप्रत्ययं पश्याम इति। असत्यपि सामान्ये दृष्टः सामान्यप्रत्यय इति चेत्—अथ मन्यसे यथा सामान्येष्वसति सामान्यान्तरेऽनुवृत्तप्रत्ययो दृष्टः, गोत्वादिषु इदं सामान्यमिदं सामान्यमिति; तस्मादनैकान्तिकत्वादनुवृत्तिप्रत्ययोऽसाधनम् (१)अर्थान्तरप्रतिपादन इति ? नानभ्युपगमात्—न मया गोत्वघटत्वाश्वत्वेषु निर्निमित्तः (२)सामान्यप्रत्ययोऽभ्युपगम्यते, तस्मादनुत्तरमेतत्। सूत्रव्याघात इति चेत्—यदि मन्यसे सामान्येष्वपि सामान्यमस्तीति ननु सूत्रव्याघातः "सामान्यविशेषेषु सामान्यविशेषाभावात् तत एव ज्ञानम्"(क) इति ? न, सूत्रार्थापरिज्ञानात्—अयं सूत्रार्थो यथा द्रव्यमिति प्रत्ययो द्रव्यत्वविशेषणो द्रव्ये भवति न पुनः सामान्यविशेषेष्वेवमिति। न पुनरयं सूत्रार्थो निर्निमित्तोऽनुवृत्तिप्रत्यय इति। किंनिमित्तमिति चेत्—अथ मन्यसे गोत्वादिष्वनुवृत्तिप्रत्ययस्य किं निमित्तम् ? यतः सामान्यमिति भवति। कुतः सामान्यमिति भवति ? अनेकार्थसमवायात्—यथा गोत्वमनेकार्थसमवायि तथाऽश्वत्वादीत्यनेकार्थैस्तत्समवायस्य समानत्वाद्व गोत्वादिष्वनुवृत्तिप्रत्यय इति। पाचकादिशब्दवदिति चेत्—अथ मन्यसे यथा पाचकादिशब्दा अनुवृत्तप्रत्ययाश्च भवन्ति, न च पाचकत्वं नाम सामान्यविशेषोऽस्ति तथा गवादिष्वनुवृत्तप्रत्यया इति ? न, हेत्वर्थापरिज्ञानात्—विशेषप्रत्ययानामनाकस्मिकत्वादित्यस्य हेतोः पिण्डप्रत्ययव्यतिरिक्तस्य प्रत्ययस्य निमित्तान्तरादुत्पाद इत्ययमर्थः न पुनः सर्वोऽनुवृत्तिप्रत्ययः सामान्यादेव भवतीति। एवं सति पचनक्रियायां यत् प्रधानं साधनं तत्पाचकशब्देनोच्यते। तच्च प्राधान्यं पाचकान्तरेऽप्यस्तीति न दोषः।

यद्यनेकानुवृत्ति गोत्वं तत् किं प्रतिपिण्डं परिसमाप्त्या वर्त्तते अथैकदेशेनेति। किं चातः ? यदि प्रतिपिण्डं परिसमाप्त्या वर्तते, पिण्डवदसाधारणत्वान्न सामान्यं भवितुमर्हति। अथैकदेशेन वर्तते, तथाऽपि नैकमनेकत्र वर्तते किन्त्वनेकमनेकत्रेति; तस्मात् प्रदेशाः सामान्यस्य वर्तन्त इति ये ते एकदेशाः सामान्यस्य पिण्डेषु प्रत्येकं वर्तन्ते ते किं सामान्यात्मका उत नेति। यदि सामान्यात्मका एकमेकत्र वर्तत इति प्राप्तम्, (ख)न चैकमनेकत्र वर्तमानं सामान्यमिति युक्तं वक्तुम्। अथासामान्यात्मकाः, शून्यमभिधानं सामान्यस्यैकदेशाः प्रत्येकं वर्तन्ते इति। तैरपि देशैः सामान्यं पूर्ववद्वर्तत इति पूर्ववत्प्रसङ्गः। न चान्या गतिरस्ति। तस्मान्नानेकवृत्ति सामान्यमिति। न, विकल्पानभ्युपगमात्—नायं विकल्पोऽस्ति गोत्वं प्रत्येकं पिण्डेषु (३)परिसमाप्य वर्तते अथ प्रदेशेन वर्तत इति, तस्माद्विकल्पानभ्युपगमादप्रश्नोऽयम्। कस्मात् ?

---

(१) 'अर्थान्तरनिमित्तप्रतिपादने' इति ख-पुस्तकपाठः, क-पुस्तके तु 'अर्थान्तर ( निमित्त ) प्रति'—इत्येवं मुद्रितम्। (२) 'समानप्रत्ययः' इति क-ख-वार्त्तिकधृत-पाठान्तरम्। (३) क-पुस्तके 'परिसमाप्य(वर्तं)ते' इत्येवं मुद्रितम्।

(क) "सामान्यविशेषेषु सामान्यविशेषाभावात् तदेव ज्ञानम्" इति वैशेषिकसूत्रम्—अ० ८, आ० १, सू० ५ ( काशी-"चन्द्रप्रभाप्रेस" संस्करणम् )। (ख) 'न चैकमेकत्र' इति युक्तः पाठः।

## न्यायवार्त्तिकम्

गोत्वस्यावयविसमुदायत्वानभ्युपगमात्—न गोत्वमवयवि न समुदायः, समुदायस्य भाग एकदेशशब्दः अवयविनश्चावयवे ; यदा न किञ्चित्परिहायाशेषमभिधीयते तदाऽवयविनोऽवयवानपेक्ष्य कृत्स्नशब्दः समुदाये च समुदायिनोऽपेक्ष्य । न च गोत्वमवयवी न समुदायः, तस्मान्न कृत्स्नैकदेशशब्दौ स्तः । न चेत् तन्नैतौ शब्दौ स्तः (क)तस्माद् गोत्वं किं कार्त्स्न्येन वर्तते उतैकदेशेनेति न युक्तः प्रश्नः । उक्तं (ख)चात्र एकमनेकत्र वर्तत इति प्रतिजानानो नानुयोक्तव्यः । कस्मात् ? उभयेन व्याघातादिति । कथं तर्हि गोत्वं गोषु वर्तते । आश्रयाश्रयिभावेन । कः पुनराश्रयाश्रयिभावः ? समवायः ; तत्र वृत्तिमत् गोत्वम्, वृत्तिः समवायः (ग)इतीहप्रत्ययहेतुत्वादित्युक्तम् । (१)गव्यगवि वृत्त्यभावादिति चेत्—अथ मन्यसे यदिदं गोत्वं गोष्वनुवृत्तिप्रत्ययकारणं तत् किं गवि वर्तते आहोस्विदगवि ; यदि तावद्गवि, प्राक् गोत्वयोगाद्गौरेवासाविति व्यर्थं गोत्वम् ; अथागवि, (घ) न ; अश्वाद्यपि गोत्वयोगाद्गोः प्राप्नोति । न चान्या गतिरस्ति । तस्मान्न गोत्वादनुवृत्तिप्रत्यय इति ? न, विकल्पानभ्युपगमात्—न गवि गोत्वम् नागवि, प्राग् गोत्वात् नासौ गौः नाप्यगौरिति । किं कारणम् ? उभावेतौ विशेष्यप्रत्ययौ न विशेषणसम्बन्धमन्तरेण भवतः । न च प्राग् गोत्वयोगाद्वस्तु विद्यते । न चाविद्यमानं गौरित्यगौरिति च शक्यं व्यपदेष्टुम् । यदैव वस्तु तदैव गोत्वेनाभिसम्बध्यत इत्यनास्पदो विकल्पः । एतेन सत्तासम्बन्धस्य सदसद्विकल्पो व्याख्यातः । न सतः सत्तासम्बन्धः नासतः । यदैव वद्वस्तु तदैव सत्तया सम्बद्धमिति सदसदाश्रयो दोषोऽनुपपन्न इति । तस्मादुपपन्ना जातिः, न चासौ मृद्वक इति यदभावात् तत्रासम्प्रत्ययः स पदार्थ इति ॥ ६४ ॥

## न्यायवार्त्तिकतात्पर्यटीका

एकमनेकत्र वर्त्तत इति प्रतिजानानो नानुयोक्तव्यः । उभयेन व्याघातादिति । यद्येकमनेकत्र वर्तमानं प्रतिव्यक्ति सर्वात्मना वर्तत इति (ङ) किं तु अनेकमनेकत्र वर्तत इति प्राप्तम्, एवं चानुयोगाधिकरणव्याघातः । अथैकमनेकत्र वर्तमानं प्रतिव्यक्त्येकदेशेन वर्त्तते तथाऽपि नैकमनेकत्र वर्तते किं त्वनेकमनेकत्रेति एकदेशानामनेकत्वादिति । सोऽयमुभयेन व्याघातः उक्तोऽवयविवादे ॥ ६४ ॥

---

(१) 'न गोत्वं गव्यगवि' इति ख-पु० । क-पुस्तके ( न गोत्वं ) इति मुद्रितम् ।

(क) तस्मादिति तदेत्यर्थः । (ख) उक्तमिदं ४७२ अङ्कितपत्रे । (ग) क-ख-पुस्तकयोः 'इतीहप्रत्ययः' इत्यत्र 'इति' पदमधिकं मुद्रितम् । (घ) अत्र 'न अश्वाद्यपि' इति ख-वार्त्तिकपाठो गृहीतः । प्राग् गोत्वयोगाद् गवादेरिव अगवि गोत्वमिति पक्षं निराकरोति नेति । तत्र हेतुमाह अश्वाद्यपीति । नञ्शून्यपाठे अश्वादेरपि गवान्यत्वाविशेषादिति भावः । क-वार्त्तिके '(न) अश्वाद्यपि' इति मुद्रितम् । अगवि गोत्वमिति पक्षे अतिप्रसङ्गमाह अश्वाद्यपीति । (ङ) 'किं त्वि'तिदर्शनेन 'तथाऽपि नैकमनेकत्र वर्त्तते' इति वार्त्तिकसमानार्थकः पूर्वग्रन्थोऽत्र प्रमादात् स्खलित इति सम्भाव्यते ।

## (सू०)—नाऽऽकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः ॥ ६५ ॥

### न्यायभाष्यम्

जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते, नागृह्यमाणायामाकृतौ व्यक्तौ(१)च जातिमात्रं शुद्धं गृह्यते ; तस्मान्न जातिः पदार्थ इति ॥ ६५ ॥

न वै पदार्थेन न भवितुं शक्यम्, कः खल्विदानीं पदार्थ इति ?

## (सू०)—व्यक्त्याकृतिजातयस्तु पदार्थः ॥ ६६ ॥

### न्यायवार्त्तिकम्

नाऽऽकृतिव्यक्त्यपेक्षत्वाज्जात्यभिव्यक्तेः । 'जातेरभिव्यक्तिराकृतिव्यक्ती अपेक्षते ।' व्यक्त्याकृती इति प्राप्ते प्राधान्यादाकृतेः पूर्वनिपातः । किं पुनः प्राधान्यम् ? आकृतिर्विशेषणत्वं व्यक्तेः—यस्माद् व्यक्त्या विशेष्यमाणा आकृतिर्जातेर्लिङ्गं भवति तस्मात् प्रधानमाकृतिः । न चागृह्यमाणायामाकृतौ व्यक्तौ च जातिमात्रं शुद्धं शब्दाद् गम्यते, तस्मान्न जातिरेव पदार्थः ॥६५॥

### न्यायवार्त्तिकतात्पर्यटीका

नाकृ—क्तेः ( सू० ६५ ) (क) ।

तदेवमन्यतमाभिधाननियमं निराकृत्यानियमाभिधानं सिद्धान्तमाह—

व्यक्त्या—र्थः ( सू० ६६ ) ॥ इदमत्राऽऽकूतम् । गोशब्दोच्चारणानन्तरं विदितसंगतेरेकपदे

### वृत्तिः

केवलव्यक्त्याकृतिशक्तिपक्षं निराकृत्य केवलजातिशक्तिपक्षं निराकरोति—( नाऽऽकृतीति )

जातिमात्रं पदार्थः, 'जात्यभिव्यक्तेः' जातिशाब्दबोधस्य 'आकृतिव्यक्त्यपेक्षत्वाद्' आकृतिव्यक्तिविषयकत्वनियमात्, तयोरपि वाच्यत्वमावश्यकम् ; शक्तिं विना(२)तद्भानासम्भवात् । न च गोत्वप्रकारकताद्दशाकृतिविशिष्टशाब्दत्वस्य कार्यतावच्छेदकत्वात् तद्भानमिति वाच्यम्, तथा सति गवादिपदस्य घटत्वादावपि शक्तिप्रसङ्गः । तस्मात् पदं स्ववाच्यमेवोपस्थापयति ॥ ६५ ॥

इत्थं च त्रयाणामपि वाच्यत्वं सिद्धमित्याह—( व्यक्त्येति )

तुशब्द एकैकमात्रपदार्थत्वव्यवच्छेदाय । पदार्थ इत्येकवचनं तु तिसृष्वप्येकैव शक्तिरिति सूचनाय । विभिन्नशक्तौ कदाचित् कस्यचिदुपस्थितिः स्यात् । शक्तेस्तुल्य-

(१). 'च' इति ल-ग-ज-पुस्तकेषु नास्ति । (२) 'तज्ज्ञाना—' इति भ० ।

(क) ६५-म-सूत्रस्य तात्पर्यटीका नोपलभ्यते ।

## न्यायभाष्यम्

तुशब्दो विशेषणार्थः। किं विशिष्यते? प्रधानाङ्गभावस्यानियमेन पदार्थत्वमिति। यदा हि भेदविवक्षा विशेषगतिश्च तदा व्यक्तिः प्रधानमङ्गं तु जात्याकृती। यदा तु भेदोऽविवक्षितः (१)सामान्यगतिश्च, तदा जातिः प्रधानमङ्गं तु व्यक्त्याकृती(२)। तदेतद् बहुलं प्रयोगेषु। आकृतेस्तु प्रधानभाव उत्प्रेक्षितव्यः॥ ६६॥

## न्यायवार्त्तिकम्

न च वै (३)पदार्थेन न शक्यं भवितुम्। कस्तर्हि पदार्थः?

व्यक्त्याकृतिजातयस्तु पदार्थः। तुशब्दो विशेषणार्थः। किं विशिष्यते? प्रधानोपसर्जनभावस्यानियमेन पदार्थत्वम्। यदा भेदविवक्षा विशेषगतिश्च गौस्तिष्ठति गौर्निषण्णेति तदा व्यक्तिः पदार्थः, अङ्गं जात्याकृती; जातावाकृतौ च स्थानगमनादीनामभावाद् यत्र सम्भवः स पदार्थ इति। यदा पुनर्भेदो न विवक्षितः सामान्यावगतिश्च तदा जातिः पदार्थः, यथा गौर्न पदा स्प्रष्टव्येति। 'आकृतेश्च प्रधानभाव उत्प्रेक्षितव्य' इति, स्वयमुत्प्रेक्ष्य(४)इत्यर्थः। क्व पुनराकृतेः प्राधान्यं दृष्टम्? यथा पिष्टकमय्यो गावः क्रियन्तामिति। तदेतद् बहुलं प्रयोगेषु प्रधानोपसर्जनभावः स्वय(५)मुत्प्रेक्ष्य इति।

## न्यायवार्त्तिकतात्पर्यटीका

व्यक्त्याकृतिजातिनिर्भासः प्रत्यय उदयमासादयति; न पुनर्यथा गङ्गायां घोषः प्रतिवसतीत्यत्र गौर्वाहीक इत्यत्र वा गङ्गात्वगोत्वावगमोत्तरकालं वाक्यार्थे तत्संबन्धानुपपत्तेस्तदविनाभावेन वा लक्ष्यमाणगुणयोगेन वा तीरं (क)वाहीको वाऽवगम्यते तथेहावगतिः। प्रयोगप्राचुर्यादत्यन्ताभ्यासेनातिशीघ्रतया सन्नपि प्रत्ययक्रमो न लक्ष्यते (ख)शीघ्रतरबाणहेतुकशतपत्रशतव्यतिभेदवदिति चेत्—न, असति बाधके बलवति प्रत्ययाभेदप्रथायामन्यथाकरणायोगात्। तथा च सति न कचिदप्यभेदोऽवतिष्ठेत, तथा च भेदोऽपि न स्याद् अभेदाश्रयत्वाद्भेदस्य। अपि च न रूपिशून्या रूपावगतिः, रूपं च द्रव्यस्य जातिः, तेन रूप्यमाणत्वाद् रूपि द्रव्यम्। न च येन यद्रूप्यते तदनवगमे तदवगमः, यथा नार्थमन्तरेण बुद्धेरुपलम्भनम्। तस्माज्जात्युपलम्भो द्रव्योपलम्भैकदेशो न द्रव्योपलम्भमन्तरेण केवलः संभवति। तस्मादेकोपलम्भगोचरत्वान्न जातिजातिमतोर्लक्ष्यलक्षणभावः। स चोपलम्भः शब्दज्ञानानन्तरं जायमानः शाब्दः। न च वाच्यम् एकोपलम्भगोचरत्वेऽपि जातिव्यक्त्योर्जातिरेव वाच्या न व्यक्तिः एकवाच्यत्वेऽप्युभयोपलम्भोपपत्तावुभयवाच्यत्वकल्पनानुपपत्तेरिति, कार्यव्यङ्गं हि कारणानां सामर्थ्यं कार्ये एव नाकार्ये, कार्यं चानुभवः, स चैक एवेति

---

(१) 'सामान्यगतिस्तदा' इति ज०। (२) अत्र 'स्त्रीक्रमे' इत्यधिकम् ज-पु०। (३) 'यथार्थेन' इति ख०।
(४) 'इत्ययमर्थः' ख०। (५) '-मुत्प्रेक्ष्यत इति' ख०।

(क) वाहीको जर्त्तिकः (महाभा० कर्ण० २०० अ०) 'जाठ' इति प्रसिद्धा जातिः।

(ख) 'शीघ्रतरबाणहेतुकशतपत्रपत्रव्यतिभेदवत्' इति तु ग्रन्थान्तरसंवादी पाठः।

## न्यायवार्त्तिकम्

न व्यक्त्याकृतिजातयः पदार्थ इति केचित्। कुतः? विकल्पानुपपत्तेः। सदित्येतदेव व्यापकत्वादुपादाय चिन्त्यते—सदित्यनेन पदेन पुनर्जातिरभिधीयते पिण्डो वा सम्बन्धो वा जातिमान् वा पदार्थः। तत्र न तावज्जातिरभिधीयते भेदार्थैरभिन्नविभक्तिकत्वात्—यद्ययं जाति-वाचकः सच्छब्दो भवति सद्द्रव्यमिति भेदवाचिना द्रव्यशब्देन सह सामानाधिकरण्यं न प्राप्नोति। न हि भिन्नार्थवाचकानां सामानाधिकरण्यं पश्यामः। न हि गवाश्वमिति सामानाधि-करण्यं दृष्टम्। अथ द्रव्यादिवृत्तित्वात् सत्ताया एव द्रव्यादिशब्दैः सह सामानाधिकरण्यम्, तथाऽपि पारतन्त्र्यात् सत्ताया गुणत्वम्; गुणगुण्यभिधायिनोश्च शब्दयोः सामानाधिकरण्यं न दृष्टमिति यथा शङ्खस्य शौक्ल्यमिति। एतेन सम्बन्धो व्याख्यातः। सच्छब्दः पिण्डानां वाचको भविष्यतीति न युक्तं पिण्डानामानन्त्यात्। न ह्येकस्य शब्दस्यानेकद्रव्यगुणप्रपञ्चेन सम्बन्ध आख्यातुं शक्यः। न चानाख्याते शब्दार्थसम्बन्धे शब्दादर्थप्रतिपत्तिर्युक्ता (क) स्वरूपमात्र-प्रतीतेः व्यभिचाराच्च। सच्छब्दश्रवणाच्च द्रव्यगुणकर्माणीति परिप्लवमाना बुद्धिरवतिष्ठते। न च यस्मादभिधानात् परिप्लवते बुद्धिस्तदभिधानमिति युक्तं वक्तुम्। तस्मात् सच्छब्दो

## न्यायवार्त्तिकतात्पर्यटीका

न सामर्थ्यभेदकल्पना; (ख)तद्द्वारेण तु कर्मण्यप्युच्यते पदमर्थे समर्थमिति; कार्यं च द्वारमेक-मिति विषयभेदेऽपि सामर्थ्यमेकमेवेति। अपि च पुरुषसंकेतापेक्षवृत्तीनां पदानां न किञ्चित्सामर्थ्यं नाम प्रमाणगोचरः, यदेकमनेकं वा स्यात्। एतेन निरूढलक्षणायां शब्दस्य जात्यभिधानोपक्षीणस्य न व्यक्तिसामर्थ्यं कल्पनीयम्, अन्यत्राव्यापृतस्य तत्रार्थस्यैव सामर्थ्यमिति यदाहुस्तदपि निरस्तम्। स खल्वर्थः प्रतीतो वा व्यक्तिं गमयेद् अप्रतीतो वा? अप्रतीतस्य गमकत्वे सर्वदैव व्यक्त्यवगति-प्रसङ्गः कारणस्य नित्यत्वात्, प्रतीतस्य गमकत्वे दुरुत्तरमात्माश्रयत्वम्। न हि जातिप्रत्यया-दन्यो व्यक्तिप्रत्यय इत्युक्तम्। तस्मात् साधु पारमर्षसूत्रं—व्यक्त्याकृतिजातयस्तु पदार्थ इति।

संप्रत्यन्यापोहपदार्थवादिनमुत्थापयति—न व्यक्त्याकृतिजातयस्तु पदार्थ इति केचि-दिति। अथ द्रव्यादिवृत्तित्वादिति। गवाश्वस्य तु नाऽऽश्रयाश्रयिभाव इति भावः।

## वृत्तिः

त्वेऽपि व्यक्तेर्विशेष्यत्वात् प्राधान्यं तथैव शक्तिग्रहात्। न चाऽऽकृत्यादिसाधारणैकशक्यता-वच्छेदकाभावान्न शक्त्यैक्यमिति वाच्यम्, तथा नियमे मानाभावात्। इदं गवादिपद-मभिप्रेत्य, तेन पश्वादिपदस्य जात्यवाचकत्वेऽपि न क्षतिः। जातिपदं वा धर्मपरं तथैव लक्षणस्य वक्ष्यमाणत्वात्॥ ६६ ॥

---

(क) शब्दस्वरूपमात्रप्रतीतेः कारणत्वे अर्थप्रतिपत्तिरूपकार्यस्य अन्वयव्यभिचार इत्यर्थः।

(ख) 'तद्द्वारेण' कार्यभूतानुभवद्वारेण, 'कर्मणि' अनुभवविषयभूतेऽर्थे, तमधिकृत्योच्यते इत्यर्थः।

## न्यायवार्त्तिकम्

(क)भेदानां न वाचक इति। जातिमन्मात्राभिधायकोऽपि सच्छब्दो न भवति। कस्मात्? अस्वतन्त्रत्वात्। न हि सच्छब्दात्तद्भेदा घटादयो गम्यन्त इति (ख)तद्वद्घटादिभेदानाक्षेपात् सामानाधिकरण्याभावः।

अथवा अस्वतन्त्रत्वादिति सच्छब्दः प्राधान्येन सत्तायां वर्त्तते, तत्र वर्त्तमानः (१)तद्वत्युपचर्यते; यच्च यत्र वर्त्तमानमन्यत्रोपचर्यते न तत्तस्याभिधायकं मञ्चशब्दवदिति। उक्तं चात्र। किमुक्तम्? तद्वतामानन्त्यात् न सच्छब्देनाभिधानं युक्तमिति। तद्वति च न गुणसारूप्यात् प्रत्ययसंक्रान्तिः—यथा स्वामिशब्दस्य भृत्ये, न गुणोपरागात्—यथा नीलः स्फटिक इति क्रमवृत्त्यभावाद् युगपदसम्भवाच्च अयथार्थज्ञानोत्पत्तिप्रसङ्गाच्च। तस्मान्न जातिमन्मात्राभिधायकोऽपि। असाधारणविशेषणविशेष्याभिधायको भविष्यतीति न युक्तम्,

## न्यायवार्त्तिकतात्पर्यटीका

जातिमन्मात्राभिधायकोऽपि सच्छब्दो न भवति। कस्मात्? अस्वतन्त्रत्वादिति। जातिमन्तो घटपटादयः, न चैते घटादिशब्दादिव निरपेक्षात् सच्छब्दात् प्रतीयन्ते किंतु सच्छब्दाद् घटादिषु बुद्धिः परिप्लवते। घटादिशब्दापेक्षस्तु सच्छब्दो घटादिनिश्चयहेतुः। तस्माद् घटादिशब्दपरतन्त्रत्वान्न तद्वतो वाचक इत्यर्थः।

अथ वेति। यद् यत्र परतन्त्रं वर्तते तत्तस्य न वाचकं यथा गङ्गागवादिशब्दास्तीरवाहीकादेः, तथा च जातिशब्दा जातिमति, तस्मान्न जातिमद्वाचकाः, ते हि जातिमपेक्ष्य जातिमति वर्तन्त इति तादृशं पारतन्त्र्यमित्यर्थः। अथ जात्यनपेक्षं कस्मान्न तद्वति वर्तत इत्यत आह—उक्तं चात्रेति। अस्तु तर्ह्यौपचारिक एव तद्वति प्रत्यय इत्यत आह—तद्वति चेति। यथा आधिपत्यलक्षणो गुणः स्वामिनो जितकाशिनि भृत्येऽप्यस्तीति तत्र स्वामिशब्दः प्रवर्तते न तथा जातिगुणयोगो व्यक्तेरित्यर्थः। अपि च अन्यशब्दोऽन्यत्र वर्तमानः प्रथमं तावदन्यधियमुत्पादयति अथान्यत्र वर्तते यथा गोशब्दो गवि बुद्धिमुत्पाद्य वाहीके वर्तते। न चेह जातिशब्दो जातौ तद्वातिक्रमेण प्रवृत्तः। न चौपचारिकस्य वृत्तियौगपद्यमित्याह—क्रमवृत्त्यभावाद् युगपदसंभवाच्च। गुणोपरागं दूषयति—अयथार्थज्ञानोत्पत्तिप्रसङ्गाच्च। गुणोपरागाद् यथा नीलः स्फटिक इति ज्ञानमेवं सर्वमेव शाब्दं ज्ञानं विना बाधकमयथार्थमेव स्यादित्यर्थः। एकस्वलक्षणाभिधानं दूषयति—असाधारणेति। अशक्यसमयत्वाच्चेत्यपि द्रष्टव्यम्।

---

(१) 'तद्वदित्युप-' इति ख०।

(क) भेदानामिति पिण्डानामित्यर्थः।

(ख) तद्वदिति जातिमदित्यर्थः।

## न्यायवार्त्तिकम्

अन्यत्र (१)प्रत्ययाभावप्रसङ्गात्। न चान्या गतिरस्ति। तस्मादन्यार्थापोहकृच्छ्रुतिरिति। (२)अन्यपदार्थान्तरापोहं (३)हित्वा स्वार्थं कुर्वती श्रुतिरभिधत्त इत्युच्यत इति।

अत्रास्माभिर्व्यक्त्याकृतिजातयः पदार्थ इति प्रधानोपसर्जनभावस्यानियमेन व्यवस्थापितम्, एकान्तवादिनश्चैते दोषा इति। न चैते दोषाः। कथमिति ? यत्तावत्सत्ताशब्दः सत्ताया न वाचक इति, तन्न व्याघातात्—सत्ताशब्दो न सत्तावाचक इति व्याहतमुच्यते। कथं वा तदवाचकत्वे सति सत्ताशब्द इत्यभिधीयते। भवदभिप्रायेणाभिधीयत इति चेत्—अथ मन्यसे नैव नः सिद्धान्ते सत्तादिशब्दाः सन्ति, किं तु भवद्भिः सत्ताशब्दो द्रव्यगुणकर्मशब्दा इति च परिकल्प्य व्यवहारः क्रियते, ततोऽस्माभिरपि युष्मदभिप्रायानुविधानेन सत्ताशब्दा इति वाच उच्चार्यन्त इति; न व्याघातानिवृत्तेः—सदित्येवमादीनि पदानि लोकप्रसिद्धानि केष्वर्थेषु

## न्यायवार्त्तिकतात्पर्यटीका

तदेवमन्यापोहवादिनमुत्थाप्य दूषयति—अत्रास्माभिरिति। व्यक्त्याकृतिजातयस्तिस्रोऽस्माकं पदार्थः, गुणप्रधानभावस्तु क्वचिदेव कस्यचित्। जातिमद्व्यक्त्यभिधाने द्विविधमप्यस्वातन्त्र्यं न संभवति शब्दानाम्। (क) न तावद् व्यक्तिज्ञाने जनयितव्ये तदर्थं जातिज्ञानं पूर्वमपेक्षन्ते शब्दा इति संभवति द्वयोरप्येकज्ञानवेद्यत्वनियमेन पौर्वापर्यायोगात्; नापि विशेषवाचकं पदं विना जातिशब्दानां बुद्धिपरिप्लवात् तद्विनिश्चयाय विशेषशब्दापेक्षयाऽस्वातन्त्र्यम्, स्वविषये जातिशब्दाद्बुद्धेरपरिप्लवात्। जातिमद्व्यक्तिमात्रमस्य हि विषयो न चात्र बुद्धिपरिप्लवः। (ख)व्यक्तिनियमस्तु विषय इति न तत्र बुद्धिपरिप्लवो दुष्यति। दूराद्धि आरोहपरिणाहवद्द्रव्यमात्रं गोचरः प्रत्यक्षस्य, न तु स्थाणुः पुरुषो वा; न चात्र बुद्धिपरिप्लुतिः प्रत्यक्षक्षतिं कांचनाऽऽवहति। न चास्मिन् पक्षे जातिशब्दो व्यक्त्याकृत्योः परशब्दो येनौपचारिकः स्यात्। न च सामानाधिकरण्यं न कल्पते जातिव्यक्तिपदयोरेकार्थाभिधायिनोर्वैयधिकरण्यायोगात्। तस्मात् सर्वमवदातम्। एवमनेकान्तवादे परोक्तदोषाप्रसङ्गमभिधाय दूषणवाक्यं परोक्तं दूषयन् दोषाभावमाह—(ग)न चैते दोषा इति। सत्ताशब्द इति, सत्तायाः शब्द इति वा विग्रहः सत्तारूपः शब्द इति वा ? तत्र पूर्वस्मिन् कल्पे सत्ताया न वाचकः सत्ताशब्द इति व्याघातः। उत्तरस्मिन् कल्पे 'न वाचकः सत्ताया' इत्यनेन व्याघातः, सत्ताया इत्यनेन शब्देन सत्तामभिधत्से अथ च तस्य वाचको न सत्ताशब्द इति ब्रूषे ततो व्याघातः। सत्ताशब्द इति चोपलक्षणार्थं सत्ताया न वाचक इति द्रष्टव्यम्। शङ्कते—भवदभिप्रायेणेति। निराकरोति—नेति। यद-

(१) 'प्रत्ययाभावप्रसङ्गाच्च' इति ख०। (२) 'अन्यशब्दार्थान्तरापोहं' इति क-ख-धृतं पाठान्तरम्। (३) 'हित्वार्थं' इति ख०।

(क) अस्वातन्त्र्यद्वयासम्भवमेव दर्शयति—न तावदिति। (ख) 'व्यक्तिनियमस्तु न विषय' इति पाठः सम्यक् प्रतिभाति। (ग) 'न चैते' इति वार्त्तिके विशेषः।

## न्यायवार्त्तिकम्

वर्तन्त इत्युभयोर्विचारः । वयं तु ब्रूमः सत्ताशब्दः सत्तायां वर्तते त्वं पुनर्ब्रवीषि सत्ताशब्दो न सत्तायामिति । एवं ब्रुवाणो मया विरोधेन प्रत्यवस्थीयसे विरोधोद्धारं चाकृत्वा त्वन्नयो मयाऽभिधीयत इति ब्रुवाणो न व्याघातमतिवर्तसे ।

यच्चेदमुच्यते त्वया (१) त्वया परिकल्पिताः सत्तादिशब्दा इति ; तदपि न, परिकल्प्यविषयानभिधानात्—परिकल्प्यस्य च विषयोऽतथाभूतस्य तथाभाविभिः सामान्ये सत्यध्यारोपिततद्धर्मणः प्रधानार्थप्रतिपत्तिः, यथा स्थाणौ पुरुष इति । यदि चामी शब्दाः परिकल्पिता भवन्ति प्रधानमेषां वाच्यम् । न हि निष्प्रधानं परिकल्प्यम् । यत्पुनरेतत् (२)भेदोऽर्थैरभिन्नविभक्तिकत्वात् इति ; तन्न, (३)समानार्थापरिज्ञानात्—न ब्रूमः सत्ताशब्देन द्रव्यशब्दस्य सामानाधिकरण्यम्, अपि तु सत्तायाः प्रधानसाधनवाचिना सच्छब्देन द्रव्यगुणकर्माण्यभिधीयन्ते,(४) गुणकर्मशब्दैरपीतरेतरविशेषणविशेष्यभावापन्नैस्तान्येव ; एवं च सति युक्तं सामानाधिकरण्यमुभयोः सद्द्रव्यशब्दयोरेकविषयत्वात् । यदा पुनरयं सत्ताशब्दः सत्ताप्रधान एवाङ्गभूतं साधनमभिधत्ते न तदा सामानाधिकरण्यम्, द्रव्यस्य सत्तेति भवति । तस्मात् सामानाधिकरण्यानुपपत्तिरदोषः । विभक्तिभेदनियमाद् गुणगुण्यभिधायिनोः सामानाधिकरण्यासिद्धिः सद्द्रव्यशब्दयोरिति (५)तदनेन प्रत्युक्तम् ।

## न्यायवार्त्तिकतात्पर्यटीका

स्मदभिप्रायार्थं प्रतिपद्यसे अर्थप्रतीत्यधीनोऽभ्युपगम इति अभ्युपगमं ब्रूषे (क) तत्तथा च न निषेद्धुमर्हसीति भावः ।

अथ निषेद्धुं प्रत्येमि न पुनरभ्युपैमीत्याशङ्क्याऽऽह—यच्चेदमिति । दूषयति—तदपि नेति । 'अतथाभूतस्य' अपुरुषभूतस्य स्थाणोः 'तथाभाविभिः' पुरुषैः सामान्ये सति अध्यारोपितः पुरुषत्वादिर्धर्मो यस्य स तथेत्युक्तः तस्य, 'प्रधानमर्थः' पुरुषः, तदाकारा प्रतीतिरित्यर्थः । सत्तायाः प्रधानसाधनवाचिनेति । प्रधानं साधनं व्यञ्जकतया भवितृ द्रव्यं तद्वाची खलु सच्छब्दः, सत्ताशब्दस्तु द्रव्योपसर्जनभाववाची न तस्य द्रव्यवाचिना सामानाधिकरण्यमित्यर्थः । सामानाधिकरण्यासिद्धिः सद्द्रव्यशब्दयोरिति, सिद्धिः प्रतीतिः सा भवन्मते न स्यादिति यदुक्तं कैश्चित् तद् अपि अनेन सामानाधिकरण्यव्यवस्थापनेन प्रत्युक्तम् ।

(१) एकं 'त्वया' पदं ख-पुस्तके नास्ति। (२) 'भेदाऽर्थैकभिन्नविभक्तिकत्वात्' इति क-वार्तिकपाठः । ख-पुस्तकपाठो गृहीतः । (३) 'सामानाधिकरण्यार्थापरिज्ञानात्' क-ख-पुस्तकधृतं पाठान्तरम् । (४) अतः परं ख-पुस्तके 'द्रव्यत्व' इत्यधिकं मुद्रितम् । (५) क-ख-पुस्तकयोः 'एतदनेन' इति पाठः ।

(क) अत्र 'तद्' इति मुद्राप्रमादागतं सम्भाव्यते ।

## न्यायवार्त्तिकम्

एतेन सम्बन्धो व्याख्यातः। कथमिति ? न सच्छब्देन सम्बन्धोऽभिधीयते अपि तु (क)सम्बन्धिशब्देनैव, सम्बन्धश्च गुणः न सच्छब्दो गुणशब्दः, न च गुणशब्देनैव द्रव्यवाचिनः शब्दस्य सामानाधिकरण्यमस्तीति। यत्पुनरेतत् आनन्त्यान्न जातिशब्दो भेदानां वाचक इति। कश्चैवमाह जातिशब्दो भेदानां वाचक इति ? (१)स्वयम्प्रक्लृप्तां वाचोयुक्तिं भवान् प्रतिषेधति। यदि तर्हि भेदानां न वाचकः कथं सच्छब्देन द्रव्यगुणकर्माण्यभिधीयन्ते ? न चायं भोः सच्छब्दो जातिशब्दः अपि तु भेदशब्द एवायम्, भेदशब्देन च भेद एवाभिधीयते इति न किञ्चिद्बाध्यते। कथं न बाध्यते ? यदा सच्छब्द एको भेदानामानन्त्यं तदवस्थमेव। न चैकस्यानेकेन सम्बन्धः शक्य आख्यातुम्। न चानाख्याते सम्बन्धे शब्दार्थप्रतिपत्तिर्युक्तेति ? न केवलानामनभिधानात्— यो हि सच्छब्देनाविशेषणानि द्रव्यगुणकर्माण्यभिधीयन्त इत्यभिधत्ते तं प्रत्येष दोषः। अस्माकं तु द्रव्यगुणकर्माणि सत्ताविशेषणान्यभिधीयन्ते। यत्र यत्र सत्तां पश्यति तत्र तत्र सच्छब्दं प्रयुङ्क्ते। एका च सत्ता तत्प्रत्ययस्यानुवृत्तेः। तस्माद्भेदानामानन्त्यं न दोषः। कश्चायमेवम्भूतः साध्यसाधनभावः, शब्दं पक्षयसि आनन्त्यादिति वस्तुधर्मं हेतुत्वेनाभिधत्स इति। अथ भेदा एव जातिशब्दावाच्यत्वेन पक्षीक्रियन्ते (ख) तथाऽपि नान्वयी न व्यतिरेकी च दृष्टान्तोऽस्तीत्यहेतुरानन्त्यादिति। अथाप्येकदेशान् पक्षीकृत्याऽऽनन्त्यादिति हेतुः, एकदेशो दृष्टान्त इति ; अयमपि न, विरोधात्। एवं च सति न कश्चित् पदार्थो वाच्यः न कश्चिच्छब्दो वाचक इति वाच्यवाचकभावनिवृत्तौ विशेषणमनर्थकम्, एते न वाच्या एते न वाचका इति।

## न्यायवार्त्तिकतात्पर्यटीका

व्याख्यातः निराकार्यत्वेन। स्वयंप्रक्लृप्तां वाचोयुक्तिमिति, जातिशब्द इति सदादिशब्देषु स्वयंप्रक्लृप्ता या वचनव्यक्तिस्तां प्रतिषेधति, तत्र चास्माकं सिद्धसाधनमित्यर्थः। सच्छब्दो जातिशब्दः तस्य भेदवाचकत्वं नास्य संमतमिति मन्वानो देशयति—यदि तर्हीति। सुगमः परिहारः। तथाऽपि नान्वयी न व्यतिरेकी चेति। ये ये अनन्ता न ते जातिशब्दवाच्या इति न दृष्टान्तः—सर्वभेदपक्षीकरणात्। नापि यो जातिशब्दवाच्यो न तत्रानन्त्यं यथा गोत्वादिकमिति शक्यं वक्तुं जातेरेव भवन्मते व्योमारविन्दायमानत्वादिति भावः। शङ्कते—अथापीति। तथा सत्यन्वयी दृष्टान्तो (ग)लक्ष्यत इति भावः। निराकरोति—अयमपि नेति, विशेषणोपादानविरोधात्। न हि भेदमन्तरेण किञ्चिदस्ति वस्तुसद् यतो विशेषणं व्यावर्त्तयेदिति भावः।

---

(१) 'क्लृप्तां स्वयम् ( युक्तां ) वाचोयुक्ति'मित्येवं क-वार्त्तिके मुद्रितम्। 'स्वयं प्रयुक्तां' इति ख०।

(क) 'सम्बन्धशब्द नैव' इति युक्तं सम्भाव्यते। (ख) भेदा जातिशब्दावाच्या आनन्त्यादिति प्रयोग इति बोध्यम्। (ग) 'लभ्यते' इत्येव पाठो नवेति विभाव्यम्।

## न्यायवार्त्तिकम्

यत्पुनरेतद् व्यभिचारादिति ; न, व्यभिचारविषयापरिज्ञानात्—व्यभिचारी हि नाम स ज्ञेयः यः स्वविषयतज्जातीयवृत्तित्वे सत्यन्यत्र वर्तते, न पुनरयं सच्छब्दः स्वविषयव्यतिरेकेणासति वर्तते। तस्मादस्थाने व्यभिचारदेशनेति। हेतुभावानभ्युपगमाच्च—केन चात्र हेतुरभिधीयते द्रव्यं गुणः कर्म सत्त्वादिति। तस्मादयुक्तमेतदपि। भेदवाचकत्वप्रतिषेधाद् द्रव्यसच्छब्दयोः सामानाधिकरण्यमिति न वक्तव्यं व्याघातात्—न च कश्चिच्छब्दो द्रव्यवाचकः द्रव्यसच्छब्दयोश्च सामानाधिकरण्यमिति व्याहतम्।

यत्पुनरेतत् तद्वतो नास्वतन्त्रत्वादिति, न किल सच्छब्देन तद्भेदा घटादयो गम्यन्ते, तद्वद्-घटादिभेदानाक्षेपात् सामानाधिकरण्याभाव इति ? तन्न उक्तोत्तरत्वात्—उक्तोत्तरमेतत्, सद्द्रव्यशब्दयोरेकविषयत्वात् सामानाधिकरण्यमिति। तद्वद्घटादिभेदानाक्षेप(१)इति चायुक्तं सच्छब्देन सत्तासाधनानां द्रव्यगुणकर्मणामाक्षेपात्। सत्ताशब्देन द्रव्यगुणकर्माणि नाऽऽक्षिप्यन्ते न पुनः(२)शब्देन (३)शक्यं वक्तुं सत्ताशब्देनापि गुणभूतानि गम्यन्त इति। सदिति चायं (४)अभिधानशब्दः, कस्तस्याभिधेयः ? (५)यो यस्मात् प्रतीयते स तस्यार्थ इति। कोऽस्यार्थः ? विभज्यते, सत्ता तद्योगोऽर्थान्तरमिति त्रयोऽर्थाः। तत्र प्रधानोपसर्जनभावविवक्षायां प्रधानं

## न्यायवार्त्तिकतात्पर्यटीका

हेतुभावानभ्युपगमादिति। न शब्दोऽर्थप्रत्यायने लिङ्गं येन व्यभिचारेण दुष्यति। न च प्रत्यायकमात्रं व्यभिचारेण दुष्यति चक्षुरादीनामपि नीलादिव्यभिचारेण पीतादौ वर्तमानतया व्यभिचारिणामप्रत्यायकत्वप्रसङ्गात्। संकेतग्रहस्तु सत्यपि भेदानां व्यभिचारे (क)चैकैक-जातिक्रोडीकृतानां सुकर एवेति भावः। भेदवाचकत्वप्रतिषेधादिति। भेदवाचकत्वे निषिद्धे द्रव्यवाचकत्वं निषिद्धं भवति द्रव्यस्य भेदत्वात्। ततश्च द्रव्यशब्द इति व्याघात इत्यर्थः।

उक्तोत्तरमेतत् (ख)सच्छब्दद्रव्यशब्दयोरेकविषयत्वादिति। विशेषमात्रं विषयः सदादि-शब्दस्य न पुनर्नियतोऽयमेव नान्य इति भावः (ग)। सत्ताशब्देन द्रव्यगुणकर्माणि नाऽऽक्षिप्यन्त इति। सामानाधिकरण्ययोग्यतयेत्यर्थः तदन्तरेण तदनुपपत्तेः। आक्षेपमात्रं तु शक्यं वक्तुमित्याह—शक्यं वक्तुमिति। पृष्टा सच्छब्दस्य गुणप्रधानभावेन त्रयोऽर्था इति

(१) 'इति वा युक्तम्' इति ख०। (२) 'सच्छब्देन' इति ख०। (३) 'शक्यते' इति क-ख-पुस्तकपाठः। (४) 'सच्छब्दः' ख०। (५) 'योऽस्मात्' ख०।

(क) अत्र च-शब्दार्थश्चिन्त्यः। (ख) वार्त्तिके 'सद्द्रव्यशब्दयो'रिति विशेषः। (ग) अतः परं 'विशेषशब्देन चासौ सामानाधिकरण्येन नियम्यते न तु शंस्यते' इति क-ख-पुस्तकयोः अधिकपाठतया धृतम्।

## न्यायवार्त्तिकम्

साधनं गम्यते, अङ्गं सत्ता च तद्योगश्च। किंकृतः प्रधानाङ्गभावः? अर्थकृतः—यदा सत्ता किञ्चिद् कुरुते तदा सत्ता विशेषणं पदार्थमुपादाय किञ्चित् करोति तत्प्रधानम्। अङ्गं सत्ता प्रधानप्रत्ययहेतुत्वात्। यस्मात् सत्तया पदार्थो(१)विशेष्यते अङ्गहीने प्रत्ययनिवृत्तेः यत्र तदङ्गं सत्तादिकं नास्ति न तत्र सदिति प्रत्ययः। तदेवं तद्वद्घटादिभेदानाक्षेपादित्ययुक्तम्।

यत्पुनरेतत्-सच्छब्दः सत्तायां प्राधान्येन वर्त्तत इति तत्र वर्त्तमानः (२)तद्वत्युपचर्यत इति; तन्न, सच्छब्दविषयापरिज्ञानात्—न भवता सच्छब्दस्य विषयो व्यज्ञायि। क एवमाह सच्छब्दः सत्तायां प्राधान्येन वर्त्तत इति? यथा च सच्छब्दस्य द्रव्यगुणकर्माणि सत्तासाधनभावाद्विषय इति तथा चोक्तम्।

एतेन भेदानामानन्त्यं प्रत्युक्तम्, सच्छब्दस्य विषयः सत्तासाधनम्, विषयश्च सत्तासाधनभूत एक एवेति।

यत्पुनरेतत् तद्वति च न गुणसारूप्यात् प्रत्ययसङ्क्रान्तिर्यथा स्वामिशब्दस्य भृत्य इति। अस्यार्थः स्वाम्यनुकारित्वाद् भृत्ये स्वामिशब्द इति। एतत्तु न बुध्यामहे प्रत्ययानां संक्रान्तिरिति। यदि स्वामिप्रत्ययविषयत्वम्, तन्न प्रत्ययसङ्क्रान्तिः। न हि स्वामिप्रत्ययो भृत्ये भवति, केवलं गुरुतां प्रियतां वा सम्पश्यन् स्वामिशब्दं(३)गुणभूतं तत्र प्रयुङ्क्ते। (४)यथा च भृत्यः(५)स्वाम्यर्थकारित्वाद् भृत्यः स्वामीत्युपचर्यते न पुनरेवं सत्ताशब्दः कदाचिदपि द्रव्यादिषु वर्त्तत इति। यदा तु सतां भावः सत्तेति तदा सतां विशेषकत्वाद् गुणभूतानां सत्ताशब्देनाभिधानम्, विशेषकत्वमुपचारः। एतेनैव 'गुणोपरागाद् यथा नीलः स्फटिक इति' (क)एतत् प्रत्युक्तम्।

यत्पुनरेतत् क्रमवृत्त्यभावाद् युगपदसम्भवाच्चेति। अस्यार्थः। सत्ताशब्दः सत्तायां किल वर्त्तित्वात् तद्वति वर्त्तत इति। न चैवं पश्यामः। युगपदपि न सम्भवति—सत्ताप्रत्ययश्च द्रव्यप्रत्ययश्च

## न्यायवार्त्तिकतात्पर्यटीका

सूत्रकारन्यायेनावधारयति—सदिति चायमिति। अर्थकृत इति। अर्थः कार्यं तत्कृतः। एतदुक्तं भवति—यस्य कार्येण संबन्धस्तत्प्रधानं यस्य कार्यसंबन्धावच्छेदकत्वं तदङ्गमिति। एतेनेति, अर्थत्रयाभिधानेन।

न हि स्वामिप्रत्ययो भृत्ये भवति, अपि तु तदर्थक्रियाकारितया स्वामिव्यपदेशमात्र-

---

(१) 'विशिष्यते' ख०। (२) '-तद्वदुप-' ख०। (३) 'युगपद्भूतं' ख०। (४) 'तथा' क०।
(५) 'स्वाम्यनुकारित्वात्' ख०।

(क) 'एतत्' इति क-ख-पुस्तकयोः नास्ति, तद्भूतपाठान्तरे वर्त्तते इति।

## न्यायवार्त्तिकम्

न युगपद् भवतः। एतदपि न, उक्तोत्तरत्वात्—उक्तोत्तरमेतत्। नात्र क्रमो न युगपत्प्रत्ययः सत्प्रत्ययस्य साधनविषयत्वात्। एतेनायथार्थज्ञानोत्पत्तिप्रसङ्गादिति प्रत्युक्तम्। एवं हि (१)कुहेतुप्रताननिरासाद् व्यवस्थितं व्यक्त्याकृतिजातयः पदार्थ इति।

न जातिशब्दो भेदानां वाचक इति च विशेषणानर्थक्यम्। न हि कश्चिच्छब्दो भवता भेदानां वाचकत्वेनाभ्युपगम्यते विशेषणं नाम(२)विशेष्ये सति सामान्यप्रतिपत्तौ च भवति, नास्य किञ्चिद्विशेष्यमस्ति। न च जातिशब्दस्य कश्चित्पदार्थो वाच्योऽभ्युपगम्यते। तस्माद्विशेषणानर्थक्यम्। विरोधाच्च—यदि चायं जातिशब्दो भेदानां वाचकोऽभविष्यदपि तर्हि जातिशब्द एव नाभविष्यत्(३)न ह्यन्यवाचकानां तच्छब्दत्वं सम्भवति। कथं वा भेदवाचकत्वे सति जातिशब्द इत्युच्यते। यच्चोच्यते न जातिशब्दो भेदानां वाचक इति तथा तत्। को हि स्वस्थात्मा जातिशब्दवाच्यान् भेदानभ्युपैति। यदि च जातिशब्दवाच्या भेदा न भवन्ति अन्यशब्दवाच्यास्तर्हि प्राप्नुवन्ति। अथान्यशब्दवाच्या अपि न भवन्ति ते न जातिशब्दवाच्या नान्यशब्दवाच्या इत्युभयावाच्यत्वे किमस्य विशेषणस्य सामर्थ्यं न जातिशब्दो भेदानां वाचक इति। अत एवं वक्तव्यं न वाच्या भेदा (क)अवाचकाः शब्दा इति। अथ मन्यसे परमतव्यपेक्षयैतदुच्यते न जातिशब्दो भेदानां वाचक इति, नानभ्युपगमात्। न हि कश्चित्तान्त्रिको-ऽस्ति यो जातिशब्दवाच्यान् भेदान् प्रतिपद्यते। जातेरप्यवाचकत्वे व्याघातो जातिशब्द इति। न हि यो यस्यावाचकः स तच्छब्द इति शक्यं वक्तुम्। न जातिशब्दो भेदानां वाचक इति

## न्यायवार्त्तिकतात्पर्यटीका

मित्यर्थः। नात्र क्रमो न युगपत्प्रत्यय इति, भेदाधिष्ठाने क्रमयौगपद्ये नैकस्मिन् विशिष्टद्रव्यप्रत्यये संभवत इति। एतेनेति शब्दस्य सत्ताविशिष्टद्रव्यवाचित्वाभिधानेन अयथार्थज्ञानोत्पत्तिप्रसङ्गादिति प्रत्युक्तम्। परमार्थस्वच्छधवले हि स्फटिके नीलीद्रव्योपधानान्नीलप्रत्ययो भवतु भ्रान्तः तस्य परमार्थतो नीलगुणासमवायात् सत्तासमवायस्तु द्रव्यादीनां पारमार्थिक इति न द्रव्यादिषु सदिति प्रत्ययस्य मिथ्यात्वमित्यर्थः।

न हि कश्चिच्छब्द इति। स्वलक्षणानामशक्यसमयतया न कश्चिदपि शब्दो भवता तद्वाचकत्वेनाभ्युपेयत इत्यर्थः। न च जातिशब्दस्येति, जातेरभावादिति भावः। न जातिशब्दो भेदानां वाचकः कस्य तर्हीति पूर्वं भेदान् प्रधानीकृत्योक्तं संप्रति तु जातिशब्दानित्येतावता अपौनरुक्त्यम्।

(१) 'कु हेतुप्रधाननिरासात्' ख०। (२) 'विशेष्ये च सति' ख०। (३) 'न ह्यन्यपदार्थवाचकानां' ख०।

(क) 'न वाचकाः शब्दाः' इति तु शोभनम्।

## न्यायवार्त्तिकम्

कस्य तर्हि वाचकः ? भेदवाचकत्वप्रतिषेधादन्यवाचकत्वमायातम्। अथान्यवाचकत्वमपि नेष्यते व्यर्थं विशेषणं जातिशब्दो भेदानां न वाचक इति। सर्व एव शब्दा अर्थानां न वाचका इति युक्तं वक्तुम्।

अथावाचकाः शब्दा अवाच्या अर्था इति अयुक्तं चैतद् व्याघातात्—अवाचकाश्च शब्दा भवन्ति अवाचकत्वं च शब्दानां शब्देनैव प्रतिपाद्यत इत्यवाचकत्वे शब्दानां प्रतिज्ञाहेत्वोर्व्याघातः। 'न हि जातिशब्दो भेदानां वाचक' इति प्रतिज्ञा, हेतुः 'आनन्त्या'दिति, उभयं च वचनात्मकमित्युभयस्य (१)अवचनात्मकत्वाद् व्याघातः। शब्दांश्चावाचकान् प्रतिपद्यमानेन लोकप्रतिपादनोपायोऽन्यो वक्तव्यः। अन्यथाऽभ्युपगत इति चेत्—अथ मन्यसे न मया शब्दा अवाचका अभ्युपगम्यन्ते नाप्यर्था अवाच्याः अपि तु यो भवद्भिर्वाच्यवाचकन्यायोऽभ्युपगम्यते सोऽस्माभिर्निराक्रियते। अस्माकं तु शब्देनान्यापोहलक्षणा जातिरभिधीयत इति ? विशिष्य वक्तव्यम्—यद्यन्यथा शब्दा अर्थानामभिधायका भवन्ति (२)विशिष्य वक्तव्यम् अस्मत्प्रकॢप्तजात्यादिव्यतिरेकेण जात्यादिशब्दा न जात्यादीनां वाचका इति। स्वरूपानभिधानाच्च—न च समानप्रत्ययकारणताव्यतिरेकेण जातेः स्वरूपं निर्देष्टुं शक्यम्। न चानुवृत्तिप्रत्ययः प्रत्याख्यातुं शक्यः। न च विशेषप्रत्ययेनाकस्माच्छक्यं भवितुम्, यतोऽयं प्रत्ययः सा जातिरिति नास्ति विवादः। (३)एष तावद् यथाश्रुति वाक्ये दोषः। अथ जातिशब्दावाच्यत्वेन भेदा(क)अपि पक्षीक्रियन्ते, एतस्मिन्नपि प्रतिज्ञार्थे यावन्त एते वाक्यदोषास्ते सर्वे प्रसज्यन्ते। एवमेकदेशपक्षीकरणेऽपि विशेषणविशेष्यभावानुपपत्तेः पूर्वदोषानुवृत्तिः।

यदपीदमुच्यते द्रव्यसच्छब्दयोः सामानाधिकरण्यमिति ; तदपि न,व्याघातात्। द्रव्यसच्छब्दयोश्च सामानाधिकरण्यम्, न च भेदवाचकाः शब्दा इति व्याहतम्। उपचारतो न व्याघात इति

## न्यायवार्त्तिकतात्पर्यटीका

नास्ति विवाद इति। अन्यापोहजात्योर्लक्षणाभेदे नास्ति विवाद इत्यर्थः।

द्रव्यसच्छब्दयोस्तु(ख) सामानाधिकरण्यं न च भेदवाचकाः शब्दा इति व्याहतमिति। द्रव्यमिति हि विधिरूपमेवं सदित्यपि विधिरूपं तच्छब्दौ तयोर्वाचकौ तयोरन्यापोहार्थत्वं व्याहतम्, विधिशब्दौ चान्यापोहार्थाविति न संभवति। न च भेदानभिधायिनोः सामानाधिकरण्यमपि युज्यते। भिन्नाभ्यां हि निमित्ताभ्यामेकस्मिन्नर्थे भेदरूपे वर्तमानौ समानाधिकरणौ भवेतां

---

(१) 'अवाचकत्वाद्व्याघातः इति' क-ख-पुस्तकधृतं पाठान्तरं तु शोभनम्। (२) अत्र 'इति'पदं क-पुस्तके अधिकम्। (३) 'एतावद् यथा'—ख०।

(क) 'अपि'शब्दोऽवधारणे। क-ख-पुस्तकयोः 'अपी'त्यत्र 'एव'शब्दः पाठान्तरतया धृतः। (ख) वार्त्तिके 'तु' इत्यत्र 'च' इति पठितम्।

## न्यायवार्त्तिकम्

चेत्—अथ मन्यसे द्रव्यसच्छब्दावेतौ उपचारतोऽभिधीयेते। कथमिति? द्रव्यशब्देनाद्रव्यव्युदासः सच्छब्देनासद्व्युदासः। तावेतावसदद्रव्यव्युदासरूपेण प्रवर्त्तमानौ एकमर्थं (१) ब्रूत इति

## न्यायवार्त्तिकतात्पर्यटीका

भेदं चेन्नाभिधत्तो नैकत्र वर्तेयाताम्। अवर्त्तमानौ च भिन्नप्रवृत्तिनिमित्तपर्यवसितौ गौरश्व इतिवत् न समानाधिकरणौ भवितुमर्हतः। सोऽयमपरो व्याघातः भेदानभिधानं च सामानाधिकरण्यं चेति। तदनेन व्याघातद्वयमुक्तम्। तदेतद्व्याघातद्वयं निराचिकीर्षुराशङ्कते—उपचारतो न व्याघात इति चेत्। तदेतद्विभजते—द्रव्यसच्छब्दाविति। तदनेन प्रथमो व्याघातः परिहृतः। द्वितीयं व्याघातं शङ्कित्वा परिहरति—तावेताविति। ब्रूतः प्रतिपादयतोऽध्यवस्यत इति यावत्।

एतदत्राऽऽकूतम्। (क) विकल्पयोनयो हि शब्दास्तदेवाभिनिविशन्ते यद्विकल्पानां गोचरः, कार्यकारणयोः सामानाधिकरण्येन प्रतिपत्तेः। चतुष्टयी चेयं विकल्पानां(ख) सदसद्धर्मिसद्धर्माव-गाहिनां (ग)जातिः गौरीश्वरो नीलं नित्यमित्येवमादीनां न च विकल्पानां गोचरः, यो (घ)विकल्पते देशकालावस्थाभेदेनैकत्वेनानुसंधीयते तदेवेदमिति (२)स एव च(२*) शब्दगोचरः, तत्र शब्दानां शक्यसंकेतत्वात्। न च स्वलक्षणानि त्रैलोक्यविलक्षणान्येवमिति न विकल्पविषयः। न च सामान्यं नाम किंचिदस्ति यद्विषयः स्यात्। अत एव न तद्वन्ति स्वलक्षणान्यपि तेषां सामान्यानामभावे तद्वत्तायाः स्वलक्षणेष्वभावात्। अपि च—अस्तु सामान्यं वस्तुसत्, तथाऽपि नित्यत्वादनुपकार्यतया स्वलक्षणाधारत्वानुपपत्तिः। आधारत्वमपि हि करणत्वमेव। पतनधर्माणो हि बदरादयः कुण्डादिभिरपतनधर्माणः क्रियन्ते। न च नित्यं क्रियत इति नाधेयम्। तथा वृक्षत्वशिंशपात्वे स्वतन्त्रे एव सामान्ये स्वशब्दाभ्यामवगमिते न गौरश्व इतिवत् सामानाधिकरण्यं भजेताम्। अपि च भवतु नित्यस्याप्युपकार्यत्वेनाऽऽधेयत्वम्, तथाऽप्येतद्विकल्पनीयम्—

---

(१) 'ब्रवाते' इति क-ख-वार्त्तिकपाठः। (२) 'एव च स' ख।

(क) तथाच 'विकल्पयोनयः शब्दा विकल्पाः शब्दयोनयः।
कार्यकारणता तेषां नार्थं शब्दाः स्पृशन्त्यपि'॥
इति (रत्नाकरावतारिका)।

(ख) अत्र विकल्पानां चतुष्टयत्वोपपत्तये 'सदसद्धर्मिधर्मावगाहिनां' इति 'सदसद्धर्मिसदसद्धर्माव-गाहिनाम्' इति वा पाठो युक्तः सम्भाव्यते। तत्र क्रमेणोदाहरणानि—गौरिति सन् धर्मी, ईश्वर इत्यसन् धर्मी नग्नभिक्षुभिरीश्वरानभ्युपगमात्; नीलमिति सन् धर्मः, नित्यमिति च असन् धर्मः सर्ववैनाशिकानां बौद्धानां मते नित्यवस्तुनो गगनारविन्दवदलीकत्वादिति ध्येयम्।

(ग) 'जातिः' इति 'न च' इत्यतः परं द्रष्टव्यम्, तेन 'न च जातिः विकल्पानां गोचरः' इति सम्यक्तया प्रतिभाति।

(घ) 'विकल्पते' इत्यत्र 'विकल्प्यते' इति पाठः समीचीनतया सम्भाव्यते।

## न्यायवार्त्तिकतात्पर्यटीका

किं येनैव स्वभावेन तत् स्वलक्षणं वृक्षत्वमुपकरोति तेनैव शिंशपात्वमपि, अथ स्वभावान्तरेण। अथ हि स्वभावान्तरेण, स्वभावभेदादन्यत्स्वलक्षणं शिंशपात्वाधारोऽन्यच्च वृक्षत्वाधार इति पुनरपि गौरश्व इतिवत् सामानाधिकरण्याभाव एव। अथैकेन स्वभावेन स्वलक्षणं सर्वसामान्योपकारि, तथाऽपि स्वभावाभेदे तदुपकाराधीनस्वभावानां सामान्यानां च मध्ये एकसामान्यवतः स्वलक्षणस्य एकेन शब्देन विकल्पेन वा ग्रहणे सर्वेषां तदेकोपकारनिबद्धस्वभावानां सामान्यानां ग्रहणात् सद्द्रव्य-पार्थिव-वृक्ष-शिंशपाविकल्पानां शब्दानां च पर्यायत्वप्रसङ्गः। यथाह—

एकोपकारके ग्राह्ये नोपकारास्ततोऽपरे।

दृष्टे तस्मिन्नदृष्टा ये तद्ग्रहे सकलग्रहः॥ इति।

तस्मान्न सामान्यवन्नेदगोचरा विकल्पाः। स्वलक्षणभेदगोचरत्वनिषेधेन ज्ञानग्राह्याकारगोचरत्वमप्यपास्तम्। स्वाकारमबाह्यं बाह्यमध्यवस्यन् विकल्पः स्वाकारग्राह्यविषय इति चेत्? यथाह—

स्वप्रतिभासेऽनर्थेऽर्थाध्यवसायेन प्रवृत्तिरिति।

अथ कोऽयमध्यवसायः? किं ग्रहणम् आहोस्वित् करणम् उत योजना अथ समारोपः। तत्र स्वप्रतिभासमनर्थमर्थं कथं गृह्णीयात् कुर्याद्वा विकल्पः। न हि पीतं नीलं शक्यं ग्रहीतुं कर्तुं वा शिल्पिशतेनापि। नाप्यगृहीतेन स्वलक्षणेन स्वाकारं योजयितुमर्हति विकल्पः। न च स्वलक्षणं विकल्पगोचर इति चोपपादितम्। न च स्वाकारमनर्थमर्थं आरोपयति। न तावदगृहीतः स्वाकारः शक्य आरोपयितुमिति तद्ग्रहणमेषितव्यम्। तत्किं गृहीत्वा आरोपयति अथ यदैव गृह्णाति तदैवाऽऽरोपयति। न तावत् पूर्वः पक्षः, न हि विकल्पज्ञानं क्षणिकं क्रमवन्तौ ग्रहणसमारोपौ कर्तुमर्हति। उत्तरस्मिंस्तु पक्षे विकल्पस्वसंवेदनप्रत्यक्षाद्विकल्पाकारादहङ्कारास्पदादनहङ्कारास्पदं समारोप्यमाणो विकल्पो नास्वगोचरो न शक्योऽभिन्नः प्रतिपत्तुम्, नापि बाह्यस्वलक्षणैकत्वेन शक्यः प्रतिपत्तुं विकल्पज्ञानेन स्वलक्षणस्य बाह्यस्याप्रतिभासनात्। तस्मादेष विकल्पविषयो न ज्ञानं न ज्ञानाकारो नापि बाह्य इत्यलीक एवाऽऽस्थेयः। यथाह भदन्तधर्मोत्तरः—

. . . . . . . . . . बुद्ध्या कल्पिकया विविक्तमपरैर्यद्रूपमुल्लिख्यते

. . . बुद्धिर्नो न बहिः— - इति

तथाऽपि विकल्पज्ञानाद्बाह्याभिमुखी प्रवृत्तिस्तदर्थिनां न स्यात्। तस्मादलीकग्राह्यमेषां विषयः। बाह्यभेदाग्रहश्चास्य बाह्यत्वं न पुनर्बाह्याभेदग्रहः, विकल्पगोचरे बाह्ये तदभेदग्रहस्याशक्यत्वात्। तस्मान्निर्विकल्पकपृष्ठभाविनो विकल्पाः तदुपनीतग्राह्यस्वलक्षणभेदं स्वग्राह्यालीकस्यागृह्णन्तः तदभिमुखं प्रवर्त्तयन्ति व्यवहर्त्तॄनर्थिनः, पारंपर्येण तत्संबन्धात् प्राप्तेर्न विसंवादयन्ति लोकम्। तेषां च विकल्पविषयाणां न तैरेव विकल्पैः परस्परतो भेदो गृह्यते, नापि विकल्पा-

## न्यायवार्त्तिकतात्पर्यटीका

न्तरैरिति भेदाग्रहादभेदमभिमन्यते पुरुषः, तदभेदाच्च अवमर्षाणामभेदः, तदभेदाच्च तद्धेतूनामविकल्पधियामभेदः, तदभेदाच्च स्वलक्षणानामविकल्पधीविषयाणामप्यभेदः। यथाह—

एकप्रत्यवमर्षस्य हेतुत्वाद् धीरभेदिनी।
एकधीहेतुभावेन व्यक्तीनामप्यभिन्नता ॥ इति।

तत् सिद्धम् अलीकं बाह्यं विषयो विकल्पानां शब्दानां चेति। तत्रेदमन्यव्यावृत्तिरूपं भावाभावसाधारण्याच्च अत्यन्तविलक्षणानां सालक्षण्यापादनाच्च तद्रूप्यानुभवाच्च। तथा हि—यद्भावाभावसाधारणं तदन्यव्यावृत्तिरूपमेव, यथाऽमूर्त्तत्वम्। तत् खलु विज्ञाने च शशविषाणे च साधारणम्। तथा च विवादाध्यासिता विकल्पविषयाः घटपटादय इति स्वभावहेतुः। गौरस्ति गौर्नास्तीति हि भावाभावसाधारणो (१) गवादिर्विकल्पविषयो विधिरूपस्वलक्षणवद्भावासाधारण्ये नास्तीत्यनेन न (२) संबध्यते विरोधात्, अस्तीत्यनेनापि न संबध्यते पौनरुक्त्यात्। भावाभावसाधारण्यग्रहणं च नानिमित्तं नाप्यन्यनिमित्तम्। न हि विधिरूपविषयस्य तत्स्वरूपविषयस्य वा विधिधर्मापातिनस्तत्र निमित्तभावः संभवति। तस्मात् निमित्तवत्तया साधारणग्रहणं व्याप्तं विपक्षान्निमित्तवत्त्वस्य व्यापकस्यानुपलब्ध्या निवर्त्तमानमन्यव्यावृत्तिविषयत्वेन व्याप्यत इति प्रतिबन्धसिद्धिः। अपि चात्यन्ताविलक्षणानां सालक्षण्यम् अन्यव्यावृत्तिकृतमेव। यथा गवाश्वमहिषमातङ्गानामत्यन्तविलक्षणानामपि सिंहव्यावृत्त्या सालक्षण्यम्। तथा च बाह्यस्य स्वलक्षणस्य विधिरूपस्य परमार्थसतोऽपरमार्थसताऽत्यन्तविलक्षणेन सालक्षण्यमिति स्वभावहेतुः। बाह्यं हि विधिरूपमप्यगोव्यावृत्तम्, विकल्पविषयोऽपि चेदगोव्यावृत्तस्ततः सालक्षण्यम्, नान्यथा। तथा च सालक्षण्यमपि निमित्तवत्तया व्याप्तं तदनुपलब्ध्या विपक्षाद्व्यावर्तमानं स्वसाध्येन व्याप्यत इति प्रतिबन्धसिद्धिः। अपि चानुभूयत एव विकल्पविषयो व्यावृत्तिरूपः। तथा हि तदप्रतिभासने गां बधानेति देशितोऽश्वं बध्नीयाद् गोरश्वादभेदेनाप्रतिभासनात्। प्रतिभासे वा कथं नागोव्यावृत्तिप्रतिभासः? तस्मादन्यापोहगोचरौ शब्दविकल्पाविति। तदेतदुक्तं वार्तिककृता—तावेतावसदद्रव्यव्युदासरूपेण प्रवर्तमानावेकमर्थं (क)ब्रूत इति। 'एकं' स्वलक्षणम् (ख)अध्यवस्यतः। अध्यवसायश्च स्वविषयस्य स्वलक्षणाद्भेदेनाग्रह इत्युक्तम्।

अत्रोच्यते। जातिस्तावदुपपादितसद्भावा (ग)तत एव तद्वती व्यक्तिरपि परमार्थसती। स्वाभाविकश्च सम्बन्धो व्यक्तेर्जात्या सह नोपकारसपेक्षते। अपि चानित्यस्याप्युपकार्यता

(१) 'गवादिविकल्प-' इति ख०। (२) 'सम्बध्येत' इति क०।

(क) 'ब्रूत' इत्यत्र आदर्शपुस्तकयोः 'अधिकुरुत' इति पाठो लिपिप्रमादकृत इति पूर्वोल्लिखितपाठ एव सन्निवेशितः। (ख) 'ब्रूत' इत्यस्यैव अन्वयिनं तदर्थमाह अध्यवस्यत इति। (ग) ५११तमपत्रं द्रष्टव्यम्।

## न्यायवार्त्तिकतात्पर्यटीका

क्षणभङ्गभङ्ग उपपादयिष्यते । यथा चैकोपाधिग्रहेऽपि नोपाध्यन्तरविशिष्टग्रहस्तथोपपादितं प्रत्यक्ष-लक्षणावसरे । न चात्यन्तासतः (क)केनचिदसद्रूपस्य प्रथोपपद्यत इति सारूप्यनिमित्तां भ्रान्ति-मुपपादयता वार्तिककृतोक्तम् । उपपादितं चास्माभिः । तस्माज्जातिमत्यो व्यक्तयो विकल्पानां शब्दानां च गोचरः, तासां तद्वृत्तीनां रूपमतज्जातीयव्यावृत्तमित्यर्थः । अतस्तदवगतेर्न गां बधानेति चोदितोऽश्वादीन् बध्नाति । न च शब्दार्थस्य जातेर्भावाभावसाधारण्यं नोपपद्यते । सा हि स्वरूपतो नित्याऽपि देशकालविकीर्णानन्तव्यक्त्याश्रयतया भावाभावसाधारणी भवति अस्तिनास्तिसम्बन्धयोग्या । वर्त्तमानव्यक्तिसम्बन्धिता हि जातेरस्तिता, अतीतानागतव्यक्ति-सम्बन्धिता च नास्तितेति । सन्दिग्धव्यतिरेकित्वादनैकान्तिकं भावाभावसाधारण्यमन्यथासिद्धं चेति । जातिमती व्यक्तिर्विकल्पगोचरो नालीकमिति कस्य वस्तुना सह सादृश्यायान्यव्यावृत्ति-रूपता आस्थीयते । अपि चालीकस्य समस्तसामर्थ्यविरहिणोऽत्यन्तविसदृशस्य समर्थेन स्वलक्ष-णेन विधिरूपेण किं सादृश्यम् ? अन्यव्यावृत्तिरिति चेत्, नन्वन्यव्यावृत्तिर्भाविकी स्वलक्षणस्य स्वभावो वा अन्यो वा ? न तत्स्वभावो विधिरूपेण विरोधात्, अविरोधे वा विधिनिषेधयो-रेकत्वाद् विधिरूपतानिषेधेनालीकस्य स्वलक्षणसारूप्यायान्यव्यावृत्तिरूपतोपपादनमनर्थकम् । विधिरूपेणातुच्छेन तुच्छस्य सारूप्यमनुपपन्नमिति चेत्, हन्त भोः स्वलक्षणस्यास्ति किं तुच्छमपि रूपं येनालीकस्य तुच्छस्य सारूप्यं स्यात् । तथा सत्ययमेकस्य स्वलक्षणस्य तुच्छातुच्छविरुद्ध-स्वभावद्वयसमावेशमभ्युपगच्छन् श्लाघनीयप्रज्ञो देवानांप्रियः । न च स्वलक्षणादन्यव्यावृत्ति-रलीकमन्यव्यावृत्तं स्वलक्षणेन सरूपयति तथा सति हस्तिमशकावपि रासभः सरूपयेत् । (ख)धर्मो न च स्वलक्षणधर्मो व्यावृत्तिर्भवद्भिरभ्युपेयते । स्यादेतत्—अध्यवलीयमानमपि स्वलक्षणं न परमार्थसत्, अपि तु तदपि कल्पितम् । तस्मात् तस्य विधिनिषेधरूपता न विरुध्येत । वस्तुनि हि विरुद्धधर्माध्यासो विरुध्यते नावस्तुनि, तेनास्य विधिरूपपरित्यागेन निषेधरूपता-मुपादायालीकस्य सारूप्यमुपपद्यते । यथाह—

यच्च गृह्यते यच्चाध्यवसीयते ते द्वे अप्यन्यव्यावृत्ती न वस्तुन इति ।

अथालीकस्य स्वलक्षणस्यालीकसादृश्ये किं सिध्यति ? न तावत् तत्र प्रवृत्तिः, असतः प्रवृत्तिविषयत्वायोगात् । सतस्तु प्रवृत्तिविकल्पस्य न सादृश्यमसता, सादृश्ये वा वृथा अलीकस्वलक्षणाभ्युपगमः । अथ न वयमलीकं स्वलक्षणान्तरमातिष्ठामहे किं त्वलीकस्यैव दाहपाकादिकसामर्थ्यारोपम् ; न तत्स्वलक्षणं तस्य सर्वतो व्यावृत्त्या अभिलापसंसर्गायोग्यत्वेन विकल्पज्ञानप्रतिभासाभावात्, अभिलापसंसर्गयोग्यस्य चान्व-

(क) 'अत्यन्तासतः' इत्यस्य विवरणम् 'असद्रूपस्य' इति ।

(ख) 'धर्म' इति क्वचिन्न दृश्यते इति क-ख-तात्पर्यपुस्तकसम्पादकाः । पदमिदं प्रमादादापतितम् ।

## न्यायवार्त्तिकतात्पर्यटीका

यिनोऽस्वलक्षणत्वात् । तस्मात् स्वान्वयिनोऽन्यव्यावृत्तिरूपस्यासमर्थस्यापि सामर्थ्यं समारोप्य तत्तदर्थिनो व्यवहर्त्तुन् (क)प्रवर्तन्ते लोकविकल्पाः, पारंपर्येण सम्बन्धात् समर्थं वस्तु प्रापयन्तो न विसंवादयन्ति लोकमिति युक्तमुत्पश्यामः ।

अथास्य अतदर्थक्रियासामर्थ्यारोपः किं दृष्टार्थक्रियास्वलक्षणसालक्षण्येन आहोस्विदनादिवासनावशात् ? तत्र स्वलक्षणेन सर्वतो व्यावृत्तेन समर्थेन समस्तसामर्थ्यविरहिणोऽन्वयिनो न किंचिदस्ति सारूप्यम्, अन्यवृत्त्या तु सारूप्ये विधिरूपेणापि प्रसङ्गः तस्यास्ततो भेदाभावादित्युक्तम् । अनादिवासनावशात्तु तदारोपे प्रथमदर्शनेऽपि नालिकेरद्वीपागतस्य वह्नौ दाहपाकादिसामर्थ्यज्ञानप्रसङ्गः । वह्निस्वलक्षणाद्दाहपाकादिकारिणो भेदाग्रहादलीकस्य तद्रूपसमारोप इति चेत्, किं स्वलक्षणे गृह्यमाणे अथागृह्यमाणे । न तावद् गृह्यमाणे, तस्य विकल्पज्ञानगोचरत्वाभावादित्युक्तम् । तत्समयभावित्वविकल्पकं तत्त्वं गृह्णदपि न विकल्पे स्वविषयं निवेशयति तस्य ततोऽन्यत्वेन तद्वार्त्तानभिज्ञत्वात् । एवं विकल्पज्ञानमपि समनन्तरोत्पन्ननिर्विकल्पकव्यापारपारंपर्येऽपि न स्वलक्षणं गोचरयितुमर्हति तस्याभिलापसंसर्गयोग्यप्रतिभासविषयत्वादित्युक्तम् । समनन्तरप्रत्ययादविकल्पादुत्पत्तेस्तद्व्यापारपारम्पर्यादतद्गोचरोऽपि तद्गोचर इवाऽऽभासत इति चेत्, अनुभववासनाभावेषु भवेदपीयं गतिर्न तु परोक्षाभावावगाहिष्वविद्यावासनाप्रभवेषु संभवति । अपि चानुभववासनाप्रभवस्यापि तद्गोचरत्वाभिमानस्तस्मिन्नप्रथमाने तदुत्पत्तिमात्रान्न भवितुमर्हति । अगृह्यमाणे तु वह्निस्वलक्षणे ततो भेदाग्रहेण तद्रूपारोपे त्रैलोक्यरूपारोपप्रसङ्गो नियमहेतोरभावात् । नहि तदानीमगृह्यमाणतया त्रैलोक्याद्वह्निस्वलक्षणस्य कश्चिद्विशेषः, वह्निस्वलक्षणविषयनिर्विकल्पकप्रभवत्वेन तस्मिन्नियमे अविद्यावासनाप्रभवेषु प्रधानेश्वरादिविकल्पेषु तदभाव इति नियमो न स्यात् । न चाग्रहेण तदारोपसंभव इत्युक्तम् । तस्मादलीकस्य बाह्यत्वं विकल्पगोचर इति रिक्तं वचः ।

अपि च ज्ञानाकारवत्स्वलक्षणवच्चालीकबाह्यत्वमपि न विकल्पगोचरो भवितुमर्हति । एतद्धि कल्पनाधीनम् उत्पन्नायां कल्पनायामुत्पन्नमिव विनष्टायां नष्टमिव विकल्पनाभेदे भिन्नमिव न शक्यमेकत्वेन प्रतिकर्त्तुम् । भेदानवमर्षादिति चेत् किमस्यानवमृष्टमपि तत्त्वम् ? ओमिति चेत्, न तर्हि कल्पितम् । ननु नास्य भेदोऽपि स्वाभाविकः । स्वाभाविको हि भेदाभेदाभ्यां युज्यते न त्वलीकम् । मा भूद्भेदोऽस्य स्वाभाविकः कल्पनाधीनं तु तदलीकं तद्भेदाद्भिन्नं प्रतिपत्तव्यम्, अन्यथा तदधीनत्वापत्तेः । इदमेव हि तस्य विकल्पितस्य कल्पनाधीनत्वं यत्कल्पनाभेदाभेदानुविधानं नाम, तदधीनत्वे तु कल्पितत्वानुपपत्तेरनलीकत्वप्रसङ्गात् । तन्मा नाम भूतामस्य स्वाभाविके नानात्वैकत्वे, न तु भिन्नकल्पनानुपाति शक्यमेकत्वेन प्रतिपत्तुमिति भिन्नं प्रतिपत्तव्यम् । तत्सिद्धं

(क) अत्र 'प्रवर्त्तयन्ति' इति पाठः सम्भाव्यते ।

## न्यायवार्त्तिकम्

समानाधिकरणावित्युच्यते मुख्यतस्तु न कश्चिद्विधानतः शब्दो वाचक इति ; न मुख्यासम्भवात्—मुख्यतः सद्द्रव्यशब्दप्रयोगे सति तेन सामान्यादतथाभूत उपचार इति युक्तम्, न त्वेवंवादिनां प्रधानमस्ति। न च प्रधानमन्तरेणोपचारः सम्भवति। (१)न चान्यापोहपक्ष उपचारो युक्तः उभयोः प्रधानशब्दत्वात्। यथा सिंहशब्दः सिंहे वर्तते असिंहरूपव्युदासेन तथा माणवकेऽपीति तुल्यवृत्तित्वात् कस्मादुपचार इति।

यत्पुनरेतत्—अन्यशब्दार्थापोहः शब्दार्थ इति, तदप्ययुक्तम् ; विधानशब्दार्थसम्भवे सत्याद्या प्रतिपत्तिः, यदि विधानशब्दार्थो भवति ततो विधीयमानशब्दार्थप्रतिपत्तौ सत्यां तस्यान्यत्र प्रतिषेध इत्युपपन्नः प्रतिषेधः, यस्य पुनर्विधीयमानः पदार्थो नास्ति तस्याऽऽद्यां प्रतिपत्तिमन्तरेण कथं प्रतिषेधः, यावच्चेतरं न प्रतिपद्यते तावदितरं न प्रतिषेधतीति। यथा गौरिति पदस्यार्थोऽगौर्न भवतीति, यावच्च गां न प्रतिपद्यते तावद् (२)गवि प्रतिपत्तिर्न युक्ता, यावच्च गां न प्रतिपद्यते तावदगवीत्युभयप्रतिपत्त्यभावः।

## न्यायवार्त्तिकतात्पर्यटीका

विकल्पागोचरत्वमलीकबाह्यस्य अभिलापसंसर्गायोग्यत्वात् सुखादिस्वलक्षणवदिति। अभिलापसंसर्गयोग्यं हि तत् तेनाशक्यसमयत्वात् सुखादिलक्षणवदिति। शक्यसमयतया खल्वभिलापसंसर्गायोग्यता व्याप्ता अन्यथाऽतिप्रसङ्गात्। साऽलीकबाह्यतायाः प्रतिविकल्पं भिन्नाया व्यावर्त्तमानाऽभिलापसंसर्गयोग्यत्वमपि व्यावर्त्तयतीति प्रतिबन्धसिद्धिः। अपि चेदमलीकमगोव्यावृत्तिरूपं वा तद्धर्मो वा ? अगोव्यावृत्तिरूपं चेत् न तदसिद्धं गवि शक्यं ग्रहीतुम्। अगौश्च गोनिषेधात्मेति गोसिद्धिमपेक्षत इति दुरुत्तरमितरेतराश्रयत्वम्। तद्धर्मत्वे वा गोत्वमेवास्तु भाविकं तद्धर्मो विधिरूपः कृतमलीकेनाविधिरूपेण। तद्धर्माणां तद्भाविकत्वसाधनं च निराकृतम्, तस्य च भावाभावसाधारण्यमुपपादितम्। तद्द विस्तराद्बिभ्यतोऽपि बहुतरविस्तरे पतिताः स्म इत्यास्तामेतन्नास्तिकमानोपमर्दनमिति।

'उपचारतो न व्याघात इति चे'दिति शङ्कायाः परिहारवार्तिकम्—मुख्यासंभवादिति। सर्वत्र मुख्यपूर्वक उपचारो वा समारोपो वा दृष्टः, तव तु राद्धान्ते न विधिविषयः कश्चिदस्ति मुख्यः शब्दो वा विकल्पो वा सर्वस्य निवृत्तिगोचरत्वात्। न चाध्यवसेयो विधिः संभवतीत्युपपादितमधस्तादिति भावः। न चान्यापोहपक्ष उपचारो युक्तः उभयोः प्रधानशब्दत्वादिति। न हि सिंहत्वं नाम किंचिदस्ति सिंहव्यक्तिषु यन्माणवके न स्यात्, अपि तु प्रसह्यकारित्वादिव्युदासो माणवके नास्तीति सिंहव्यक्तिष्विव माणवकेऽपि सिंहशब्दो मुख्य एव स्यादित्यर्थः।

---

(१) 'न चान्यापोहवादे' इति क-ख-वार्त्तिकपाठः। (२) 'बहुप्रतिपत्तिः' इति ख।

## न्यायवार्त्तिकम्

यश्चायमन्यापोहः अगौर्न भवतीति गोशब्दस्यार्थः, स किं भावोऽथाभाव इति ? यदि भावः, किं गौरगौरिति ? यदि गौः ? नास्ति विवादः, अथागौर्गोशब्दस्यार्थः, अहो शब्दार्थकौशलम्। अभावस्तु न युक्तः प्रैषसम्प्रतिपत्त्योरविषयत्वात्—न हि गोशब्दश्रवणादभावे प्रैषो न वा सम्प्रतिपत्तिः। शब्दार्थश्च प्रतिपत्त्या प्रतीयते, न च गोशब्दादभावं कश्चित् प्रतिपद्यत इति।

अन्यापोहश्च शब्दार्थ इत्ययुक्तम् अव्यापकत्वात्—यत्र द्वैराश्यं भवति तत्रेतरप्रतिषेधात् तदितरः प्रतीयते, यथा गौरिति पदे गौः प्रतीयमानः अगौः प्रतिषिध्यमानः। न पुनः सर्वपद एतदस्ति, न ह्यसर्वं नाम किञ्चिदस्ति यत्सर्वपदेन निवर्त्येत। एकादिव्युदासाद् व्यापकमिति चेत्—अथ मन्यसे एकाद्यसर्वं तत् सर्वशब्देन निवर्त्यते, तन्न, स्वार्थापवाददोषप्रसङ्गात्। एवं सत्येकादिव्युदासेन प्रवर्तमानः सर्वशब्दः (१)अङ्गस्य प्रतिषेधादङ्गव्यतिरिक्तस्य चाङ्गिनोऽनभ्युपगमाद् अनर्थकः स्यात्। एवं सर्वे समुदायशब्दा एकदेशप्रतिषेधरूपेण प्रवर्तमानाः समुदायिव्यतिरिक्तसमुदायानभ्युपगमादनर्थकाः प्राप्नुवन्तीति। द्व्यादिशब्दानां च समुच्चयविषयत्वादेकादिप्रतिषेधे प्रतिषिध्यमानानामसमुच्चयाद् द्व्यादिशब्दानामनर्थकत्वम्।

क्रियारूपत्वाच्चापोहस्य (२)विषयो वक्तव्यः—अगौर्न भवतीति अयमपोहः किं गोविषयः (३) अथागोविषय इति। यदि गोविषयः, कथं गोर्गव्येवाभावः। अथागोविषय इति मन्यसे, कथमन्यविषयादपोहादन्यत्र प्रतिपत्तिः ? न हि खदिरे छिद्यमाने पलाशे छिदा भवति। अथागोर्गवि प्रतिषेधः अगौर्गौर्न भवतीति, केन गोरगोत्वं प्रसक्तं यत् प्रतिषिध्यत इति। कथं वा गवि गोप्रतिपत्तिमन्तरेण प्रतिषेधः ? नह्युत्तरपदार्थप्रतिपत्तिमन्तरेण प्रतिषेधं पश्यामः। उक्तं चात्र आद्या प्रतिपत्तिर्न प्राप्नोतीति। आदिप्रतिपत्तिं चान्तरेण न प्रतिषेध इति।

## न्यायवार्त्तिकतात्पर्यटीका

किं गौरगौरिति अश्वादिरित्यर्थः। प्रैष्यप्रत्ययपूर्विका प्रैषस्य प्रैषविषये प्रवृत्तिः संप्रतिपत्तिः, अङ्गव्यतिरिक्तस्य चाङ्गिनः सेनावनबहुत्वसंख्यादीनां भवद्भिरभ्युपगमादित्यर्थः।

क्रियारूपत्वाच्चापोहस्य विषयो वक्तव्य इति, कर्म विषयः क्रियायास्तद्वक्तव्यमित्यर्थः। कथमन्यविषयादिति। कथमन्यविषयादपोहात् अगोविषयाद् गवि प्रतिपत्तिरिति। अथागोरिति। अस्ति हि काचित् क्रिया याऽन्यस्यान्यविषया, (क)यथा विज्ञानम् आत्मनोऽर्थः विषयं वेत्यर्थः। निराकरोति—केन गोरिति। क्रिया हि चेतनानां प्रयत्नपूर्वा भवति। अपोहलक्षणा च क्रिया निषेधरूपा, निषेधश्च प्राप्तिपूर्वकः। न हि गोरगोत्वं केनचित् प्रसञ्जितं यत्प्रेक्षावता व्यपोह्येतेत्यर्थः। (ख)कथं चागवीति, अगवीति पदेन योऽयं प्रतिषेधो नासौ

(१) 'अङ्गप्रति-' इति ख। (२) 'स्वविषयो' इति क। (३) 'वाऽगोविषयः' इति क।

(क) यथा 'विज्ञानमात्मनोऽर्थविषयमित्यर्थः' इति पाठः समीचीनतया सम्भाव्यते। (ख) वार्तिके 'कथं वा गवी'ति पाठः।

## न्यायवार्त्तिकम्

इतश्च न युक्तोऽपोहः विकल्पानुपपत्तेः—योऽयमगोरपोहो गवि, स किं व्यतिरिक्त आहो
अव्यतिरिक्त इति। यदि व्यतिरिक्तः, किमाश्रितोऽनाश्रितो वेति। यद्याश्रितः, आश्रितत्
गुण इति गोशब्देन गुणोऽभिधीयते न गौरिति, गौस्तिष्ठतीति सामानाधिकरण्यं न प्राप्
अथानाश्रितः, केनार्थेन षष्ठी गोरपोह इति। अथाव्यतिरिक्तः, गौरेवासाविति न किञ्चित्
भवतीति।

अयं चापोहः प्रतिवस्त्वेकोऽनेक इति वा वक्तव्यः। यद्येकोऽनेकगोसम्बन्धी, तदा
तदिति। अथानेकः, ततः पिण्डवदानन्त्यादाख्यानानुपपत्तेरर्थप्रत्ययो न युक्तः।

इदं च तावत् प्रष्टव्यो जायते भवान् किमयमपोहो वाच्योऽथावाच्य इति। यदि वा
ऽनैकान्तिकः शब्दार्थः अन्यापोहः (१)शब्दार्थ इति। अनवस्था वा—अथानपोहव्यु
रूपेणाभिधीयते अपोहस्तस्याप्यन्य इत्यनवस्था। अथावाच्यः, अन्यशब्दार्थापोहं करो
व्याहतम्। यदि च शब्दस्यापोहो नाभिधेयार्थः, अभिधेयार्थव्यतिरेकेण स्वार्थो वक्तव्यः।
स एवास्य स्वार्थः, तथाऽपि व्याहतम्। अन्यशब्दार्थापोहं स्वार्थं कुर्वती श्रुतिरभिधत्त इत्
इति तस्य वाक्यस्यायमर्थः तदानीं भवत्यन्यदनभिदधानोऽभिधत्त इति। अनेकमिति
पदस्य द्व्यादिविषयत्वात् सामान्याधिगतौ विशेष आश्रयितव्यः, न ह्यसति विशेषा
सामान्यशब्दाद्विशेषप्रतिपत्तिर्युक्तेति। नीलोत्पलशब्दयोश्च प्रधानत्वाद्विशेषणविशेष्यभावानु

## न्यायवार्त्तिकतात्पर्यटीका

गोप्रतिपत्तिमन्तरेण भवतीत्यर्थः। (क)आख्यानानुपपत्तेरर्थप्रत्ययो न युक्त इति। (ख)अ
रूपोऽर्थप्रत्ययो न युक्त इत्यर्थः।

किमपोहो वाच्योऽथावाच्य इति, अपोहादिशब्देनेत्यर्थः। यदि वाच्य
स्वरूपेणैवापोहो वाच्यो न चापोहापोहेनेत्यर्थः। स्यादेतत्—यद्यन्यापोहेन शब्दो न वर्त
तर्हि द्व्यादिविशेषेष्वनेकशब्द एकापोहेन वर्तते। न ह्यत्रानेकत्वं नाम गोत्वमिव किंचि
सामान्यमित्यत आह—अनेकमिति चास्य पदस्य द्व्यादिविषयत्वात् सामान्याधि
एकत्ववर्जितसंख्यात्वसामान्याधिगतौ विशेष आश्रयितव्यः। संख्यात्वसामान्यमेवैकत्व
तत्र द्व्यादिविशेषाधिगतिहेतुर्न पुनरन्यापोहमात्रमित्यर्थः। 'न ह्यसति' 'सामान्यशब्दाद्' प
वर्जितसंख्यासामान्यवाचकादनेकशब्दाद् 'विशेषाश्रयणे' अन्यापोहमात्राद् (ग)विशेषाधिग
योजनीयम्। अब्राह्मणादिशब्दानामपीयमेव गतिः; तत्रापि पुंस्त्वसामान्यमेव ब्राह्मण
इति। नीलोत्पलशब्दयोश्च प्रधानत्वादिति। अनीलानुत्पलव्युदासौ हि प्रधानौ नीलो

(१) 'शब्दस्यार्थः' ख।

(क) क-ख तात्पर्यपुस्तकयोः 'अध्यासानुपपत्तेः' इति मुद्रितम्। (ख) 'अपोहरूपार्थ
इति समीचीनतया प्रतिभाति। (ग) 'विशेषप्रतिपत्ति'रिति वार्त्तिके विशेषः।